गद्यात्मकः

# कथासरित्सागरः



बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितः।



कलिकातानगरे

सरस्वतीयन्त्रे मुद्रितः।

---

ई १८८३

श्रीगणेशाय नमः।

# कथासरित्सागरः।

## अवतरणिका।

### प्रथमः तरङ्गः।

अस्ति दिव्यं तरस्वी किन्नरगन्धर्वयक्षविद्याधरा- सकलनगेन्द्रचक्रवर्त्ती हिमवान् नाम। भूधरे- माहात्म्यं परां कोटिमधिरूढं येन त्रिजगज्जननी वती भवगेहिनी पुत्रीत्वमगमत्। तस्य च उत्त कैलासो नाम महाद्रिः योजनानां सहस्राणि समाक्रम्य अधितिष्ठति। यत्र समुद्रमन्थनेऽपि मन्दरस्य सुधासङ्गादपि न तथा धावल्यं यथा स्वत एव ममेति हसतीव म- रीचिभिः। तत्र च चराचर-गुरुर्विद्याधरादिभिः येन सेवितः सहोमया सततं निवसति भगवान् मृडानीपतिः। यस्य पिङ्गोत्तुङ्ग जटामण्डलवर्त्तिना नवेन शीतकिरणेन सन्ध्याद्रिशिखरसङ्गसुखमनुभूयते सततम्। यश्चान्धकमसुरराजं हृदि शूलेन निघ्नन् चिरं जगतां हृद्- यशूलं समसुज्जहार। यस्य च चरणनखाग्रप्रतिबिम्बित- चूड़ामणयः प्रसादलब्धार्धचन्द्रा इव भान्ति सुरासुराः।

अथ कदाचित् रहसि विस्रब्धा प्रणयिनी भगवती भवानी तमीश्वरं स्तुत्वा समतोषयत्। सम्प्रीतश्च तया अङ्कमीलितदामङ्कमारोप्य किं ते प्रियं करणीयमिति गिरा

सादरमभाषत। अब्रवीच्च सा,—यदि देव! प्रसन्नोऽसि रमणीयां काञ्चित् अभिनवकथामाख्यायिकां ब्रूहि शुश्रूषुरस्मीति। तेन चोक्तं प्रिये! जगत्सु यद् भूतं भव्यं भवच्च भवत्या ज्ञातमस्ति किन्तदिति। सा तु तथापि अतीव निर्वन्धमकरोत्। अथ महेश्वरः मानवत्याः प्रेयस्याः ... यभङ्गो माभूदिति तत्रांटुबुद्धैव प्रभावेण कामपि सङ्क्षिप्तां कथां ...रेभे।

किल विरिञ्चिविष्वक्सेनौ साचात् कर्त्तुं मां भ्रमन्तौ हिमाद्रिपादमूलमुप...तौ। दृष्टस्तत्र महत् ज्वालालिङ्गम्। एकस्तयोस्तस्यान्तं दिदृक्षुर...बाधः। ततश्च अलब्धान्तौ तौ तपोभिः ...मामाराधयामासतुः। तुष्टश्चाहमाविर्भूय उक्तवान् वरमभीष्टं वृणुतमिति। तदाकर्ण्य ब्रह्मणोक्तं पुत्रो मेऽस्तु ...इति तथा चानौचित्यकाङ्क्षया असौ ।निन्दितः अपू... लोकानामभवत्। हृषीकेशस्तु वरमयाचत अहं तव ...परो भवेयमिति ततश्चासौ त्वदात्मना मम शरीरार्द्धभूतः सञ्जातः। य एव नारायणः देवः सा त्वं ममैव शक्तिमतः शक्तिरिति।

अपि च त्वं मे पूर्वजाया आसीरिति शङ्करेणोक्ते पार्वती कथमहं तव पूर्वजायेति पप्रच्छ। प्रत्युवाच च देवः। देवि! पुरा दक्षोनाम प्रजापतिरासीत् तस्य त्वं अन्याश्च वहवः कन्यका आसन्। स तु त्वां मह्यमदात् अपराश्च धर्मादिभ्यः। कदाचित् तेन यज्ञं कुर्वता सर्वे जामातरः निमन्त्रिताः वर्जयित्वा मामेवैकम्। ततस्त्व-

योक्तम् तात! कथं मम पतिस्त्वया मा ऽहत इति। प्रत्यु-क्तञ्च तेन कपाली ते पतिः कश्यमध्वरे आह्रयत इति अथ तां कर्णविषसूचिकामिव वाचमुपश्रुत्य भवत्या पापीऽयं स्मात् जातेन अनेन पापदेहेन किमिति सञ्जातकोपया तत् शरीरं त्यक्तम्। अहञ्च त्वद्वियोगमन्युना तं यज्ञमनाशयम्। तत स्त्वं हिमगिरे श्चन्द्रकलेव क्षीरनिधेः समुत्पन्ना। प्रिये! स्मर पूर्ववृत्तं अहं तपश्चरणा-द्रिमगमम् पिता च तव मम शुश्रूषणार्थमतिथेः जयत्। अत्रान्तरे तारकेण असुरपतिना वि-त इन्द्रसकलेनानीतस्तत्रे मदन्तिकं म-मासुः। स च त्वत्सविधानात् लब्धावसरः ... सञ्जातरोषेण मया दग्धः। ततश्च तीव्रेण तपसा त्वयाहं क्रीतः। अहञ्च तव संग्रहाय किञ्चित् क्लेशजातमकरवम् तदेव पूर्वपत्नी त्वमासीरिति किमपरं कथ्यते तवेति।

एवमुक्त्वा विरतवचसि शङ्करे कुपिता देवी ... धूर्त्त! मया सनिर्बन्धमर्थितोऽपि कामपि हृदयहारिणीं कथां न भाषसे, त्वं गङ्गां शिरसा वहन् सन्ध्याञ्च प्रणमन् मुधा किं न विज्ञायसे? श्रुत्वैतत् महेश्वरः सानुनयं देवीं सान्त्वयन् दिव्यां कथामाख्यातुमङ्गीचकार मुमोच च सा कोपम्। ततः मात्र केनचित् प्रवेष्टव्यमिति देव्याः आज्ञप्ते नन्दी द्वारमवरुध्य तस्थौ हरोऽपि वक्तुं प्रचक्रमे। देवि! देवाः केवलं सुखभागिनः मानवाश्च सततं दुःखभागिनः परं दिव्यमानुषोभयविमिश्रा चेष्टा परमहृदयङ्गमा इति विद्याधराणां तदुभयधर्मिणां चरितं तव वर्णयामि।

इत्युक्ता हरः यावत् कथयति, आगतस्तावत् देवस्य प्रसादेन सत्त्ववान् पुष्पदन्तो नाम गणाधिपः। स तु द्वास्थेन निवारितप्रवेशोऽपि कथं ममापि प्रवेशनिषेधः निष्कारणो नेवायमिति सञ्जातकुतूहलः दौवारिकेणालक्षितो योगबलेन, तत्क्षणमेव प्रविवेश देवसकाशम्। प्रविश्य च श्रुतवान् सर्वमेव पिनाकिना वर्ण्यमानं सप्तविद्याधरचरितम॰ ॰रे श्रुत्वा च प्रतिनिवृत्तेन तेन स्वभार्य्यायै ॰त् सर्वमाख्यातं स्त्रीषु वित्तं रहस्यं वा गोपितुं कः सापि विस्मिता देवीसकाशमागम्य यथाश्रुतं ॰ास स्त्रीणां हि वाक्संयमः कुतः ?

सा देवी गिरिनन्दिनी अतिमात्रं कुपिता, गिरिशसुवं च न त्वया अपूर्वमाख्यातं जयाप्येतदाख्यानं जानातीति तदाकर्ण्य भगवान् गौरीकान्तः प्रणिधानात ॰सर्ववृत्तान्तः स्तामवादीत् देवि ! योगप्रविष्टेन पुष्प॰तेन आवयोः संवादमाकर्ण्य सर्वं कथितं नान्यः कश्चन जानाति वृत्तान्तमिमम्।

श्रुत्वैतदतिकोपपरायणा पर्वतनन्दिनी पुष्पदन्तमानीय, रे अविनीत ! मर्त्यो भवेति तं भयविह्वलं,तत्कारविज्ञप्तिं कुर्वाणं माल्यवन्तं नाम गणञ्च शशाप। अथ तेन माल्यवता पुष्पदन्तेन च भार्य्यया जयया समेतेन पादयोर्निपत्य सान्त्विता भगवती गौरी तयोः शापावधिदायिनीं वाचमवोचत्। कुवेरशापात् पिशाचतां गतः कश्चित् सुप्रतीको नाम यक्षः काणभूतिनाम्ना विन्ध्याटव्यामास्थितः हे पुष्पदन्त ! तद्दर्शनात् जातिं स्मरन् यदा इमां कथ

तस्मै कथयिष्यसि तदा तत्कथावसाने शापात् विमोक्ष्यसे माल्यवांश्च यदा काणभूतेः कथां श्रोष्यति तदा काणभूतिः मोक्षं लप्स्यते माल्यवांश्च तत्कथावसाने मुक्तिमाप्स्यतीति। इत्युक्त्वा विरतायां देव्यां तौ प्रमथौ विद्युत्पुञ्जाविव सहसा दृष्टनष्टौ अभूताम्।

अथ कदाचित् पार्वती सदया शङ्करमवदत् नाथ! मयाभिशप्तौ तौ गणाधिपौ कुत्र जातौ?। [illegible]टाकर्ण्य देवश्चन्द्रमौलिरवादीत् प्रिये! अस्ति कौशाम्बी महानगरी, तस्यां पुष्पदन्तो वररुचिर्नामा जातः [illegible] वांश्च सुप्रतिष्ठिताख्ये नगरे गुणाढ्य इति विख्यातः [illegible] इत्युक्तवान् शङ्करः प्रियां सञ्जातानुशयां प्रबोध्य [illegible] त्रैव कैलासाद्रौ सततमध्यवास।



गच्छति च काले असौ पुष्पदन्तावतारो वररुचिः कात्यायन इति प्रसिद्धिं गतः महीं परिभ्रमन् विद्यापारीणः नन्दस्य राज्ञः साचिव्यमारूढः तत्कार्यबाहुल्येन नितरामायस्तः कदाचित् विन्ध्यवासिनीं द्रष्टुमाजगाम। तत्र च तपसा आराधिता देवी स्वप्नादेशेन तं विन्ध्यकान्तारे काणभूतिना सह साक्षात्कर्त्तुं प्राहिणोत्। तत्र च भ्रमन् प्रान्ते एकं न्यग्रोधतरुमपश्यत् तत्समीपे च पिशाचशतैर्वृतं पिशाचतामापन्नं काणभूतिञ्च।

स तु काणभूतिना दृष्टः कृतपादाभिवन्दनश्च जगाद

कथं भवान् सदाचार इव दृश्यते। कथमेतादृशीं गति-मापन्न इति।

श्रुत्वैतत् काणभूतिरभाषत नास्ति मे स्वतः ज्ञानं परं शङ्करात् उज्जयिन्यां श्मशाने यत् मया श्रुतं तत् कथयामि श्रूयताम्। एकदा भगवती देवी कस्मात् कपालेषु श्मशानेषु च प्रीतिरिति पृष्टे शम्भुरब्रवीत्। पुरा [illegible]भावमाने जगदिदं जलमयमासीत् तदानीं [illegible] भित्वा तत्र रक्तविन्दु र्निपातितः कालेन तद्रक्त [illegible]वत् व्यजायत च तस्मात् वेधाः। अथ मया [illegible] सृष्टा प्रकृति र्निरगच्छत्। प्रिये! तौ च [illegible] अन्यान् प्रजापतीन् सृजतुः तेच प्रजापतयः [illegible] प्रजाः। तस्मादसौ वेधा जगति पितामह इत्यु-च्यते एवं चराचरं सृष्टवतस्तस्य दर्पः प्रादुरासीच्चेतसि ततोऽहं रोषात् तस्य मूर्द्धानमच्छिदं तेन च कर्म्मणा अनु-शयता मयेदमगृह्यत महाव्रतं, ततश्च मे कपाल-पाणित्वं श्मशानप्रियत्वञ्चेति। किञ्च एतत् कपालमयं जगत् सततं मम करे स्थितं यत्र पूर्वं अण्डस्य कपाल-द्वयमासीत् तयोरेकेन द्यौरपरेण पृथ्वी जातेति कीर्त्तितं। शम्भुनैवमुक्ते स्थिते च मयि पुनरस्यत् श्रोष्यामीति जात-कुतूहले पुनरभ्यभाषत देवी देव मीश्वरं। नाथ! कियता कालेन पुष्पदन्तः पुनरस्मानुपैष्यतीति तदाकर्ण्य मृडानीपति मामुद्दिश्य अवोचत् प्रिये! योऽयं पिशाचो दृश्यते असौ वैश्रवणानुचरः कश्चित् यक्षः। स्थूलशिरा नाम कश्चित् निशाचरः अस्य मित्रमभूत्। कदाचित्

धनपतिः तेन शापेन रक्षसा सङ्गतमेनमवलोक्य विन्ध्याटव्यां पिशाचो भवेति अभिशशाप। दीर्घजङ्घेन चास्य भ्रात्रा सानुनयं पादयोः पतितेन भ्रातुरस्य शापान्तं प्रति अभ्यर्थितेऽवादीत् वैश्रवणः। शापावतीर्णात् पुष्पदन्तात् महतीं कथामाकर्ण्य अयं शापभ्रष्टस्य माल्यवतः सकाशे तां कथां मुक्त्वा ताभ्यां सहितः शापमेनं तरिष्यतीति। धनदेन एवमस्य शापान्तो विहित स्त्वयाच पुष्पदन्तस्य तथैवेति इत्येतत् शम्भुना
सुहृदोऽहमिहागतः। एवमुक्त्वा विरते काणभूतौ
सुप्तोत्थित इव जातिं स्मरन्नुवाच स एव पुष्पदन्तः
तावत् मत्तः तां महतीं कथां। इत्युक्त्वा प
भूताः सप्त सप्त महाकथाः तेन कात्यायन परनाम्ना वररुचिना अभिहिताः। ततः काणभूतिरवादीत्, देव! त्वं रुद्रावतारः कोऽन्यः कथमिमां वेत्ति, त्वत् प्रसादात्. शापो मे प्रायः शरीराद् गत एव तदात्मनः आजन्मवृत्तान्तमाख्याहि प्रभो! मां पवित्रय, एवमापृष्टः वररुचिः प्रणतस्य तस्यानुनयपरवशः समग्रमात्मवृत्तान्तं विस्तरेणाचचक्षे।

आसीत् कौशाम्ब्यां सोमदत्तो नाम कश्चित् द्विजः अग्निशिख इति प्रसिद्धः स च। वसुदत्ता नाम तस्य भार्या। सा पूर्वं काचित् मुनितनया आसीत् अभिशापेन द्विजजात्यामुत्पन्ना। तस्मात् द्विजवरादहं तस्यामुदभवम्। शैशवे वर्त्तमानस्य मम पिता पञ्चत्वमगमत् केवलं जननी मम अतिकष्टेन मामवर्द्धयत् अथैकदा अभ्यगच्छतां

द्विजौ द्वौ पथिकौ मम गृहम्। तिष्ठतोश्च तयोर्मुरज-
ध्वनि रभूत्। तेन च शब्देन स्मृतभर्तृचरणा मज्जननी
मब्रवीत् वत्स! एष ते पितुर्मित्रं भवनन्दोनाम नटः
नृत्यति। अहमवदं मातः! अहमेतद् द्रष्टुं व्रजामि
दृष्ट्वाच सर्वं सपाठ्यं तव दर्शयिष्यामि। एतदाकर्ण्य
तावतिथी वि[illegible] विस्मयं गतौ दृष्ट्वा माता ममाब्रवीत्
वत्सौ! [illegible]च विस्मयः कार्य्यः सकृत् श्रुतमयं शिशुः सर्वं हृदि
[illegible]लम्। अथैताभ्यां समुत्सुकाभ्यां मम सकाशे
[illegible]मपठ्यत अहञ्च पश्यतोस्तयोस्तथैव सर्वं यथा-
[illegible]। तत स्ताभ्यामभ्यागताभ्यां सह गत्वा
[illegible]थायथं दृष्ट्वा गृहमेत्य च तत् सर्वं मातु-
दाग्रतम्। अथैतयोरेकः व्याडिर्नाम मां श्रुतिधरं
निश्चित्य मन्मातुः प्रणतः कथामिमामाख्यत्। मातः!
वेतसाख्ये नगरे देवस्वामी करम्भकश्चेति द्वौ भ्रातरौ
विप्रकुलोत्पन्नौ परस्परमति प्रणयिनौ अभूतां तयोरेकस्य
पुत्रोऽयमिन्द्रदत्तो नाम अपरस्याहं व्याड़िर्नाम समुत्-
पन्नः। कियता कालेन पिता मे परलोकं गतः तच्छो-
काच्चास्य पिता महापथं प्रस्थितः। ततश्च आवयो
र्जननीभ्यां नितरां शोकार्त्ताभ्यां पतिगतिरचिरेणाप्ता।
अथ आवां सति धनेऽपि अनाथौ विद्याकाङ्क्षया स्वामि-
कुमारं प्रार्थयितुं दक्षिणापथं गतौ तपसि स्थितौ च तत्र।
अथ स्वप्ने स प्रभुरादिशत् अस्ति पाटलिपुत्रं नाम नगरं
नन्दभूपतिनाधिष्ठितं तत्र वर्षनामा कश्चिदस्ति विप्रः।
तस्मात् सकलां विद्यामाप्स्यथः तत्र गम्यतामिति।

अथावां तत् पुरं प्रस्थितौ। पृच्छतोश्च। तत्रावयोः कश्चि-
दिह वसति वर्षाख्यो मूर्खो द्विजातिरिति तत्रत्योऽवदज्जनः। आवाञ्च दोलाचलचित्तावपि तत्क्षणं गत्वा तस्य गृहं हतच्छायं अतिदुरवस्थमपश्याव। तत्र समीपस्थं वर्षमालोक्य तत् पत्नीं धूसरश्यामकलेवरां विशीर्णमलिनाम्बरां गुणवतीं साध्वीं रूपिणीमिव दुर्गतिमुपागतौ। उपेत्य च सप्रणाममावाभ्यां स्ववृत्तान्तमावेद्य सर्वं तस्यै विहितातिथ्यक्रियायै निवेदितम्। सा तु पुत्रौ युवां कात्र लज्जा श्रूयतामिति कथामेतामवर्णयत्।

अभूदत्र नगरे शङ्करस्वामि नामा कश्चित् द्विजः, मम भर्त्ता उपवर्षश्च तस्य द्वौ पुत्रौ। अयं मम पतिः मूर्खः दरिद्रश्च अनुजस्तु अस्य विपरीतः। तेन च उपवर्षेण स्वभार्या गृहपोषणे नियुक्ता। प्रावृषि योषितः सगुडं जुगुप्सितं पिष्टकं रचयित्वा मूर्खाय द्विजाय ददाति। इत्येव माचरन्तीनां शीते ग्रीष्मे च न क्लेशः स्यादिति स्थिति रत्र प्रचलति। परं दत्तं तत् न सर्वे प्रतिगृह्णन्ति तदाचारस्य कुत्सितत्वात्। मम देवरगृहिणी तत् पिष्टकं सदक्षिणं मह्यं दरिद्राय दत्तवती। स च तत् गृहीत्वा गृहमायात एव मया भृशं निर्भर्त्सितः मूर्खभावजातमन्युना अतिपरितप्तः सद्यः एव स्वामि कुमारस्य पादमूलं प्रस्थितः। तेन तपसा आराधितेनास्य सर्वा एव विद्या प्रदत्ताः आदिष्टश्च सकृच्छ्रुतधरं विप्रं प्राप्य एताः प्रकाशयेरिति सम्प्राप्य भर्त्ता सहर्षोऽयं गृहमागतः सर्वं वृत्तं

मन्त्रमाख्याय ततः प्रभृति केवलमविरतं ध्यायन् जपंश्च तिष्ठति। यदि युवां कश्चित् श्रुतधरमानयेतं ततः सर्वार्थसिद्धि र्युवयोरसंशयं भविष्यतीति।

श्रुत्वैतदावामस्मै सुवर्णशतं दत्त्वा ततः पुरात् निर्गतौ पृथिवीं पर्यटन्तौ क्वचिदपि श्रुतधरमलब्धवन्तौ तव गृहमद्य प्राप्तौ। प्राप्तश्च तवायं बालकः श्रुतधरः। तदेनं देहि गच्छामो वयं विद्यारत्नसिद्धये।

एवं व्याडिवचः समाकर्ण्य मम जननी सादरा अब्रवीत् ...त् सङ्गच्छते नाम मे कश्चिदविश्वासः अस्मिन् ...ुत्रे जातमात्रे गगनादशरीरिणी वागुदचरत् अयं श्रुतधरः समुत्पन्नः वर्षात् विद्यामवाप्स्यति व्याकरणञ्चास्य लोके प्रतिष्ठां गमिष्यति, नाम्ना चायं वररुचिः यत् यत् उत्कृष्टं भवेत् तत्तदस्मै रोचिष्यते इति। तस्मादस्मिन् विवृद्धे सततं चिन्तयामि क्वासौ वर्षाभिधान उपाध्यायोऽस्ति, अद्य त्वन्मुखात् सर्वं ज्ञात्वा मे महान् परितोषः समजनि तदेनं नयतं युवयोरेष भ्राता इति। अथ मम मातृवचने सातिशय परितुष्टौ व्याडीन्द्रदत्तौ क्षणमिव तां रात्रिमनयताम्। अथ व्याडिना उत्सवार्थं मन्मात्रे निजं धनं दत्त्वा वेदाधिकारार्थं मद्गुपनीतः ततश्च मात्रा कथञ्चित् निरुद्धवाष्पया अभ्यनुज्ञातं मामादाय तरसा मन्वर्षास्तस्याः प्रस्थितौ। क्रमेण वयं वर्षस्य गुरो र्गृहं प्राप्ताः। सोऽपि मां स्वामिनः कुमारस्य प्रसादमिव मूर्त्तममन्यत। अथ परेद्युरुपाध्यायः शुचिदेशे समासीनः अस्मान् अग्रतः समाविश्य प्रथममोङ्कार मदात्

ततश्च सर्वे वेदाः उपस्थिताः। मया सकृत्श्रुतं व्याड़िना द्विः श्रुतं इन्द्रदत्तेन त्रिश्रुतं सर्वमवधृतं। तच्चास्माकं वेदध्वनिमपूर्वमाकर्ण्य समन्तात् सविस्मयो विप्रवर्गः किमिदमिति वर्षमभ्यायवौ स्तुतिभिः प्रणतिभिश्च तमभ्यपूजयत्। उपवर्षमन्तरेण सर्व एव नागरजनः विततमहोत्सवस्तदासीत्। नृपतिरपि नन्दः तत् पार्वतीसूनुवरप्रभावविलसितमाकर्ण्य सपरितोषमुपेत्य वसुराशिभिः वर्षनिकेतनमपूरयत्।



## तृतीयः तरङ्गः।

एवमुक्त्वा वररुचि रेकाग्रमानसे काणभूतौ शृण्वति पुनरब्रवीत् कदाचित् अध्ययनानन्तरम् अस्माभिः कृतनित्यक्रियः आचार्य्यः पृष्टः कथमिदं नगरं लक्ष्मीसरस्वतीनिवासतां गतमिति सोऽब्रवीत् शृणुतएतत् कथाम्।

अस्ति गङ्गाद्वारे कनखलं नाम पावनं तीर्थम्। यत्र ऐरावतेन उशीनरगिरिप्रस्थात्, काञ्चनपातेन तमेव प्रस्थं भित्त्वा देवनदी अवतारिता। तत्रासीत् कश्चिद् दाक्षिणात्यः द्विजन्मा सभार्य्यः तपस्यन्। तस्य त्रयः पुत्राः अजायन्त। अथ कालेन तस्मिन् सभार्य्ये द्विजे स्वर्गते त्रयस्ते सुताः विद्यार्थिनः राजगृहं नाम देशं गताः। क्रमेणाधीतविद्यास्ते पितृमातृशोकार्दिताः स्वामिनः कुमारस्य दर्शनार्थं दक्षिणापथं ययुः। व्यवसंश्च समुद्रतटवर्त्तिन्यां नगर्य्यां भोजिकनाम्नः कस्यचित् विप्रस्य भवने।

भोजिकश्च तिस्रः कन्याः तेभ्यः भ्रातृभ्यः सम्प्रदाय धनानि च यौतुकीकृत्य भवव्यसनश्रान्ततया तपसे गङ्गामगमत्। अथ कालेन तत्र श्वशुरवेश्मनि निवसतां तेषां दारुणो दुर्भिक्षः समजायत। तेन भयः ताः साध्वीर्भार्याः परित्यज्य ययुः। नृशंसानां किं विचित्रम्? तासाञ्च मध्यमा तदानीं सगर्भासीत् सुतरां पितृमित्रस्य यज्ञदत्तस्य निलय मभि-श्रियन्। तथापि भर्तृन् ध्यायन्त्यः अतिक्लेशेन कालमन-न्यपि सतीत्वं न मुञ्चति कुलनारी। गच्छति सा मध्यमा पुत्र मसूत तच्छिशुः सर्वासामेव तासां ... वर्द्धतः।

कदा आकाशमार्गेण विहरन्तं महेश्वरं तदङ्कवर्तिनी भगवती देवी दृष्ट्वैतत् सदया अब्रवीत् देव! पश्य अस्मिन् शिशौ सर्वा एव तिस्रः एता योषितः बद्धस्नेहा एषोऽस्मान् जीवयेदित्याशां दधति। तत् तथा क्रियतां यथायं बालो-ऽपि एताः पालयेदिति।

इत्युक्तः देवः शम्भुरब्रवीत् प्रिये! अमुमनुगृह्णामि पूर्वमनेन सभार्येण आराधितोऽस्मि तस्मादयं भोगार्थं भुवि निर्मितः अस्य जाया पाटली नाम भूपतेः महेन्द्र वर्मणः समजनि। इत्युक्त्वा विभुः स्वप्ने तिस्र एव ताः साध्वीर्जगाद वीऽयं युष्माकं बालकः पुत्रः अयं नाम्ना पुत्रक एव ख्यातिमाप्स्यति प्रतिदिनञ्चास्य सुप्तप्रतिबुद्धस्य शिरः स्थाने सुवर्णलक्षं भविता भविता चायं भूपतिरिति।

अथ सुप्तोत्थिते तस्मिन् ताः काञ्चनं प्राप्य हर्षनिर्भर-मानसाः ननन्दुः। अचिरेण च स पुत्रकः अतुलसमृद्धि-

सम्पन्नः राजा बभूव । अचिन्त्या हि तपःसिद्धिः । कदाचित् यज्ञदत्तः रहसि पुत्रकमब्रवीत् राजन् ! दुर्भिक्षेण क्लिष्टास्ते पितरः क्वापि गताः तत् सदा विप्रेभ्यः धनं देहि येन तन्नि शम्य ते समागच्छन्ति । अत्र च ब्रह्मदत्त-कथामिमां कथयामि श्रूयताम् ।

आसीत् पुरा किल वाराणस्यां ब्रह्मदत्तो नाम नृपतिः । एकदा स रजन्यां गगने प्रयान्तं विकसत्कनकाभहंस-मिथुनं राजहंस-शतैर्वृतं सिताभ्र-परिवेष्टितं विद्युत्-पुञ्ज [illegible] पश्यन् । दृष्ट्वा च [illegible] पुनस्तद्दर्शनोत्कण्ठया न राजकीयसुखेष्वपि मनः प्रीतिरासीत् । अथ मन्त्रिभिः सह सम्मन्त्र्य बृहत् सरोवरमेकं कारयाम[illegible] ददौ च तत्र प्राणिनामभयम् । गच्छता च कालेन तत्र समागतं तत् हंसयुगलं दृष्ट्वा हर्षनिर्भरमनाः सादरं तस्य शरीरस्य काञ्चनमयत्वे कारणमपृच्छत् । तौ च स्पष्टवाचौ हंसौ राजानमूचतुः । राजन् ! पुरा जन्मनि काका वावां सञ्जातौ बलि ग्रहणार्थं युध्यमानौ कदाचित् पुण्ये शून्ये शिवालये विनिपत्य पञ्चत्वमापन्नौ । ततश्च जातिस्मरौ हंसौ हेममयौ जातौ । राजा तत् श्रुत्वा पश्यंश्च तौ यथाकामं सुभृशं तुतोष । तस्मात् त्वमपि असामान्यदानशीलतया पितॄन् लप्स्यसे इत्येवमभिहितो यज्ञदत्तेन पुत्रक स्तथैवाकरोत् । कालेन तस्य तादृशीं दानवार्त्तामाकर्ण्य ते द्विजातयः लोभाक्रान्तमानसाः तत्रैवाययुः प्रापुश्च परिज्ञातवृत्तान्ताः महतीं श्रियं पत्नीश्च । आश्चर्य्यमपरित्याज्योहि दुःस्वभावो दुर्मतीनाम् ।

गच्छति च काले कदाचित् ते पितरः राज्यकामुकाः पुत्र-
जिघांसया विन्ध्यवासिनीदर्शनव्याजेन पुत्रकं तत्र निन्युः।
ततश्च घातकान् तत्र देवीगृहाभ्यन्तरे स्थापयित्वा पुत्रक-
मूचुः। पूर्वं त्वमेव एको देवीं पश्य इत्युक्तः पितृभिस्ते-
षाञ्च विश्वासात् तत्र प्रविश्य पुत्रकः दृष्ट्वा च तत्र घातकान्
हन्तुमुद्यतान् अपृच्छत्। कथं मां निहनिष्यथेति। ते ऊचुः
तव पितृभिः स्वर्णं दत्त्वा वयं त्वद्वधाय नियुक्ताः। ततः
[illegible]त्रकः देव्या विमोहितान् तान् पुनरब्रवीत्। अहं
[illegible] रत्नालङ्कारं वो दास्यामि [illegible]ं मुञ्चत नाहमेतत्
[illegible]मि शीघ्रं निभृतं व्रजामीति। वधकाश्च एवमस्तु
[illegible]स्मात् तदलङ्कारजातमादाय हतः पुत्रक इति तत्-
[illegible]तृणां पुरः कथयित्वा प्रस्थिताः। नैव कदाचित् दुरा-
त्मनां शिवम्। प्रतिनिवृत्ताः ते राज्यलुब्धाः द्विजाः राज-
द्रोहिण इति बुद्ध्वा मन्त्रिभिर्निहताः।

अत्रान्तरे राजापि पुत्रकः स्वेषु बन्धुषु विरक्तः विन्ध्य-
कान्तारमाविशत् अपश्यच्च तत्र भ्रमन् बाहुयुद्धपरौ द्वौ
पुरुषौ। पृष्टौ च तौ राज्ञा समूचतुः आवां मयदानव-
सुतौ आवयोः पैतृकं धनमेतत् भाजनं एषा यष्टि-
रेते च पादुके। एतदर्थमावयोर्युद्धं य आवयोर्बलवत्तरः
स एव सर्वं हरेदिति। एतदाकर्ण्य पुत्रकः विहसन् प्रोवाच
कियदेतत् धनमिति। तावूचतुः पादुके एते परिधाय
खेचरत्वमवाप्यते यष्ट्या च यत् लिख्यते तत्सर्वं सत्यं सम्प-
द्यते भाजने च य आहारश्चिन्त्यते स तत्क्षणात् पतिष्यति
श्रुत्वैतत् पुत्रकोऽब्रवीत्। युद्धेनालं पणोऽयमस्तु। योऽधि

धावन् बलाधिकः स्यात् स एतत् गृह्णीयादिति। तौ च मूढौ एवमस्तु इति प्रधावितौ दृष्ट्वा स पुत्रकः पादुके परिधाय यष्टिं भाजने च गृहीत्वा खमुदपतत्। क्षणेन च सुदूरं गत्वा आकर्षिताभिधानां रम्यां नगरीं ददर्श अवततार च तस्यां नभसः। अवतीर्य्य च व्यचिन्तयत् वेश्या सत्वितर इव वञ्चनपरा वणिजश्च धनलुब्धाः तत् कस्य गृहं वसामीति एवं विचिन्त्य विजनमेकं जीर्णं गृहं दृष्ट्वा प्रविश्य च तत्र काञ्चित् वर्षीयसीं योषितं ददर्श। अनुवासं च तया प्रदत्तः प्रदानपरितुष्टया लक्षितः।

अथ कदाचित् वृद्धा परितुष्टा पुत्रकमब्रवीत् नास्ति ते सदृशी भार्य्या इह पाटलीति नाम्ना काचित् राजसुता अस्ति सा रत्नमिति सतत मन्तःपुरे अभिरक्ष्यते। इत्येतदाकर्णयत स्तस्य वृद्धावचसि दत्तकर्णस्य हृदि लब्धप्रवेशः स्मर स्तमतिविमुग्ध मकरोत्। अद्यैव सा द्रष्टव्येति कृतनिश्चयः पादुके गृहीत्वा निशायां तदन्तःपुरमगमत्। ददर्श च अद्रि-शृङ्गतुङ्गवातायनेन रहसि सुप्तां कान्तां मनोभुवो जगद्विजयवैजयन्ती मिव पतितां पाटलीम्। क्षणेन कथमेनां प्रबोधयामीति चिन्तयन् तावदकस्मात् प्रहरिणां गीत मशृणोत्। यथा सुप्तां कान्तामालिङ्ग्य अलसोन्मिषदीक्षणां यत् प्रबोधयन्ति युवान स्तेनैव तेषां जन्मसाफल्यमिति। श्रुत्वैवैतदुपोद्घात मनङ्गविक्लवै रङ्गै स्तां भृशमालिलिङ्ग। साच प्राबुध्यत। तस्याश्च तं पश्यन्त्यास्तदानीं कोऽपि

दृश्यान्तरापातः समभवत्। ततश्च परस्पर मालपतो-
स्तयो रन्योन्यानुरागेण गान्धर्व्वोद्वाह कर्म्मणि प्रीतिर-
रवर्द्धत न तु सा यामिनी। रजन्याश्च पश्चिमे यामे
तां कान्तामामन्त्र्य तद्गतेन चेतसा उत्कण्ठितः तदेव
छात्रसदनमासदत्। इत्थं प्रतिनिशं गतागतं कुर्वति
तस्मिन् रक्षिभिः पाटल्या अङ्गे सम्भोगचिह्न मलक्ष्यत न्यवे-
द्यत च राज्ञे। सोऽपि राजा किमेतदिति व्याकुलात्मा गूढ़-
म[illegible]तामवेक्षितु काञ्चित् नारीं नियुक्तवान्। तया
[illegible]गतस्य पुत्रकस्य प्रसुप्तस्य वा[illegible] अलक्तकमभिज्ञान-
[illegible]न्यस्तम्। प्रातश्च तया वि[illegible] राजा चारान्
[illegible]असर्जयत् तैश्च तेनाभिज्ञानेन तस्मात् जीर्ण-
[illegible]नः स गृहीतः नीतश्च राजसकाशम्। अथ कुपितं
नृपं वीक्ष्य पादुकाभ्यां खमुत्पत्य तत्क्षणमेव पाटलीमन्दिरे
प्राविशत्। गत्वा च तां विदितौ स्वः नात्र स्थातव्यमि-
त्युक्त्वा अङ्के कृत्वा प्रियां जगाम नभसा। अथ गङ्गा-
तटे अवतीर्य्य श्रान्तां प्रियां भाजन प्रभावजातैरन्नादिभिः
पर्य्यतोषयत्। आलोकितानुभावश्च तयाभ्यर्थितः यष्ट्या
च तत्र नगरं चतुरङ्गबलसमेतमलिखत्। तस्मिंश्च
नगरे यष्टि-प्रभावेण सत्यतां प्राप्ते कृताधिवसतिः श्वशुरं
वशमानीय ससागरां धरां बुभुजे। तदिदं मायार-
चितं तयोरेव दम्पत्योर्नाम्ना पाटलीपुत्रं लक्ष्मीसरस्वती
क्षेत्रमभूत्। काणभूते! इत्येवं वर्षमुखादपूर्वां वाणी-
माकर्ण्य सविस्मयहर्षं निर्भरा स्तत्रैव चिरमवसाम।

इति तृतीयस्तरङ्गः।

## अथ चतुर्थः तरङ्गः ।

इत्याख्याय विन्ध्यवासिने काणभूतये पुनः प्रकृतार्थ मवर्णयत् वररुचिः । इत्थमहं व्याडिना इन्द्रदत्तेन च सह तत्र वसन् क्रमात् सर्वविद्यानां शैशवस्य च पारमगमम् । कदाचित् शक्रोत्सवं दिदृक्षवो वयं गुरुकुलात् निर्गताः कामपि कामस्य पुष्पव्यतिरिक्त मस्त्रं कामिनी मपश्याम । मया केयमिति पृष्टेन इन्द्रदत्तेन उक्तं इयमुपवर्ष-[illegible] उपकोशा नाम । सा च सखीभि र्मां ज्ञात्वा [illegible] इर्ष्या मम म[illegible]र्षन्ती स्वं भवनमगच्छत् [illegible] कामशरापात-निर्भिन्न हृदयश्चाहं तस्यां [illegible] चन्द्रमुख्या नीलोत्पलाक्ष्याः पीनस्तनायाः स्मरभू[illegible] सौन्दर्थ्य मन्दिराया इन्दिराया इव द्वितीयाया स्तस्या विम्बोष्ठपिपासुरेव निद्रां न लेभे । कथञ्चित् लब्धनिद्रश्च निशावसाने काञ्चित् शुक्लवसनां दिव्यां योषित मपश्यम् । सा मामब्रवीत् पुत्र ! पूर्वभार्य्यैयमुपकोशा ते गुणज्ञा नापरं पति मिच्छति अतो नात्र चिन्ता कार्य्या । अहं सदा ते शरीरान्तवासिनी सरस्वती त्वद्दुःखं सोढ़ु-मसमर्था इत्युक्त्वान्तर्हिता अभवत् ।

ततः प्रबुद्धोऽहं सञ्जाताशः शनैर्गत्वा प्रियाया मन्दिरासन्न बालचूत-तरोरधस्तात् क्षणमतिष्ठं क्षणेन चागत्य तत्सख्या उपकोशाया मदेकायत्त-चित्ताया अभिनवानङ्ग-विलसित मतिप्रबद्ध मभाख्यातम् । ततोऽहं द्विगुणित-सन्तापस्तामवादिषं कथं गुरुभिरदत्तां तामहं भजे

वरं मृत्युः न चाकीर्त्तिः। तस्मात् तव सखीहृदयं यथा गुरुभिर्बुध्येत यथा चावयोः शिवं भवेत् तथा क्रियतां जीव्यताञ्च मया सह तव सखी। तच्छ्रुत्वा सा सख्या मातुः सर्वं न्यवेदयत् तया च भर्त्तुः कथितं तेन भ्रातुर्वर्षस्य तेन च तदभिनन्दितम्। एवमुद्वाहे निर्धारिते व्याड़िराचार्यनिर्देशेन गत्वा कौशाम्ब्या मम जननी मानिनाय। अथ यथाविधानं मुपवर्षेण उपकोशां प्रदत्तामादाय जन[illegible]ह तत्र सुखेनावसम्।

[illegible]तरे वर्षस्य वहवः शिष्या[illegible]भवन् तेषा मेकः [illegible]र्गाम सर्वेषा मधमः। स सु[illegible]परितुष्टया वर्ष[illegible] प्रेषितो विद्याकामस्तपश्चरणार्थं हिमाचल[illegible]च्छत्। तत्र च तेन घोरेण तपसा सन्तुष्टात् चन्द्रमौलेः सर्वविद्यामुखं नवं व्याकरणं प्राप्तम्। ततश्चागत्यासौ वादाय मा माह्वयते स्म। ततश्चावयोर्वादे प्रवृत्ते सप्त वासरा व्यतीयुः अष्टमेऽह्नि मया तस्मिन् जिते समनन्तरमेव खेचरेण हरेण महाघोरो हुङ्कारवः कृतः। तेन च तत् मदीय मैन्द्रं व्याकरणं प्रनष्टं सर्वे च वयं तेन पुनः पाणिनिना जिताः। ततः सञ्जातनिर्वेदः हिरण्यदत्तस्य वणिजः सकाशे गार्हस्थ्यनिर्वाहाय कञ्चित् धनं संरक्ष्य उपकोशाञ्च यथोचितं सान्त्वयित्वा शङ्करमाराधयितुं हिमाचलमगमम्।

मत् प्रिया च ममैव श्रेयःकाङ्क्षिणी नियतं गङ्गास्नानपरा नियतव्रता च गृह एवातिष्ठत्। कदाचित् [illegible]धौ प्राप्ते सा पद्ममिव स्वच्छकामा मादाङ्गी प्रतिपच्चन्द्रले-

ष्ठेव जनमनोहारिणी स्नातुं त्रिपथगां यान्ती राजपुरोधसा दृष्टा दण्डाधिपतिना कुमारसचिवेन च। दृष्टा च ते सद्य एव सर्वे कामसायकलक्ष्यतां गताः। सापि तस्मिन् दिने स्नान्ती कथञ्चित् क्षतविलम्बा दिवसावसानमकरोत्। अथागच्छन्तीं पथि सायं कुमारसचिवस्तां सहसाग्रहीत्। सापि प्रतिभानबलादब्रवीत् भद्र! अभिप्रेतमिदं ममापि तवैव, परमहं सत्कुलजा प्रोषितभर्तृका च तत् कथमेवमाचरेयं कोऽपि कदाचित् पश्येत् ... तव मम च ध्रुव मनर्थो भवेत् तस्मात् त्वया रात्रौ ... प्रहरे एव मद्गृहमागन्तव्यं वसन्तोत्सव ... न कोऽपि आवयो र्लक्षयिष्यति। इत्युक्ता तेन ... सा यावत् किञ्चित् गता तावत् पुरोधसा तथैव निरुद्धा तस्यापि तस्यामेव रात्रौ द्वितीये प्रहरे सङ्केत मकल्पयत्। ततश्च तेनापि मुक्ता कथञ्चित् कञ्चिदध्वा ... गता दण्डाधिपेन निरुद्धा। अथ सा तस्यापि तस्यामे... निशि तृतीये यामे विहितसङ्केता दैवात् तेनापि मुक्ता सञ्जातकम्पा कथञ्चित् गृहमगमत्। आगत्य च स... सखीनां सर्वमावेद्य स्वैरमब्रवीत् प्रोषितभर्तृकाय... वरं मरणं कुलनार्या इति। अथ सा चिन्तयन्ती मा... स्मरन्ती शोचन्ती च स्वं वपुः साध्वी निराहारा त... निशामनैषीत्। अत्रान्तरे ब्राह्मण पूजार्थं किञ्चि... धनमानेतुं हिरण्यगुप्तसकाशं कापि प्रातः सव... प्रेषिता। स चागत्य हिरण्यगुप्तः सायमेकान्ते तामभाषत। सुन्दरि! भजस्व मां ततो भर्तुस्तापि...

तं धनं ददामि। तदाकर्ण्य सा चिरहिताच्च भर्त्तृ-धन स्थितिं मत्वा, पापञ्च तं वणिजमालोक्य खेदा-मर्षसमन्विता तस्यापि रात्रेः पश्चिमे यामे सङ्केत-मकार्षीत् गतश्च स तद्गामी तदाश्रया।

अथ सा चेटीभिः कस्तूरिकादि संयुक्तं तैलमिश्रितं कज्जलं कुण्डस्थितमकारयत् कृताश्च तया तत्तैलाक्ताश्च-त्वारः चीरखण्डाः। कारिता च वहिर्गला कापि स्थूला मञ्जूषा। अथान्तरे वसन्तोत्सवोचितवेशः कुमारस-चिवः इतिते प्रथमे यामे समागतो। अलक्षितप्रवि-ष्टमब्रवीदुपकोषा, नाहमस्नाता त्वां स्पृशामि तत् स्नानार्थमन्तरं प्रविश। सोऽपि मूढस्तथेति चेटीभिरभ्य-न्तर्गृहं गुप्तमन्धकारमयं प्रवेशितः। तत्र ताभिस्तस्य वस्त्राणि आभरणानि गृहीत्वा अन्तर्वासार्थं चीरखण्ड-मेकं दत्त्वा च आपादमस्तकं अङ्गेषु तत्तैलकज्जलमभ्यङ्ग-भङ्ग्या सन्न्यस्तम्। यावच्च ताः तत्प्रत्यङ्गं मर्द्दयन्ति तावत् द्वितीये प्रहरे पुरोधाः समागमत्। मित्रं वररुचेः प्राप्तः राजपुरोहितः किमर्थमिति जातसम्भ्रमास्तास्त्वमिदानीमि-हैव प्रविशेत्युक्त्वा तथाविधं नग्नं कुमारसचिवं ससम्भ्रमं मञ्जूषायां न्यक्षिपन् अबध्नंश्च वहिरर्गलेन ताम्। पुरोहि-तोऽपि तथैव तमसावृते अन्तःपुरे हृतवस्त्रादिश्चेटिकाभि चीरखण्डधरः यावत् विमोहितस्तावत् तृतीये यामे दण्डाधिपतिः समागमत्। चेटीभिश्च तदागमनेन भयं प्रदर्श्य पुरोहित स्तथैव मञ्जूषायां निक्षिप्तः। अथ ता अर्गलेन तत्रैव बद्धा ताभिः स्नानापदेशेन सोऽपि दण्डाधिपः कज्ज-

लादि मह्नैश्चीरखण्डदानैश्च यावत् पूर्ववत् प्रतार्थ्यतेस्म तावत् पश्चिमे यामे सएव वणिगाययौ। अथ तदागमनेन च भयं प्रदर्श्य तमपि दृष्टाधिपं तथैव मञ्जूषायां निक्षिप्य अर्गलेन च तां बद्धा चेट्यः उपकोशासमीपमाजग्मुः। ते च त्रयः मञ्जूषान्तःस्था अन्धतामिस्रपतिता इव भयेन लज्जया च परस्परं नालपन्ति स्म। अथ सा उपकोशा तत्र दीपं दत्त्वा तञ्च वणिजं तत्र प्रवेश्य अवदत् देहि मे भर्त्तृस्थापितं धनम्। तदाकर्ण्य सोऽपि [illegible] शून्यमालोक्य गृहं [illegible] अभाषीत् उक्तमेव मया तव भर्त्रा [illegible] पितं धनं ददाम्येवेति उपकोशा च तदाकर्ण्य श्रावयन्ती अवादीत् हे मञ्जूषास्था देवाः! शृणुत गुप्तस्य वचनम्। इत्युक्त्वा दीपं निर्वाप्य च सोऽपि वणिक् चेटीभिस्तथैव स्नानव्याजेन कज्जलैश्चिरं मर्दयित्वा गच्छाद्य रात्रिर्गता इत्यभिधाय निशाशेषे गलहस्तेन निष्काशितोऽनिच्छन्नपि। अथ चीरवसनो मसीलिप्तः पदे पदे श्वभिरनुधावितो लज्जया निजं निकेतनं कथमपि जगाम। तत्र दासजनस्य सविधे मसीं क्षालयतः नाशकत् मुखं दर्शयितुम्। कष्टाहि दुराचार पद्धतिः।

अत्रान्तरे चेटिकानुगता उपकोशापि प्रातर्गुरूणामनिवेद्य नन्दस्य नृपतेः मन्दिरमगच्छत्। अवोचच्च राजन्! हिरण्यगुप्तो वणिक् भर्त्रा मम न्यासीकृतं धनं जिहीर्षतीति एवं विज्ञप्तश्च राजा स्वयं तत् परिज्ञातुं तदैव तं वणिजमानयत्। सोऽपि मम हस्ते नास्याः किमपि अस्ति देव! इति अभाषत। ततश्च उपकोशा अवदत् देव! सन्ति मेऽत्र

साक्षिणो, गृहदेवाः ये हि मम भर्त्रा मञ्जूषायां निक्षिप्ताः प्रवासगमनोद्यतेन। अनेन च धूर्त्तेन तेषां समक्षमेव धनमङ्गीकृतं अतस्तामानाय्य इह पृच्छ्यन्तां, संशयापनोदनाय। तदाकर्ण्य विस्मितो राजा तामानेतुमादिशत् क्षणेन च बहुभिर्जनैः सा समानीता। अथ उपकोशा अब्रवीत् सत्यं वदत देवताः वणिजानेन यदुक्तम्। ततो निजं गृहं यात नोचेत् युष्मान् दाहयामि वा सदसि शानि। तच्छ्रुत्वा भीतभीतास्ते मञ्जूषास्थाः ब्रुवन् सत्यं समक्षमस्माक[illegible]न धनमस्या अङ्गी- ततो निरुत्तरो वणिक् [illegible] तत् प्रत्यपद्यत। उपकोशामभ्यर्थ्य राज्ञा कौतुकाक्रान्तचित्तेन सदस्येव अर्गलाभङ्गेन मञ्जूषा उद्घाटिता। तत्रस्थाश्च निष्कृष्टास्तमः पिण्डा इव ते त्रयः पुरुषाः क्रमेण सर्वैः परिज्ञाताः। अथ हसत्सु सभ्येषु किमेतदिति राज्ञा पृष्टा उपकोशा सर्वमेव तदामूलतः समाचचक्षे। सभ्याश्च अचिन्त्यमेतत् सतीनां चरित्रमिति सर्वे तामभिननन्दुः। ते च पारदारिकाः पुरुषाः त्रय एव हृतसर्वस्वा देशान्निर्वासिता भूभुजा। दौःशील्यं कस्य भूतये?। उपकोशा च त्वं मे भगिनीति राज्ञा अभिनन्दिता दत्तबहुधना च प्रेषिता स्वं गृहमगमत्। श्रुत्वा च तं वृत्तान्तं वर्षोपवर्षौ भृशं ननन्दतुः पुरवासिनश्च सर्वे विस्मयस्मेराननाः अभूवन्।

एतस्मिन्नन्तरे मया तीव्रं तपश्चरता वरदः शम्भुराराधितः तोषितश्च। तेन च तदेव पाणिनीयं शास्त्रं प्रकाशयितुमादिष्टोऽहं तदिच्छानुरोधात् तथैव कृतवान् आग-

तस्माच्च तत्प्रसादेन अश्रान्तः स्व गृहम् । आगत्य च मातरं गुरूंश्च यथाविधानमभ्यर्च्य तमद्भुतमुपकोशाच-चरितमश्रृणवम् ।

अथ वर्षो मन्मुखात् नवं प्रकाशितं तद्व्याकरणं श्रोतुमैच्छत् प्रकाशयामास च स्वामिकुमार स्तत् सर्वं तस्य । ततः व्याडीन्द्रदत्तौ दक्षिणार्थं गुरुमभ्यर्थयामासतुः । अब्रवीच्च गुरुः स्वर्णकोटिर्दीयतां मह्यमिति । तथेत्यङ्गीकृत्य गुरुं तौ च मामवोचतां एहि सखे ! भूपतेर्गुरुदक्षिणामभ्यर्थितुं गच्छामः नान्यस्मात् स्वर्णसंख्या प्राप्यते । स हि नवाधिकनवतिकोटीनां पतिः । तेन च वाचा प्राक् उपकोशा धर्म्मभगिनी कृता अतोऽयं ते श्यालः, तत्सम्बन्धाच्चावश्यमेव प्राप्तव्यमिति । इति निश्चित्य सर्वे वयं अयोध्यास्थं नन्दकटकमगच्छाम । प्राप्तमात्रे च तस्मिन् अस्माभिः स राजा निधनं गतः सञ्जातश्च तेन राष्ट्रे महान् कोलाहलोऽस्माकं विषादेन । ततश्चेन्द्रदत्तः सञ्जातयोगसिद्धिरवोचत् गतासोरस्य भूपतेः शरीरं प्रविशामि वररुचिरर्थी भवतु ददामि चास्मै काञ्चनकोटिं आप्रत्यागमाच्च शरीरं मे व्याडिः रक्षतु । इत्युक्त्वा तद्भूपशरीरमिन्द्रदत्तः समाविशत् । प्रत्युज्जीविते च नृपे राष्ट्रे तस्मिन् महानुत्सवः समजनि । व्याडिना च शून्ये देवगृहे इन्द्रदत्तस्य देहे रक्षिते राजकुलमहमगच्छम् । प्रविश्य च मया यथाविधानमाशिषं कृत्वा याचितः स योगनन्दो गुरुदक्षिणायै । ततः सोऽपि योगनन्द शकटारं मन्त्रिणमाज्ञापयत् देहि अस्मै सुवर्णकोटिमिति

मन्त्रिणा तु तेन नृपस्य मृतस्य जीवितं सत्यव्रतेन: प्राप्तिश्चाकलय्य तथ्यमवगतम्। किमज्ञेयं खलु बुद्धिमताम्? अथ स देव! दीयते इत्युक्त्वा व्यचिन्तयत् बालस्तावदस्य तनयः राज्यञ्च बहुशत्रु तदेतदस्य शरीरमीदृशमपि रक्षामि। एवं निश्चित्य स सर्वानेव मृतदेहानदाहयत्। चारैश्चान्विष्य तस्मिन् देवगृहे इन्द्रदत्तशरीरमपि व्याडिहस्तादाच्छिद्य दग्धम्।

ई च हेमकोटिसमर्पणे त्वरमाणं राजानमाह शक-ष! उत्सवासक्तचित्तः स[illegible]रिजनः तत्क्षणं प्य विप्रः शीघ्रमहं ददाम्येव। अथ एत्य व्याडिना योगनन्दस्य पुरतः अब्रह्मण्य मुद्घोषितं क्रन्दितञ्च अनुत्क्रान्तजीवः योगस्थितो द्विजः अनाथः शव इति ज्ञात्वा शकटालेन बलात् दग्ध इति तदाकर्ण्य योगनन्दस्य काप्यवस्था शोकार्त्तस्य समभवत्। ततश्च देहदाहात् तस्मिन् राजनि स्थिरे जाते महामतिः शकटालो मह्यं सुवर्णकोटिमदात्। ततश्च योगनन्दो विजने व्याडिमानीय सशोकोऽब्रवीत् शूद्रीभूतोऽस्मि विप्रोऽपि तदनया श्रिया मे नास्ति सन्तोष इति तच्छ्रुत्वा आश्वास्य च तं व्याडिः कालोचित मभाषत विदितोऽसि शकटालेन तत्सावधानेन भवितव्यं महामन्त्री अयं स्वबुद्ध्या अचिरात् त्वां विनाश्य पूर्वनन्दसुतं चन्द्रगुप्तं भूमिपतिं करिष्यतीति मे मतिः। तस्मात् त्वं वररुचि मञ्जसा मन्त्रिणं कुरु येन तद्बुद्ध्या दिव्यप्रभावसम्पन्नया राज्यं स्थिरं भवेत् इत्युक्त्वा गुरुदक्षिणां दातुं गते व्याडौ तदैव मा-

आनीय योगनन्दो मन्त्रित्वे समभ्यषेचयत्। मयोक्तं राजन्! शकटाले पदस्थिते तवेदं राज्यं नैव स्थिरं मन्ये तस्मात् कौशलेनैनं नाशय इत्यभिहिते योगनन्दो नरपतिः जीवन्‌ 'हिजोऽनेन हत' इति दोषमुद्घोष्य शकटालं सपुत्रशतं अन्धकूपान्तर्व्यक्षिपत् आयत्त च तत्र सपुत्रस्य प्रत्यहमेकशरावशक्तुं एकशरावमितं सलिलं च जीवनाय। शकटालस्तु पुत्रानाह। वत्साः! शक्तुभिरमीभि रेकोऽपि कथमपि यदि वर्त्तेत का कथा बहूनां तदेतान् सकलान् शक्तून् स एव भक्षयतु, यः योगनन्दस्य वैरनिर्यातनायालमिति। निश्चयोक्तं तात! त्वमेवात्र शक्तून् भुङ्क्ष्व, न वयम्। शत्रुप्रतिकारोहि प्राणेभ्योऽपि गरीयो मनस्विनामिति। ततः स शकटालः एक एव तैः शक्तुवारिभि र्वर्त्तयन् प्रतिहिंसाप्रवणमनाः कथमपि कालमनयत्। अचिन्तयच्च भूतिमिच्छता प्रभुचित्तमबुद्धा अविश्वस्तेन च न स्वेच्छया व्यवहार्यम्। कालेन तस्य पश्यत एव सुदुःतं क्षुत्प्रपीड़ितं व्यपद्यत केवलमेकः स एव तस्थौ, अक्रूरं जिगीषु हृदयमहो?

अथ च योगनन्दो बुद्धिबलेन साम्राज्ये बद्धमूलोऽभवत्। अत्रान्तरे च व्याड़िर्दत्तगुरुदक्षिणः समाययौ उवाच च। भ्रातः! चिरं ते राज्यसुखमस्तु आमन्त्रयामि त्वां गच्छामि क्वचित् तपश्चरितुमिति। तदाकर्ण्य योगनन्दो वाष्पाकुलचित्तस्तमभ्यभाषत भार्य्य! राज्ये मे भोगानशेषान् भुङ्क्ष्व, त्यक्त्वा मां न क्वचिद् गन्तव्यमिति। व्याड़िरब्रवीत् राजन्! क्षणभङ्गुरं शरीरं अत्र असाराय

संसारः कोऽत्र धीमान् मज्जति, न हि मोहयति लक्ष्मीः प्राज्ञं विद्युद्विलास चञ्चला इत्युक्त्वा स तपसे निश्चितात्मा निर्जगाम।

अथ योगनन्दः स्वनगरं पाटलिपुत्रं मत्सहितः सकलसैन्यसामन्तावृतः समाजगाम। काणभूते! तत्रागत्य मन्त्रिकर्म्मनियतः प्रियापरिचर्य्यमाणोगुरुभिर्जनन्या च सार्द्धं मोदमानः सच्छ्रया कालमयापयम्। तत्र च प्रतिदिनं तपःसमा[illegible]ता सुरसिन्धुर्मेम बहु काञ्चनमदात्, सरस्वती [illegible]रिणी सदैव मम कार्य्याणि [illegible]आदिशत्।

—०*०—

## अथ पञ्चमस्तरङ्गः।

पुनश्च वररुचिरभाषत काणभूते! कालेन गच्छता योगनन्दः व्यसनवशमगमत् मत्तो गजवर इव न ददर्श किमपि। सहसोपस्थिता लक्ष्मीः कं न विमोहयेत्। व्यचिन्तयञ्च अयं तावत् राजा वि[illegible] अस्य च कार्य्य चिन्तया स्वधर्म्मो मम विनश्यति त[illegible] शकटाल सहायं समुद्धरे स एव बहूनि कार्य्याणि द्रक्ष्यति, [illegible] मम धर्म्महानि र्न भवेत् मयि स्थिते च स विरुद्ध किमपि राजनि कर्त्तुं न शक्नुयादिति निश्चित्य नृपानु मत्या अन्धकूपतः समुद्धृतः शकटालः। स्वदर्शीहि द्विजात [illegible] स तु शकटालः पुनर्मन्त्रिपदमारूढः मदवशवर्त्ती दुर्जयं योगनन्दोऽयं स्थिते वररुचाविति कालं प्रतीक्षितु मान्त्रि[illegible] [illegible]दिच्छयैव राजकार्य्याणि सर्वाण्यकरोत्।

-- अथैकदा योगनन्दो बहिर्नगरात् निर्गतः गङ्गायां संश्लिष्टपञ्चाङ्गुलिं हस्तमेकं ददर्श, पप्रच्छ च किमेतदिति मामाहूय तत्क्षणम्। अहञ्च तस्यां दिशि द्वे निजाङ्गुल्यौ दर्शितवान्। तेन च तस्मिन् तिरोभूते हस्ते राजा अतिविस्मयात् पुनर्मां अपृच्छत् अहमब्रुवं राजन्! पञ्चभिर्मिलितैः किं न साध्यते जगतीति हस्तोऽसौ सङ्केतितवान् स्वाङ्गुलीः पञ्च दर्शयन्। ततश्च मया अङ्गुलिद्वये दर्शिते एकचित्ते सति द्वयोरपि किमसाध्यमिति गूढ़विज्ञाने उक्ते नृपः परं सन्तोषमवाप शकटालस मद्बुद्धिमतिदुर्जयां विषादम्।

कदाचित् योगनन्दः स्वमहिषीं वातायनाभिमुखं ब्राह्मणमतिथिमेकं पृच्छन्तीं दृष्ट्वैव सहसा कोपपराधीनचेतास्तस्य विप्रस्य वधदण्डमादिशत्। ईर्ष्या हि विवेकनाशिनी। तस्मिन् वध्यभूमिं नीयमाने द्विजाती तदानीं गतजीवोऽपि कश्चित् विपणिस्थः मत्स्योऽहसत्। राजा तु तद्दृष्ट्वा विप्रस्य तस्य वधं न्यवारयत् अपृच्छच्च मां मत्स्यहास्यहेतुम्। निरूप्यैतत् कथयामीत्युक्त्वा निर्गतं मामेकान्ते चिन्तितोपस्थिता सरस्वत्यगादीत् अस्य तालतरोः पृष्ठे रजन्यां सलक्षित स्तिष्ठ अत्रैव मत्स्यहासकारणमसंशयं श्रोष्यसीति। तदाकर्ण्याहं निशि तत्र तालतरोः पृष्ठे स्थितोऽपश्यमेकां राक्षसीं घोरां समागतां बालपुत्रपरिवृताम्। सा भक्ष्यं याचमानान् पुत्रानाह प्रतीक्षध्वं तावत् प्रातर्वो विप्रमांसानि दास्यामि नाद्य हतः स इति कस्मान्नाद्य हतो-

ऽसाविति तैः पृष्टा सा पुनरब्रवीत् तं दृष्ट्वा इह कश्चित् कृतो मत्स्यो अहासीति। कथं तेन हसितमिति पुनस्तैः पृष्टे राक्षसी अवदत्। राज्ञोऽस्य सर्वाश्च राज्ञो हि विप्लुताः सर्वत्रान्तःपुरेऽस्य स्त्रीरूपाः पुरुषाः स्थिताः, अनपराधस्तु विप्रो हन्यत इति हसति स्म तिमिः। तदेतदाकर्ण्य ततोऽपक्रान्तः प्रातः सर्वं मत्स्यहासहेतुं राज्ञे न्यवेदयम्। राजा च अन्तःपुरेषु स्त्रीरूपान् तान् पुरुषान् दृष्ट्वा मां बहु अमन्यत मुमोच च विप्रं वध-

इत्येवमादि तस्य विचेष्टितं नृपतेः राक्षस्य

पूज्यमाने मयि कश्चिदभिनवश्चित्रकारः समाययौ

स पटे योगनन्दं महादेवीञ्च। चित्रञ्च तत् सजीव-मेव केवलं वाक्चेष्टारहितमभूत्। राजा च चित्रकरं परितुष्टः पारितोषिकदानेन समतोषयत् अस्थापयच्च तं चित्रपटं वासगृहभित्तौ।

अथ कदाचित् तत्र वासगृहे प्रविष्टोऽहमपूर्णलक्ष-णामिव महादेवीप्रतिकृतिं मन्यमानः प्रतिभावशात् देहलक्षणानि पर्यालोचयन् तस्य मेखलापदे तिलकं दत्त्वा ताञ्च सम्पूर्णलक्षणां ज्ञात्वा निरगाम्। योगनन्दश्च प्रविष्टस्तत्र तिलकं अभिनवविन्यस्तं व्यलोकयन् केनायं रचित इति अन्तःपुरचारिणोऽपृच्छत् ते च तिलकस्य कर्त्तारं मां न्यवेदयन्।

राजाचिन्तयत् देव्या गुप्तप्रदेशस्थमिमं नान्यो मां बिना वेत्ति, तदेवं वररुचिः कथं ज्ञातवान्? नूनं अनेन छन्न-मागच्छता अन्तःपुरं मे दूषितं अतएवायं अन्तःपुरस्थाम्

स्त्रीरूपान् नरान् अद्राक्षीत्। अवल्पाये हि परिमोहिनी मतिः। एवं सञ्चिन्त्य योगनन्दः क्रुधा ज्वलन् शकटाल-मेकान्ते समाहूय वैरं समादिशत् वध्यतामयं दुराचारो वररुचिरिति। शकटालस्तथेत्युक्त्वा बहिरगमत् अचिन्तयच्च नैव शक्तिर्वररुचिं हन्तुं दिव्यप्रभावसम्पन्न एषः उद्भूतवांश्च आमापदः विशेषतो विप्रः तदेनं गुप्तं सम्प्रति स्वीकरोमीति निश्चित्य मामभ्येत्य अब्रवीत्। राज्ञः कोप-कारणमकारणं त्वयि सम्प्रति सञ्जातं तदन्यं कञ्चित् प्रवा-दाय हन्मि त्वञ्च मद्गृहे निभृतं तिष्ठ रक्षामि [illegible] कोप-नात् नृपात् इति। अहञ्च तद्वचनात् तद्गृहे निभृ[illegible] ष्ठम्। स च रजन्यां मद्वधाख्यानाय अन्यं [illegible] राज्ञे व्यजिज्ञपयत्। एवं प्रयुक्तनीतिं तमहं प्रीत्या सम-ब्रुवं त्वमेवैको मन्त्री योग्यः यन्मां हन्तुं न त्वया मतिः कृता। न हि केनापि हन्तुमहं शक्यते राक्षसो मित्रमस्ति मे ध्यातमात्रः स समागत्य विश्वं ग्रसते मदिच्छया। राजा-यमिन्द्रदत्ताभिधः सखा मे अवध्यः द्विजातिः। तदाकर्ण्य मन्त्री अब्रवीत् राक्षसोऽयं मे दृश्यतामिति ततो ध्यात-मात्रमागतं रक्षोऽहमदर्शयं तस्मै। तद्दर्शनाच्च वित्रस्तो विस्मितश्च सः। अन्तर्हिते तस्मिन् रजनीचरे सामब्रवीत् कथं ते राक्षसो मित्रमभूदिति। अहमब्रुवं पूर्वं नगर-रक्षार्थं भ्रमन् एकैको नगराधिपः प्रतिरात्रं क्षयं प्रापदिति श्रुत्वा योगनन्दो मां नगराधिपमकरोत् अहञ्च तदादिष्टो भ्रमन्नपश्यं निशि तत्रां भ्रमन्तं राक्षसम्। स [illegible] इत् ब्रूहि [illegible] का सुरूपा [illegible]

ख्यातः सरस्वती प्रसादेन वर्णितः। ततश्च तस्मात् ग्रामात् विमुक्तेन राजपुत्रेणाहं स्तुतः। पृष्टश्च राज्ञा कथमेतत् ज्ञातमिति। ततोऽहमवादिषं राजन्! लक्षणैरनुमानेन प्रतिभानेन च किं हि प्रज्ञावतामगोचरम्? तद् यथा राज्ञ्यास्तिलको ज्ञातः तथा सर्वमिदं मया ज्ञायते इति मद्वचनात् राजा लज्जया अनुतापेन च मलिनवदनोऽभवत् अददच्च प्रभूतं सत्कारम्। अहन्तु तमनादृत्य परिशुचिमिव लाभं मन्यमानः स्वगृहमगमम्। शीलं हि विदुषां धनम्। गृहमागते च मयि मत् पुरतः सर्व एव जनोऽरोदीत् आगत्य च सम्भ्रान्त मा मब्रवी दुपवर्षः। राज्ञा हतं त्वां श्रुत्वा उपकोशा ज्वलनमाविवेश जनन्याश्च ते शुचा हृदयमस्फुटत्। श्रुत्वैव तत् अभिनवशोकावेगविह्वलः सद्य एव वातरुग्ण इव द्रुमः क्षितावपतम्। क्षणेन च संज्ञां प्राप्य बहु व्यलपम्। प्रियबन्धुविनाशाग्निः कं न तापयेत्?। वर्षेण चागत्य संसारस्यानित्यतामुपदर्शयता कथञ्चित् प्रबोधितोऽहं धृतिमाप्तवान् आश्रितवांश्च सर्वं परित्यज्य विरक्तहृदयः प्रशमैकसमाश्रयस्तपोवनम्।

गच्छता कालेन कदाचित् कश्चित् विप्रः अयोध्यातस्तपोवनं मम समागच्छत्। मया तु योगनन्दस्य राज्यवार्त्तामनुयुक्तः स प्रत्यभिज्ञाय मां सशोक इव अब्रवीत् शृणु तावत् त्वयि तत् सकाशात् गते चिरेण लब्धावकाशः शकटालः चिन्तयन् तस्य वधोपायमेकदा क्षितिं खनन्तं चाणक्यनामानं विप्रमद्राक्षीत्। कथं भुवं खनसीत्युक्तेन सोऽब्रवीत् दर्भमूलक्षयायैषः अनेन

मे पादः ख्यत इति। तदाकर्ण्य मन्त्री सहसा सक्रोधं क्रूरनिश्चयं तं विप्रं योगनन्दस्य वधोपायं मत्वा अवादीत् ब्रह्मन्! नन्दस्य भूपतेः गृहे त्रयोदशीश्राद्धं ते दापयामि तत्र दक्षिणातः सुवर्णलक्षं तव भविष्यति भोक्ष्यसे यथेष्टं सुपाद्येयं द्रव्यजातं, एहि तावत् गृहं ममेत्युक्त्वा शकटालस्तमानिनाय गृहम्। श्राद्धदिवसे च तं राज्ञे अदर्शयत् स चैतं अहृषे। उपाविशत् च चाणक्यः श्राद्धभोक्त्रासने। अत्रान्तरे सुबन्धु नाम कश्चिद् विप्रः श्राद्धभोजमैच्छत्। तदर्थं विज्ञप्तश्च भूपतिः शकटालेन प्रोवाच नापरो योग्यः सुबन्धुरेव श्राद्धधुरि तिष्ठतु। आगत्य शकटालो भयानतः न मे कश्चिदपराध इत्युक्त्वा तां राजाज्ञां चाणक्याय न्यवेदयत्। सोऽपि चाणक्यः कोपेन ज्वलन्निव शिखां मुक्त्वा प्रत्याख्यानात् सप्तभिरेव दिवसैर्नन्दोऽयं मया हन्तव्य स्ततश्चेयं शिखा बन्धनीयेति तदाकर्ण्य कुपितो योगनन्दः। भयात् पलायमानं चाणक्यं अलक्षितं शकटालः स्वगृहमनयत्। तत्र स्थितः स मन्त्रिसाहाय्येन कुत्रापि गत्वा कृत्यां असाधयत्। तत्प्रभावेण च योगनन्दः दाहज्वरमवाप्य सप्तमे दिवसे पञ्चत्वमवाप। शकटालेन च तत्सुतं हिरण्यगुप्तं हत्वा पूर्वनन्दसुते चन्द्रगुप्ते लक्ष्मी र्निवेशिता। अथ प्रज्ञया बृहस्पतिमिव तं चाणक्यं तस्य मन्त्रित्वे निधाय कृतवैरप्रतिक्रियः कृतकृत्यश्च मन्त्री पुत्रशोकेन निर्विण्णः तपोवनमगात्।

इत्याकर्ण्य काणभूते! नितरां खेदमापन्नेन सर्वमेव

चञ्चलं मन्यमानेन विन्ध्यवासिनीमिमां द्रष्टुमागतेन मया तत्प्रसादात् त्वां दृष्ट्वा जातिःस्मृता उक्ता च दिव्येयं कथा दिव्यं ज्ञानमवाप्य। इदानीं विमुक्तशापोऽहं देह मिमं विहातुं यतिष्ये, त्वन्तु सम्प्रति तिष्ठात्र यावत् शिष्यसहितः त्यक्तभाषात्रयः गुणाढ्यनामा विप्र स्त्वत्सकाशमायाति, सोऽपि क्रोधात् शम्भुमिव देव्या शप्तो मत्सहपाती माल्यवान् नाम गणोत्तमो मर्त्यत्वमापन्नः। तस्मै महेश्वरोक्ता एषा कथा त्वया कथनीयाऽततस्ते तस्य चोभयोः शापनिवृत्तिर्भवितेति।

इत्थं काणभूतये निवेद्य वररुचिर्देहमोक्षाय बदरिकाश्रमं पुण्यं जगाम। गच्छंश्च शाकाशनं नाम मुनिं ददर्श, तत्समक्षञ्च तस्य मुनेः कुशेन करः क्षतः। ततश्च तस्मात् निर्गच्छत् रुधिरं तेन वररुचिना स्व प्रभावेण तदहङ्कारपरीक्षार्थं कौतुकात् शाकरसीकृतम्। दृष्ट्वा च तत् मुनि रसौ हन्त सिद्धोऽस्मि इति दर्पमाययौ। ततो वररुचिः किञ्चिद्विहस्य तम वादीत् जिज्ञासार्थं मया ते रक्तं शाकरसीकृतं त्वया अद्यापि नाहङ्कारः परिहीयते परं ज्ञानमार्गे अहङ्कारो दुरपक्षेयः परिघः। विना च ज्ञानं नास्त्येव मोक्षो व्रतशतैरपि, स्वर्गस्तु मुमुक्षूणां क्षयित्वात् चित्तं न प्रलोभयेत्। हे मुने! तस्मादहङ्कारविहीनो ज्ञानोपार्ज्जने यतस्व। एवं तं विनीय तेन च कृतनुतिर्वररुचिः बदरिकाश्रमं प्रशान्तमाययौ। अथ स निरतिशयया भक्त्या देवीं शरण्यां शरणमुपगतो मर्त्यभावं मुमुक्षुः। सापि

शरीरिणी आविर्भूय तस्मै देहविमुक्तये अनलसमुत्थां धारणामुपदिदेश। उपदिष्टश्च स धारणया देहं दग्ध्वा निजां दिव्यां गतिं लेभे, काणभूतिश्च विन्ध्यकानने अभीष्टगुणाढ्यसमागमं प्रतीक्षमाणं तस्थौ।

इति पञ्चमस्तरङ्गः।

—०*०—

अथ षष्ठस्तरङ्गः।

अथ स माल्यवान् गुणाढ्य नामा द्विजन्मा भूत्वा मर्त्यरूपधारी विचरन् सातवाहनाख्यं भूपतिं सेवित्वा प्रतिज्ञया तदग्रे च संस्कृताद्यास्तिस्रो भाषाः परित्यज्य खिन्नहृदयः विन्ध्यवासिनीं द्रष्टुमाजगाम। ददर्श च देव्यादेशेन गत्वा तत्रैव काणभूतिम्। ततो निजां जातिं स्मृत्वा सहसा प्रबुद्धः पैशाचीं भाषामाश्रित्य निजं नाम श्रावयित्वाब्रवीत् सखे! पुष्पदन्तात् श्रुतां दिव्यां कथां शीघ्रं कथय येन त्वं च अहं च समं शापं तरिष्याव इति तदाकर्ण्य प्रणतो हृष्टश्च काणभूतिरुवाच कथयामि कथां परं कौतुकं मे महत् तदीय माजन्मवृत्तं श्रोतुं तत्-कथनेन मामनुगृहाण। इत्येवमर्थितः स गुणाढ्यो वक्तुमारेभे।

अस्ति सुप्रतिष्ठितं नाम नगरम्। तत्रासीत् सोमशर्मा नाम कश्चित् द्विजातिः। वत्स गुल्मको नाम तस्य द्वौ तनयौ, श्रुतार्था नाम कन्यका च। अथ कालेन सः ब्राह्मणः सभार्य्यः पञ्चतामगमत्। पुत्रौ च तौ स्वसारं

तां पालयामासतुः। अकस्माच्च सा सगर्भा अभूत् तत् दृष्ट्वा तयोस्तत्र पुरुषान्तराभावात् परस्परं शङ्का समजनि। ततः श्रुतार्था तयोश्चिन्तया अभाषत, भ्रातरौ! पापशङ्का न कार्य्या श्रूयतां कथयामि अस्ति नागराजस्य वासुकेः भ्रातुः पुत्रः कुमारः कीर्त्तिसेनो नाम, तेनाहं दृष्टा कदाचित् स्नातुं गता। ततः स मदनासक्तचेताः अन्वयनामनी निवेद्य गान्धर्व्वेण विवाहेन मां भार्य्यामकरोत्। अथ कोऽत्र प्रत्यय इति ताभ्यामुक्ता सा रहसि तं नागकुमारं सस्मार। स्मृतमात्रागतश्च स वत्सगुल्मौ अभाषत, मयैवेयं भार्य्या कृता शापभ्रष्टा चेयं सुरसुन्दरी युवयोः स्वसा युवाञ्च शापभ्रष्टौ। अस्याश्च पुत्रो जनिष्यते ततो युष्माकं शापविमुक्तिर्भवितेति। उक्त्वा सोऽन्तर्हितः। ततश्चाल्पैरेवाहोभिः श्रुतार्थायाः पुत्रो जातः तमेव मां जानीहि। अयं गुणावतारो जात इति तदानीमुदचरदन्तरीक्षात् अशरीरिणी सरस्वतीति बान्धवा मां गुणाढ्यनामानमाहुः। मदीयेन च जन्मना ते मम जननीमातुलाः क्षीणशापाः कालेन पञ्चतां गताः। अहञ्च शोकार्त्तो नितरामधीरतां गतः।

अथ अहं शोकमुत्सृज्य बालोऽपि विद्यालाभाय दक्षिणापथ मगमम्। कालेन तत्राधिगतसर्वविद्यः प्रसिद्धिं गतः निजगुणख्यापनाय स्वदेशमागतस्तत्र सुप्रतिष्ठित-नगरे सशिष्यः प्रविशन् कामपि शोभा मपश्यम्। क्वचित् छन्दोगाः सामानि गायन्ति क्वचिद् वेदनिर्णयार्थं विप्राणां वादः परस्परं जिगीषूणाम्। यत्र द्यूतकला-

भक्षः तत्रैव कक्षगतो निधिरिति कश्चित् कितवा द्यूत-
मकुर्वन् । कश्चिच्च वणिजामग्रणीः वाणिज्यकौशलं
कीर्त्तयन्नाह: ब्रवीति च परिमितलाभी अर्थं दयीन्
प्राप्नोतीति किं चित्रं अहन्तु विनैवार्थं लक्ष्मीमासादि-
तवान् । गर्भस्थे एव मयि पिता मम पञ्चत्वमाप पापैश्च
मद्गोत्रजैस्तदा मम मातुः सर्वं धनं हृतम् । ततः सा
तेषां भयात् माता गर्भं रक्षन्ती कुमारदत्तस्य पितृमित्रस्य
भवनं गत्वा अतिष्ठत् । ततश्चाऽहं तस्याः सञ्जातः । कष्टाच्च
मज्जननी कष्टकर्माणि कुर्व्वती मामवर्द्धयत् । अथ दीनया
मात्रा कमपि उपाध्याय मभ्यर्थ्य अहं तत् सकाशे अर्पितः ।
शिक्षित श्च तेनाहं लिपिं किञ्चित् गणितञ्च । अथ
मात्राभिहितं वत्स ! वणिक्पुत्रोऽसि, साम्प्रतं वाणिज्यं कुरु
अस्मिन्देशे विशाखिल नामा कश्चित् महाधनी वणिगस्ति
स दरिद्राणां कुलीनानां मूलधनं ददाति गच्छ याचस्व
तमिति । ततश्चाहं तत्सकाश मगच्छम् । सोऽपि तत्क्षणं
क्रोधाविष्टः कञ्चित् वणिक्पुत्र मब्रोचत् मूषको दृश्यते
योऽयं गतप्राणः, अनेनापि पण्येन कुशलेन धनमर्ज्यते,
पाप ! तव तु बह्वो दीनारा मया दत्ताः तिष्ठतु तावत्
तद्वृद्धिस्त्वया तेऽपि न रक्षिताः । तदाकर्ण्य सहसैवाहं
तं विशाखिलम् । मयाऽयं मूषकस्त्वत्तो भाण्डमूल्याय गृहीत
इति उक्त्वा मूषकं हस्ते कृत्य सम्पुटे चास्य तं लिखित्वा प्रस्थितः
हास्यात् सोऽहसद् वणिक् । गत्वा च मया कस्यचित् वणिजः
मार्जारस्य कृते चणकमुष्टि युग्मेन मूल्येन सः विक्रीतः । तांश्च
चणकान् पिष्टान् कृत्वा गृहीत्वा च जलकुम्भं नगराद् बहिः

काणभूतिरब्रवीत् प्रभो ! सातवाहन इत्यस्य नाम कारणमाकर्णय । युष्मभ्योऽद्यम् यथ यथावत् कथयामि । आसीत् पुरा दीपकर्णिरिति ख्यातः प्रबलप्रतापो नृपतिः । तस्य अभूत् शक्तिमती नाम महिषी । एकदा सुरतक्लान्तां तामदशत् सर्पः । तेन च पञ्चत्वमितायां तस्यां राजा अनपत्योऽपि पुनः ब्रह्मचर्यमग्रहीत् । कदाचित् राज्यरक्षणयोग्य पुत्राभावदुःखितं तं स्वप्ने भगवान् भवानीपतिरादिशत् अरण्ये भ्राम्यन् कुत्रचित् सिंहारूढं कुमारं द्रक्ष्यसि, तञ्च गृहीत्वा गृहं गच्छ, स एव ते पुत्रो भविष्यतीति । अथ राजा प्रबुद्धः स्वप्नं स्मरन् प्रमुदितो मृगयामनुसरन् अटवीमगमत् अपश्यच्च तत्र मध्याह्ने सिंहारूढं तपनतेजसं बालकं पद्मसरस्तटे । अथ नृपतिः बालकं तस्मात् सिंहात् अवरूढमालोक्य एकशरेण जलार्थिनं तं सिंहमवधीत् । स तु सिंहवपुस्त्यक्त्वा सद्यः पुरुषोऽभवत् अवादीच्च किमेतदिति राज्ञा पृष्टः स्ववृत्तान्तम् । राजन् ! धनदस्य सखा सातोनामाऽस्मि यक्ष मेकदा गङ्गायां स्नान्तीं कामपि ऋषिकन्यकामपश्यमगच्छञ्च कामशरैकलक्ष्यताम् । सापि मामवलोक्य मन्मथवशंवदा जाता । ततश्च मया गान्धर्वेण विधिना तामहमुद्वोढम् । तद्बन्धुजनास्तु तत् ज्ञात्वा तां मां च क्रुधा अशपन् हे पापौ ! सिंहौ भवतं स्वेच्छाचारौ युवामिति । शापान्तश्च तस्याः पुत्रजन्मावधि, मम तु भवच्छरपातात् कालो निर्दिष्टः । अथावां सिंहदम्पती जातौ । सा तु कालेन

वेत्सि ? कथं त्वमीदृशो मूर्खः ? एवमुक्तस्तया श्रब्दशास्त्रविदा राज्ञा नृपतिर्हसति तस्मिन् परिजने भृशं लज्जावनतशिराः समपद्यत। त्यक्तजलक्रीड़ः वीतदर्पो जातावमानश्च तत्क्षणं निजमन्दिरं प्राविशत्। ततश्च चिन्तापरः सर्वकार्य्ये हतादरश्चित्रलिखित इव पृष्टोऽपि न किञ्चिदभाषत। पाण्डित्यं वा मृत्युर्मे शरणमिति कृतमतिः शयनीयन्यस्तशरीरः सन्तप्तचित्तस्तस्थौ। अकस्मात् तथाविधामवस्थामालोक्य राज्ञः सर्वः परिजनः किमेतदिति सम्भ्रान्तोऽभवत्। क्रमेण शर्ववर्म्मा अहञ्च तामवस्थां भूपतेः ज्ञातवन्तौ। वासरश्च पर्य्यहीयत। कथमिदानीमपि राजा न स्वस्थ इति पर्य्यालोचन्तावावां तत्क्षणं राजहंसाख्यं राजचेटमाहूय पृष्टवन्तौ। स चाहूतोऽब्रवीत् नेदृशो दृष्टपूर्वः कदाचिदपि भूपतिर्दुर्म्मनाः। अद्य विष्णुशक्तिदुहित्रा मिथ्यापण्डितम्मन्यया राज्ञा एवं विलक्षीकृत इत्यन्या देव्यः सकोपमाहुः। तस्मै तद्राजकिङ्करस्य मुखादाकर्ण्य शर्ववर्म्माहितीयोऽहमतिदुर्म्मनाः संशयादचिन्तयं यदि राज्ञः व्याधिर्भवेत् तदा चिकित्सकाः आगच्छन्ति, आधिर्यदि भवेत् तदा तत्कारणं नोपलभ्यते। नास्त्यस्य विपक्षः कश्चित् राज्यस्य निहतकण्टकत्वात्। प्रजाश्चानुरक्ता दृश्यन्ते, न च काचित् हानिरपि। तत् कस्मादेषोऽपूर्व्वोविकारो राजनि इति चिन्तिते महामतिः शर्ववर्म्मा अवोचत् अहमेतत् जानामि राजायं मूर्खोऽहमिति कृत्वा सदैवानुतप्यते कथं वा पाण्डित्यं स्यादिति सर्व्वदैव चिन्तयति। अथ च

राज्ञावमानित इति श्रूयते तदेतदेव वैमनस्यकारण-
मिति मन्ये । एवं परस्पर मालोच्य रात्रिञ्च तां
कथञ्चिदतिवाह्य प्रातः राजगृहमगच्छाव: । तत्र
सर्वस्य गतिरोधेऽपि कथमपि अहं पश्चाच्च मम शर्ववर्म्मा
प्राविशम् । प्रविष्टश्चोपविश्यान्तिके नृपमवादिषं देव !
अकस्मात् कथमेवं दुर्मना वर्त्तसे ? श्रुत्वापि स तथैव
तुष्णीमासीत् । ततश्च प्रत्युत्पन्नमतिः शर्ववर्म्मा
अब्रवीत् देव ! पूर्वं त्वयोक्तं मां श्रुतिमन्तं कुर्वेति ।
तेनाहमद्य निशि स्वप्नमाणवकं कृतवान् । स्वप्ने च
दृष्ट मेकमम्बुजं नभसश्च्युतं दिव्येन केनापि कुमारेण
विकासितम् । तस्माच्च दिव्या श्वेताम्बरा कापि का-
मिनी निरगात् प्राविशच्च देव ! तव वदनकमलम् ।
ततश्चाहं प्रबुद्धोऽस्मि मन्ये च सा सरस्वती साक्षात्
नात्र संशयः । एवं स्वप्ने निवेदिते सातवाहनः मौन-
मुत्सृज्य साकूतं मामपृच्छत्, प्रयत्नेन शिक्ष्यमाणः पुरुषः
कियता कालेन, पाण्डित्य मधिगच्छति त्वयैतत् कथ्य-
ताम् । मम तेन विना लक्ष्मी न प्रतिभाति विभवैः
किं मूर्खस्य काष्ठस्याभरणैरिवेति ततोऽहमवदम् राजन् ।
द्वादशभिर्वर्षैः सर्वविद्यानां मुखं व्याकरणमधिगम्यते
नरैः । अहं तु तत् वर्षषट्केन त्वां शिक्षयामि ।
श्रुत्वैतत् शर्ववर्म्मा सेर्ष्यमवोचत् सुखोचितो जनः कथ-
मियच्चिरं क्लेशं कुर्य्यात्, अहन्तु देव ! मासषट्केन
त्वां शिक्षयामि । श्रुत्वैतदसम्भाव्य मिदं तं सरोषमहमवं
षड्भिर्मासैस्त्वया नृपतिः शिक्षितश्चेत्, तदा मया सं-

स्नातं प्राकृतं देशभाषाश्चेति त्रयं मनुष्यलोके स्थितं त्यज्यते। शर्ववर्मा अब्रवीत् न चेत् अहं शिक्षयितुं शक्नुयां तदा द्वादशाब्दान् ते पादुके शिरसा वक्ष्यामि। इत्युक्त्वा निर्गते तस्मिन् अहमपि स्वगृहमगमम्। राजापि सिद्धिं मन्वानः स्वस्थो बभूव। शर्ववर्मा च विस्मितः प्रतिज्ञां तां सुदुस्तरां मन्यमानः सानुशयः स्वभार्य्यायै सर्वं वृत्तं शशंस। सा च दुःखिता अब्रवीत् प्रभो! सङ्कटेऽस्मिन् विना स्वामिकुमारेण नान्या गतिर्दृश्यते। शर्ववर्मापि तथेति तामुक्त्वा तस्यामेव निशि पश्चिमे यामे तत्रैव प्रस्थितो निराहारव्रतोऽभवत्। तच्च चारमुखादाकर्ण्य प्रातर्मया राज्ञे निवेदितं, सोऽपि किं भवेदित्यचिन्तयत्। ततश्च सिंहगुप्तो नाम राजपुत्रोऽब्रवीत् देव! त्वयि खिन्ने तदा मे महान् निर्वेदः समभवत्। निर्विण्णश्च भवतः श्रेयसे नगरादस्मात् बहिः चण्डिकायाः सकाशे निजं शिरः छेत्तुमारब्धवानस्मि। तदा च आकाशचरी वाणी मैवं कृथा नृपस्य मनोरथः सेत्स्यतीति मां न्यवारयत् तस्मात् मन्ये ते सिद्धिर्भवेदिति एवमुक्त्वा सिंहगुप्तः नृपमामन्त्र्य शर्ववर्म्मणः पश्चात् चारद्वयं व्यसर्जयत्। सोऽपि शर्ववर्म्मा वायुभक्षः कृतमौनो दृढनिश्चयः स्वामिकुमारस्यान्तिकमाससाद। तत्र च शरीरनिरपेक्षस्तपश्चरन् कार्त्तिकेयं प्रसादयामास। प्रसन्नश्च स तस्मै स्वाभीप्सितं वरमदात्। ताभ्याञ्च चाराभ्यामागत्य पूर्वं शर्ववर्म्मणः सिद्धिः राज्ञे निवेदिता तच्छ्रुत्वा मम राज्ञश्च समं विषादप्रमोदौ मेघमालोक्य हंसचातकयोरिव

सम्प्रभूताम् । आगत्य च शर्व्ववर्म्मा सिद्धिमान् राज्ञे चिन्तितोपस्थिताः सर्व्वा एव विद्याः प्रदत्तवान् । क्षणेन तस्य ताः प्रादुरासन् भूपतेः किमसाध्यं हि दैवसिद्धेः ? । अथ राज्ञः सकल विद्याधिगम माकर्ण्य सर्व्वएव जनः प्रमुदितः महोत्सवश्च तत्राभवत्, समन्तात् पताका उदक्षिपन् राजानुजीविनः । अथ नृपतिना प्रणतेन गुरुरिति कृत्वा राजार्हरत्ननिचयैः शर्व्ववर्म्मा अर्च्चितः कृतश्च वकक-च्छाख्ये जनपदे नर्म्मदाकूलवर्त्तिनि अधिपतिः । यश्चास्मै चारकेभ्यः षण्मुख वरप्राप्तिं श्रावयामास तमपि सिंह-गुप्तं सन्तुष्य स्निग्ध आत्मसममकरोत् अभ्यषेचयच्च प्रणयेन तां विष्णुशक्ति तनयां विद्यागमहेतुभूतां देवी-नामुपरि महादेवी पदे ।

इति षष्ठस्तरङ्गः ।

—*—

अथ सप्तम स्तरङ्गः ।

ततो गृहीतमौनोऽहं राजसकाशमगाम् । तत्र च कश्चिद् द्विजः स्वयं कृतं श्लोकमपठत् राजा च स्वयं संस्कृतया गिरा तं सम्यक् उच्चचार । तदालोक्य तत्रस्थो जनः सर्व एव मुदितोऽभवत् राजा च तदा सविनयं शर्व्ववर्म्माणमुवाच कथय स्वयं देवेन यथा ते अनुग्रहः कृतः इति । तदाकर्ण्य सोऽब्रवीत् राजन् ! इतः निराहारो मौनी सन् अहं प्रस्थितः । ततोऽतिविमनाः तीव्रेण तपसा

शीर्णकलेवरः क्लान्तः कदाचित् निःसञ्ज्ञो धरातले अपतम्। ततश्च शक्तिहस्तः कश्चित् पुमान् अभ्येत्य उत्तिष्ठ पुत्र! सेत्स्यतीति ते मनोरथ इति स्फुटं मामब्रवीत्। तेन च वचसा अमृतेनाभिषिक्त इव तत्क्षणं प्रबुद्धः क्षुत्पिपासारहितः स्वस्थश्चाभवम्। अथ नितरां भक्तिमान् देवसमीपे गत्वा उन्मना: गर्भगृहं प्रविष्टः साक्षात् देवमहं दृष्टवान् प्रविष्टा च तदैव मन्मुखे सरस्वती। अथासौ भगवान् षड्भिरेव वदनपङ्कजैः सिद्धो वर्णसमाम्नाय इति सूत्र मुदैरयत्। श्रुत्वैव चैतन्मानुषतासुलभाच्चापलादहमपि उत्तरं सूत्रमभ्यूह्य स्वयमुदितेवान्। अथा वदत् स देवः यदि त्वं स्वयमेतत् नावदिष्यः तदा इदं शास्त्रं पाणिनीयोपमर्दकमभविष्यत् । स्वल्पतन्त्रत्वात् कातन्त्राभिधं भविता मद्वाहनकलापस्य च नाम्ना कालापश्च। इत्येवं शब्दशास्त्रमभिनवं प्रकाश्य स देवः पुनरब्रवीत् युष्माकं राजाऽपि पूर्वजन्मनि भरद्वाजशिष्यः कृष्णो नाम महातपाः ऋषिरासीत्। स कदाचित् कामपि ऋषिकन्यकां सकामां आलोक्य कामशरलक्ष्यतामगात् ततश्चासौ मुनिभिः शप्तो मर्त्यलोक मागत्य राजा । । ऋषिकन्या अस्यैव देवी भूत्वा अवतीर्णा। इत्थमयं राजा सातवाहनः ऋषेरवतारः त्वयि दृष्टे सर्वा विद्या स्वदिच्छया अवाप्स्यति। जन्मान्तरार्जिताः सिद्धयः महात्मनामक्लेशसाध्या भवन्ति इत्युक्त्वा देवे अन्तर्हिते अहं वहिर्निरगां तत्र च देवोपजीविभिः

मे तण्डुलाश्च कतिपये प्रदत्ताः चित्रमिदं ते च पथि आगच्छता मया भुज्यमाना अपि तावन्त एवासन्। एवं स्ववृत्तान्तमाख्याय शर्ववर्म्मणि विरते राजा प्रमुदितः स्नातुमुदतिष्ठत्।

ततोऽहं कृतमौनतया व्यवहाराक्षमः अनिच्छन्तमपि भूपतिं प्रणामेनामन्त्र्य शिष्यद्वय समन्वितः नगरा न्निर्गच्छन् तपसे कृतनिश्चयः विन्ध्यवासिनीं द्रष्टुमागतः। देव्याश्च स्वप्नादेशेन प्रेषित स्त्वां द्रष्टुं भीषणामिमां विन्ध्याटवीं प्रविशन् पुलिन्दवाक्यात् कथञ्चन सार्थं प्राप्य इह प्राप्तोऽहं बहून् श्वान् पिशाचान् अपश्यम्। [illegible] ना संस्कृतभाषा प्राकृतं शिक्षिता पिशाचभाषा च तत्र मोक्षोपाय हेतुः। ततश्च त्वामुज्जयिनीगतमुपलभ्य प्रतीक्षमाणोऽत्रैव निवसामि। इदानीं दृष्ट्वैव त्वां स्वागतं दत्तं भावया मया जातिः स्मृता, तदेष मे जन्मवृत्तान्त इति।

गुणाढ्येन एवमुक्तो काणभूतिरवादीत् अद्य निशि यथा त्वदागमो मया ज्ञातस्तत् शृणु। अस्ति राक्षसो भूतिवर्माख्यो दिव्यदृष्टिर्मम सखा। उज्जयिन्यां तन्निकेतनमुद्यानं गतवानस्मि तत्रासौ तद्विजयापान्तं प्रति पृष्टोऽब्रवीत् सखे! दिवा नास्ति मे प्रभावः तिष्ठ रात्रौ तावत् वक्ष्यामि। तथेति चाहं तत्र स्थितः निशायां प्राप्तायां प्रसङ्गेन निर्वलगतां भूतानां हर्षकारणमपृच्छम्। अथ भूतिवर्मा पुरा विरिञ्चि संवादे शङ्करेण यदुक्तं तत् शृणु इत्युक्त्वा अब्रवीत् दिवा अर्कतेजसा ध्वस्तानामिदां

यक्षरक्षःपिशाचानां नैव प्रभावः, ते खलु निशि स्फुरन्ति, यत्र सुरा न पूज्यन्ते, न च विप्राः अविधिना वा भुज्यते तत्रैव एते प्रभवन्ति। यत्र अमांसाशी वा साध्वी नारी विद्यते तत्रामी न यान्ति नाक्रामन्ति च कदाचन शुचीन् शूरान् प्रबुद्धांश्च जनान्। इत्युक्त्वा पुनरवादीत् गच्छ भ्रातः! गुणाढ्यस्ते शापापगम हेतुरागत इति श्रुत्वैवागत स्त्वां दृष्टवानस्मि, प्रभो! अधुना पुष्पदन्तोदितां कथां ते कथयामि किन्तु मे परं कौतूहलमस्ति कथ्यतां केन हेतुना स पुष्पदन्त स्त्वञ्च माल्यवानिति विश्रूयत इति।

तच्छ्रुत्वा वाक्भूतिरवादीत् अस्ति गङ्गातीरे बहु-सुवर्णकं नाम अग्रहारः। तत्रासीत् गोविन्ददत्ताख्यः बहुश्रुतः कश्चित् ब्राह्मणः। भार्या, चास्य अग्निदत्ता नाम पतिपरायणा। आसीत् तयोः पञ्च पुत्रा आसन्, ते च मूर्खाः सुरूपा अभिमानिनश्च। एकदा गोविन्ददत्तस्य गृहमतिथिरेको वैश्वानरो नाम वैश्वानर इवापरः समागतः। तदा च गोविन्ददत्ते कार्यान्तर वशात् बहिर्गते अतिथिना तेन उपागम्य तत्पुत्राः अभिवादनं कृतं ते च हास्यमात्रेण तस्य प्रत्यभि वादनं कृतवन्तः। ततः स तस्मात् गृहात् निर्गच्छन् आगतेन गोविन्ददत्तेन दृष्टः कारणमपृच्छ्यत, अवदत् पुत्रास्ते पतिता स्तेषां संसर्गात् भवानपि तत्समोऽभूत्। तस्मात् नाहं भोक्ष्ये। त्वद्गृहे भोजने प्रायश्चित्तार्हो भवामीति। ततः गोविन्ददत्तः सशपथं उवाच नाहमेतान् कुपुत्रान् कदाचिदपि स्पृशामीति। तद्भार्या चागत्य अतिथिसेवापरा

अब्रवीत् तथैव । ततः कथञ्चित् तत्र वैश्वानरः, आतिथ्यमग्रहीत् । तद्दृष्ट्वा देवदत्तो नाम तस्यैकः सुतः निर्वेद मनुप्राप्तः जातानुशयः व्यर्थं मे जीवितं पितृभ्यां दूषितमित्यालोच्य तपसे बदरिकाश्रममगमत् । तत्र च पूर्वं पर्णाशनः पश्चात् धूमप श्चिरं महेश्वरं तोषयिष्यन् अतिष्ठत् । कालेनच भगवानुमापति स्तीव्रेण तस्य तपसा भृशमाराधित स्तस्मै दर्शनं ददौ । स च तस्मात् तस्यैवानुचरत्वं वव्रे । प्रीतश्च शङ्करः विद्याः प्राप्नुहि, भोगांश्च भुवि भुङ्क्ष्व तत स्तवाभिमतं भवितेति तमादिशत् । अथ स विद्यार्थी पाटलिपुत्रं गत्वा वेदकुम्भं नामोपाध्यायं यथाविधि सिषेवे । तत्रस्थं तमुपाध्यायी सञ्जातस्मरावेगा सहसा वव्रे, चञ्चला हि स्त्रीणां चित्तवृत्तयः ? । देवदत्तश्च तदभिमतं गर्हितं मन्यमान स्तं देशमुत्सृज्य प्रतिष्ठान मगच्छत् । तत्रागत्य च मन्त्रस्वामि नामानं वृद्धमुपाध्यायं वृद्धया भार्यया समन्वितमभ्यर्थ्य सम्यक् विद्याः समधीतवान् । तत्र च कदाचित् तं सुरूपं सुशर्माभिधानस्य नृपतेः सुता श्रीर्नाम श्रीरिवाच्युत मेकदा ददर्श । सोऽपि तां वातायनोपरि स्थितां विहरन्तीं विमानेन चन्द्राधिष्ठात्रीं देवतामिव कन्यां अद्राक्षीत् परस्परञ्च तौ परस्परावलोकनेन मारशृङ्खलया निबद्धाविव नापसर्त्तुं समर्थाविभूताम् ।

सा तु नृपदुहिता स्मराज्ञया मूर्त्तया एकया अङ्गुल्या इतो निकटमेहीति तं समज्ञापयत् । आगच्छच्च स तत्क्षणं तत्समीपम् । सा तु तं प्रति दन्तेन पुष्प-

मादाय न्यक्षिपत्। स तु राजपुत्रीकृतां तां संज्ञामबुद्धा किं कर्त्तव्यविमूढो गुरुगृहमगमत् अलुठच्च तत्र धरण्यां न किञ्चिद् वदन्। अथोपाध्यायेन कामजमेतमाधिं प्रतर्क्य धीमता पृष्टः सर्वं यथावृत्त मकथयत्। उपाध्यायस्तु वैदग्ध्येन युक्त्या च विविच्य तमब्रवीत् वत्स! दन्तेन पुष्पं मुञ्चन्त्या तया तव यदेतत् पुष्पदन्ताभिधं पुष्पाढ्यं देवमन्दिर मस्ति तत्रागत्य प्रतीक्षस्वेति सङ्केतः कृतः। तत् साम्प्रतं तत्रैव गम्यता मिति। तदाकर्ण्य सङ्केतज्ञान जनित हर्षोऽसौ युवा शोकं विहाय तत्रैव देवगृहस्याभ्यन्तरलक्षितो गत्वा तस्थौ। राजसुता अष्टमीं समुद्दिश्य एकैव देवं द्रष्टुं गर्भागारमविशत्। प्रविशन्त्या च तया द्वारपट्टस्य पश्चात् सः प्रियः स्पृष्टः। तेन च उत्थाय सहसा सा कण्ठे गृहीता। अनन्तरञ्च तया कथं त्वया सा संज्ञा गृहीतेति कथिते स युवा उपाध्यायेन सा बोधिता, न मया विदितेति तथ्यमेव अवदत्। श्रुत्वैतत् राजपुत्री मुञ्च मामविदग्धस्त्वमित्युक्त्वा क्रुधा मन्त्रभेदभयात् तत्क्षणात् तं त्यक्त्वा गृहं ययौ। सोऽपि देवदत्तः विजने दृष्टनष्टां तां प्रियां स्मरन् वियोगाग्निदग्धजीवितोऽभवत्। तदवलोक्य प्राक् प्रसन्नः शम्भुः पञ्चशिखं नाम गणं तस्याभीष्टसिद्धये समादिशत्। स तु गणोत्तमः आगत्य तं समाश्वास्य च स्त्रीवेशमकारयत् स्वयञ्च वृद्धब्राह्मण रूपधरोऽभवत्। ततश्च तेन सह तं सुशर्म्माणं नृपतिं तस्या जनक मेत्य अवादीत् राजन्! पुत्रो मे

क्वापि प्रोषितः, तमन्वेष्टुमहं गच्छामि स्नुषेयं निक्षेपः सम्प्रति रक्ष्यताम्। श्रुत्वैतत् शापभयत्रस्तेन तेन भूपतिना स्वकन्यान्तःपुरे स्त्रीवेशोऽसौ युवा संस्थापितः ।

अथ पञ्चषदिवसे प्रस्थिते कालेनासौ स्त्रीवेशो युवा तस्याः अतिविश्रम्भभाजनमभूत्। एकदा रजन्यां समुत्सुका सा राजबाला तेनात्मानं प्रकाश्य गान्धर्व्वेण विधानेन परिणीता। क्रमेण च धृतगर्भायां तस्यां स्मृतमात्रागतोऽसौ गणोत्तमो रात्रौ तमनैषीत् विहायसा अलक्षितम्। ततश्च प्रातः स्वयं तथैव वृद्धविप्रवेशधृक् तञ्च युवानं त्यक्तस्त्रीवेशं गृहीत्वा गत्वा च नृप समीप मभ्यधात् नरपते! प्राप्तोऽयं मे सुतः, अर्पय हि मे स्नुषामिति। ततः स राजा शापभयोद्विग्नचेताः तां रात्रौ क्वापि पलायितां विदित्वा मन्त्रिभ्योऽब्रवीत् शृणुतामात्याः! न विप्रोऽयं कोऽप्ययं देवो मां वञ्चयितु मागत इति मन्ये प्रायेण एवं वृत्तान्ताः सततं भवन्ति ।

तथाहि आसीत् पुरा शिविर्नाम तपस्वी करुणापरः सुधीरः वदान्यः सर्वाभयप्रदो महासत्त्वो नरपतिः। एकदा तं वञ्चयितुं श्येनरूपी पुरन्दरः स्वयं मायाकपोतं धर्मं प्रति अनुधावन् राजान्तिक मगात्। कपोतस्तु भयात् शिवेरङ्क मुपाश्रयेत्। श्येनस्तु मनुष्यवाचा राजान मब्रवीत्, देव! भक्ष्यमिमं मुञ्च कपोतं क्षुधितस्य मम, नचेत् मां मृतमवधारय, तदा च ते कोधर्मः भवेदिति ।

शिबिराह तं शरणं प्राप्त एष कपोतः भक्ष्यः, तदेतत्समं मांसं तुभ्यं ददामीति। श्येनोऽब्रवीत् यद्येव मात्ममांसं देहीति। राजा च प्रहृष्टस्तथेति प्रत्यपद्यत। अथ यदा यदा स्वं मांसं उत्कृत्त्य उत्कृत्त्य तुलायामारोपयति तदा तदा कपोतोऽभ्यधिकः भवतीति दृष्ट्वा राजा सर्वं स्वशरीरं तुलायामधारयत् उदभूच्च तत्कालं साधु साध्विति दिव्या सरस्वती। तौ चेन्द्रधर्मौ श्येनकपोतरूपं त्यक्त्वा अक्षतशरीरं राजानं तुष्टुवतुः चक्रतुश्च सम्राजम्। वरञ्चाभिमतं तस्मै दत्त्वा अन्तर्हितौ च। तदेव मेष कोऽपि छलनापरो देवो [illegible] समागतः?

इत्युक्त्वा अमात्यान् स्वैरं स राजा भयोद्विग्नचेताः तं विप्रवेशं गणश्रेष्ठमुवाच ब्रह्मन्! अभयं देहि, साद्य ते स्नुषा निशि क्वापि गता अस्माभिः सदयं दिवानिशं रक्ष्यमाणापीति। अथ स विप्रः कृच्छ्रात् धैर्य्यमापन्न इव सदय-मब्रवीत् राजन्! तर्हि स्वां तनयां मे पुत्राय देहि। तदाकर्ण्य तेन राज्ञा शापभीतेन तस्मै देवदत्ताय निजायां सुतायां प्रदत्तायां स पञ्चशिखः प्रतस्थे। देवदत्तोऽपि तामेव वल्लभां प्राप्य अपुत्रस्य श्वशुरस्य विभूतिभिः परमसुखेन कालमनयत्। अथ कालेन राजा सुशर्मा तस्य पुत्रं दौहित्रं महीधरं नाम राज्येऽभिषिच्य तपोवनमशिश्रियत्। देवदत्तोऽपि कालेन सुतैश्वर्य्यं दृष्ट्वा कृतार्थस्तयैव प्रियया राजपुत्र्या सह वनमगच्छत्। तत्र च पुनः शङ्करमाराध्य मर्त्यदेहं त्यक्त्वा तस्यैव प्रसादेन

गणत्वमासशाद्। यतश्चासौ प्रियादन्तनिक्षिप्तात् पुंष्यात् संज्ञां न ज्ञातवान्, तस्मात् स पुष्पदन्ताख्यया गणसंसदि ख्यातः संवृत्तः। तस्य च सा एव भार्य्या देव्या भगवत्या जया नाम्नी चेटी जाता। तदेवं स पुष्पदन्त इति प्रसिद्धः संप्रति मदभिधानम् आकर्णय।

हे काणभूते! योऽयं गोविन्ददत्तो नाम देवदत्त-पिता पूर्वमुक्तः, तस्यैव सोमदत्तो नाम पुत्रोऽहमभूवम्। अहञ्च पितृमन्युना वैराग्यमापन्नः तपस्तप्तं हिमाचल मगमम् अभ्यतोषयञ्च भगवन्त मिन्दुमौलिं बहुभिर्माल्यैः। ततश्च परितुष्टात् तस्मात् अपरस्ख निस्पृहेन मया तस्यैव गणत्वं वृतम्। स चोमापतिः यस्मात् त्वं स्वय-माहृतेन दुर्गम वन भवेन माल्येन बहुशो मामपूजस्तस्मात् त्वं माल्यवानिति प्रसिद्धो मे गणोत्तमो भवितेति मा-मादिशत्। अहञ्च सद्य एव मर्त्यं देहं विमुच्य तद् गणतां गतः। तदेवं मम माल्यवानिति नाम काणभूते! सुतम्। सोऽहं पुनः शैलात्मजायाः शापेन मनुष्यभाव-मापन्नः। तदधुना त्वया हरकथिता कथा कथ्यतां येना-वयोर्भविता शापविमोक्ष इति।

इति सप्तमस्तरङ्गः।

—*—

## अथ अष्टमस्तरङ्गः।

एवं गुणाढ्येनाभिहितः काणभूतिः स्वभाषया सप्त कथामयीं दिव्यामुपन्यास परम्परामभ्यभाषत। गुणा-

ब्धाख सप्तभिर्वर्षैं सप्तलचश्लोकमयीं तां विरचयामास। विद्याधरा मा एतां हार्षुरिति मत्वभावात् आत्मशोणितैरेव सा लिखिता महारण्ये गुणाढ्येन। तां च श्रोतुमागतैः सिद्धविद्याधरादिभि स्तदानीमन्तरीचं सवितानमिवाभवत्। गुणाढ्येन च निबद्धां तां महाकथां दृष्ट्वा काणभूतिर्मुक्तशापः स्वां गतिमगमत्। तत्सहचारिणश्च ये पिशाचास्तत्रासन् तेऽपि तां कथामाकर्ण्य दृष्य एव दिवमारूढ़ाः। इयञ्च बृहती कथा पृथिव्यां प्रतिष्ठापनीया यतोऽयमर्थो देव्या शापान्तोक्तौ कथितः, तत् कथमिमां प्रतिष्ठां नयामि, कस्मै वा समर्पयामि इत्येवं स गुणाढ्यः कविरचिन्तयत्।

अत्रान्तरे गुणदेवनन्दिदेवनामानौ द्वौ शिष्यौ तमुपाध्यायं गुणाढ्यमूचतुः प्रभो! एतत् काव्यस्यार्पणस्थानमेकः श्रीमान् सातवाहनः स खलु रसिकः पुष्पामोदमिवानिलः काव्यं धारयेत्। तथेत्यभिधाय स गुणाढ्य स्तौ शिष्याविव पुस्तकसहितौ तस्य राज्ञः सकाशं प्राहिणोत्। स्वयं च गत्वा ताभ्यां सह प्रतिष्ठाने पुराद् वहि र्देवीकृते उद्याने कृतसङ्केतस्तस्थौ। राजा तु सातवाहनः विद्यामदोन्मत्तः गुणाढ्यकृतिरेषेति ताभ्यां शिष्याभ्यां दर्शिते काव्यपुस्तके पिशाचभाषां तां श्रुत्वा तौ च तदाकृती दृष्ट्वा सासूयमभाषत सप्त लचाणि प्रमाणं परं पैशाची वाक् नीरसा, शोणितेन च कृतोऽचरन्यासः तदेतां पैशाचीं कथां धिक्। अथ ताभ्यां शिष्याभ्यां पुस्तकमादाय यथावृत्तं गुणाढ्याय समाख्यातम्। सोऽपि तदाकर्ण्य नितरां

खेदाकुलः समजायत, तत्त्वविदा कृतमवज्ञानं कं हि नोपतापयति ? ततश्च सशिष्यः तस्मात् गत्वा विविक्तरम्यभूभागं अनतिदूरवर्त्तिनं शिलोच्चयं तत्र अग्निकुण्डमकरोत्। तत्राग्नौ शिष्याभ्यां रुदद्भ्यां वीक्षितः मृगपक्षिणः वाचयित्वा श्रावयन् एकैकं पत्रं न्यक्षिपत् । केवलं शिष्ययोरनुरोधपरवशतया नरवाहनदत्तस्य चरितं लक्षश्लोकमितमंशं रक्षितवान् । तस्मिंश्च तथा दिव्यां कथां पठति, परित्यक्ततृणाहारा सारङ्गवराहमृगमहिषादयः साश्रुलोचना बद्धमण्डला निश्चलास्तत्रैव शृण्वन्तः समभ्यागमन् ।

एतस्मिन्नन्तरे राजा सातवाहनोऽस्वस्थोऽभवत् । अवदंश्चास्य दोषं शुष्कमांसाहारजं दोषं भिषजः । तदर्थमाक्षिप्ताश्च सूपकारा अब्रुवन् राजन् ! नास्माकमेष दोषः लुब्धका हि मांसं मीदृशं ददते इति पृष्टाश्च लुब्धका ऊचुः नरनाथ ! नातिदूरवर्त्तिनि गिरौ कोऽपि द्विजः पठन् पुस्तकपत्रमेकैकं वह्नौ निक्षिपति, तत् शृण्वन्तश्च मृगपक्षिणः सर्वे क्षुधार्त्ताअपि निराहारा स्तत्रैव स्थिता, नान्यतो यान्ति तेनैषां क्षुधानिपीड़ितानां शुष्कं मांसमिति । इत्येवं व्याधवचनेन कौतुकाक्रान्तचेताः नृपतिस्तानेवाग्रतः कृत्वा स्वयं तद्दर्शनार्थं गुणाढ्यसमीपं ययौ ददर्श च तं जटाभिराकीर्णं वनवासदुःखाक्रान्तं स्वकृतिदहनजनितखेदम् । अथैनं सवाष्पमृगकुलमध्यस्थं प्रत्यभिज्ञाय प्रणम्य च तं वृत्तान्तमपृच्छत् । सोऽपि राज्ञे पुष्पदन्तस्य शापादिचेष्टितं सर्वं कथावतारं भूतभा-

षया समाख्यत्। ततश्च पादानतो नृपस्तं गणावतारं मत्वा तां हरमुखोद्गतां दिव्यां कथां श्रोतुमभ्यर्थयामास। स चोवाच तं सातवाहनं गुणाढ्यः राजन्! प्रत्येकं लक्षमिताः षट्कथा मया दग्धाः लक्षमितैका कथा अस्ति, इयमेव गृह्यतां मम शिष्यावेतौ अस्य ग्रन्थस्य व्याख्यातारौ भविष्यतः। एवमुक्त्वा नृपमामन्त्र्य योगेन तनुं त्यक्त्वा सद्यः शापनिर्मुक्तः स्वां गतिं प्रतिपेदे। अथ तां गुणाढ्यदत्तां बृहत्कथां नाम नरवाहनदत्तचरितमयीं कथामादाय निजनगरमगान्नरपतिः। आगत्य च स तस्य शिष्यौ गुणदेव नन्दिदेवौ भूमि, स्वर्णवसन वाहनैः दिभिर्बहुभिर्धनैः समभ्यर्चयत चकार च ताभ्यां सह तस्याः कथायाः अवतरणार्थं कथापीठम्। सा चैषा कथा विचित्ररसशालिनी विस्मृतामरकथा क्रमशः त्रिष्वेव भुवनेषु कौतुकमावहन्ती ख्यातिमगमत्।

इति अष्टमस्तरङ्गः।

समाप्तोऽयं कथापीठं नाम प्रथमो लम्बकः।

—o⁂o—

अथ नवमस्तरङ्गः

या खलु कैलासे भगवतः वृषकेतनस्य वदनाम्बुजान्निर्गता पुष्पदन्तं गणाधिपं, तस्माच्च वररुचिभूतात् भूतले काणभूतिं, काणभूतेर्गुणाढ्यं गुणाढ्यात् सातवाहनमगात् तामिमां दिव्यामद्भुतां कथां शृणुत।

अस्ति वत्सो नाम जनपद: स्वर्गस्य दर्पशान्तये विधात्रा तत्प्रतिमल्ल इव निर्मित: । तत्र कौशाम्बी नाम नगरी लक्ष्मीविलासभवनमिवासीत् । आसीच्च तत्र शतानीको नाम पाण्डवान्वयसम्भव: परीक्षित: पौत्रो जनमेजयतनयो नृपति: । तस्य च कलत्रमभूत् क्षितिरपरा विष्णुमती च । तयोरेका रत्नानि सुषुवे द्वितीया तु नैकमपि सुतम् । एकदा मृगयायां परिभ्रमन् राजा शाण्डिल्यमुनिना परिचयं लेभे । स तु मुनि: पुत्रार्थिनो राज्ञ: अनुरोधेन कौशाम्बीमेत्य साधितं चरुं राज्ञीं प्राशयत् । तेन तस्य सहस्रानीको नाम सुत: समजनि । अथ शतानीक: क्रमात् तं पुत्रं युवराजं कृत्वा स्वयं भूभारचिन्तायां विरतोऽभूत् अनैषीच्च केवलं सुखसम्भोगेन कालम् ।

कदाचित् देवासुर संग्रामे प्राप्ते दिवस्पति: साहाय्यार्थं तस्मै मातलिं सारथिं दूतं प्राहिणोत् । तत: नरपति: यौगन्धर नाम्न: मुख्यस्य मन्त्रिण स्तथा सुप्रतीकस्य प्रधान सेनापते: हस्ते पुत्रं राज्यञ्च समर्प्य असुरान् निहन्तुं मातलिना सह शक्रसकाशं मगात् । तत्र च पश्यति सुरपतौ बहून् यमदंष्ट्रादीनसुरान् संग्रामे निहत्य स्वयं पञ्चत्व मभ्यगमत् । ततश्च मातलिना आनीतं तं राजदेहं राज्ञी अन्वगात्, तत्पुत्रञ्च सहस्रानीकं लक्ष्मी: समाश्रयत् । तस्मिंश्च पैत्रं सिंहासनमारूढे सर्वएव राजानो नतशिरसोऽभवन् । तत:सुरपति: शत्रुविजयोत्सवार्थं सुहृत्पुत्रं तं सहस्रानीकं मातलिना सारथिना सुरलोक मानिनाय । स तु तत्र नन्दने

क्रीड़तः कामिनीभिः सुरान् अवलोक्य अनुरूपकान्ताभिलाषी शोकमिवान्वभवत्। तच्च विज्ञाय शचीपतिः तमाश्वासयन् अवोचत् राजन्! विषादेनालं सेत्स्यति ते मनोरथः चितौ ते भार्य्या समुत्पन्ना अचिरात् तां लप्स्यसे अत्रेमं सवादं कथयामि श्रूयताम्।

पुराहं पितामहं द्रष्टुमगमम्। तदैव तत्र विधूमो नाम कश्चित् वसुरागच्छत्। अस्मासु च तत्र स्थितेषु अलम्बुषा नाम काचित् सुरसुन्दरी तमेव देवं द्रष्टुमागता वातविस्रंसितवसना अभवत्। वसुरयं तथाभूतां तामवलोक्य कामवशतामगात्। अप्सरा च सा सद्यएव तस्य रूपेण समाकृष्टचित्ता अभूत्। तदालोक्य कमलयोनिर्मम मुखे दृष्टिमपातयत्।

अहञ्च विधातुरभिप्रायमवबुध्य क्रुधा तौ अशपम् मर्त्त्यलोकं व्रजतं युवामविनीतौ। तत्र चोभौ भार्य्यापती भविष्यथ इति। राजन्! स वसुस्त्वमुत्पन्नः शतानीकतनयः शशिनः कुलभूषणम्। सापि सुरयुवती अयोध्यायां कृतवर्मनृपतेः सुता मृगावती नाम जाता तव भार्य्या भविष्यति। इत्येवं देवराजवचसा समाश्वासितः सहस्रानीकः तं संमान्य तेन च सत्कृतः मातलिसारथिरथेन पुनः स्वां /पुरीमाजगाम। पथि गच्छन्तञ्च तं तिलोत्तमा नाम सुरकान्ता प्रीत्या अब्रवीत् राजन्! किञ्चित् वच्यामि चणं प्रतीचस्वेति। राजा तु तदश्रुत्वैव तामेव मृगावतीं ध्यायन् प्रतस्थे। ततः सा तिलोत्तमा लज्जिता कोपात् तं राजानमशपत् राजन्!

यथाकृष्टमनाः त्वं मम वचो नाद्रियसे तया चतुर्दश वर्षाणि ते वियोगो भविष्यति। मातलिरेव तं शापं अशृणोत्। राजा तु मृगावतीमेव समुत्सुकश्चिन्तयन् मनसा कौशाम्बीमगमत्। आगत्य च यौगन्धरायणादिभ्यो मन्त्रिभ्यः तत्सर्वं वासववचनं मृगावतीविषयमश्रावयत् प्रैषयच्च कालक्षेपासहिष्णुस्तां याचितुं तस्याः पितुः कृतवर्म्मणः सकाशं दूतम्। कृतवर्म्मा च दूतमुखात् सर्वं श्रुत्वा सहर्षः देव्यै कलावत्यै समभ्यधात् साप्येनमवोचत् राजन्! सहस्रानीकायैव कन्या देया, मयाद्य स्वप्ने दृष्टं कश्चिद् द्विजो मामेत्य इममेवार्थं मुक्त्वा अन्तर्हित इति अथ हर्षनिर्भरो नृपतिर्मृगावत्याः नृत्यगीतादिकौशलं अप्रतिमं रूपञ्च तस्मै दूतायादर्शयत्। ततश्च तं राजानं सहस्रानीकमानीय यथाविधि समभ्यर्च्य तस्मै चन्द्रकलामिव [illegible]नाह्लादकरीं सर्वकलानिपुणां मृगावतीमदात्। [illegible] तयोः परस्परगुणयोगतः समागमो रमणी[illegible] [illegible] तस्य मन्त्रिणां तनया जज्ञिरे यौग[illegible] [illegible] यौगन्धरायणः सुप्रतीकस्य तनयो [illegible] [illegible] [illegible] न [illegible]सुहृत् तस्य पुत्रो वसन्तक[illegible] [illegible] [illegible] [illegible] राजमन्त्रि [illegible] तो [illegible] [illegible] [illegible] [illegible]

[illegible] [illegible] [illegible] [illegible] [illegible]नी। राजा तु [illegible] [illegible] [illegible]त्म् [illegible] दौहृदाभिलाष [illegible] [illegible] [illegible] [illegible] [illegible]

लाक्षारससिक्तां तामकस्मात् कश्चिद् गरुड़वंशप्रभवः पक्षी आमिषशङ्कया जहार। प्रियतमाञ्च तथा क्वापि नीतां पक्षिणा दृष्ट्वा विह्वलचेताः स नृपः निःसंज्ञः क्षितौ निपपात। क्षणेन च लब्धसंज्ञं तं महीपतिं प्रभावेण बुद्ध्वा मातलिः विमानेनावतीर्य्य तस्मै तिलोत्तमाशापं कथयित्वा समाश्वास्य च दिवमगात्। स तु हा प्रिये! क्वासि गता, पूर्णकामासौ जाता पापा तिलोत्तमेत्यादिकं बहु विलपन् शोकार्त्तो मन्त्रिभिर्ज्ञातशापवृत्तान्तैः प्रबोधितः पुनः समागमप्रत्याशया कथञ्चित् जीवितं दधार।

पक्षीन्द्रश्च क्षणात् तां राज्ञीं मृगावतीं नीत्वा जीवन्तीं प्रेक्ष्य उदयपर्वते तत्याज। अथ तस्मिन् गते राज्ञी शोकभयोद्विग्ना आत्मानमनाथं दुर्गमाद्रितटस्थित मपश्यत्। ततश्च कश्चिदजगरः एकाकिनी मेकवस्त्रां रुदतीं तां ग्रासीकर्त्तुमुपचक्रमे। तञ्चाजगरं निहत्य कश्चिद् दिव्यः पुरुषः तां शुभोदर्कां मोचयित्वा सद्य एव अन्तर्दधे। ततः सा वराङ्गना आत्मानं हन्तुमिच्छन्ती कस्यचिद् वनगजस्य अग्रतः समुपस्थिता। स च दयया तामरक्षत्। चित्रमेतत् श्वापदा अपि सम्मुखागतां तां न जघ्नुः दैवी विचित्रा गतिः। अथ सा बाला गर्भभरालसा भर्त्तारं स्मरन्ती मुक्तकण्ठं रोदितुमारेभे। तदाकर्ण्य कश्चिन्मुनितनयः फलमूलाहरणार्थं मागतस्तामाससाद। दृष्ट्वा च तां दयार्द्रचित्तः पृष्ट्वा च यथावृत्तं समाश्वास्य च जमदग्ने राश्रम मनयद्राज्ञीम्। तत्र सा

मूर्त्तमिवाश्वासं तेजसा स्थिरबालार्क मुदयाचलं कुर्वाणं जमदग्निं ददर्श। सोऽपि तां पादपतितां वियोगदुःखार्तां राज्ञीमाश्रितवत्सलः दिव्यदृष्ट्या समभ्यधात्। वत्से! इह ते पत्युः वंशधरः सुतो भविता भविता च ते पुनर्भर्त्तृसङ्गमः मा शोच। एवमभिहिता मुनिना साध्वी सा मृगावती तस्मिन्नेवाश्रमे प्रियसङ्गमं प्रतीक्षमाणा अतिष्ठत् प्रासोष्ट च समये सत् सङ्गति रिवाचारं श्लाघ्यं पुत्ररत्नम्। तस्मिंश्च काले एष उदयनो नाम धीमान् महायशाः सर्वविद्यापारगः सार्वभौमः राज्ञः पुत्रः भविष्यतीति अशरीरिणी वागुदचरत्। सोऽपि राजबालकः क्रमेण प्रतिदिन मवर्द्धत वयस्यैरिव सद्गुणैः सार्द्धम्। शिक्षितश्च मुनिना तेन क्षत्रोचितान् सर्व्वानेव संस्कारान् कृत्वा सर्वासु विद्यासु धनुर्वेदेषु च। माता च स्वात् करात् राजनामाङ्कं कटकमामुच्य तस्य करे समबध्नात्।

एकदासौ उदयनः मृगयार्थं भ्रमन् शबरेण केनचित् समाक्रान्तं महारण्ये सर्पमेक मपश्यत् अत्रोचत्र दयार्द्रस्तस्मिन् पन्नगे मनोरमे तं शवरं मुच्यतामेष मद्वचनादिति। शवरोऽब्रवीत् प्रभो! दरिद्रोऽहं जीविकेयं मम इमं हि पन्नगं खेलयन् जीवामि, पूर्वं अपरस्मिन् भुजगे विपन्ने मया अटवीमिमां अन्विष्यता मन्त्रौषधिबलात् एषः अवष्टब्धः लब्धश्च। श्रुत्वैतत् उदयनोऽति वदान्यः शबराय तस्मै तत् मातृदत्तं कटकं दत्त्वा सर्पममोचयत्।

अथ गृहीतकटके तस्मिन् लुब्धके याते भुजगः

प्रीतः पुरतः प्रणम्य प्रोवाच राजपुत्र ! वसुनेमिरिति विश्रुतो वासुकेः ज्येष्ठोऽस्मि, वीणा मिमां तुभ्यं ददामि रक्षितोऽहं त्वया, तत् गृहाण एतां ताम्बूलीञ्च अम्लान-मालातिलक युक्तिभिः सह । स तत् गृहीत्वा तेनैव नागेन उत्क्षिप्त स्तस्मिन्नेव मुनेराश्रमे तत्क्षण मेव मातुर्दृशि अमृत मिव वर्षन्नुपागमत् ।] अत्रान्तरे शवरः तत् कटकं राजनामाङ्कं नगरे विक्रीणन् आपणे राजपुरुषैर्धृतः नीतश्च राजकुलम् । कुतस्त्वयेदं कटकमाप्तमिति सशोकेन सहस्रानीकेन नृपेण पृष्टश्च सर्वं वृत्तान्त मगादीत् । ततश्च कथमिदं प्रियाकरस्थं शवरेणाधिगतमिति चिन्तयन्तं नृपं देवी सरस्वती समभ्यनन्दयत् राजन् ! शापस्ते क्षीणः संजातः उदयाद्रौ जमदग्नेराश्रमे तत्र प्रिया सपुत्रा मृगावती तिष्ठतीति । अथ तस्मिन्नहनि कथञ्चिदवसिते नृपतिस्तमेव शवरमग्रे कृत्वा प्रियासमासङ्गमोत्सुकस्तमेवोदयाद्रिं प्रति ससैन्यः संप्रतस्थे ।

इति नवमस्तरङ्गः ।

—०%०—

अथ दशमस्तरङ्गः ।

अथ नरपति र्दूरमध्वानं गत्वा कस्मिंश्चिदरण्ये सरसीतटे वासमकल्पयत् । तत्र च शयनीयतलगतः श्रान्तः सार्थं सङ्गतकं नाम कथक मब्रवीत् हे हृदयवल्लभ ! कामपि हृदयविनोदिनीं कथामाख्याहि अहं प्राणवल्लभां तां मृगावतीं द्रष्टुमतिसमुत्सुकोऽस्मि कथ-

मपि उत्कण्ठां विनोदयितु मिच्छामि। स ब्रह्मदत्तोऽ-ब्रवीत् देव! किं वृथा ताम्यसे वासवदत्ता तव देव्याः समागमः शीघ्रमायत्तवात्। संयोगा विप्रयोगाश्च सर्व्वे-षामेव। इममर्थे अपेरां कथां कथयामि श्रूयताम्।

पुरासीत् मालवे देशे यज्ञसोमो नाम कश्चित्द्विजः। तस्य द्वौ सुतौ जातौ। तयोरेकः कालनेमि र्नाम द्वितीयः विगतभय इति विश्रुतोऽभवत्। कालेन स्वर्गते पितरि, उत्क्रान्तशैशवौ तौ भ्रातरौ विद्यार्जनार्थं पाटलि-पुत्रं नगरं गतौ। तत्र देवशर्म्मा नाम कश्चिदुपा-ध्यायः ताभ्यां यथाविधिं लब्धविद्याभ्यां द्वे निजे सुते मूर्त्ते विद्ये इवापरे प्रददौ।

कदाचित् कालनेमिरपरान् प्रतिवेशिनो गृहस्थान् धनसम्पन्नान् दृष्ट्वा ईर्षया धृतव्रतः होमैः श्रियं साधयामास। साधिता च श्रीस्तुष्टा साक्षात् तमभाषत त्वं भूरि वित्तं राजानश्च पुत्र माप्स्यसि परमन्ते तव चौरवत् मृत्युर्भविता यस्मात् त्वया ईर्षाकलुषितात्मना अग्नौ आमिषं हुतमित्युक्त्वा अन्तर्हितायां लक्ष्म्यां कालनेमिः क्रमात् महाधनोऽभूत् कालेन चास्य पुत्रोऽजायत। यतोऽयं श्रीवरात् संप्राप्त तस्मात् तं श्रीदत्तनामानमकरोत् पिता। क्रमेण च श्रीदत्तः ब्राह्मणोऽपि वृद्धिं गच्छन् अस्त्रेषु बाहुयुद्धेषु च अप्रतिद्वन्द्वी अभवत्।

अथ कालनेमे र्भ्राता विगतभयः सर्पदष्टां प्रियां दृष्ट्वा तीर्थपर्य्यटनार्थी देशान्तर मगात्।

अत्रान्तरे वल्लभशक्ति र्नाम नृपति र्गुणज्ञः तमेव

श्रीदत्तं विक्रमशक्तिनामा स्वपुत्रस्य सहायमकरोत्। राजपुत्रेण अभिमानिना तेन अस्य तथाविधः यौवने दुर्योधनेन भीमस्येव सहवास आसीत्। ततश्च अवन्तिदेशीयौ बाहुशालि वज्रमुष्टि नामानौ द्वौ क्षत्रियौ अस्य विप्रस्य श्रीदत्तस्य मित्रत्व मगच्छताम्। बाहुयुद्धेन पराजिताः दाक्षिणात्या गुणप्रिया मन्त्रिपुत्राश्च स्वयम्बरसौहार्देन तमेव श्रीदत्त मभिश्रियन्। तथा महाबली व्याघ्रभटनामाऽन्यो उपेन्द्रबलः निष्ठुरकश्चेति चत्वारः वीरा तेन श्रीदत्तेन सौहार्दं मकुर्वन्।

कदाचित् राजपुत्रसखः श्रीदत्तः तैः सुहृद्भिः सह वर्षासु जाह्नवीतटे विहर्तु मगमत्। राजभृत्या स्वं राजपुत्रं विक्रमशक्तिं नृपमकल्पयन्। श्रीदत्तमपि तदानीं सुहृदः राजान मकार्षुः। एवं कृते जातरोषेण अभिमानिना राजपुत्रेण असौ विप्रवीरो रणाय समाहूतः श्रीदत्तः तं राजपुत्रं बाहुयुद्धेन विजितवान्। अथ भृशमपमानितः सः तस्य वर्द्धमानस्य विप्रस्य वधमियेष तच्चाभिप्रायं ज्ञात्वा श्रीदत्तः शङ्कितः स्वमित्रैः सह तत्समीपादपासरत्। अपसर्पंश्च अपश्यत् गङ्गास्रोतसा नीयमानां कामपि कामिनीं सागरमध्यवर्त्तिनीमिव श्रियम्। ततश्च तान् बाहुशालिप्रमुखान् सुहृदस्तटे स्थापयित्वा तामिव वराङ्गनामुद्धर्त्तुं जलमवततार। निमज्ज्य च केशेष्वपि प्राप्तां दूरमपसरति निमग्नां तां रमणीमनुसर्त्तुम्। निमज्जंश्च अधात् शैवं देवकुलमपश्यत् नतु तां नारीं नवा वारिराशिम्। दृष्ट्वा च

तत् महदाश्चर्यं मन्यमानो नत्वा च भगवन्तं हरमनन्तं मनोहरे तस्मिन् शैवनिलये उद्याने तां रात्रिमनैषीत्। प्रातश्च देवसुमापतिं माराधयितु मागतां तां रमणीं मूर्त्तां श्रियमिव ददर्शास्य।

अथ ईशानं पूजयित्वा सा चन्द्रवदना निजमन्दिरमगात् अनुजगाम च तां सोऽपि श्रीदत्तः। गत्वा च किञ्चिदध्वानं देवपुरमिव मन्दिरमेकं ददर्श। सापि मानिनी सम्भ्रान्ता तत्रैव प्रविवेश। गत्वा च सा तन्वी अन्तःपुर मध्ये किमपि असम्भाषमाणा स्त्रीसहस्र-सेविता पर्य्यङ्के निषसाद। श्रीदत्तोऽपि तत्र तस्याः समीपे समुपाविशत्। अथ सहसा सा रोदितु मारेभे, निपेतुश्च स्तनयोस्तस्याः सन्तता वाष्पबिन्दवः। करुणार्द्र चेताश्च श्रीदत्तस्तामवादीत् सुन्दरि! का त्वं किमर्थं वा रोदिषि, वद यद्यहं ते दुःखं निवारयितु शक्तः स्यामिति। ततः सा कथमपि वाक्यं निगद्यान्नवीत् साधो! वयं दैत्यपतेः बलेः पौत्र्यः दशशतं अहञ्च सर्वासां ज्येष्ठा विद्युत्प्रभा नाम। पितामहोऽस्माकं विष्णुना दीर्घ बन्धनं नीतः पिता च बाहुयुद्धेन निहतः। हत्वा च पितरं तेन शौरिणा वयं निर्वासिता सर्वाएव पुरात्। तत्र च प्रवेशरोधार्थं एकः सिंहः स्थापितः। तेन च सिंहेन तत् अस्माकं स्थानमवरुद्धं हृदयञ्चास्माकं दुःखेन। कुबेरशापात् कश्चिद् यक्षः स सिंहः सञ्जातः। कथितञ्च पुरा तस्य शापान्तः मानवाभिभवो विष्णुना अस्मत्पुरप्रवेशोपायार्थम्।

तस्मात् सोऽस्माकं शत्रुः केशरी त्वया जीयतां तदर्थञ्च मया भवानिहानीतः, तस्मात् पराजितात् मृगाङ्काभिधं खड्गमवाप्स्यसि, तत् प्रभावेण च पृथिवीं जित्वा राजा भविष्यसीति। तदाकर्ण्य कथञ्चित् तं दिवसमतीत्य अपरेद्युस्ताः कन्यका अग्रे कृत्य श्रीदत्तः तत्पुरमभिययौ जिगाय च तमुद्धतं सिंहं बाहुयुद्धेन। सोऽपि शापविमुक्तः स्वं वपुरवाप्य तस्मै स्वं खड्गं दत्त्वा शापान्तकाय तत्क्षणादेव अन्तर्हितः। अथासौ श्रीदत्तस्ताभिः दैत्यकन्याभिः परिवृत स्तत् पुरोत्तम मविशत्। दैत्यसुता सा च तस्मै विषघ्नं अङ्गुलीयं ददौ। स च तत्र स्थितः स्तस्यां कन्यायां भृशं साभिलाषोऽभूत्। तद् दृष्ट्वा सापि कन्यका युक्त्या जगाद एनं वीर! अत्र वाप्यां स्नाहि, एतच्च ग्राहभयापहं खड्गमादाय निमज्ज। तथेति स श्रीदत्तः समुत्सुकः तस्यां वाप्यां मज्जन्नेव यस्मात् जाह्नवीतटात् अवातरत् तत्रैव समुत्तस्थौ। अथ पातालादुत्थितः स खड्गाङ्गुलीकवान् विस्मितः विषण्णश्चासीत् तयाविवञ्चितमात्मानं अपश्यत्।

अथ तान् सुहृदोऽन्विष्यन् स्वगृहाभिमुखं अगच्छत् अपश्यच्च पथि निष्ठुराख्यं सुहृदम्। स चोपेत्य प्रणम्य एकान्ते तं नीत्वा स्वजनवार्त्तां पृष्टः अब्रवीत् सखे! त्वां गङ्गान्तर्निमग्नं वयं बहून् दिवसान् अन्विष्य शोकनिर्भराः स्वानि शिरांसि छेत्तुं समुद्यता अभूम। तदा नैवं साहसं कुरुत पुत्रकाः जीवन् वः सखा समेष्यति इत्यन्तरीक्षगा वाणी अस्मान् तस्मादुद्यमात् न्यवारयत्।

ततश्च भवत्पितुः सकाशं गच्छतामस्माकं पार्श्वमेव कश्चित् सत्वरमित्याब्रवीत् भद्राः ! साम्प्रतं युष्माभिर्नगरेऽत्र न प्रवेष्टव्यं यतः वल्लभशक्तिर्नरपतिः पञ्चत्वं गतः। मन्त्रिभिश्च संभूय तस्य राज्ये विक्रमशक्तिं तत्पुत्रमभिषिषिचुः। प्राप्तराज्यः सः परेद्युरेव कालनेमेर्गृहमगात्। अपृच्छच्च तत्र श्रीदत्तः क्व ते पुत्र इति। कालनेमिश्चावदत् नाहं जानामि क्व गत इति। अथानेन प्रच्छादितः स्वसुत इति मत्वा तेन राज्ञा कालनेमिश्चौर इति निर्भर्त्स्य शूलं कृत्वा निषूदितः। तत् दृष्ट्वा तस्य भार्य्याया हृदयमस्फुटन् शोकनिरुद्धायाः किं हि पापात्मनामसाध्यं ? अथ तेन विक्रमशक्तिना श्रीदत्त स्तद् वयस्याश्च हन्तुमन्विष्यन्ते तस्माद् यूयमितः शीघ्रं गच्छतेति। इत्यभिहिता स्तेन पुंसा शोकार्त्तास्ते बाहुशालि प्रमुखाः पञ्च सम्भ्रान्ता उज्जयिनीं ययुः। तत्रत्र गच्छद्भिरिह त्वदर्थं अहं प्रच्छन्नं स्थापितः। तदेहि तावत् सुहृदां सन्निधे गच्छाव इति।

इति निष्ठुरकात् श्रुत्वा सः श्रीदत्तः पितरौ अनुशोच्य प्रतिकारेच्छामिव खड्गे दृशं मुहुर्निदधे। कालं प्रतीक्षमाणाय तेन सख्या निष्ठुरकेण अनुगम्यमान स्तान् सुहृदः प्राप्तुं उज्जयिनीमेव पुरीं प्रतस्थे।

गच्छंश्च सख्युस्तस्य गङ्गाम्बुनिमज्जनावधि वृत्तान्तं वर्णयन् कामपि क्रोशन्तीं नारीं पथि ददर्श चकार च दयया तां अवलाहं भ्रष्टमार्गा मालवं प्रति प्रस्थितेति व्याहरन्तीं सहगामिनीम्। एकदा तया च निष्ठुरकेण समन्वित एकस्मिन् शून्ये नगरे वासमकल्पयत्। ददर्श

च तस्यामेव निशायां मुक्तनिद्रः तामेव स्त्रियं निष्ठुरकं हत्वा हर्षात् तन्मांसमश्नतीम्। दृष्ट्वैव सः श्रीदत्तः तं मृगाङ्कं खड्गमाकृष्य उदतिष्ठत् सापि नारी घोरं राक्षसी-रूपमग्रहीत्। अथ सा तेन निहन्तुं केशेषु गृहीतैव तत्क्षणं दिव्यरूपं गृह्णती तमुवाच महाभाग! मा मां जहि मुञ्च, नैवास्मि राक्षसी, कौशिकात् महर्षेर्ममायं शापो येनाभूत् तदाकर्णय ताम्। पुरा घोरे तपसि वर्त्तमानं कौशिकं दृष्ट्वा स्वपदाहारशङ्की धनपति मां तस्य तपोभङ्गार्थं प्रजिघाय, अहन्तु कान्तेन रूपेण तं प्रलोभयितु मक्षमा भयप्रदर्शनार्थं भैरवं वपुरकार्षम्। तद्दृष्ट्वासौ तपोधनः सदृशमेव शाप मभ्यधात् पापे! मानुषान् भक्षयन्ती निशाचरी भव अमुनीतश्च स त्वत्तः केशग्रहमेव शापान्तं व्यधात्। इत्यनहं श्रीशत्रुलं राक्षसी-भावं गता, ग्रस्तश्च मया नगरमेतत् अद्य त्वया मे शापान्तः कृतः, तद् गृहाण मत्तो वरम्। तस्या एतद्वचनमाकर्ण्य श्रीदत्तः सहर्षोऽब्रवीत् अम्ब! अलमन्येन वरेण एव मम सखा जीवत्विति। तथास्त्विति वरं दत्त्वा सा तिरोदधे, स च निष्ठुरकः अक्षतशरीर एव जीवन्नुत्तस्थौ। ततश्च प्रातः सविस्मयः प्रहृष्टश्च स तेन सख्या सह प्रतस्थे प्राप च क्रमात् उज्जयिनीम्। तत्र मार्गोन्मुखान् सुहृदः नीलकण्ठानिव तोयदः दर्शनेन समाश्वासयाम। कथितनिजवृत्तान्तश्च तं बाहुशाली स्वं गृहमनैषीत्। तत्रोपचर्य्यमाणो बाहुशालिनः पितृभ्यां स्वगृह इव सुहृद्भि श्चिरमध्युवास।

कदाचित् वसन्तोत्सवे सखिभिः सह श्रीदत्तः उपवने यात्रां द्रष्टुं जगाम। ददर्श च तत्र कन्यकां श्रीविम्बके र्नृपस्य रूपिणीं मधुश्रियमिव रूपोज्ज्वलामागताम्। सा तु मृगाङ्कवती नाम तत्क्षणमस्य हृदयमविशद्दत्तमार्गेव विकासदीर्घया दृष्ट्या। तस्या अपि स्निग्ध श्रेयशंसिनी दृष्टि स्तं प्रतिन्यस्ता दूतीव गतागतमकरोत्। क्षणेन च वृक्षान्तरालगतां तामपश्यन् श्रीदत्तः सुभृशं खिन्नहृदयः सर्वतः शून्यमिवात्मानममन्यत। बाहुशाली तु नितान्तचतुरस्तस्य तादृशं भावमालोक्याब्रवीत् सखे! विदितं मे तव हृदयं मा अपह्नवं कृथाः तदेहि यत्र राजसुता गता तत्रैव गच्छाव इति। स च तथेति स्वीकृत्य तेनैव सह तस्याः सन्निकर्ष मगात्। तदानीञ्च हा! कष्टं किमिदमापतितं दष्टा राजकन्या भुजगेन इति तत्रत्यानामाक्रन्द समभवत् श्रीदत्तहृदयं दहन्। क्षणे च तस्मिन् बाहुशालिना गत्वा अस्ति मम सुहृदः विषघ्नमङ्गुरीयं विद्याचेति कञ्चुकी अभिहितः। स च तत्क्षणं कञ्चुकी समभ्येत्य चरणतलनतः श्रीदत्तं सानुनयं राजदुहितुः सकाशमनयत्। सोऽपि तस्याः सतायां अङ्गुल्यां अङ्गुलीयकं निधाय विद्यां जजाप, तेन च सा प्रत्युज्जीवन मवाप। ततश्च तत्र सर्वस्मिन् जने हर्षात् श्रीदत्त प्रशंसावादपरे राजा विम्बकि र्वात्तं श्रुत्वा तत्क्षणमाययौ। श्रीदत्तश्च सखिभिः सार्द्धं अगृहीताङ्गुलीयक एव बाहुशालिनो भवनं प्रत्याजगाम। तत्र नृपेण सुवर्णादिकं यत् पारितोषिकं राज्ञा प्रेषि-

तत् सर्वं बाहुशालिनः पित्रे समर्पयत्। परं तां कान्तां चिन्तयन् तथा पर्य्यतप्यत यथास्य सर्व एव सुहृदः किंकर्त्तव्यविमूढ़ाः व्याकुलात्मानः समभवन्। ततो भावनिका नाम तस्या राजपुत्र्याः प्रिया सखी तदङ्गुरीयकसमर्पणव्याजेन श्रीदत्तसकाशमगमायाी उवाच च सुभग! साम्प्रतं सख्या मम एष निश्चयः संजातः यत् त्वं वा प्राणप्रदः पति रथवा मृत्यु रिति। इत्युक्ते तया श्रीदत्तः सर्वे च वयस्याः सम्भूय सहसा मन्त्रयामासुः। वयं कौशलेन निभृतं राजपुत्रीमिमां हृत्वा इतो वासार्थं मथुरां गच्छाम इति। एवं सम्मन्त्रिते कार्य्ये सा भावनिका गृहं ययौ। अथान्येद्युः बाहुशाली त्रयत्रयान्वितः वाणिज्यव्यपदेशेन मथुरामगमत्। गच्छंश्च स पथि प्रतिपदं राजपुत्र्या अभिसारार्थं भृत्यानि वरावन्ति च वाहनानि स्थापयामास। श्रीदत्तश्च सायं राजपुत्र्या वासे काञ्चित् सदुहितरं स्त्रियं मधु पाययित्वा स्थापयत्। ततश्च दीपोद्देशेन वासवेश्मनि अग्निं दत्त्वा च्छन्नं भावनिकया राजसुता वहिर्निन्ये। ताञ्च वहिर्गतां सम्प्राप्य श्रीदत्तः प्राक्प्रस्थितस्य बाहुशालिनः देवीं तयैव भावनिकया मित्रद्वयेन च सह प्राहिणोत्। नारीगृहे सा मत्ता स्त्री सुतया सह दग्धा। सर्व एव लोक स्तामिव राजदुहितरं सखीसमेतां दग्धां मन्यमानः अन्तात् कोलाहलं चकार। श्रीदत्तस्तु प्रातस्तत्र पूर्वमिव जनै र्दृष्टः रात्रौ द्वितीयस्यां गृहीतमृगाङ्कः पूर्वप्रस्थितां प्रियां प्रति प्रतस्थे तथा च रात्रौ दूरमध्वानमतिक्रम्य प्रातः प्रहरे जाते विन्ध्याटवी माससाद। तत्रादावनि-

भिन्नानि पश्चात् तान् सुहृदः पथि प्रहाराभिभूतान् भाव-
निकासहितान् सर्वान् दृष्ट्वा नितरां व्यथितमनाः किमिद-
मिति अपृच्छत् । ते चोचुः सखे ! मुषिताः स्मः बहुभिर्नि-
पत्य अश्वारोहिभिः सैनिकैरिदानीमेव । अस्मासु एवमव-
हीनेषु एकेन अश्वारोहिणा राजपुत्री अश्वमधिरोप्य नीता
यावत् दूरं न नीयते तावदनया दिशा गच्छ । मास्माक-
मन्तिके स्थाः सर्वथा सा एव रक्षणीयेति । तैरेवमभिहितः
सुहृद्भिः स श्रीदत्तः बहु विचारयन् तान् सुहृदः समा-
श्वास्य जवेन राजतनयामेव समनुससार । सुदूरं गत्वा च
तामश्वारोहसेनामाससाद ददर्श च तेषु क्षत्रियमेकं युवानं
तेन च उपरि तुरङ्गमस्य गृहीताञ्च तां राजतनयाम् ।
दृष्ट्वैव स तस्य क्षत्रिययुवकस्य अन्तिकं गत्वा सान्त्वेन च
तत् राजपुत्रीविमुक्तिमभ्यर्थ्य अमुञ्चन्तमेनं अश्वादाक्षिप्य
तथा दृषदि अचूर्णयत् यथा स सद्यः पञ्चत्वमगमत्, एवं
तं निहत्य तमेवाश्वमारुह्य तान् सर्वान् प्रधावितान् क्रुद्धान्
अश्वारोहान् बहून् तेनैव मृगाङ्केण निजघान । हत-
शिष्टाश्च सैनिकाः तादृशं तस्य अमानुषं शौर्यमवलोक्य
भीताः प्रदुद्रुवुः । ततश्च राजपुत्र्या तया मृगाङ्कवत्या सह
तुरगारूढस्तानेव सखीन् प्रति प्रतस्थे । स्तोकं गत्वा च
सोऽश्वः संग्रामे प्रहृतः सहसा पपात पञ्चत्वमवाप च ।
अवतीर्णा च तत्कालं सा राजपुत्री चासायासपरिश्रमेण
तृषार्त्ता समभवत् । तां च तत्र स्थापयित्वा इतस्ततो
जलमन्विष्यन्तः सुदूरं गत्वापि जलमप्राप्नुवतस्तस्य सविता-
स्तमुपागमत् । ततः स कथमपि प्राप्तपानीयः तिमिरा-

च्छन्नतया मार्गमपश्यन्, इतस्ततो भ्रमन् चक्रवाकवत् उत्कूजन् तां निशामनैषीत् वन एव। प्रातश्च पतितेन अश्वेन लक्षितं तत्स्थानमासाद्य तत्र क्वचिदपि राजपुत्रीं नासादितवान्। ततः स मोहात् भुवि खड्गं मृगाङ्कं संरक्ष्य समन्तात् तां राजपुत्रीमन्वेषितुं वृक्षाग्रमारुरोह।

अत्रान्तरे कश्चित् शबराधिपस्तेनैव मार्गेण तत्रायायौ जग्राह च दृष्ट्वैव वृक्षमूलस्थितं मृगाङ्कम्। तं दृष्ट्वैव श्रीदत्तः वृक्षाग्रादवतीर्य अतिमात्रं व्यथितमनाः प्रियाप्रवृत्तिं तमपृच्छत्। स चाब्रवीत् इतस्त्वं मत्पल्लीं व्रज, जानाम्यहं सा तव प्रिया तत्र गता, अहं तत्रैव यास्यामि, तव चेमम् असिं दास्यामि, इत्युक्त्वा श्रीदत्तस्तेन शबरेण प्रेषितः तदीयैश्च पुरुषैः समन्वितः तामेव पल्लीं ययौ। तैश्च पुरुषैः श्रमं तावत् विमुञ्चेति अभिहितस्तां पल्लीं गतः क्षणात् श्रान्ततया निद्रामभजत् अपश्यच्च प्रबुद्धः द्वौ पादौ निगड़संयतौ। ततश्च दैवगतिं विचिन्तयन् ताञ्च प्रियां शोचन् कथमपि तत्रातिष्ठत्।

अथ काचित् मोचनिकाभिधा चेटी तमुद्देशमागत्य तमब्रवीत् महाभाग! आगतोऽसि कथमत्र मृत्यवे कार्य्यार्थं स खलु शबरः क्वापि गतः, आगत्यैव त्वां चण्डिकायाः सकाशे बलिमुपहरिष्यति, तदर्थञ्च विन्ध्याटव्याः कौशलेन त्वमिहानीतः बन्धनञ्च गमितः। यस्मात् भगवत्या उपहारार्थं त्वं कल्पितः तस्मादेव मदावसनैरन्नैश्च उपचर्यसे। एक एव मोक्षोपायोऽस्ति, यदि इच्छसि, अस्त्यस्य सुन्दरी नाम कन्यका। सा च त्वां प्रति अत्यर्थं मदनातुरा जाता,

तस्मात् तां मे वयस्यां भज, ततस्ते क्षेमं भवितेति। तथा-स्त्विति उक्त्वा स श्रीदत्तः गान्धर्वेण विधिना तां सुन्दरीं रहसि प्रणयिनीमकरोत्। सा च प्रतिरात्रं तस्य बन्धनानि मोचयित्वा यथासुखं विहरति स्म, अचिराच्च तेन सगर्भा समजायत। तत्सर्वं तन्माता मोचनिकामुखादुपश्रुत्य जामातृस्नेहपरवशा स्वैरमागत्य श्रीदत्तमब्रवीत्, वत्स! श्रीचण्डनामा अस्याः सुन्दर्य्याः पिता त्वां न क्षमेत, तत् शीघ्रमितो गच्छ, सुन्दरी तु मम न विस्मर्त्तव्या इति एव-मभिधाय संमोचितः श्वश्र्वा खड्गं स्वं श्रीचण्डहस्तगतं सुन्दर्य्यै समाख्याय त्वरितं प्रतस्थे विवेश च पुनश्चिन्ताकुलः चिन्तयं-स्तामेव विन्ध्याटवीं मृगाङ्कवत्याः पदवीं जिज्ञासितुम्। तदा शुभं निमित्तं लक्षयित्वा यत्राश्वो मृतः सा च हारिता प्रेयसी तमुद्देशमाययौ। तत्र चागत्य आरात् लुब्धकमेकं समागतं दृष्ट्वैव पप्रच्छ तं प्रियायाः प्रवृत्तिम्। किं श्री-दत्तस्त्वमिति तेन पृष्टश्च स एव मन्दभाग्योऽहमिति नि-श्वसन् तमुवाच। लुब्धकोऽभाषीत् शृणु सखे! यत् ब्रवीमि। दृष्टा मया ते भार्य्या क्रन्दन्ती त्वामितस्ततः। दृष्ट्वा चाहं तां यथावृत्तं पृष्ट्वा समाश्वास्य च कृपाकुलः इतो निजां पल्लीमरण्यात् गृहमनयम्। तत्र तरुणान् पुलिन्दान् अव-लोक्य भयातुरा दीना सा मया मथुरानिकटं नागस्थलाख्यं ग्रामं नीत्वा तत्र कस्यचित् स्थविरस्य विश्वदत्तनाम्नः द्वि-जन्मनः आवासे सगौरवं न्यासीकृत्य स्थापिता। तस्याः मुखाच्च त्वन्नाम श्रुत्वा त्वामन्वेष्टुमहमिहागतः, तस्मात् गच्छ शीघ्रं नागस्थलं प्रति। इत्युक्तो लुब्धकेन श्रीदत्तस्तत्-

भयात् नागस्थलमुद्दिश्य प्रतस्थे। अपरेद्युश्च सायं तं नागस्थलं प्राप्य विश्वदत्तस्य भवनं प्रविश्य तं ययाचे देहि मे भार्यां लुब्धकस्थापितामिति। विश्वदत्तश्चोवाच भद्र! मथुरायां मम सुहृत् गुणवत्तरः कश्चित् ब्राह्मणोऽस्ति स हि शूरसेनस्य राज्ञः उपाध्यायः मन्त्री च। तस्य हस्ते तव गृहिणी मया स्थापिता अयं हि ग्रामस्तस्या रक्षायां न क्षम इति तत् प्रातस्तत्र त्वया गन्तव्यं अद्येह विश्राम्यताम् इत्युक्तः श्रीदत्तः तस्यैव गृहे कथमपि तां निशामनयत् प्रस्थितश्च प्रातरपरेऽहनि मथुरामाससाद।

तत्र च दीर्घाध्वपरिश्रान्तः नगराद् बहिः निर्मले वापीजले कृतस्नानस्तस्मादेव अम्भसः चोरितं अञ्चलबद्धहारं वस्त्रमेकं सहसा प्रापत्। अथ गृहीततद्वसनः तस्मिंश्च हारमलक्षयन् प्रियां दिदृक्षुरौत्सुक्यात् मथुरां नगरीं प्राविशत्। प्रविशन्नेव नगररक्षिभिः तत् वस्त्रं सहारं प्रत्यभिज्ञाय चौर इति बलादवरुद्धः नीतश्च नगराधिपसकाशम्। स चाविदितं तं राज्ञे न्यवेदयत् आदिशच्च राजा तस्य बधम्।

अथ सा मृगाङ्कवती दूरात् प्रहतडिण्डिमं बध्यभूमिं नीयमानं तं प्रत्यभिज्ञाय यस्य गृहे स्थिता तत्रैव, मन्त्रिमुख्यं ममायं पतिर्नीयते बधायेति ससम्भ्रममब्रवीत्। मन्त्री च घातकान् निवार्य्य राज्ञे सर्वं वृत्तान्तं विज्ञाप्य श्रीदत्तं मोचयित्वा बधात् स्वं गृहमानाययत्। यो मां बधात् अमोचयत् स खलु मम पितृव्यः विगतभयः पुरा देशान्तरं पर्य्यटन् क्रमेण मथुरामेत्य राजमन्त्रित्वमाससादेति ज्ञात्वा

प्रत्यभिज्ञाय श्रीदत्तः तस्य पितृसोदरस्य पादयोः पपात। सोऽपि तं भ्रातुष्पुत्रं प्रत्यभिज्ञाय सविस्मयः प्रेमनिर्भरः कण्ठे जग्राह पप्रच्छ च सर्वं गृहवृत्तान्तम्। ततः श्रीदत्तः पितृवधादारभ्य आत्मनो निखिलं वृत्तान्तमकथयत्। सोऽपि श्रुत्वा सर्वं वृत्तान्तं मुक्त्वा चाश्रु विजने भ्रातुष्पुत्रमब्रवीत् पुत्र! धैर्य्यमाश्रय ममैका यक्षिणी सिद्धा, सा पञ्च अश्वसहस्राणि सप्त सुवर्णकोटीश्च मह्यमदात्, अहमपुत्रः, तत्सर्वं तवैव धनम्। इत्युक्त्वासौ पितृव्यः श्रीदत्ताय तां प्रियां मृगाङ्कवतीमदात्। श्रीदत्तोऽपि गृहीतधनसमयस्तत्रैव तां यथाविधि परिणीय कान्तया तया सङ्गतस्तस्थौ। इत्थं प्राप्तमनोरथस्यापि तस्य शशिनः कलङ्करेखेव बाहुशालिप्रभृतिचिन्ता मालिन्यदायिनी मनसः समजायत।

एकदा स पितृव्यः रहसि श्रीदत्तमभ्यधात् पुत्र! अस्य शूरसेनस्य राज्ञः कन्यकैकास्ति, मया तु तदाज्ञया सा अवन्तिदेशे दातुं नेया, परन्तु मया मनसि कृतं यत् तदपदेशेन तां हृत्वा तुभ्यं ददामि, ततश्च तदनुयायिनि बले मामके च प्राप्ते यत्ते प्रियादिष्टं राज्यं, तदचिरात् प्राप्स्यसीति। एवं निश्चित्य श्रीदत्तः पितृव्यसहितः सपरिग्रहः सैन्यैर्बहुभिः परिवृतश्च तां कन्यामादाय प्रतस्थे। ततश्च विन्ध्याटवीप्राप्तमात्रमेव तं अतिमहती अतर्कितोपस्थिता दस्युसेना शरवर्षैः रुरोध। निन्युश्च दस्यवः प्रहारमूर्च्छितं तं भग्नसैन्यं श्रीदत्तं गृहीतसकलधनं स्वपल्लीम्। तत्र च तेनं तदवध्यमेव भीषणं चण्डिकालयं प्रावेशयन्। प्रविष्टमात्रं तं सा पल्लीपतिपुत्री सुन्दरी उत्सङ्गितबाल-

पुत्रा देवीदर्शनार्थिनी आगता प्रत्यभिज्ञाय भृत्यान् दायुः नञारयन्। श्रीदत्तस्तु चिरात् सुन्दर्य्याः सपुत्राया दर्शनेन मानन्दः तया साकं तन्मन्दिरं प्राविशत् प्रापच्च सुन्दर्य्याः पित्रा श्रीचण्डेन प्राक् स्वर्गतेन अपुत्रेण सुन्दर्य्यै दत्तं तत् पल्लीराज्यम्। लेभे च तं चौरसमाक्रान्तं स्वपितृव्यपरिक्रुद्धं मृगाङ्कवतीं ताञ्च कन्यकां तञ्च मृगाङ्कं नाम खड्गम्। अथ श्रीदत्तस्तत्रैव तां शूरसेनसुतां परिणीय महाराजोऽभवत्। प्राप्तराज्यश्च श्वशुरयोस्तस्य विम्बकेस्तस्य च शूरसेनस्य सकाशे दूतं प्राहिणोत्। तौ दुहितृवत्सलौ प्रमोदनिर्भरौ सेनासमुदयेनान्वितौ तं श्रीदत्तमुपाजग्मतुः। बाहुशालिप्रमुखाश्च ते सुहृदः प्राप्तसन्देशाः प्रमोदनिर्भरमानसाः सर्व एव समाजग्मुः। अथ स श्वशुराभ्यां समन्वितः तं पितृघातिनं विक्रमशक्तिं हत्वा कृतवैरप्रतिक्रियः शान्तिं लेभे ननन्द च ससागरां धरां प्राप्य कान्ताभिरुपचर्य्यमाणः सुखेन कालं नयन्।

हे नरपते! अव्यग्रमनसो धीरा इत्थं चिरवियोगव्यसनार्णवं तरन्ति प्राप्नुवन्ति च मङ्गलम्। इत्येवं सङ्गतकात् तां कथां श्रुत्वा सहस्रानीकः पथि प्रियावियोगकातरस्तां निशामनैषीत्। अथ प्रभाते मनोरथारूढः पुरस्तात् प्रेषितमनाः स्वां प्रियां प्रति प्रस्थितः कतिपयैरहोभिर्जमदग्नेराश्रममगमत् अपश्यच्च तत्र शान्तं तपोनिधिं जमदग्निम्। अथ कृतप्रणामाय तस्मै स मुनिः त[illegible] कान्तां सपुत्रां समर्पयामास। शापावसाने च [illegible]वत्यौ रन्योन्यदर्शनं आनन्दवाष्पपूर्णाया:

दृष्टः सवर्षैवाद्भुतम्। पुनश्च उदयनं तत्पूर्वदर्शनं समालिङ्ग्य आनन्दजड़ः कञ्चिद् अङ्कात् मुमोच। ततस्तपोधनं तमामन्त्र्य सपुत्रां राज्ञीमादाय आतपोवनं दृष्टाश्रमैर्मृगैरपि अनुगम्यमानः प्रशान्तादाश्रमपदात्तस्मात् स्वां पुरीं प्रतस्थे। गच्छंश्च प्रियाया विरहवृत्तानि शृण्वन् आत्मनश्च वर्णयन् क्रमेणोत्तोरणं पताकां कौशाम्बीमाससाद। आगत्य च उत्पलमालाभिः पौरलोचनैः पीयमानः सह पत्नीपुत्राभ्यां राजप्रासादं प्राविशत्। अथ गच्छति काले राजा पुत्रगुणैः प्रेर्यमाण इव तं उदयनं यौवराज्ये समभ्यषिञ्चत् समादिशच्च मन्त्रिपुत्रान् वसन्तकं रुमण्वन्तं यौगन्धरायणञ्च तस्य मन्त्रित्वे। तदा च देवी अशरीरिणी वागुदतिष्ठत् यदेष एभिरेव मन्त्रिवरैः समग्रां मेदिनीं भुपर्भोक्ष्यत इति पुष्पवृष्टिश्चान्तरीक्षात् न्यपतत्। ततः पुत्रन्यस्तसमस्तभरः स राजा तदा मृगाङ्कवत्या सह चिरकाङ्क्षितं जीवलोकं सुखमुपभुज्य क्रमेण जरां माससाद। अथैतत् सर्वमसारं मत्वा जगतामुदयाय पुत्रमुदयनं स्वे पदे निवेश्य सचिवैः परिवृतः प्रियतमामादाय महाप्रस्थानाय हिमगिरिमगात् क्षितिपतिः ॥

इति दशमस्तरङ्गः।

—*—

अथ एकादशस्तरङ्गः।

ततः स उदयनः पितृदत्तं राज्यं प्राप्य कौशाम्ब्यामेव तस्यां स्थित्वा प्रजाः प्रजा इव स्वाः सम्यक् अपालयत्।

क्रमेण च स यौगन्धरायणप्रमुखेषु मन्त्रिषु राज्यधुरं समर्प्य सुखेष्वेव एकान्ततत्परः सदा मृगयां सिषेवे अवादयच्च तां वासुकिदत्तां घोषवतीं वीणाम्। तस्याश्च वीणायाः कलनिर्ह्रादेन मोहमन्त्रेणेव वशीकृतान् वन्यान् मत्तद्विपान् संयम्य गृहमानयत्। वरनारी मुखाम्बुज प्रतिमालङ्कृता सुरा तं वत्सेश्वरं भृशमनन्दयत्। कुलेन रूपेण च मे अनुरूपा कन्या क्व केवलं वासवदत्ताभिधा एका कन्या या कामनीया अस्ति कथं सा प्राप्येत इति चिन्तैव तमेकान्तमव्यथयत्। उज्जयिनीपतिश्चण्डमहासेनो नाम नृपतिरपि अचिन्तयत् मम दुहितुर्वासवदत्तायास्तुल्यो भर्त्ता नैव भुवि विद्यते, केवलमेकः उदयनोऽस्ति स तु मद्विपक्षः, तत् कथं स मे जामाता वश्यश्च भवेत् एकएवात्र उपायोऽस्ति यदसौ मृगयाविहारी एकाकी द्विरदान् बध्नन् विचरति, अनेन छिद्रेण युक्त्या च तमवष्टभ्य गृहमानयामि, आनीतञ्च कौशलेन सुतया सह गान्धर्वविधिना सङ्गतं करोमि, एवं कृते अवश्यमेव अस्यां मे दुहितरि तस्य स्नेहः सम्भविष्यति, जामाता च क्रमेण मम वश्यः, नास्त्यन्योपायः येन मे मनोरथः संसिध्येत्।

इति संचिन्त्य स नरपतिश्चण्डिकागृहं गत्वा, तामभ्यर्च्य तुष्टाव प्रार्थयामास च मनोरथसंसिद्धये। शुश्राव च अकस्मात् तत्रोत्थितां वाणीं राजन्! अचिरात् ते मनोरथः संसेत्स्यतीति। अथासौ देवीवरेण सन्तुष्टः बुद्धदत्ताख्येन मन्त्रिणा तमेवार्थममन्त्रयत् मन्त्रिणोक्तं मानोवसे वीतलोभे स्वभक्ते महावलेऽपि अशो नाम

प्रयोज्यं किं हि नाम साम्ना न सिध्येत्? इति मन्त्रिवचनात् स नृपः दूतमेकमादिशत् गच्छ त्वं कौशाम्बीं ब्रूहि च मद्वचनात् वत्सराजमिदं वचः, मत्पुत्री तव गान्धर्वशिष्या भवितुमिच्छति, यदि तेऽस्मासु स्नेहः स्यात् तदेत्य इह तां शिक्षय। इत्युक्त्वा प्रेषितः स दूतः कौशाम्बीमभ्येत्य वत्सराजाय तं सन्देशं न्यवेदयत्। वत्सराजोऽपि दूतमुखात् तदनुचितं वचः समाकर्ण्य रहसि यौगन्धरायणाय मन्त्रिणे समकथयत् तेन चण्डमहासेननृपेण मयि किमेतत् सन्दिष्टं सदर्पम्? कोऽभिप्रायस्तस्य दुरात्मन एवं सन्दिशतः? इत्युक्तः स महामन्त्री स्वामिहिते रतः यौगन्धरायणः समब्रवीत् राजन्! भुवि लतेव ते या व्यसनिताख्यातिः संरूढ़ा, इदं तस्याः कटुकं फलं सहि त्वां व्यसनिनं मत्वा कन्यारत्नेन लोभयन् बद्धा स्वीकर्त्तुमिच्छति, तत् मुञ्च व्यसनानि, सुखेन व्यसनासक्ता नृपाः परैर्निगृह्यन्ते खातेष्विव वनद्विपाः। इत्युक्तः सः वत्सराज स्तं चण्डमहासेनं प्रति प्रतिदूतं व्यसर्जयत् समादिशच्च यदि त्वत्पुत्र्या मम शिष्यतायां वाञ्छा स्यात् तदिहैवैषा प्रेष्यतामिति। पुनश्चाब्रवीत् सचिवान् अथवा यामि चण्डमहासेनं मिह बद्धा तमानयामि। तदाकर्ण्य प्रधानतमः सचिवो यौगन्धरायणः प्रोवाच राजन्! नचैतत् शक्यते युज्यते च प्रभो! सहि प्रभाववान् नरपतिः, तव मस्वीकार्य्यश्च, शृणु तावत् तद्वृत्तम्।

अस्ति उज्जयिनी नाम महानगरी भूषणमिव क्षितेः

हसन्तीव सुधाधवलैः प्रासादैरमरावतीं यस्यां महासेनाख्यः शिथिलितकैलासवाससुखः सदा शङ्करो निवसति। तस्याञ्च महेन्द्रवर्म्मा नाम राजाधिराजः नरपतिरभूत्। तस्य जयसेनो नाम्ना सदृशः सुतः समजायत। तस्य च जयसेनस्य पुत्रः महासेनाख्यः अप्रतिमभुजबलः राजकुञ्जरः संजज्ञे। स खलु महासेनः स्वराज्यं पालयन् अचिन्तयत् न मे खड्गोऽस्ति सुसदृशः न च मे कुलरूपानुरूपा भार्य्येति। एवं सञ्चिन्त्य स चण्डीगृहमगमत् अतिष्ठच्च निराहारस्तामाराधयन् सुचिरम्। यदा च तथाविधया आराधनया काङ्क्षितं सुलभं नापश्यत् तदा स्वगात्रमांसानि उत्कृत्य होममारब्धवान्। ततः प्रसन्ना सा चण्डिका साक्षात् तमभ्यधात् वत्स! प्रसन्नास्मि ते साहसेन, गृहाणेमं खड्गोत्तमं मदीयम्। अस्य प्रभावात् त्वं शत्रूणामजेयो भविष्यसि, अङ्गारकासुरसुताञ्च अङ्गारवतीं नाम त्रैलोक्यसुन्दरीं कन्यां शीघ्रमवाप्स्यसि, यस्माच्च अतीव चण्डं कर्म्म कृतं मत्तोषणाय, तस्मात्त्वं चण्डमहासेन इत्याख्यां गमिष्यसि। इत्युक्त्वा सा देवी तस्मै खड्गं दत्त्वा तिरोऽभवत्। एवं तस्य स खड्गः तथा नडागिरिरिति ख्यातः मत्तहस्तीन्द्रः एते द्वे रत्ने दिवस्पतेः कुलिशैरावताविव विद्येते। तयोश्च प्रभावात् सर्व्वतः सुखी स नरपतिः कदाचित् मृगयार्थं महाटवीमगच्छत् ददर्श च तत्र अतिदीर्घकायं घोरमेकं वराहं दिवा एकान्ते स्थितं नैशं तमोराशिमिव। स वराहस्तीक्ष्णैरप्यस्य शरैराहतः स्यन्दनमाहत्य राज्ञः बिलमेकमाविशत्। राजापि धनुर्द्वितीयः क्रुधा तमनु-

सरन् तत्र प्राविशत् । कियद्दूरं प्रविश्य च तत्र रम्यमेकं पुरं पश्यन् सविस्मयस्तदन्तर्वापीतटे निषसाद । ददर्श च तत्रस्थः कामपि कन्यकां शतनारीपरिवृतां सञ्चरन्तीं स्मरस्य विजयवैजयन्तीमिव । सापि प्रेमरसासारवर्षिणा चक्षुषा राजानं मुहुरापिबन्ती शनैस्तमवादीत् कस्त्वं सुभग ! कथञ्च इह प्रविष्टोऽसि साम्प्रतमिति । इत्युक्तेन राज्ञा यथावृत्तमभिहिता सा कन्यका नेत्रयुगलात् सरागामश्रुसन्ततिं हृदयाच्च धीरतां सममुञ्चत् ।

का त्वं कस्यापि कल्याणि ! किमर्थं रोदिषि इत्येवं तेन पृष्टा सा प्रत्यवदत् महाभाग ! योऽयं दैत्यः वराहरूपी अत्र प्रविष्टः, असौ अङ्गारकाख्यः, अहमेतस्य कन्या अङ्गारवती नाम. अयञ्चासुरः पिता मे वज्रसारमयः इमाश्च मम सख्यः राजपुत्र्यः राजगृहेभ्य अपहृत्य आनीता मम परिचर्य्यार्थं समर्पिताः एष च शापदोषात् राक्षसीं योनिमाश्रितः, अद्यतु तृष्णापरीतः श्रान्तश्च स्वयं त्वां प्राप्यापि मुक्तवान्, इदानीञ्च त्यक्तवराहरूपः किञ्चित् विश्राम्यति, नूनं सुप्तोत्थित स्त्वयि पापमाचरिष्यति । इत्थं तत्र कल्याणमपश्यन्त्या मे सन्तापक्वथिता इव प्राणा वाष्पबिन्दवश्च विगलन्तीति राजा तु तद्वाक्यमाकर्ण्य प्रत्युवाच सुन्दरि ! यदि तेऽस्ति मय्यनुग्रहः, तदिदं मे वचः क्रियतां त्वमस्य प्रबुद्धस्य पितुः सकाशं गत्वा रुदीहि, नियत मसौ तव रोदनहेतुं प्रक्ष्यति ततस्त्वया स इत्थं वाच्यः पितः ! यदि कश्चित् त्वां निपातयेत् तर्हि मम का गतिः, एतेन दुःखेन हि रोदिमि । एवं कृते तव च मम च क्षेमं भवि-

ष्यति। इत्युक्ता सा तेन चण्डमहासेनेन भूभुजा, तथे- त्यङ्गीकृत्य तञ्च राजानं प्रच्छन्नमवस्थाप्य पापसशङ्किनी प्रसुप्तस्य पितुरन्तिकमाससादच, प्रबुबुधे च स दैत्यपतिः। अथ सा रोदितुमारेभे तत्समीपे। किं पुत्रि! रोदिषि इत्येवमभिहिता सा दैत्यराजेन कातराक्षी सगद्गदमब्र- वीत् तात! यदि कश्चित् त्वां हन्यात् तदा मे का गति- र्भवेदिति शङ्किता रोदिमि। स तु विहस्य किञ्चिदवो- चत् वत्से! को मां हन्तुमीष्टे, अहं वज्रमयः वामहस्ते मम छिद्रमस्ति तच्च धनुषा रक्ष्यते। दैत्येन तेन इत्य- माश्वास्यमानां तां स राजा प्रच्छन्नवर्त्ती शुश्राव। ततः क्षणेनोत्थाय स दैत्यः कृतस्नानः कृतमौनः शङ्करं देवमारा- धयितुमुपचक्रमे। अत्रान्तरे च स राजा गृहीतकार्मुकः सम्मुखीभूय सहसा रणाय तमाजुहाव। दानवोऽपि मौनितया वामं करमुत्क्षिप्य क्षणं प्रतीक्षस्वेति तस्य राज्ञः संज्ञामकरोत्। राजा तत्सङ्केतमविगणय्य लघुहस्ततया तस्मिन्नेव करे तत्क्षणं शरप्रहार मकरोत्। प्रहृतमात्रश्च स महासुरः घोरं रवं कृत्वा भूमौ पतन् निजगाद येनाहं तृषितो हतः स यदि प्रत्यब्दं अद्भिर्मां न तर्पयेत् तदा तस्य पञ्च मन्त्रिणः नश्येयुरित्युक्त्वा पञ्चत्वमगमत्। राजापि तस्य सुतामङ्गारवतीं गृहीत्वा उज्जयिनीं प्रत्या- ममत्। आगत्य च तां दैत्यकन्यकां परिणीतवतस्तस्य द्वौ सुतौ सञ्जातौ, एको गोपालको नाम, द्वितीयः पालक- काभिधः। तयोश्च जन्मनि राजा इन्द्रमहोत्सवं कृतवान् तेन च सन्तुष्टो देवराजः स्वप्ने तमुवाच राजन्! मम

प्रसादेन निरुपमामेकां सुतां प्राप्स्यसीति । अथ कालेन राज्ञः अपूर्वैका सुता संजज्ञे । तदा च आकाशाद्वाणी उच्चचार अस्याः पुत्रः कामदेवावतारः विद्याधरचक्रवर्त्ती भविष्यतीति । यतः सा तुष्टेन वासवेन दत्ता, तस्मात् तां नाम्ना वासवदत्तां चकार पिता । सेदानीं पित्रा दास्यमाना अर्णवाभ्यन्तरे कमलेव पितृगृहे अवतिष्ठते । देव ! एवं प्रभावः स राजा चण्डमहासेनः दुर्गदेशस्थितः यथा तथा न जेतुं शक्यते । स च मानी निजपक्षमहोदयं प्रार्थयन् तुभ्यमेव तां कन्यां दातुमभिलषति । मन्ये सा त्वयैव परिणेया भविता नान्येन इति एवं मन्त्रिवरस्य यौगन्धरायणस्य वचसा स खलु वत्सराजः वासवदत्ताहृत-हृदय एव कथञ्चिदवतस्थे ।

इति एकादशस्तरङ्गः ।

---

## अथ द्वादशस्तरङ्गः ।

अत्रान्तरे वत्सराजप्रेषितो दूतः उज्जयिनीमासाद्य चण्डमहासेनाय प्रतिसन्देशमकथयत् । चण्डमहासेनश्च तदाकर्ण्य व्यचिन्तयत् वत्सराजः अतीव मानी नात्रायाति कन्यापि मया न प्रेषणीया तथात्वे लाघवं भवेत् तस्मात् कौशलेन तं बद्धा नृपमिहानेष्यामि । इति सञ्चिन्त्य मन्त्रिभिः स राजा महान्तं यन्त्रहस्तिनमकारयत् न्यदधाच्च तं वीरपुरुषैश्छन्नैरन्तरधिष्ठितं विन्ध्याटव्याम् । तत्र गज-बन्धव्यसनिनो वत्सराजस्य चारपुरुषाः दूरतः तं मायागज-

मपश्यन् ज्ञजिच्चपंचच त्वरित मागत्य तं वत्सभूपतिम् देव ! विन्ध्याटव्यां भ्रमन्कोगजोऽस्माभिर्दृष्टः, अस्मिन् लोके नैव तादृक्‌चर्म्मणा व्यारगगनो विन्ध्याद्रिरिव जङ्गमो दृश्यते। तच चारवचः समाकर्ण्य वत्सभूपतिरतीव जहर्ष ददौ च तेभ्यः सुवर्णलक्षं पारितोषिकम्। चिन्तयामास च यद्येनं गजेन्द्रं नडागिरेः प्रतिमल्लं प्राप्स्यामि, तदा चण्डमहासेनं वश्यतानेष्यामि नूनं, ततोऽसौ मह्यं वासवदत्तां स्वयं प्रदास्यति। एवं चिन्तयन्नेव तां निशामनैषीत्। अथ प्रातरेव मन्त्रिणां वचनानि अनादृत्य गजतृष्णाक्रान्तचित्तः प्रस्थानलग्नस्य फलं गणकोक्तं कन्यालाभं संबन्धनमगणयन् तानेव चारान् पुरस्कृत्य विन्ध्याटवीमगात्। गत्वा च तत्र गजस्य भयपलायनशङ्कया स्वसैन्यानि दूरे निवेश्य चारमात्रसहाय एव तां घोषवतीं वीणां दधत् महारण्यं विवेश। प्रविष्टश्च दूरात् तस्याद्रेर्दक्षिणे पार्श्वे चारैः प्रदर्शितं सत्यगजाभासं तं मायागजं व्यलोकयत्। दृष्ट्वैव स भूपतिरेकाकी वीणां वादयन् मधुरं गायन् बन्धनानि च चिन्तयन् शनैस्तमुपजगाम। सन्निहितो राजा गान्धर्वव्यापारासक्ततया सन्ध्यान्धकाराविर्भावेन च तं वनगजमेव न तु मायागजमलक्षयत्। सोऽपि हस्ती गीतरसादिव उत्कर्णतालः आसन्नतरमेव विचरन् तं भूपं दूरमाचकर्ष।

इत्थं सुदूरमाकृष्टञ्च तं भूपतिं तस्मात् यन्त्रगजात् सहसा निर्गत्य कतिपये सन्नद्धा धीराः समन्तात् पर्य्यवारयन्। तांश्च दृष्ट्वा वत्सराजः कोपात् आकृष्टकृपाणः

अग्रस्थान् योधयन्नेव पश्चादागतैः वीरैरग्टह्यत । अथ ते सङ्केतमिलितैरन्यैश्च योधैः परिवृता स्तं वत्सभूपतिं गृहीत्वा चण्डमहासेनान्तिकमानिन्युः । सोऽपि चण्ड-महासेनः समागत्य कृतादरः तेन वत्सेश्वरेण समं स्वां पुरीमुज्जयिनीं विवेश । प्रविशंश्च वत्सनाथः पौरैरवमान-कलङ्कितः शशीव लोचनानन्दो नवागतो दृदृशे चक्रे च मरणनिश्चयः तस्य गुणानुरागिणावद्दैर्मिलितैः सर्वैः बध-माशङ्कमानैः । सोऽपि चण्डमहासेनः नाऽसौ वत्सेश्वरो मम बध्यः केवलं सन्धेय इति उक्त्वा तान् क्षुब्धान् पौरान् तस्मादध्यवसायात् न्यवारयत् । अथ महीपतिर्वत्सराजाय तां सुतां वासवदत्तां गान्धर्वशिक्षार्थं समर्पितवान् । उक्त-वांश्च तं भूपमुदयनं प्रभो ! त्वमेतां मत्सुतां गान्धर्वं शिक्षय, ततः क्षेममवाप्स्यसि, मा विषादं कार्षीरिति ।

वत्सराजस्तु तां कन्यां दृष्ट्वा स्नेहाक्तहृदय एवासीत् न च मन्युमवाप । तस्याश्च चक्षुर्मनसा सहैव तं प्रति जगाम, परं ह्रिया चक्षुर्निववृते, मनस्तु न कथञ्चन । ततो वत्स-राजस्तद्गतमानसः तां कान्तां गापयन् तस्यामेव गान्धर्व-शालायामुवास । अङ्के सा घोषवती वीणा, कण्ठे गीत-श्रुतिः, पुरतः वासवदत्ता एतत्त्रयमेव तस्य चित्तमनन्द-यत् । सापि वासवदत्ता लक्ष्मीरिवानपायिनी बद्धस्यापि तस्य परिचर्य्यापरा अभवत् ।

अस्मिन्नेवावसरे वत्सराजानुगामिनि जनसङ्घे को-शाम्ब्यां प्रत्यावृते तं प्रभुं बद्धं ज्ञात्वा सर्वमेव राष्ट्रं प्रक्षु-ब्धमभवत् । क्रुधाश्च प्रकृतयः वत्सराजानुरागिण्यः उक्त-

यिनीमवरोद्धुं समन्ततः ऐच्छन्। रुमण्वांस्तु महामतिः समुद्यतांस्तान् जनान् न्यवारयदवादीच्च स हि चण्डमहासेनः नैव बलसाध्यः, यतः स महान्, तथात्वेच वत्सराजस्य शारीरकुशलं नैव भवेत्, तस्मात् सहसा नैवास्कन्दो युज्यते, बुद्ध्या कौशलेन चैतत्प्रतिसमाधेयमिति। अथ धीरप्रकृतिः महामन्त्री यौगन्धरायणः राष्ट्रं तत् अनुरक्तमव्यभिचारि चाकलय्य रुमण्वदादीन् मन्त्रिमुख्यानाह स्म इहैव युष्माभिः सततोद्युक्तैः स्थातव्यं राष्ट्रं हि प्रथमतः रक्षणीयं, ततः काले विक्रमः कार्य्यः। अहन्तु वसन्तकेन सहायेन तत्र गत्वा कौशलेन प्रज्ञया च वत्सेशं मोचयित्वा आनयामि। यस्य प्रज्ञा आपद्यपि जलवर्षणेऽपि वैद्युताग्नेर्द्युतिरिव विशेषेण स्फुरति स एव धीरः। अहं हि प्राकारभञ्जनान् निगड़भञ्जनान् अदर्शनप्रयोगांश्च यथायथमुपयोगिनः जाने इति। एवमुक्त्वा प्रकृतीः सर्वाः रुमण्वतः हस्ते समर्प्य सवसन्तकः कौशाम्ब्या निरगात्। प्राविशच्च विन्ध्याटवीं स्वनीतिमिव दुर्गमाम्। तत्र च वत्सेश्वरमित्रस्य विन्ध्यप्राग्भारवासिनः पुलिन्दकनाम्नः पुलिन्दाधिपतेः गृहमगमत्। अस्थापयच्च तं सज्जं बहुसैन्यसमन्वितं आगमिष्यतस्तेन पथा वत्सराजस्य रक्षणाय। ततश्चासौ क्रमेण वसन्तकेन सह उज्जयिन्यां महाकालाख्यं श्मशानं क्रव्यगन्धिभिर्वेतालैरितस्ततः स्तमःश्यामलैर्जङ्गमैश्चिताधूमैरिव परिव्याप्तमासदत्। तत्र योगेश्वरो नाम कश्चित् ब्रह्मराक्षसस्तस्य यौगन्धरायणस्य दर्शनेन प्रीतः समुपेत्य तं मित्रभावेन समाहृतवान्। तदुपदिष्टया च युक्त्या यौगन्धरायणः

सद्य एवात्मनः रूपविपर्य्ययं कृतवान्। तेन च सः विकृतः कुब्जः वृद्धः उन्मत्तवेशश्च लोकानां हास्यकरस्तत्क्षणमेव समजनि। तथैव च युक्त्या वसन्तकमपि शिरालं महोदरं दन्तुरं दुर्मुखञ्च चकार। अथ प्रागेव वसन्तकं राजद्वारं प्रेष्य स्वयं पश्चात् नगरीं प्रविवेश। प्रविष्टश्च नृत्यन् गायंश्च सकौतुकं सर्वैः बटुभिः परिवृतः दृष्टश्च पुरवासिभिः राजप्रासादमभिलक्ष्य ययौ। क्रमेण च सर्वासामेव राजान्तःपुरिकाणां वासवदत्तायाश्च कृतकौतुकः स श्रवणगोचरतामगात्। सा तु राजतनया कौतुकदर्शनलालसा चेटिकां प्रेष्य तं गान्धर्वशालां आनाययामास, चञ्चलं हि नवं वयः। स च उन्मत्तवेशोऽपि तं वत्सेशं बद्धं दृष्ट्वा तत्र गलद्वाष्पोऽभवत् अकरोच्च सङ्केतं वत्सराजाय। सोऽपि राजा तं वेशच्छन्नमागतं महाप्राज्ञं मन्त्रिमुख्यं प्रत्यभिज्ञातवान्। ततः क्रमेण युक्तिबलात् तां वासवदत्तां तस्याश्च चेटीः सर्वाः प्रति आत्मनोऽदर्शनं व्यधात्। केवलमेको नृपतिस्तं ददर्श। ताश्च सर्वाः सविस्मयमवदन् क्व गतोऽसौ सहसा उन्मत्त इति तदाकर्ण्य दृष्ट्वा चाग्रे तं यौगन्धरायणं मत्वा च सर्वं योगबलकृतं तां वासवदत्तामब्रवीन्नरपतिः। सुन्दरि! त्वमितो गत्वा सरस्वतीपूजाद्रव्यमादाय आगच्छ।

तदाकर्ण्य सा तथेत्युक्त्वा सवयस्या तस्मात् स्थानात् निरगात्। प्रविष्टश्च तमेवावसरं प्राप्य असौ यौगन्धरायणः तस्मै वत्सराजाय निगड़भञ्जनान् योगान् अददात् अन्यांश्च वासवदत्तायाः वीणातन्त्रीनियोजितान् वशीकरण-

वीणांश्च। न्यवेदयश्च राजन्! इह वसन्तकः समायातः, द्वारि तिष्ठत्यसौ रूपान्तरप्रतिच्छन्नः, तमिहान्तिके समानेतुमर्हसि। यदा तु वासवदत्ता त्वयि विश्वासं गमिष्यति तदा यदहं वक्ष्यामि तत्कुर्य्याः; साम्प्रतमिह तिष्ठ। इत्युक्तासौ तस्या गान्धर्वशालाया निर्ययौ। वासवदत्ता च पूजामादाय तत्क्षणमगात्। अथ तां वत्सराजोऽवदत् दारिके! बहिर्द्वारि द्विजः कश्चित् यदि तिष्ठति तदा तस्मै सरस्वतीपूजाया दक्षिणां दातुमिह प्रवेश्यताम्। तथेत्युक्तया तया द्वारदेशात् विरूपाकृतिरसौ वसन्तकः समानायि। स चानीतः प्रभुं दृष्ट्वा शुचारोदीत् राजा तु तं मन्त्रभङ्गभिया निजगाद ब्रह्मन्! तवेदं रोगवैरूप्यं भेषजेन निवारयामि, मा रोदीः तिष्ठेह मम सन्निधौ। महान् प्रसादोऽयं देव इति सोऽब्रवीत् वसन्तकः। राजा च तं तथा विरूपं दृष्ट्वा स्मितमुखोऽभूत्। सोऽपि तस्याशयं विदित्वा समधिकवैरूप्यं दर्शयन् हसति स्म। वासवदत्तापि तं तथा हसन्तं क्रीडनकसदृशं दृष्ट्वा जहास तुतोष च बभाषे च कौतुकेन, भो ब्रह्मन्! किमपि विज्ञानं विदितं ते, कथ्यताम्। सोऽवदत् देवि! कथाः कथयितुं जानामीति। अथ सा कथय तर्हि कामपि कथामिति व्यगादीत्। ततः सः वसन्तकः तां राजसुतां रञ्जयन् हास्यवैचित्र्य रुचिरां कथामवर्णयत्।

अस्ति मथुरा नाम नगरी। यत्र कंसनिसूदनार्थं भगवान् नारायणः प्रादुरासीत्। तस्यां रूपिणिका नाम काचित् गणिका यथार्थनाम्नी वारविलासिनी आसीत्।

मकरदंष्ट्राभिधाना तस्या माता वृद्धकुट्टनी स्थिता । कदा-चित् पूजासमये देवगृहं गता सा रूपिणिका कञ्चित् सुन्दरं युवानमवलोकितवती । स पुरुषः दृष्ट एव तस्यां हृदयमाविशत् मात्रा दत्ता उपदेशास्तु तस्या निर्ययुः । अथ सा चेटीमब्रवीत् गच्छ मद्वचसा अमुं पुरुषं ब्रूहि अद्य त्वया मम गृहे आगम्यतामिति । चेटिका च यथादिष्ट-मकरोत् ततः स ब्राह्मणयुवा किञ्चित् विमृशन् तामवा-दीत् भद्रे ! लोहजङ्घो नामास्मि ब्राह्मणः, नास्ति मे धनं तदाढ्यजनयोग्ये रूपिण्या गृहे कोऽहं ? अस्मत् स्वामिनी न त्वत्तो धनमभिलषतीति तयोक्ते स लोहजङ्घः तथेति प्रतिपेदे । ततः सा रूपिणिका चेटीमुखात् सर्वं श्रुत्वा स-मुत्सुका स्वं गृहमगात् अतिष्ठच्च तदागमनकाङ्क्षया तन्मार्ग-दत्तदृष्टिः । एतस्मिन्नेव काले लोहजङ्घः तस्या मन्दिरमा-गमत् परं कुट्टनी तु कुतोऽयमिति मकरदंष्ट्रा समदृश्यत । रूपिणिका तं दृष्ट्वा स्वयमुत्थाय आदरवती हृष्टा च तं कण्ठे लग्ना वासगृहान्तरमनयत् । तत्र सा लोहजङ्घेनो-पभुज्यमाना नितरां तद्वशवर्त्तिनी जन्म सार्थकममन्यत । स च युवा निवृत्तान्यसङ्गया तया सह यथासुखं तन्मन्दिरे एव तस्थौ । तद् दृष्ट्वा माता मकरदंष्ट्रा विफलमनोरथा खिन्नमनाः रहसि रूपिणिकामब्रवीत् पुत्रि ! कथमयं निर्धनः पुरुषः सेव्यते ? साधवः शवं न स्पृशन्ति गणिकास्तु निर्धनमपि न । क्वानुरागः क्व च वेश्या, कथं त्वया सर्वं विस्मृतम् ? वत्से ! सन्ध्येव रागिणी वेश्या न चिरं दीप्यते । गणिका नटीव कृत्रिमं प्रेम दर्शयित्वा अर्थमा-

हरेत्। तदेनं त्यज निर्धनं आत्मनो मार्गं माकार्षीः। इति मात्राभिहिता रूपिणिका रोषपरा अब्रवीत् मातः! मैवं वादीः एष हि मम प्राणेभ्योऽपि प्रियतरः, मम च बहु धनमस्ति, किमन्येन, तदेवं पुनर्नवक्तव्यं त्वयेति। तदाकर्ण्य सा दुष्टकुट्टनी कुपिता लोहजङ्घस्य निर्वासनोपायं विचिन्वती तस्थौ।

एकदासौ मकरदंष्ट्रा कञ्चित् क्षीणधनं पथि विचरन्तं शस्त्रपाणिभिः पुरुषैः परिवृतं राजपुत्रमद्राक्षीत् उपगम्य चाब्रवीत् तमेकान्ते, राजपुत्र! निर्धनेन केनचित् यूना मम गृहमाक्रान्तं तत् त्वमागच्छ मद्गृहं यथा च स मद्गृहात् निवर्त्तेत तथा कुरु, भजस्व च, मम रूपिणिकामिति। राजपुत्रोऽपि तथेत्युक्त्वा तस्या गृहं प्राविशत्। तस्मिंश्च काले रूपिणिका देवगृहमगात्। लोहजङ्घोऽपि क्वापि बहिः स्थितः तत् कालं निःशङ्कमेव गृहमाययौ। आगच्छंश्च राजपुत्रस्य अनुचरैः पादप्रहाराद्यैः सर्वेष्वेवाङ्गेषु दृढमताड्यत। ततस्तैरेव क्वापि अमेध्यपूर्णे खाते निक्षिप्तो लोहजङ्घः कथमपि प्राणान् रक्षन् पलायितः।

अत्रान्तरे समायाता रूपिणिका तद्विदित्वा शोकसन्तप्ता अभूत्। तद् दृष्ट्वा राजपुत्रोऽपि यथागतमगात्। लोहजङ्घोऽपि कुट्टन्या तथावमानितः प्राणांस्त्यक्तुं तीर्थं गन्तुं प्रवृत्ते। गच्छंश्च अटव्यां कुट्टनीमन्युना ग्रीष्मेण च सन्तप्तः छायामभिलषन् तदप्राप्य कञ्चित् हस्तिकलेवरमाससाद। तच्च जम्बूकनिष्कुषितं निर्मांसं दृष्ट्वा

जघनेन प्रविश्य चर्म्मविशेषे तस्याभ्यन्तरे प्रविश्य वातशीतले परिश्रान्तः निद्रां ययौ ।

अत्रान्तरे सहसा समन्तात् समुत्थितैः मेघमण्डलैर्गगनमण्डलं समाक्रमनमभूत् । प्रववृते च तत्र महान् धारासम्पातः । तत्र हस्तिचर्म्म अनवरत जलपातेन निर्विवरं सङ्कोचमवाप । क्षणे च तस्मिन् अतिमहती वन्या प्रादुरासीत् । तया च नीयमानं तत् गजचर्म्म गङ्गास्रोतसि प्रक्षिप्तं गङ्गास्रोतसा चातिमहत्या समुद्राभ्यन्तरं नीतम् । अत्र कश्चित् गरुड़वंशभवः पक्षी तत् भासमानं चर्म्म दृष्ट्वा आमिषशङ्कया स्रोतसः समुद्धृत्य चञ्चुपुटेन सागरपारमनयत् । तत्र च तत् चञ्च्वा विदार्य्य तत्रस्थं मानुषमेकं जीवितं विलोक्य त्यक्त्वा च उत्पपात । ततस्तस्मात् पक्षिचञ्चुकृतात् द्वारात् पक्षिसंरम्भबोधितोऽसौ लोहजङ्घः निर्जगाम । सहसाचात्मानं समुद्रपारस्थमालोक्य सविस्मयः ऐन्द्रजालिकर्म्मिव तत् समग्रममन्यत । अथ तत्र द्वौ राक्षसौ सहसा समुपस्थितौ विलोक्य भयमाविशत् । राक्षसौच तौ दूरात् चकितौ तमपश्यतां अकुरुताञ्च हृदि भयं रामात् पराभवं स्मरन्तौ तं तथाम्बुधिपारगमवलोकयन्तौ । तयोश्चैकः समागत्य तदैव गत्वा विभीषणाय राज्ञे यथादृष्टं न्यवेदयत् । सोऽपि राक्षसाधिपतिर्दृष्टरामप्रभावः मानुषागमनात् त्रस्यन् तं राक्षसमब्रवीत् गच्छ मद्वचनात् तं मानुषं प्रीत्या ब्रूहि, आगम्यतामस्मद्गृहं क्रियतां प्रसाद इति ।

स च राक्षसस्तथेत्युक्त्वा आगत्य सर्वं स्वप्रभुवचनं लोह-

जङ्घाय समभ्यधात्। सोऽपि लोहजङ्घः प्रशान्तमनाः तथेति अङ्गीकृत्य ताभ्याञ्च राक्षसाभ्यां सह लङ्कामगमत्। तस्याञ्च काञ्चनमयप्रासाददर्शनविस्मितः राजभवनं प्रविश्य विभीषणं राक्षसपतिं व्यलोकयत्। सोऽपि राजा कृतातिथ्यः कृताशीर्वादं तं ब्राह्मणं पप्रच्छ ब्रह्मन्! कथमत्रागत इति सोऽपि धूर्त्तोऽब्रवीत् अहं विप्रः मथुरानिवासी लोहजङ्घो नाम। अहं दारिद्र्यसन्तप्तः कदाचित् देवकुलं गत्वा तत्र श्रीमन्नारायणसमीपे निराहारस्तिष्ठन् घोरं तपो अन्वतिष्ठम्। एकदा स भगवान् विभीषणसकाशं याहि, मद्भक्तः स ते धनं दास्यतीति स्वप्ने मां समादिशत्। मया च क्वाहं क्व च विभीषण इत्युक्ते पुनः स एव देवः समाख्यत् गच्छ अद्यैव विभीषणमवाप्स्यसीति इत्युक्तोऽहं तेन प्रभुणा सहसा प्रबुद्धः इहाम्बुधेः पारेऽवस्थितमात्मानं व्यलोकयं नान्यत् किञ्चित् वेद्मीति। लोहजङ्घेनेत्युक्तो विभीषणः दुर्गमां लङ्कामाकलय्य सत्यमयं यथा वदतीति सममन्यत। अथ तिष्ठ ते वित्तं दास्यामीत्युक्त्वा तं ब्राह्मणं नृघातिनां अदृष्टं कृत्वा राक्षसानां रहसि समरक्षत् आनाययच्च तत्रस्थात् स्वर्णमूलाभिधात् गिरेः गरुड़वंशसम्भवं पक्षिणमेकं राक्षसैः। आनीतञ्च तं मथुरायां गमिष्यते लोहजङ्घाय वाहनीकर्त्तुं वशीकरणाय समर्पयत। लोहजङ्घोऽपि तं पक्षिणं वशमानीय विभीषणार्चितस्तस्यामेव लङ्कायां तमधिरुह्य वाहनमितस्ततोवाहयन् कियन्तं कालमुवास।

एकदा स समुत्सुकः तं राघवेन्द्रमुवाच कथं लङ्का-भूमिरियं समन्तात् काष्ठमयीति तदाकर्ण्य सोऽवदत् ब्रह्मन्! यदि ते कुतूहलं श्रूयतां कथयाम्येतद्वृत्तान्तम्।

पुरा किल काश्यपात्मजः गरुत्मान् प्रतिज्ञाहेतोर्नागानां दास्यमुपगतां जननीं विनतां निष्क्रष्टुमिच्छन् तन्मूल्यी-कृतां सुधां देवेभ्यः सकाशादाहर्तुं उद्यतः पथि बलसाधनार्थं भक्ष्यार्थी पितृसकाशमगात्। सचाभ्यर्थितः समब्रवीत् गच्छ पुत्र! भुङ्क्ष्व महान्तौ गजकच्छपौ अब्धिस्थितौ शाप-भ्रष्टौ। ततः स गरुड़ तत्र गत्वा तावादाय गजकच्छपौ युध्यमानौ महतः कल्पद्रुमस्य छायायां समुपाविशत्। आत्मनः भारातिशयाच्च तां शाखां भग्नां विलोक्य तत्र लम्बमानान् तपोनिष्ठान् वालखिल्यान् रक्षन् चञ्चा धृत्वा पुनः पितुः सकाशमगमत् लोकोपमर्दो माभूदिति तेन पित्रादिष्टः इह विजने तां शाखां अत्याक्षीत्। तच्छाखा-पृष्ठे एषा लङ्का निर्मिता तस्मादिह भूः काष्ठमयीति एतदाकर्ण्य विभीषणवचः स लोहजङ्घः सन्तोषमियाय।

अथ विभीषणः मथुरां जिगमिषवे तस्मै सुवर्णानि महार्घाणि रत्नानि तथा देवस्य मथुरावर्त्तिनः नाराय-णस्य भक्त्या अस्य हस्ते हैममयान् चक्रगदापद्मशङ्खांश्च प्रादात्। स च तत्सर्वं गृहीत्वा तच्च योजनशतप्रयातारं विहङ्गराजमारुह्य व्योममार्गेण तीर्णसागरः सद्य एव मथु-रामागमत्। तस्याश्च शून्ये बाह्ये विहारे व्योम्नः अव-तीर्य तं रत्नराशिं स्थापयामास बबन्ध च तं पक्षिणम्। अथ गत्वाचापणं रत्नमेकं तत्र विक्रीय दद्याङ्गरागादिकं

नानाविधं भोजनीयञ्च क्रीतवान्। आगत्य च तस्मिन्नेव विहारे तत् भुक्त्वा दत्त्वाच पश्चिमे तदुपयुक्तं द्रव्यं वस्त्राङ्गरागैरात्मान मभूषयत्।

अथ प्रदोषे तमेव विहगराजमारुह्य ताः शङ्खचक्रगदाः वहन् तस्या रूपिण्या गृहं प्रययौ। तत्र उपरिस्थितः स्थानस्थः स लोहजङ्घः रहसिस्थितां सम्बोधन् गम्भीरं शब्दमकरोत्।

तमाकर्ण्य निर्गता सा व्योम्नि रत्नालङ्कृतं नारायणमिव तमपश्यत् निशि रूपिणिका। अहं हरिरिह त्वदर्थमायात इत्यभिहिता सा तं प्रणम्य दयां करोतु देव इति प्रत्यवोचत् अथावतीर्य्य गगनात् लोहजङ्घस्तं विहङ्गमं कुत्रचित् संयम्य तया कान्तया सह तद्वासभवनं प्रविवेश। तत्र च प्रियां सम्भुज्य यथा कामं निशावशेषे निष्क्रम्य तमेव विहगमारुह्य नभसा जगाम। अथ प्रातः सा रूपिणिका देवताहं विष्णुभार्य्या मर्त्यैः सह नालपामि इति मौनमास्थाय तस्थौ अथ सा मकरदंष्ट्रा कस्मादेवं मौनमाश्रीयते पुत्रि! कथ्यतामिति तामपृच्छत्। निर्बन्धपृष्टाच तिरस्करिणीं स्थापयित्वा तस्मै सर्वं रात्रिवृत्तान्तं मौनकारणमवादीत्। सातु कुट्टनी तदाकर्ण्य सन्दिहाना निशि एकान्ते स्थित्वा तं विहगारूढमागतं लोहजङ्घमपश्यत्। अथ प्रभाते सत्यमेव तन्मन्यमाना पटान्तःस्थां रूपिणिकामभ्येत्य अवनता समभ्यधात् पुत्रि! देवस्य अनुग्रहात् त्वं देवी मम पुत्रीजाता, अहन्तु तव जननी, तन्मे सुताफलं देहि, यथाहं वृद्धा अनेन देहेन स्वर्गं व्रजामि, तथा देवाय विज्ञापय

अनुगृहाण मामिति। रूपिणिका च तं मातुरभिप्रायं कपटविरावे तस्मै समागताय नक्तं व्यजिज्ञपत्। तथेत्युक्तः स लोहजङ्घो विहस्याब्रवीत् प्रिये! पापीयसी ते जननी, नास्याः स्वर्गे अधिकारिता परमेकादश्यां प्रातः दिवः द्वारमुद्घाट्यते, तत्र बहवः शिवानुचरा गणाः स्वर्गे प्रवेक्ष्यन्ति, तेषां मध्ये तद्वेशधारिणी ते माता प्रवेशयितुं शक्यते, तदस्याः पञ्चचूडं क्षुरमुण्डितं शिरः, कण्ठं अस्थिमालाधरं पार्श्वमेकं कज्जलालङ्कृतं अन्यत् सिन्दूरलिप्तञ्च कुरु वीतवसनायाः। तथाकृते गणाकृतिमेनां सुखेन स्वर्गं नेष्यामि। इत्युक्त्वा स लोहजङ्घः क्षणं स्थित्वा यथागतमगात्। प्रातश्च तथा कृतयथोक्तवेशा सा कुट्टनी स्वर्गोन्मुखी तस्थौ। लोहजङ्घश्च पूर्ववत् निशायां तत्राययौ। सा च वारस्त्रीवित् मातरं तथा कृतां तस्मै समर्पयत् ततः सः पक्षिराजारूढ़ः तां कुट्टनीं विकृतवेशां नग्नामादाय त्वरात् नभोमण्डल मुत्पपात। ददर्श च गगनस्थ एव देवमन्दिराग्रतः प्रांशु उपरि चक्रलाञ्छितं शिलास्तम्भमेकं न्यवेशयच्च तस्य स्तम्भस्य पृष्ठे चक्रमावालम्ब्य तां खलीकारवतीकारपताकामिव। इह क्षणं तिष्ठ यावदहं भुवि कमपि अनुगृह्य आगच्छामि इत्युक्त्वा तां तस्या दृष्टिपथात् निर्ययौ। उवाच च तत्र गगने एव स्थितः देवाग्रे रात्रौ यात्रोत्सवदर्शनार्थं समागतान् नागरिकान् हे पौराः! युष्माकमुपरि अद्य सर्वसंहारिणी काचित् नारी पतिष्यति अवहिता भवत हरिं देवं शरणं व्रजत च। ताञ्च गगनात् समुत्थितां वाणीमाकर्ण्य सर्वे एव माथुराः भयविह्वला

देवमाश्रित्य स्वस्त्ययनं चक्रुः। सोपि लोहजङ्घः गगना-देवतीर्थे तं देववेशं विहाय अलक्षित स्तत्रैव विवेश। स्तम्भपृष्ठवर्त्तिनी कुट्टनी तु अद्यापि देवो नायातः, न वाहं स्वर्गं गता, इति चिन्तयन्ती हा हा पतितास्मि अहं अधुना सम्प्रति अत्र स्थातुमिति तत्रयान् श्रावयन्ती भयवशा चक्रन्द। हे देवि! मा मा पत इति देवनिकेतनस्थाः पुरुषा उच्चैरूचुः निःयुग्च सबालवृद्धवनिताः नारीपातभयोद्विग्ना तां रजनीम्।

अथ प्रातः सर्व्वो नागरिको जनः सह नृपतिना तत्रागत्य तां तथाविधां स्तम्भपरिवर्त्तिनीं कुट्टनीं प्रत्यभिजानात्। रूपिणिका च श्रुतवृत्तान्ता तत्र वीतभयेषु हसत्सु जनेषु समाययौ अवतारयामास च तत्रस्थैर्जनैस्तां मातरं स्तम्भात्। अथ सर्वैरेव जनैः पृष्टा सा यथावृत्तं सर्वमकथयत्। ततः सर्वएव राजपरिजनाः माथुराः अहह महाश्चर्यकरं सिद्धचरितं तत्मन्यमानाः परस्परमब्रुवन् येन इयं वञ्चितानेककामुका कुट्टनी विप्रलब्धा, स प्रकटोऽस्तु तस्येह च पट्टबन्धो विधीयताम्। तदाकर्ण्य लोहजङ्घः सहसा आत्मानमदर्शयत् स्पष्टमावर्णयत् आमूलतो वृत्तान्तम्। अथ स विभीषणप्रदत्तं शङ्खचक्राद्युपायनं देवाय समर्पितवान् सविस्मयेन जनेन दृश्यमानम्। अथ राजाज्ञैव सर्वे माथुराः सपदि तस्य पट्टं बद्धा सन्तुष्य च तां रूपिणिकां स्वाधीनां चक्रुः। लोहजङ्घोऽपि एवं कुट्टनीनिकारमन्युं प्रतिकृत्य बहुरत्नसञ्चयेन समृद्धकोषस्तामिव कान्तां प्राप्य यथासुखं न्यवसत्।

विकृतरूपस्य वसन्तकस्य मुखात् कथामिमामाकर्ण्य बद्धस्य वत्सराजस्य समीपे वासवदत्तया परमः परितोषो लेभे ।

इति द्वादशस्तरङ्गः ।

—*—

अथ त्रयोदशस्तरङ्गः ।

अथ सा वासवदत्ता क्रमेण पितृपक्षविमुखी वत्सेश्वरं प्रति गाढ़मनुरागवती बभूव । ततो यौगन्धरायणः तिरस्करिणीरक्षयः अन्यैर्जनैरलक्षितः वत्सराजमुपजगाम । व्यजिज्ञपच्च तमकान्ते वसन्तकसन्निधौ देव ! चण्डमहासेनेन भवान् मायया बद्धः । अयं सुतां दत्त्वा सम्मान्य च त्वां मोक्तुमिच्छति । तदस्य तनयां स्वयं हृत्वा वयं गच्छामः तथाकृते अस्य दृप्तस्य प्रतीकारो भवेत् अनुग्रहलाभे अस्माकं लाघवम् । राजन् ! वासवदत्तायाः पितृदत्ता भद्रवती नाम करेणुका अस्ति, सा हि अन्येन दन्तिना वेगेन अनुगन्तुं न शक्या विना नडागिरिं गजेन्द्रम् । स तां करेणुकां दृष्ट्वा नैव युध्यते अस्याश्च करेण्वा आषाढ़को नाम हस्त्यारोहोऽस्ति, स मया, बहु धनं दत्त्वा वशीकृत्य स्थापितः । तस्मात् सह वासवदत्तया तां करेणुनारुह्य सशस्त्रेण नक्तं इतः प्रस्थातव्यम्, अश्वत्थो महामात्रश्च गजेङ्गितविदपि मद्येन तथा क्षीवतां नेष्यते यथा नैतद् किमपि ज्ञातुं शक्ष्यते । अहञ्च अग्रतः पुलिन्दकस्य तव सख्युः सकाशं गच्छामि, मार्गरक्षार्थमित्युक्त्वा असौ

यौगन्धरायणः प्रायात् । वत्सराजोऽपि तत्सर्वं कार्यजातं मनसि समवधारत् । अत्रान्तरे वासवदत्ता वत्सराजसकाशमभ्यागमत् । राजा तु तया सह विविध विश्रम्भालापं कृत्वा तत् सर्वं यौगन्धरायणोक्तं तस्यै शशंस । सा च गमनं प्रति यथोक्तं प्रतिपद्य आषाढ़कं नाम हस्त्यारोहमानाय्य तं सज्जं कृत्वा देवपूजाव्याजेन मद्यं दत्त्वा सर्वाधोरणसहितं महामात्रं मत्तमकरोत् । अथ प्रदोषे आषाढ़कः करेणुं तां सज्जयित्वा मेघाच्छन्ने प्रदोषे समानयत् । सज्जयमानाच सा हस्तिनी यं शब्दं चकार, हस्तिरुताभिज्ञो महामात्र एव तं शुश्राव । हस्तिनी अर्थ त्रिषष्टियोजनानि यास्यामीत्याह, स महामात्रः एतं उद्दाममदविह्वलितवाचरं उवाच । मत्तस्य तस्य मानसं नैव विचारमागमनायात्, हस्तिपकाश्चान्ये क्षीवास्तस्य वाक्यं न शुश्रुवुः । अथ वत्सराजः यौगन्धरायणाशिक्षितैः योगैर्विश्लथबन्धनः, स्वहस्तात्तः वसन्तकेनानुगम्यमानः तां निजां वीणामादाय वासवदत्तया काञ्चनमालाभिधसहचरीद्वितीयया सह तां करेणुकामारुरोह । निर्जगाम चोज्जयिन्याः मत्तेभभिन्नप्राकारवर्त्मना । प्राकाररक्षिणौ वीरौ वीरबाहु-तालभटनामानौ द्वौ राजसुतौ तदा राज्ञा निहतौ । ततो राजा प्रियासखः करेणुकारूढ़ो वेगेन प्रतस्थे । एतस्मिन्नन्तरे रात्रौ प्राकाररक्षिणौ राजसुतौ हतौ दृष्ट्वा सर्वे पुररक्षिणः क्षुभिताः राज्ञे न्यवेदयन् । सोऽपि चण्डमहासेनः अन्विष्य तं वत्सराजमेव हृतवासवदत्तममन्यत । अथ पालकनामा राजपुत्रः ता-

इव कोलाहलपूर्णे राजपुरे प्रबुद्ध स्तं नड़ागिरिमधिरुह्य वत्सेश मन्वधावत् । वत्सेशोऽपि आयान्तं तं पथि अशी-धयत्, नड़ागिरिस्तु करेणुं तां दृष्ट्वा न प्रजहार । ततः स पालकः पितृकार्य्यानुरोधिना गोपालकेन भ्राता, पथा देत्य निवर्त्तितः । वत्सराजोऽपि तदानीं निःशङ्कतया विश्रब्धं गन्तुं प्रववृते । शनै र्गच्छतश्च तस्य सा शर्वरी व्ययासीत् । ततः सा करेणुका त्रिषष्टियोजनायाता म-ध्याह्ने विन्ध्याटवी माससाद तृषिता चाभवत् । अथ सभार्य्ये तस्मिन् राज्ञि अवतीर्णे सा करेणुः जलानि पीत्वा तेनैव दोषेण तत्क्षणात् पञ्चतां प्राप । अथ विषण्णः सभार्य्यो वत्सराजः आकाशचारिणी मेतां सरस्वतीमशृ-णोत् राजन् ! अहं मायावती नाम विद्याधरी, इयन्तं कालं शापदोषेण हस्तिनी आसं वत्सराज ! अद्य तव उपकारं कृतवती अहं भूयोऽपि भविष्यत स्तनपुत्रस्य उप-कारं करिष्यामि, एषा वासवदत्ता च ते पत्नी नैव मानुषी इयं कापि सुरसुन्दरी शापदोषात् क्षितावयतीर्णा इति । ततः स राजा हृष्टः वसन्तकं विन्ध्यसानुं प्रति पुलिन्दकाय सुहृदे स्वागमनं वक्तुम् प्राहिणोत् । एतस्मिन्नन्तरे पाद-चारेण शनकैर्गच्छन्तं कान्तासमेतं तं दस्यवः समन्तात् समागत्य पर्य्यवारयन् । स च धनुर्द्वितीयः वत्सराजः वासवदत्तायाः पुरतः दस्यूनां पञ्चाधिकशतं वाणैनाव-धीत् । आगतश्च तत्क्षणमस्य मित्रं पुलिन्दको नाम पुलिन्दराजः यौगन्धरायणवसन्तकाभ्यां सह । ततः सः पुलिन्दपतिः सर्वान् दस्यून् निवार्य्य तं राजानं प्रणि

पत्य निजां पत्नीं निनाय। तत्र गत्वा स वत्साधिपतिः तां रात्रं चारणदर्भपाटितचरणया प्रियया सार्धं अत्यवाहयम्।

अथ प्रभाते यौगन्धरायणप्रेरितदूतमुखेन बोधितः सेनापतिः रुमण्वान् ससैन्यो राजान्तिकमागमत्। अथ वत्सराजस्तस्यामेव विन्ध्यारण्यभुवि कटकं निवेश्य उज्जयिनीवार्तां ज्ञातुं समुत्सुकस्तस्थौ। अत्रान्तरे च उज्जयनीतः कश्चिद् वणिक् यौगन्धरायणसुहृद् समागत्य अब्रवीत् देव! चण्डमहासेनः त्वयि जामातरि प्रीतः, तेन च भवदन्तिकं प्रतीहारः प्रेषितः स चागच्छन् पश्चात् स्थितः अहमग्रतः सत्वरं देवं विज्ञापयितुमागतः। एतदाकर्ण्य वत्सराजो जहर्ष शशंस च सर्वं प्रियायै सापि कृतबन्धुपरित्यागकातरा परं हर्षमगात् सानन्दा च समुत्सुका च स्वात्मविनोदाय निकटस्थं वसन्तकमाहूय पुनरब्रवीत् ब्रह्मन्! कापि मनोहारिणी कथा त्वया वर्ण्यतामिति स च धीमान् वसन्तकः तस्या मुग्धायाः भर्तृभक्तिविवर्धिनीं कथामिमां कथयामास।

अस्ति ताम्रलिप्ता नाम नगरी। तस्यां धनदत्ताख्यः कश्चित् महाधनः वणिक् आसीत्। सचापुत्रः बहून् विप्रान् समानाय्य प्रणतोऽब्रवीत् विप्राः! तथा कुरुत यथा मे अचिरात् पुत्रो जायेत। विप्रैरुक्तं नैतत् दुष्करं अस्माभिः सर्वं हि साधयन्ति द्विजाः श्रौतेन कर्मणा। पूर्वं कश्चिदपुत्रः महीपतिरासीत् तस्य पञ्चाधिकशतसंख्यकाः अन्तःपुरिकाः। पुत्रेष्टिं कृतवतस्तस्य जन्तुर्नाम

पुत्रो व्यजायत । कदाचित् जानुभ्यां चलन्तं तं पुत्रमेका पिपीलिका ददंश, भृशं चक्रन्द च सः, अन्तःपुरञ्च सर्वं तदाक्रन्देन तुमुलार्त्तरवयुक्तमभवत्, राजापि पुत्र ! पुत्र ! इति सुभृशमरोदीत् प्राकृत इव । अथ तस्मिन् बालके क्षणात् स्वस्थे समाश्वस्तो जाते राजा एकपुत्रतां नितरां दुःखनिदानमविन्दत् अपृच्छच्च ब्राह्मणान् अस्ति कश्चिदुपायो येनाहं बहुपुत्रः स्यामिति । ते च तं प्रत्यूचुः राजन् ! अस्त्ययमुपायः यदेनं तव सुतं हत्वा अग्नौ तन्मांसं हूयते, तस्य हूयमानस्य गन्धाघ्राणात् ते सर्व्वाः पत्न्यः सुतान् लप्स्यन्ते इति । राजा च तदाकर्ण्य तथैव सर्वं कृतवान् प्राप्तवांश्च पत्नीसमसंख्यान् पुत्रान् । अतस्तवापि यज्ञेन सुतं साधयामः । इत्युक्त्वा तं धनदत्तं ब्राह्मणाः कृतदक्षिणा यथाविधं होमं चक्रुः जातश्च तस्य वणिजस्तनयः गुहसेनो नाम । स पुत्रः क्रमेण ववृधे । कालक्रमेण शैशवातिक्रान्तस्य तस्य भार्य्यार्थं धनदत्तः इतस्ततः अन्विवेष । अथ सः पुत्रसहितः वाणिज्यव्याजेन वध्वन्वेषणार्थं द्वीपान्तरमगमत् । तत्र च धर्म्मगुप्तं नाम वणिग्वरं पुत्रार्थे देवस्मितां नाम तत्कन्यकां ययाचे । स तु धर्म्मगुप्तः दुहितृप्रियतया ताम्रलिप्तामतिदूरवर्त्तिनीं मत्वा तं सम्बन्धं निराचकार । सा तु देवस्मिता गुहसेनं तं गुणवन्तं दृष्ट्वा तदायत्तचित्ता कृतबन्धुत्यागा सखीमुखेन सङ्केतं कृत्वा तेनैव पितृसहितेन प्रियेण सह रजन्यां तस्मात् द्वीपात् ताम्रलिप्तामाजगाम । आगतयोश्च तयोः ताम्रलिप्तां कृतोद्वाहयोः चित्तं परस्परप्रेमासक्त-

मभूत्। गच्छता च कालेन पितरि धनदत्ते स्वर्गते गुहसेनः स्वबन्धुभिर्वाणिज्यार्थं कटाहद्वीपगमने कृतानुमतिः कथञ्चित् प्रियां यात्रामयाचत। सा देशान्तरे अन्यासङ्गशङ्किनी मेर्था पत्युर्गमनं नाङ्गीचकार। गुहसेनस्तु एकतो बन्धुजनानुरोधः, अन्यत्र प्रियावियोगः निषिधश्चेति मुग्धः किं कर्त्तव्यविमूढ़ एवासीत्। अथ स देवागारे गत्वा देवो मे उपायं निर्द्दिशतु इति मनसि सङ्कल्पयन् निराहारः-व्रत मारेभे। देवस्मितापि भर्त्रा सार्द्धं तथैव व्रतं कृतवती। देवश्च तयोरेकाग्रेण परितुष्टः स्वप्ने आत्मानं दर्शयन् रक्तपद्मद्वयं दत्त्वा ता वभाषत उभावपि युवां एतत् एकैकं हस्ते गृहीतं यदि युवयोरेकः दूरवर्त्ती सन् शीलत्यागं करोति तदा अपरस्य करस्थितं पद्मं म्लानिमियात् नान्यथा। एतद्देववाक्यं श्रुत्वैव प्रबुध्य द्वावपि तौ दम्पती अन्योन्यस्य हृदयमिव हस्तस्थं रक्तमम्बुजमपश्यताम्। ततः स गुहसेनो गृहीतरक्ताम्बुजः प्रस्थान मकरोत् अतिष्ठच्च देवस्मिता गृहे पद्ममेव दिवानिशं पश्यन्ती। गुहसेनोऽपि सत्वरं कटाहद्वीपं प्राप्य तत्र रत्नानां क्रयविक्रयान् कर्त्तुमारेभे। एकदा तत्रत्याश्चत्वारो वणिक्सुताः तस्य हस्ते सततं स्थितमम्लानं पङ्कजं दृष्ट्वा विस्मयं परमगमन्। अथ ते युक्त्या तं गृहं नीत्वा प्रभूतं मधु पाययित्वा पद्मवृत्तान्तमपृच्छन् सोऽपि मत्तः यथावृत्तमकथयत्। अथ ते पापाशयाः वणिक्तनयाः तं गुहसेनं बहुदिननिर्वाह्यरत्नादिक्रयविक्रयनियुक्तं निर्धार्य्य कौतुकात् तस्य भार्य्यायाः शीलविप्लवं चिकीर्षवः त्वरितमेव

ताम्रलिप्तामगच्छन् । आगत्य च तत्र ते धूर्त्ताः उपायं विचिन्वन्तः कामपि सुगतायतने स्थितां योगकरण्डिकां नाम प्रव्राजिकामुपागमन् । अब्रुवंश्च भगवति ! यद्यस्मा- कमभीष्टं साध्यते तदा ते बहूनर्थान् दास्याम इति । सा- ब्रवीत् तरुणा वयं इति सम्भावयामि काप्यत्र रमणी युष्मा- कमभिलषिता, तद् ब्रूत, साधयामि वः कार्य्यं, नास्ति मम काचित् धनलिप्सा अस्ति सिद्धिकरी नाम मम सुचतुरा प्रियशिष्या, तत्प्रसादेन मया प्रचुरं धनमासादितमिति ।

कथं शिष्याप्रसादेन त्वया प्रभूतं धनं प्राप्तमिति पृष्टा तैः सा प्रव्राजिका समभाषत यदि कौतुकं तत् श्रूयतां कथयामि । इह कोऽपि वणिक् पुरा समागमत् उत्तराप- थात् । मम शिष्या तु सा अवस्थस्य तस्य गृहे कृतरूप- परिवर्त्तना दास्यभावमवलम्ब्य कञ्चित् कालं स्थित्वा विश्राम्य च तं वणिजं एकदा स्वर्णसञ्चयं तद्गृहात् मुषित्वा प्रत्यूष एव निर्ययौ । ताञ्च नगरीनिष्क्रान्तां भयाकुलचित्तां सत्वरं धावन्तीं दृष्ट्वा कश्चित् मृदङ्गहस्तो भिक्षोपजीवी डोम्बः धनाशया द्रुतमन्वगच्छत् । अथ सा सिद्धिकरी न्यग्रोधतलवर्त्तिनी तमागत डोम्बं दृष्ट्वा धूर्त्ता दीनभावेन अवोचत् भद्र ! भर्त्रा सह कलहं कृतवती अहं गृहात् निर्गता मर्त्तुकामा, तत् त्वया मे अस्मिन् वृक्षे पाशो विरच्यतामनुग्रहेण । स च मूर्खः पाशेन स्वयमे- वासौ म्रियते, किमेतामहं हन्मि नारीं इति मत्वा तत्र वृक्षे पाशमसज्जयत् । ततः सा सिद्धिकरी मुग्धेव तमगा- दीत् नाहं उद्बन्धनं जानामि, कथं क्रियते, त्वया मे कृपया

हर्म्यं तामिति। ततः सोऽपि कान्तागमस्तथेति तामुक्त्वा वृक्षोपरि स्थित्वा यावत् स्वकण्ठे तं सज्जितं पाशमबध्नात् तावत् तयाऽपि तं वृक्षं पदाघातेन तस्मादपासार्य्यत। स तु तत्क्षणमेव पाशबद्धो ममार! क्षणे च तस्मिन् असौ वणिक् मुषिताशेषरत्नां तां अन्विच्छन् दूरात् दृष्ट्वा तस्मिन्नेव वृक्षतले समागमत्। सापि तमागतमालोक्य अलक्षितं तस्यैव शाखां काञ्चिदारुह्य तत्पत्रैश्छन्नविग्रहा निभृतं तस्थौ। स चागत्य वणिक् सभृत्यस्तत्रागत्य तथैव उद्बन्धनमृतं डोम्बमपश्यत् न तु तां सिद्धिकरीम्। अस्य च स भृत्यः यदि सा वृक्षमारूढ़ा भवेदिति, सञ्जातसंशयः तं तरुमारुरोह। तञ्चारोहन्तं दृष्ट्वा सिद्धिकरी मिथोऽभाषत भद्र! सदैव त्वयि मे प्रीतिः, त्वञ्चात्रारूढ़ः तदेतत् सर्वमेव धनं तव भजस्व मां सुभग! इति। इत्युक्तवती सा प्रेमभरेण तमालिङ्ग्य चुम्बन्ती दशनैः तथा अस्य मूढ़मतेर्वणिक्भृत्यस्य रसनामच्छिनत् यथा स सद्यः पतन् सचीत्कारं पञ्चत्वमगमत्। तद् दृष्ट्वासौ वणिक् तं भृत्यं भूतनिग्रहमाकलय्य भीतः सद्य एव गृहं पलायितः।

अनन्तरं तस्मात् वृक्षादवतीर्य्य भीता सा तापसी तत्सकलं धनमादाय गृहमाययात्। एवं गुणशालिनी मम शिष्या सिद्धिकरी, वत्साः! तत्प्रसादेन मया बहुधनमासादितम्।

इत्युक्त्वा सा प्रव्राजिका तत्कालमागतां तां शिष्यां तेभ्यः वणिक्पुत्रेभ्यः अदर्शयत्। अवादीच्च पुत्राः! अधुना स्वं अभिप्रायं ब्रूत, कां स्त्रियं वाञ्छथ, तामहं क्षिप्रं वः

समर्थयामि । तच्छ्रुत्वा ते तामवदन् यैषा देवस्मिता नाम गुहसेनपत्नी, तया सह अस्मान् सङ्गमय । श्रुत्वैतत् सा प्रतिजज्ञे तापसी, ददौ च स्थानं तेषामावासाय निजगृहै-कदेशम् । अथ सा भक्ष्यादिदानेन तत्रत्यं जनं रञ्जयन्ती सशिष्या गुहसेनगृहमभ्यागमत् । प्रविशन्तीञ्च तां द्वारि स्थिता शृङ्खलाबद्धा कापि शुनी अपरिचितरोधनशीला सं-रुरोध ररास च महास्वनम् ।

अथ सा देवस्मिता किमागता एषेति विचिन्त्य चेटिकां प्रेष्य तां स्वयं प्रावेशयत् सा च प्रविश्य व्याजकृतामाशिषं प्रयुज्य पापा तां साध्वीं देवस्मितामगादीत् वत्से ! सदैव मे तव दिदृक्षा भवति, अद्य पुनः स्वप्ने दृष्टासीति उत्कलि-काकुला त्वत्सकाशमागता, त्वां भर्तृविरहितां दृष्ट्वा मे मनः नितरां दूयते, रूपं यौवनञ्च प्रियोपभोगवञ्चितं विफलं भवति इत्यादिभिः चाटूक्तिभिस्तां सन्तोष्य वि-श्रम्य च गृहं प्रत्यागात् । परेद्युश्च सा मरिचचूर्णयुक्तं मांसखण्डमेकं गृहीत्वा पुनर्देवस्मितावासम् अयासीत् ददौ च तत्रत्यायै द्वाररोधिन्यै शुन्यै तन्मांसखण्डम् । सा च शुनी सद्य एव तत् समरिचं भक्षयामास । मरिचस्य च कटु-त्वात् तस्या नेत्राभ्यामनवारितं अश्रु प्रवृत्तं नासिका च प्रश्चोति स्म । सापि दुष्टतापसी तस्मिन्नेव क्षणे देवस्मिता-न्तिकं गत्वा तया च सम्यक् कृतातिथ्या प्ररोदितुमारेभे । पृष्टा च देवस्मितया सा धूर्त्ता कृच्छ्रादिव इदमब्रवीत् वत्से ! सम्प्रति द्वारवर्त्तिनीं शुनीं रुदतीं पश्य एषा हि मां जन्मान्तरसङ्गतां प्रत्यभिज्ञाय रोदितुं प्रवृत्ता, मम च

तद्‌गुल्मरवेण मधु समुद्गतमिति। तद्‌ाकर्ण्य वहिरागत्य दृष्ट्वा शुनीं तां रुदतीमिव, किमेतत् चित्रमिति सा देवस्मिता चमत्कृतचित्तयत्। अथ प्रव्राजिकाब्रवीत् पुत्रि! पूर्वस्मिन् जन्मनि अहमेषा च कस्यचित् विप्रस्य द्वे भार्य्ये अभवाव, इति स चावयोः पतिः राजनिदेशेन दौत्यकर्म्मणि नियुक्तः पुनः पुनः देशात् देशान्तरं याति स्म। तत्प्रवासे च मया स्वेच्छया पुरुषसङ्गमं कुर्वत्या सततमिन्द्रियाणि भोगैरवञ्चितानि, धर्म्मश्चायं परमो यद्‌ भूतानां इन्द्रियाणाञ्च अनभिद्रोहः, तस्मात् अस्मिन् जन्मनि जातिस्मराहं जाता, एषा तु केवलं शीलमेवारक्षत् अज्ञातधर्म्मनियमा, तेन च दोषेण कुक्कुरयोनौ पतिता, परं जातिस्मरत्वमेषा।

अथ सा सुबुद्धिर्देवस्मिता कोऽयं धर्म्मः धूर्त्तरचनेयं कृता मया इति विचार्य्य तां तापसीमब्रवीत् भगवति! एतावत्यपि काले नायं धर्म्मो मया ज्ञातः, तत् त्वं कृपया केनापि कान्तेन पुंसा मां सङ्गमय। ततः प्रव्राजिका अवोचत् पुत्रि! केचित् द्वीपान्तरादागताः वणिक्पुत्राः तान् त्वत्सकाशमानयामि, इत्युक्त्वा सा प्रमोदनिर्भरा स्वं गृहमगच्छत्। सा च देवस्मिता स्वाः चेटीः अब्रवीत् नूनं मद्भर्त्तुर्हस्ते तत् अम्लानमम्बुजं दृष्ट्वा तत्र कदाचित् मद्यपानेन मत्तं कौतुकात् पृष्ट्वा यथावृत्तं, मद्विध्वंसनाय केऽपि एते द्वीपान्तरादागताः बणिक्पुत्राः पापाः, तैश्च संयुक्तेयं दुष्टतापसी, तत् धुस्तूरसंयुक्तं मद्यमानयत शीघ्रं, दत्त्वा च शुनःपादं अयोमयं कारयध्वम्।

ताश्च स्वामिन्या आदिष्टं तत् सर्वं तथैव अकुर्वन्। एका च चेटी स्वामिन्यादेशात्, तदा तद्रूप मास्थाय तस्थौ। सापि प्रव्राजिका तेषां वणिक्पुत्राणामेकं ग्रहमहमिकया प्रथमसुद्यंतमादाय समाययौ। सायञ्च स्वशिष्यावेश-संछन्नं तं देवस्मितागृहे प्रवेश्य स्वयमलक्षितं निर्गत्य स्वावासमगात्। ततश्च सा चेटी देवस्मितावेशधारिणी तं वणिक्पुत्रं सादरं सम्भाषमाणा सधुस्तूरं मद्यं तत् अपाययत्। तेन च मधुना सहसा हृतचेतनः स चेटीभिः वस्त्रादिकं हृत्वा दिगम्बरीकृतः, पुनः पादेन तेन लौहमयेन स ललाटे ,अङ्कं कृत्वा अमेध्यपूर्णे कस्मिंश्चित् खाते तस्यामेव निशि निक्षिप्तश्च। अथ रात्रेः पश्चिमे यामे लब्धसंज्ञः सः स्वपापोपनते नरके इव खाते निमग्नमात्मानमपश्यत्। उत्थाय च कृतस्नानः ललाटे अङ्कं परामृशन् नग्न एव तत् प्रव्राजिकागृहमगात्। ममैव केवलमेषा दुर्गतिर्माभूदिति संचिन्त्य स तान् सखीनब्रवीत् अहमागच्छन् पथि मुषितोऽस्मीति। अथ जागरेण अतिपानेन च शिरःपीडामपदिश्य प्रातर्वस्त्रेण शिरोऽङ्कितं वेष्टयित्वा तस्थौ। ततः सायं द्वितीयो वणिक्पुत्रस्तथैव देवस्मितागारं गत्वा तथैव खलीकार मवाप्य प्रातरागत्य अन्योऽब्रवीत् मया आगच्छता कचिदाभरणानि स्थापितानि, तानि च तस्करैर्हृतानीति एवमुक्त्वा शिरः शूलव्याजेन तथैवातिष्ठत्। क्रमेण च सर्व एव ते वणिक्तनया स्तथैव खलीकारमर्थनाशञ्च अवाप्य नितरां लज्जिता अन्या अपि एवं भवतु इति विचार्य तामकथयित्वा तस्मादावासात् ययुः।

स्तया स्वगृहे खलीकृताः ते चत्वारः शिरःसु बद्धशाटकाः वणिक्सुता जगृहिरे। ततस्तांश्च वणिजः सार्थवाहसुता एते, कथं ते दासा इति क्रुधान् सा प्रत्यवादीत् यदि वः प्रत्ययो नास्ति, ललाटमेषां दृश्यतां मया शुनः पादाङ्कितं कृतम्। तथेति ते तेषां चतुर्णां ललाटपट्टकान् उन्मोच्य सत्यमेव ललाटगं शुनः पादमपश्यन्। अथ वणिक्षु लज्जितेषु राजा सञ्जातविस्मयः कुतूहलाक्रान्तचेता स्तां वणिग्वेशां किमेतदिति पप्रच्छ। सा तु यथावृत्तं सर्वं शशंस, सर्वे च जना जहसुः अगदंश्च न्याय्या एते भवत्या दासा इति नृपश्च तेषां वचनानि अनुमोदते स्म। ततः अन्ये वणिजः तेषां दास्यमुक्तये साध्व्यै तस्यै बहु धनं दत्त्वा राजदण्डञ्च यथाविधि अदापयन्। अथ तद्धनं तञ्च पतिमवाप्य देवस्मिता सकलसज्जनपूजिता निजपुरीं ताम्रलिप्तां प्रत्याययौ, नास्याः कदापि पुनर्विप्रयोगो बभूव।

हे देवि! महाकुलप्रसूतं विशुद्धचरितं भर्त्तारं अनन्यमानसाः स्त्रिय उपासते, सतीनां पतिरेव परं धनम्। इति वसन्तकमुखात् उदारां कथामाकर्ण्य वासवदत्ता वत्सेश्वरे भर्त्तरि, भक्त्येकतानं मनः समधत्त।

इति त्रयोदशस्तरङ्गः।

—*—

# अथ चतुर्दशस्तरङ्गः ।

अथ तत्र विन्ध्याटव्यां तिष्ठतो वत्सराजस्य सकाशमाजगाम चण्डमहासेनस्य प्रतीहारी । आगत्य च सा प्रणम्य राजानमिदमब्रवीत् नृपते ! राजा चण्डमहासेनो भवन्तं सन्दिष्टवान् यद् वासवदत्ता त्वया स्वयं हृता, तद्युक्तं, एतदर्थमेव मया त्वं तथानीतः, संयताय च तुभ्यमिह स्वयं मया वासवदत्ता न दत्ता, तवावमानशङ्किना, तदिदानीं मद्दुहितुरवैधो विवाहो माभूदिति कश्चित् कालः प्रतीक्ष्यतां, मत्सुतो गोपालको न चिरादत्र यास्यति, विधास्यति च स्वसुरस्या यथाविधाम् उद्वाहम् । इति राज्ञे यथोक्तं सन्दिश्य वासवदत्तायै तत् सर्वं न्यवेदयत् । ततः वत्सेश्वरः सानन्दः सानन्दया वासवदत्तया सार्कं कौशाम्बीगमनोत्सुकः गोपालकस्य आगमनं युवामिह प्रतीक्षेयां पश्चात् तेन सह कौशाम्बीं यास्यथ इति तं प्रतीहारिणं पुलिन्दकञ्च सुहृदं समादिश्य ससैन्यः सामात्यश्च स्वां पुरीं प्रतस्थे ।

द्वित्रैरहोभिश्च स्वाधिकारभूमिमासाद्य एकां निशां रुमण्वतो निकेतने विश्रम्य परेद्युः स्वां राजधानीं विलसत्पताकां समुत्सुकनागरां महोत्सवराजितां सह प्रियया स्वानुचरैश्च सह प्रविवेश । ददृशुश्च पौराः प्रशान्तशोकाः सोत्सुकाः शिखिनो नवाम्बुदमिव विद्युत्वन्तं तं महीपतिं सह वासवदत्तम् । ततश्च राजा तया सह स्वं राजभवनं सेवागतनृपाकीर्णं मागधैरुद्गीतमङ्गलं सुतप्रबुद्धमिव राजमानं प्राविशत् ।

अथ वासवदत्ताया भ्राता गोपालकः अचिरादेव तौ प्रतीहारि पुलिन्दकौ समादाय समागमत्। राजा तमागतं श्यालकं दृष्ट्वा यथोचितं प्रत्युद्गमनादिभिः सत्कृतवान्। वासवदत्तापि हर्षोत्फुल्ललोचना यावत् तं भ्रातरमालोकयितुं प्रवृत्ता तावत् मास्मभूदस्याः त्रपेति विलोचने संरुरोधेव वाष्पवारि। अथ सा तेन पितृसन्देशवचनैः प्रोत्साहिता स्वजनसमागमेन कृतार्थमिवात्मानममन्यत।

अथान्येद्युः गोपालकेन व्यग्रेण तयोर्विवाहमङ्गले प्रस्तुते राजा वत्सेश्वरः शुभे समये रतिवल्लभाः नवोद्भिन्नमिव पल्लवमुज्ज्वलं वासवदत्तायाः पाणिमग्रहीत्। सापि तत्करस्पर्शजनितेन सान्द्रानन्देनामीलितलोचना कम्पस्वेदरोमाञ्चाञ्चितकलेवरा तत्क्षणं मकरकेतनेन सम्मोहनशरनिकरविद्धेव समलक्ष्यत। तदा च गोपालकदत्तैर्यौतुकरत्नैः राज्ञाञ्च उपायनैः स राजा पूर्णकोषः सत्यमेवात्मनः साम्राज्यममन्यत। अथ निर्वृत्तितोद्वाहमङ्गलौ वधूवरौ प्रथमं लोकानां हृदयं ततोऽन्तःपुरं प्राविशताम्। ततः सम्मानयामास नृपतिः समुचितसम्भारेण गोपालकं पुलिन्दकञ्च स्वयम्। अपरेषां राज्ञां पौराणाञ्च सम्माननार्थं यौगन्धरायणं रुमण्वन्तञ्च नियुक्तवान्। यौगन्धरायणस्तु राजनियुक्तः रुमण्वन्तमब्रवीत् सखे! राज्ञा आवां कष्टे नियुक्तौ, लोकचित्तं हि दुर्ग्रहं अरञ्जितः शिशुरपि दोषमुद्घोषयेत् तत्र दृष्टान्तभूतां कथामेकां बालविनष्टकीयां शृणु कथयामि।

आसीत् पुरा रुद्रशर्म्मा नाम कश्चित् ब्राह्मणः। तस्य च द्वे भार्य्ये, तयोरेका पुत्रमेकं प्रसूय सद्य एव लोका-

न्तरमगात् । तत्सुतस्तु तेन विप्रेण अपराया हस्ते समर्पितः । सा हि तस्य क्रमेण विवृद्धस्य किञ्चित् रूक्षं अशनं ददौ । तेन चाहारेण स बालः पृथूदरः धूसराङ्गश्च अभवत् । अथ स रुद्रशर्म्मा मातृहीनोऽयं शिशुः कस्मादुपेक्षित इति तां द्वितीयां पत्नीमभ्यधात् । सापि सेव्यत एवायं स्नेहेन, तथापीदृगसौ जायते किमहं करोमि इति पतिं प्रत्यब्रवीत् । द्विजश्च नूनमयं एवं स्वभाव इति तथ्यं मेने, को हि स्त्रीणामलीकमुग्धे वचसि न विश्वसिति ? ।

बाल एव असौ विनष्ट इति बालविनष्टनामानममुं पिता चक्रे । अथ गच्छता कालेन स बालविनष्टः विमाता मां सर्वदा कदर्थयतीति बुद्ध्वा अस्याः कां प्रतिक्रियां करोमीति चिन्तयामास । एकदा स अतीतपञ्चवर्षमात्रः परं बुद्धिमान् राजकुलादागतं तात ! द्वौ मम तातौ स्त इति अर्द्धस्फुटया गिरा पितरं रहस्यकथयत् । एवं प्रत्यहं स कुतश्चिदागताय पित्रे तथैव आह स्म । पिता तु रुद्रशर्म्मा कथमयं शिशुरेवं वदतीति साभिनिवेशं ध्यायन् तां भार्य्यां व्यभिचारिणीं मत्वा तत् स्पर्शमपि अवर्ज्जयत् । सापि विनापराधं मे पतिः कथं कुपितः, किंस्विदयं बालविनष्टेन किमपि कृतं भवेदिति समचिन्तयत् । अथ सा तं बालविनष्टकं सादरं स्नापयित्वा स्निग्धं सुमिष्टञ्च भोजनं दत्त्वा कृत्वा चोत्सङ्गे पप्रच्छ पुत्र ! तव पिता रुद्रशर्म्मा त्वया किं मयि रोषितः ? तदाकर्ण्य स विमातरमुवाच मातः ! अतोऽधिकमपि कर्त्तास्मि न चेदद्यापि शाम्यसि, त्वं स्वपुत्रपोषिणी कथं सदा मां क्लिश्नासि । तदाकर्ण्य

सा लज्जिता सशपथमवादीत् वत्स ! न पुनरेवं करिष्यामि, तत्पतिं मम प्रसादय। ततः स बालकस्तामब्रवीत् मातः पितुर्ममागतस्य आदर्शं काचित् त्वच्चेटी दर्शयतु, अहं तमादर्शपतितं प्रतिबिम्बं परं वेद्मि, तथेत्युक्ता तया नियुक्ता चेटी आगतस्य रुद्रशर्मणः चरणात् आदर्शमदर्शयत्। तत्र चादर्शे पितुः प्रतिबिम्बं दृष्ट्वा स बालकः द्वितीयोऽयं मे तात इति सस्मितमाह स्म। तदाकर्ण्य च स रुद्रशर्म्मा विगताशङ्कः तां पत्नीं निर्दोषा माकलय्य तदैव तस्यां प्रसन्नोऽभूत्।

सखे ! बालकोऽपि विप्रकृतः एवं दोषमुत्पादयेत्, तदर्थं समग्रो लोकः अस्माभिः तथा सम्यक् अनुरञ्जनीयः यथा कमपि दोषं न उद्घाटयेदिति उक्त्वा योगन्धरायणः रुमण्वता सह तस्मिन् वत्सराजोत्सवे सर्वं जनं तथा राजलोकञ्च तथा सम्मानयन् अरञ्जयत् यथा सर्व एव मदेकशरणावेतौ इति अमन्यत। अथ राजा तौ सचिवौ सवसन्तकौ स्वकरार्पितैर्वस्त्रान्नपानैरङ्गरागाभरणैः ग्रामैश्च अपूजयत्। एवं निर्वृत्तविवाहमङ्गलः सर्वाः प्रजा अनुरञ्जयन् वासवदत्तया समं परमेण प्रेम्णा कालमनैषीत्। गोपालकश्च वत्सराजानुरोधतः पितृसन्देशात् विवाहं कर्तुं आहूतिं शीघ्रमगमत्।

एकदा वत्सेश्वरश्चापल्यादिन्द्रियाणां पूर्वसङ्गतां विरचितां नाम कामपि अन्तःपुरचारिणीं गुप्तं भजमानस्तद्गोत्रस्खलनेन देवीमाजुहाव। तेन देवीं सातिशयकुपितां मानवतीमालक्ष्य तत्पादयोः पतनेन तां प्रसादयामास।

अथ गोपालकः भगिन्या वासवदत्तायाः सकाशं स्वभुजार्जितां बन्धुमतीं नाम कामपि राजपुत्रीं लावण्यजलधेरुद्गतां श्रियमिव रूपिणीं प्राहिणोत् । सा च वासवदत्ता तां मञ्जुलिकेति अपरेण नाम्ना गोपितां राजदर्शनभयात् सुगुप्तां कृत्वा अरक्षीत् । कदाचित् नृपतिः वसन्तकेन विचरन् तां उद्यानलतागृहे दृष्ट्वा नितरामधीरः गान्धर्वेण विधिना सुगुप्तमुपयेमे । तच्च वासवदत्ता निभृतस्थिता दृष्ट्वा भृशं चुकोप आनिनाय च बद्धा वसन्तकम् । राजा तु तस्याः पितृकुलागतां प्रव्राजिकां सखीं साङ्कृत्यायनीं नाम शरणमभिश्रियत् । सा च तां महिषीं वासवदत्तां प्रसाद्य तया कृतानुमत्या तां बन्धुमतीं राज्ञे ददौ पेशलं हि सतीनां मनः । ततः सा देवी बन्धनात् वसन्तकं मुमोच । स तु संहृष्टः देव्याः सकाशमभ्येत्य हसन् अवादीत् देवि ! बन्धुमत्या अपराद्धं मया पुन स्ते किं कृतम् ? अहीन् प्रति क्रुद्धा यूयं डुण्डुभेषु प्रहरथ ।

अथ ब्रह्मन् ! एतदुपमानं मे सम्यगाचक्ष्व, महत्कौतुकमत्र इति देव्या पृष्टः वसन्तकः कथामेका मवर्णयत् ।

देवि ! पुरा रुरुर्नाम कोऽपि महर्षितनयः यदृच्छया परिभ्रमन् अद्भुतदर्शनामेकां विद्याधरात् मेनकायां सुरसुन्दर्यामुत्पन्नां स्थूलकेशेन मुनिना स्वाश्रमे परिवर्द्धितां कन्यामद्राक्षीत् । दृष्टैव सा पृषद्वरा नाम कन्यका तस्य रुरोर्मनोजहार । अथ स गत्वा तत्पालकं स्थूलकेशं ययाचे । स्थूलकेशोऽपि तस्मै तां दातुं प्रतिशुश्राव ।

ततश्चासन्नविवाहे अकस्मात् कश्चिदहिस्तां दष्टवान्। ततो विषण्णहृदयः महर्षिरुरुः अन्तरीक्षात् एतां वाणीमशृणोत् ब्रह्मन्! एतां क्षीणायुषं त्वस्य आयुषः अर्द्धेन जीवय। तदाकर्ण्य स रुरु स्तस्यै निजायुषः अर्द्धमदात्। सद्यएव सा प्रत्युज्जीविता। सोऽपि तां तदानीमेव परिणिनाय। अथ क्रुद्धो रुरु यं यं सर्पं ददर्श तं तमेव मम भार्य्या अनेन दष्टेति रोषात् जघान। अथ जिघांसन्तं तमेको डुण्डुभः मनुष्यवाचा अवादीत् ब्रह्मन्! अहिभ्यः कुपितस्त्वं कथं डुण्डुभान् हंसि? अहिना ते प्रिया दष्टा, अहिर्डुण्डुभश्च विभिन्नः, अहयः सविषा, डुण्डुभास्तु निर्विषा इति। तदाकर्ण्य मुनिरुरुरोऽब्रवीत् सखे! को भवान्? डुण्डुभोऽवदत् ब्रह्मन्! अहं शापभ्रष्टो मुनिः भवत्संवादावधिश्च मे शापः इत्युक्त्वा तस्मिन् अन्तर्हिते रुरु र्भूयस्तान् डुण्डुभान् न जघान। तदेतदुपमानाय तव कथितं देवि! डुण्डुभेषु प्रहरथ यूयमहीन् प्रतिक्रुद्धा इति। एवमुक्त्वा वचनं सस्मितं वसन्तके विरते वासवदत्ता पत्युःपार्श्वस्थिता तं प्रति भृशं तुतोष। वत्सराजः उदयनः देव्याश्चरणगतः कुपितायाः सुमधुराणि विविधवसन्तक कौशलानि कोपोपशमनानि समाचरन् विजह्रार। सुखिनस्तस्य राज्ञः सदा रसना मदिरारसैकसक्ता, श्रुतिः कलवीणारवरागिणी दृष्टिश्च प्रियामुखनिश्चला बभूव।

इति चतुर्दशस्तरङ्गः।

समाप्तोऽयं कथामुखं नाम द्वितीयो लम्बकः :

# अथ तृतीयो लम्बकः ।



## पञ्चदशस्तरङ्गः ।

एवं स वत्सेश्वरः क्रमेण वासवदत्तामुखासक्तमनाः अहर्निशं कैवलमानन्दमनुभवन् विजहार। यौगन्धरायणो महामन्त्री सेनापतिः रुमण्वांश्चास्य दिवानिशं राज्यभारमूहतुः। एकदा स यौगन्धरायणश्चिन्तावान् रजन्यां रुमण्वन्तं सेनानाथं गृहमानीय निभृतं निजगाद सखे! वत्सराजोऽयं पाण्डववंशसम्भवः, अस्य च कुलक्रमागता मेदिनी समग्रा, पुरञ्च हस्तिनेति प्रसिद्धम्। तत् सर्वमनेन जिगीषाविरहितेन त्यक्तं, केवलमेकत्र प्रदेशेऽत्र अस्य राज्यं सञ्जातम्। एषच केवलं व्यसनासक्तश्चिरं तिष्ठति, परमनेन अस्मासु सर्वा एव राज्यचिन्ता समर्पिता, तदस्माभिरतन्द्रितैस्तथा कार्यं यथैष समग्रमेव कुलक्रमागतं पृथिवीराज्यं प्राप्नोति। एवं कृते अस्माभिः प्रभुभक्तिः सम्यक् प्रतिपालिता भवेत्। सर्वञ्च प्रज्ञया साधयितुं शक्यते किं हि बुद्धिमद्भिः प्रयुक्तं नोपैति शोभां तथा चेमां कथां शृणु कथयामि।

पुरासीत् महासेनो नाम कश्चित् नृपः। स च अन्येन केनचित् बलवत्तरेण राज्ञा अभियुक्तः स्वकार्य्यभ्रंशरक्षिभिरमात्यैः तस्मै द्विषे अर्थदण्डं दापितः। स च बलवान् नृपः तेनैव सन्तुष्टः स्वपुरमगात्। महासेनस्तु

मानी दत्तार्थदण्डः भृशमतप्यत। कथं मया शत्रोः प्रणतिः कृतेति चिन्तयतः तस्य शोकेन गुल्मरोगः समपद्यत। तदाक्रान्तश्च स राजा क्रमेण मुमूर्षुरभवत्। अथैकः राजभिषक् तं औषधासाध्यं मत्वा मतिमान् कौशलेन चिकित्सुः मृता ते देवीति मिथ्यावचनं तं नृप मवादीत्। तदाकर्ण्य सहसा भूमौ पततः तस्य बलीयसा शोकावेगेन गुल्मः स्वयमस्फुटत्। अथ रोगोत्तीर्णः स राजा तया देव्या सह ईप्सितान् भोगान् बुभुजे जिगाय च पुनः सर्वान् रिपून्।

तद् यथासौ भिषक् प्रज्ञया राजहितं चकार, तथा वयमपि राजहितार्थिनः यथास्य समग्रा मेदिनी वशवर्त्तिनी भवेत् तथा यतामहे। एकः प्रद्योतो नाम मगधेश्वर स्तत्र परिपन्थी विद्यते, स खलु पार्ष्णिग्राहः पश्चात् अस्मासु कुपितो भवेत्। तस्य तु पद्मावती नाम कन्यकारत्नमस्ति, वत्सराजस्य कृते वयं तं तां याचामहे। वासवदत्ताञ्च निभृतं स्वप्रज्ञया कुत्रचित् सुगुप्तां संस्थाप्य वासगृहे अग्निं दत्त्वा देवी दग्धेति सर्वतः उद्घोषयामः। नान्यथा मगधाधिपः तां सुतां राज्ञे दास्यति। एतदर्थञ्च स मया पूर्वं याचितः प्रत्युक्तवान् नाहं वत्सेश्वराय प्राणाधिकामिमां सुतां दास्यामि, तस्य हि वासवदत्तायां महान् स्नेहो विद्यते। सत्याञ्च देव्यां वासवदत्तायां वत्सेशो नान्यां परिणेष्यति। तस्मात् देवी दग्धेति ख्यातौ समुत्पन्नायां सर्वमेतत् सेत्स्यति। लब्धायाञ्च पद्मावत्यां स राजश्वशुरो मगधेश्वरः पश्चात् कोपं न करिष्यति

प्रत्युत सहायतां गमिष्यति। ततः पूर्वां दिशं ततश्च अन्या दिशः क्रमात् जेतुं गमिष्यामः। इत्थं सर्व्वामेव धरां वत्सेश्वरस्य साधयितुं यतिष्यामहे। अस्मासु च कृतोद्योगेषु एषः समग्रां महीं प्राप्नुयादिति पूर्वं दिश्या वागुदचरत्।

श्रुत्वैतदग्निमुख्यस्य वचनं रुमण्वान् सहासमागम्य तमभाषत, यदेतदुक्तं भवता तत्सर्वं युज्यते परं पद्मावतीकृते क्रियमाणं कपटं कदाचन अस्माकं दोषाय स्यात् तदत्र मया वक्ष्यमाणां कथामेकां शृणु।

अस्ति जाह्नवीतटे माकन्दिका नाम काचित् नगरी। आसीत् तस्यां पुरा मौनव्रती कश्चित् परिव्राजकः। स चानेकपरिव्राट्परिवृतः भिक्षाजीवी देवकुलान्तर्वर्त्तिनि क्वचित् मठे वास मकरोत् कदाचित् भिक्षार्थमटन् कस्यचिद् वणिजः सदने भिक्षां आदातुं निर्गतां शुभाङ्गीं कन्यकां एकां ददर्श। दृष्ट्वैव कामशरसंविद्धः स शठः हा हा कष्ट मिति तस्यैव वणिजः शृण्वतः समब्रवीत्। गृहीतभिक्षञ्च तस्मात् निर्गच्छन्तं तं असौ वणिक् सविस्मयः पृष्ठतो गत्वा तमपृच्छत् भिक्षो! त्वं मौनं विहाय किमद्य सहसा एवमुक्तवान्? तदाकर्ण्य परिव्राडब्रवीत् भद्र! दुर्लक्षणेयं कन्या, यदास्या विवाहो भवेत् तदा ससुतदारस्य गृहस्वामिनः अस्याः पितुः क्षयो भवेदिति दुःखेन मे तादृशी वाक् सहसा निरगच्छत्।
त्वञ्चातीव मे भक्तः तस्मात् मौनमपि विहाय त्वत्कृते एवमुक्तवानस्मि। तदेषा कन्यका नक्तं मञ्जूषायां उपरिन्यस्तदीपायां निवेश्य गङ्गायां क्षिप्यतामिति। सोऽपि वणिक्

तथेति प्रतिपद्य गृहं गत्वा भयात् नक्तं तथैव सर्वं चक्रे। परिव्राजकोऽपि तत्कालं स्वाननुचरानुवाच भद्राः! गङ्गां गच्छत, तदन्तरुह्यमानां यां दृश्यथ पृष्ठन्यस्तदीपां मञ्जूषां, तां सुगुप्तं इह आनेष्यथ, सा च नोद्घाटनीया ध्वनौ श्रुतेऽपि। तथेति ते च गङ्गां जग्मुः। राजपुत्रः कश्चिदत्रान्तरे वणिजा क्षिप्तां मञ्जूषां दीपालोकाद् वीक्ष्य भृत्यैरानाय्य सहसा तां कौतुकादुद्घाटयत्। अपश्यच्च तत्रान्तःस्थां हृदयोन्मादकारिणीं कामपि कन्याम्। उपायच्छत च तां तत्क्षणं गान्धर्वविधिना। तां च मञ्जूषां पृष्ठन्यस्तदीपिकां कृत्वा तदन्तर्वानरमेकं घोरं निवेश्य गङ्गायां तत्याज च। तस्मिंश्च समासादितकन्यारत्ने नृपसुते गते परिव्राजकशिष्यास्तामन्विच्छन्तः तत्रायुः। ददृशुश्च तां मञ्जूषाम्। निन्युश्च तां गृहीत्वा गुरोरन्तिकम्। अथ स परिव्राट् संहृष्टस्तान् जगाद अहमेकः एतामादाय एतदुपरि मन्त्रं साधये, युष्माभिः तूष्णीमिमां निशां शयितव्यम्। इत्युक्त्वा स मञ्जूषां मठोपरि आरोप्य तस्यामेव कन्यायामभिलाषुकस्तामुद्घाटयत्। उद्घाटितायाश्च तस्यां स भीषणाकृतिर्वानरः निर्गत्य तत्कृते मूर्तिमान् दुर्णय इव तमभ्यधावत्। चिच्छेद च तस्य नासां कर्णौ च तत्क्षणं दशनैर्नखैश्च। अथ तथाभूतं तं परिव्राजकं दृष्ट्वा ते शिष्या यत्नाभिततहासाः अधोमुखाः क्षणमतिष्ठन्। प्रातश्च तत्सर्वं वृत्तान्तं ज्ञात्वा सकलो जनो जहास, स वणिक् सा च तत्सुता प्राप्तसत्पतिः ननन्द च।

एवं यथा स परिव्राट् हास्यत्वं गतः तथा वयमपि

व्याजप्रयोगस्य असिद्धौ कदाचित् हास्यत्वं गच्छेम । राज्ञः वासवदत्तया विरहः बहुदोष इव सम्भाव्यते । इत्थं रुमण्वतोक्तः यौगन्धरायणः प्राह सखे ! नान्यथा उद्योगसिद्धिर्भवेत्, अनुद्योगे च राज्ञि व्यसनासक्ते सर्वं अभीप्सितं नश्येत् । अस्माकं मन्त्रिताख्यातिर्लब्धापि स्वामिनः समुन्नतिं विना व्यभिचारिणी भवेत् । स्वायत्तसिद्धे तु नृपे सचिवाः तस्य प्रजोपकरणमात्रा एव, कार्ये सिद्धे असिद्धे वा न तेषां गुणो दोषो वा भवेत् । सचिवायत्तसिद्धे तु तेषां प्रज्ञायां शोधनं ते तु निरुत्साहाश्चेत् श्रियाः जलाञ्जलिर्दत्तः स्यात् । देवी पितुश्चण्डमहासेनाच्च न शङ्कितव्यं स समुत्रः देवी च मे वचनं शृणोति । इत्युक्तवन्तं धीरप्रवरं यौगन्धरायणं रुमण्वान् प्रमादाशङ्कया पुनरब्रवीत् सखे ! अभिमतरमणीवियोगव्यथया सुधीरोऽपि विचाल्यते, किं पुनर्वत्सराजोऽयं नितरां स्त्रीपरायणः, अत्रैतां कथां शृणु ।

पुराभूत् देवसेनाख्यः कश्चित् महामतिर्नरपतिः श्रावस्ती नाम नगरी तस्य राजधान्यासीत् । तस्याञ्च नगर्य्यां कश्चित् महाधनो वणिक् प्रतिवसति स्म । तस्यैका निरुपमा कन्या समजनि । यतश्च तस्याः रूपं दृष्ट्वा सर्वो जनः उन्माद्यति तस्मात् सा उन्मादिनीति ख्यातिमगमत् । तदियं राज्ञे अनावेद्य न कस्मैचित् देया, अन्यथा राजा क्रुध्येदिति विविच्य तत्पिता राजानं गत्वा न्यवेदयत् देव ! अस्ति मे कन्यारत्नं यदि रोचते गृह्यताम् । तदाकर्ण्य राजा सुविश्वस्तान् द्विजान् अवादीत् गच्छन्तु भवन्तः, सा सुलक्षणा वा दुर्लक्षणा

परीक्ष्यतामिति तथेति ते द्विजा राजानमुक्त्वा वणिगालयं गत्वा ताञ्च वणिक्सुतां निरीक्ष्य उन्मादिनीं सद्य एव सञ्जातमन्मथविकाराः क्षोभं ययुः। प्रकृतिस्थास्तु मन्त्रयामासुः यदि राजा इमां परिणयेत् तदा एतदेकमनाः सर्वाणि राजकार्याणि त्यजेत्, तर्हि महाननर्थः संजायते, तत् किमनया, इति अवधार्य्य कुलक्षणेयमिति राज्ञे न्यवेदयन्। ततो राज्ञा त्यक्तां तां वणिक् तत्सेनापतये उन्मादिनीं प्रादात्।

कदाचित् भर्त्तृवेश्मनि हर्म्यस्था सा राजानं तेन पथा गच्छन्तं आलोक्य आत्मानमदर्शयत्। राज्ञः तु दृष्टैव तां उन्मादिनीं कामप्रयुक्तां जगत्संमोहनौषधिमिव सञ्जातोन्माद इव अभूत्। गत्वा च कथमपि स्वं भवनं ज्ञात्वा च तां पूर्वावधीरितां स्वयमुन्मनाः स्मरजनितां महतीं व्यथामवाप। अथ तत्स्वामिना सेनापतिना निवेदितं प्रभो! सा दासी, न परस्त्री, गृह्यतां, अथवा अहं त्वां देवगृहे त्यजामि, महाराजः प्रतिगृह्णातु इति स एवं सेनापतिना अभ्यर्थ्यमानोऽपि राजा तमब्रवीत् नाहं परदारान् स्पृशामि, यदि त्वं तां त्यक्ष्यसि, तदा ते धर्म्मो लङ्घ्यति, दण्ड्यश्च भविष्यसि इति। तदाकर्ण्य मन्त्रिणः अन्ये च तूष्णीमासन् स च राजा क्रमेण कामज्वरेणाक्रान्त एव पञ्चत्वमगात्।

एवं स राजा धीरोऽपि उन्मादिनीं विना विनष्टः, वत्सराजस्तु विना वासवदत्तां कथं भवेत्? एतत् रुमण्वद्वाक्यं श्रुत्वा यौगन्धरायणः पुनरब्रवीत् सखे! कार्य्य-

हर्षिभिः राजभिः क्लेशः सह्यते, यथा रावणवधाय युक्तिं कृत्वा देवैर्नियोजितो रामः सीतावियोगं किं न सेहे ? एतदाकर्ण्य रुमण्वान् भूयोऽभाषत महामते ! ते हि रामादयो देवाः तेषां मनः सर्वं सहते, मनुष्याणान्तु न तथा । तथा च अपरामेकां कथां कथयामि श्रूयताम् ।

अस्ति महारत्नाख्या मथुरानाम्नी पुरी । तस्या-मभूदेको वणिक्सुतः इल्लको नाम । तस्यैका प्रिया तदेकासक्तचित्ता भार्य्या आसीत् । स तया सह वसन् कार्य्यगौरवात् एकदा देशान्तरं गन्तु मैच्छत् । भार्य्या च तत्सङ्गिनी भवितु मभिललाष, सतीनां हि पतिविरहोऽतीव असह्यः । सतु वणिक्पुत्रः शुभेऽहनि यात्राम-करोत् तान्त सहगन्तुमुद्यतां नैवाग्रहीत् । सा तु प्रस्थितं पति मवलोकयन्ती साश्रुलोचना प्राङ्गणद्वार कवाटान्तर-वर्त्तिनी अतिष्ठत् । गते च तस्मिन् दृष्टिपथात् तद्वियो-गासहायास्तस्याः सद्य एव प्राणा निर्ययुः । तच्च ज्ञात्वा वणिक्पुत्रः प्रत्यावृत्य विह्वलः सन् तत्चणं कान्तां ता-मुत्क्रान्तजीवितां सुन्दरापाण्डुरच्छायां विलोलालकमू-र्द्धजां भुवि पतितां चान्द्रमसीं लक्ष्मीमिव ददर्श । दृष्ट्वैव तामङ्कं नयतः क्रन्दतश्च तस्य शोकाग्निज्वलितात् देहात् भीता इव असवस्तत्चणं व्यगमन् ।

एवं परस्परवियोगात् तौ दम्पती यथा विनाशमापतुः तथा अनयोः राजदम्पत्यो रकल्याणं माऽभूत् । इत्युक्त्वा तस्मिन् रुमण्वति सशङ्के विरते धैर्य्यसागरः धीमान् यौग-न्धरायणः पुनरब्रवीत् मया सर्वमेतत् निश्चितं कार्य्यमिति

५ महीभुजामीदृशान्येव भवन्ति तदत्र कथामेतां शृणु ।

पुरासीत् उज्जयिन्यां पुष्पसेनो नाम नृपः । कदाचित् प्रबलः कश्चित् नरपति स्तं अभियुक्तवान् । अथ मन्त्रिणः सुधीरा स्तमरिं दुर्जयं वीक्ष्य राजा मृत इति मिथ्याप्रवादं घोषयामासुः । स्थापयामासुश्च प्रच्छन्नं तं नृपं पुष्पसेनम् । देहुश्च अन्यं कञ्चित् शवं राजार्हविधानेन । अथ, अराजकानामस्माकं त्वमेव राजा भव इति तमरिं दूतमुखेन अभ्यर्थयामासुः । ततश्च तथेत्युक्तवतस्तस्य रिपोस्तुष्टस्य सतः सर्वाणि कटकानि क्रमात् ते सैन्यसहिताः मिलित्वा विभिदुः । भिन्ने च सैन्यचये तं नृपं पुष्पसेनं प्रकाश्य सम्प्राप्तबलाः शत्रुं तं निजघ्नुः ।

ईदृशानि राजकार्य्याणि नीत्या प्रयोज्यानि, तदयं देवीदाहप्रवादेन कार्य्यमिदं धैर्य्येण साधयामः । इत्याकर्ण्य निश्चितमतेः यौगन्धरायणात् रुमण्वानवदत् यद्येष निश्चयः, तदा देव्या भ्रातरं गोपालकमानीय समादरश्च तेन सम्मन्त्र्य सम्यक् कार्य्यमारभ्यताम् । यौगन्धरायणश्च तथेति प्रत्यपद्यत । रुमण्वांश्च तत्प्रत्ययात् सर्वञ्च कर्तव्यनिश्चयं चक्रे । अथापरेद्युस्तौ मन्त्रिप्रवरौ केनचित् व्यपदेशेन गोपालकं आनेतुं दूतं व्यसर्जयताम् । स च गोपालक स्तद्दूतवचनात् सत्वरमेव उत्सव इव मूर्त्तिमान् समायात् । आगतञ्च तं रुमण्वता सहितं यौगन्धरायण स्तस्यामेव निशि निर्जनं गृहं निनाय कथयामास च

च सर्वं तत् चिकीर्षितं मन्त्रितम्। स च राजहितैषी स्वसुदुःखावहमपि तत् सर्वं अनुमेने कार्य्यैकप्रवणं हि मनीषिणां चेतः। अथ रुमखता, सर्वमेतत् सुविहितं परं देवीं दग्धामवेत्य प्राणान् त्यजन् वत्सेशः कथं रक्ष्य, इति विन्स्यतां, सत्यपि उपायानां सञ्चये विनिपातप्रतिक्रियैव मुख्यमङ्गं मन्त्रस्येति पुनरुक्ते समालोचिताशेषकार्य्यो यौगन्धरायणः समब्रवीत् नास्त्यत्र चिन्ता, राजपुत्री वासवदत्ता गोपालकस्य कनीयसी स्वसा प्राणेभ्योऽप्यधिकप्रिया, एतस्य शोकमल्पमालक्ष्य वत्सेश्वरः कदाचित् जीवेत् देवीति मत्वा धैर्य्यमवाप्स्यति। किञ्चायमुत्तमसत्त्वः, शीघ्रञ्चानेन पद्मावती परिणीयते, ततश्च अचिरादेव देवी द्रक्ष्यते इति।

इत्येवमवधार्य्य यौगन्धरायणः रुमखान् गोपालकश्च त्रय एते पुनर्मन्त्राय उपाविशन्। युक्त्या वयं देव्या नृपेण च सह लावाणकं गच्छामः। स हि मगधासन्नवर्त्ती अस्माकं देशपर्य्यन्तः सुलभाखेटत्वाच्च राज्ञः प्रियः सदा च तदासक्ततया वहिः स्थातव्यमनेन। तत्रान्तःपुरमादीप्य युक्त्या पद्मावतीगेहे देवी स्थाप्यते, प्रच्छन्नं स्थितायाश्चास्याः सा एव शीलसाक्षिणी भवेत्। इत्थं निशि परस्परं सम्मन्त्र्य ते अपरेद्युः प्रातरेव राजमन्दिरं प्राविशन्। प्रविश्य च तत्र रुमण्वान् महीपतिं व्यजिज्ञपत् देव ! लावाणके देशे अस्माकं गन्तव्यं दीर्घकालञ्च तत्र स्थातव्यं स चातिरम्यो विषयः मृगयाभूमयश्च तत्र बहवः सन्ति, अश्वघासश्च सुलभः, परन्तु नैकट्यात् मगधेश्वरस्तमसद्-

धिष्ठितं देशं बाधते, तद्रक्षणाय विनोदाय च तत्र श्रीमद्भिर्गम्यताम्। एतदाकर्ण्य वत्सराजः क्रीडापरायणः समं वासवदत्तया तत्र लावाणके गन्तुं मतिमकरोत्। निश्चिते च गमने निर्द्धारिते च शुभे लग्ने अकस्मात् नारदमुनिः कान्त्या आदीपयन् तं प्रदेशं राजसकाशमाजगाम। आगत्य च गृहीतातिथ्यसत्कारः प्रीतः पारिजातकुसुमस्रजं तस्मै प्रणताय भूभुजे प्रददौ, कृतादरश्चाभिननन्द तां वासवदत्तां विद्याधराधिपं कामदेवांशं पुत्रमवाप्स्यसीति। उवाच च शृण्वति यौगन्धरायणे, राजन्! तव वासवदत्तां दृष्ट्वा स्मृतं मया, पुरा युधिष्ठिराद्यः तव प्रपितामहाः पञ्च अभूवन्। तेषाञ्च पञ्चानामेव एका द्रौपदीति नाम्ना प्रेयसी आसीत्। ताञ्च वासवदत्तामिव रूपेणाप्रतिमां दृष्ट्वा दोषमाशङ्क्य तानहमभ्यधां स्त्रीवैरं न रक्षणीयं वः, एतदेव बीजं महापदां, तथाह्येतां कथां कथयामि श्रूयताम्।

पुरा सुन्दोपसुन्दनामानौ द्वौ भ्रातरौ बभूवतुः। तौ विक्रमेण त्रिलोकजयिनौ संवृत्तौ। विधाता तयोर्विनाशार्थं विश्वकर्माणमाहूय तिलोत्तमां नाम दिव्यनारीं निर्मापयामास। यस्या रूपमालोकयितुं ब्रह्मा हरश्च चतुर्दिक्षु प्रदक्षिणं कुर्वत्याः चतुराननः सम्बभूव। एकदा सा विधातुर्निदेशात् कैलासोद्यानवर्तिनोस्तयोः सुन्दोपसुन्दयोः प्रलोभनाय समीपमागमत्। तौ चासुरौ तामन्तिकागतां दृष्ट्वा काममोहितौ उभावेव तां बाहुभ्यामगृह्णीताम्। अथ द्वावेव इयं मम प्रिया इयं मम प्रियेति विवदमानौ तुमुलं सम्प्रहारं चक्रतुः मम्रतुश्च परस्परं भ्रा-

माहतो। तदेवं नारीरूपविषयः कस्य निदानं मापदाम्? युष्माकं पञ्चानामेव एका द्रौपदी वल्लभा, एतन्निमित्तश्च विद्वेषः परस्परं यथा न भवेत् तथा क्रियताम्। मम वचनादेव नियमोऽस्तु यद्येयं ज्येष्ठान्तिकगता भवेत् तदा कनीयसा मातेयं मन्तव्या, कनिष्ठान्तिकस्था तु ज्येष्ठेन स्नुषा मन्तव्या। हे राजन्! तव ते प्रपितामहा ममैतत् वचनं सर्व एव तथेति प्रत्यपद्यन्त। ते च मम सुहृद आसन्, तत्प्रीत्याचाहमिहागतः। हे वत्सेश! तदेतत् यद्ब्रवीमि तदाकर्णय, यथा तैर्मम वाक्यं कृतं तथा त्वं मन्त्रिणां वाक्यं कुर्य्याः, तर्हि अचिरेणैव महतीं ऋद्धिमवाप्स्यसि. कञ्चित् कालञ्च ते दुःखं भविता, न च तत्र त्वया अतिमोहः कर्त्तव्यः, सुखान्तं हि तद् भविता।. एवमभिधाय तत्क्षणं देवर्षौ तिरोहिते ते च यौगन्धरायणादयः मुनिवचन प्रत्ययात् सिद्धिं निश्चित्य स्वकार्य्यार्थं प्रयत्नपराः सुध्यमभवन्।

इति पञ्चदशस्तरङ्गः।

---

## अथ षोड़शस्तरङ्गः।

ततस्ते यौगन्धरायणादयो मन्त्रिणः युक्त्या तं वत्सेश्वरं सवासवदत्तं लावाणकं देशमनयन्। स राजा सैन्यकोलाहलेन दिशो व्याप्नुवन् तं देशं प्राप। तत्र उप-

स्थितश्च तं विदित्वा मगधेश्वरः सम्बन्धकाम्यो ।' विससर्ज च महामति यौगन्धरायणान्तिकं दूतम्। सोऽपि मन्त्रिमुख्यः समागतं दूतं अभ्यनन्दत्। वत्सेश्वरस्तु तस्मिन् देशे निवसन् प्रतिदिनं मृगया व्यसनी अटव्या अटवीं दवीयसीमपि पर्य्यटतिस्म।

एकदा राजनि आखेटं गते सर्वे मन्त्रिणः गोपालकसहिताः संविदं कृत्वा विजने वासवदत्तामकाण्डमगमन्। अभ्यर्थयंश्च तां पूर्वं भ्रात्रा प्रबोधितां तत्तद् युक्तिभिः राजकार्य्यसाहाय्यार्थम्। सा च विरहक्लेशदमपि, तत् कथञ्चिदनुमेने किं हि नाम स्वामिकार्य्यैरक्ता न सहन्ते कुलनार्य्यः। ततो यौगन्धरायणः तस्यै रूपविवर्त्तनं योगं दत्त्वा सद्यएव ब्राह्मणीरूपां तां देवीं कृतवान् वसन्तकञ्च काणं वटुरूपम्। स्वयञ्च स्थविरब्राह्मणवेशः अभूत्। अथ स महामतिः तथारूपेण वसन्तकेन सार्द्धं तथारूपां देवीं गृहीत्वा मगधान् प्रति प्रतस्थे। वासवदत्ता तु तदा गृहात् निर्यती चित्तेन भर्त्तारं देहेन च पन्थानमगच्छत्। अथ रुमण्वान् तन्मन्दिरं अग्निना आदीप्य उच्चैर्हाहाकाररवं कृत्वा वसन्तकयुता देवी दग्धेति किल घोषितम्। तदा च तत्र दहनं आक्रन्दश्च समुदतिष्ठतां परं दहनः क्रमेण शशाम न पुनराक्रन्दः। यौगन्धरायणश्च तया वासवदत्तया वसन्तकेन च सह मगधेश्वरनगरीं प्राप। उपायज्ञो च तत्र पद्मावतीं राजसुतामुद्यानस्थिताम्। पद्मावत्याश्च तां ब्राह्मणीरूपां वासवदत्तां दृष्टवत्याः नितरां नेत्रानन्दः समजायत। सा राजकन्या

रक्षिणो निवार्य ब्राह्मणाकृतिं यौगन्धरायणमन्तिकमानाययत् । अपृच्छच्च ब्रह्मन्! का तवेयं बाला? किमर्थमागतो वा? अथ सोऽब्रवीत् राजपुत्रि! इयमावन्तिका नाम मम सुता, अस्याश्च भर्त्ता व्यसनी इमां त्यक्त्वा कुत्रचित् गतः, तदेनां तव हस्ते स्थापयामि यावदहमस्याः पतिमन्विष्य आनयामि, भ्राता चास्याः काणः इहैव अस्याः समीपे तिष्ठतु येनेयं एकाकिनी दुःखं न प्राप्नोतीति ।

इत्युक्त्वा अङ्गीकृतवचसं तामामन्त्र्य असौ मन्त्रिवरः शीघ्रमेव लावाणकं प्रत्याजगाम । पद्मावती च कृतसत्कारा सादरा सस्नेहा च तां आवन्तिका नामधेयां वासवदत्तां काणवटुरूपञ्च वसन्तकमादाय सकौतुकं राजभवनं विवेश। वासवदत्ता तु तत्र स्थिता चित्रभित्तिषु रामस्य चित्रपटे सीतां पश्यन्ती भर्त्तृविरहमसहत । पद्मावती च आकृत्या सौकुमार्य्येण शयनासनादिक्रियया शरीरसौरभेण नीलोत्पलसुगन्धेन, तां वरान्गनां निश्चित्य आत्मनिर्विशेषैरुपचारैः यथाकामं पर्य्यचरत् । अचिन्तयच्च कापि एषा छन्नवेशा नून, विराटभवनस्था द्रौपदीव मे प्रतिभाति एकदा वासवदत्ता वत्सेश्वरशिक्षितां अम्लानमालां तिलकञ्च अस्याः पद्मावत्याश्चकार। अथ राजमहिषी तां पद्मावतीं तादृशमालातिलकाभ्यामलङ्कृतां दृष्ट्वा रहसि पप्रच्छत् पुत्रि! केन तव इमौ मालातिलकौ प्रदत्तौ? पद्मावती उवाच मातः! काचित् आवन्तिका नाम ब्राह्मणी मद्गेहे स्थिता सैव मम एतौ निर्मितवती। तदाकर्ण्य तयोक्तं वत्से! तर्हि सा मानुषी न, कापि देवी, मानुष्या इदृशं विज्ञानं न

सञ्चरति, देवता मुनयश्च वञ्चनार्थं सतां गेहे एवं तिष्ठन्ति अत्र चैतां कथां कथयामि श्रूयताम्।

पुरा कुन्तिभोजः नाम नृपोऽभूत्। एकदा दुर्वासा मुनिस्तन्निकेतनमगात् स राजा तस्य परिचर्य्यार्थं कुन्तिं नाम सुतां न्ययोजयत्। सापि यत्नेन तं परिचचार। एकदा मुनिस्तां जिज्ञासुः अभाषत कन्ये! परमान्नं पच, शीघ्रमहं स्नात्वा आगच्छामि। इत्युक्त्वा मुनिस्त्वरितं स्नात्वा आगत्य भोक्तुमुपातिष्ठत। कुन्ती च तस्मै तदन्नपूर्णां पात्रीं न्यवेदयत् अतितप्तेन अन्नेन ज्वलन्तीमिव तां मत्वा स मुनिः कुन्त्याः पृष्ठे हस्तग्रहायोग्यां दृशं ददौ। सापि अवगताभिप्राया पृष्ठेन तां पात्रीं दधार। मुनिस्तु ततः स्वेच्छं बुभुजे, कुन्त्याश्च पृष्ठमदह्यत। दह्यमानापि निर्विकारा यदतिष्ठत् तेन तुष्टो मुनिर्भुक्त्वा तस्यै वरमदात्। तदेवमेषा आवन्तिकामपि कापि देवी तव गृहे स्थिता भवति तदेनां यत्नेन आराधय। इति मात्राभिहिता पद्मावती अन्यरूपिणीं तां वासवदत्तां बहु अमन्यत। वासवदत्ता च भर्तृविनाकृता विच्छाया निशीथस्था पद्मिनीव अतिष्ठत्। केवलं वसन्तकमुखविकारा एव तस्या वियोगिन्याः स्मितावसरं विदधुः।

अत्रान्तरे वत्सराजश्चिरमतिदूरेषु आखेटभूमिषु विचरन् सार्धं लावाणकमियाय। आगत्य च अन्तःपुरमग्निना दग्धमपश्यत् अशृणोच्च मन्त्रिभ्यः सवसन्तकां देवीं दग्धाम्। श्रुत्वैव मुमोह पपात च भूमौ विगतचेतनः। पश्चाच्च लब्धसंज्ञः विलपन् दुःखार्त्तः देव्यासह तनित्यचयश्चाधिका-

यत् नारदेनोक्तं विद्याधराधिपं पुत्रं जनयिष्यति देवी, तत्र नैव मृषा, पुनरतश्च तेन यत्किञ्चित् तव दुःखं भविष्यति, गोपालकस्य च शोकः स्वल्प एव दृश्यते यौगन्धरायणादयश्च नातिदुःखिता इव लक्ष्यन्ते । तस्मात् मन्ये सा देवी कथमपि जीवति मन्त्रिभिरेव काचित् नीतिः प्रयुक्ता भवेत्, अतः सम्भविष्यति मम पुनर्देवीसमागमः, इत्यालोच्य स भूपतिर्मन्त्रिभिः प्रबोध्यमानश्च कथमपि धैर्य्यमाप । गोपालकश्च यथायथं सन्दिश्य तत्क्षणं मगधराजाय अलक्षितं चारान् प्रजिघाय । इत्थम्भूते च व्यतिकरे तदा लावाणकवासिभिर्दूतैर्मगधराजाय तत्सर्वमावेदितम् । स तु कालज्ञः विदितवृत्तान्तः पूर्वं यौगन्धरायणाभ्यर्थितां स्वां सुतां पद्मावतीं वत्सराजाय दातुमैच्छत् अथ स दूतमुखेन वत्सेश्वराय यौगन्धरायणाय च तमर्थं सन्दिदेश । वत्सराजस्तु यौगन्धरायणयुक्त्या तमर्थमङ्गीचकार । यौगन्धरायणश्च लग्नं शुभमवधार्य्य मगधराजाय प्रतिदूतं व्यसर्जयत् । सन्दिदेशच भवदभिलाषः स्वीकृतोऽस्माभिः, इतः सप्तमेऽहनि वत्सेशोऽत्र गमिष्यति, तथा सति वासवदत्तां विस्मरिष्यतीति । प्रतिदूतश्च गत्वा सर्वमेतत् मगधराजाय यथादिष्टमभ्यधात् मगधपतिश्च तत् सर्वं प्रतिदूतवचः समभिनन्द्य दुहितुरीहाभिलाषानुरूपं विवाहसंस्कारसम्भारं कर्तुमारेभे । पद्मावती च अभीष्टवरश्रवणेन मुदमतितरामाययौ, वासवदत्ता तु तद्वार्त्ताकर्णनात् शोकम् । सा वार्त्ता कर्णमागत्य तस्या वैवर्ण्यमादधाना प्रच्छन्नवासवैरूप्यसाहाय्यकमिवाकरोत् इत्थं मिश्रीकृतः प्रचुरं मगध-

पतिः, न च भर्त्ता तवान्यथा कदापि सम्भवति इति वस-न्तकवाक् भस्याः सखीव धृतिं व्यधात्।

अथ विवाहविधौ समासन्ने सा मनस्विनी पुनः पद्मावत्या म्लानमालातिलकौ प्रादात्। ततो वत्से-श्वरः सप्तमे दिने मन्त्रिभिः सार्द्धं ससैन्यः परिणेतुं तत्रायया मगधेश्वरश्च सानन्दः प्रजानेत्रानन्दं उद्यन्तं चन्द्रमिव सागरः तं सद्यइव प्रत्युद्ययौ। वत्सेश्वरश्च मगधपतिपुरं समन्तात् पौराणां मानसमिव महोत्सवः प्रविवेश। तत्रस्था नार्य्यस्तं विरहक्षामवपुषं, मनः-क्षोभप्रदं रतिहीनमिव स्मरं ददृशुः। वत्सराजस्तु मगधे-श्वरगृहं प्रविश्य, तत्र पतिव्रताभिः परिवृतं कौतुका-गारमगात् अद्राक्षीच्च तत्रान्तःकृतकौतुकमङ्गलां सित-पूर्णेन्दुमुखीं पद्मावतीम्। तस्याश्च माल्यातिलकौ दिव्यौ निजौ समालोक्य कुतोऽस्या एताविति विममर्श। ततः विवाहवेदिं गत्वा यदस्याः करमग्रहीत् तदेवास्य पृथिवी-करग्रहे आरम्भतां प्रापत्। प्रियवासवदत्तोऽयं नेक्षितु-मिदं शक्नोतीतीव वेदिधूमोऽस्य दृशौ पिदधे। तदा च अग्निं प्रदक्षिणीकृतवत्याः पद्मावत्या मुखमाताम्रं विदित पत्यभिप्रायतया कोपाकुलमिव बभौ। कृतविवाहश्च वत्सेश्वरः तां पद्मावतीं करात् मुमोच नतु वासवदत्तां तां हृदयात् क्षणमपि। ततो मगधेश्वरस्तस्मै तथा रत्नौघं यौतुकमदात् यथा तत्पश्चं निर्द्धनरत्नरिक्तेव वसुधा लोकैर्बुबुधे। यौगन्धरायणश्च तदानीमग्निं साक्षी-कृत्य मगधेन्द्रं राज्ञः अद्रोहप्रत्यय मकारयत्। अथा-

न्तरे प्रहृष्टनाराङ्गनाविलासः प्रगीतचारणः प्रदत्तवसनाभरणः समन्तात् महोत्सवः संववृते। वासवदत्ता तु पत्युरुदयमाकाङ्क्षन्ती मलचितस्थिता दिवा कान्तिरैन्दवीव क्वचित् निभृता तस्थौ। ततः वत्सेश्वरे मन्तःपुरमायाति देवीसन्दर्शनाशङ्की कृती यौगन्धरायणः मन्त्रभेदभयात् मगधेश्वर मभ्यधात् राजन्! अद्यैव मम भूपति स्त्वद्गृहात् गच्छति। तेन च तथेत्यङ्गीकृते स मन्त्री वत्सेशमभ्येत्य तमर्थं व्यजिज्ञपत्। स च तथेत्युक्त्वा भुक्तपीतपरिजनः मन्त्रिभिः साकं पद्मावतीं नवोढ़ामादाय उच्चचाल। वासवदत्ता च पद्मावत्या विसृष्टं वाहनोत्तममारुह्य सुगुप्तं सैन्यस्य पृष्ठतः कृतरूपविवर्त्तं तं वसन्तकं पुरस्कृत्य समाययौ। क्रमाच्च लावाणकं प्राप्य वत्सेशो निजां वसतिमासदत् तया बध्वा। सा च वासवदत्ता गोपालकस्य भ्रातुर्मन्दिरं प्रविवेश। तत्र गोपालकं भ्रातरं कृतादरं प्राप्य रुदती वाष्पाकुललोचना कण्ठे जग्राह। क्षणे च तस्मिन् कृतसंविदौ तत्र यौगन्धरायण-रुमण्वन्तौ समाजग्मतुः यावदसौ मन्त्री अस्याः वियोगदुःखं व्यपोहति, तावत् ते वासवदत्तारक्षका महत्तराः पद्मावती मभ्येत्य व्यजिज्ञपन् देवि! यासावावन्तिका अस्माभिरानीता सा अस्मान् विधूय राजपुत्रस्य गोपालकस्य गृहं प्रविष्टा इति पद्मावती तु तैरेवं विज्ञापिता वत्सेश्वरसमीपे, साशङ्का तानेवमब्रवीत् गच्छत, आवन्तिकां ब्रूत, त्वं मे निक्षेपस्थापिता, तदत्र किं तव, यत्राहं तत्रैव त्वयागम्यतामिति। तदाकर्ण्य तेषु यातेषु राजा पद्मावतीं मिथो-

ऽपृच्छत् केनेमौ ते मालातिलकौ कृताविति सा अवोचत् मद्गेहे केनचित् विप्रेण न्यस्ता आवन्तिका नाम द्विज-वधूः, तस्याः शिल्पमेतत्। तदाकर्ण्यैव वत्सेशो नूनं सा वासवदत्ता भवेदिति चिन्तयन् तत्क्षणमेव गोपालकगृह-मगात्। प्रविवेश च द्वारस्थितमहत्तरम् अन्तःस्था देवीगोपाल-कमन्विष्य वसन्तकम्। ददर्श च तां प्रेषितागतां उपप्लव-निर्मुक्तां चान्द्रमसीमिव मूर्त्तिं वासवदत्ताम्। दृष्ट्वैव स शोकविह्वलः क्षितौ निपपात सह वासवदत्तया सकम्प-हृदयया विरहपाण्डुरगात्रया। अथ सा संज्ञां प्राप्य नि-न्दन्ती स्वचरितं बहु विललाप। 'इत्थं तौ दम्पती शोक-दीनौ तथा रुरुदतुर्यथा यौगन्धरायणोऽपि बाष्पाकुलमुखः संबभूव। तथाविधञ्च तं कोलाहलमकाले श्रुत्वा पद्मा-वत्यपि समाकुला तं प्रदेशमुपागमत्। क्रमाच्च विदित-वृत्तान्ता सा राजवासवदत्तयोः समवस्थैवासीत् सत्यः स्त्रियः स्निग्धमुग्धा हि। किं मे जीवितेन भर्त्तृदुःखप्रदा-यिना, इति वासवदत्ता रुदती मुहुर्व्याजहार। धीरो यौगन्धरायणः अब्रवीत् देव! मगधेशसुतालाभात् तव साम्राज्यं भवेदिति मयैव एतत् सर्वं कृतं नात्र देव्याः कश्चन दोषः, इयमेव पद्मावती अस्याः प्रवासे शीलसाक्षि-णीति। पद्मावती निर्मत्सरा राजानमब्रवीत् अहमग्नौ विशामि अस्याः शुद्धिप्रकाशनाय। राजाब्रवीत् अहमेव अपराधीः यत्कृते देव्या अयं सुमहान् क्लेशः सोढ़ इति। वासवदत्तातु कृतनिश्चया अग्निप्रवेशो मे कार्य्यः शरीर-शुद्धये इत्यब्रवीत्। ततः सुकृती धीमान् यौगन्धरायणः

प्राक्‌सु मचम्य शुद्धामिति राघमभ्युदैरयत्‌ यदि भद्र-मस्य राज्ञः हितार्थी, देवी च शुद्धा भवति हे लोकपालाः ! ब्रूत नचेत्‌ देहं त्यजामि। एवमुक्ता विरते तस्मिन्‌ सहसा दिव्या वागुदतिष्ठत्‌ राजन्‌ ! त्वमेव धन्यः यस्य तव मन्त्री यौगन्धरायणः वासवदत्ता च पत्नी, या प्राक्‌ जन्मनि देवी आसीत्‌ न कश्चिदस्यां दोष इति। अथै-तदाकर्ण्य सर्वे रोमाञ्चितकलेवरास्तत्क्षणमभूवन्‌। गोपा-लकसहितश्च राजा हर्षनिर्भरमानसस्तत्‌ यौगन्धरायण-चरितं स्तौतिस्म मह्यीञ्च हस्तगतां मेने। ततो नृपतिः सानन्दः मूर्त्तिमत्यौ रतिनिर्वृती इव भार्य्ये दधत्‌ अनु-दिनं परममहोत्सवेन कालमनयत्‌ ।

इति षोड़शस्तरङ्गः ।

—*—

## अथ सप्तदशस्तरङ्गः ।



अथान्येद्युर्वत्सराजः प्रियया वासवदत्तया पद्मावत्या च समेतः संसक्तपानशीलः विजने गोपालकं यौगन्धरायणं रुमण्वन्तं वसन्तकञ्च आनीय नाना विश्रम्भिणीः कथाः कथयन्‌ स्वविरहप्रसङ्गे एतां कथामवर्णयत्‌ ।

पुरासीत्‌ पुरूरवा नाम परमवैष्णवः नरपतिः । तस्य

स्वर्गेऽपि अप्रतिहता गतिरभूत्। कदाचित् नन्दने विच-रन्तं तं उर्वशीनाम काचित् सुरसुन्दरी ददर्श किल। दृष्टमात्रेण तेन सा तथा हृतचेतना अभवत् यथास्याः सख्यः रम्भादयोऽपि सभयकम्पाः सद्यः समभवन्। सोऽपि राजा तां लावण्यरसनिर्झरिणीमालोक्य तत्क्षणमेव तत्प-रिष्वङ्गलोलुपः अप्राप्य तां मुमूर्च्छ।

एतस्मिन्नन्तरे क्षीरसागरनिलयः सर्वज्ञो भगवान् नारायणः दर्शनार्थमागतं मुनिवरं नारदमादिदेश देवर्षे! नन्दनोद्यानवर्त्ती राजा पुरूरवाः उर्वशीहृतस्तिष्ठति। तद्गत्वा मम वचसा शतक्रतुं बोधयित्वा अस्मै राज्ञे उर्वशीं दापय। इत्यादिष्टः स नारदः तत्क्षणमागत्य तं प्रबोध्य पुरूरवसं अभ्यधात् राजन्! उत्तिष्ठ त्वत्कृते अहं विष्णुना प्रहितोऽस्मि, स हि भक्तानामापदं न द्रष्टुं पारयति। एव-माश्वास्य तेन राज्ञा सह देवराजसकाशमगमत् अदा-पयच्च हरेः सन्देशं निवेद्य तस्मै महेन्द्राय उर्वशीम्। तदा उर्वश्या दानञ्च स्वर्गस्य निर्जीवकरणं उर्वशीपुरूरवसोस्तु मृतसञ्जीवनोपममासीत्। अथ पुरूरवास्तामूर्वशीमादाय भूलोकमागमत्। ततः प्रभृति तावन्योन्यासक्तौ तथा अभूतां यथा क्षणमपि अदर्शनं सोढुं न शेकतुः।

कदाचित् दानवैः सार्द्धं सम्प्रहारे प्राप्ते वज्रिणा समा-हूतः साहाय्यार्थं पुरूरवाः सुरलोकमगात्। तत्र मायाध-राख्ये असुराधिपे निहते शक्रसंसदि प्रनृत्यत्सर्वाङ्गनासार्थः सुमहान् उत्सवः समभवत्। तासु च नृत्यन्तीं रम्भां सललि-ताभिनयां दृष्ट्वा राजासौ पुरूरवा आचार्य्यस्य तुम्बुरोः

सनर्त्त जहास । रम्भापि जानेऽहं दिव्यं नृत्यं त्वं पुनर्मानुषः, किं जानासि इति सासूया तमभाषत । पुरूरवाश्च जानेऽहमुर्वशीसङ्गात् तत्सर्वं यत् युष्माकं गुरवस्तुम्बुरुरपि न जानाति इति साहङ्कारमुवाच । तदाकर्ण्य तुम्बुरुस्तस्मै कुपितः शापमदात् उर्वश्या ते वियोगो भवतु, आकृष्णाराधनात् । एवं प्राप्ताभिशापश्च राजा विमनाः समागत्य मर्त्यलोकं अकालाशनिपातकल्पं तद्वृत्तान्तमुर्वश्यै न्यवेदयत् । ततश्च सहसा समागतैः गन्धर्वैः निपत्य भूपेन अलक्षितैः सा समाहृता । अथ तद्वियोगविधुरो राजा बदरिकाश्रमं गत्वा तं शापं शमयन् हरेराराधनं चकार । उर्वशी तु वियोगार्त्ता गन्धर्वसदनस्था मृतेव सुप्तेव लिखितेव विचेतना तस्थौ केवलं शापान्ताशावलम्बिनी चक्रवाकीव रजन्यां प्राणैर्न व्ययुज्यत । पुरूरवाश्च तपसा भगवन्तमच्युतं तथा समराधयत् यथा तत्प्रसादेन ते गन्धर्वाः स्वयमानीय तामुर्वशीं तस्मै पुनर्ददुः । अथ स राजा शापान्ते पुनर्लब्धया प्रेयस्या अप्सरसा साकं दिव्यान् भोगान् बुभुजे ।

इत्युक्त्वा तस्मिन् राजनि विरते वासवदत्ता उर्वशीवृत्तं श्रुतवती सोढवियोगत्वात् लज्जामाप । ततस्तां कौशलेनोपालब्धां विलक्षितां देवीं दृष्ट्वा आप्याययितुं राजानमब्रवीत् यौगन्धरायणः राजन् ! यदीयं कथा न श्रुता तदा कथयामि श्रूयताम् ।

अस्ति तिमिरा नाम नगरी निकेतनमिव श्रियः । तस्यामभूत् विहितसेनाभिधः ख्यातिमान् नरपतिः । तस्या-

सीद् भार्य्या तेजोवती नाम चितिभृत्सा सुराज्ञीव। स राजा तस्याः स्पर्शलोलुपः चणमपि वामकधारणं न सेहे। कदाचित् अस्य राज्ञः संजज्ञे जीर्णामयज्वरः। वैद्याश्च तया देव्या सङ्गमं न्यवारयन्। ततश्च देवीसङ्गविहीनस्य तस्य नृपतेः हृदि महौषधसाध्यः कश्चिद्दपरो व्याधिः समजायत। अथ ते चिकित्सकाः रहसि मन्त्रिणः समब्रुवन् भयात् शोकाभिघाताद्वा अस्य राज्ञः रोगोऽयं कदाचन यदि स्फुटेत् तदैव रोगशान्तिः परं पृष्ठपतितेऽपि महोरगे न तत्रास, नापि चुक्षुभे परसैन्ये अन्तःपुरं प्रविष्टेऽपि, तस्य महासत्त्वस्य अस्य राज्ञः कथं भयं भवेत, नास्ति सर्वास्मावमुपायबुद्धिः, तद्यथास्य शोको भवेत् तथा क्रियतामिति निश्चित्य ते मन्त्रिणश्छिताश्तां देवीं प्रच्छाद्य भूपतिमूचुः मृता देवीति। तदाकर्ण्य शोकातिभारेण मथ्यमानस्य तस्य विह्वलस्य सहसा महीभृतः हृदयव्याधिरस्फुटत्। ततश्च तस्मात्‌रोपविपदः समुत्तीर्णस्य तस्य सा महादेवी सुखसम्पद्दिवापरा सम्प्रदत्ता मन्त्रिभिः। राजा तु मतिमान् तां प्राणप्रदायिनीं बहु मेने न पुनरस्यै प्रच्छादितात्मने कदाचित् चुकोप।

या तु पत्युर्हितैषिता सैव देवीत्वस्य कारणं केवलं प्रियकारित्वमेव नैव देवीशब्दप्रतिपाद्यम्। यत्र राजकार्य्यभारस्य चिन्तनं तदेव मन्त्रिकार्य्यं न पुनश्चित्तानुवर्त्तनं तद्धि उपजीवकलक्षणम्। अस्माभिः परिपन्थिना मगधराजेन सन्धातुं तव पृथ्वीविजयकाङ्क्षिभिरयं यत्नः कृतः। देव! तस्मात् असह्यवियोगयापि देव्या भवदभ्युन्नतिकाम-

येव तथा कृतं नाम देव्या स्वल्पमप्यपराद्धं प्रत्युत सम्पूर्णा उपकृतिः कृता ।

एतदाकर्ण्य मुख्यमन्त्रिणो यथार्थं वचनं राजा वत्सेश्वरः आत्मानमेव अपराद्धममन्यत तुतोष च । उवाच च जानेऽहं युष्मत् प्रयुक्तया देव्या मूर्त्तिमत्या नीत्येव मम हस्ते मेदिनी दत्ता परत्वतिप्रणयात् मया एतदसमञ्जसम् उक्तं कुतश्चानुरागान्धमनसां विचारसहता ? । इत्यादिभिः संलापैः स उदयनस्तद्दिनं देव्याश्च सख्योपरोधं अपनिनाय ।

अन्येद्युर्विज्ञाततद्वृत्तान्तेन मगधेश्वरेण प्रेषितो दूतस्तमभ्येत्य वत्सराजं व्यजिज्ञपत् पुत्र ! तव मन्त्रिभिर्वयं वञ्चिताः, तत् त्वया तथा कार्य्यं यथा जीवलोकः शोकमयो न भवेत् । एतदाकर्ण्य वत्सेश्वरस्तं सम्मान्य दूतं प्रतिसन्देशलब्धये पद्मावतीपार्श्वं प्राहिणोत् । सापि वासवदत्तावशवर्त्तिनी तत्सन्निधावेव तस्य दूतस्य दर्शनं दत्तवती । व्याजेन पुत्रि ! नीता त्वं, पतिर्हि नव अन्यासक्तः, तन्मया कन्याजननफलं लब्धमिति पितृसन्देशे तेन निवेदिते सा पद्मावती जगाद भद्र ! तातो मद्वचनात् विज्ञाप्यः, किं शोकेन आर्य्यपुत्रो हि मयि परं सदयः, देवी वासवदत्ता च मयि सस्नेहा भगिनीव वर्त्तते, तत् तातेन आर्य्यपुत्रं प्रति विकारिणा नैव भाव्यं यदि निजसत्यमिव मदीयं जीवितमत्याज्यमिति ।

पद्मावत्या इति प्रतिसन्देशे यथोचिते अभिहिते वासवदत्ता तं दूतं त्यक्त्वा प्राहिणोत् । दूते च प्रतिगते पद्मा-

वती पितृवेश्मन: स्मरन्ती किञ्चिदुन्मना: क्षणमतिष्ठत् । ततस्तस्या विनोदार्थमुक्तो वासवदत्तया सन्निहितो वसन्तक: कथामेतामवर्णयत् ।

अस्ति पाटलिपुत्राभिधं पृथ्वीविभूषणमिव पुरम् । तत्र धर्मगुप्तो नाम कश्चित् महाधनिक: प्रतिवसतिस्म । तस्यासीत् चन्द्रप्रभा नाम भार्य्या, सातु कदाचित् गर्भवती अभवत् प्रासूत च कन्यामेकां सर्वाङ्गसुन्दरीम् । सा तु जातमात्रैव कान्त्या द्योतितमन्दिरा सुव्यक्तमालापं चक्रे उत्थाय उपविवेश च । तदालोक्य तत्रस्थ: सर्व एव स्त्रीजन: विस्मयेन वित्रस्तमभवत् । धर्मगुप्तोऽपि श्रुत्वा सभयस्तत्रागत्यो पप्रच्छ च प्रणतस्तां कन्यकां रहसि, भगवति ! का त्वं मम गृहे अवतीर्णासि ? सा अब्रवीत् त्वया कस्मैचिदपि अहं न देया, अहं तव गृहे स्थिता शुभाय, अलमन्येन प्रश्नायासेन। इत्युक्त: स भीत: स्वमन्दिरे गुप्तस्तामेव रक्षितवान् ख्यापयामास च बहिस्तां मृताम् । तत: सोमप्रभा नाम सा कन्या क्रमात् ववृधे मानुषेण रूपेण कान्त्या तु दिव्यया ।

एकदा गुहचन्द्रो नाम कश्चित् वणिक्तनय: प्रमोदेन वसन्तोत्सवविलासिनीं हर्म्यस्थां ता मवलोकयामास मुमोह च तत्क्षणात् मनोभवशरसंविद्ध: । अथ चिरेण लब्धसंज्ञ: स कथञ्चित् गृहं गत्वा अस्वास्थ्यकारणं निर्बन्धपृष्ट: स्ववयस्यमुखेन, पित्रोर्निवेदयामास । ततस्तत्पिता गुहसेनो नाम पुत्रस्नेहवशंवद स्तां कन्यां याचितुं धर्मगुप्तस्य वणिजो गृहमगच्छत् धर्मगुप्तस्तु कन्या मे मृतेति

तं वधूगर्थिनं गुहसेनं प्रत्याचचक्षे। सोऽपि निरुत्तां तां मत्वा गृहं गत्वा दृष्ट्वा च सुतं स्मरज्वराकुलितं समचिन्तयत् अत तावत् राजानं अनुरुणधि, स हि मे पूर्वसेवितः, शक्नोति च स एवं मे पुत्राय कन्यामिमां दापयितुम्। इत्यवधार्य्य स गत्वा रत्नमेकमुत्तमं तस्मै उपहारीकृत्य व्यजिज्ञपत् स्वाभिलषितम्। राजापि प्रीतः अस्य साहाय्यार्थं नगराधिपं प्रजिघाय, स च तेन सार्द्धं धर्म्मगुप्तभवनमयासीत् अरुणच्च तद्गृहं राजबलैः। ततः सोमप्रभा तं धर्म्मगुप्तमभाषत तात! देहि मां माभूत् ते मदर्थं कश्चिदुपद्रवः, सम्बन्धिना च सह त्वया एष नियमः कार्य्यः यदेषा भर्त्रा शय्यायां कदाचन नारोपणीयेति। इत्युक्तः स धर्म्मगुप्तः शय्यारोपणवर्ज्जनमाभाय तां कन्यां दातुं प्रत्यपद्यत गुहसेनश्च सान्तर्हासः विवाहस्तावत् भवतु पुत्रस्येति चिन्तयन् तथास्त्विति प्रतिज्ञातवान्।

अथ गुहचन्द्रः तां सोमप्रभां कृतोद्वाहां नीत्वा स्वगृहमगात्। सायञ्च पिता पुत्रमवादीत् वत्स! शय्यामिमां वधूमारोपय, कस्य स्वभार्य्या शयनस्था न भवेत्?। तदाकर्ण्य सोमप्रभा सकोपा श्वशुरं तं विलोक्य यमाज्ञामिव तर्जनीं भ्रामयामास। ताञ्च तस्या अङ्गुलिं भ्रमन्तीं दृष्ट्वा वधूपायाः तत्क्षणमेव वणिजः प्राणा विनिर्जग्मुः, अन्येषाञ्च भयमाययौ। गुहचन्द्रस्तु पितरि पञ्चतामुपगते महामारी मम गृहे प्रविष्टा भार्य्याकृपेणेति अचिन्तयत्। ततश्चानुपभुञ्जान स्तां गृहवर्त्तिनीं भार्य्यां

असिधारमिव व्रतं सिषेवे। भोजयामास च विप्रान् प्रत्यहं जातव्रतः भोगविहीनतया नितरां मनोदुःखदह्यमानः। सा च सोमप्रभा जातमौनव्रता भुक्तवद्भ्यस्तेभ्यः विप्रेभ्यः प्रतिदिनं दक्षिणामदात्। एकदा कश्चिद् वृद्धब्राह्मणः भोजनार्थमागतस्तां जगदाश्चर्यरूपिणीं वधूं ददर्श सकौतुकश्च पप्रच्छ गुहचन्द्रं रहसि, केयं ते कामिनी, त्वया कथ्यतामिति। निर्बन्धपृष्टश्च स सुदुःखितः सर्वमेव तद्वृत्तान्तं द्विजन्मने तस्मै कथयामास। तदाकर्ण्य स विप्रमुख्यः सानुकम्पः तस्मै स्वेष्टसिद्ध्यै अग्न्याराधनमन्त्रमदात्। अथ तेन मन्त्रेण रहसि जपतस्तस्य गुहचन्द्रस्य समक्षमग्निमध्यात् कश्चिद् ब्राह्मणरूपः समुत्तस्थौ। जगाद च तं चरणानतं वणिक्पुत्रं अद्याहं तव भवने भोक्ष्ये रात्रौ स्थास्यामि च साधयिष्यामि च तव वाञ्छितं तत्त्वं दर्शयन्। इत्युक्त्वा स ब्राह्मणरूपी अग्निः गुहचन्द्रगृहे अन्यविप्रवत् भुक्त्वा रात्रौ तद्गृहे याममात्रं शयनं सिषेवे। तावच्च संसुप्तजनात् तस्मात् गृहाभ्यन्तरात् सा सोमप्रभा निर्ययौ। ब्राह्मणस्तद्दृष्ट्वा गुहचन्द्रमबोधयत् अब्रवीच्च एहि स्वभार्य्यावृत्तान्तमवलोकय। इत्युक्त्वा योगेन गुहचन्द्रं आत्मानञ्च भृङ्गरूपं कृत्वा तस्मात् गृहात् निर्गत्य तां भार्य्यां गृहनिर्गतामदर्शयत्। सा तु सुन्दरी नगराद् बहिरतिदूरं जगाम, गुहचन्द्रोऽपि तेन ब्राह्मणेन सह तामनुजगाम। ततस्तत्रासौ गुहचन्द्रः प्रकाण्डमेकं न्यग्रोधपादपमपश्यत्। अशृणोच्च तदधस्तात् वीणावेणुरवान्वितं दिव्यं मधुरं सङ्गीतनादम्। स्कन्धदेशे

च तस्य तरोः कृतासनपरिग्रहां स्वभार्य्यां सदृशाकृतिं कामपि दिव्यां मनोहरां कन्यकां लक्षयित्वा हृष्टमात्मा तस्या अर्द्धासने उपविष्टां तां स्वभार्य्यामद्राक्षीत्। तत्काले च समप्रभे सङ्गते ते उभे कन्यके पश्यतस्तस्य त्रिचन्द्रेव यामिनी प्रतिभातिस्म। ततः स कौतुकाविष्टः क्षणमचिन्तयत् किमयं मे स्वप्नः, भ्रान्तिर्वा अथवा किमेतद् द्वयम्? इत्येवं चिन्तयति तस्मिन् ते दिव्यकन्ये स्वोचितं दिव्यं भोज्यं भुक्त्वा आसवं पपतुः। अथ सा सोमप्रभाऽब्रवीत् भगिनि! अद्य मद्गेहे कश्चित् महातेजा द्विजः समायातः तस्मात् मे चेतः शङ्कितं तदद्य व्रजामि इत्युक्त्वा तां द्वितीयां कन्यामामन्त्र्य तरोरवातरत्। तद्दृष्ट्वा भृङ्गरूपौ तौ अग्रतएव गृहमागत्य पूर्ववत् स्थितौ। सापि गुहचन्द्रगेहिनी अलक्षिता समागत्य स्वमेव मन्दिरं प्रविवेश। ततः स ब्राह्मणः स्वैरं गुहचन्द्रमब्रवीत् दृष्टं त्वया? यदेषा ते भार्य्या दिव्या, न मानुषी अस्याश्च द्वितीया अद्य त्वया दृष्टा, दिव्यास्त्री कथं मनुष्येण सङ्गमिच्छेत्। तदेतत् सिद्धये द्वारोल्लेख्यं मन्त्रं ते ददामि तदुपबृंहिणीञ्च बाह्यां युक्तिमुपदिशामि। एकएव अग्निर्ज्वलति वात्यायोगेतु किमु वक्तव्यं? तथा मन्त्रोऽयमेकएव सिद्धिदः, युक्तियुक्तः किं पुनरिति व्याहृत्य मन्त्रं दत्त्वा युक्तिञ्च उपदिश्य प्रभाते अन्तरधात्। गुहचन्द्रोऽपि भार्य्याया गृहद्वारे तं मन्त्रमभिलिख्य पुनःसायं युक्तिं प्ररोचनी मकरोत्। कृतोदारमण्डलस्य तस्याः पश्यन्त्याः कयापि वरयोषिता सह संलापं चकार। तद्दृष्ट्वैव सा

सोमप्रभा दिव्यकन्या सेर्ष्यं मन्त्रोन्मुद्रितया गिरा तमाहूय पप्रच्छ केयं रमणीति। स तु एषा वरनारी मय्यनुरागिणी अहमद्य एतस्या गृहं गच्छामीति तां मृषा प्रत्यवोचत्। ततः सा साचीकृतदृश्या वलितभ्रुणा मुखेन्दुना तिर्य्यगवलोक्य तमुवाच हं ज्ञातं एतदर्थोऽयं ते वेशस्तदत्र मा याहि, किमनया, मामुपेहि त्वं अहमेव तव गेहिनीति। एवमुक्तस्तया संक्षोभाकुलया मन्त्रप्रभावाकृष्टया सपुलकोत्कम्पः प्रविश्य वासगृहं सद्य एव तया समं दिव्यं सुखसम्भोगमकरोत्। ततः प्रभृति तां मन्त्रसिद्धिवशंवदामनुरागिणीं दिव्ययोषितं प्राप्य गुहचन्द्रः यथासुखं कालमतिवाहयाम्बभूव।

एवं योगप्रदानादिभिः सुकृतैः दिव्याः शापच्युता वरनार्य्यः पुण्यवतां गृहिणीपदमधिरोहन्ति। देवानां द्विजानाञ्च सपर्य्या सतां कामधेनुर्मता, तया किं हि न साध्यते? अत्युच्चपदस्थानां दिव्यानामपि दुष्कृतं पुरुषाणां प्रकृतमिव अधःपातैककारणम्। इत्युक्त्वा स वसन्तकः पुनरब्रवीत् राजपुत्रि! अत्रान्तरे अहल्याया वृत्तान्तं कथयामि श्रूयताम्।

पुरासीत् गौतमो नाम त्रिकालज्ञो महामुनिः। तस्य च अहल्या नाम परमरूपवती, जिताप्सरोरूपा भार्य्या। एकदा रूपेणाप्रतिमेन तस्या अतिलुब्धः शतक्रतुः रहसि तामभ्यर्थितवान् ऐश्वर्य्यमदमत्तानामीदृशी हि कुपथगामिता?। सा तु हृष्यन्ती तं शचीपतिमनुमेने, तच्च प्रभावेणावबुध्य मुनिस्तत्राययौ। इन्द्रोऽपि भयात् तत्-

स्वयं मार्जाररूपमकरोत्। अथ गौतमः कोऽत्र स्थित इति अहल्यामपृच्छत् सा तु एसो ठिओ खु मज्जाओ इति प्राकृतया वाचा सत्यानुरोधिन्या तं पतिमब्रवीत्। सत्यं त्वज्जार इत्युक्त्वा विहसन् मुनिः सत्यानुरोधात् विहितान्तं शापं तस्यामपातयत् पापशीले! चिरं शिलाभावमवाप्नुहि आराघवविलोकनादिति, इन्द्रञ्च शशाप पाप! योनिलुब्धस्य ते अङ्गेषु एतत्सहस्रं भविता, यदा च विश्वकर्मा दिव्यनारीं तिलोत्तमां निर्मास्यति तदा तां विलोक्य ते अक्ष्णां सहस्रमेतत् भविष्यति इति एवं दत्तशापः स मुनिर्यथाकामं तपसे ययौ। अहल्या दारुणं शिलाभावमपद्यत। इन्द्रोऽपि वराङ्गैरावृतसर्वाङ्गस्ततक्षणमभवत् दौःशील्यं कस्य न भवेत् तापकारणम्।

एवं दुष्कर्म सर्वस्यैव सर्वदा फलति, यो यथा वीजं वपति स तथैव फलमाप्नोति। तस्मात् महान्तः परानिष्टेषु न प्रवर्त्तन्ते एतदेव महीयसां प्रकृतिसिद्धं व्रतम्। युवां पूर्वं भगिन्यौ आस्तं देव्यौ, ततः शापच्युते सम्प्रति मर्त्यलोकमागते, तथा हि युवयोरन्योन्यहितकृत् निर्द्वन्द्वं हृदयं लक्ष्यते। एतद् वसन्तकादाकर्ण्य वासवदत्तया पद्मावत्या च परस्परम् ईर्ष्यासुलया समभावि। देवी वासवदत्ता साधारणं पतिं प्राप्य आत्मनीव पद्मावत्यां हितैषिणी प्रियमकरोत्। मगधेश्वरश्च पद्मावतीविसृष्टदूतेभ्यः तस्या देव्या महानुभावत्वं तादृगाकर्ण्य तुतोष। अथ परेद्यु र्महामतिः यौगन्धरायणः वत्सेश्वरमभ्येत्य देव्याः समक्षम् अन्येषु स्थितेषु समभाषत देव! अधुना उद्योगाय

कौशाम्बी गम्यतां सम्प्रति वञ्चितादपि मगधेश्वरादाशङ्का न विद्यते, कन्यासम्प्रदानेन नितरां बद्धोऽसौ नैव विगृह्य कन्यां जीविताधिकां त्यजेत्। सत्यं तस्य अनुपाल्यं त्वया च स न वञ्चितः, मयैव स्वयमेतत् कृतं अतस्त्वयि स न कथञ्चन कुप्येत् चारेभ्यश्च मया ज्ञातं यथा स नैव विकुरुते, तदर्थञ्चास्माभिर्बहून् दिवसान् इह स्थितम्। एवं वदति निर्व्यूढ़कार्य्ये मन्त्रिमुख्ये मगधेश्वरसकाशात् दूतः कश्चित् समाययौ। तत्क्षणञ्च प्रतीहारनिवेदितः प्रविश्य प्रणम्य च उपविष्टः वत्सराजं न्यवेदयत्, राजन्! देवीपद्मावती-दत्तसन्देशेन सुपरितुष्टस्ते श्वशुरः यदिदं समादिशत् तदा-कर्णय, सोऽब्रवीत् वत्स! किं बहुना, मया सर्वं ज्ञातं प्रीतोऽस्मि त्वयि, तस्मात् यदर्थोऽयमारम्भः तत् क्रियतां वयं प्रणता इति।

एतत् दूतवचः श्रुत्वा वत्सेशो भृशमभिननन्द। ततस्तत्र पद्मावतीं वासवदत्ताञ्च आनाय्य तं वृत्तान्तं श्रावयित्वा दत्तपुरस्कारं तं दूतं सम्मान्य व्यसर्जयत्। अथ चण्डमहासेनदूतोऽपि तत्क्षणमागत्य प्रविष्टः प्रणम्य राजानमब्रवीत् देव! चण्डमहासेनः कार्य्यज्ञः सर्वमिदं वृत्तं श्रुत्वा संहृष्टः सन्दिदेश वत्स! प्राशस्त्यं भवतस्तावत् एतावतैव वर्णितं यत्ते यौगन्धरायणो मन्त्री किमन्येन बहुनोक्तेन, वासवदत्ता च धन्या, यया त्वद्भक्त्या तथा कृतं येन अस्माभिः सतां मध्ये शिर उन्नमितं, न च मे पद्मावती वासवदत्तातो भिन्ना प्रतिभाति। तयोरेकं हि हृदयं सुतमस्माभिः तत्सत्वरमुद्योगमातनु।

एतत् श्वशुरदूतवचो निशम्य वत्सेश्वरस्य मनसि महान् आनन्दः, देव्यां कोऽपि प्रणयोत्कर्षः, मन्त्रिमुख्ये च बहुसम्मानप्रकर्षः संववृधे । अथ स ताभ्यां देवीभ्यां समं तं दूतमुचितसत्कारविधिना सन्तोष्य त्वरितमुद्योगं विधास्यन् मन्त्रिभिः समन्त्र्य कौशाम्बीं प्रति गमने मतिमकरोत् ।

इति सप्तदशस्तरङ्गः ।

—*—

## अथ अष्टादशस्तरङ्गः ।

—*—

अथान्येद्युर्नरपतिः सचिवैः स्वकलैश्च सह प्रेयसी-द्वयसहितः कौशाम्बीमुच्चचाल । तस्य आपूरितभूतलैः सकोलाहलैर्बलैः असमयोद्वेलजलराशिजलैरिव समन्तात् प्रचलितम् । यदि रविर्गगने उदयाद्रिसहितः समुद्गच्छेत् तदा तस्य गजेन्द्रगामिनो नृपस्य साम्यं स्यात् । स नृपतिः सितेनातपत्रेण कृतच्छायः जितार्कतेजः प्रीतेनेव इन्दुना सेव्यमानो व्यराजत । सामन्ता स्वं तेजस्विन-मभितः नभसि ग्रहा इव परिववृतिरे । पश्चाच्च करेणुका-रूढे उभे देव्यौ अनुरागेण सङ्गते श्रीभुवाविव विरेजतुः । एवं वत्सेश्वरः कतिपयैरहोभिर्वन्दिभिः स्तूयमानः सन्ततो-त्सवां कौशाम्बीं आससाद । सा तु पुरी प्रवासादागते पत्यौ ध्वजरक्तांशुका गवाक्षोत्फुल्ललोचना प्राग्द्वारविनि-

वेश्मितपूर्णकलसकुचा जनकोलाहलानन्दसंलापा सौधहा-सिनी तत्कालं रराज। अथ राजा देवीभ्यामनुयातः पौराणां महोत्सवमादधानः पुरीं तां प्राविशत्। तदा च पुरस्त्रीणां देवीद्वयदर्शनार्थिनीनां मुखेन्दुभिरपूरि नभस्तलं सौधोपरिगतानाम्। वातायनस्थाश्च काश्चित् सुन्दर्यः अनिमिषेक्षणाः पश्यन्त्यः कौतुकदर्शनागता अप्सरस इव व्यराजन्त। काश्चिच्च गवाक्षजालाग्रेषु संसक्तपक्ष्मल-लोचनाः समसृजन्निव नाराचपञ्जराणि मदनस्य। कस्या-श्चिच्च सोत्सुका राजदर्शनविकस्वरा दृष्टिः श्रुतिः पार्श्वमप-श्यन्ती तदा अक्ष्यातिमगच्छदिव। द्रुतमगच्छन्त्याश्च कस्याश्चित् मुहुरुच्छ्वसितौ स्तनौ कञ्चुकादिव निर्गन्तुमीषत् तद्दर्शनार्थिनौ। अपरायाश्च ससम्भ्रम मागच्छन्त्या-श्छिन्नहारमुक्तावलयः गलन्त इव हृदयस्य हर्षबाष्पाम्बु-विन्दवः विभान्तिस्म। काश्चन यदि अस्यां पापमाचरिष्यत् विभावसुर्लावाणके, तदा जगति प्रकाशकोऽपि असम्बन्धं तमः पातयिष्यत् इति वासवदत्तामुद्दिश्य तं दाहप्रवादं स्मरन्त्यः सोत्कण्ठाः परस्परं बभाषिरे। अपरा वयस्यां प्रति दिष्ट्या देवी वासवदत्ता भगिनीतुल्यया सपत्न्या न लज्जिता इति सानन्दमभाषत। नूनं हरेण हरिणा च एतयोः रूपं न दृष्टं अन्यथा कथं तौ बहुमानं उमालक्ष्म्यो भजेताम्। इत्थमपरा नार्य्यस्ते देव्यौ दृष्ट्वा जजुः। एवं वत्सेश्वरः देवीभ्यां सह जनतानयनोत्सवं विदधत् कृतम-ङ्गलः स्वमन्दिरं प्रविवेश। तदा च प्रवाते पद्मसरस इव चन्द्रोदये सागरस्येव तस्य राजभवनस्य कापि शोभा सम-

भवत् । क्षणेन च तत् राजभवनं सामन्तानां मङ्गलोपा-
यनैः समपूरि । ततः नरपतिरुदयनः कृतोत्सवः सर्वं
राजलोकं सम्मान्य चित्तमिव सर्वजनस्य अन्तःपुरमविशत्
निनाय च दिनशेषं देवीभ्यां परिवृतः रतिप्रीतिभ्यामिव
मन्मथः पानादि लीलया ।

अथापरेद्युः कश्चित् द्विजः सभामण्डपवर्त्तिनः मन्त्रि-
परिवृतस्य नृपस्य द्वारि अयं अब्रह्मण्यमिति कृत्वा चक्रन्द ।
उवाच च प्रभो ! अटव्यां पापात्मभिर्गोपालकैर्मे पुत्रस्य चर-
णोच्छेदो विहितः कारणं विना । तदाकर्ण्य राजा तत्क्षणं
दिशान् गोपोत्करनानाय्य वृत्तान्तमपृच्छत् ते चाब्रुवन् देव !
वयं गोपालका भूत्वा विपिने चरामः अस्माकं देवसेनाख्यः
कश्चित् गोपोऽस्ति । स तु काननैकदेशे शिलातलोपविष्टः
राजा युष्माकमस्मीति व्याहरन् अस्माननुशास्ति । अस्मासु
च केनापि तदाज्ञा न विहन्यते, एवं सः अरण्ये राज्यं
कुर्वन्नास्ते । अद्य तु अस्य विप्रस्य तनयः तेन पथा गच्छन्
तस्य गोपालराजस्य प्रणामं नाकरोत् । मा याहि त्वम-
प्रणम्य राजानमिति नृपादेशेन जल्पतः अस्मान् विधूय स
शासितोऽपि वटुर्हसन् चलितः । ततस्तेन गोपालराजेन
अस्य दुर्विनीतस्य वटोः पादच्छेदरूपं दण्डं कुरुतेति
वयमादिष्टा धावित्वा तस्य वटोः पादच्छेदमकुर्म्म । प्रभो !
अस्माकं प्रभोराज्ञां को लङ्घयितुमीष्टे ? । गोपालकैरेवं
विज्ञापिते धीमान् यौगन्धरायणः सम्प्रधार्य्य राजानमे-
कान्ते समब्रवीत् देव ! नूनं तत् स्थानं निध्यादियुतं
भवति, यत्प्रभावात् गोपालकोऽपि एवं प्रभवति तत्तत्र

बध्यतामिति। इत्यभिहितो मन्त्रिणा भूपतिस्तान् गोपा-लकान् पुरतः कृत्वा ससैन्यः सपरिच्छदस्तत्काननप्रदेशं ययौ। अथ परीक्ष्य यावत् तत् स्थानं खनकैः खन्यते स्म तावत् तदधस्तात् कश्चित् शैलमयाकृतिर्यक्षः समुत्तस्थौ। उवाच च राजन्! इदं तव पितामहनिखातं चिरं रक्षितं निधानं गृहाण, इत्युक्त्वा राजानं तत्पूजाञ्च प्रतिगृह्य यक्ष-स्तिरोदधे। निधिश्च महान् आविरभूत्। ततश्च महार्हं रत्नसिंहासनम् उदतिष्ठत् उक्तञ्च सम्पद् सम्पदमनुबध्नाति विपद् विपदमिति। ततः कृत्स्नं तत् निधानं प्रति-गृह्य गोपालांश्च प्रशास्य वत्सेश्वरः सानन्दं स्वां पुरी-माययौ।

अथ नरपतिना आनीतं तत् रत्नसिंहासनं निधिजातं दृष्ट्वा सर्वे पुरवासिनः समाहतदुन्दुभिनिनादैः समं आनन्द-कोलाहलं चक्रुः। मन्त्रिणश्च भूपतेर्जयं भाविनं निश्चित्य उत्सवमकुर्वन् आसुखापातिकल्याणं हि कार्य्यसिद्धिं शंसति। ततः पताकाविद्युद्भिर्गगनमण्डले आकीर्णे राजा-म्बुदः स्वानुजीविषु हेमवृष्टिं ववर्ष। अथैकदा सोत्सवेषु दिवसेषु गतेषु मन्त्रिसत्तमो यौगन्धरायणः राजचित्तबुभु-त्सया वत्सराजमभाषत देव! यदेतत् ते कुलक्रमागतं रत्न-सिंहासनं प्राप्तं एतत् अधिरुह्य अलङ्क्रियताम्। परन्तु पृथ्वीं विजित्य यत्र तव प्रपितामहा आरूढ़ाः, तत्र दिशः सर्वा विजत्य आरोहतस्तव कुलप्रथा अनुसृता भवेदिति। राजा च जित्वैव ससागरां धरां पूर्वेषामेतत् महासिंहा-सनमलङ्करोमीति उक्त्वा तदा सिंहासनं नारुरोह। सत्य

वति हि महात्मनाम् अकृत्रिमोऽभिमानः ?। ततश्च प्रीतो यौगन्धरायणः पुनराह स्म देव ! तर्हि पूर्वं प्राच्यां जयोद्यमः क्रियताम्। तदाकर्ण्य राजा अब्रवीत् मन्त्रिन् ! कथं स्थितास्तूत्तरायास्तु प्राचीं दिशमग्रतः प्रयान्ति भूपतयः ?।

एतदाकर्ण्य यौगन्धरायणः पुनरब्रवीत् राजन् ! सम्प्रत्यपि कौवेरी म्लेच्छानां संसर्गेण दूषिता, पश्चिमा च सूर्यादीनामस्तमयहेतुत्वात् न पूज्यते, दक्षिणा च आसन्नराक्षसतया अन्तकाश्रिततया च गर्हिता। प्राच्यान्तु सूर्य्य उदेति इन्द्रश्च तस्या अधिष्ठाता, जाह्नवी च प्राचीं याति तस्मात् प्राची सर्वतः प्रशस्यते। देशेषु च हिमवद्विन्ध्यमध्यवर्त्तिषु जाह्नवीजलपूतो देशः प्रशस्ततमः। तस्मात् आदौ मङ्गलार्थिनो नृपतयः प्राचीमेव प्रयान्ति निवसन्ति च अस्मिन् सुरसिन्धुपूते देशे। पूर्वैरपि भवतः प्राचीक्रमेणैव दिशो विजिताः, कृतञ्च गङ्गातीरे हस्तिनापुरं नगरम्। शतानीकस्तु रमणीयतया कौशाम्बीं अध्यतिष्ठत् साम्राज्यं पौरुषाधीनं मत्वा देशमकारणं गणयन्। इत्युक्त्वा तस्मिन् मन्त्रिमुख्ये विरते राजा पुरुषकारमेव बहुमन्यमानः समभाषत सत्यमुक्तं नैव देशः साम्राज्यस्य कारणं एकमेव हि पौरुषम्। एकोऽपि पौरुषवान् आश्रयहीनोऽपि लक्ष्मीमुपैति, युष्माभिः सत्त्ववतः पुंसः कथा न खलु श्रुता ?। स वत्सेशः एवमुक्त्वा कथं सा कथेति सविवेमाभ्यर्थितः देव्योः समक्षमाख्यत्।

अस्ति भूतलविख्याता उज्जयिनी नाम पुरी। तत्रासीदादित्यसेनाख्यः पूर्वमेको नरपतिः। आदित्यस्येव प्रताप-

निभेर्य्यश्च एकचक्रवर्त्तितया रथः क्वचिदपि न चस्खाल। यस्य च हिमकान्तौ समुज्ज्वले छत्रे अन्तरीक्षमुद्गते अन्येषां राज्ञां च तदर्पीणां आतपत्राणि न्यवर्त्तन्त। स खलु अम्बुराशिरिव समस्तभूतलाकरजानां रत्नानामेकमेव भाजनं बभूव। कदाचित् स नृपतिः केनापि कारणेन ससैन्योऽत्र जाह्नवीकूले समावासितकटकः समवस्थितः। तत्र कश्चित् गुणवर्म्मा नाम तत्रत्यः कन्यारत्नमुपायनं गृहीत्वा तं राजानमियाय। अब्रवीच्च देव! कन्यैषा त्रिभुवनरत्नं मम गृहे समुत्पन्ना, न चैषा अन्यत्र दातुं युज्यते, नृपतिरेव रत्नभाजनम्। इत्यावेद्य प्रतिहारमुखेन स राजसमीपमागत्य तस्मै तां कन्यामदर्शयत्। स तु राजा तां तेजस्विनीं नाम कान्तिद्योतितदिगन्तरां अनङ्गमङ्गलावासरत्नदीपशिखामिव पश्यन् तत्क्षणं मन्मथाविष्टचेताः महादेवीपदोचितां मन्यमानः स्वीचकार चकार च गुणवर्म्माणं परितोष्य परमाप्यायितम्। ततश्च शुभेऽहनि तां तेजस्विनीं परिणीय कृतार्थम्मन्यस्तया सार्कं उज्जयिनीं प्रत्याजगाम। तत्र चागत्य राजासौ यथा तन्मुखासक्तदृष्टिरनुक्षणमासीत् तथा सुमहान्त्यपि राजकार्य्याणि न ददर्श तेजस्विन्या मधुरालापेन कीलितेव तस्य श्रुतिरापन्नप्रजानामवक्रन्दैर्नाक्रष्टुमशक्यत। स चिरप्रविष्टोऽपि अन्तःपुरात् नैव निरगात्, निरगात्तु केवलमरिवर्गस्य हृदयात् सन्तापज्वरः।

अथ कालेन तस्य राज्ञः सर्व्वानन्दकरी एका कन्या तेजस्विन्यां संजज्ञे बुद्धौ विजिगीषुता च। परमाश्चर्य्यरूपिणी सा कन्या जगत्त्रयं लघूकृत्य तस्य हर्षमकरोत्।

जिगीषुता च प्रतापम्। एकदा स भूपतिः कञ्चित् सामन्तमभियोक्तुमुज्जयिन्या निरगात्। अकरोच्च तां तेजस्विनीं समारूढ़करेणुकां सैन्यव्यूहाधिदेवतामिव सङ्गिनीम्। स्वयञ्च अत्युङ्गं उल्लिखन्तमिवाम्बरं खुरैर्महा-जवं तुरङ्गमारुह्य किञ्चिद् गत्वा समां भूमिं सम्प्राप्य तेजस्विन्याः सम्प्रदर्शयन् अश्वमुत्तेजयामास। स तु अश्वः कशाघातेन शर इव धनुषः अतिजवात् लोकलोचनैरदृश्यः क्वापि अलक्ष्यः गतिमकरोत्। तद्दृष्ट्वा सैन्येषु विह्वलेषु सहस्राधिकाः अश्वारोहिणः तमन्वधावन् परमश्वापहृतं नृपं न प्रापुः: ततश्च मन्त्रिणः सर्वे न्या अनिष्टमाशङ्का भयात् क्रन्दन्तीं देवीमादाय उज्जयिनीमेव निवहृतिरे। आगत्य च तत्र राज्ञः प्रवृत्तिमन्विच्छन्तः प्रजा आश्वास्य पिहितद्वारतया कृतप्राकारगुप्तयस्तिष्ठन्ति स्म।

अत्रान्तरे स राजापि तेन प्रजविना महातुरङ्गेन प्रचण्डश्वापदसङ्कुलां सुदुर्गमां विन्ध्याटवीं नीतोऽभूत्। तत्र सहसा तस्मिन्नश्वे स्थिते स राजा महारण्यं पश्यन् सञ्जातदिङ्मोहः विह्वलेन्द्रियः क्षणं स्थित्वा गतिमन्यामपश्यन् तस्मादवतीर्य्य प्रणम्य च तं तुरङ्गवरं अश्वजातिज्ञतया समब्रवीत् हे अश्ववर! त्वं देवः त्वादृशः प्रभुद्रोहं नैव कर्त्तुमर्हति। त्वमेव मे शरणं अस्मात् कुशलेन अध्वना मां राजधानीं नय। तन्निशम्य स जातिस्मरः अश्वराजः सानुतापः तथेति प्रभुवाक्यमग्रहीत्। अथ राजनि तत् सङ्केतविदि समारूढ़े, स तुरङ्गमः स्वच्छशीतलाम्बुना

चाध्वक्लेशापनोदिना मार्गेण प्रत्यागच्छन् महाजवेन सायं शतयोजनान्तरं उज्जयिनीसमीपवर्त्तिनं देश मुपगम्य तद्वेगविजितान् सप्त निजतुरङ्गान् वीक्ष्य लज्जयेव अस्ताचल-कन्दरालीने अंशुमालिनि, तमसि च समन्तात् प्रसृते उज्ज-यिन्या द्वाराणि पिहितानि दृष्ट्वा तत्कालभीषणं वहिः श्मशानं भूपतिं तं निनाय। स च नृपः तस्यां रजन्यां तस्य श्मशानस्य एकदेशस्थितमेकं विप्रमठं निशायापनयोग्यं दृष्ट्वा श्रान्तवाहनः प्रवेष्टुमुपचक्रमे। विप्राश्च तन्निवा-सिनः श्मसानपालश्चौरो वा अयमिति वदन्तस्तस्य प्र-वेशं ररक्षुः। निर्ययुश्च संसक्तकोलाहलास्तान्ते दिजाः। तेषु च तथा रटत्सु विदूषको नाम कश्चित् गुणवान् महा-सत्त्वः द्विजवरस्तस्मात् मठात् निर्जगाम। यो हि युवा महात्मा दुस्तपसा पावकमाराध्य तस्मात् चिन्तितोपस्था-यिनम् असिवरं प्राप्तवान्। स तु धीरवरः निशि समुप-स्थितं तं नृपं भव्याकृतिमवलोक्य कोऽपि प्रच्छन्नविग्रहः देवोऽयमिति क्षणं दध्यौ। अथासौ महाशयः तान् रटतो द्विजान् विधूय तं नृपं मठान्तरमनयत्। विश्रान्ताय च किङ्करीभिः क्षणेन परिचर्य्यया गताध्वक्लेशाय तस्मै राज्ञे समुचिताहारमदात्। अकरोच्च तं तदीयं हयोत्तममप-मीतपर्य्याणं यवसादिप्रदानेन परिक्लमम्। अवोचच्च विरच्य शयनं प्रभो! रक्षामि अहं ते शरीरं तत् सुखं स्वपिहीति राजानं श्रान्तम्। सुप्ते च तस्मिन् राजनि स द्विजः चिन्तितोपस्थितखड्गमात्रसहायस्तां निशां द्वास्थः जाग-रयामास। प्रातश्च अनुक्त एव विदूषकः स्वयं प्रबुध्य तस्य

राजतुरगं सञ्जीवकार । राजापि समुत्थाय तं समामन्त्र्य विप्रं समारुह्य च वाजिनं पौरान् हर्षयन् उज्जयिनीं विवेश । प्रविष्टञ्च तं सर्वाः प्रकृतयः क्षणात् सञ्जातानन्द-कोलाहलाः समाजग्मुः । क्रमेण राजा सचिवैरन्वितः राजभवनं विवेश तेजस्वत्यास्तु मनोज्वरः निरगमत् । तत्-क्षणञ्च नगर्य्याः शुचः वातोद्धूतध्वजांशुकपङ्क्तिकुत्सारिता इव अभूवन् । देवी च तेजस्वती आदिनान्तं तावत् महोत्सवमकारयत् यावत् नगरलोकः सार्कः सिन्दूरपिङ्गलः समभूवत् ।

अथापरेद्युर्नृपतिरादित्यसेन स्तं विदूषकं मठात् सर्वैर्द्विजैः सह समानयामास । रात्रिवृत्तान्तं प्रख्याप्य तस्मै आनीताय उपकारिणे विदूषकाय तत्क्षणं ग्रामस-हस्रमदात् अकरोच्च तं कृतज्ञो नृपतिः प्रदत्तच्छत्रवा-हनं पुरोहितम् । स तु विदूषकः तदैव सामन्ततुल्यः सम्बभूव महत्सु उपकृतिर्न खलु कदापि मोघा भवति । स च महाशयः नृपसकाशात् यान् सर्वान् ग्रामान् प्रापत् तान् सर्वेभ्य एव मठवासिभ्यः समं विभज्यात्मना प्रददौ । तस्थौ च तं राजानं सेवमानः तैश्च ब्राह्मणैः समं ग्रामसञ्च-यान् भुञ्जानः ।

अथ गच्छति काले ते सर्वे द्विजा धनमदान्धाः प्राधान्य-मिच्छवः तं विदूषकं नैव गणयामासुः । विभिन्नमतिभिश्च तैः सप्तसंख्यकैरेकस्थानाश्रितैर्द्विजैः परस्परसंघर्षात् दुष्टैर्ग्र-हैरिव ग्रामाः अबाध्यन्त । तेषु तादृशेषु उच्छृङ्खलेषु धीमान् विदूषक उदासीन एवाभवत् । अवश्यं वाल्पसत्त्वेषु धीरा-

णामुचिता। एकदा कलहासक्तान् तानवलोक्य कश्चित् चक्रधरो नाम द्विजः प्रकृतिनिष्ठुरस्तत्रैव समाययौ। स तु काणोऽपि परार्थन्यायवादेषु अम्लानदर्शनः कुब्जोऽपि स्पष्टवादी विप्रस्तान् अब्रवीत् रे शठाः! भवद्भिर्भिक्षुकैरियं श्रीः प्राप्ता, तत्कथमन्योन्यस्पर्द्धिनः इमान् ग्रामान् नाशयथ, विदूषकस्यैव दोषोऽयं येन यूयमुपेक्षिताः, तत् नूनमचिरात् पुनर्भिक्षां यूयं करिष्यथ। वरं दैवायत्तैकबुद्धि स्थान मनायकं न तु विप्लुतसर्वार्थं विभिन्नं बहुनायकम्। तदेकं नायकं सुधीरं मद्वचसा कुरुत, यदि युष्माकं स्थिरया लक्ष्म्या प्रयोजनमिति तदाकर्ण्य सर्वे ते आत्मन एव नायकत्वमैच्छन्। तद् दृष्ट्वा मूढ़ां स्तान् पुनश्चक्रधरोऽब्रवीत् सङ्घर्षशालिनो यूयं वः समयं दास्यामि, इतः श्मशाने चयश्चौराः शूलेषु निसूदिताः, यस्तेषां नासाश्छित्त्वा सुमत्त्व इहानयेत् स एव युष्माकं नायकः स्यात् धीरो हि स्वाम्य मर्हति। इति चक्रधरेणोक्तान् तान् समीपस्थः विदूषकोऽब्रवीत् को दोषः, कुरुध्वमेतत्। ततस्ते विप्रा अवोचन् नैतत् कर्त्तुं क्षमा वयं, यः शक्तः स कुरुतां वयञ्च समये स्थिताः, ततो विदूषकोऽवादीत् अहमेतत् करोमि, अहं तेषां नासाश्छित्वा श्मशानत आनेष्यामि। ततस्ते मूढ़ा स्तत् दुष्करं मत्वा तमब्रुवन् एवं कृते त्वं अस्माकं स्वामी भविष्यसि, एषः नियमोऽस्तु। इत्येवं नियमं प्रख्याप्य प्राप्तायां निशायां तान् विप्रान् आमन्त्र्य सः विदूषक स्तत् श्मशानमगात्। प्रविश्य च तत्र विन्नितोऽपस्थितास्नेयक्षपाशपार्श्वडाकिनीनां नादेन

संवर्द्धितगृध्रवायसनादिते उल्कामुखमुखोल्काभिर्विस्तारितचितानले शूलाधिरोपितान् तान् त्रीन् चौरान् नासाच्छेदभियेव उत्क्षिप्ताननान् ददर्श । यावच्च स तेषां समीपमगमत तावत् त्रयोऽपि वेतालाधिष्ठिता स्तं मुष्टिभिः प्राहरन् । सोऽपि निष्कम्प एव खड्गेन तान् प्रतिजघान नहि धीराः कदाचित् भिया क्षुभ्यन्ति ।
अथ क्षणेनापगतवेतालविकाराणां तेषां स नासाश्छित्त्वा कृती वाससि बद्धा च जग्राह । ततश्चागच्छन् शवोपरि तिष्ठन्तं जपन्तमेकं प्रव्राजकमपश्यत् । अतिष्ठच्च तत् पृष्ठतः तस्य क्रियादर्शनकौतुकी प्रच्छन्नम् । क्षणेन चासौ तस्य प्रव्राजकस्य अधःफुत्कारममुञ्चत् । तेन च फुत्कारेण तस्य मुखात् अग्निशिखा नाभेश्च सर्षपा निरगुः । ततः स तान्त्रिकः तान् सर्षपान् गृहीत्वा उत्थाय तं शवं पाणितलेन आताड़यत् । ताड़ितश्च स वेतालाधिष्ठितः शव उदतिष्ठत् । प्रव्राजकश्च तस्य स्कन्धे आरुरोह । तदारूढ़श्च सहसा ततो गन्तुं प्रचक्रमे । विदूषकोऽपि प्रच्छन्न स्तूष्णीं तमन्वगच्छत् । किञ्चद्दूरमतीत्य च शून्यं कात्यायनीगृहमपश्यत् । तान्त्रिकस्तु तत्र वेतालस्कन्धादवतीर्य गृहाभ्यन्तरमविशत् शवञ्च भूमि अपातयत् । विदूषकश्च प्रच्छन्नं स्थित्वा सर्वं व्यापारमवालोकयत् । स हि प्रव्राजकस्तत्र देवीं संपूज्य व्यजिज्ञपत् देवि ! यदि तुष्टासि, वरमभिलषितं मे प्रयच्छ, अन्यथा स्वदेहोपाहारेण त्वामहं प्रीणामि । इत्युक्तवन्तं तं साधकं गर्भगृहोद्गता वाग्देवी समब्रवीत् वत्स ! आदित्यसेननृपस्य कुमारीमिहानीय उपहारी-

कुरुष्व, ततस्ते श्रेयो भविष्यतीति। एतदाकर्ण्य स तस्मात् गर्भगृहान्निर्गत्य करतलेन तं शवम् आहत्य पुनस्ताड़यामास ययौ च तस्य निर्यद्वक्रानलार्चिषः मुक्तफुत्कारस्य वेतालस्य स्कन्धमारूढ़स्तां राजपुत्रीमानेतुं नभसा। विदूषकस्तु तत् सर्वं दृष्ट्वा श्रुत्वा च चिन्तयामास कथं मयि जीवति राज्ञः सुता अनेन दुरात्मना हन्यते, इहैव तावत् तिष्ठामि यावदसौ दुरात्मा समायाति इत्यालोच्य विदूषकः प्रच्छन्न एव तत्र तस्थौ। प्रव्राजकस्तु नभसा गत्वा वातायनमार्गेण सुप्तां निशि नृपात्मजां कान्त्याभिद्योतितदिङ्मुखां राहुः शशिकलामिव हा तात हा मातरिति क्रन्दन्तीं वहन् यथागतमाजगाम अवततार च अन्तरीक्षात्तत्रैव देवीभवने वेतालं विहाय आदाय च तां कन्याम्। यावदसौ तां राजपुत्रीं निहन्तुमुद्युङ्क्ते तावदेवाकृष्टकृपाणः विदूषकस्तत्र समागत्य आ! पाप! मालतीलतामश्मना हन्तुमीहसे इत्युक्त्वैव तं केशेषु गृहीत्वा विचेष्टमानस्य तस्य शिरस्तेनैव खड्गेन चिच्छेद आश्वासयामास च तां राजपुत्रीं भयविह्वलां किञ्चित् प्रत्यभिजानतीं प्रविशन्तीमिवाङ्गानि। अथ स वीरः कथमिमां राजपुत्रीं अन्तःपुरं नयेयमिति विचिन्तयन्नेव शुश्राव आकाशवाणीं भो विदूषक वीरप्रवर! शृणु, योऽयं प्रव्राट् त्वया हतः, एतस्य महान् वेतालः सिद्धोऽभूत् सर्षपाश्च। अस्य दुरात्मनः पृथ्वीराज्ये राजात्मजासु च वाञ्छा उपपद्यत, सोऽयमद्य दैवेन विवञ्चितः। तदेतदीयान् सर्षपान् गृहाण, येन इमामेकां निशामम्बरे गतिस्ते भविष्यतीति। ततः सन्हा-

तदर्थोऽसौ विदूषकस्तस्य परिव्राजकस्य वस्त्राञ्चलात् तान् सर्षपान् हस्ते गृहीत्वा तांश्च नृपात्मजामङ्के निधाय यावत् देवीभवनात् बहिर्निर्ययौ तावत् पुनरन्या भारती अन्तरीचादुत्पपात । हे वीर ! इहैव देवीभवने मासान्ते त्वया आगन्तव्यं न पुनरेतत् कदापि विस्मर्त्तव्यम् । तदाकर्ण्य स विदूषकः राजपुत्रीं वहन् नभसा वेतालाधिष्ठितः देवीप्रसादात् त्वरितमेव तां राजान्तःपुरं अनयत् समाश्वस्ताश्चोवाच राजनन्दिनि ! प्रातर्मे व्योममार्गे गतिर्न भविष्यति, ततश्च मां अस्मात् निर्गच्छन्तं सर्वे द्रक्ष्यन्ति, तस्मात् सम्प्रत्यहं गच्छामि । एवमुक्ता सा बाला बिभ्यती समगादीत् वीर! त्वयि अस्मात् गते मम सन्त्रस्ताः प्राणाः सत्वरमेव प्रयान्ति, तस्मात् त्वं मा याहि, अत्र तिष्ठन् जीवितं देहि । विदूषकस्तु तेन तस्याः निर्बन्धेन सुतरां दयालुर्महासत्त्वश्चिन्तयामास यदि इमां त्यक्त्वा गच्छामि तदेयं त्रासात् जीवितं मुञ्चेत् । तर्हि मया का राजभक्तिः प्रदर्शिता, सर्व एव प्रयासो मे विफलो भवेत् इत्यालोच्य तत्रैवान्तःपुरे रजन्यामतिष्ठत् । क्रमेण च व्यायामजागरश्रान्ततया निद्रामुपागमच्च । राजपुत्री तु भयादनिद्रैव तां रात्रिमनैषीत् न च तं प्रभातेऽपि प्राबोधयत् प्रेमार्द्रमनाः सुप्तः क्षणं विश्राम्यतु इति ।

अथ राजान्तःपुररक्षिणः तत्र प्रविश्य तं दृष्टपूर्व्यजिज्ञापंश्च ससम्भ्रमाः सत्वरं गत्वा राजानम् । राजापि तत्समवेक्षितुं प्रतीहारं प्रैषयत् । प्रतीहारश्च गत्वा दृष्ट्वा च तत्र विदूषकं श्रुत्वा च सर्वं वृत्तान्तं राजसुतामुखात् राज्ञे

सर्वं न्यवेदयत् । राजा तु विदूषकस्य महानुभावतां जानन् विदितसर्ववृत्तान्तः किमेतदिति उद्भ्रान्त एवाभवत् समानयच्च कन्यान्तःपुरात् तं विदूषकम् । अपृच्छच्च सन्नेहमनाः सर्वं वृत्तान्तम् । सोऽपि विप्रः आमूलतः सर्वं वृत्तान्तमब्रवीत् अदर्शयच्च वस्त्रान्तबद्धास्तित्सश्चौरनासिकाः तांश्च प्रव्राट्सम्बन्धिनः सर्षपान् अथ राजा तत् सत्यं सम्भाव्य तांश्च मठद्विजान् चक्रधरसहितान् आनाय्य तन्मूलकारणं पृष्ट्वा स्वयं श्मशाने गत्वा तांश्च छिन्ननसः शवान् तच्च छिन्नकण्ठं तान्त्रिकाधमं दृष्ट्वा समुत्पन्नविश्रम्भः भृशं तुतोष ददौ च प्राणदायिने तस्मै कृतिने विदूषकाय तदैव तां तनयां किमदेयमुदाराणां परितुष्यतामुपकारिषु ? राजकन्याकरे अम्बुजभ्रान्त्या श्रीरुवास नूनं येन विदूषकः अस्या गृहीतपाणिर्लक्ष्मीमुपलेभे तस्थौ श्वशुरमन्दिरे लब्धयशा राजोपचारेण तया कान्तया सह ।

अथ गच्छति काले कदाचित् दैवविमोहिता राजपुत्री निशायां विदूषकमब्रवीत् नाथ ! स्मरस्येतत् तत्र देवीगृहे निशायां यत् त्वं मासान्ते इहैवागच्छेरिति दैववाणी उदचरत् । अद्य च मासो गतः, भवतस्तच्च विस्मृतमिति । एवमुक्तः प्रियया सञ्जहर्ष उवाच च सुन्दरि ! साधु त्वया स्मृतं मया पुनस्तत् विस्मृतं इत्युक्त्वा तां सुदृढमालिङ्ग्य सन्तुष्टामकरोत् । अथ तस्यां सुप्तायां निशि तस्मादन्तःपुरात् खड्गसहायः निर्गत्य तदेव देवीसदनमगात् । गत्वा च तत्र विदूषकोऽहं प्राप्त इति वदन् बहिस्थ एव केनाप्युदीरितां प्रविशास्तेति वाचमशृणोत् ।

प्रविश्य चात्र दिव्यमावासमपश्यत्। दिव्यरूपां दिव्यपरिच्छदां ज्वलन्तीमिव रजनीं कामपि कन्यकाञ्च। किमेतदिति विस्मितः सम्प्रहृष्टया तया कुमार्य्या स्नेहवहुमानेन स्वागतेनाभ्यनन्द्यत। उपविष्टञ्च सञ्जातविश्रम्भं प्रेमदर्शनेन तत्स्वरूपविज्ञानसमुत्सुकं तमब्रवीत् सा महाभाग! अहं भद्रा नाम महाकुलीना विद्याधरी, कामचरत्वात् इह त्वामहं तदापश्यम् अभूवञ्च त्वद्गुणाकृष्टचित्ता असृजञ्च पुनरागमनाय ते तां वाणीम्। अद्य च विद्याप्रयोगबलात् सम्मोहिता सा मया राजसुता अस्मिन् कार्य्ये तव स्मृतिमुत्पादयामास। हे सुभग! त्वदर्थमिहाहं स्थिता तदिदं शरीरं तुभ्यमर्पितं मम पाणिग्रहं कुरु। इत्युक्तस्तया विद्याधर्य्या तथेति तां गान्धर्वविधिनोपयेमे अतिष्ठञ्च तत्र तया सङ्गतः दिव्यं भोगमुपभुञ्जन् यथाभिलषितम्।

अत्रान्तरे सा राजपुत्री प्रभाते प्रबुद्धा भर्त्तारमपश्यन्ती भृशं विषादमगमत्। मातु श्चान्तिकं प्रस्खलन्ती पदे पदे विगलद्बाष्पाकुललोचना अवादीच्च सानुतापा स्वापराधशङ्किनी मातः! पतिर्मे रात्रौ क्वाऽपि गत इति। ततः क्रमेण राजापि तदाकर्ण्य परमाकुलताममात्। मन्ये श्मशानशाल्यं तद् देवतागृहं गतोऽसाविति सुतया अभिहितश्च स्वयं तत्र समाययौ। तत्र विद्याधर्य्या विद्यया तिरोहितं विदूषकं स्थितमपि न विवेद। अथ तस्मिन् रात्रि परावृत्ते निराशं तां राजसुतां देहत्यागोद्यतां कोऽपि ज्ञानी समब्रवीत् भद्रे! अलमनिष्टशङ्कया जीवति

ते पतिः दिव्येन भोगेन सम्प्रति युक्तः अचिरात् त्वामुपैष्यतीति। तदाकर्ण्य सा राजपुत्री हृदयङ्गमया तत्प्रत्यागमप्रत्याशया निरुद्धं जीवितं धारयामास।

विदूषकस्यापि तथा तिष्ठतः, काचित् योगेश्वरी नाम विद्याधरी भद्रामुपेत्य रहस्येनामब्रवीत् सखि! मनुष्यसम्पर्कात् विद्याधरास्त्वयि कुपिताः, अनिष्टञ्च ते करिष्यन्ति तदितो गम्यताम्। अस्ति पूर्वसागरपारे कार्कोटकं नाम नगरं, तदतिक्रम्य शीतोदा नाम पावनी नदी वर्त्तते, तामुत्तीर्य्य उदयाख्यं सिद्धक्षेत्रं महागिरिरस्ति योऽसौ विद्याधरैर्नाक्रमितुं शक्यते, तत्र त्वं साम्प्रतमेव गच्छ, इह प्रियस्य मानुषस्य कृते चिन्ता न कार्य्या, एतत् सर्वमस्य कथयित्वा गमिष्यसि येनायं सत्वरमेव त्वामनुगमिष्यतीति। एवमुक्ता सा भद्रा सख्या भयविह्वला प्रियानुरक्तापि तथैव तत् प्रतिपेदे। तिरोदधे च निशान्ते तत्सर्वं विदूषकाय उक्त्वा दत्त्वा च स्वमङ्गुलीयकम्। विदूषकस्तु प्रबुद्धः पूर्वस्मिन् शून्ये देवगृहे स्थित मात्मानमपश्यत् न भद्रां नापि तत् दिव्यं मन्दिरम्। स्मरंश्च विद्याप्रभावं पश्यंश्च तदङ्गुलीयकं विषादविस्मयरसमग्नः किमेतत् स्वप्नविजृम्भितमिति व्यचिन्तयत्। सा मम प्रिया भद्रा निवेद्य सर्वमुदयपर्वतं गता, मया चाशु तत्रैव गन्तव्यं तदवाप्तये। किन्तु राजा लोकैर्दृष्टं मां न खलु परित्यजेत् तदद्य तथा युक्तिं करिष्यामि यथा मे कार्य्यं सेत्स्यति इति संचिन्त्य स महाप्राज्ञः अन्यत् रूप माश्रयन् जीर्णवसनः रजोलिप्ताङ्गः तस्मात् देवीगृहात् हा भद्रे!

कामीति वदन् निरगात्। क्षणे च तस्मिन् तद्देशवासिन स्तं दृष्ट्वा विदूषकोऽयं प्राप्त इति कोलाहलमकुर्वन्। तदाकर्ण्य राजा तं तथाविध मुन्मत्तवेशं दृष्ट्वा अवष्टभ्य स्वमन्दिरं निनाय। तत्र स्निग्धैर्बन्धुभिर्भृत्यैश्च यद्यदुक्तं तत्र तत्र हा भद्रे इति प्रत्युत्तरमदात्। वैद्योपदिष्टैरभ्यङ्गविधिभिरभ्यक्तोऽपि पुनर्भूरिणा भस्मना अङ्गानि उद्धूलयामास। स्नेहेन राजपुत्र्या स्वहस्ताभ्यां य आहार उपाहृतः स तेन सहसा पादेनाहत्य क्षितौ चिक्षिपे चिच्छिदे च नूतनं वसनजातम्। एवं स उन्मत्तवत् कतिचित् दिवसान् तत्रातिष्ठत्। राजा तु अशक्यप्रतिकारोऽयं तत् किं कदर्थ्यते कदाचित् प्राणान् त्यजेद्वा तर्हि ब्रह्महत्या मम भवेत् तदनेन स्वच्छन्दचारिणा यथा चिकीर्ष्यते तत्क्रियतां कालेन कुशलमपि सम्भवेत् इत्यालोच्य तं मुमोच।

अथ स विदूषकः साङ्गुलीयकः स्वच्छन्दचारी भद्रां प्रति समुत्सुकमनाः प्रतस्थे गच्छंश्च प्राच्यां क्रमेण पौण्ड्रवर्द्धनं नाम नगरं प्राप। तत्र च रजन्यां मातरत्र इमां रजनीं नयामीति वदन् कस्याश्चित् वृद्धायाः ब्राह्मण्या मन्दिरमविशत्। सा तु ब्राह्मणी दत्ताश्रया कृतातिथ्या च समुपेत्य सान्तर्दुःखा समब्रवीत् पुत्र! तुभ्यमेव सर्वमिदं गृहं मया दत्तं तद्गृहाण यतोनाहं सम्प्रति जीवामि। कथमेवं ब्रवीषीति विस्मितेनोक्ता तेन सा ब्रवीत् श्रूयतां कथयामि। पुत्र! अस्तीह नगरे देवसेनाख्यो नरपतिः। तस्यचैका भूतलरत्नं कन्यका जाता, राजा

अतिवत्सतः दुःखेन लब्धेति तां दुःखलब्धिकामेव नाम्ना चकार। अथ गच्छता कालेन अतीतशैशवां तां स्ववेश्मनि आनीताय कच्छपनामाय राज्ञे सम्प्रददे स तु कच्छपेश्वरस्तया बध्वा सह वासगृहं प्रविष्ट एव निशि पञ्चताममगमत्। ततो विमनसा राज्ञा पुनः आहूताय अन्यस्मै भूभुजे सा समर्पिता सोऽपि तथैव व्यपद्यत। यदात् तद्भयात् अन्ये नृपा नैव तां वाञ्छन्ति, तदा राजासौ निजं सेनानीं समादिदेश यथा त्वया अस्माद् देशात् प्रत्यहं क्रमेण एकैकः ब्राह्मणः क्षत्रियो वा पुमान् एकैकतो गृहादानेतव्यः। प्रवेशयितव्यश्च मत्कन्यका गृहे पश्यामस्तावत् कियन्तो विपद्यन्तेऽत्रेति। यस्तु तरिष्यति स एवास्या भर्त्ता भविता। नहि दैवगतिः केनापि परिच्छेत्तुं शक्यते इत्यादिष्ट सेनापतिः प्रत्यहं एकैकस्मात् गृहात् पर्यायक्रमेण एकैकं पुरुषं नयति। एवं तत्र वहुशो नराः क्षयं नीता, मन्दभाग्यायाः एक एव पुत्रो वर्त्तते तस्याद्य वारः समायातः, तदभावे च मया प्रातरेवाग्नौ प्रवेष्टव्यम्। तत् जीवन्ती अहं गुणवते तुभ्यं स्वहस्तेन सर्वमिदं वित्तजातं ददामि येनाहं पुनर्जन्मनि एवं दुःखभागिनी न स्यामिति। एवमुक्तवतीं तां धीरो विदूषकः समवोचत् मातः यद्येवं तर्हि मा विक्लवतां गमः, अहं तत्राद्य गमिष्यामि तव पुत्रो जीवतु, कथमेनं घातयामीति कृपा च तत्र माभूत्, ममहि एताहशी सिद्धिरस्ति येन तत्र गतस्य नास्ति मे भयमिति।

एवमभिहिता सा ब्राह्मणी अगादीत् पुत्र! तर्हि

पुण्यैर्मेमायातो गृहं भ तान् कोऽपि भवति, तत्प्राणान् मे देहि । इत्यनुनीतो विदूषकः सायं सेनापतिनियुक्तेन किङ्करेण सह राजसुतागृहमगात् । अद्राक्षीच्च तत्र नृपसुतां तां यौवनमदोद्धतां मिवचितपुष्पभारावनतां लतामिव ततो निशायां शयने राजसुतया आश्रिते स विदूषकः ध्यानोपनत माग्नेयं कृपाणं बिभ्रत् जाग्रन्नेव तस्थौ । प्रसुप्ते च समन्ततो जने सहसा अपावृतकवाटात् द्वारदेशादायान्तं घोरं राक्षसमेकं ददर्श । स च राक्षसः द्वारि स्थितएव वासगृहान्तरे नरशताकाण्डयमदण्डमिव बाहुदण्डं न्यवेशयत् विदूषकस्तु क्रुधा धावन् एकेनैव खड्गप्रहारेण तं रक्षसो बाहुं चिच्छेद । छिन्नबाहुश्च स निशाचरः तस्य विदूषकस्य सत्त्वोत्कर्षात् सन्त्रस्तः सत्वरमेव तस्मात् देशात् पलायाञ्चक्रे । राजपुत्री तु प्रबुद्धा वीक्ष्य पतितं राक्षसबाहुं भीता हृष्टा विस्मिता च बभूव । राज्ञा च प्रातरागत्य तत् कन्यकान्तःपुरद्वारि स्थितः छिन्नच्युतो बाहुरदृश्यत । ततः सञ्जातहर्षो नृपतिः दिव्यप्रभावाय महात्मने विदूषकाय तां कन्यां बहुविभवसहितां प्रादात् । अथ विदूषकस्तत्र तया कान्तया रूपवत्येव सम्पदा परिचर्य्यमाणः कतिचित् दिनानि तस्थौ । कदाचित् सुप्तां राजपुत्रीं निशि विहाय तां भद्रां प्रति समुत्सुकः तस्मात् देशादपससार । राजपुत्री तु प्रातस्तममासादयन्ती भृशं दुःखिता पित्रा नृपेण विदित जामातृप्रभावेण कथञ्चित् पुनः प्रत्यावर्त्तनाशया समाश्वासिता ।

सोऽपि विदूषकः अहरहर्गच्छन् क्रमात् पूर्वसागरा-

द्दूरवर्त्तिनीं ताम्रलिप्तिकां नाम नगरीं मासमाद। चकार च तत्र केनापि अब्धेः पारं यियासुना वणिजा स्कन्ददासाभिधानेन सह मैत्रीम्। प्रतस्थे च तत्साहाय्येन तदीयमनल्पधनसम्भृतं यानपात्रमारुह्याम्बुधिवर्त्मना। अथाकस्मात् समुद्रान्तरुपागतं तत् यानपात्रं व्यासक्तमिव केनचित् संरुद्धमभवत्। पोतस्वामिना तु रत्नादिना समर्च्चितोऽपि अर्णवे यदा तत् यानपात्रं न चचाल तदासौ पोतवणिक् भयमार्त्तः समभ्यधात् यो हि मे प्रवहणमिदं संरुद्धं मोचयेत्, तस्मै स्वधनार्द्धं, स्वाञ्च कन्यकां दास्यामि। तदाकर्ण्य धीरचेता विदूषकः प्राह अहमत्रावतीर्य्य अम्बुधेर्जलं विचिनोमि मोचयामि च क्षणादेव तव प्रवहणम्। यूयं पाशैरज्जुभिर्मां बद्धा अवलम्बध्वं, विमुक्ते प्रवहणे युष्माभिर्वारिमध्यादवलम्बनरज्जुभिरहमुद्धर्त्तव्यः। तथेति तद्वचसि वणिजा तेनाभिनन्दिते कर्णधारास्तं विदूषकं रज्जुभिः कक्ष्ययोर्बबन्धुः। विदूषकस्तु तथाबद्ध एव वारिराशौ अवततार न ह्यवसरे सत्त्ववद्भिरवसद्यते ?। वीरः स विदूषकः ध्यानोपस्थितमाग्नेयं कृपाणं करे धृत्वा प्रवहणस्य अधोमध्ये च विवेश। ददर्श च तत्र सुप्तमेकं महाकायं पुरुषं तस्य जङ्घायाञ्च यानपात्रं रुद्धम्। दृष्ट्वैव स खड्गेन तस्य तां जङ्घां चिच्छेद, रोधमुक्तञ्च तत् प्रवहणं तत्क्षणात् चचाल। तद्दृष्ट्वैवासौ वणिक् पापात्मा प्रतिपन्नार्थदानकातरः तस्य विदूषकस्य ता रज्जुश्छेदयामास। प्रापचाम्बुनिधेः पारमतिवेगगामिना प्रवहणेन। विदूषकस्तु छिन्नरज्जुर-

मग्नः सागरमध्यपतितः कथञ्चिदुन्मज्ज्य तत् तथा दृष्ट्वा धीरः स्वयमचिन्तयत् किमिदं तेन वणिजा पापेन कृतं अथवा किमन्यत् कृतघ्नानां धनलोभान्धानां चरितम्? तदेष: अधैर्य्यस्यं न समयः न हि सत्त्वावसादः स्वल्पामपि आपदं व्याहन्तुमीष्टे तस्मात् प्राप्तकाल एव उपाय आश्रयणीय इत्यवधार्य्य तां तस्य अन्तर्जलसुप्तस्य पुंसः छिन्नां जङ्घामारोह ततार च तयैव नावेवाम्बुराशिम्। दैवमेव साहायकं कुरुते सत्त्ववताम्। मारुतिमिव रामदूतं तं अम्बुधिपारगतं वलवन्तं विदूषकमाकाशभवा भारती एवमुवाच साधु साधु विदूषक! त्वदन्यः कः सत्त्ववान् तवानेन धैर्य्येण अतिप्रीतास्मि, शृणु मद्वचनं सम्प्रति नग्नविषयकं प्राप्तोऽसि अस्मात् सप्तभिर्दिनैः कर्कोटकाख्यं नगरं प्राप्स्यसि, ततो लब्धधृतिः शीघ्रमीप्सितं लप्स्यसे। अहं पूर्वं तवाराधितस्तनूनपात्, मत्प्रभावाच्च इदानीं त्वां क्षुत्तृष्णा च न क्लेशयिष्यति। तद्गच्छ सिद्ध्यै इत्येवं विश्रब्धं व्यादिश्य सा भारती व्यरंसीत्।

विदूषकश्च तदाकर्ण्य देवमग्निं प्रणम्य हर्षितः प्रतस्थे प्राप च सप्तमेऽहनि कार्कोटकं पुरम्। प्रविवेश च तत्र कञ्चित् मठं आर्य्यैरभ्यागतप्रियैर्नानादेशोद्भवैस्तैस्तैर्द्विजैरधिष्ठितं श्रीमता तत्रत्येन नृपतिना आर्य्यवर्म्मनामकेन निर्म्मितं सम्यक् सप्रयसौवर्णहृद्यदेवगृहान्वितम्। तत्र सर्वैः कृतातिथ्यमतिथिं विदूषकमेको ब्राह्मणः स्वगृहं नीत्वा स्नानभोजनादिना समुपाचरत्। सायञ्च तत्र मठे स्थितः स विदूषकः पुरे घोष्यमाणं सपटहमिदं वचः

शुश्राव ब्राह्मणो वा क्षत्रियो वा यः नृपात्मजां परिणेतु-मिच्छति सऽद्य रात्रौ तद्गृहे वसतु। तदाकर्ण्य स प्रियसाहसः विदूषकः तत्क्षणमेव राजसुतावासं गन्तु-मैहत। मठविप्रास्तमूचुः ब्रह्मन्! मा साहसं कृथाः राजसुतासदनमेतत् मृत्युद्वारमवगच्छ, यो हि क्षपायां तत्र विशति स पुनर्न जीवति,बहवः साहसिकाः पुरुषाः क्षयं गता इति। एवमभिहितोऽपि स अनङ्गीकृततद्व-चनः राजकिङ्करैः सार्द्धं तद्भवनमेव ययौ। तत्रार्थ्यवर्म्मणा राज्ञा स्वयमभिनन्दितः सायमर्क इवानलं तत्सुतावासम-विशत्। अपश्यच्च तत्र राजदुहितरं अनुरागवतीं नैराश्य-दुःखविधुरं पश्यन्तीं सजलनेत्राम्। आसीच्चात्र जाग्र-देव करेण तमाग्नेयं कृपाणं वहन्। अकस्माच्च महाघोरं राक्षसमेकं छिन्नदक्षिणबाहुं प्रसारितवामभुजं द्वारि आयान्तमवलोक्य व्यचिन्तयत् हन्त सोऽयं निशाचरः, यस्य बाहुर्मया पौण्ड्रवर्द्धने नगरे छिन्नः तदस्य बाहौ पुनर्न छेत्स्यामि, तथात्वे अयं पलाय्य पूर्ववत् स्थानान्तरं उप-द्रवेत् तस्मादेनं निहन्मि इत्यालोच्य प्रधाव्य तस्य केशेष्वा-कृष्य शिरश्छेत्तुमुपचक्रमे। तत्क्षणञ्चासौ राक्षसः सन्त्रस्तस्तमुवाच महासत्त्व! मा मां वधीः, क्षमां मयि कुरुष्व। अथ तेन वीरेण विदूषकेण किमाख्यस्त्वं काचेयं तव चेष्टा इति पृष्टः मुक्तश्च स निशाचरः पुनराह भद्र! अहमस्मि यमदंष्ट्रोनाम, मम द्वे इमे सुते आस्तां इयमेका अपरा सा पौण्ड्रवर्द्धननन्दिनी। अवीरपुरुषासङ्गात् नृपा-त्मजे इमे रक्षणीये इत्येवमीदृशः शङ्करस्य आज्ञाप्रसादो

समाभूत्। तथादौ एकेन मे दक्षिणो बाहुः पौण्ड्रवर्द्धने छिन्नः, त्वयाचाद्य जितोऽस्मीह तत् समाप्तमिदं मम व्रतम्। तदाकर्ण्य विहस्यचाब्रवीत् विदूषकः, मयैव ते स भुजः पौण्ड्रवर्द्धने छिन्नः, राक्षसोऽवदत् तर्हि देवांशस्त्वं न मानुषः, मन्ये त्वदर्थएवासौ शङ्करानुग्रहः समभवत् तदिदानीं त्वं मे सुहृत् संवृत्तः, यदा च मां स्मरिष्यसि तदाहं ते सन्निधौ सङ्कटेष्वपि सिद्धये सन्निधास्ये। एवं स राक्षसः मैत्रेण विदूषकं वरयित्वा तदभिनन्दितवचास्तत्क्षणमेव तिरोदधे। विदूषकोऽपि सानन्दं राजपुत्र्या तया सह तां निशामनयत्। प्रातश्च ज्ञातवृत्तान्तो महीपतिः सन्तुष्टः शौर्य्यैकपताकामिव तां कन्यां बहुविभवसंयुतां तस्मै प्रादात्। स च तया सह तत्र पदात् पदमसुञ्चन्त्या गुणाकृष्टया लक्ष्म्येव कतिचित् रात्रीरतिष्ठत्। एकदा च निशि भद्राप्रणयोत्सुकः स्वैरं तस्मात् राजभवनात् सम्मतस्थे लब्धदिव्यरसास्वादोहि रसान्तरेण न परितृप्येत्। नगराच्च विनिर्गम्य तं कृतमैत्रं राक्षसं सस्मार, उवाच च स्मृतमात्रागतं कृताञ्जलिं सखे! सिद्धक्षेत्रे उदयाद्रौ मया गन्तव्यं भद्रासन्दर्शनाय, अतस्त्वं तत्र मां नय। तथेत्युक्तवन्तं तं राक्षसमारुह्य स विदूषकः तथैव रात्र्या दुर्गमां षष्टियोजनीं शीतोदां नदीं प्राप। प्रातश्च मानुषैरलङ्घ्यां तां नदीं तीर्त्वा उदयाद्रि सकाशमियाय। अयं पर्वतः उदयो नाम तव पुरो वर्त्तते अस्योपरि सिद्धधाम्नि न मम गतिरस्तीति व्याहृत्य तिरोहिते प्रासानुज्ञे तस्मिन् रात्रिञ्चरे विदूषकस्तत्र

रम्यामेकां दीर्घिकां दृष्ट्वा तस्याः स्वागतमिव वदन्त्या भ्रमद्भ्रमरगुञ्जितैः प्रफुल्लपद्मवनविराजितायास्तीरे निषसाद ददर्श च स्वीयामिव सुविस्तरां अयं तव प्रियागृहमार्ग इति प्रदर्शयन्तीमिव पदपङ्क्तिम्। तत्रोपविष्टस्य अलङ्घ्योऽयं गिरिर्मानवैस्तदिहैव स्वयं निवसामि पश्यामि कस्येयं पदपद्धतिरित्येवं चिन्तयतस्तस्य तत्र तोयार्थं कतिपयाः गृहीतकाञ्चनघटाः सुरम्या योषितः समाययुः। वारिपूरितकलसाश्च ताः सविनयमपृच्छत् विदूषको महाभागः। कस्येदं सलिलं नीयते भवतीभिरिति। ताः समब्रुवन् भद्र! अस्मिन् पर्वते भद्रा नाम विद्याधरी, तस्याः स्नानार्थमिदमुदकम्। विचित्रा खलु दैवगतिः। तत्रैका महिला सहसा तमब्रवीत् महाभाग! मम स्कन्धे कुम्भोऽयमुत्क्षिप्यतामिति। तथेति स बुद्धिमान् तस्याः स्कन्धोत्क्षिप्ते घटे पूर्वं भद्रया दत्तं तदङ्गुलीयकं निदधे। उपाविशच्च तत्रैव सरस्तटे पूर्ववत्। ताश्च स्त्रिय स्तत् सलिलमादाय भद्रागृहं ययुः। यावत् ताभिस्तस्या भद्रायाः स्नानोदकं दीयते तावत् तस्या उत्सङ्गे तत् रत्नाङ्गुलीयकं सहसा न्यपतत्। तद्दृष्ट्वा जातप्रत्यभिज्ञासौ भद्रा ताः योषितः पप्रच्छ सख्यः! दृष्टः किं युष्माभिः कश्चिदपूर्वः पुरुष इति। ताश्चोचुः सखि! दृष्टोऽस्माभिरेको युवा मानुषो दीर्घिकातटे, तेन च घटोऽयमुत्क्षिप्त इति। भद्रावोचत् शीघ्रं मत्कृतस्नानमज्जनमिहैव तमानयत सहि मे भर्त्ता समागतः। एवमुक्ताभिर्नारीभि स्तत्र वापीतटे गत्वा यथावृत्तं निवेद्य

स्नापितानुलिप्तश्च विदूषकः प्रियान्तिकमनीयत। गत्वा च सः चिरात् मार्गोन्मुखीं प्रियां निजसत्त्वतरोः पक्वां फलश्रियमिव भद्रामपश्यत्। सापि दृष्ट्वा उत्थाय हर्षवाष्पाम्बुशीकरैर्दत्तार्घेवास्य कण्ठे भुजलतास्रजं बबन्ध। परस्पराश्लेषतश्च तयोः स्वेदच्छलादिव अतिपीड़नात् चिरसम्भृतः स्नेहः सस्यन्दे। अथान्योन्यमुपाविष्टौ अविच्छिन्नदर्शनौ उभौ शतगुणामिव उत्कण्ठामुदूहतुः। कथमिमां भूमिमागतोऽसीति भद्रया पृष्टस्तत्कालं विदूषकः समभ्यधात् गुणवति! भवत्स्नेहमालम्ब्य प्राणसंशयानारुह्य बहून् इह सम्प्राप्तः किमन्यद् ब्रवीमि? तदाकर्ण्य तस्य अनपेक्षितजीवितां प्रणयितां दृष्ट्वा स्नेहात् तमभाषत आर्य्यपुत्र! न मे सखीभिः सिद्धिभिश्च कार्य्यं, त्वं मे प्राणः, हे प्रभो! गुणैः क्रीतास्मि ते दासीति। विदूषकोऽब्रवीत् प्रिये! तर्हि दिव्यमिमं भोगं मुक्त्वा उज्जयिनीं वस्तुं मया सहागच्छ। भद्रापि तथेति सपदि तद्वचः प्रत्यपद्यत जहौ च तत्सङ्कल्पपरिभ्रष्टा विद्यास्तृणवत्। ततस्तया सह तां निशां तत्र नीत्वा प्रातस्तस्मादुदयाद्रेः प्रियासखोऽवतीर्य्य तं यमदंष्ट्रं राक्षसं सस्मार। स्मृतमात्रागतस्य च तस्य स्कन्धे समारुह्य प्रियामुत्सङ्गे निधाय गन्तव्याध्वक्रमं तस्मै निशाचराय उक्त्वा प्रतस्थे। सापि भद्रा तदत्युग्र राक्षसस्कन्धाधिरोहणक्लेशं सेहे, अनुरागपरायत्ता हि नार्य्यः किमिव न कुर्वते।

अथ क्रमेण विदूषकस्तत् कार्कोटकं पुरं प्राप। आगत्य च आर्य्यवर्म्माणं स्वां भार्य्यां ययाचे। तेन च दत्तां तां भार्य्यां गृ-

गृहीत्वा पूर्ववत् राक्षसारूढ़:, सम्प्रतस्थे। ततश्च अम्बुधेस्तटे येन पूर्वमस्य वारिधौ चिप्तस्य रज्जवश्छिन्ना: तं पापं वणिजं गत्वा तस्य सुतां धनै: सह प्राक्प्रतिश्रुतां जहार मेने च धनापहारमेवास्य वधं कदर्य्याणामर्थसञ्चया हि प्रायेण प्राणा एव। ततः स राक्षसरथमारूढ़ एव भद्रया राजपुत्रा तया वणिक्सुतया च सह नभ उत्पपात ततार च पूर्वसागरम्। अथ पुनस्तत् पौण्ड्रवर्द्धनं नगरमासाद्य सविस्मयं सर्वै: पौरैर्वीच्यमाण: राजभवनमाविशन् तां चिरविरहोत्सुकां देवसेननृपसुतां प्रियां सम्भावयामास। तत्पित्रा अनुरुध्यमानोऽपि उज्जयिनीं प्रति समुत्सुक स्तां राजसुतां गृहीत्वा प्रायात्। क्रमेण नानाजनपदानतीत्य राक्षसवेगत: शीघ्रमेव उज्जयिनीमाससाद। ततः समन्तात् विस्मितविचस्ते पौरजने राजा आदित्यसेन: विदितवृत्तान्त: अस्य प्रत्युद्गमनाय पुरो निरगात्। विदूषकस्तु दूरात् तं श्वशुरमागच्छन्तं दृष्ट्वा सपदि तस्मात् रक्षसोऽवतीर्य्य सप्रणामं नृपमभ्यगात् राजापि तं भृशमभ्यनन्दत्। ततस्ता: समस्ता: पत्नीरवताय्य राक्षसं कामचाराय व्यसर्जयत्। तस्मिंश्च राक्षसे गते स विदूषक: स्वभार्य्यै: श्वशुरेण साकं राजभवनमविशत्। गत्वा चान्त:-पुरं तस्य तनयां प्रथमप्रेयसीं सुचिरविरहोत्कण्ठितां भृशमानन्दयत्। अथ राज्ञा कथमेतास्त्वया भार्य्या: प्राप्ता:, कथञ्च राक्षसोऽयं वशीकृत इत्येवं पृष्ट: सर्वं यथावृत्तमस्मै कथयामास। ततः प्रभावतुष्टेन कार्य्यज्ञेन महीभुजा तस्मै जामात्रे निजराज्यार्द्धं प्रदत्तम्।

ततश्च स विप्रोऽपि विदूषकः समुच्छ्रितसितच्छत्रो विधूतोभयचामरः राजा अभूत्। तदा च माङ्गलिकतूर्य्यनादेन पौरजन हर्षनिनादेन च सा पुरी उज्जयिनी प्रहर्षमुक्तनादेव रराज। क्रमेण च स स्वप्रभावेण समग्रां महीं जित्वा, अखिल-राजमुकुटचर्च्चिताङ्घ्रिकमलस्ताभिर्मनोरथप्रियाभिश्चिरं विगतमत्सराभिररंस्त ।

एवमनुकूले दैवे निजं सत्त्वमेव धीराणां लक्ष्म्याः समाकर्षणसिद्धो मन्त्रो भवति ।

इत्थं वत्सराजमुखात् विचित्रां कथामाकर्ण्य ते पार्श्वस्थाः सर्वे मन्त्रिणः देव्यौ च परां प्रीतिमवापुः ।

इत्यष्टादशस्तरङ्गः ।

—*—

## अथोनविंशस्तरङ्गः ।



अथ तत्र यौगन्धरायणः वत्सेश्वरमब्रवीत् देव ! तव पौरुषं दैवेन दत्तहस्तावलम्बं वर्त्तते, वयञ्च नीतिशास्त्रे किञ्चित् कृतश्रमाः, तत् यथाभिलषितं शीघ्रं दिशां विजये यतस्व । इत्युक्तो मन्त्रिमुख्येन राजा प्राह अस्त्वेतत् कार्य्यसिद्धयस्तु बहुविघ्नाः, अतस्तदर्थं तपसा शम्भुमाराधयामि, तत्प्रसादेन विना न हि वाञ्छितार्थसिद्धयो भवन्ति । तदाकर्ण्य मन्त्रिणस्तदस्य अभिप्रेतमनुमेनिरे ।

ततस्त्रिरात्रोपोषितं सह देवीभ्यां मन्त्रिभिश्च तपस्यन्तं तं शम्भुः स्वप्ने समादिशत् तुष्टोऽस्मि ते वत्स! उत्तिष्ठ निर्विघ्नं जयमाप्स्यसि सर्वविद्याधराधीशं पुत्रञ्चाचिरादिति। ततः स राजा अपगततपःक्लेश एव सहसा बुबुधे समनन्दयञ्च प्रातः स्वप्नवृत्तान्तेन तेन व्रतोपवासक्लान्ते कुसुमसुकुमारे देव्यौ सचिवांश्च। अथान्येद्युः कृतयथोचितव्रतपारणं तपसा पूर्वजैः समप्रभावं राजानं यौगन्धरायणः समभाषत देव! त्वमेव धन्यः यस्य भगवान् हरः प्रसन्नः तदिदानीं रिपून् जित्वा कुलक्रमागतां लक्ष्मीं भज। स्वधर्मसमुपार्जिता हि लक्ष्मीर्भूभृतामन्वये स्थिरा भवति, पश्यतु देवः चिरभूमिष्ठोऽपि पूर्वजसम्भृतः निधिः प्रनष्टो भवता लब्ध इत्यत्र कथामेतां शृणु।

आसीत् पुरा पाटलिपुत्रे नगरे देवदासो नाम कश्चित् महाधनो महाकुलीनश्च वणिक्पुत्रः। स हि पौण्ड्रवर्द्धने नगरे समृद्धस्य कस्यापि वणिजः सुतामुदवोढ़। कालेन पितरि पञ्चत्वमुपागते स देवदासः क्रमेण व्यसनासक्तः द्यूतेन सर्वं धनमहारयत्। ततश्च तस्य भार्य्या दुःखदारिद्र्यसंयुता श्रुत्वा तत्पित्रा पौण्ड्रवर्द्धनादागत्य स्वालयमनीयत। अथ गच्छता कालेन स देवदासः पुनर्विपत्खिन्नः स्वकर्म्मणि स्थातुमिच्छन् मूल्यार्थी श्वशुरं याचितुं तद्गृहं प्रययौ। सायञ्च तत्रोपस्थितः आत्मानं रजसा ध्वस्तं मलिनवसनञ्च वीक्ष्य व्यचिन्तयत् कथमीदृशोऽहं श्वशुरवेश्मनि प्रविशामि वरं मानिनो मृत्युर्न दैन्यं बन्धुसमीपे इत्यालोच्य आपणे गत्वा क्वापि विपणौ बहिः

सङ्कुचितः नक्तं कमलोपमस्तस्थौ । अथाच तस्यां विपर्य्यौ कश्चित् युवानं प्रविशन्तं तद्नन्तरञ्च तत्र निःशब्दपद-सञ्चारमागतां कामपि स्त्रियं व्यलोकयत् । ततश्च तदन्तराले ज्वलत्प्रदीपे यदासौ दृष्टिमदात्, तदा तामेव निजां गेहिनीं प्रत्यभिज्ञातवान् । दुःखाग्निहतश्चाचिन्तयत्, धनहीनेन देहो हार्य्यते, स्त्रीषु का कथा, यासां विद्युतामिव नैसर्गिकं चापलम् । इत्येवं चिन्तयन् स वहिःस्थित एव रतान्तविश्रम्भजुषः स्वकान्तायाः कथालापमिव अशृणोत् । अथ द्वारावकाशदत्तकर्णे अवहिते तस्मिन् सा पापा रहसि उपपतिमब्रवीत्, कान्त ! शृणु कथयामि ते किञ्चित् रहस्यं मम भर्त्तुः प्रपितामहः वीरवर्म्मा नाम पुराभूत् तेन स्वगृहाङ्गणे चत्वारः स्वर्णपूरिताः कुम्भाश्चतुर्षु कोणेषु गूढं निहिता इति स केवलमेकस्यै स्वभार्य्यायै कथितमासीत् सा चान्तकाले स्नुषायै तदुक्तवती, सापि स्नुषायै मम श्वश्र्वै मम श्वश्रूश्च मह्यम् । तदेतत् मया दरिद्रस्यापि मत्पतेर्न कथितं स हि द्यूतकरत्वात् मम द्वेष्यः, त्वन्तु मे परमः प्रियः, अतस्त्वया तत्र गत्वा मद्भर्त्तुः सकाशात् धनैस्तत् गृहं क्रीत्वा तत् सर्व्वं सुवर्णमादाय इहागत्य सुखेन मां भजस्व । एवमुक्तस्तया पापया स जारः वणिक् अश्रमस्थे तुतोष मेने च लब्धं निधिमयत्नत एव । देवदासोऽपि तस्याः कुलटाया वाक्शल्येन नितरां निहतोऽपि हृदये धनाशामादधत् सद्य एव पाटलिपुत्रकमगमत्, स्त्रीचकार चागत्य तत्सद्मं निहितं सुवर्णराशिम् ।

अथासौ जारः वाणिज्यव्याजेन निधिलोलुपस्तं देशमागत्य देवदाससकाशात् तद् गृहमक्रीणात्। देवदासोऽपि भूयसा मूल्येन तद्गृहं तस्मै दत्त्वा पुनरन्यत्र गृहादिकं निर्माय श्वशुरवेश्मन स्वां स्वगेहिनीं शीघ्रमानिनाय। अथ तद्भार्याच्छन्नकामुकः स वणिक् एकदा अलब्धनिधिस्तं देवदासमभ्येत्याब्रवीत् एतद् तव गृहमतिजीर्णं न मह्यं रोचते, तद् देहि मे मूल्यं गृहाण च स्वगृहम्। इत्येवं जल्पन् स वणिक् देवदासश्च विब्रुवन् उभौ विवदमानौ राजान्तिक मुपजग्मतुः। देवदास स्तत्र राजान्तिके वचस्त्वविषदुःसहं स्वभार्यावृत्तान्तं कृत्स्नं न्यवेदयत्। ततश्च राजा तस्य भार्यामानाय्य तत्त्वमन्विष्य तं पारदारिकं वणिजं सर्वस्वमदण्डयत्। देवदासोऽपि तां कुलटां कृत्तनासां कृत्वा अन्यां परिणीय लब्धनिधिः सुखमुवास।

इत्थं धर्म्मोपार्ज्जिता लक्ष्मी रासन्तान मनपायिनी, इतरा तु जलापाततुषारकणेव नश्वरी। तस्माद् धर्म्मेणार्ज्जयितुं यतेत विशेषतः राजा यतो धनमेव राज्यतरोर्मूलम्। अतः सिद्धये मन्त्रिमण्डलं यथावत् सम्मान्य धर्म्मेण श्रियमर्जयितुं दिशो विजयस्व। श्वशुरयो मैत्रप्रसक्त्यनुप्रसक्तितः बहवो राजानो न विकुर्वते प्रत्युत मिलन्ति च, यस्त्वेष ब्रह्मदत्तोनाम वाराणस्यां भूपतिरस्ति, स एव ते नित्यवैरी, तमेवादौ विजयस्व, तस्मिंश्च जिते प्राचीं ततः क्रमेणाखिला दिशः जेष्यसि। इत्थं कुरुष्व पाण्डोर्यशःकुमुदं समुज्ज्वलम्। इत्युक्तो मन्त्रि-

मुख्येन वत्सराजः प्रकृतिषु विजयोद्यतः प्रयाणारम्भमादि-
शत्। तदानीञ्च नृपतिः सुनीतिज्ञः सत्कारार्थं श्वशुर-
सुताय गोपालकाय वैदेहराज्यमददात् पद्मावतीभ्रात्रे
च सिंहवर्मणे स्वसैन्यसमागताय सम्मान्य चेदिराज्यम्।
ततश्च स विभुः भिल्लराजं पुलिन्दकं नाम बलैर्व्याप्तदिग-
न्तरं प्रावृट्कालमिवाम्बुदैर्मित्रमानाययत्। तस्य महारा-
जस्य राष्ट्रे महतो यात्रासंरम्भात् शत्रूणां हृदयं भृशमाकुलञ्च
समजायत। यौगन्धरायणश्चाग्रे ब्रह्मदत्तस्य विचेष्टि
जिज्ञासुर्वाराणसीं प्रति चारान् प्राहिणोत्। ततः शुभे-
ऽहनि जयशंसिभिः सुनिमित्तैः सुप्रीतो वत्सेश्वरः समुच्छ्रि-
तच्छत्रं प्रोत्तुङ्गं जयकुञ्जरं प्रफुल्लैकतरुं गिरिमिव समा-
रूढो दुर्मदो द्विपेन्द्र इव प्राप्तया सिद्धिदूत्येव अतिसुगमं
स्वल्पाम्बुनिम्नगं मार्गं दर्शयन्त्या शरदा दत्तसम्मोदः सम-
न्ततो महद्भिः सैनिकैर्भुवस्तलमकाण्डनिर्मेघवर्षासमयवि-
भ्रमं कुर्वन् प्रथमं प्राच्यां ब्रह्मदत्तं प्रति प्रययौ। समा-
गच्छतश्च तस्य सेनानिर्घोषप्रतिनादाकुलीकृताः दिशः पर-
स्परं तदागमभयमिवाचख्युः। तस्य च काञ्चनसन्नाह
सम्भृतार्कप्रभासुरङ्गा नीराजनप्रीतपावकानुगता इव
चलन्तिस्म। गजाश्चास्य श्वेतचामरालङ्कृतश्रवणा
विगलद्गण्डसिन्दूरशोणदानजलाः शरत्पाण्डुराभ्रोदाल-
ङ्कृतशिखराः स्रवद्धातवो भीतैर्भूधरैर्यात्रानुप्रेषिताः
स्वार्भका इव पथि व्यराजन्त। नैवायं नृपः परेषामूर्जितं
तेजः प्रसहते इतीव भूरेणुभिरर्कतेजस्तिरोदधे। ते द्वे
देव्यौ मार्गे नयगुणाकृष्टे मूर्त्तिमत्यौ कीर्त्तिजयश्रिया-

विव तं नृपमनुजग्मतुः। पवनाचिप्तविचिप्तैश्च तस्य सैनिकध्वजांशुकैर्नमत वापलायध्वमितीव विद्विषः प्रोचिरे। एवं स राजा समाकृष्टचतुरङ्गसैनिकः परितः शरत्कुसुमसिताम्बुजान् दिग्विभागान् स्वयशोभिः परीतानिव पश्यन् ययौ।

अत्रान्तरे यौगन्धरायणोपदिष्टास्ते चारा धृतकापालिकव्रताः पुरीं वाराणसीं प्रापुः। तेषाञ्चैकः कुहकाभिज्ञो ज्ञानित्वमुपदर्शयन् गुरुरभवत् अपरे च तच्छिष्यभूतास्तमनुजग्मुः।

ते च शिष्या आचार्य्योऽयमस्माकं त्रिकालज्ञ इति व्याजगुरुं तं भिक्षाशिनमितस्ततः ख्यापयामासुः। स ज्ञानी पृच्छतां सकाशे यत् अग्निदाहादिक मुवाच तच्छिष्याः गुप्तं तत् चक्रिरे तेन स नितरां पप्रथे। क्रमेण च स कपटाचार्य्यः क्षुद्रसिद्ध्या रञ्जितं तत्रत्यं नृपवल्लभं कमपि राजपुत्र मुपासकमलभत। अभवच्च तस्मिन् सम्प्राप्ते वत्सेशसंग्रामे शुभाशुभं पृच्छत स्तन्मुखेन ब्रह्मदत्तस्य नरपतेः रहस्यज्ञः। अथास्य ब्रह्मदत्तस्य मन्त्री योगकरण्डकः वत्सेश्वरस्य आगच्छतः पथि विविधान् कपटप्रयोगानकरोत्। प्रतिपथं विषादिद्रव्यसंयोगैः दुष्यान् कुसुमलताः तोयानि तृणानि च दूषयामास। सैन्येषु पण्यविलासिनी विषकन्याः निशासु छद्मघातिनः पुरुषांश्च न्ययोजयत्। तच्च सर्वं विज्ञाय स ज्ञानिशिष्यो चारः स्वानुचरैः सत्वरमेव यौगन्धरायणाय न्यवेदयत्। यौगन्धरायणश्च तत्सर्वं बुद्ध्वा पथि दूषितं तत्तृणतोया-

द्रिकं प्रतियोगैर्व्यबोधयत् । कटकेषु च अपूर्वस्त्रीसमायोगं न्यषेधत् निजघान च तान् छद्मवधकान् सह वमथस्तता । ततश्च प्रतिज्ञातं मायया तं सैन्यपूरितदिगन्तरं वत्सेश्वरम-मन्यत दुर्जयं ब्रह्मदत्तः । अथ स ब्रह्मदत्तः सम्मन्त्र मन्त्रिभिः दूतञ्च विसर्ज्य स्वयं शिरोबद्धाञ्जलि निकटी-भूतं तं वत्सेश्वरमभ्यगात् । वत्सराजोऽपि तं प्रदत्तोपा-यन मुपस्थितं प्रणतं नृपं ब्रह्मदत्तं प्रीत्या सम्मानया-मास शूराहि प्रणतिप्रियाः । इत्थं तस्मिन् ब्रह्मदत्ते वि-जिते स शूरः प्राचीं शमयन् वायुरिव नमयन् चदून् उन्मूलयंश्च कठिनान् द्रुमानिव नृपान् चलद्वीचिविलो-लितं गङ्गावजयविश्वास वेपमानमिवाम्बुधिं प्राप्यमियाय । निचखान च तस्य वेलातटान्ते पातालादभय याच्ञार्थ-मुद्गतं नागराजमिव जयस्तम्भम् । ततः कलिङ्गैरग्रगा-मिभि रवनतैस्तस्य करे दत्ते यशस्विनस्तस्य यशः महे-न्द्राद्रिमारुरोह । तत्र राज्ञा मुपायनीकृतैर्गजैर्भीतैर्वि-न्ध्याद्रिकूटैरिवागतैरनुगतो दक्षिणां दिशं ययौ । तत्र शर-त्काल इवाम्बुदान् शत्रून् निःसारपाण्डुरान् अपगर्जितान् पर्वताश्रयिणश्च चकार । तेन सम्मर्दं कारिणा उल्लङ्घ-माना कावेरी तत्रत्यचोलकानामधीशस्य कीर्त्तिश्च समं कालुष्यं ययतुः । स वत्सराजः मुरलानां मूर्द्धसु तत्कान्ता च क्षारैराहन्यमानेषु कुचेषु उन्नतिं समं न सेहे । तस्य मातङ्गा यत् गोदावरी पयः सप्तधा विभिन्नं पपुः तत् मद-व्याजात् सप्तधैव अमुञ्चन्निव । अथ स वत्सेशः रेवामु-त्तीर्य्य उज्जयिनीमगात प्रविशश्च तां चण्डमहासेनेन

श्वशुरेण पुरस्कृतः। अगमच्च सत्वरालोकन सम्भ्रमात् श्रथमाल्यधम्मिल्ल शोभाद्वैगुण्यशालिनां मालवमहिलाकटाक्षाणामेकलक्ष्यताम्। तत्र श्वशुरेण सत्कृतस्तथानिर्वृतस्तस्थौ यथाभीष्टानपि स्वदेशजान् भोगान् विसस्मार। वासवदत्ता तु पित्रोः पार्श्ववर्त्तिनी सौख्येऽपि शैशवं स्मरन्ती विमना इवा तिष्ठत्। राजा चण्डमहासेन स्तया तनयया यथा तथैव पद्मावत्या समागतः सातिशयमनन्दत्। तत्र काश्चित् निशा अतिवाह्य प्रीतः श्वाशुरैः सैनिकैरन्वितः पश्चिमां दिशं प्रययौ। तस्य असिलता नूनं प्रतापानल धूमिका, यत् लाटनारीणामुदश्रुकलुषाक्षत्वञ्चकार। असौ नृपः मामुन्मूल्य अम्भोधिं पुनर्मन्थिष्यति नूनमितीव तद्गजाधूतवनो मन्दरः प्रावेपत। सत्यमयं कोऽपि सूर्य्याचन्द्रमसोर्विलक्षणः प्रतीच्यामुदय मुदयनः प्रापेति तत्रत्या अमन्यन्त। ततः स नृपतिः कुवेरतिलकामङ्कशंसिनीमलकामिव कैलास हाससुभगामाशामभिजगाम। तत्र सिन्धुराजं विजित्य हरिसैन्यैरनुद्रुते राघव इव राक्षसान् म्लेच्छान् वशमनयत्। क्षुब्धस्याब्धेरूर्मय इव तुरुष्काणां तुरगव्रातास्तं दलशोऽन्ययुः। ततो गृहीतारिकरः श्रीमान् वत्सेश्वरः पापस्य राहोरिव पारसीकपतेः पुरुषोत्तमः शिरश्चिच्छेद। ततो हूनान् जयतस्तस्य मुखरीकृतदिङ्मुखा द्वितीयेव गङ्गा कीर्त्ति र्हिमाचले विचचार। नदन्तीषु सेनासु भयाकुलानां विद्विषां प्रतीपः शैलरन्ध्रेषु निनादः केवलं शुश्रुवे। कामरूपेश्वरः अपच्छत्रेण शिरसा तं वत्सराजं नमन् यत् विच्छायतामगात्

तत्र चित्रम्। सम्राट् वत्सराजः तद्दत्तैः नागैरन्वितः तस्मात् विवव्रते। एवं स वत्सेश्वरः वसुधां विजित्य सपरिच्छदः पद्मावतीपितुर्मगधराजस्य पुरं प्राप। मगधेश्वरोऽपि देवीभ्यामन्विते तस्मिन् जामातरि उपस्थिते निशाज्योत्स्नावति चन्द्रे स्मर इव महोत्सवः संवव्रते। स मगधपतिः प्रथममविज्ञातस्थितां तदनु प्रकाशं गतां वासवदत्तामधिकप्रश्रयास्पदममन्यत। अथ स विजयी वत्सराजः तेन मगधराजेनार्च्चितः समग्रजनमानसैः चिरानुरागागतैर्नागरैरनुगतः वलभरेण प्रकम्पितवसुधातलो निजमेव विषयं लावाणकं जगाम।

इति एकोनविंशस्तरङ्गः।

—*—

## अथ विंशस्तरङ्गः।



ततः स राजा सेनानां विश्रामाय लावाणके स्थितः रहसि यौगन्धरायणमब्रवीत् महामते! तव बुद्ध्यैव मया पृथिव्यां सर्वे पार्थिवा विजिताः, उपायस्वीकृताश्च नैव कदाचित् मे व्यभिचरन्ति परन्तु एको वाराणसीपतिर्दुरात्मा ब्रह्मदत्तो व्यभिचरतीति मन्ये विश्वासः कुटिलेषु कः?। एवमुक्तो यौगन्धरायणः प्राह राजन्! ब्रह्मदत्तस्ते भूयो न व्यभिचरिष्यति, एष खलु आक्रमणेनोपनत

त्वया भृशं सम्मानितः कः सचेताः शुभाचारस्याशुभमाचरेत्? यस्तु तादृशोऽपि तादृशस्याशुभमाचरेत् तस्य तदेव अशुभं स्वयमुपतिष्ठेत। अत्रैतां कथां कथयामि श्रूयताम्।

पुरासीत् पद्माख्ये जनपदे अग्निदत्तोनाम कश्चित् ख्यातिमान् राजदत्ताग्रहारभुक् द्विजोत्तमः। तस्य द्वौ सुतौ, तयोर्ज्यायान् सोमदत्ताभिधः द्वितीयः वैश्वानरो नाम। सोमदत्तस्तु सुश्रीकः परं मूर्खः दुर्विनीतश्च। अपरः विद्वान् विनीतश्च। कृतदारौ तौ पितरि अस्तं गते तदीयस्य अग्रहारादिकस्य अर्द्धमर्द्धं विभज्य जगृहतुः। कनीयांस्तु विद्यावत्तया राज्ञा सम्मानितोऽभवत्, ज्येष्ठस्तु सोमदत्तश्चपलः द्यूतकर्म्मणि रतोऽभूत्। एकदा कश्चित् पितृबन्धुःसोमदत्तं शूद्रैः सह बहुगोष्ठीकं विलोक्य प्रोवाच रे मूर्ख! अग्निदत्तसुतो भूत्वा इत्थं शूद्रवत् चेष्टसे, निज-अनुजं राजसत्कृतं पश्यन् न लज्जसे? तदाकर्ण्य स सोमदत्तः कुपितः प्रधाव्य परित्यक्तमर्य्यादः पादप्रहारेण तं विप्रमाजघान। स तु विप्रस्तत्क्षणं अन्यान् तत्रोपस्थितान् विप्रान् साक्षिणः कृत्वा पादाघातावमानितः राजानं गत्वा समावेदयत्। राजापि सोमदत्तस्य बन्धाय भटान् प्राहिणोत्। ते च भटास्तस्य सोमदत्तस्य मित्रैः निर्गत्य शस्त्रपाणिभिर्जघ्निरे। ततो राजा नितरां क्रुद्धः बहु बलं प्रेष्य अस्य गृहीतस्य सोमदत्तस्य शूलारोपण-मादिदेश।

अथाकस्मात् शूलायामारोप्यमाणः स केनापि प्रक्षिप्त

इव चितौ निपपात। रचन्ति हि कल्याणोदर्कं भाग्य-सम्पदः यतोऽस्य तदानीं वधका अपि पुनरारोपणोद्यता अन्धा अभवन्। अत्रान्तरे च कनीयसा वैश्वानरेण भ्रातृ-शोकार्त्तेन विज्ञप्तो महीपतिर्वधात् तममोचयत्। ततः मरणनिस्तीर्णः सोमदत्तः राजापमानेन तेन भृशं सन्तप्तः सपरिजनो देशान्तरं गन्तुमियेष। यदा तु तद्बन्धुभि स्तस्य देशान्तरगमनं नेच्छन् तदा स राजाग्रहाराद्यां वृत्तिं तां त्यक्त्वा स्थितिं प्रतिपेदे।

ततो वृत्त्यन्तरहीनः स कृषिं कर्त्तुकामस्तद्योग्यां भुवं द्रष्टुं शुभेऽहनि अटवीं जगाम। गत्वा च तत्र शुभां भूमिं सम्भाव्य फलसम्पदं प्राप्य तन्मध्ये एकं महाविस्तार-मश्वत्थतरुमैचत। तच्च शुभवनच्छायाच्छन्न सूर्य्यांशुम-ण्डलं शीतलं प्राप्य कृषिकामः प्रावृषमिव भृशं तुतोष। योऽस्याधिष्ठाता तस्यैवाहं भक्तोऽस्मीत्यभिधाय कृतप्रद-चिणस्तमश्वत्थं प्रणनाम। ततः कृतस्वस्त्ययनस्तस्य तरोरधः वलिं विधाय वलीवर्दयुग्मं नियोज्य कृषिं कर्त्तु-मारेभे। तस्थौ च तस्यैवाधस्तात् दिवानिशम्। तत्रैव तद्गृहिणी तस्य भोजनादिकमानिन्ये। अथ यथाकालं पक्वेषु शस्येषु सा भूमिः परराष्ट्रेण निःशङ्कमागत्य दैवात् व्यलुण्ठ्यत। ततः परबले याते शस्ये च नष्टप्राये स सत्त्ववान् रुदतीं भार्य्यामाश्वास्य किञ्चिदवशिष्टं तस्मै ददौ। पुनश्च

रधस्तात् तस्थौ ।

भवन्ति ।

एकदा चिन्तया विनिद्रस्य एकाकिनः स्थितस्य तस्य निशि तस्मादश्वत्थतरोरशरीरिणी वागुदतिष्ठत् भोः सोमदत्त ! तुष्टोऽस्मि तवाध्यवसायात् तद्गच्छादित्यप्रभनाम्नः भूपतेः श्रीकण्ठदेशगं राष्ट्रम्। तस्य महीपतेर्द्वारि सन्ध्याग्निहोत्र मन्त्रान् पठित्वा इदं वचः ब्रूयाः अहं फलभूति र्नाम विप्रः, शृणुत मम वचनं शुभकारी शुभमाप्नुयात् अशुभकारी अशुभमिति। एवं वदं स्त्वं तत्र महतीं समृद्धिमाप्स्यसि, सन्ध्याग्निहोत्रमन्त्रांश्च मत्त एवाधुना शिक्षस्व, अहं कश्चिद् यक्ष इत्युक्त्वा स्वप्रभावेण तं तान् मन्त्रान् अध्याप्य सा वाणी तस्मिन्नेव वटे तिरोदधे। अथ प्रातः स सोमदत्तः भार्य्यया सह फलभूतिरिति नाम लब्ध्वा यक्षदत्तं प्रतस्थे। क्रमेण च तास्ता विषमाः परिवर्त्तिनीः दुर्दशा इव अटवीरतिक्रम्य श्रीकण्ठ विषयं प्राप। तत्र भूपतेर्द्वारि यथोक्तं सन्ध्याग्निमन्त्रान् पठित्वा फलभूतिरिति स्वं नाम संश्राव्य शुभकारी शुभमशुभकारी अशुभं लभते इति लोकस्य कौतुकोत्पादकं वचः प्रोवाच। इत्थं पुनः पुनर्वदन्तं तमादित्यप्रभो नरपतिः कथमेवं वदेदसाविति कौतूहली स्वसकाशं प्रावेशयत्। सोऽपि प्रविश्य तथैव नृपतेरग्रतः मुहुरब्रवीत् तेन च नृपः पार्श्वचरैः सार्द्धं जहास ददौ च तस्मै वस्त्राण्याभरणानि ग्रामांश्च। न हि महान्तः मृषा तुष्यन्ति ? एवं स फलभूतिर्यक्षप्रसादेन राजदत्तां विभूतिमासाद्य दारिद्र्यदुःखं दिजहौ। प्रापच राजप्रियतामेवं पुनः पुनर्वदन् प्रभूणां हि विनोदरसिकं मनः। क्रमेण च तस्मिन् राजगृहे

अन्तःपुरेषु च राज्ञः प्रिय इति प्रीतिं बहुमानञ्च लेभे।

अथ कदाचित् स आदित्यप्रभो नृपति र्मृगयातः प्रत्यावृत्य सहसान्तःपुरमाजगाम। ददर्श च द्वारपालसम्भ्रमशङ्कितः प्रविश्य देवार्च्चन व्यग्रकरां दिगम्बरां ऊर्द्ध्वकेशीं अर्द्धमीलितलोचनां स्थूलसिन्दूरतिलकां जपप्रस्फुरिताधरां विचित्रवर्णकन्यस्तमहामण्डलमध्यगां असृक्सुरामहामांस कल्पितोग्रबलिक्रियां राज्ञीं कुवलयावलीं नाम। प्रविष्टे च नृपतौ सा ससम्भ्रमं परिहितवसना तत्क्षणमनुयुक्ता किमेतदिति राज्ञा याचिताभया समभाषत प्रभो! तवैवोदयलाभार्थमेवं व्रतं कृतवत्यस्मि अत्रैतामागमवार्त्तां सिद्धिञ्च शृणु कथयामि।

पुराहं कन्या पितृसद्मनि स्थिता मधुमहोत्सवे उद्यानमगमं तत्र मद्वयस्याभिः समेत्याहमुक्ता भर्त्तृदारिके! अस्त्यत्र प्रमोदोद्यानवर्त्तितरुमण्डलमध्यगः दृष्टप्रभावो वरदो देवो विनायकः। तमुपागत्य वाञ्छितप्रदं भक्त्या पूजय, येन निर्विघ्नमाशु सुयोग्यं पतिमाप्स्यसि। तदाकर्ण्य मया मौग्ध्यात् ताः सख्यः पर्य्यपृच्छ्यन्त, सख्यः! कन्या विनायकपूजया किं भर्त्तारं लभन्ते?। अथ ताः प्रत्यवोचन् किमेवमुच्यते त्वया, तस्मिन् अपूजिते कस्यापि कापि सिद्धिरिह न भवेत्, शृणु एतस्य प्रभावं वयं वर्णयामः। एवमुक्त्वा ताः सख्यः मे कथामिमा मकथयन्।

पुरा तारकेणासुरराजेन उपद्रुते शक्रे पुरारातेस्तनयं सेनान्यमिच्छति दग्धे च तत्प्रसङ्गेन कुसुमायुधे गौरी

कृततपाः ऊर्ध्वरेतसमत्युग्रे तपसि स्थितं त्र्यम्बकं पतिं प्राप्य सुतप्राप्तिं मदनस्य जीवितञ्च प्रार्थितवती परं सिद्धार्थं विघ्नेश्वरपूजनं न सस्मार। अभीष्टलाभार्थिनीञ्च तां कान्तामसौ हरः प्रोवाच प्रिये! पूर्वं प्रजापतेर्मानसात् कामः समजायत। जातमात्रः सः कं दर्पयामीति मदात् जगाद, तेनासौ विधाता अमुं कन्दर्पनामानं चक्रे। ऊचे च पुत्र! अति दृप्तोऽसि, तत् चिनेत्रादात्मानं रक्षेः, मा नाम तस्मात् मृत्युमवाप्स्यसि इत्येवं पित्रा कथितोऽपि स दुरात्मा मां धर्षयितुमागतः मया च स दग्धः, तदेतस्य कथं पुनरुद्भवः? भवत्याञ्च स्वप्रभावेणैव पुत्रमुत्पादयामि, न हि मे मदनोत्साहजनिताः प्रजाः सामान्यजनवत्। एवं वदत एव पार्वतीं तस्य शम्भोः शतमखान्वितः पद्मयोनिराविरासीत्। सुतश्च ताभ्यां तारकासुरशान्तये स भगवान् भवः देव्यामात्मजं स्रष्टुं कामस्य च देहिनां मनसि समुद्भव मनुमेने। ददौ च निजचित्ते मनोभुवोऽवकाशम्। तेन च तुष्टो धाता स्वालयं ययौ देवी च मुदं प्राप।

अथ कदाचित् रहसि स्थितः शङ्करः उमया सह सुरतक्रीड़ामारेभे। यदा तु वर्षशतेष्वपि गतेषु रतान्तो नाभवत् तदा तदुपमर्देन भुवनत्रितयमकम्पत। ततोजगत्शान्तये पितामहोपदिष्टाः सुरास्तस्य देवस्य रतविघ्नाय वैश्वानरं स्मरन्ति स्म। अग्निरपि स्मृतमात्रः समागत्य दुर्धर्षं मदनात्मकं मत्वा पलाय्य जलान्तः प्रविवेश। जलचारिणोभेकाश्च तस्याग्नेस्तेजसा दह्यमानाः विचिन्वतां देवानां अग्निमन्तर्जलस्थं शशंसुः। ततोऽग्निस्तान् भेकान्

मनभिव्यक्तवाचः कृत्वा तिरोभूय च भूयो जगाम स्वं मन्दिरम् । देवाश्च इतस्ततोऽन्विष्यन्तस्तं तत्र कोटरान्तःस्थं शम्भू कदूपिणं गजैःशुकैश्च दर्शितं प्रापुः, स चैषां दर्शनं ददौ । ततोऽसौ जातखेदास्तेषां गजानां शुकानाञ्च जिह्वा विपर्य्यासरूपमभिशापं दत्त्वा देवैः कृतस्तुतिस्तेषां कार्य्यमङ्गीचकार । अथ स ज्वलनः स्वोमणा समुपेत्य शाप भीत्या प्रणम्य सुरतात् शङ्करं निवार्य्य देवकार्य्यमस्मै न्यवेदयत् । शर्वोऽपि प्रवृद्धवेगस्तस्मिन्नग्नौ स्वं वीर्य्यमादधे । तद्धि तस्य शुक्रं धारयितुं शक्तो वह्निरमा वा । अथ न मया त्वत्तस्तनयः सम्प्राप्त इति खेदाकुलां देवीमुवाच भगवान् भवः । देवि ! विघ्नराजपूजनात् विना तवात्र विघ्नः सञ्जातः, तदर्च्चयैनं येनाशु वह्नौ नः सुतो जनिता । इत्येवमुक्ता शम्भुना पार्वती विघ्नेश्वरमपूपुजत् । अनलोऽपि सगर्भं शाम्भवं वीर्य्यं बिभ्रत् अन्तः प्रविष्टतिग्मांशुरिवाबभौ । अथ कालेन सः गङ्गायां तद्गर्भमुद्ववाम । गङ्गापि तं धारयितुमशक्ता शिवाज्ञया मेरौ अग्निकुण्डे तं तत्याज । तत्र शाम्भवैर्गणैः संरक्ष्यमाणः स गर्भः सहस्राब्दान्ते निष्पद्य षड़ाननः कुमारोऽभूत् । ततो गौरीनियुक्तानां कृत्तिकानां पयोधरान् स षड़्भिर्मुखैः पीत्वा स्वल्पैरेवाहोभिर्वव्रधे ।

एतस्मिन्नन्तरे देवपतिस्तारकासुरनिर्जितस्त्यक्तसंग्रामः मेरुशृङ्गाणि शिश्रिये । सुरा ऋषिभिः साकं तं कुमारं शरणं ययुः । सोऽपि षड़ाननस्तान् सुरान् रक्षन् तैः परिवृतस्तस्थौ । इन्द्रस्तु स्वस्य हारितं राज्यं मत्वा सं-

क्षुब्धः समन्तत्सरस्तं कुमारमयोधयत्। तद्बाभिहताच्च षण्मुखाङ्गात् कुमारस्य शाखविशाखाख्यौ द्वौ सुतावजायेताम्। अथ सपुत्र मुत्क्रान्तदेवराजपराक्रमं तमुपेत्य तनयं स्वयं शर्वः संग्रामादवारयत् अवोचच्च पुत्र! जातोऽसि तारकं हन्तुमिन्द्रस्य राज्यं रक्षितुञ्च, तत् निजं कार्य्यं कुरुष्व इति। ततः प्रणम्य प्रीतेन वज्रपाणिना सुतः सैनापत्ये अभिषेक्तुमुपचक्रमे। यदा तु तमभिषेक्तुं सुरपतिः उत्क्षिप्तकलसोऽभूत् तदा स्तब्धबाहुःशुचा सन्तप्तं तमवदत् शङ्करः। यस्मात्त्वया सैनान्यमभिलषता गजाननो न पूजित स्तस्मात् ते विघ्नो जातः तस्मात् विघ्नराजमर्च्चय। तदाकर्ण्य सुरपतिर्गणेशमर्च्चयित्वा मुक्तबाहुः सम्यक् अभिषेकोत्सवं सैनान्यो निरवर्त्तयत्। ततोऽचिरात् सैनानीस्तारकासुरं निजघान।. देवाश्च सिद्धकार्य्या ननन्दुः, गौरी च पुत्रवती। तदेवं भर्तृनन्दिनि! देवानामपि हेरम्बे अनर्च्चिते नास्ति सिद्धि स्तत् एनं वरार्थिनी समर्च्चय।

हे आर्य्यपुत्र! इत्युक्ता अहं ताभिर्वयस्याभि रुद्यानमध्यवर्त्तिनं विघ्नराजमुपेत्य अपूजयं पूजान्ते च सहसा गगनाङ्गनेऽपश्यम् ताः स्वसखीः स्वसिद्धितोविहरन्तीः। तदवलोक्य कौतुकात् ता अन्तरीक्षात् समाहूय अवतार्य्य च मया सिद्धिविषयं पृष्टाः सद्यः समब्रुवन् इमा नरमांसाशनजा डाकिनीमन्त्रसिद्धयः, कालरात्रिर्नाम कापि ब्राह्मणी अत्रास्माकं गुरुः। एव महं सखीभि रुक्ता खेचरीसिद्धिलोलुपा नृमांसाशनभीताच तत्क्षणं मासम्। अथ सिद्धिलोभात् ताः सखी रहमपृच्छं ममाच युष्माभिरु-

प्रदेशो दाप्यतामिति । ततो मदभ्यर्थनया तास्तत्क्षणं गत्वा तां विकटाकृतिं मिलद्भ्रुवं कातराक्षीं न्यञ्चच्चिपिट-नासिकां स्थूलगण्डीं करालोष्ठीं दन्तुरां दीर्घकन्धरां लम्ब-स्तनीं महोदरीं विदीर्णोत्फुल्लपादां धात्रा वैरूप्यनिर्म्माण-वैदग्धीमिव दर्शितां कालरात्रिमानिन्युः । सा मां पादा-नतां स्नातां पूजितविघ्नेशां विवस्त्रां मण्डले भीमां भैर-वार्च्चामकारयत् । अभिषिच्य च मह्यं तान् तान् निजान् मन्त्रान् भक्षणाय च देवार्च्चनवलीकृतं नृमांसञ्च ददौ । अहन्तु गृहीतमन्त्रा कृतनरमांसाशना तत्क्षणं दिगम्बरा एव सखीभिः सममम्बरमुत्पतिता । देव ! ततश्च तत्र कृतक्रीड़ा गुर्वनुज्ञया अवतीर्य्य निजं कन्यान्तःपुरं सह सखीभिरगमम् । एवमहं बाल्येऽपि डाकिनीचक्रवर्त्तिनी जाता, तत्रचास्माभिर्बहवो नराः समेत्य भक्षिताश्च । नाथ ! अत्रान्तरे कथामेतां कथयामि शृणु ।

विष्णुस्वामी नाम तस्याः कालरात्र्याः पतिः कश्चिद् विप्र आसीत् । स च वेदपारगः तस्मिन् देशे नानादिग्-आगतान् शिष्यानध्यापयत् । तस्य च शिष्याणामेकः सुन्दरको नाम युवा शीलेन विराजितवपुर्गुणः शिष्यः समभवत् । एकदा सा गुरुपत्नी कालरात्रिः पत्यौ क्वापि ग्रामान्तरे गते रतार्थिनी रहसि तं सुन्दरकमभ्यर्थयामास । स तु अभ्यर्थ्यमानोऽपि कथमपि धर्म्मविप्लवं कर्त्तुं नैच्छत् । स्त्रियो यथा विचेष्टन्तां सतान्तु मनः निष्कम्पमेव । ततः सा कालरात्रि रपसृते तस्मिन् सञ्जातक्रोधा स्वयं दण्ड-नखक्षतैः स्वमङ्गं पाटयामास । यावत् स्वामी गृह

मायात् तावत् विकीर्णवस्त्रकेशाम्ला भृशं करोद प्रविष्टश्च भर्त्तारमब्रवीत् नाथ! पश्य सुन्दरकेण बलात्काराभिलाषिणा मम किं क्वतं? तदाकर्ण्य उपाध्यायः क्रुधा जज्वाल प्रत्ययः स्त्रीषु विदुषामपि विवेकं मुष्णाति। सायञ्च गृहमागतं सुन्दरकं दृष्ट्वा विप्रः प्रधाव्य शिष्यै मुष्टिभिः पादैर्लगुडैश्च तथा अताड़यत् यथा तं प्रहारनिश्चेष्टं मृतमेव मत्त्वा शिष्यैर्निशि रथ्यायां तत्याज।

ततोऽसौ सुन्दरकः शनैर्निशानिलसञ्जीवित स्तथाभिभूतमात्मानं पश्यन्नेवमचिन्तयत् अहो स्त्रीणां चारित्रम्? येन तादृशा अपि महात्मानो गुरवः एवं कलुषीक्रियन्ते, तथाहि विद्वानपि वृद्धोऽपि आचार्य्यः अविचार्य्य अतिक्रोधात् मयि एवमकारणदण्डमकरोत् अथवा कामक्रोधयो रेष महिमा येन मुनयोऽपि पूर्वं स्वदारव्यभिचारशङ्किनः देवदारुवने देवदेवाय शङ्करायापि चुक्रुधुः न चैनं क्षपणकवेशमृषीणामपि अशान्ततामुमायै दर्शयन्तं देवं विविदुः। ते चातिक्रुद्धा दत्तशापाः सन्तः पश्चात् त्रिजगत्क्षोभकारणं तं देवं विदित्वा तमेव शरणं ययुः। तदेवं कामक्रोधादिभिर्वञ्चिता मुनयोऽपि विमुह्यन्ति गृहिषु का कथा। इत्येवं चिन्तयन् सुन्दरकः निशि दस्युभयात् समीपवर्त्तिनि शून्ये गोवाटहर्म्ये निभृतस्तस्थौ। अथान्तरे तत्रैव हर्म्ये सा कालरात्रि राक्कष्टवीरक्षुरिका मुक्तफुत्कारभीषणा नयनाननवातोल्का डाकिनीमण्डलमध्यवर्त्तिनी समामयौ। सुन्दरकस्तु तां तादृशीं कालिरात्रिमुपागतां दृष्ट्वा भीतः रक्षोघ्नान् मन्त्रान् जजाप।

सा तु तेन मन्त्रेण मोहिता भयमनुचितैरङ्गै रेकान्ते स्थितं तं सुन्दरकं नाद्राक्षीत् । अथ सा सखीजनसहिता समागतमन्त्रं पठित्वा सहसा तेन गोवाटहर्म्येण सह नभः उत्पपात । सोऽपि सुन्दरकस्तं मन्त्रं श्रुत्वा तत्रैव जगाह । सापि नभसा सहर्म्या क्षणादेव उज्जयिनीं ययौ । गत्वा च तत्र हर्म्यं मन्त्रवशात् श्मशानवाटके अवतार्य डाकिनीभिः सह श्मशाने चिक्रीड । सुन्दरकश्च तस्मिन् श्मशानवाटके अवतीर्य क्षुधितः उत्खातमूलकैस्तृप्तिमकरोत् । कृताहारे च तस्मिन् प्राग्वत् गोवाटमाश्रिते सा कालरात्रि पिटकाननात् निहृत्य अधिरूढ़ गोवाटा शिष्याभिः सह मन्त्रसिद्धिबलात् पुनराकाशमार्गेण तस्यामेव निशायां स्वगृहमाययौ । आगत्य च स्वस्थानं स्थापयित्वा च यथास्थानं गोवाटवाहनं विसृज्य च ताः सर्वा अनुचरीः शयनागारं प्राविशत् । सोऽपि सुन्दरकः तद्दर्शनविस्मित स्तां निशां तत्रैव गोवाटे नीत्वा प्रभाते त्यक्तगोवाटः सुहृदामन्तिकं ययौ । तत्राख्यात स्ववृत्तान्तः देशान्तरगमनोद्यतोऽपि तैर्मित्रैरनुबद्ध स्तेषामेव मध्ये वासमकल्पयत् अभ्यवहारविधिन्तु सत्र सद्मनि प्रत्यहमकरोत् ।

एकदा कालरात्रिरापणे गृहोपकरणानि क्रेतुं निर्गता तं सुन्दरकं ददर्श अगाद च समीपमेत्य पुनः कामार्त्ता, सुन्दरक ! अद्यापि त्वदायत्तजीवितां स्मरातुरां मां भज । एवमुक्तः सुन्दरकोऽपि तामब्रवीत् मैवं वद, नैष धर्मः त्वं मम माता गुरुपत्न्यसि । ततः कालरात्रिर-

अर्थात्, धर्मं यदि अपेक्षसे, तद् रक्ष मे प्राणान्; प्राणरक्षणात् कोऽधिको महान् धर्मः ? । सुन्दरकोऽब्रवीत् मातः ! मैवं पुनर्वादीः गुरुतल्पगमनं कुत्र धर्म्म इति ख्यायते ? एवं तेन निराकृता सा कालरात्रि स्वं कथा तर्जयन्ती स्वहस्तेन उत्तरीयं पाटयित्वा गृहमगात् । आगत्य च पश्च सुन्दरकेण पुनर्धावित्वा ममेदमुत्तरीयं पाटितमिति पतिं दर्शयामास । स च तस्याः पतिः क्रोधात् आगत्य सुन्दरकं वध्यमुद्दीर्य्य तत्क्षणात् सद्मे सुन्दरकस्य भोजनमवारयत् । ततः सुन्दरकः खेदात् तं देशं त्यक्तुमुद्यतः गोवाटे शिक्षितं आकाशोत्पतनमन्त्रं जानन्नपि 'अवरोहणेऽपरं मन्त्रं शिक्षितमपि विस्मृतं ध्यायन् तदेव गोवाटहर्म्यं निशि पुनर्ययौ ।

अथ तस्मिन् तथास्थिते सा कालरात्रिः पूर्ववत् सखीजनपरिवृता उपेत्य तथैव हर्म्यस्था अन्तरीक्षेण मार्गेण उज्जयिनीं ययौ । तत्र च मन्त्रेण शाकवाटके गोवाटमवतार्य्य पुनः पितृनिकेतनं विहाराय प्रययौ ।

सुन्दरकस्तु मन्त्रं भूयः श्रुत्वापि नाग्रहीत् कुतोहि विना गुरूपदेशं सिद्धिः ? ततोऽत्र शाकवाटके कतिचित् मूलकानि भुक्त्वा अपराणि च नेतुं गोवाटे प्रक्षिप्य पूर्ववत् निभृतस्तस्थौ । अथ सा कालरात्रि स्तथैवारूढ़ गोवाटा नभसा तस्यामेव निशि यथास्थानस्थापित गोवाटा स्वं भवनमाजगाम । सुन्दरकोऽपि प्रातः गोवाटात् निर्गत्य भोजनमूल्यार्थी गृहीतमूलकः विपणिमगमत् । विक्रीणानस्य तत्र तत्र राजपुरुषा मालवदेशीयाः स्वदेशजं तत्-

मूलकं दृष्ट्वा विना मूल्यमहरन्। ततः सुन्दरकः सुहृद्युतः कलहं कुर्वन् पाषाणैरस्मान् ताडयतीति तैः शठैः राजान्तिकमनीयत अवादि च नृपः, मालवकात् आनीय कान्यकुब्जेऽत्र कथं मूलकं विक्रीणीषे इत्येवं पृष्टोऽस्मि एषः न किमपि जल्पति प्रत्युत पाषाणै रस्मान् हन्तीति। ततो राज्ञा किमेतदिति पृष्टे तस्य सुहृदोऽब्रुवन् राजन्! यद्येषः अस्माभिः सह प्रासादमधिरोप्यते तदैतत् कृत्स्नमद्भुतं जल्पेत् नान्यथा। तथेति राज्ञा प्रासादमारोपितः सः सप्रासाद एव मन्त्रेण पश्यत एव तस्य राज्ञः सद्यः समुत्पपात नभः। समित्वश्च तेन प्रासादेन प्रयागं गत्वा श्रान्तः तत्र कमपि राजानं स्नातुं ददर्श। अत्र च प्रासादं संस्तभ्य खात् गङ्गायां निपत्य सर्वैस्तत्रत्यैर्विस्मयोद्वीक्षितस्तं राजानमभ्यगात्। कस्त्वं कथं गगनादवतीर्णोऽसि इति तेन राज्ञा विनीतेन पृष्टः एवमवादीत् अहं सुरजकोनाम देवस्य शर्म्भोर्गणः तदाज्ञया मानुषभोगार्थी त्वत्सकाशमिहागतः। तदाकर्ण्य स नृपः सत्यं मत्वा तस्मै अस्त्रपूर्णं रत्नं सस्त्रीकं सोपकरणं पुरं प्रादात्। सुन्दरकश्च तस्मिन् पुरे प्रविश्य दिवि उत्प्लुत्य सानुचरः चिरं स्वच्छन्दं विचचार। बुभुजे च हेमपर्य्यङ्के शयानश्चामरैर्वीज्यमानः वराङ्गनाभिः सेव्यमानश्च ऐन्द्रं सुखम्।

अथैकदा कश्चित् योगी आकाशचारी सञ्जातपरिचयस्तस्मै व्योमावरोहणमन्त्रं ददौ। ततः प्राप्तमन्त्रः सः निजे देशे कान्यकुब्जे व्योममार्गादवातरत्। राजा तु तं सपुरं पूर्णलक्ष्मीकं नभस्तलादवतीर्णं विदित्वा स्वयं

कौतुकात् तमुपाययौ। अथ राज्ञा सविशेषमनुयुक्तः कालवित् राजाग्रे कालरात्रि वृत्तान्तं सर्वमकथयत्। राजा च तत्क्षणात् तां कालरात्रिमानाय्य पप्रच्छ। सा तु निर्भया स्वमविनयं सर्वं स्वीचकार। ततः कुपिते नृपे तस्याः कर्णौ च्छेत्तुमुद्यते सा गृहीतापि पश्यतामेव सर्वेषां तत्रैव तिरोदधे। ततो राजा तस्याः स्वराष्ट्रे वासं न्यषेधत्। सुन्दरकस्तु राज्ञा सत्कृतः पुनर्नभस्तलं शिश्रिये।

इत्युक्त्वा आदित्यप्रभः भूपतिं पतिं पुनश्च राज्ञी कुवलयावली अवादीत् देव! एवं विधा डाकिनी मन्त्रसिद्धयः सन्ति, तच्च मत्पितृराज्ये सर्वत्र विश्रुतम्। अहञ्च कालरात्रेः शिष्याभिः आदौ तव कथितम्। मम तु पातिव्रत्यात् ततोऽपि समधिका सिद्धिरस्ति। भवता चाद्य अहं दृष्टा, कृता च मया तवैव श्रेयः साधनी अर्च्चना, उपहाराय च मन्त्रेण पुरुषमाकृष्टमुद्यताहम्। तदस्मदीये मये त्वमपि सम्प्रति प्रविश्य कुरुष्व च सिद्धियोगर्जितानां राज्ञां शिरःसु पदम्। तदाकर्ण्य स राजा क्व महामांसभोजनं डाकिनीनयः, क्व च राजत्वमित्युक्त्वा तत् निषिषेध। अथ तस्यां राज्ञ्यां प्राणत्यागोद्यतायां स राजा तत् प्रत्यपद्यत। विषयैराकृष्यमाणा हि कथं सुपथे तिष्ठन्ति?। ततः सा राज्ञी तं राजानं गृहीतसमयं पूर्वपूजिते मण्डले प्रवेश्यैव इदमब्रवीत् नाथ! यस्त्वेष फलभूतिर्नाम विप्रस्तवान्तिकै स्थितः, स एव मया उपहारार्थमद्य आकृष्टुमुपकल्पितः। परन्त्वाकर्षणं सायासं तस्मात् कश्चित् सूपकृत् अथ कार्टै

नियुज्यतां यस्तं स्वयं हन्ति पचत्यपि । नात्र घृणा कार्या, यस्मात् तन्मांसबलिभक्षणात् यज्ञे समापिते पूर्णा सिद्धिः स्यात् एष तावत् उत्तमः कल्पः । इत्युक्तः प्रियया स राजा पापभीतोऽपि तदङ्गीकार कष्टा हि स्त्रीषु अनुवृत्तिः ? । अथ साहसिकनामानं सूपकारमानाय्य विश्वास्य च तौ दम्पती सहैवोचतुः राजा देवीद्वितीयोऽद्य भोक्ष्यते, तत् त्वया कुरु आहारस्य इति यः अभ्येत्य त्वां ब्रूयात् त्वं तं तत्क्षणं निपात्य तन्मांसैश्च रहसि सुस्वादु भोजनमावयोः सम्पादये रिति । एवमादिष्टश्च स सूपकृत् तथेति प्रतिश्राय गृहमगात् । प्रातश्च फलभूतिं तं प्राप्तं दृष्ट्वा राजाब्रवीत् गच्छ साहसिकं ब्रूहि सूपकारं यथा राजा देवीद्वितीयोऽद्य स्वादुभोजनं भोक्ष्यते अतस्त्वरितमुत्तममाहारं सम्पादय इति ।

तथेति निर्गतञ्च फलभूतिमेत्य राजपुत्रश्चन्द्रप्रभोनाममाब्रवीत् ब्रह्मन् ! अनेन सुवर्णेन शीघ्रं मम द्वे कुण्डले पितुरिव शोभने कारय । इत्युक्तः फलभूतिस्तेन राजपुत्रेण कृतानुरोधः कुण्डलार्थमेव प्रहितः प्रययौ । राजपुत्रोऽपि एकाकी फलभूतिना कथितं राजनिदेशं कथयितुं स्वैरं महानसमगात् । स च साहसिकः सूपकारः यथासमयं उक्त राजादेशं तं राजपुत्रं सद्यः छुरिकया अवधीत् । राजदम्पती च कृतार्चनौ अजानन्तौ तन्मांसैः साधितं भोजनमभुञ्जाताम् । सानुतापः ब्रह्मवधेन राजा तां रात्रिं कथञ्चित् नीत्वा प्रातः कुण्डलहस्तमायान्तं तं फलभूतिमद्राक्षीत् । अप्राक्षीच्च विभ्रान्तः कुण्डलोद-

शात् तं तत्त्वणम्। अथ तेनाख्यातवृत्तान्तः सद्य एव भूतले पपात चक्रन्द च हा पुत्र! इति भार्य्यां निन्दन् पुनः पुनः।

ततः पृष्टश्च सचिवैर्यथातत्त्वमवर्णयत् अवोचच्च फलभूतिर्नोऽसमनुदिनं भद्रकृत् भद्रमाप्नुयादभद्रकृदभद्रमिति प्रायेण अन्यार्थं चिकीर्षितः दोषः आत्मन्येव फलति कन्दुको भित्तिनिक्षिप्तः प्रतिफलन्निव पतति। यदस्माभिः पापात्मभिर्ब्रह्महत्यां चिकीर्षुभिः स्वपुत्रघातनं कृत्वा तन्मांसभक्षणं कृतमिति। इत्युक्त्वा स्वान् अधोमुखान् मन्त्रिणः बोधयित्वा तमेव फलभूतिं निजे राज्ये अभिषिच्य अपुत्रः पापक्षयाय दत्तदानः सभार्य्यः अनुशयाग्निना दग्धोऽपि पुनरग्निं प्रविवेश। फलभूतिश्च तद्राज्यं प्राप्य पृथ्वीं शशास तस्मात् भद्रमभद्रं वा कृतमात्मन्येव फलतीति।

इत्येवं कथां कथयित्वा यौगन्धरायणः पुनर्भूपतिमवोचत् राजेन्द्र! यदि जित्वा शुभमाचरतोऽपि तव ब्रह्मदत्तोविकुर्वीत तदा स एव स्वदोषैर्हन्यत एव। इत्युक्तो मन्त्रिमुख्येन वत्सराजस्तद्वचनमभिनन्द्य उत्थाय तद्दिनकर्त्तव्यं सर्वमशेषयत्। अपरेद्युश्च कृतसर्वदिग्विजयस्तस्मात् लावणकात् कौशाम्बीं स्वपुरीं प्रति ससैन्यपरिच्छदः समुदचलत्। क्रमेण च उत्सवपूर्णां उत्पताकां नृत्यन्तीमिव नगरीं प्राप्य पौरस्त्रीनयनोत्पलवने प्रवातारम्भमिव वितन्वन् चारणोद्गीयमानयशाः स्तूयमानश्च वन्दिभिः प्रणम्यमानश्च नृपैः प्रासादमविशत्। ततोऽसौ वत्सेशः विनम्रेषु अखिलेषु राजसु शासनमधिरोप्य पूर्वमधिगतं

कुलोचितं निधिभूतं सिंहासनमारुरोह । वधे च तस्मिन् मङ्गलसमाहूत तारधीरतूर्य्यरवप्रतिध्वाने स्वाभिमुखप-रितोषितलोकपालदत्तैः समसाधुवादैरिव प्रतिदिशं नभः पुपूर । ततः कृतमहोत्सवः द्विजेभ्यो वसुधा विजयलब्धं मर्थजातं त्रितीर्थ्य मन्त्रिणश्च कृतार्थानकरोत् । तस्मिंश्च नरेन्द्रे यथायोग्यं वसूनि वर्षति ध्वनद्घनघटङ्गनिनादपू-र्णायां तस्यां पुरि भावि बहुफलं सम्भाव्य सर्वे जनाः प्रतिगृहं कृतमहोत्सवा बभूवन् । इत्थं वसुमतीं विजित्य स यौग-न्धरायण-रुमण्वतोर्विनिवेशित राज्यतन्त्रः यथेच्छं वासव-दत्तया पद्मावत्या च सह रमते स्म । कीर्त्तिश्रियोरिव तयोर्द्वयोर्मध्यगतः स वरचारणगीतयशाः निजयशोधवलं चन्द्रोदयं सिषेवे पपौ च शत्रुप्रतापमिव सुधारसं यथावत् ।

इति विंशस्तरङ्गः ।

समाप्तोऽयं लावाणको नाम

तृतीयो लम्बकः ।



## अथ एकविंशस्तरङ्गः ।



ततो राजा उदयनः कौशाम्बीग्राममवस्थितः एकातपत्रां विजितां महीं भुञ्जानः रुमण्वति यौगन्धरायणे च न्यस्त-

राज्यतन्त्रः वसन्तकसखः सुखैकपरायणः सह वासवदत्तया पद्मावत्या च विहारैकरसः स्वयं वीणां वादयन् सङ्गीतकमसेवत। वाराङ्गनाश्च स्वयं कलसैरहस्तस्य स्मरराज्याभिषेक इव रागोज्ज्वलं मधु आहरन्। स हि भास्करसस्वच्छं अन्तःस्फुरितत्रखं स्वचित्तमिव तयोर्देव्योर्मध्ये आसवं उपनीतवान्। ईर्षाकषायभावेऽपि तयो रागमोमुखे भङ्गुरभ्रुणि सरागे तस्य दृष्टिर्न तृप्तिमगमत्। मधुपूर्णा स्फाटिक चषका तस्य पानभूमिर्विलासपारक्तसितपद्मा पद्मिनीव रराज। अन्तरान्तरा च व्याधैः सर्म बलाश्यामकञ्चुकः स धनुर्वीरः स्वयोग्यं मृगयागमनं भेजे। जघान च शरैर्मरीचिमालीव करैर्विरलैस्तिमिरौघान् पङ्ककलुषान् वराहनिकरान्। तस्मिंश्च प्रधाविते विकसितप्रसूतः कृष्णसाराः पूर्वजितानामासाना ईर्षाकटाक्षा इव बभुः। महिषपातिनोऽस्य रक्तारक्ता मही तच्छृङ्गपातमुक्ता सेवागतेव वनपद्मिनी विरेजे। व्याघ्र बक्रपतग्रासप्रीतेषु मृगारिषु सान्तर्गर्जितनिष्क्रान्तजीवितेषु स खलु तोषमवाप। एवं व्यसनेषु समासक्तं तमेकदा सभामध्युपगतं नारदो मुनिरभ्यगात। स तेन राज्ञा प्रणतेन कृतातिथ्यः क्षणमिव विश्रम्य प्रीतस्तं नृपतिमभ्यधात्। हे वत्सेश्वर! शृणु सङ्क्षिप्तमेतत् ते वदामि।

पुरासीत् पाण्डुरिति नाम राजा ते पूर्वपितामहः। तथैव तस्य द्वे सुन्दर्यौ भार्ये बभूवतुः तयोरेका कुन्ती नाम, द्वितीया माद्रीति विश्रुता। स पाण्डुः ससागरामेतां धरां विजित्य कदाचित् सुखपरतन्त्रः मृगयाव्यसनी

वनमगात् । तत्रासौ मृगयां चरन् अरिन्दमनामानं मुनिं मृगरूपेण मृग्यां विहरन्तमेकेन पत्रिणा जघान । स तु मुनिः मृगरूपं त्यक्त्वा कण्ठविवर्त्तिभिः प्राणैस्तं पाण्डुं विषण्णं मुक्तशरासनं शशाप । यस्मात् त्वया निर्विवेकेन स्वैरविहारस्थोऽयं जनः हतः तथा . त्वमपि भार्य्यासङ्गम-काले मृत्युमवाप्स्यसीति । इत्येवमासन्नशापस्तद्भीत्या त्यक्तभोगस्पृहः स पाण्डुः पत्नीभ्यां सहितः शान्ते तपोवने वासमकल्पयत् । तत्रस्थोऽपि शापेन तेन प्रेरितः कदाचित् माद्रीं सङ्गन्तुं यावत् प्रवहते तावदेव पञ्चतामगात् । हे नृप ! तस्मात् मृगया नाम भूभृतां महान् प्रमादः, यनया अन्येऽपि बहवो नृपा मृगाइव क्षयं नीताः । घोरनादा धूलिधूम्रा आमिषलोभिनी कुन्तदन्ता सा मृगया राक्षसीव कथं शुभं कुर्य्यात् । तस्मात् विफल-मायासं जहीहि त्वं पूर्वपुरुषप्रीत्या समातिप्रियपार्श्वे पुत्रश्च तव यथा कामांशो जनिष्यते तदाकर्णय । पुरा अनङ्गस्य देहोत्पत्तये रत्या स्तुतिभिरर्च्चितः प्रीतः शङ्करः रहसि इदमवादीत् गौरी स्वयं निजांशेनावतीर्य्य पुत्रा-र्थिनी भूमौ मां समाराध्य कामं पुत्रं जनयिष्यतीति । तस्मात् सा देवी चण्डमहासेनसुता भूत्वा तव महिषी जाता, तदेषा शिवमाराध्य कामांशं सुतं प्रसोष्यते । स च सर्वविद्याधराणां चक्रवर्त्ती भविष्यति । इत्युक्ता राज्ञा समर्च्चितः स ऋषिः स्तत्क्षणाददर्शनं ययौ गते च तस्मिन् राजा वासवदत्तया तया सञ्जातपुत्रकामया सार्द्धं पुत्र-चिन्तयैव दिवसमनैषीत् ।

अथान्येद्युरास्थानवर्त्तिनं तं भूपं नित्योदिताख्यः प्रतीहारोऽभ्येत्य न्यवेदयत् देव! कापि ब्राह्मणी उप- श्रित शिशुयुगला दुःस्था देवदर्शनार्थिनी द्वारि स्थिता अत्र देव प्रमाणमिति। तदाकर्ण्य राज्ञा तत्प्रवेशे अभ्यनुज्ञाते सा ब्राह्मणी कृशाङ्गी पाण्डुरधूसराकृतिः मानेनेव विशीर्णेन वाससा समाच्छादितावयवा राजान्तिकमुपेत्य कृतयथोचितविनया व्यजिज्ञपत् देव! ब्राह्मणी कुलीनाप्यहं ईदृशीं दुर्गतिं गता, दैवाच्च युगपदेतौ मम सुतौ जातौ, तत् देव! नास्ति मे अभुक्तायाः स्तन्यमेतयोरर्भकयोर्जीवनाय। तस्मात् अनाथा दीनाहं शरणागतवत्सलं देवं शरणमागताः तदत्र देवः प्रमाणम्। तत्श्रुत्वा दयार्द्रचेता राजा प्रतीहारमादिशत् गच्छ स्वयं देव्यै वासवदत्तायै समर्प्यतामिति। प्रतीहारश्च तां नीत्वा देव्यै समर्पयामास। देवी वासवदत्ता तां राजप्रेषितां प्रतीहारात् निशम्य विशेषेण श्रद्धया समग्रहीत् व्यचिन्तयच्च युग्मापत्यामेतां पश्यन्ती अहो वामैकवृत्तित्वं विधातुः, अहो वस्तुनि मात्सर्यमहो अवस्तुनि भक्तिः, नाद्यापि कोऽपि मे जातस्तनयः अस्यास्तु यमौ जातौ? एवं चिन्तयन्ती सा देवी स्नानार्थिनी तस्या ब्राह्मण्याः स्नानादिषु चेटिकां नियुज्य स्वयमपि स्नानादिकमकरोत्। सा च ब्राह्मणी चेटिकाभिः स्नपिता दत्तवसना स्वादु भोजिता च प्रशमाम्बुसिक्ता तप्ता भूरिव समुदश्वसत्। एवं समाश्वस्तायां तां कथालापैः परीक्षितुं देवी वासवदत्ता समभाषत ब्राह्मणि! भवत्या कापि कथा मम

कथ्यताम्। तदाकर्ण्य सा तथेत्युक्त्वा कथामेतां वक्तुमारेभे।

पुराभूत् जयदत्तोनाम कश्चित् सामान्यो भूपतिः। देवदत्तनामा तस्य पुत्रोऽजनिष्ट, स तु राजा यौवनस्थस्य तस्य तनयस्य विवाहार्थी चिन्तयामास राजलक्ष्मी रति-चञ्चला वेश्येव बलवद्भिरेव भोग्या, कुलवधूरिव वणिजां लक्ष्मी रनन्यगामिनी स्थिरा दृश्यते, तस्मात् पुत्रस्य विवाहं वणिजां गृहात् दास्यामि येन बहुदायादेऽपि तस्य राज्ये कदाचिदापदो न भविष्यन्ति इत्येवं निश्चित्य पुत्रार्थं स भूपतिः पाटलिपुत्रकात् वसुदत्तनाम्नो वणिजः कन्यां वव्रे। वसुदत्तोऽपि श्लाघ्यसम्बन्धस्पृहया दूरदेशेऽपि राज-पुत्राय तां कन्यामदयात्। अपूरयच्च धनैर्यौतकैः जामा-तरम्। ततश्च राजा जयदत्तः तेन प्रवासबन्धुधनपत्नीकेन तनयेन सुखमनुभवन् तस्थौ।

अथैकदा वसुदत्तः सम्बन्धिसद्मनि समागत्य कार्या-न्तरव्यपदेशेन तां सुतां स्वगृहमनैषीत्। ततः सहसा राजा जयदत्तः पञ्चतामगमत्। तद्गोत्रजैश्च दायादै-स्तस्य तत्राज्यं बलात् अधिकृतम्। तेषाञ्च दायादानां भयेन राजपुत्रोऽसौ देवदत्तः जनन्या देशान्तरं निशि प्रच्छ-न्नितमपसार्य नीतः। तत्र सा माता दुःखितमानसा तं राजपुत्रं प्रोवाच वत्स! अस्माकं सम्राट् पूर्वदिगीश्वरः प्रभुरस्ति तदन्तिकं गच्छ, स ते राज्यं साधयिष्यति। एवमुक्तो मात्रा स देवदत्त स्वां मातरमगादीत् जननि! तत्र निर्धनं निष्परिकरं मां को बहु मंस्यते? तदाकर्ण्य

माता अब्रवीत् वत्स! प्रथमं श्वशुरस्य गृहं गच्छ ततः तस्मात् धनं प्राप्य परिकरं कृत्वा चक्रवर्त्तिनः सकाशं व्रज। इति मात्रा प्रेरितः स राजपुत्रः सलज्जोऽपि श्वशुरस्य गृहमेव प्रययौ सायञ्च तद्गृहं प्राप। स तु पितृहीनः विनष्टराज्यः लज्जया अकाले तत्र प्रवेष्टुं नाशक्नोत्। तत्र निकटे सत्रशालायां स्थितः रजन्यां श्वशुरमन्दिरात् रज्ज्वा अवरोहन्तीं कामपि स्त्रियमकस्मात् अवलोकयामास। क्षणेन च तामेव भार्य्यां रत्नद्युतिसमुज्ज्वलां तामुल्कामिवाकाशपतितां प्रत्यभिज्ञाय पर्य्यतप्यत। सापि तं धूसरश्यामं पतिं दृष्ट्वापि अपरिजानती कोऽसीत्यपृच्छत् सोऽपि देवदत्तः पान्थोऽहमिति समब्रवीत्। ततः सा अविश्वस्ता तस्या एव सत्रशालाया अन्तः प्रविवेश, राजपुत्रोऽपि तां गुप्तमवेक्षितुमन्वगात्। सा चात्र कमपि पूर्वस्थितं पुरुषमभ्यगात्, स तु पुरुषः तां त्वं चिरेणागतासीति पादाघातैरताड़यत्। ततः सा पापीयसी द्विगुणरागा तमुपपतिं प्रसाद्य तेन सहिता तत्र यदृच्छमवातिष्ठत्। तद् दृष्ट्वा स राजपुत्रः सुप्रज्ञः क्रुद्धोऽपि अचिन्तयत् कोपस्य नायं कालः अन्यत् कार्य्यं सम्प्रति वर्त्तते कथमेतत् अनुयोज्यं मम कृपाणं एतयोः कृपणयोरुपरि पातये? अलमेतया कुलटया, सर्वदा दुर्विलसितमेतत् मम दौर्भाग्यबलीयसो विधातुः। अतुल्यकुलजन्मनः अस्यैतत् फलं एषा वा कृपणा कथमपराध्यति, न हि काकी कृमिभुजं मुक्त्वा कोकिले रमते? इत्यालोच्य स तां भार्य्यामुपपतिसहितामुपैक्षत् सतां हि [illegible]

चेतसि स्त्री हृदयमिव । तत्कालञ्च सुरतावेगवशात् तस्या वणिक्सुतायाः श्रवणात् सुरत्नाढ्यं विभूषणं मस्खलत् । तच्च सा व्यस्ततया न ददर्श, सुरतान्ते च सत्वरा उपपति मापृच्छ्य यथागतं स्वगृहमयासीत् । प्रच्छन्नकामुके च तस्मिन् द्रुतं क्वापि गते स राजपुत्रः तत् रत्नाभरणं स्फुर-च्छिखामण्डलं प्रनष्टलक्ष्मीगवेषणे हस्तदीपमिवाग्रहीत् । महार्घं तदालोक्य स राजपुत्रस्तत्क्षणं सिद्धार्थमात्मानं मन्यमानः तत्क्षणं निर्गत्य कान्यकुब्जं प्रतस्थे । तत्र बन्धकत्वेन तत् रत्नं निधाय स्वर्णलक्षं गृहीत्वा तेन च हस्त्यश्वान् क्रीत्वा चक्रवर्त्तिनः सकाशमगात् । ततश्च तेन चक्र-वर्त्तिना सम्मानितः तद्दत्तैर्बलैः सार्कं स्वनगरमेत्य रिपून् रणे विजित्य तत् पैतृकं राज्यं प्राप । तच्च रत्नं बन्धात् विनिर्मोच्य श्वशुरान्तिकं तत् रहस्यं प्रकटीकर्त्तुं प्रय-च्छितं प्राहिणोत् । श्वशुरश्च तदुपागतं स्वसुताकर्णभूषणं सम्भ्रान्तः सुतायै तस्यै समदर्शयत् । साऽपि पूर्वपरि-भ्रष्टं स्वचारित्रमिव तत् समालोक्य भर्त्रा प्रेषितञ्च बुद्धा व्याकुलेव समस्मरत् इदं मे तस्यां रात्रौ सप्तच्छदान्तरे पतितं यस्यां तत्र स्थितः कोऽपि पथिको मया दृष्टः । तच्चूनं स मम पतिर्मे शीलं जिज्ञासुस्तत्रेमायया‍ौ । मया तु स न ज्ञातः, तेन च इदं भूषणं प्राप्तम् । इत्येवं चिन्त-यन्त्या तस्या वणिक्सुताया दुर्नयज्वालाविह्वलं हृदयं कातर-मस्फुटत् । ततस्तस्याः पिता रहस्यज्ञां तच्चेटीं पृष्ट्वा स्वबुद्धितः सर्वं तत्त्वं बुद्धा शुचमत्यजत् । राजपुत्रोऽपि

प्राप्तराज्यः गुणार्जितां चक्रवर्त्तितनयां लक्ष्मीं भार्य्यामपरां श्रियमिव सुखमवाप।

तदेवं स्त्रीणां साहसे हृदयं वज्रवत् कर्कशं साध्वसावेगसम्पाते तु पुष्पकोमलम्। तासाञ्च काञ्चन सद्वंशजाता मुक्ता इव योषितः सुवृत्ताच्छहृदया भुवि भूषणतामुपयान्ति। राजश्रीश्च हरिणीव सदा विप्लविनी धैर्य्यपाशेन बन्धुं बुधाएव जानते, तस्मादापद्यपि सम्यग्दर्शिभिः सत्त्वं न त्याज्यं अयमेव मम वृत्तान्तो निदर्शनं येन मया एवं गतोऽपि चारित्रं रक्षितं तच्च भवत्या दर्शनमङ्गलप्राप्त्या अद्य फलितम्। इति तस्याः मुखात् ब्राह्मण्यास्तां कथां श्रुत्वा देवी वासवदत्ता सादरा समचिन्तयत् ब्राह्मणीयं कुलवती नूनं अस्या हि भङ्गिः स्वशीलोपक्षेपे प्रौढ़िश्च वाचि उदारतां शंसति, राजसभायां प्रवेशे च अस्याः प्रावीण्यं दृश्यते, इति संचिन्त्य सा देवी पुनस्तां ब्राह्मणीमवोचत् ब्राह्मणि! त्वं कस्य पत्नी, कश्च ते वृत्तान्तः कथ्यतां तदाकर्ण्य ब्राह्मणी सा वक्तुमुपचक्रमे।

देवि! मालवे जनपदे अग्निदत्त इति कोऽपि द्विजः लक्ष्मीसरस्वत्यो र्निलय आसीत्। तस्य तु अर्थिभिरात्तधनस्य क्रमात् स्वानुरूपौ द्वौ सुतौ बभूताम्। तयोर्ज्येष्ठः शङ्करदत्तो नाम अपरः शान्तिकरः। हे यशस्विनि! स शान्तिकरः विद्यार्थी बाल एव पितुर्निलयात् निर्गत्य क्वापि गतः ज्येष्ठस्तु मां परिणीतवान् यज्ञदत्ततनयाम्। अथ कालेन स मम श्वशुरः अग्निदत्तः वृद्धो लोकान्तरमगात्। श्वश्रूश्च तमन्वगात्। मद्भर्त्ता च धृतगर्भां मां विमुच्य

गौडदेशं गतः शोकेन पित्रोर्वियोगजेन सरस्वतीकुक्षौ तनुमत्यजत् । वृत्तान्ते चास्मिन् तत्सहगामिभिरेत्य स्वजनेभ्यः कथिते सगर्भया मया नानुगन्तुं लब्धम् । ततो मयि अभिनवपतिवियोगातुरायां अकस्मादेत्य दस्युभिरस्मन्निवासः सकलोऽपि अग्रहारो विलुण्ठितः । ततश्चाहं तिसृभिर्ब्राह्मणीभिः सार्द्धं शीलभ्रंशभयात् गृहीतस्वल्पवसना पलायिता । विदूरञ्च गत्वा देशं ताभिरन्विता कृच्छ्रकर्म्मोपजीविनी मासमात्रमतिष्ठम् । अनन्तरं अनाथशरणं वत्सेश्वरं लोकतः श्रुत्वा ताभिरेव ब्राह्मणीभिः शीलैकपाथेया इहागतैव प्रसूतास्मि युगपत् द्वौ तनयौ । तदेवं शोको विदेशः दारिद्र्यं द्विगुणश्च प्रसवः अहो विधात्रा मे आपदां द्वारं सममेव विवृतं, गतिश्चानयोर्बालयोर्वर्द्धनाय नास्तीत्येतदालोच्य लज्जां नारीभूषणं विमुच्य प्रविश्य च राजद्वारं सदसि राजा मया याचितः । कोऽहि शक्नोति आपन्नबालापत्यार्त्तिदर्शनं कर्त्तुं ? तदादेशेन च मया भवत्याश्चरणान्तिकं प्राप्तं विपदश्च मे निवृत्ताः तदेष मम वृत्तान्तः, येन आबाल्यात् अग्निक्रियाधूमैर्मे दृशौ पिङ्गलिते अतोऽर्नाम्ना अहं पिङ्गलिका हे देवि ! स तु देवरः शान्तिकरः विदेशगः कुत्र तिष्ठति इति नाद्यापि ज्ञायते ।

एवमुक्तनिजवृत्तान्तायां तस्यां देवी वासवदत्ता तां कुलीनामित्यवधार्य्य प्रीत्या वितर्क्य एवमवादीत् इह वैदेशिकः शान्तिकरो नामास्माकं पुरोहितः स्थितः मन्ये स एव ते देवरो भविष्यति । इत्युक्त्वा उत्कलिकाकुलां तां ब्राह्मणीं, नीत्वा च रात्रिं सा देवी प्रातःशान्तिकरमानाय्य अन्वय-

अपृच्छत्। अदर्शयच्च तस्मै ताम् आवसथाय तस्मै तां भ्रातृजायां पुत्रवतीम्। अथ विज्ञातवृत्तान्तः बन्धुवयास्तां भ्रातृ- जायां शान्तिकरो गृहमनयत्। तत्र च पितरौ भ्रातर- श्चानुमोच्य यथोचितं बालकद्वयसहितां तां भ्रातृपत्नीमा- श्वासयत्। देवी वासवदत्ता च तस्याः स्वौ सुतौ भाविनः स्वपुत्रस्य पुरोहितौ पर्य्यकल्पयत्। तयोर्ज्येष्ठः शान्ति- सोमः द्वितीयः वैश्वानर इति नामकरणमकरोत् सा देवी बहुसम्पदा, स्वकर्म्मभिः फलभूमिं नीयमानस्य जन्तो रन्ध- स्येव स्वपौरुषं हेतुमात्रम्। अथ प्राप्तबहुविभवास्ते तत्र सङ्गता बालकयुगलसहित-ब्राह्मणी-शान्तिकरा अतिष्ठन्।

अथ गच्छत्सु दिवसेषु एकदा पञ्चभिः सुतैः सह शरा- वान् आदाय आगतां काञ्चित् कुम्भकारिकां दृष्ट्वा देवी वासवदत्ता पार्श्ववर्त्तिनीं तां पिङ्गलिकां ब्राह्मणीमवा- दीत् सखि पिङ्गलिके! पश्य पश्य एतस्याः सुताः, ना- द्यापि ममैकोऽपि, ईदृश्यपि पुत्राणां पात्रं न मादृशी। ततः पिङ्गलिकाब्रवीत् देवि! दुःखायैव दरिद्रेषु पापभू- यिष्ठा प्रजा जायते भूयसी,भवादृशीषु यो जायते सः कोऽपि तादृशः पुण्यवान्। तदलं त्वरया विषादेन च, अचिरेणैव योग्यं सुतमाप्स्यसि। इति पिङ्गलिकयोक्ताऽपि सुत जन्मनि सोत्सुका समभवत्। तदानीञ्च राजा अन्तःपुर- मेत्याब्रवीत् देवि! गिरिशाराधनं विना ते पुत्रो न भविता इति नारदोनोक्तं, तद् आशु वरदोऽसौ देवस्त्वया समाराध्य इति राजनियुक्ता सा देवी तत्कृते व्रताव

निश्चयमकरोत् । तस्याञ्च गृहीतव्रतायां राजापि मन्त्रिमण्डलसहितः सर्वश्च लोकः शङ्कराराधनव्रतं निदधे ।

अथ विभुः शङ्करः त्रिरात्रोपोषितौ तौ दम्पती प्रसादप्रवणीभूय स्वयं स्वप्ने समादिशत् उत्तिष्ठतं युवां युवयोः सुतोऽचिरादेव जनिता यः मत्प्रसादात् विद्याधराणामधीशो भविष्यति । इति वचनमुदीर्य्य चन्द्रमौलौ सपदि तिरोहिते तौ दम्पती प्रबुध्य कृतार्थौ अधिगतवरमलिमं प्रमोदमापतुः । प्रातश्चोत्थाय नरपतिः स्वप्नवृत्तं प्रकृतिषु प्रकाश्य महोत्सवपूर्व्वः व्रतपारणमकरोत् । कतिपयदिवसान्तेच तस्या देव्याः स्वप्ने कश्चित् जटिलः पुरुषः समागत्य फलमदात् । ततो वत्सेश्वरः तया विनिवेदितस्वप्नवृत्तान्तया निवेदितः मन्त्रिभिरभिनन्दितः शशिमौलिना फलव्याजेन दत्तं सुतं विचिन्त्य मनोरथं समीपगममन्यत ।

इति एकविंशस्तरङ्गः ।

—※—

## अथ द्वाविंशस्तरङ्गः ।

अथ वासवदत्तायाः गर्भोऽभवत् । सा लोलनेत्रेण आपाण्डुना मुखेन शशाङ्केनेव गर्भस्थकामप्रणयसमागतेन विबभौ । भाविविद्याधराधीश्वर गर्भसेवार्थं आगता मूर्त्तिमत्यो विद्या इव सख्यस्तां पर्य्युपासत । सा च गर्भस्थसुताभिषेकायेव पल्लवाच्छादितमुखौ कलसाविव श्यामसुखौ पयोधरौ बभार । स्वप्ने च सरसारब्धसङ्गीता

विद्याधर्य्यः तामाकाशस्थितामुपतस्थिरे। सा तु प्रबुद्धा तदेव नभःक्रीड़ाविलसितं साक्षात् सेवितुमभिललाष। यौगन्धरायणश्च तं तस्या दोहदं मन्त्रयन्त्रेन्द्रजालादिप्रयोगैः समपूरयत्। सा च तैस्तैः प्रयोगैर्गगनस्थिता खेचरीव पौरनारीजनानां कौतुकमादधाना विजहार। एकदा वासगृहस्थितायास्तस्या हृदि विद्याधराणामुदाराः कथाः श्रोतुं कौतूहलमजनि। ततस्तत्र देव्या अभ्यर्थितो यौगन्धरायणः शृण्वत्सु सर्वेषु कथामेतामभाषत।

देवि! अस्ति हिमवान् नाम गौरीजन्मदाता पर्वतराजः। तस्मिंश्च विद्याधरनिवासे जीमूतकेतुर्नाम विद्याधराधिपः प्रतिवसतिस्म। तस्य गृहे पितृक्रमागतः कल्पवृक्ष आसीत् येन यदा यदसौ कामयतेस्म तत्क्षणादेव तदनेन प्रसूयते। कदाचिदसौ राजा उद्याने देवरूपिणं तमभ्युपेत्य कल्पतरुमयाचत हे देव! सर्वदास्माभिस्त्वत्तः सर्वमभीप्सितं प्राप्यते, तदपुत्राय मे एकं गुणवन्तं पुत्रं देहि। ततः कल्पतरुरवादीत् राजन्! उत्पत्स्यते तव पुत्रः जातिस्मरो दानवीरः सर्वभूतहितङ्करः। तदाकर्ण्य स राजा सम्प्रहृष्टः तं प्रणम्य गत्वा स्वां प्रियां निवेद्य समनन्दयत्। अथ अचिरादेव तस्य राज्ञः सुतोऽजायत। पिता च नाम्ना तं जीमूतवाहनं चक्रे। ततः स महासत्त्वः जीमूतवाहनः नैसर्गिक्या सर्वभूतानुकम्पया सह वृद्धिमगमत्। क्रमाच्च यौवराज्यस्थः स विजने परिचर्य्यया प्रसादितं पितरं व्यजिज्ञपत् तात! ज्ञायते, भवेऽस्मिन् सर्वे भावाः क्षणभङ्गुराः, केवलमेकं यश एव महतामाकल्प-

स्थिरम् । परोपकारसम्भूतं तद्यदि लभ्यते तदा किमिव न लब्धम् ? या च सम्पत्, सा विद्युदिव केवलं लोकलोचनखेदाय, परेषामनुपकारिणी । तदेषः योऽस्माकं कामदः कल्पतरुरस्ति एष चेत् परार्थं विनियुज्येत तदा महत् फलं लब्धं भवेत् । अहन्तु तथा कर्त्तुमिच्छामि यथा एतस्य समृद्धिभिः सर्वं अर्थिनः अदरिद्रा भवन्तीति । इति पितरं विज्ञाप्य तदनुज्ञामवाप्य च स जीमूतवाहनो गत्वा तं कल्पपादपमब्रवीत् देव ! त्वमस्माकं शश्वदभीष्टफलदः, तदेकमद्य मम वाञ्छितं पूरय,इमामखिलां पृथिवीमदरिद्रां कुरुष्व । स्वस्ति अस्तु ते, धनार्थिभ्यो लोकेभ्यः प्रदत्तोऽसि । इत्युक्तस्तेन धीरेण कल्पवृक्षः भूतले भूरि भूरि कनकं ववर्ष । प्रजा निखिलाः समृद्धा ननन्दुः । जीमूतवाहनादन्यः को दयालुः, यः कल्पवृक्षमपि अर्थिसाच्चकार । इति जातानुरागासु दिक्षु विदिक्षु च जीमूतवाहनस्य उच्चैर्यशः पप्रथे । तत्र समत्सरा स्तद्गोत्रजा स्तस्य जीमूतकेतोर्वद्धमूलं राज्यं दृष्ट्वा विज्ञता दानचयित कल्पवृक्षं तं निष्प्रभावं सुजेयं मेनिरे । ततः सम्भूय युयुत्सुषु तेषु स धीरो जीमूतवाहनः पितरमेत्याब्रवीत् पितः ! यदा इदं शरीरं जलबुद्बुदसन्निभं, तदा प्रवातदीपचपलाः श्रियः कस्य कृते ? ताश्चान्योन्योपमर्द्देन को मनस्वी अभिवाञ्छति ? तस्मात् मया एतैर्गोत्रजैः सह: न योद्धव्यं प्रत्युत राज्यं मुक्त्वा क्वापि वनं गन्तव्यम् । कृपणा एते तिष्ठन्तु, स्वकुलक्षयो माभूत् । इत्युक्तवन्तं पुत्रं जीमूतकेतुः समभाषत पुत्र ! ममापि वनं गन्तव्यं वृद्धस्य मम का स्पृहा । तृण इव

व्यर्थे राज्ये यूनापि कृपालुना त्वया ?। इत्युक्तवता पित्रा जनन्या च सह स जीमूतवाहनः मलयाचलं जगाम। तत्र पित्रोः परिचर्य्यापरः सिद्धानामावासे चन्दनतरुसमाच्छन्ननिर्झरे न्यतिष्ठत्।

अथैकदा वशी सिद्धाधिराजस्य विश्वावसोः सुतो मित्रावसुस्तस्य जीमूतवाहनस्य मित्रमभवत्। स चैकदा ज्ञानी जीमूतवाहनः तत् स्वसारं कन्यकां जन्मान्तर प्रियतमामेकान्ते ददर्श। तत्कालञ्च तयोर्यूनोस्तुल्यमन्योन्यदर्शनं मृगीहृद्वागुराबन्धसदृशमभूत्। एकदा प्रीतो मित्रावसुः त्रिजगत्पूज्यं तं जीमूतवाहनमभ्येत्य अकस्मादवादीत् सखे! मलयवती नाम मम कनीयसी स्वसा अस्ति तामहं तुभ्यं दातुमिच्छामि ममेच्छां मान्यथा कुरु। तदाकर्ण्य सोऽपि जगाद जीमूतवाहनः। सखे! सा तव कनीयसी पूर्वस्मिन् जन्मनि ममैव भार्य्या आसीत् त्वमपि तत्रैव पूर्वे जनने मम द्वितीयं हृदयमिव सुहृदासीः। अहञ्च जातिस्मरः, सर्वं पूर्वजन्मवृत्तं स्मरामि। इत्युक्तवन्तं तं मित्रावसुरुवाच सखे! जन्मान्तरकथां तावत् कथय परं कौतुकं मे वर्त्तते। ततः सुकृती जीमूतवाहनः पूर्वां कथामकथयत्।

पूर्वमहं व्योमचारी विद्याधर आसम्। कदाचित् हिमालयशृङ्गमार्गेण खे चरन्तं मां अधःस्थितः क्रीडन् गौर्य्या सह गौरीपतिरुल्लङ्घनेन कुपितः मर्त्त्ययोनौ पतेति शशाप। ततश्च विद्याधरीं भार्य्यां प्राप्य स्वपदे सुतं नियोज्य स्मृतजातिः पुनः वैद्याधरीं योनिमाप्स्यसीति एवं

प्राणान्तमुक्ता विरते तस्मिन् शर्वे तिरोहिते अचिरेणैवाहं भूतले वणिजां कुले वलभीनगर्य्यां महाधनस्य वणिजः सुतोऽभवं वसुदत्तो नाम। कालेन तारुण्यमापन्नः पित्रा कृतपरिच्छदः वाणिज्यार्थं द्वीपान्तरमगमम्। तत्राटव्यां गच्छन्तं मां तस्कराः सन्निपत्य हृतसर्वस्वं बद्ध्वा स्वपल्लीं चण्डिकागृहमनयन्। तत्र चाहं देवीं पूजयतः पुलिन्दकनाम्नः प्रभोरन्तिक मुपहारार्थं मुपनीतः। स तु शबरो दृष्ट्वैव मामार्द्रहृदयोऽभवत्। शंसति हि जन्मान्तरप्रीतिमकारणं स्निग्धन्मनः। ततः शवराधिपः मां बन्धनात् मोचयित्वा आत्मोपहारेण पूजासमापनं कर्त्तुमैच्छत्। अथ मैवं कुरु, प्रसन्नास्मि ते याचस्वाभिमतं वरं इतिदिव्यया वाचोक्तश्च एवमवादीत् देवि! त्वं प्रसन्ना, अतोऽन्यो वरः कः? तथाप्येतदर्थये, जन्मान्तरेऽपि अनेन वणिजा सह मे सख्यमस्तु इति। एवमस्तु इति उक्त्वा विरतायां दिव्यवाचि स शवरः मां प्रदत्तविशिष्टार्थं निजं गृहं प्राहिणोत्। ततश्च मृत्युमुखात् प्रवासात् प्रत्यागते मयि स मम पिता ज्ञातवृत्तान्तः महोत्सवमकार्षीत्।

अथ कालेन तत्र नगर्य्यां सार्थावलुण्ठनात् धनलुब्धेन राज्ञा आनायितं तमेव शवराधिपमपश्यम्। ततश्चापि मया पितरमावेद्य महीपतिं विज्ञप्य च स्वर्णलक्षेण मृत्युनिग्रहात् सः मोचितः। एवं प्राणदानोपकारस्य प्रत्युपकारं कृत्वा प्रीत्या तं गृहमानीय सम्यक् सुचिरमहं सम्मानितवान् सेवितवांश्च। ततः सत्कृत्य प्रेषितः सः प्रेमार्द्रं हृदयं निधाय स्वां पल्लीं प्रत्याययौ। तत्र च गतः सः

मम प्रत्युपकारार्थं प्राभृतं चिन्तयन् स्वाधीनं मुक्ताकस्तूरिकादिकमपि स्वल्पं मत्वा धनुर्द्वितीयः मदर्थं महामूल्यं मुक्ताहारमाहर्त्तुं गजानां निधनाय हिमाचलं प्रायात्। तत्र च भ्रमन् तीरस्थदेवागारं महत् एकं सरः प्राप्य तदम्बुपानार्थं वन्यहस्तिनामागमं विभाव्य प्रच्छन्नस्तदेकान्ते तेषां जिघांसया सचापस्तस्थौ। ददर्श च चणे तस्मिन् तत्सर स्तीरवर्त्तिनं हरं पूजयितुं कामपि अद्भुताकारां सिंहवाहनां कुमारीं तुषाराद्रिसुतामिवापरां शम्भुपरिचर्य्यया समागताम्। दृष्ट्वैव विस्मयाविष्टः स शवराधीशः समचिन्तमत् केयं यदि मानवी कथं तत् सिंहवाहना, अथ दिव्ययोषित् कथं मादृशैर्दृश्या, अथवा चक्षुषोर्मम पूर्वजन्मकृतपुण्यानां परिणतिरियम्। यदि अनया तं मम मित्रं योजयितुं शक्नुयां ततः कापि अन्यविधा प्रत्युपकृतिः कृता स्यात् तदेतां तावत् उपसर्पामि प्रष्टुं वरमित्यालोच्य यावत् स मे मित्रं शबरस्तामुपाययौ, तावत् सा च सिंहादवतीर्य्य सरःपद्मानि अवचेतुमुपचक्रमे। अम्बरच्छायञ्च तमन्तिकमाप्तं कृताननतिमपूर्वं शबरं अतिथिं बुद्धा स्वागतेन। कस्त्वं कथमिमामतिदुर्गमां भूमिमागतोऽसीति पृष्टवतीञ्च तां स शबरः प्रत्यवादीत् देवि! अहं भवान्याश्चरणशरणः कश्चित् शबराधिपः, मातङ्गमुक्ताहेतोरिदं वनमागतोऽस्मि। त्वाञ्च दृष्ट्वा मम प्राणप्रदः सुहृत् सार्थवाहतनयः वसुदत्तः मया स्मृतः। सुन्दरि! स हि त्वमिव रूपेण यौवनेन च विश्वस्य अद्वितीयो नयनामृतनिर्भरः। सैव धन्या कन्या लोके, यस्यास्तेन मैत्री-

श्रागदयाधैर्य्यनिलयेन कन्दर्पवान् क: स्मर्य्यते। तदेषा भवत्या आकृतिस्तादृशेन न युज्यते चेत् व्यर्थं वहति काम: कोदण्डमिति मे मति: ।

इत्येवं व्याधराजवचनै: सद्य: समाकृष्टमानसा सा कुमारी तत्क्षणमेव कन्दर्पवशवर्त्तिनी समभवत् । उवाच तं शवराधिपं क्व ते स सुहृत् आनीय दर्श्यतामिति । तदाकर्ण्य स तदैव तामामन्त्र्य कृतार्थंमन्य: सम्प्रहृष्ट: प्रत्यागमत् स्वपल्लीम् । आगत्य च स्वगृहं गृहीत्वा च भूरिभारिशतैर्वाह्यं मुक्तामृगमदादिकं मम गृहमाययौ । सर्वेच पुरस्कृतस्तत्र प्रविश्य सर्वं तत् प्राभृतं बहुस्वर्णलक्षमूल्यं मम पित्रे समर्पयत् । ततश्चोत्सवेनैव दिने याते रात्रौ रहसि स मे सखा कन्यादर्शनवृत्तान्तमामूलादवर्णयत् । एहि तत्रैव गच्छाव: इत्युक्त्वा स समुत्सुकमना मामादाय तस्यामेव निशि स्वैरं प्रायात् । प्रातश्च मां क्वापि गतं शवरेण बन्धुना सह बुद्धा तत् प्रत्ययाच्च धृतिमालम्ब्य मम पिता तस्थौ । स च मया सह क्रमात् तुषाराचलमति त्वरया प्रापत् । तच्च सर: प्राप्य स्नात्वा सायं स्वादुफलभुजौ आवां तस्मिन् वने तां निशामनयाव ।

अथापरेद्यु: प्रतिपदमुत्कलिकाकुलेन तन्मार्गभाविना मनसा प्रत्युद्गतेव दक्षिणेन दिदृक्षयेव स्फुरता चक्षुषा सूचितागमना सा कन्या सटालसिंहवाहिनी शरदम्भोधरोत्सङ्गसङ्गिनीव चन्द्रकला यथासमयमागमत् । उच्छ्वसितिस्मयौत्सुक्यसाध्वसं पश्यतश्च तां मम हृदयं क्षणमिवाभूत् तत् कालं न जाने । अथ सा कन्यका सिंहादवतीर्य्य पुष्पाचि

उत्थित्य सरसि स्नात्वा तत्तीरगतं हरमपूपुजत्। अत-पूजाञ्च तामुपेत्य कृतादरां मम सुहृत् स शवरराजः प्रणम्य भात्मानमावेद्य भवोचत् देवि! स मम सुहृत् तव योग्यो वर आनीतः। यद्यनुमन्यसे तदधुना तं तुभ्यं दर्श-यामि। तदाकर्ण्य दर्शयेत्युक्ते तया स शवरः मामुपेत्य नीत्वा मां तदन्तिकं तामदर्शयत्। सापि मां सप्रश्रयेन चक्षुषा तिर्य्यगालोक्य मदनावेशवशा तं शवरमभ्यधात्। नखायं ते न मानुषः, कोऽप्ययं देवो मद्वञ्चनाय भत्र समा-गतः, न हि मर्त्त्यस्यैवंविधा भाकृतिः। तदाकर्ण्य अह-मुक्तवान् सुन्दरि! सत्य महं मर्त्त्यः, त्वां प्रत्याययितुं ब्रवीमि, भार्जवसम्पन्ने जने व्याजेन किम्? अहं वलभी-वासिनः सार्थवाहस्य महाधनाख्यस्य महेश्वरवरार्जित-स्तनयः। स मम पिता पुत्रार्थं तपस्यन् महेशमाराधयन् तेन भक्तानुकम्पिना स्वप्ने एवमुक्तः उत्तिष्ठ,जनिष्यते कोऽपि महात्मा तव पुत्र इति। एतत् श्रुत्वा प्रबुद्धस्य मम पितुः कालेनाहं वसुदत्तो नाम पुत्रो जातः। भयञ्च शवरपति-र्मया देशान्तरगतेन स्वयम्वरसुहृत् कृच्छ्रे कबान्धवः प्राप्तः। एष तावत् मम तत्त्व संक्षेप इत्युक्त्वा मयि विरते सा कन्या लज्जावनतमुखी समभाषत भस्त्येतत् मायाद्य स्वप्ने कृतार्चनां महेशानः समादिशत् प्रातः प्राप्स्यसि भर्त्तार-मिति तस्मात् त्वं मे भर्त्ता, भयञ्च तव सुहृत् मम भ्राता इति वाणमृतेन मामभिषिच्य विरताभवत्। ततस्तया सार्धं विवाहाय यथाविधि सम्मन्त्र सखिभो निजं गृहं समनुसवधारितवान्। सा च इङ्गितेन आदरं सिंहमारुह्य

अत्र उपविश आर्य्यपुत्र! इति मामब्रवीत्। अहञ्च तेन सुहृदा शवरेण समनुज्ञातः सिंहमारुह्य दयितां तामुत्सङ्गे गृहीत्वा कृतार्थः गृहं प्रति प्रस्थितवान्। सुहृच्च मम पुरःसर एव चलितः। क्रमेण च वयं शवराधीश शर-निर्भिन्नहरिणमांसहृतश्रमाः सर्वे वल्लभीं पुरीं प्रापिम। तत्र मां सिंहारूढं सदयितमागतं दृष्ट्वा साश्चर्य्याः सर्वे मम पित्रे समब्रुवन्। सोऽपि मत्पिता सविस्मयः प्रत्युद्गम्य हर्षादवतीर्णं मृगेन्द्रात् पादप्रणतं मामभ्यनन्दत्। मुमुदे च भृशं तामनन्यसदृशीं कृतपादाभिवन्दनां ममोचितां भार्य्यां पश्यन्। ततश्च गृहं प्रवेश्यास्मान् वृत्तान्तं परिपृच्छ्य च शवराधीश सौहार्द्दं प्रशंसन् महोत्सवमकार्षीत्। ततो दैवज्ञनिर्णीते शुभेऽहनि समागताखिलबन्धुरहं तां वराङ्गनां परिणीतवान्। तदालोक्य च स सिंहः सहसा सर्वेषु पश्यत्सु पुरुषाकृतिरभवत्। किमेतदिति समुत्सुके तस्मिन् जनसङ्घे स दिव्यवसनाभरणः पुमान् मामेव मवादीत्। अहं चित्राङ्गदो नाम विद्याधरः, इयञ्च मम मनोवती नाम प्राणाधिकप्रिया तनया, एनामङ्के कृत्वा सदा विपिनेच भ्रमन्नहं एकदा तीरतपोवनां गङ्गामनुससार। तत्रत्विलङ्घनभयात् तां त्यजतोऽपि मम दैवात् पुष्पमाला तदम्भसि पपात। अन्तर्जलस्थितश्च नारदस्तपोधनः सहसा पृष्ठे पतितया तया भृशं क्रुद्धः मामशपत् पाप! अनेनौद्धत्येन सिंहोभव, हिमाचलस्थश्च एतां सुतां पृष्ठेन वोढासि, यदा च एषा मानुषेण परिणेष्यते, तदा तद्दर्शनादेव शापादस्मात् विमोक्ष्यसे। ततः प्रभृति अहं सिंहो भूत्वा

हिमाचले हरपूजापरां तनयामिमां बद्दहतिष्ठम्। अनन्तरं यथा शवराधिपतेर्बलात् इदं कल्याणं सम्पन्नं तत् तव विदितमेव, तदहं साधयामि भद्रमस्तु ते, अद्य स मे शापस्तीर्णः इत्युक्त्वा स विद्याधरी नभः समुदपतत्। ततस्तद्विवरणेन विस्मयान्वितः श्लाघ्यसम्बन्धेन सम्प्रहृष्टः पिता मम नन्दत्सु स्वजनबान्धवेषु महोत्सवं व्यधात्। अचिन्त्यं हि निर्व्याजमित्राणां चरितं, ये पुनः प्राणैरुपकृत्यापि सुहृत्सु न तृप्यन्ति। इत्येवं तत्र सर्वोजनः शवराधिपतेश्चरितं ध्यायन् ध्यायन् सचमत्कारमभ्यधात्। राजापि तत्रस्थः तस्य सदाशयस्य शवरपतेस्तत् चरितं विदित्वा आमत्स्नेहेन च परं प्रीतिमवाप। तुष्टश्च मत्पितुरभ्यर्थनया सहसैव तस्मै शवरनाथाय रत्नोपायनदायिने अशेषमटवीराज्यमदात्।

ततोऽहं तया मनोवत्या कान्तया तेन च मित्रेण शवरराजेन कृतार्थः सुखमवात्सम्। स च शवरराजः स्वीकृतस्वदेशवसतिर्भूयसा अस्मद्गृहेष्वेव न्यवसत्। इत्थं परस्परमनुरागबद्धचेतसोर्मम तस्य च शवरस्य मित्रयोरुभयोः परमैत्रैव सुखेन कालोऽतिजगाम। अचिराच्च मनोवत्यां तस्यां सर्वजनहृदयानन्दनः सुतोऽजनि। स च हिरण्यदत्तनामा क्रमेण कृतविद्यः यथाविधि कृतोद्वाहश्च वृद्धिमाययौ। तद् दृष्ट्वा च हृष्टौ मत्पितरौ जीवितफलं पूर्णं मत्वा देहत्यागाय भागीरथीमगच्छताम्। अहन्तु पितृशोकार्त्तः कथञ्चित् बान्धवैर्धृतिं ग्राहितो गृहभार मुदवहम्। एकतो मनोवत्या मोहनमुख-

चन्द्रदर्शनं चन्द्रतः शबरेन्द्रभक्तिः मां स्वयमेव श्वश-मनन्दयत्।

एवं गच्छत्सु कालेषु क्रमेण जरया क्रान्तकलेवरोऽहं पुत्रं कुटुम्बभरणयोग्यं दृष्ट्वा तस्मिन् भारं निवेश्य च सदारो वनं गन्तुमिच्छन् कालिञ्जरं गिरिमगमम्। सखा च स मत्स्नेहेन त्यक्तराज्यस्वजनः मामेवान्वगच्छत्। तत्र गतस्यैव मम स शर्वविहितः शापः आत्मीया वैद्याधरी जातिश्च सहसा स्मृतिपथमाययौ। तदानीञ्च पत्न्यै मनोवत्यै सख्ये च शबरेन्द्राय तत्सर्वमाख्याय मां गुर्वीं तनुं मुमुक्षुः इमे एव भार्य्यामित्रे मम स्मरतो भूयास्ता-मन्यजन्मनि इत्युक्त्वा हृदये शङ्करमनुस्मृत्य तस्मात् गिरि-तटात् सहपत्नीमित्रो निपत्य प्रसभं शरीरमत्यजम्। सोऽहं नाम्ना जीमूतवाहनः विद्याधरकुले जातिस्मरः समुत्पन्नः। स च शबरेन्द्रस्त्वं शर्वप्रसादात् सिद्धराजस्य विश्वावसोः सुतो मित्रावसुः जातः। या च मम भार्य्या मनोवती नाम विद्याधरी, सैव तव स्वसा मलयवती संजाता। तदेवं ते भगिनी मम पूर्वपत्नी त्वञ्च मम पूर्व-मित्रं तस्मात् युक्ता परिणेतु मसौ मम, किन्तु पूर्वमिदं गत्वा मम पित्रोर्निवेदय, तयोर्मतेन च एतत् समीहितं सेत्स्यतीति।

इत्थं निशम्य मित्रावसुः प्रीतमना गत्वा तत्पितृभ्यां तत् कथयामास। ताभ्यामभिनन्दितश्च संहृष्टः स्वपित्रो-र्निवेद्य सत्वरं स्वसुर्विवाहोद्योगमकरोत्। ततो जीमूत-वाहनः सिद्धराजसत्कृतस्तस्या मलयवत्याः पाणिं

जगाह। तत्र च महान् विद्याधराणां महोत्सवः सम-भवत्। ततोद्वाहश्च स जीमूतवाहनः महाविभवसम्पन्नः वध्वा सह तस्मिन् मलयाद्रौ समवस्थितः एकदा श्वशुरसुतेन मित्रावसुना सह जलधेर्वेलावनानि अवलो-कयितुमगात्। अपश्यच्च तत्र युवानं मुहुर्हा हा पुत्र इति क्रन्दन्तीं जननीं निवर्त्तयन्तं अपरेण भटेनेव अनुयायिना पुरुषेण पृथूत्तुङ्गं शिलातलं प्रापय्य परित्यक्तं पुरुषम्। जीमूतवाहनेन तु कस्त्वं किमीहसे, कथञ्च ते माता त्वा-मनुशोचति इति पृष्टे सोऽपि तस्मै वृत्तान्तमब्रवीत्।

पुरा कश्यपस्य प्रजापतेर्द्वे भार्य्ये कद्रुर्विनता चास्ताम्। ते च परस्परं कथाप्रसङ्गेन विवादं चक्रतुः। प्रथमा रवेरश्वान् श्यामानवादीत् द्वितीया सितानिति। एवं विवदमाने च पराजये अन्योन्यदास्यं पणं बबन्धतुः। ततो जयार्थिनी कद्रुः निजात्मजैः नागैः अर्कस्य अश्वान् विषफुत्कारमलिनान् अकारयत् चकार च दासीं तादृशांश्च तान् प्रदर्श्य कपटजितां विनताम्। तद् विदित्वा गरुड़ः विनतासुतः सान्त्वेन मातुर्दासत्वमुक्तिं विमातरं कद्रुमयाचत। ततः कद्रुसुता नागा विचिन्त्य तमब्रुवन् वैनतेय! क्षीराब्धिर्मथितुमारब्धो देवैः, त्वं तस्मात् सुधां समाहृत्य नः प्रतिदानं प्रयच्छ, मातरं गृहाण च। एतत् नागानां वचनं निशम्य गत्वा च क्षीरोदं सुधार्थं महान्तं पराक्रममदर्शयत्। तेन च पराक्रमेण परितुष्टो भगवान् नारायणः स्वयं तमादिदेश तुष्टोऽस्मि खगराज! वरं कञ्चित् वृणीष्वेति स तु गरुड़ः मातुर्दास्येन कोपितः

नागा मे भक्ष्या भवन्तु इति वरं वव्रे । तथेति हरिणा दिष्टो निजवीर्य्यार्जितामृतः सः ज्ञातवृत्तान्तेन शक्रेण एवं गदितः पक्षीन्द्र ! त्वया तथा कार्य्यं यथा मूढ़ैर्नागैः सुधा न पीयते, अहमपि शीघ्रं गत्वा एतां प्रत्याहरामीति ।

एतदाकर्ण्य तथेत्युक्त्वा स गरुड़ः सुधाकलसमादाय नागानुपाययौ । जगाद च तान् वरप्रभावमुग्धान्, एतदानीतममृतं, मातरं मे मुक्त्वा गृह्यताम् । यदि युष्माकमप्रत्ययः तदा एतदहं दर्भसंस्तरे स्थापयामि, मातरं मोचयित्वा गच्छामि यूयं सुधां गृह्णीत । तथेत्युक्ते तै र्नागैः स पवित्रे कुशे सुधाकलसमस्थापयत् ते चास्य जननीं तत्यजुः । एवं दास्यात् मुक्तायां मातरि गते च गरुड़े यावत् ते नागा निःशङ्कममृतं आदातुमुद्यतास्ते तावत् निपत्य सहसा स्वशक्तितस्तान् विमोह्य शक्रः कुशसंस्तरात् तं सुधा कलसं जहार । अथ विषस्मास्ते नागा अस्मिन् अमृतश्चेत् लेपोऽप्यस्तीति ज्ञात्वा तं दर्भसंस्तरं लिलिहुः प्रापुश्च तेन पाटितजिह्वा वृथैवद्विजिह्वतां किमिव हि लुब्धानां हास्याद्दतेऽन्यत् फलम् ।

अथ तार्क्ष्यः हरेर्लब्धवरः पुनः पुनर्निपत्य पूर्ववैरानुवन्धेन अलब्धामृतरसान् तान् नागान् भोक्तुं प्रववृते । तस्य आपाते च रसातलं त्रासनिर्जीवराजिलं प्रभ्रष्टगर्भिणीगर्भं क्षपितपन्नगमभूत् । अनुदिनञ्चैतदालोक्य भुजगेश्वरो वासुकिः कृत्स्नं नागलोकमेकपदे नष्टं मन्यमानः तस्य च गरुत्मतः दुर्वारवीर्य्यतां विचिन्तयन् प्रार्थना-

पूर्वमेवं समयं चकार। हे पक्षीन्द्र! तव आहारार्थं प्रत्यह मेक मेकं नागं अहं पयोधि पुलिनवर्त्तिनि अचले प्रेषयामि, त्वयातु पाताले नैव प्रवेष्टव्यं एकदैव सर्वस्मिन् क्षयिते तवैव स्वार्थहानि र्भवेदिति। एवं वासुकिना अभ्यर्थितः पक्षीन्द्रः तथेति प्रतिज्ञाय ततः प्रभृति अन्वहं तत्प्रेषितं एकैकं नागं भक्षयति। क्रमेण असंख्याः पन्नगाः क्षयं नीताः। अद्य तु शङ्खचूड़नाम्नो मम वारः, तस्मादहं नागराजादेशात् गरुड़ाहारार्थ मिमां वध्य शिला मायातो मातुश्च शोच्यता मिति।

इति तस्य शङ्खचूड़स्य वचः श्रुत्वा सोऽन्त र्दुःखितः जीमूतवाहन स्तमभाषत अहो! वत वासुकेः किं निःसत्त्वं राजत्वं यत् स्वहस्तेन प्रजा रिपोरामिषतां नीयन्ते। प्रथम मेव तेन किमात्मैव गरुत्मते न दत्तः, क्लीवेन केयं स्वकुलक्षयसाक्षिता अभ्यर्थिता। तार्क्ष्यश्च काश्यपात् उत्पद्य कथमिदं पापं कुरुते, देह मात्रार्थं कथमयं महतामपि मोहः। तदहं तावदद्य त्वां गरुत्मतो रक्षामि स्वशरीरप्रदानेन मा विषादं कुरु। तदाकर्ण्य शङ्खचूड़ोऽपि धैर्य्यात् तमुवाच शान्तं पापं महासत्त्व! मैवं वद नहि काचस्य कृते मुक्तामणेः क्षति र्युज्यते। नचाहं कुलकलङ्कितां कथां सोढुं शक्नुयाम्। एवमुक्त्वा स साधुर्नागः जीमूतवाहनं निषिध्य क्षणान्तरगामिनीञ्च गरुड़वेलां मत्वा वारिधे स्तीरवर्त्तिनं गोकर्णाख्यं शिवं नमस्कर्त्तुं अस्तकाले जगाम। गतेच तस्मिन् स कारुण्यनिधिः जीमूतवाहन स्तस्य त्राणाय आत्मदानस्य

अवसरं मन्यमानः स्वयुक्तितः विस्मृत मिवात्मानं प्रदर्श्य कार्य्यान्तर व्यपदेशेन निजं मित्रं मित्रावसुं गृहं प्राहिणोत्। क्षणेच तस्मिन् समासन्न तार्क्ष्य पक्षानिला-हता सा भूस्तत् सत्त्वदर्शनाश्चर्य्यादिव अकम्पत। तेन च नागरिपु मायान्तं मत्वा स जीमूतवाहनः परानु-ग्राहकस्तां बध्यशिलामारुरोह। क्षणाच्च तत्र निपत्य पक्षीन्द्रस्तं महासत्त्व माहत्य चञ्च्वा जहार। गृहीत्वा च स्रवद्रक्तधारं च्युतोत्खातशिखामणिं गिरि-शिखरं नीत्वा भक्षयितुं प्रावर्त्तत। तत्कालञ्च नभ-स्तलात् पुष्पवृष्टिः पपात। तद्दर्शनाच्च किमेत दिति तार्क्ष्यो विसिस्मिये। तावच्च स शङ्खचूड़स्तं गोकर्णं नत्वा समागतः बध्यशिलातलं रुधिरासारसिक्त मद्राक्षीत् हा धिक्! मदर्थं तेन महात्मना नूनमात्मा दत्तः, तत्कुत्र नीतस्तार्क्ष्येण सम्प्रति भविष्यति, यावदन्विष्यामि इति विचिन्त्य स साधु स्तद्रक्तधारा मनुसरन् ययौ।

अत्रान्तरे च हृष्टं तं जीमूतवाहनं दृष्ट्वा गरुड़ः भक्षणाद् विरतः सविस्मयं अचिन्तयत् कश्चिदसौ अन्यः कोऽपि, यो मया भक्ष्यमाणोऽपि अविषद्य प्रत्युत हृष्यति। इति विमृशन्तं तार्क्ष्यं तादृगवस्थोऽपि स जीमूतवाहनः स्वाभीष्टसिद्धये जगाद, पक्षिराज! ममाद्यापि शरीरे मांस-शोणितं वर्त्तते, तृप्तिं पश्यामि च न ते, तत् कस्मादक स्मात् भक्षणात् विरतोऽसि। तदाकर्ण्य साश्चर्य्यः पक्षिराड् अब्रवीत् हे साधो! त्वं तावत् न नागः, ब्रूहि को भवानिति। नाग एवास्मि भुङ्क्ष्व मा मिति यावत्

तं जीमूतवाहनः प्रत्युवाच तावत् स शङ्खचूड़ः दूरात् प्राप्त स्तमभाषत गरुत्मन्! मा तावत्, नैष नागः, नागोऽहमागतः, मुञ्च एनं कोऽयं अकाण्डे एवं महान् भ्रमः सञ्जातः। तदाकर्ण्य खगराजोऽतीव विस्मितः सम-भवत् भेजे च जीमूतवाहनः स्ववाञ्छित सिद्धिविघ्नखेदम्। ततो गरुड़ः परस्परालापेन मोहात् तं विद्याधराधिपं भक्षितं बुद्धा अन्वतप्यत अहो! वत नृशंसस्य मम सुमहत् पातक मापतितं अथवा उन्मार्गगामिनः सुलभपापा भवन्त्येव। श्लाघ्यस्तु अयमेक एव महात्मा येन परार्थ-प्राणदायिना विश्वमिदं मोहवशं अधःकृतम्। इति चिन्त-यन्तं पापशुद्धये वह्निं विविक्षुमालक्ष्य जीमूतवाहनः सम-भ्यधात् पक्षीन्द्र! किं विषीदसि, सत्यं पापाद् विभेषि चेत् तदा अतःपरं ते भुजङ्गा न भक्ष्याः पूर्वभुक्तेषु च पन्नगेषु अनुशयः कार्य्यः, एष एव ते प्रायश्चित्तं अन्यत् चिन्तितं वृथा। इत्युक्तः तेन सर्वभूतानुकम्पिना जीमूतवाहनेन प्रीतः गरुत्मान् तथेति तस्य वचः गुरोरिव प्रत्यपद्यत। ययौ चामृतमानेतुं त्रिदिवात् जवेन क्षताङ्गं तं अन्यांश्च भक्षितान् अहीन् जीवयितुम्। ततश्च साक्षादागत्य देव्या मलयवतीभक्तितुष्टया अमृतेन सिक्तो जीमूतवा-हनः अधिकतरोद्भूत कान्तीनि अङ्गानि प्राप। गीर्वाणाश्च तदानी मम्बरे सानन्द दुन्दुभि मवादयन्। स्वस्थोत्थिते च तस्मिन् गरुड़ः अमृतमानीय तस्मिन् वेलातटे ववर्ष। तेन च सर्वे पन्नगा जीवन्त एव समुत्तस्थुः। क्षणे तस्मिन् तत् वेला विनिर्मुक्त गरुड़ भयं भुजङ्ग कुलाकुलं

जीमूतवाहनालोकनार्थं मागतं पाताल मिव बभौ। ततोऽक्षयेन देहेन यशसा च विराजितं जीमूतवाहनं बुद्धा तद्वन्धुजनो भृश मभ्यनन्दत्। [तस्य भार्य्या मलयवती च भृशं ननन्द। पितरौ च जहृषतुः कोहि सुख परिणामेन दुःखेन न प्रहृष्येत्? अथ तेन विसृष्टः शङ्खचूड़ः पातालमगात् जीमूतवाहनयशस्तु त्रिलोकीम्। ततस्ते राज्याहारका मतङ्गाद्या दायादाः प्रीतिप्रह्व-सुरनिकरं गरुड़ं प्रणम्य सभयास्तं विद्याधरतिलकं जीमूतवाहन मभ्येत्य हिमगिरि सुतानुग्रहेण महाप्रभाव माकलय्य विनम्रा बभूवुः न च कदाचिदपि विकृतिं ययुः। ततः सुकृती जीमूतवाहनः तस्मात् मलयाचलात् निज निलयं तुहिनाचल मगमत् बुभुजे च तत्र पितृभ्यां सहितः मित्रावसुना मलयवत्या च चक्रवर्त्ति पदम्। एव मशेष जगत् पूज्यचरितानां स्वयमनुधावन्ति पदवीं कल्याणपरम्पराः। इत्थं कथां यौगन्धरायणात् निशम्य देवी वासवदत्ता गर्भदोहदिनी भृशं मुमुदे। निनाय तं वासरं भाविविद्याधरेन्द्र पुत्रचिन्तया पतिसमीप-वर्त्तिनी।

इति द्वाविंशस्तरङ्गः।

—*—

## अथ त्रयोविंशस्तरङ्गः ।



अथान्येद्युर्वासवदत्ता तं समीपस्थं सचिवैरन्वितं पतिमब्रवीत् आर्य्यपुत्र ! यतः प्रभृति गर्भोऽयं मया धृतः, ततःप्रभृति तीव्रा तस्य रक्षा मां बाधते । अद्य च तच्चिन्तया निशि सुप्ता अहं कथञ्चन स्वप्ने कञ्चित् पुरुषमागतमद्राक्षम् । सच पिशङ्गजटः शूली मां समुपेत्य सानुकम्प इवावोचत् पुत्रि । गर्भार्थं चिन्तां मा कृथाः, अहमेव एनं रक्षामि मयैव हि एष दत्तः, अन्यच्च श्रूयतां कथयामि अभिज्ञानार्थं, प्रभाते कापि नारी बलात् साक्षेपं पतिमाकर्षन्ती पञ्चभिः सुतैर्बन्धुजनैश्च परिवृता विज्ञापनार्थं युष्मानुपैष्यति परन्तु सा दुश्चारिणी स्वबान्धवानां बलात् पतिं घातयितुमिच्छन्ती यत् वक्ष्यति तत् सर्वं मिथ्येति त्वं पूर्वं वत्सेशं विज्ञापयेः येन स साधुः तस्याः कुलटायाः सकाशात् मुच्येत । इत्यादिश्य तस्मिन् पुरुषे अन्तर्हिते सहसैव सा राज्ञी प्रबुद्धा, शर्वरी च व्ययासीत् । एवमुक्ते तया देव्या सर्वे सचिवाः शङ्करानुग्रहवादिनः विस्मिताः संवादमपेक्षमाणा आसन् । क्षणे च तस्मिन् द्वारपालाग्रणीरकस्मात् प्रविश्य आर्त्तानुकम्पापरं वत्सराजं व्यजिज्ञपत् देव ! द्वारि स्थिता कापि योषित् बान्धवैर्वृता पञ्च पुत्रान् गृहीत्वा पतिञ्च विवशमाक्षिपन्ती विज्ञप्त्यै आगता, श्रुत्वा देवः प्रमाणम् ।

तदाकर्ण्य राजा देव्याः स्वप्नसंवादेन विस्मितः प्रवेशय-तामिह सेति प्रतीहारमादिशत् । देवी च स्वप्नसत्यत्वप्र-त्ययात् सञ्जातसत्पुत्रप्राप्तिनिश्चया परां मुदं प्राप । अथ द्वारोन्मुखैः सर्वैः सकौतुकं वीक्ष्यमाणा योषित् प्रतीहार-पुरःसरा तथैव विवेश । प्रविश्य च दीनेव यथाक्रमकृता-नतिः संसदि स्थितं देवीसहितं नृपं न्यवेदयत् महाराज! अयं मम पतिः निरपराधाया मम अनाथाया अन्नाच्छाद-नादिकं न ददाति । इत्युक्ते च तया तद्भर्त्तापि व्यज्ञाप-यत् देव! एषा सबन्धुर्मद्वधैषिणी मिथ्या जल्पति आवत्-सरान्तं सर्वमन्नाच्छादनादिकं मयास्यै अग्रत एव प्रदत्तं एतस्या अन्ये बान्धवा एवात्र मे साक्षिणः एवं विज्ञापितो राजा स्वयमब्रवीत् देवि! स्वप्ने देवेन शूलिनैव साक्ष्यं दत्तं स्वयमत्र, तत् किमन्यैः साक्षिभिः, एषा सबान्धवा स्त्री निग्राह्या । इति नृपेणोक्ते धीमान् यौगन्धरायणः सम-भाषत देव! तथापि लौकिकसाक्षिवचनात् यथायथं वादनिर्णयः कार्य्यः लोको हि एतत् अजानन् न कथ-ञ्चन प्रतीयात् । तदाकर्ण्य राजा साक्षिणोऽन्यान् तत्-क्षणमानाय्य पप्रच्छ ते च तां मिथ्यावादिनीं सर्वएव शशं-सुः । ततः स वत्सेशः प्रख्यातसत्यपतिद्रोहिणीं सपुत्रां सबान्धवामिमां देशात् निरवासयत् । व्यसर्जयच्च दया-र्द्रधीस्तद्भर्त्तारं साधुं विवाहान्तरपर्य्याप्तविपुलं धनं दत्त्वा । असती हि नितरां क्रूरबुद्धिः पतिं दुर्दशापन्नं जीवन्तमेव हृकीव कृन्तति, स्निग्धा कुलीना तु गृहिणी तापहारिणी तरुच्छायेव मार्गवर्त्तिनी पुण्यैरेव कस्यापि

जायते। इत्येवं प्रसङ्गेन वदन्तं तं महीपतिं पार्श्वस्थितो वसन्तकः कथानिपुणः समब्रवीत् देव! स्नेहो विरोधो वा देहिनां प्राग्जन्मवासनाभ्यासवशादेव प्रायशो जायते, तदत्र कामपि कथां कथयामि श्रूयताम्।

आसीत् किल वाराणस्यां विक्रमचण्डो नाम महीपालः। तस्य सिंहपराक्रमाख्यः कश्चित् प्रियः रणेषु द्यूतेषु च अद्वितीयः जयी भृत्यः स्थितः। तस्य भार्य्या च कलहकरीति अन्वर्थनाम्नी विकृता वपुषि मनसि च। स तु सततं द्यूतेन राजतश्च प्रचुरं धनं प्राप्य सर्वमेव तस्यै पत्न्यै समर्पयत्। स तु समुत्पन्नपुत्रत्रितयापि शाठ्यात् कलहं विना क्षणमपि नातिष्ठत्। त्वं बहिः पिबसि भुङ्क्षे च नास्मभ्यं किञ्चित् ददासि च इत्येवं वदन्ती तं नित्यं तापयामास। प्रतिदिनमाहारपानाद्यैः प्रसाद्यमानापि दुरन्ता भोगतृष्णा भृशं जज्वाल। ततः क्रमेण नितान्तखिन्नः स सिंहपराक्रमः गृहं त्यक्त्वा विन्ध्यवासिनीं द्रष्टुमगमत्। सा तु देवी स्वप्ने निराहारखिन्नं तं समादिदेश पुत्र! उत्तिष्ठ, वाराणसीं गच्छ। तत्र यः अतिमहान् न्यग्रोधतरुरस्ति, तन्मूलात् खन्यमानात् वाञ्छितं लप्स्यसे। येन तन्मध्यात् गारुड़मणिमय [redacted]मसिनिर्म्मलं एकं पात्रं उत्थास्यसि तत्रार्पितदृष्टिः रत्न. प्रतिबिम्बितामिव सर्वस्य जन्तोः प्राग्जातिं द्रक्ष्यसि या तव जिज्ञासिता। तेनैव भार्य्याया आत्मनश्च पूर्वजातिं बुद्ध्वा कृतार्थः गतखेदश्च सुखी भविष्यसि। एवमुक्तश्च तया देव्या स सिंहपराक्रमः प्रातः प्रबुद्धः कृतपारणः वाराणसीं प्रायात्।

प्राप्य तां पुरीं तस्मात् न्यग्रोधमूलात् निधानं मणिमयं पात्रं लेभे। ददर्श च तस्मिन् पूर्वजन्मनि स्वकां भार्य्यां घोरां उष्ट्रीं आत्मानञ्च मृगाधिपम्। ततः सः पूर्वजन्ममहावैरनिबन्धं परस्परद्वेषं बुद्धा शोकमोहौ तत्याज। अथ तस्य पात्रस्य प्रभावात् परिज्ञाता बह्वीः प्राग्जन्मभिन्नजातीयाः कन्यकाः परिहृत्य जन्मान्तरे तुल्यां सिंहीं विचित्य परिणीतवान्। एवं स सिंहश्रीनाम्नीं द्वितीयां भार्य्यां परिणीय कलहकारीं तां ग्रामैकभागिनीं विधाय निधानप्राप्तिसुखितश्चिरं तस्थौ। हे राजन्! दारादयः इत्थं प्राक् संस्कारवशात् केऽपि प्राप्तवैराः केचन स्नेहवन्तश्च भवन्ति।

इति विचित्रां कथा माकर्ण्य राजा देव्या वासवदत्तया सह भृशं तुतोष। एवं गच्छति काले राज्ञस्तस्य मन्त्रिणां सर्वेषां शुभलक्षणा भाविकल्याणसूचिन स्तनया उदपद्यन्त यौगन्धरायणस्य मरुभूति रिति रुमण्वतो हरिशिख इति वसन्तकस्य तपन्तक इति ततो नित्योदितनाम्नः प्रतीहाराध्यक्षस्य इत्यकापराभिधस्य गोमुखो नाम तनयो जज्ञे। एते भाविन श्चक्रवर्त्तिनो वत्सराजसुतस्य वैरिवंशध्वंसिनो मन्त्रिणो भविष्यन्ति। इति तेषु जातेषु वर्त्तमाने च महोत्सवे सहसा नभसोऽशरीरिणी वागुदचरत्। अथ दशमे मासि वत्सराज महिषी वासवदत्ता आसन्नप्रसवा चित्रं पुत्रिणीभिर्नारीभिः परिष्कृतं सार्कशमीगुप्तगवाक्षं रत्नदीपप्रभासङ्गमण्डलैरिव

आयुधधरे गर्भस्थापन्नं तेजो ज्वलयन्निरिवाहूतं मातङ्गच-
क्षेव जातं दुर्गं सूतिकागृहमध्यास्त। तत्र च सा
कान्तदर्शनं द्यौरिवेन्दुं कुमार मसूत। जातेन च तेन
तत्क्षणात् मातुर्हृदयमिव सर्वं पुरं निःशोकतामसं प्रका-
शित मभूत्। ततः प्रमोदे प्रसरति पुरवासिनां, राजा
अभ्यन्तरचरात् जनात् सुतजन्म अशृणोत्। श्रुतपुत्रजन्मा
च राजा तस्मै प्रियनिवेदकाय यत् राज्यमपि न ददौ
तत्केवलं अनौचित्यभयेन नतु लोभकार्पण्यया। ततः स
नृपः सिद्धमनोरथः समुत्सुकेन चेतसा सद्यः अन्तः-
पुर मभ्येत्य रक्तायताधरतलं चञ्चल्लोचनाकर्षं
साम्राज्यलक्ष्मीलीलाकमलोपमं मुखं दधानं छत्र चाम-
राङ्कित पादयुगलं सुत मद्राक्षीत्। तस्मिंश्च काले
गगनात् भारतिरेवं समुच्चचार। राजन्! कामदेवाव-
तारोऽयं तवात्मजो जातः, एनञ्च नरवाहनदत्तनामानं
कुरु। अनेन च दिव्यं कल्पं सर्वविद्याधरेन्द्राणां चक्र-
वर्त्तिना भवितव्यम्। इत्युक्त्वा तया वाचा विरत एवं
पुष्पाणि दिव्यानि नभसः पेतुः दुन्दुभयश्च व्यजृम्भन्त।
ततः स नृपतिः इत्थं देवसुलभया जनितातिहर्षः परमे-
णोत्साहेन महोत्सवं वितेने। तस्मिंश्च क्षणे अन्तरी-
क्षात् राजमन्दिर प्रतिध्वनितमुखा विद्याधराणां तूर्य
निनादाः राज-जन्माभिनन्दितु मिव समुच्चयुः। सौधा-
ग्रेषु पवनोद्धूताः शोणरागाः पताकाः स्वकान्तिभि-
रन्योन्य सिन्दूर मिव सम.किरन्। सुराङ्गनाश्च दिवि
अनङ्गःज जननाति-हर्षादिव समागताः प्रतिपदं ननृतुः।

तस्मिंश्च महोत्सवे सर्वा पुरी नववस्त्रविभूषणोद्भासिता समानविभवेव समदृश्यत। तदा च नृपतौ अनुजीविषु बन्धुषु च अर्थान् वर्षति सर्वोजनः कोषादृते पूर्णतामगात्। समन्ताच्च सर्वाः सामन्तानां अन्तःपुरस्त्रियः मङ्गल्य-पूर्वाः सदुपायनहस्ताः सुरचिभि रधिष्ठिताः शाखा-द्दिव अखिलाः दिशः समापेतुः। तस्याञ्च आनन्द-मय्यां पुरि नृत्यमयी चेष्टा, पूर्णपात्रमयं वचः, महादान-मयो व्यवहारः, तूर्य्यमयो ध्वनिः चीनपिष्टमयो लोकः, भूश्च चारणैकमयी अभूत्। एवं बहुदिवसवर्धितः महोत्-सव स्तत्र पूर्णैः पौरमनोरथैः समं निर्वर्त्तते स्म। सो-ऽपि राजसुतः शिशुः प्रतिपदिन्दुरिव कृतनरवाहनदत्त-नामा पित्रा दिने दिने व्यवर्द्धत। अथ मन्त्रिणः महीपति-हृदयानन्दकरान् शिशून् स्वपुत्रान् आनीय तस्मै राज-पुत्राय समर्पयन् प्रथमं यौगन्धरायणः मरुभूतिं ततो रुमण्वान् हरिशिखं इत्यकनामा प्रतीहारी गोमुखं वसन्तकश्च तपन्तकम्। शान्तिकरोऽपि पुरोधाः भ्रातृसुतं शान्तिसोमं वैश्वानरञ्च समर्पितवान्। तस्मिन्नपि च अन्तरीक्षात् नान्दीनिनादसुभगा दिव्या सुरपुष्पवृष्टिः पपात। तेन च राजा महिषी च तत्र मन्त्रिपुत्रान् अभि-नन्द्य परं तोषं अगमत्। स च राजपुत्रः बाल्येऽपि अभि-मतैः स्वैः षड्भिर्मन्त्रि-पुरोहित-पुत्रैः महोदयहेतुभिः गुणै-रिव सहितः शैशवलीला मकरोत्। राज्ञश्च तस्य तं पुत्रं क्रीडाकलित-ललिताव्यक्त-नर्माभिलापं पुरवा-सिनां प्रीति-प्रवण-मनसामङ्कात् अङ्कं गच्छन्तं

स्मेरानमेन्दुं सादरं पश्यतो वर्द्धमानमहोत्सवा एव दिवसाः समतीयुः ।

इति त्रयोविंशस्तरङ्गः ।

समाप्तश्च चतुर्थो लम्बकः ।

---

अथ पञ्चमो लम्बकः ।

## अथ चतुर्विंशस्तरङ्गः ।

—*—

अथ वत्सराजः देव्या सह तं पुत्रं लालयन् महता आनन्देन समयमतिवाहयन् अतिष्ठत् । एकदा यौगन्धरायणः तस्य पुत्रस्य रक्षायां कातरं विजने, समवलोक्य .समभाषत राजन् ! पुत्रस्य क्षते नैव चिन्ता कार्य्या असौ भगवता शर्वेण भवतो मन्दिरे विद्याधर-चक्रवर्त्ती समुत्पादितः । दिव्यप्रभावाच्चैतत् विदित्वा पापाशयाः विद्याधराधीशाः असहिष्णवः परं क्षोभं गताः । तच्च विज्ञाय देवचन्द्रमौलिरस्य रक्षार्थं स्तम्भको नाम निजोगणः नियोजितः । स चालक्ष्यस्तव सुतं रक्षन् तिष्ठति, एतत् नारदो मामभ्येत्व अद्य व्यज्ञापयत् । इति जल्पति तस्मिन् मन्त्रिणि सहसा व्योममण्डलात् किरीटी कुण्डली खड्गी दिव्यः पुमानवातरत् । तस्मायतं प्रणतं कृतातिथ्यं वत्सनाथः सकौतुकं समपृच्छत् कस्त्वं कुत आयातः, किमिह ते कार्य्यमिति, सोऽवदत् अहं मर्त्त्योऽपि प्रतिवेशाख्यः

विद्याधराधीशः संवृत्तोऽस्मि, प्रभूताश्च मम सम्पदः । राजन्! सोऽहं प्रभावात् भवतः पुत्रं भाविनमस्मच्चक्रवर्त्तिनं द्रष्टुमुपागतः । इत्युक्तवन्तं दृष्टभाविचक्रवर्त्तिनं भीतं तं दृष्ट्वा सविस्मयः संहृष्टः पुनरपृच्छत् कथं विद्याधरत्वं प्राप्येत ? तच्च कीदृक् प्रकारं कथञ्च त्वया तत्प्राप्तं एतत् सर्वं कथय । तदाकर्ण्य स प्रश्रयावनतः शक्तिवेगः तं प्रत्यभाषत राजन्! इह पूर्वस्मिन् वा जन्मनि शङ्करमाराध्य धीरा स्तदनुग्रहात् विद्याधरपदं प्राप्नुवन्ति, तच्च बहुविधं विद्याखड्गमालादि साधनवैचित्र्यात्, मया च तत् यथा प्राप्तं तत् कथयामि श्रूयताम् । एवमुक्त्वा शक्तिवेगः देव्याः वासवदत्तायाः सन्निधौ कथामिमामाचचक्षे ।

अस्ति वर्द्धमानं नाम भुवनभूषणं पुरम् । तत्रासीत् परोपकारी नाम पुरा परन्तपो नृपतिः । तस्य समृद्धिशालिनः कनकप्रभा नाम धाराधरस्य विद्युदिव परं निर्मुक्तचापला महिषी समभवत् । कालेन तस्यां तस्य राज्ञः लक्ष्मीदर्पोपशमनीव धात्रा निर्म्मिता कन्यका समजनि । सा च लोकलोचनानन्ददायिनी शनैर्वर्द्धिता पित्रा कनकरेखेति कृतनामधेया व्यवर्द्धत । कदाचित् राजा यौवनस्थायां तस्यां विजनोपस्थितां देवीं कनकप्रभामवादीत् । देवि! वर्द्धमाना एषा कनकरेखा अस्मद्गेहे एतत्समानोद्वाहचिन्तया मे हृदयं बाधते । स्थानप्राप्तिहीना हि कुलकन्यका गीतवत् परस्यापि श्रूयमाणा कर्णयोरुद्वेजिनी भवति । मोहात् अपात्रे प्रतिपादिता तु विद्येव

न वयसे नापि धर्म्माय, केवलमनुशयायैव। तत् कस्मै नृपतये इयं सुता दीयते, को वा अस्या अनुरूपः पतिरिति चिन्ता मामनुदिनं दुनोति देवि!।

तदाकर्ण्य सा देवी कनकप्रभा विहस्य एवमब्रवीत् नाथ! त्वमेवं चिन्तयसि, कन्या तु उद्वाहमेव नेच्छति, अद्यैव नर्म्मणा कृतकृत्रिमपुत्रिकापरिणया सा मयोक्ता वत्से! कदा ते एवं विवाहं द्रक्ष्यामीति। सा तु तदाकर्ण्य साक्षेपं मामभाषत मा मा एवमम्ब! नाहं कस्मैचिदपि देया, मद्वियोगो नचादिष्टः कन्यैवाहं सुशोभनास्मि अन्यथा मां मृतां विद्धि, अस्त्यत्र किञ्चित् कारणम्। एवं तयोक्ताहं उद्विग्ना त्वत्सकाशमागता तदलं निषिद्धविवाहायाः वरस्य विवेचनया। इति देव्या वचनात् स राजा समुद्भ्रान्तः कन्यकान्तःपुरं गत्वा तां सुतामब्रवीत् वत्से! सुरासुरकन्यकाश्च तपसा यं कामयन्ते तस्य पत्युरभिलाषः कथं त्वया विवर्ज्जितः।

एतत् पितृवचः श्रुत्वा सा कनकरेखा भूतलन्यस्तलोचना पितरमवादीत् तात! नैव मे विवाहः समीप्सितः साम्प्रतं, तत् पितुस्तेन किं कार्य्यं कथञ्च निर्बन्धः। एवमुक्तः स दुहित्रा परोपकारी राजा सुमतिरेवमभ्यधात् पुत्रि! दानात् विना कन्या कथं पापशान्तये? बन्धुपराधीना च कन्या नैव स्वातन्त्र्यमर्हति जाता हि कन्या परस्मै वार्थे रक्ष्यते, बाल्यं विना तस्याः पितुर्गृहं कीदृक्? यौवने तस्या भर्त्तृगृहमेव बान्धवैरिष्टं तस्याञ्च ऋतुमत्यां बान्धवा अधोगतिं लभन्ते। सा ऋतुमती कन्या वृषली, तस्याः

पतिश्च वृषलीपति रुच्यते, एवं तेन पित्रा अभिहिता सा कनकरेखा मनोगतां वाचं तत्क्षणमवोचत् तात ! यद्येवं तत् येन क्षत्रियेण विप्रेण वा ज्ञातिना कनकपुरी नाम नगरी दृष्टा, तस्यै अहं दातव्या स एव मे भर्त्ता भविष्यति । एवमुक्तस्तया सुतया स राजा समचिन्तयत् दिष्ट्या दानस्य प्रसङ्गोऽनया अङ्गीकृतः, नूनञ्चात्र कारणेन केनापि भवितव्यं कापि देवी मद्गृहे समुत्पन्नेयं नूनं कथमन्यथा इयं बाला भूत्वा एतत् जानातीति । एवं संचिन्त्य स राजा तां कन्यां तथेत्युक्त्वा उत्थाय तद्दिनकार्य्यं निरवहत् । अन्येद्युश्च सभां गतः पार्श्वगानगादीत् युष्मासु केनचित् कनकपुरी नगरी दृष्टा ? येन सा दृष्टा तस्मै विप्राय क्षत्रियाय वा कनकरेखा यौवराज्यञ्च मया दास्यते । ते तु पार्श्वगाः समब्रुवन् देव ! श्रुतापि नास्माभिः दर्शने कैव कथा तथा राजा प्रतीहारमानीयादिशत् गच्छ अत्र समग्रे राष्ट्रे पटहं घोषय, ज्ञायतां यदि केनापि सा नगरी दृष्टेति । एवमादिष्टः प्रतीहारस्तथेति राजाज्ञया निर्गत्य राजपुरुषान् समादिश्य पटहं घोषयामास, विप्रः क्षत्रियो वा युवा यदि कश्चित् कनकपुरीं दृष्टवान् तदा स वदतु, राजा तस्मै तनयां यौवराज्यञ्च दास्यति । इति च वचस्तस्मिन् राष्ट्रे पटहानन्तरं सकौतुकं सर्वैर्जनैरश्रावि । पौराश्च तां घोषणां श्रुत्वा सर्व एव परस्परमवदन् केयं कनकपुरी, या वृद्धैरपि कदापि न दृष्टा नापि श्रुता । इत्थं यावदेकोऽपि कश्चित् नैव दृष्टेति कथयति तावत् तत्र निवासी शक्तिदेव इति कश्चित् द्विजः बलदेवद्विजसुतः तां

घोषणामशृणोत्। स तु युवा व्यसनी द्यूतेन हारितसर्वस्वः राजकन्याप्रदानाकर्णनोत्सुको व्यचिन्तयत् ममाधुना द्यूतनिर्जितस्य पितुर्गृहे वाराङ्गनासद्मनि वा प्रवेशो नास्ति, तस्मादगतिकः वरं मया सा पुरी दृष्टेति पटहघोषकान् मिथ्या ब्रवीमि, को मां अदृष्टपुरीकं प्रत्येति, केन वा सा पुरी दृष्टा कदापि दृष्टा स्यात्? तदेवं मे राजपुत्री-समागमो भवितेति संचिन्त्य स राजपुरुषान् तान् समभ्युपेत्य समभ्यधात् अस्मि शक्तिदेवो नाम द्विजः, मया सा पुरी दृष्टा, इति अवादीत्। दिष्ट्या तर्हि प्रतीहारसकाशमागच्छ इति तत्क्षणमुक्तवद्भिश्च तैः साकं स शक्तिदेवः प्रतीहारमभ्यगात्। अशंसच्च तस्मै तथैव मृषा तत्पुरीदर्शनम्। तेन च प्रतीहारेण सत्कृत्य असौ राजान्तिकमनीयत। आनीतश्च राजान्तिकं स निर्विकल्पस्तथैव मृषाब्रवीत् किं हि द्यूतकरस्य कितवस्य दुष्करम्?। राजापि निश्चयं ज्ञातुं तं ब्राह्मणं तस्याः कनकरेखाया दुहितुरन्तिकं निनाय। तया च प्रतीहारमुखात् ज्ञात्वा समीपगतः सः विप्रः कच्चित् त्वया कनकपुरी दृष्टेति पृष्टः बाढं मया सा विद्यार्थिना भ्रमता नगरी दृष्टेति तां प्रत्यब्रवीत्। केन पथा त्वं तत्र गतः, कीदृशी च सा इति पुनस्तया पृष्टः सः भूयोऽभाषत राजनन्दिनि! इतो हरपुरं नगरं गत्वा ततः क्रमात् वाराणसीं प्राप्तोऽस्मि, तस्याश्च कतिपयैर्दिवसैः पौण्ड्रवर्धनं नगरमतीत्य कनकपुरीं नगरीमगमम्। सुकृतशालिनां भोगभूमिः स्वर्गिणाममरावतीव सा पुरी मया दृष्टा। तत्र चाधिगतविद्योऽहं कालेन इहा-

गमनम् । इत्येवं विरचितवाचि अस्मिन् विप्रे शक्तिदेवी सा कृपालजा सहासं व्यहार्षीत् महाब्रह्मन्! अहो सत्यं सा नगरी त्वया दृष्टा? ब्रूहि पुनः केन पथा तत्र गतवानसि। तदाकर्ण्य स शक्तिदेवो यदा पुनर्धार्ष्ट्यमकरोत् तदा सा राजसुता चेटीभिस्तं निरवासयत् । निर्वासिते चास्मिन् सा सदैव पितुरन्तिक मयासीत् । पित्रा च सा किमसौ विप्रः सत्यं वक्तीति पृष्टा जनकं प्रत्यभाषत तात! त्वं राजा सन् एवमविचार्य्य चेष्टसे? धूर्त्ताः सरलान् वञ्चयन्तीति किं न जानासि? स हि विप्रो मिथ्या मां प्रतारयितुमागतः, तेन अलीकवादिना न पुनः सा पुरी दृष्टा, धूर्त्तैर्विविधा वञ्चनाः क्रियन्ते, अत्र चैतत् शिवमाधववृत्तान्तं कथयामि शृणु, इत्युक्त्वा सा कन्या तां कथामकथयत् ।

अस्ति रत्नपुरं नाम यथार्थं नगरम् । तत्रास्तां शिवमाधवनामानौ द्वौ धूर्त्तौ । तौ च बहुधूर्त्तपरिजनौ अचिरेण मायाप्रयोगनिःशेषमुषिताढ्यजनं पुरं विदधतुः । एकदा तौ मिथो मन्त्रं चक्रतुः इदं तावत् नगरं समग्रमस्माभि विलुण्ठितम् । अतः सम्प्रति उज्जयिनीं वस्तुं गच्छावः श्रूयते तत्र राजपुरोहितः महाधनसमृद्धिमान् शङ्करस्वामी नाम । कौशलेन तस्मात् हृतैर्धनैर्मालवविलासिनीनां रतिरसज्ञतां यास्यावः स हि कीनाशो दक्षिणार्द्धस्य ग्रहीता अकुटीमुखः सप्तकुम्भीनिधानः गीयते । तस्यापि विप्रस्य एकं कन्यारत्नमस्ति, तदपि कौशलेन लप्स्यते । इति निश्चित्य मिथः संविदं कृत्वा तौ

शिवमाधवौ तस्मात् पुरात् प्रतस्थाते। क्रमेण च शिवं उज्जयिनीं प्रवेश्य माधवः सपरिच्छदः राजपुत्रवेशेन बहिः क्वचित् ग्रामे तस्थौ। शिवस्तु बहुमाया-विचक्षणः भिक्षुकवेशेन वर्णिवेशेन तां नगरीं प्राप्य तत्र शिप्रायास्तीरे मठिकामेकां दृश्यस्थापितमृद्दर्भभिक्षाभाण्ड मृगाजिनामध्युवास। स च प्रातः घनया मृदा लिप्तसर्वाङ्गः तस्याः सरित स्तोये कृतस्नानः भवाङ्मुखः कुकर्मजामधोगतिं भाविनीमभ्यस्यन्निव बहुक्षणमस्थात्। स्नानोत्थितश्च सूर्यमभिलक्ष्य ऊर्द्ध्वदृष्टिश्चिरं शूलाधिरोपणौचित्यमात्मनः दर्शयन्निव तस्थौ। ततो देवाग्रचतुराननः सः देवायतने गत्वा कुशमुष्टिकरोऽघमर्षणं जपन् पद्मासनासीनः कियन्तं कालमास्त। अन्तरान्तरा साधूनां हृदयानीव स्वच्छानि पुष्पाणि समाहृत्य कैतवेन पुरारिं समपूजयत्। कृतपूजश्च भूयोऽपि मिथ्याजपपरः समभूत्। अपराह्णे च कृष्णसाराजिनाम्बरः भिक्षार्थी तस्यां पुरि दम्भमयाकटाक्ष इवा भ्रमत्। मौनी द्विजगेहेभ्यः भिक्षात्रयमादाय दण्डी त्रिसन्ध्यामिव खण्डत्रयञ्चक्रे। एकं खण्डं काकेभ्यः अपरमभ्यागताय दत्त्वा अपरेण खण्डेन स्वोदरमपूरयत्। पुनश्च सायं निजानि पापानि गणयन्निव चिरं मिथ्या जपमालां आवर्त्तयामास। रजन्याञ्च स मठिकान्तरे अद्वितीय सूक्ष्माणि लोकस्य तर्कस्थानानि चिन्तयन्नवतस्थे। एवं प्रति दिनं कष्टं तपश्चरन् सर्वेषां नगरवासिनां मनः आवर्जयामास। यदा च भक्तिनम्रे चाखिले जने अहो महानयं तपस्वी इति ख्यातिः सर्वतः समुदपादि, तदा

स द्वितीयो धूर्त्तः माधवः चारमुखेन तं तथाविधं विज्ञाय तां नगरीं प्रविवेश। स चात्र दूरवर्त्तिनि देवकुलान्तरे वसतिं गृहीत्वा राजपुत्रच्छद्मा स्नातुं सिप्रातटमगात्। स्नात्वा च सानुचरो देवाग्रे जपतत्परं तं शिवं दृष्ट्वा परम-भक्तः पादयोरस्य निपपात। जगाद च सर्वजनसमक्षं नास्तीदृक् तापसोऽपरः, मया असकृत् एव तीर्थानि भ्रमन् दृष्टः। शिवस्तु तं विलोक्य दर्शने स्तम्भितकन्धरस्तथैवा-सीत् सोऽपि माधवः स्वां वसतिं ययौ। रात्रौ तौ उभौ मिलित्वा एकत्र भुक्त्वा पीत्वा च शेषं कर्त्तव्यं मन्त्रयामा-सतुः। पश्चिमे रात्रियामे च शिवः स्वं मठमगात् माध-वस्तु प्रभाते स्वमेकं धूर्त्तं समादिशत् त्वमेतत् वस्त्रयुग्ममु-पायनं गृहीत्वा राजपुरोधसः शङ्करस्य सकाशं व्रज। गत्वा च स सविनयमेवं वाच्यः यथा राजपुत्रः कश्चित् माध-वोनाम गोत्रजैः पराभूतः पित्र्यं बहु धनमादाय दक्षिणा-पथादायातः, समैः कतिपयैरन्यै राजपुत्रैरनुगत इहैवास्ते, स हि भवदीयस्य राज्ञः सेवां करिष्यति। हे ब्रह्मन्! तदर्थं प्रथममहं भवत्सकाशं प्रेषित इति।

एवं स माधवेनोक्तो धूर्त्तः उपायनकरः तस्य पुरोहि-तस्य गृहमगात्। अशंसच्च माधवसन्देशं तं विजने प्राप्य उपदामयतो दत्त्वा। सोऽपि उपायनलोभात् बहुतरं मङ्गलमाशंसन् तत् अवधे, लिप्सूनामेकं हि उपप्रदानमा-कर्षणौषधम्। ततः प्रत्यागते तस्मिन् धूर्त्ते अपरेद्युः स माधवः लब्धावकाशस्तं पुरोधसं द्रष्टुं स्वयमुपाययौ। राजपुत्रापदेशिनश्चापरे धूर्त्ता गृहीतयष्टयः धूर्त्तकार्पटिक-

वेशास्तमनुजग्मुः। पुरोगैश्चावेदितश्च स माधवः एनं पुरोहितमभ्यगात् स चापि प्रत्युद्गमादिभि रेनमभ्यनन्दत्। ततश्च तेन सह कथालापैः क्षणं स्थित्वा माधवः पुनः स्वां वसतिमाययौ। अपरेद्युश्च पुनः प्राभृतं वसनयुगलं प्रेष्य तमुपागच्छत् पुरोहितमुवाच च ब्रह्मन्! वयं परिवारानुरोधेन केवलं सेवार्थिनः, तेन त्वमस्माभिराश्रितः अर्थमात्रास्तु नः पर्याप्ताः सन्ति। तत्श्रुत्वा स पुरोहितः प्राप्तिमाकाङ्क्षन् तस्मै माधवाय प्रतिशुश्रुवान् राजानं व्यजिज्ञपत्। राजापि तद्गौरवात् तथेति प्रतिपेदे। अपरेद्युश्च स पुरोहितः तं माधवं सपरिच्छदं राजान्तिकं नीत्वा तस्मै सगौरवं दर्शयामास। राजापि माधवं राजपुत्रसमाकृतिं दृष्ट्वा आदरेण परिजग्राह आदिदेश च वृत्तिम्।

अथ स माधवः तं नृपं सेवमानस्तिष्ठन् प्रतिरात्रम् शिवेन समगच्छत। इहैव मम गृहे वसेति सोऽर्थितस्तेन पुरोधसा लोभाक्रान्तेन सहचरैः सार्द्धं तस्यैव गृहमाश्रियत्। तत्र कृत्रिममाणिक्यमयैराभरणैर्भृतं भाण्डं कृत्वा तदीये कोशवेश्मनि, समस्थापयत्। अन्तरान्तरा च तदुद्घाट्य तैस्तै र्व्याजार्द्धदर्शितैराभरणैस्तस्य, स्पर्शं रिक्तपशोर्मनः समाकर्षत्। अथ तस्मिन् पुरोधसि विश्वस्ते स मृषा अल्पतराहारकृशीकृततनुर्मान्द्यं चकार। कतिपये चाहनि गते एकदा स धूर्त्तराजः स्वल्पया गिरा शय्योपान्तवर्त्तिनं पुरोधसमुवाच ब्रह्मन्! मम तावत् शरीरे विषमा दशा वर्त्तते, तत् त्वं कञ्चित् ब्राह्मणश्रेष्ठमानय।

यस्मै अहम् इहामुत्र च शर्मणे सर्वस्वं दास्यामि, अस्थिरे
चास्मिन् जीविते कास्था धनेषु । इत्यभिहितः स पुरोधा
दानोपजीवी तथेति प्राह स्म । स चास्य पुरोधसः
पार्श्वात् पपात । ततः स पुरोहितः यं यं ब्राह्मणमानि-
नाय, विशेषेच्छाभावात् स माधवः तं तं न अङ्गीचे ।
तच्छ्रुत्वा तस्य पार्श्वचरः कश्चित् धूर्त्तः समभाषत ब्रह्मन्!
अस्य तावत् सामान्यो विप्रः न रोचते, तदत्र सिप्रातीरे
शिवो नाम यः महातपाः विप्रस्तिष्ठति सोऽस्मै रोचते न
वेति पृच्छ्यताम् । तदाकर्ण्य माधवोऽब्रवीत् कल्पिताभिस्तं
पुरोहितं, ब्रह्मन्! तमेवानय, नान्योऽस्ति तादृशो विप्रः ।
इत्युक्तः सः तथेति शिवान्तिकमगात् । अपश्यच्च गत्वा तं
रचितध्याननिश्चलम् । ततः स पुरोधाः तं प्रदक्षिणं कृत्वा
तत्पार्श्वे उपाविशत्, सोऽपि धूर्त्तस्तत्क्षणं शनैरुन्मीलित-
लोचनोऽभवत् । अथ तं प्रणम्य स प्रोवाच प्रभो! न
कुप्यसि चेत्, किञ्चित् निवेदयामि, इह कश्चित् दाक्षि-
णात्यः महाधनो राजपुत्रः माधवो नाम स्थितः । स
चास्वस्थः सर्वस्वं दातुमुद्यतते, यदीच्छसि तत्सर्वं स तुभ्यं
दानेन कृतकृत्यो भवितुमिच्छति । तदाकर्ण्य स शनैर्मुक्त-
मौनः समभ्यधात् ब्रह्मन्! भिक्षाशनस्य मादृशस्य कोऽर्थो-
ऽर्थैन । ततः पुरोहितः स तमवोचत् ब्रह्मन्! मैवं
वादीः, आश्रमक्रमं किं न वेत्सि ? कृतदारो गृहे देवानां
पितृणाम् अतिथीनाञ्च क्रियाः कुर्वन् धनैस्त्रिवर्गं साध-
यति, तस्मात् गृही एव आश्रमिणां वरः ।

ततः शिवोऽब्रवीत् कुतो मम दारसंग्रहः, नह्यहं यस्मात्

कस्मादपि कुलात् परिणेतुमिच्छामि। तच्च निशम्य पुरोधाः लुब्धः प्राप्तावसरः सुखभोग्यं तस्य तत् धनं मत्वा तमवादीत् ब्रह्मन्! अस्ति तावत् मम विनयस्वामिनी नामैका कन्या अतिरूपवती। तां तुभ्यं दास्यामि। यच्च तस्मात् माधवात् प्रतिग्रहधनं लप्स्यसे, तदहं तव रक्षिष्यामि, तस्मात् गृहाश्रममाश्रय। इत्याकर्ण्य सिद्धकामः शिवोऽब्रवीत् ब्रह्मन्! यद्ययं ते आग्रहः, तदा ते वचः करिष्यामि, हेमरत्नयोः स्वरूपमहं तापसो न वेद्मि त्वद्वाचैव प्रवर्त्ते, त्वं यथा वेत्सि तथा कुरु।

एवं शिववचः समाकर्ण्य सानन्दः पुरोधा मूढस्तथेति तं स्वं गेहं निनाय। नीत्वा च तत्र तं सन्निवेश्य शिवाख्यमशिवं तापसं संप्रहृष्यन् माधवाय यथाकृतं शशंस ददौ च तदानीमेव तस्मै शिवाय क्लेशविवर्द्धितां निजां सुतां सम्पत्तिमिव मूढत्वहारिताम्। अथ कृतोद्वाहं तं प्रतिग्रहार्थं तृतीयेऽह्नि माधवस्य कपटाखस्थस्य समीपमनयत्। माधवोऽपि अतर्क्यतपसं त्वामहं वन्दे इत्यवितथं वदन् उत्थाय अस्य चरणयोरपतत्। अदाच्च तस्मै विधिवत् कोशागारात् आहृतं प्रचुरं कृत्रिममाणिक्यमयाभरणभाण्डकम्। शिवोऽपि तत् सर्वं प्रतिगृह्य तस्य पुरोधसः हस्ते नाहं वेद्मि त्वमेवैतत् वेत्सीति अभिधाय समर्पयत्। पुरोहितश्च अङ्गीकृतं पूर्वमिदं मया, तवात्र का चिन्ता इत्युक्त्वा तत्क्षणं तत् सकलं जग्राह। ततः शिवे कृताशिषि वधूवासकं याते स पुरोहितः तं निजे कोशागारे स्थापयामास। माधवश्चापरेद्युस्तत् अस्वास्थ्यभावं शनैः त्यजन् महादानप्रभावेण

रोगशान्तिमशंसत्। अथाहं त्वया धर्मनिष्ठेन सहायेन आपदः समुत्तीर्णोऽस्मि इति अन्तिकमायान्तं पुरोधसं प्रशस्य एतस्य प्रभावेण मे शरीरं रचितमिति कीर्त्तयन् प्रकाशमेव तेन शिवेन सह मित्रतामकरोत्।

अथ गच्छत्सु दिनेषु एकदा शिवः श्वशुरं पुरोहित-मवादीत् तात! कियच्चिरं भवद्गेहे मया एवं भोक्ष्यते, तत् त्वमेव मूल्येन तत् आभरणं किं न क्रीणासि? महार्घं चेत् मन्यसे यथासम्भवं मूल्यं देहि। तदाकर्ण्य सः पुरोधाः तत्सानर्घं मत्वा तथेति तन्निष्क्रयं सर्वस्वं तस्मै शिवाय ददौ, कारयामास च तद्धनं स्वधनादधिकं मत्वा स्व-हस्तेन तदर्थं लेख्यपत्रं, स्वयञ्च चकार। एवमन्योन्य-लिखितं हस्ते कृत्वा स पुरोहितः पृथक् आसीत्, स च शिवः पृथक् गृहे स्थितिमकरोत्। ततश्च स शिवः स च माधवः उभौ सङ्गतौ यथेच्छं पुरोहितार्थान् भुञ्जानौ तत्रा-तिष्ठताम्।

अथ गच्छति काले सः पुरोधा मूल्यार्थी आपणे तदेकमलङ्करणं कटकं विक्रेतुमगमत्। तत्र रत्नतत्त्वविदो वणिजः परीक्ष्य अहो कस्यापि एतत् विज्ञानं येन इदम् ईदृशं कृत्रिमं कृतम्। काचस्फटिकमया हि नानारागे-णोपरञ्जिता इमे रीतिबद्धाः, नैते मणयो न वा काञ्च-नानि। तदाकर्ण्य स पुरोधा विह्वलो गत्वा तदैव गेहात् समग्रम् आभरणमानीय तेषामदर्शयत्। ते च वणिजस्तानि दृष्ट्वा सर्वाण्येव तथैव कृत्रिमाणीति समब्रुवन्। स किल पुरोधास्तदाकर्ण्य वज्राहत इव कथञ्चिदापणादागत्य विमूढः

शिवमवादीत् वत्स ! स्वान् अलङ्कारान् गृहाण, मम च निजं धनं देहीति। कुतो ममाद्यापि धनं, तत् हि समग्रमेव मया गृहे कालेन भुक्तमिति शिवस्तं प्रत्यब्रवीत्। ततो विवदमानौ तौ शिवपुरोहितौ पार्श्वस्थितमाधवं राजानमुपजग्मतुः। पुरोहितः राजानं न्यवेदयत् देव ! काचस्फटिकयोः खण्डैः रीतिबद्धैः सुरञ्जितै रचितं समग्रमेव कृत्रिमालङ्करणं दत्त्वा शिवेन अजानतो मम सर्वस्वं भक्षितमिति। शिवो व्यज्ञापयत् राजन् ! अहमाशैशवात् तापसोऽभूवम्। अनेनैव पुरोधसा अभ्यर्थ्य तत्प्रतिग्रहमहं ग्राहितः, तदैव मयोक्तं मुग्धस्य मम रत्नादिषु अनभिज्ञस्य भवानेव प्रमाणमिति। अहमेवात्र प्रमाणमिति अभिधाय अयं तदैव मामग्राहयत्। मया च तत्सर्वं प्रतिगृह्य तदानीमेव अस्य हस्ते समर्पितम्। ततश्चानेन स्वेच्छया मूल्यं दत्त्वा तत्सर्वं गृहीतम्, अत्र चावयोः मिथः स्वहस्तलिखितं विद्यते, तदन्न युवराजो माधव एवात्र दाता कृत्रिमाकृत्रिमत्वे प्रमाणमिति। एवमुक्त्वा शिवे विरतवाचि माधवस्तत्रोपस्थितः समभाषत ब्रह्मन् ! मामेवमादिश, त्वं मे महामान्यः, नात्रापराधो मम, मया भवतः शिवस्य वा किञ्चित् न गृहीतं, मम तु पैतृकं धनं चिरमन्यत्र न्यासीकृतम्, आगच्छता मया स्वात् राज्यात् तत्सर्वमिहानीतं दत्तञ्च द्विजन्मने, यदि तत् सत्यं न स्वर्णं नापि रत्नानि, तदा रीतिस्फटिककाचानां प्रदानात् मे किं फलं स्यात् ? निर्व्याजहृदयस्य मे दाने प्रत्ययोऽस्ति, येन सद्य एव तथाविधात् दुस्तरात् रोगात् मुक्तोऽस्मि। एवमभिवमुखच्छायं

कथयति माधवे राजा मन्त्रिभिः परिवृतो जहास तुतोष च। नात्र माधवस्य शिवस्य वा कश्चिदन्याय इति सर्व्वैः सान्तर्हासमभिहिते स पुरोहितः हारितार्थः विलज्जित एव गृहमगात्, अतिलोभान्धानामीदृशी हि गतिः। तौ च धूर्त्तौ शिवमाधवौ सन्तुष्टराजप्रसादलाभेन सुखितौ तत्र चिरमतिष्ठताम्।

हे तात! आत्मोपजीविनो धूर्त्ता धीवरा इव तैस्तैः सत्यशतैर्जिह्वाजालानि विस्तारयन्ति। एषोऽपि कनकपुरी दृष्टेति मृषा वदन् त्वां प्रतार्य्य मां प्राप्तुमिच्छति। तत् सम्प्रति मम विवाहार्थं त्वया त्वरा न कार्य्या, कन्यैव तावत् तिष्ठामि, पश्यामि च भवितव्यता कीदृशीति। इत्युक्तः सुतया कनकरेखया स परोपकारी तदा तामभाषत पुत्रि! यौवने चिरं कन्यकाभावो न युज्यते, गुणमत्सरा दुर्ज्जना हि मिथ्या दोषं वदन्ति। विशेषेण जना उत्तमस्यैव कलङ्कानुत्पादयितुं यतन्ते, अत्र तावत् हरस्वामिकथां कथयामि श्रूयताम्।

अस्ति गङ्गाकूले कुसुमपुरं नाम नगरम्। तत्रासीत् हरस्वामी नाम तीर्थार्थी कश्चित तापसः। स भिक्षाशनो विप्रः गङ्गातीरे कृताश्रमः तपसः समुत्कर्षात लोकानां विशेषेण गौरवास्पदमभूत्। कदाचित् तं भिक्षाविनिर्गतं दूरात् दृष्ट्वा कश्चित् तद्गुणासहिष्णुः खलः जनमध्यात् जगाद यूयं कच्चित् जानीथ? अयं कीदृक् कपटतापसः, अनेनैव अमुष्मिन् नगरे सर्वे शिशवो भक्षिता। तदाकर्ण्य द्वितीयो जनस्तथैव समभ्यधात् सत्यं मयापि श्रुतं जनै-

ह्यमानमेतदिति। तृतीयः तथैव एवमेतदिति प्राह स्म। दुर्जनसंवादसृङ्खला आर्थ्यपरीवादं बध्नाति हि। एवं क्रमेण एष परीवादः सर्व्वत्र पुरे बहुलीभवन् कर्णपरम्परामाससाद। पौराश्च सर्वे हरस्वामी बालान् भक्षयतीति वदन्तः गेहात् स्वान् स्वान् बालान् न तत्यजुः। ततश्च सर्वे ब्राह्मणाः सन्ततिक्षयभीरवः सम्भूय तस्य पुरात् प्रवासनममन्त्रयन्। कुपितः सोऽस्मान् ग्रसेत् इति भयेन ते साक्षात् वक्तुमशक्नुवन्तः दूतान् व्यसर्जयन्। तं च गत्वा दूता दूरादेव तमब्रुवन् ब्रह्मन् ! नगरादस्मात् गम्यतामिति द्विजातयस्त्वां कथयन्ति। अथ तेन विस्मितेन किंनिमित्तमित्युक्तास्ते पुनः प्रोचुः त्वं बालान् दृष्ट्वैव भक्षयसीति। तदाकर्ण्य स हरस्वामी स्वयं तेषां प्रत्यायनेच्छया विप्राणामन्तिकं ययौ। विप्राश्च तं दृष्ट्वा त्रासात् मठोपरि आरुरुहुः, प्रवादमोहितो हि न कश्चित् विचारक्षमो भवति। अथ हरस्वामी अधःस्थित एव उपरिस्थितान् तान् विप्रान् समाहूय नामग्राहमेकैकमवादीत् कोऽयं वो मोहः? नावेक्षध्वं परस्परम्? कस्य कियन्तो बालका मया कदा भक्षिताः? तदाकर्ण्य यावत् ते विप्रा अन्योन्यं परिमृशन्ति, तावत् सर्वेऽपि तेषां बालकाः जीवन्त एव स्थिताः दृष्टाः। क्रमात् सर्वेऽपि पौरास्तथैव विमृशन्तः प्रत्यपद्यन्त अब्रुवंश्च अहो विमूढैरस्माभिः साधुर्मिथ्या एव दूषितः, सर्वेषामेव बाला जीवन्ति, तत् कस्यानेन भक्षिताः? इत्युक्तवत्सु सर्वेषु हरस्वामी तदैव सञ्जातशुद्धिस्तस्मात् नगरात् गन्तुं प्रववृते, अविवेकिनि दुर्देशे

मनस्विनो नैव रतिः । ततो वणिग्भिर्विद्वद्भिर्विप्रैश्च चरणानतैः प्रसान्त्वितः स हरस्वामी कथञ्चित् तत्र वसतिमङ्गीचकार ।

इत्थं सच्चरितावलोकनेन जनितविद्वेषा दुर्जनाः प्रायेण सतां मिथ्यापवादं ददति, तस्मात् मां विशल्यं कर्तुमिच्छसि चेत् वत्से ! उन्मिषति नूतने यौवन एवास्मिन् स्वेच्छं न व्यवहर्तुमिच्छसि, एवमुक्ता नृपतिना पित्रा सा कनकरेखा राजतनया निश्चितमतिः पुनः पितरमब्रवीत् पितः ! उक्तमेव मया, येन हि सा कनकपुरी दृष्टा तस्मै विप्राय क्षत्रियाय वा मां देहि तस्मात् क्षिप्रं तमेव गवेषय । तदाकर्ण्य राजा तां दृढनिश्चयां जातिस्मरां सुतां विगणयन् नान्यां गतिञ्च पश्यन् तत्र देशे पुनरनुदिनं नवागन्तुकान्वेषणाय पटहघोषणामकारयत् । आदिशच्च यो विप्रः क्षत्रियो वा युवा कनकपुरीं दृष्टवान् स आगच्छतु, तस्मै स्वां तनयां कनकरेखां यौवराज्यञ्च दास्यामीति । परमेको नैव लभ्यते स्म यः कनकपुरीं दृष्टवानिति ।

इति चतुर्विंशस्तरङ्गः ।



## अथ पञ्चविंशस्तरङ्गः ।

अत्रान्तरे स शक्तिदेवो द्विजयुवा राजकन्यावमानेन सुदुर्मनाः समचिन्तयत् मयाद्य मृषा कनकपुरीवादिना परम् अवमानना प्राप्ता न पुनः राजबाला । तदेतस्याः प्राप्तये तावदहं महीं पर्य्यटिष्यामि यावत् सा कनकपुरी न दृश्यते, यावद् वा प्राणैर्न गम्यते । ताञ्च पुरीं दृष्ट्वा तत्पणेन यदि राजबालामिमां न लभेय, तत् जीवितं नालम् । एवं प्रतिज्ञारूढः स तस्मात् वर्द्धमानात् दक्षिणां दिशमालम्ब्य प्रतस्थे । क्रमेण गच्छन् स विन्ध्यमहाटवीं प्राप । तत्र शनैस्तान् तान् दुरवगाहान् प्रदेशानवगाह-मानः दिवसैः कतिपयैर्दूरमध्वानमतीत्य एकान्ते शीतल-स्वादुसलिलं पुण्डरीकाञ्चितच्छत्रं प्रोल्लसद्धंसचामरं सर्वेषां सरसामधिराजतामिव कुर्वाणमतिमहत् सरो ददर्श । तत्र च स्नानादिकं विधाय तत्पार्श्वे कियत्युत्तरे सफल-स्निग्धपादपम् आश्रमपदमेकं तत्र च कञ्चित् अश्वत्थतरु-मूले निषण्णं तापसैर्वृतं सूर्य्यतपसं नाम स्थविरं मुनि-मद्राक्षीत् । स युवा प्रणामपूर्वं तं मुनिमभ्यागमत्, स चैनम् आतिथ्येनाभ्यनन्दत् । अवोचच्च भद्र ! कुत आगतो-ऽसि, क्व च गन्तासि, उच्यतामिति ।

सोऽब्रवीत् भगवन् ! वर्द्धमानपुरादहमागतः, प्रतिज्ञया कनकपुरीं दिदृक्षुः, परं न जाने सा क्व भवेत् यदि भगवान्

वेत्ति तदा ब्रवीतु इति शक्तिदेवेनैवमभिहितः स तापसः समब्रवीत् वत्स ! वर्षशतान्यष्टौ मयास्मिन्नाश्रमे वसता अतिक्रान्तानि, न च कदाचिदपि सा पुरी मया श्रुता । इति तेन गदितः स शक्तिदेवः परं विषादं गतः पुन-रब्रवीत् भगवन् ! तर्हि मृतमेव मामवधारय । इति कथितः स मुनिर्ज्ञातार्थस्तमभाषत यदि ते अयं निश्चयः, तर्हि यदहं वचमि तत् क्रियताम् ।

अस्त्यस्मात योजनानां गतेषु त्रिषु काम्पिल्यो नाम विषयः । तत्र उत्तरो नाम गिरिरस्ति । तत्रैकश्चाश्रमो दृश्यते । तत्रार्य्यो दीर्घतपा नाम मम ज्येष्ठस्तपस्यति, तत्पार्श्वं व्रज, स वृद्धो जातु तां पुरीं जानीयात् । एव-मुक्तः स शक्तिदेवः कथञ्चिदाश्वस्तस्तां निशां तत्र नीत्वा प्रातस्तमुद्दिश्य प्रतस्थे । क्रमेण च बहुभिर्दिवसैः क्लेशाति-क्रान्तकान्तारश्रान्तश्चिरात् तं काम्पिल्यविषयं प्राप्य तस्मि-न्नुत्तरे गिरौ आरुरोह । तत्र च तं दीर्घतपसं मुनिमाश्रम-वर्त्तिनं दृष्ट्वा प्रणम्य च प्रीतः कृतातिथ्यम् उपाययौ । व्यज्ञापयच्च भगवन् ! कनकपुरीं प्रस्थितोऽहं न च जानामि सा क्व स्यात् । परमवश्यमेव सा गन्तव्या, तदुपलब्धये मुनिना सूर्य्यतपसा प्रेषितोऽस्मि भवदन्तिकम् । इत्युक्त-वन्तं तं मुनिरवादीत् वत्स ! इयता वयसा मयाद्य सा पुरी त्वत्तः श्रुता । देशान्तरागतैः जनैर्नास्ति मे परिचयः, ज्ञायते मया, सा नियतं दवीयसि क्वचिद् भवेत् द्वीपान्तरे । तत्र चोपायं ब्रवीमि शृणु ।

अस्ति तावत् वारां निधेरभ्यन्तरे उत्स्थलाख्यं द्वीपम्

तत्र सत्यव्रतो नाम धनी निषादपतिः प्रतिवसति। तस्य सर्वेष्वेव द्वीपेषु गतागतमस्ति। तेन सा पुरी श्रुता वा दृष्टा जातु भवेत्। तस्मात् प्रथमं तावत् जलधेः कूलस्थितं विटङ्कपुराभिधं नगरं व्रज। ततः केनापि वणिजा समं प्रवहणेन तत् निषादस्य पुरम् अभीष्टसिद्धये गमिष्यसि। इत्युक्तस्तेन मुनिना स शक्तिदेवस्तत्क्षणं तथेति मुनिमामन्त्र्य तदाश्रमात् प्रतस्थे।

कालेन च बहून् देशान् क्रोशांश्चातिक्रम्य वारिधिस्तीरस्थितं विटङ्कपुरं प्राप्य तस्मिंश्च समुद्रदत्ताख्यम् उत्स्थलद्वीपगामिनं वणिजमन्विष्य तेन सह सख्यमकरोत्। ततश्च तेन साकं तदीयं यानमारुह्य तत्प्रीतिपूर्णपाथेयः समुद्रवर्त्मना प्रतस्थे। अल्पावशिष्टे चाध्वनि सहसा महान् कृष्णमेघः सविद्युत् समुत्तस्थौ। प्रववौ च प्रचण्डसमीरणः सागरमुत्तम्भयन् तेन सह। वाताहताश्च जलधेर्महोर्मयः आश्रयाभिभवक्रोधात् सपक्षाः शैला इवोदतिष्ठन्। तच्च प्रवहणं धनिनामुन्नत्यवनतिपर्य्यायं दर्शयन्निव क्षणमूर्द्ध्वं क्षणञ्चाधः प्रयाति स्म। क्षणान्तरे च तत्प्रवहणं वणिजामाक्रन्दैः पूरितं भरादिवोत्पत्य समभज्यत। भग्ने च तस्मिन् यानस्वामी स वणिक् अम्बुधिपतितः कथञ्चित् फलकारूढश्चिरात् अन्यत् वहनं प्राप। शक्तिदेवन्तु पतन्तं व्यात्ताननः कश्चित् महामत्स्यः अपरिक्षतसर्वाङ्गमेव निगीर्णवान्। विधिनिर्बन्धाच्च स मत्स्यः सागरमध्ये स्वेच्छया चरन् उत्स्थलद्वीपसन्निधिमगात्। तत्र च तस्यैव कैवर्त्तपतेः सत्यव्रतस्य किङ्करैः शफर-

ग्राहिभिः स मत्स्यः सहसा समगृह्यत। ते च धीवराः कौतुकात् सुमहाकायं तं मत्स्यमाकृष्य तत्क्षणात् स्वामिनोऽन्तिकं निन्युः। सोऽपि सत्यव्रतः तादृशं तं दृष्ट्वा कुतूहलवान् भृत्यैर्निजैस्तं पाठीनं पाटयामास। पाटितस्य च तस्योदरात् जीवन् दैवबलेन स शक्तिदेवः साश्चर्य्यं सर्वैर्दृश्यमानो विनिर्ययौ। सत्यव्रतश्च सविस्मयस्तथा निर्यातं तं वीक्ष्य कृतस्वागतं युवानमपृच्छत् ब्रह्मन्! कस्त्वं, कुतश्चेदं शफरोदरशायित्वं भवतः, कश्च ते वृत्तान्त इति। तदाकर्ण्य शक्तिदेवस्तं दाशपतिं प्रत्यभाषत भद्र! अहमस्मि शक्तिदेवो नाम ब्राह्मणः, वर्द्धमाननगरादागतः। गन्तव्या च मयावश्यं कनकपुरी नाम पुरी। अजानंश्च तां सुचिरं भुवं पर्य्यटन् दीर्घतपसो मुनेर्वाक्यात् द्वीपवर्त्तिनीं तां सम्भाव्य तज्ज्ञप्तये दाशपतेरुत्स्थलद्वीपवासिनः सत्यव्रतस्य पार्श्वं गच्छन् वहनभङ्गतः अम्बुधौ मग्न इमां दशामापन्न इति एवमुक्तवन्तं तं सत्यव्रतः समवोचत् ब्रह्मन्! सत्यव्रतः सोऽहम्, एतच्च तत् उत्स्थलाख्यं द्वीपं, मया तु बहवो द्वीपा दृष्टाः मा पुनर्न कदापि, परं द्वीपान्तेषु सा नगरी श्रुता। इत्युक्त्वा विषण्णं तं शक्तिदेवं समीक्ष्य अभ्यागतप्रीत्या पुनरब्रवीत् ब्रह्मन्! मा विषादं कार्षीः, त्वमिहैवाद्य निशां वस, प्रातः कञ्चिदुपायं ते अभीष्टसिद्धये विधास्यामीति तेनाश्वास्य प्रहितः सुलभातिथिसत्कारं द्विजमठं प्रायात्।

तत्रैकेन विष्णुदत्तनाम्ना द्विजेन सह कृताहारः आलापं कृतवान्। तेन च प्रसङ्गात् पृष्टः स शक्तिदेवस्तस्मै संचे-

पेण निजं देशं कुलं वृत्तान्तञ्च सर्वं शशंस। तद्विदित्वा विष्णुदत्तः एनं परिरभ्य तत्क्षणं हर्षवाष्पाम्बुघर्घराक्षर-मुवाच दिष्ट्या मातुलपुत्रस्त्वम् एकदेशभवश्च मम, अहञ्च शैशव एव तस्मात् देशादिहागतः। तदिहैव तिष्ठ, अचिरा-देव ते दृष्टं द्वीपान्तरादागच्छन्ती वणिक्कर्णिंपरम्परा साधयिष्यति। इत्युक्त्वा स्वमन्वयम् आवेद्य विष्णुदत्तः यथोचितैरुपचारैस्तत्कालं तं शक्तिदेवमुपाचरत्। शक्ति-देवोऽपि विस्मृताध्वक्लेशः परां मुदं प्राप, बन्धुलाभो हि विदेशगतानां मराविव अमृतनिर्झरः। अमन्यत च स्वेष्ट-सिद्धिमदूरवर्त्तिनीम् अन्तरागतं हि श्रेयः कार्य्यसंसिद्धेः सूचकं भवति। ततो रात्रौ विनिद्रस्य शय्यायां निषेदुषः स्वेष्टचिन्तारतस्य तस्य शक्तिदेवस्य विनोदनार्थं विष्णुदत्तः पार्श्वस्थः कथामिमां कथयामास।

पुरासीत् गोविन्दस्वामी नाम महान् विप्रः कालिन्द्या उपकण्ठे महाग्रहारे जनपदे। तस्य गुणशालिनः सदृशौ द्वौ सुतौ अशोकदत्तो विजयदत्तश्चेति समभूताम्। कालेन तत्र वसतां तेषामतिदारुणं दुर्भिक्षमुदपादि। तेन गोविन्दस्वामी भार्य्यामुवाच प्रिये! अयं तावत् देशः दुर्भिक्षेणोपतापितः, तदहं सुहृद्बान्धवदुर्गतिं द्रष्टुं न शक्नोमि। कस्य वा कियत् दीयते, तस्मादन्नं यदस्ति नः, तद् बन्धुमित्रेभ्यो दत्त्वा अस्मात् स्थानात् वासाय सपरिवाराः वाराणसीमाश्रयामः। इत्युक्तयोर्भार्य्ययानु-मतः सः निजमन्नं बन्धुमित्रेभ्यो दत्त्वा सदारसुतभृत्य-स्तस्मात् देशात् प्रययौ, उत्सहन्ते हि साधवो न हि स्वज-

नापदं द्रष्टुम्। गच्छंश्च पथि जटिलं भस्मपाण्डुं कपालिनं सार्द्धचन्द्रमिवेशानं महाव्रतिनमीक्षाञ्चक्रे। स तु तं ज्ञानिनमुपेत्य स्नेहेन पुत्रयोः शुभाशुभमपृच्छत्। स च योगी प्रत्यब्रवीत् ब्रह्मन्! पुत्रौ तव कल्याणिनौ भविष्यतः, किन्तु एतेन कनीयसा विजयदत्तेन ते वियोगो भविता। ततोऽस्य अशोकदत्तस्य प्रभावात् पुनरेतेन सह समागमो युष्माकं भविष्यति। इत्युक्तस्तेन ज्ञानिना स गोविन्दस्वामी तदा सुखदुःखाद्भुताक्रान्तस्तथामन्त्र्य ययौ, क्रमेण च वाराणसीं प्राप्य तद्वाह्ये चण्डिकागृहे देवीपूजादिव्यापारेण दिनमतिवाहयामास। सायञ्च तत्र तरोर्मूले सकुटुम्बः कार्पटिकैरन्यदेशागतैः समं समावसत्। रात्रौ च तत्र सर्वेषु अध्वश्रान्तेषु आस्तीर्णपर्णादिशय्यानिषादिषु सुप्तेषु तदीयस्य विबुद्धस्य कनीयसः सुतस्य विजयदत्तस्याकस्मात् महान् शीतज्वरोऽजनिष्ट। स च तेन भाविबन्धुविश्लेषहेतुना भयेनेव ज्वरेण सवेपथुरूर्द्ध्वरोमा समभवत्। अवोचच्च शीतार्त्तः प्रबोध्य पितरं, तात! बाधते मां सम्प्रति तीव्रः शीतज्वरो महान्। तत् शीघ्रं काष्ठमानीय अग्निं ज्वलय शीतघ्नं, नान्यथा मे शान्तिः, न चाहं यामिनीं नेतुं शक्नोमि। तदाकर्ण्य गोविन्दस्वामी तद्वेदनार्त्तः समभ्यभात् पुत्र! कुतोऽधुना वह्निरिति। तदाकर्ण्य तात! नन्वयं निकटे ज्वलन्नग्निर्दृश्यते, अत्रैव भूयिष्ठेऽग्नौ गत्वा अङ्गं तापयामि, तस्मात् सकम्पं मां हस्ते गृहीत्वा अत्र द्रुतं नय इत्युक्तस्तेन पुत्रेण स विप्रोऽब्रवीत् पुत्र! श्मशानमेतत्, एषा च चिता ज्वलति, तत्कथं पिशाचादिदारुणेऽत्र गम्यते, त्वं हि बालकः।

एतत् पितुर्वत्सलस्य वचः समाकर्ण्य विहस्य स वीरो विजयदत्तः सावष्टम्भं तमब्रवीत् तात! पिशाचादिभि-र्वराकैः किं मे क्रियते, किमहमल्पसत्त्वः, तद्भङ्गं तत्र मां नय। एवमाग्रहेण पिता तं तत्रानयत्। सोऽपि बालः अङ्गतापनार्थं ज्वलन्तीं धूमव्याकुलमूर्द्धजां नृमांसग्राहिणीं रक्षोधिदेवतामिव चितामुपससर्प। क्षणात् तत्र समाश्वस्य स शिशुस्तं पितरं चितान्तर्दृश्यते, किमेतदिति पप्रच्छ। सोऽपि पिता कपालमेतत् मानुषस्य चितायां दह्यते इति प्रत्यवादीत्। ततः सोऽर्भकः ससाहसमेकेन दीप्ताग्रेण काष्ठेन निहत्य कपालं स्फोटयामास। तेनोच्चैः तस्मात् निर्गता वसा तस्य मुखे श्मशानाग्निनार्पिता नक्तञ्चरी-सिद्धिरिवाविशत्। तदास्वादेन च स बालस्तत्क्षणात् ऊर्द्ध्वकेशः निष्कोत्खातखड्गी दंष्ट्राविशङ्कटः राक्षसो भूत्वा कपालमाकृष्य तद्वसां पीत्वा अखिलन्नया निजजिह्वया लिलेह। ततः कपालं व्यक्त्वा उद्यतासिर्यावत् तं निजं पितरं गोविन्दस्वामिनं हन्तुमुपक्रमते तावत् भोः कपाल-स्फोट देव! पितायं ते न हन्तव्य इति श्मशानात् भारती उदचरत्। तदाकर्ण्य स राक्षसः कपालस्फोट इति नाम लब्ध्वा पितरं मुक्त्वा तिरोऽभूत्। तत्पितापि गोविन्दस्वामी हा पुत्र! हा गुणशालिन्! विजयदत्त! क्व गतोऽसीति मुक्ताक्रन्दस्तस्मात् चण्डीगृहमेत्य प्रातः पत्न्यै सुताय ज्येष्ठाय अशोकदत्ताय च यथावृत्तमशंसत्। ततस्ताभ्यां पत्नी-पुत्राभ्यां सह स तथा शोकानलसंवेगमतिदारुणं प्राप यथा देवीदर्शनागतोऽन्यो जनस्तत्समदुःखतां ययौ।

तदा च देवीपूजार्थमागतः समुद्रदत्तनामा कश्चित् महाधनो वणिक् तत्र तथाविधं गोविन्दस्वामिनमपश्यत्। दृष्ट्वा चासौ समुपेत्य साधुस्तं द्विजं समागम्य सपरिजनपरिच्छदं निजावासमनैषीत्। उपाचरच्च स्नानादिना उपचारेण, निसर्गो ह्येषः यदापन्नानामनुकम्पनम्। सोऽपि गोविन्दस्वामी पत्न्या सह योगिवचनादाश्वस्तः कथञ्चित् धृतिमलभत। ततः प्रभृति स तस्यामेव वाराणस्यां तेन महावणिजा अभ्यर्थितस्तदावास एवाध्युवास। तत्र च तदपरसुतः अशोकदत्तः क्रमात् प्राप्तयौवनः अधीतविद्यश्च बाहुयुद्धमशिक्षत। क्रमेण च स तथा प्रकर्षं प्राप यथा भूतले केनापि प्रतिमल्लेन नाजीयत।

एकदा देवयात्रायां मल्लसमागमे कश्चित् महामल्लः ख्यातिमान् दक्षिणापथात् समाययौ। तेन अत्र वाराणसीपतेः प्रतापमुकुटस्य पुरतः सर्वे मल्लाः पराजिताः। ततः स राजा मल्लयुद्धे तस्मात् वणिजो गृहात् तमशोकदत्तमानाय्य योद्धुं समादिशत्। सोऽपि मल्लः भुजं दत्त्वा भुजेन युद्धमारभत। अशोकदत्तस्तु तस्य भुजं भङ्क्त्वा तं न्यपातयत्। ततस्तत्र महामल्लनिपातोत्थितशब्दया संग्रामभुवापि सन्तुष्य साधुवादे रुदिते राजा परितुष्टस्तं अशोकदत्तं रत्नैरपूरयत् अकरोच्च निजपार्श्वचरम्। सोऽपि राजप्रियो भूत्वा दिने दिने अभ्युदयं प्राप। अथ स राजा कदाचित् चतुर्दश्यां पुराद् बहिः सुप्रतिष्ठितः देवं शङ्करमर्च्चयितुमगात्। कृतपूजश्च नक्तं श्मशानस्य अन्तिकेनागच्छन् तदुद्गतां गिरमेतामशृणोत् प्रभो! अहं दण्डा-

धिपेन इह मिथ्यावध्यानुकीर्त्तनात् हेषेण शूलायां विद्धः, अद्य तृतीयो दिवसस्तथापि मे पापात्मनः प्राणा न निर्गच्छन्ति, तद् देव ! अहमस्मि भृशं तृषितः, दापय मे किञ्चित् जलमिति। तदाकर्ण्य राजा कृपापरतन्त्रः पार्श्वस्थं तमशोकदत्तमब्रवीत् वीर ! अस्य जलं ददातु भवान्। अशोकदत्तस्तु कोऽन्योऽत्र रात्रौ व्रजेत्, तदहमेव स्वयं गच्छामीत्युक्त्वा अम्बु गृहीत्वा तत्र ययौ। राजनि च स्वपुरं याते स वीरः महता तमसा सर्वतो वृतं क्वचित् शिवावकीर्णपिशितयुक्तसन्ध्यावलि क्वचिच्च चितानलज्योतिर्विदीपितं क्वचिदपि नृत्यदुत्तालवेतालतालवाद्यं तदतिदारुणं कालरात्रिवासभवनमिव श्मशानमविशत्। गत्वा च केनाभौ याचितं राज्ञ इत्युच्चैर्वदन् मया याचितमित्येकतः वाचमशृणोत्। गत्वा तद्वचनानुसारेण निकटस्थं चितानलं शूलाग्रविद्धं पुरुषम् अधश्च रुदतीं सर्वालङ्कारभूषिताम् अदृष्टपूर्वां कामपि सर्वाङ्गसुन्दरीं नारीञ्चापश्यत्। अवदच्च का त्वमम्ब ! कथञ्चेह रुदती तिष्ठसीति एवमभिहिता सा योषित् तमब्रवीत् भद्र ! अहमस्य शूलविद्धस्य दुर्लक्षणा भार्य्या अमुना सहैव चितारोहे निश्चितमतिः स्थितास्मि, अस्य प्राणानां निष्क्रमकालं प्रतीक्षे च परमद्य तृतीयेऽह्नि गतेऽपि नास्य प्राणा निर्यान्ति, अयञ्च पुनःपुनस्तोयं याचते, आनीतञ्च मया तोयं, किन्तु अहमुन्नते शूले अस्य मुखं न प्राप्नोमि। इति तस्या वचः श्रुत्वा स वीरोऽवोचत् भद्रे ! इदमपि राज्ञा प्रेषितं जलं मम हस्ते तिष्ठति, तत् मम पृष्ठे पदं दत्त्वा अस्य मुखे जलं दीयतां,

न ह्यापदि परस्पर्शनमात्रं सतीनां दोषायेति। तदाकर्ण्य तथेत्युक्त्वा जलमादाय च शूलमूलावनतस्य तस्य अशोकदत्तस्य पृष्ठे पदद्वयं दत्त्वा सा आरुरोह। क्षणात् भुवि स्वपृष्ठे च रक्तविन्दून् पततो दृष्ट्वा स वीरः मुखमुन्नमय्य यावत् पश्यति तावत् तां स्त्रियं छुरिकया छित्वा तस्य शूलविद्धस्य मांसानि खादन्तीमपश्यत्। ततः स वीरः तां विकृतिं मत्वा क्रोधादाकृष्य भूतले निपातयिष्यन् रणितनूपुरे पदे जग्राह। सापि तरसा पादं तमाक्षिप्य स्वमायया गगनमुत्पत्य क्वाप्यदर्शनमगात्। अशोकदत्तस्य तु करान्तरे तस्मात् पादात् आकर्षणस्रस्तं मणिनूपुरमस्थात्। ततः स वीरः प्रथमं तां सुपेशलां ततः पापिनीं ततश्च विकृतदर्शनां दुर्जनसङ्गतिमिव नष्टां विचिन्तयन् हस्ते च दिव्यं नूपुरं पश्यन् सविस्मयः सतापः सहर्षश्च बभूव। ततः श्मशानात् स आत्तनूपुरः निजगेहमगमत्। प्रातश्च स्नातः राजकुलम् गत्वा च तस्य तृषितस्य जलं दत्तं किमिति पृच्छति राज्ञि स तथेत्युक्त्वा तं नूपुरमुपानयत्। कुत एतदिति सविस्मयं पृष्टश्च राज्ञा स सर्वं रात्रिवृत्तान्तमकथयत्। ततः स राजा तस्य अनन्यसाधारणं गुणोत्कर्षं सत्त्वमवधार्य भृशं तुतोष। गृहीत्वा च तं नूपुरं गत्वान्तःपुरं देव्यै हृष्टस्तं वृत्तान्तं समवर्णयत्। सापि तदाकर्ण्य दृष्ट्वा च दिव्यं नूपुरम् अशोकदत्तप्रशंसया मुदिताभवत्। अथ राजा तामगादीत् देवि! जात्या विद्यया सत्त्वेन रूपेण चायं महतामपि महान्, तदयमशोकदत्तः यदि मम दुहितुर्मदनलेखाया भर्त्ता भवेत् तदा भद्रमहं मन्ये।

वरस्य गुणा एव लक्ष्याः, क्षणसङ्गिनी लक्ष्मीर्न, तदेतस्मै प्रवीराय अहं कन्यामिमां ददामि।

इति भर्त्तुर्वचनमाकर्ण्य सा देवी सादरमब्रवीत् नाथ। युक्तमेतत्, असौ युवा मम दुहितुर्योग्यो वरः, सा च मधु वनदृष्टेन तेन हृतचित्ता शून्याशया दिनेष्वेषु न शृणोति न च पश्यति। तस्याः सखीभ्यः एतत् श्रुत्वा सचिन्ताहं रात्रिशेषे सुप्ता कयापि दिव्यया स्त्रिया उक्तास्मि वत्से! मदनलेखेयं कन्यका नान्यस्मै देया, एषा हि अशोकदत्तस्य जन्मान्तरगेहिनीति। तदाकर्ण्य प्रबुद्धाहं प्रत्यूष एव गत्वा स्वयं तत्प्रत्ययात् वत्सां मदनलेखां समाश्वासितवती, अधुना चार्य्यपुत्रेणैवमभिहितं तस्मात् द्रुमेणेव आर्त्तवी लता तेन वीरेणासौ सङ्गच्छताम्। इत्युक्तः प्रियया स राजा अशोक दत्तमाहूय महता उत्सवेन तस्मै स्वां तनयां ददौ। तयोश्च राजसुताब्राह्मणपुत्रयोः लक्ष्मीविनययोरिव अन्योन्यशोभाये सङ्गमोऽभूत्।

अथैकदा राज्ञी अशोकदत्तानीतं तं मणिनूपुरमुद्दिश्य राजानमभाषत आर्य्यपुत्र! अयमेका नूपुरो न शोभते, तदेतस्य अनुरूपो द्वितीयः परिकल्प्यताम्। तन्निशम्य भूपतिः स्वर्णकारादीन् आहूय अस्यानुरूपो द्वितीयः विरच्यतामिति समादिशत्। ते तु तन्निरूप्य जगदुः देव! नेदृशः शक्यतेऽस्माभिरपरः कर्त्तुम्। एतत् हि दिव्यं शिल्पं न मानुषम्, ईदृशानि रत्नानि नैव भूतले प्राप्यन्ते। तस्मात् यत एषः प्राप्तः, तत्रैव एतदनुरूपो द्वितीयो गवेष्यतामिति। एतदाकर्ण्य देव्या सह राजनि विषादं गते पार्श्वस्थितो

ऽशोकदत्तः सहसा समब्रवीत् देव! अहमेव अस्य द्वितीय-मानयामि। एवं प्रतिज्ञारूढ़ः राज्ञा अपायशङ्किना नि-वार्य्यमाणोऽपि स्नेहात्, निश्चयात् न चचाल। जगाम च पुनस्तन्नूपुरं गृहीत्वा श्मशानं निशि कृष्णचतुर्द्दश्याम्। प्रविश्य च तत्र निशाचरैरवकीर्णे पितृकानने पूर्वदृष्टां तामेव स्त्रियं पश्यन् महामांसविक्रयमुपायं बुद्धा तरु-पाशात् शवमेकं जग्राह। बभ्राम च को महामांसं क्रीणातीति घोषयन्।

क्षणान्तरे च महासत्त्व! नीत्वागच्छ मया सहेति दूरतः समालपन्त्याः स्त्रिया वचनमाकर्ण्य स तामेव महि-लामनुसरन् आरात् तरुमूले दिव्यरूपामिकां नारी-मद्भुताकृतिं रत्नाभरणभूषिताम् आसनोपविष्टां स्त्रीभिः सहचरीभिरावृतामम्भोजिनीमिव मरावद्राक्षीत्। तया च पूर्वदृष्टया स्त्रिया समुपनीतस्तथाभूतां तामुपेत्य नर-मांसं विक्रीणे, गृह्यतामिति समभाषत। सा तु दिव्य योषित् भो महासत्त्व! केनैतत् मूल्येन दीयते इति प्राह स्म। ततः स वीरः स्कन्धस्थितशवः करस्थं तमेकं मणिनूपुरं सन्दर्श्याब्रवीत् सुन्दरि! योऽस्य सदृशं द्वितीयं नूपुरं मे ददाति तस्य मांसमेतत् ददामि, यदि ते अस्ति तदा गृह्यताम्। तदाकर्ण्य सा अभ्यधात् अस्त्यपरो नूपुरो मम, असौ तव हस्तस्थः मदीय एव, त्वयैव पूर्वं हृतः। सा चाहं त्वया या शूलविद्धस्य पार्श्वतः कृतान्यरूपा दृष्टा, तस्मात् नाधुना परिज्ञातास्मि। तन्मांसेनालं

यदहं ब्रवीमि तत् करोषि चेत् तदास्य द्वितीयं सहस्रं तुभ्यं निःसंशयं दास्यामि ।

एवमुक्तः स वीरस्तथेति प्रतिपद्यावोचत् यत् त्वयोच्यते तत् अविलम्बितं साधयाम्येव। ततः सा तस्मै स्वाभिलषितमगदत् भद्र! अस्ति हिमाचलशिखरे त्रिघण्टं नाम पुरम्। तत्रासीत् लम्बजिह्वाभिधः प्रवीरो राक्षसाधिपतिः। तस्य विद्युच्छिखा नाम भार्य्याहं कामरूपिणी अस्मि। स च मे पतिर्दैवदोषात् एतस्यां सुतायां जातायां कपालस्फोटस्य प्रभोः पुरतः संग्रामे निहतः। ततस्तेन प्रभुणा कपालस्फोटेन तुष्टेन निजपुरं मे दत्तं, तत्राहं ससुता सुखेन स्थितास्मि। दुहिता चेयं सम्प्रति समारूढयौवना, तदर्थञ्च वरप्राप्तये अनुदिनं मे चिन्ता वर्त्तते। अतस्तदा चतुर्दश्यां राज्ञा सह समायान्तं त्वाममुना नक्तं विलोक्य इह स्थिताचिन्तयम्, अयं हि भव्यो युवा ममास्या दुहितुर्योग्यो वरः, तदेतत्प्राप्तये कञ्चिदुपायं कल्पयामीति। ततः शूलविद्धस्य वचसा मिषेण जलं याचित्वा मध्ये श्मशानं त्वामुपनीतवत्यस्मि। तत्र च मायया अलीकवादेन त्वां विप्रलभ्य क्षणं पुनरिहाकर्षणाय युक्त्या स्वनूपुरमेकं त्वद्ग्रहणशृङ्खलापाशमिव संत्यज्य गताभूवम्। अद्य तु मया भवान् प्राप्तः, तदेतु गृहं नः, भजस्व मे सुतां गृहाण चापरं नूपुरम्।

एवमुक्तो निशाचर्य्या स वीरस्तथेत्युक्त्वा तया सह तद्योगेन गगनपथा तत्पुरमगात्। अपश्यच्च हिमवतः शृङ्गे सौवर्णं गगनाध्वविश्रामार्थं स्थितमर्कबिम्बमिव तत्पुरम्।

तत्र च विद्युत्प्रभां नाम तस्याः सुतां स्वसाहसमहासिद्धि-मिव मूर्त्तामवाप्य तया सह कञ्चित्कालं श्वश्रूविभवनिर्वृतस्तस्थौ।

अथैकदा सोऽशोकदत्तः श्वश्रूमवादीत् मातः! देहि मे तं नूपुरं, सम्प्रति वाराणस्यां गन्तव्यं, प्रतिज्ञातं मया राज्ञः पुरः एतस्य लब्धये। इत्युक्ता सा रात्रिश्चरी तं द्वितीयं नूपुरं तस्मै दत्त्वा पुनः सुवर्णकमलमेकं ददौ। ततः स वीरः पुनरागमनवचसा तां परितोष्य तस्मात् पुरात् निर्गत्य तथैव श्वश्र्वा आकाशपथेन तत् श्मशानं प्रापितः। तत्र च तरुमूले स्थिता सा जामातरमगादीत् वत्स! सदा कृष्णचतुर्दश्यामिह रजन्यामागमिष्यामि, तस्मात् यदा यदा निशि तस्यां त्वमत्र आगमिष्यसि तदैव अस्मात् वटतरोर्मूलात् मां प्राप्स्यसि।

एतदाकर्ण्य सः अशोकदत्तः तथेति तामामन्त्र्य पितृ-गृहमगात्। पितरौ च कनीयः सुतविरहदुःखद्विगुण-दायिना तत्प्रवासेन नितरामार्त्तौ अतर्कितागतं तं सुत-मालोक्य यावत् अभिनन्दतः, तावत् तस्य श्वशुरो नरपति-स्तत्राययौ। स नृपस्तं प्रणतं साहसिकस्पर्शभीतैरिवाङ्गैः सकण्टकैः समालिङ्ग्य भृशं मुमुदे। निनाय च तं स्वपुरं रूपवन्तमिव प्रमोदम्। ततः स वीरः श्वशुराय तत् दिव्यं नूपुरयुगलं तच्च सुवर्णकमलं समर्पयत्। पृष्टश्च श्वशुरेण श्वश्र्वा च कौतुकात् यथावृत्तं सर्वमवर्णयत्। को हि साहसं विना ईदृशं सौभाग्यं लभते? एवं वदन् राजा राज्ञी च तेन जामात्रा आत्मानं कृतार्थममन्यत।

अथान्येद्युः स राजा स्वकृते सुरसद्मनि शोभने रजत-कलसोपरि तत् स्वर्णपद्ममस्थापयत्। तौ च पद्मकलसौ रक्तसितौ यशःप्रतापाविव नृपाशोकदत्तयोः शुशुभाते। तौ च तादृशौ विलोक्य शैवो नरपतिः सहर्षो भक्तिरसेन समभाषत अहो! अमुना सौवर्णेन कमलेन भूतिशुभ्रः कलसोऽयं राजतः कपर्दीव बभ्रुणा जटाजूटेन विभाति, यदि द्वितीयमीदृशं स्वर्णाब्जं लभ्यते, तदा द्वितीये कलशे तदपि एवं स्थापयामि। इत्येवं राजवाक्यं निशम्य सः अशोकदत्तः समभाषत देव! आज्ञापय माम्, आनेष्यामि द्वितीयमम्भोजं त्वदर्थम्। तदाकर्ण्य राजा प्रत्युवाच वत्स! अलं साहसेन, न ममास्ति अन्येन प्रयोजनमिति।

अथ गच्छत्सु दिवसेषु आयान्त्यां कृष्णचतुर्दश्यां रजन्यां स वीरः प्रसुप्तां राजपुत्रीं विहाय तत् श्मशानं पुनर्ययौ। ददर्श च तत्र तां श्वश्रूं राक्षसीमादरेण कृतस्वागत-वचनाम्। ततस्तया सह पुनस्तद्भवनमेत्य कञ्चित् कालं तस्या दुहित्रा सह स्थित्वा तामब्रवीत् मातः! द्वितीयं मे कनकाम्बुजं देहि। तन्निशम्य साब्रवीत् वत्स! कुतो मेऽस्य द्वितीयम्? अस्मत्प्रभोः कपालस्फोटस्य सरो विद्यते, यत्र ईदृशानि शतशो हेमाब्जानि सन्ति, स तु प्रीत्या मम भर्त्रे तदेकं दत्तवान्।

एवं तयोक्ते सोऽब्रवीत्, तर्हि तत्सरो मे दर्श्यताम्, अहं स्वयं तस्मात् कनकाम्बुजमादास्ये। न त्वयैतत् शक्यं, तद्धि दारुणै रक्षोभिः संरक्ष्यते। एवं निषिद्धोऽपि श्वश्र्वा स निर्बन्धं नात्यजत्। ततः कथञ्चित् श्वश्र्वा तया नीतश्च

दूरात् तुङ्गाद्रिकटकान्वितं निरन्तरोद्दीप्तहेमसरोजैश्चितं तत् दिव्यं सरो ददर्श। यावच्च तत्र गत्वा पद्मानि सञ्चिनोति तावत् तं घोरा निशाचराः संरुरुधुः। स च शस्त्रैस्तान् अन्यांश्चावधीत्। ये च पलायितास्ते सत्वरं गत्वा कपालस्फोटस्य तं वृत्तान्तं न्यवेदयन्। स तु रक्षसां पण्डितस्तदाकर्ण्य कुपितः स्वयमागत्य अशोकदत्तं तं लुण्ठिताम्बुजमपश्यत्। प्रत्यभिज्ञानाच्च सविस्मयः कथं स मे भ्रातायमशोकदत्तः समायातः? ततः शस्त्रमुत्सृज्य सहर्षबाष्पाकुलनयनः धावित्वा अस्य पादयोः पतित्वा सद्यस्तमब्रवीत् अयं ते विजयदत्तो नाम सोदरः, आवां द्विजवर्य्यस्य गोविन्दस्वामिनः सुतौ इयच्चिरञ्च जातोऽहं दुर्दैवात् निशाचरः चितायाः कपालस्फोटनात् कपालस्फोटाख्यः। भवद्दर्शनाच्च इदानीं मे ब्राह्मण्यं स्मृतावारूढं गतञ्च राक्षसत्वं मोहाच्छन्नचैतन्यम्। ततश्चाशोकदत्तः विजयदत्तस्य भ्रातुरङ्गं राक्षसीभावदूषितं परिरभ्य बाष्पाम्बुपूरैरात्मानमपूरयत्।

अथ कौशिको नाम विद्याधरगुरुर्दिवः समागत्य तौ भ्रातरावब्रवीत् यूयं सर्वे विद्याधराः शापादीदृशीं दशां गताः, अधुना च स शापो व्यतिक्रान्तः, तदेतां निजां विद्यां गृह्णीतं गच्छतञ्च स्वं धाम। एवमुक्त्वा विद्यां दत्त्वा तयोर्गुरुर्दिवमगात्। तौ विद्याधरीभूतौ प्रबुद्धौ गृहीतकनकाम्बुजौ हिमवतः शृङ्गं व्योम्ना जग्मतुः। तत्र चाशोकदत्तः तां राक्षससुतां प्रियां प्राप। सा च तदानीं क्षीणपापा विद्याधरी संवृत्ता। तया च सह तौ भ्रातरा-

वुभावपि गगनमार्गेण क्षणात् वाराणसीं प्रयातौ। तत्र च पितरावुपेत्य वियोगानलसन्तप्तौ दर्शनामृतवर्षेण निरवापयताम्। बभूवतुश्च शरीराभेदेऽपि प्राप्तचित्रजन्मान्तरौ च न पित्रोरेव सर्वस्यापि जनस्योत्सवाय। चिराच्च विजयदत्तः गाढ़माश्लिष्यतः पितुरुरःस्थलं मनोरथमिवापूरयत्। ततस्तत्र राजा प्रतापमुकुटोऽपि श्वशुरोऽशोकदत्तस्य विदितवृत्तान्तो हर्षात् समाययौ। तेन च सत्कृतः अशोकदत्तः स्वजनैः सार्द्धं समुत्सुकप्रियां बद्धमहोत्सवां तद्राजधानीमगमत्, अदाच्च राज्ञे बहूनि कनककमलानि। स तु नृपः प्रार्थिताधिकलाभेन भृशं परितुतोष।

ततः पिता गोविन्दस्वामी शृण्वत्सु सर्वेषु समाश्चर्यकौतुकः तं विजयदत्तमपृच्छत् वत्स! तदा श्मशाने सहसा राक्षसीभावं गतस्य ते सर्वो वृत्तान्तः संवर्ण्यतामिति। विजयदत्तोऽभ्यधात तात! चापलात् दुर्दैवनिबन्धनात् प्रस्फोटितचितादीप्तकपालोऽहं मुखप्रविष्टया तद्वसया रक्षोभावमापन्नस्त्वया मोहाच्छन्नविग्रहः दृष्टः। तेन च कपालस्फोट इति नाम्ना राक्षसैरन्यैराहूतस्तैश्च तत्क्षणात् मिलितोऽभवम्। तैश्च क्रमेण रक्षसां पतेः पार्श्वमुपनीतः। सोऽपि राक्षसेन्द्रः मां दृष्ट्वा सम्प्रीतः सेनापतिमकरोत्। ततः कदाचित् सः राक्षसपतिः मदेन गन्धर्वान् अभियोक्तुं गतो निहतश्च संग्रामे रिपुभिः। तदैवाहं तदीयैर्भृत्यवर्गैस्तद्राज्यं ग्राहितस्तत्पुरे स्थितः राक्षसाधिपत्यमकार्षम्। अकस्मात् आर्य्यस्य अशोकदत्तस्य काञ्चनकमलार्थं तत्र गतस्य दर्शनात् सा मम दशा प्रशान्ता। अनन्तरञ्च यथा

आवाभ्यां शापमोक्षात निजा विद्याः प्राप्ताः तथार्य्यो वः सर्वमावेदयिष्यति। एवं विजयदत्तेन निवेदिते अशोकदत्तस्तदा सर्वं सविस्तरमवर्णयत्।

पुरावां विद्याधरौ गगनात् गालवस्य मुनेराश्रमे गङ्गायां स्नान्तीः मुनिकन्यका अपश्याव। ततश्च तुल्यानुरागास्तास्तत्र रहसि कामयमानौ बुद्ध्वा तद्बन्धुभिर्दिव्यदृष्टिभिः क्रोधात् शप्तौ पापाचारौ युवां प्रजायेथां मनुष्ययोनौ तत्रापि युवयोर्विचित्रो वियोगो भविता, यदा च मानवागम्ये देशे विदूरे युवयोरेकः अपरेण सङ्गमिष्यते तदा प्रज्ञानमापत्स्यथः, तदा च विद्याधरगुरोः सकाशात् विद्यां लब्ध्वा पुनः शापमुक्तौ विद्याधरौ भविष्यथ इति। एवं तैर्मुनिभिरभिशप्तौ आवां भवतां कुले समुत्पन्नौ, वियोगश्चावयोर्यथाभूतस्तत् सर्वं वो विदितम्, इदानीं कनकार्थं श्वश्रूसिद्धिवशात् रक्षोराजस्य पुरं प्राप्य प्राप्तोऽयमनुजः। ततश्चावां कौशिकात् गुरोर्विद्याः समधिगम्य सद्यो विद्याधरत्वमापन्नौ भवद्दर्शनार्थं क्षिप्रमिहागतौ।

एवं पितरौ तनयाश्च भूपतिः प्रियतमामुक्त्वा अशोकदत्तः सद्यः शापविमुक्तिमुदितः स्वैर्विद्याविशेषैस्तैस्तथा संव्यभजत् यथा एतेऽपि बन्धुवर्गाः प्रबुद्धमनसः सद्यः विद्याधरत्वमगमन्। ततश्च तं नृपं समामन्त्र्य भ्राता पितृभ्यां प्रियतमाभ्यां ताभ्याञ्च सह गगनमार्गेणोत्पत्य विद्याधरपुरमगच्छत्। तत्र च गत्वा तौ भ्रातरौ तं विद्याधरराजमालोक्य तदाज्ञया अशोकवेगविजयवेगनामानौ सन्तौ स्वजनैः निजावासं गोविन्दकूटाख्यमचलं ययतुः।

प्रतापमुकुटश्च वाराणसीपतिरद्भुतदर्शनेन सञ्जातहर्षः स्वस्मिन् देवसद्मनि द्वितीयकलशे न्यस्तहेमाम्बुजः अपरैश्च स्वर्णकमलैरभ्यर्चितशङ्करः कृतार्थमात्मानं कुलञ्चामन्यत ।

एवं दिव्याः शापवशादवतीर्णा जन्तवो जीवलोके महासत्त्वं दधानाः अन्यदुर्लभामर्थसिद्धिं प्राप्नुवन्ति । तत् महासत्त्व ! मन्ये भवानपि कोऽपि देवविशेष एव, तस्मात् अवश्यमेव मनोरथसिद्धिर्भविता, सोत्साहता हि दुष्करासु क्रियासु महतां प्रकृतिविशेषं प्रायशः शंसति । साऽपि भवदभिमता राजबाला कनकरेखा नूनं दिव्या, नो चेत् कथं कनकपुरीदर्शिनं पतिं काङ्क्षति । इत्येवं विष्णुदत्तात् रहसि सरसां कथामुपनिशम्य हृदि कनकपुरीविलोकनाशां दधौ निनाय च धृतिमालम्ब्य कथञ्चित् त्रियामाम् ।

इति पञ्चविंशस्तरङ्गः ।

---

## अथ षड्विंशस्तरङ्गः ।

---

अथ तत्र उत्स्थलद्वीपे प्रातस्तं मठस्थं शक्तिदेवं दासपतिः सत्यव्रतः समुपायातः समभाषत ब्रह्मन् ! चिन्तितो मया त्वदिष्टसिद्ध्यर्थमुपायः । अस्त्यम्बुधेरन्तः रत्नकूटाख्यं द्वीपवरम् । तत्र भगवान् नारायणः अब्धिना कृतप्रतिष्ठ

आस्ते। आषाढ़शुक्लद्वादश्यां तत्र यात्रोत्सवे सदा सर्व-द्वीपेभ्यः तत्पूजार्थमागच्छन्ति भक्तिमन्तो जनाः। तत्र अवश्यमेव बहुतरजनसङ्गेन सा कनकपुरी ज्ञातव्या, तदागच्छ तत्र गच्छावः, प्रत्यासीदति च सा तिथिः।

एवं सत्यव्रतेनोक्तः शक्तिदेवस्तथेति प्रतिपद्य हृष्टः पाथेयं विष्णुदत्तकल्पितं गृह्णन् सत्यव्रतदत्तञ्च वाहनमारुह्य तेनैव सत्यव्रतेन साकं वारिधिवर्त्मना त्वरितं प्रायात्। गच्छंश्च स तत्र द्वीपनिभनक्रे अद्भुतनिकेतने कर्णधारतया स्थितं सत्यव्रतमपृच्छत् भद्र! इतो दूरात् किमेतदम्बुधौ महाभोगं यदृच्छया समुत्थितसपक्षपर्वतनिभं किं दृश्यते? सत्यव्रतोऽवादीत् ब्रह्मन्! असौ वटवृक्षः, अस्याधस्तात् सुमहावर्त्तं वड़वामुखं कीर्त्यते, इमञ्च परिहृत्य प्रदेशमिह गम्यते, अस्मिंश्चावर्त्ते पतितानां नैव पुनरागमः। एवं सत्यव्रते वदति एव तद् वहनं वायुवेगतस्तस्यामेव दिशि गन्तुं प्रववृते। तद् दृष्ट्वा सत्यव्रतः शक्तिदेवं पुनरवदत् ब्रह्मन्! विनाशोऽयमस्माकं ध्रुवमुपस्थितः, पश्य यदकस्मात् प्रवहणमेतत् अत्रैव प्रयाति, कथमपि मयाधुना रोद्धुं न शक्यते। तदस्मिन्नावर्त्ते मृत्युमुख इव वयमम्बुधिना बलीयसा स्वकर्म्मणाकृष्य क्षिप्यन्ते, न च मे किञ्चन दुःखमेतेन, शरीरं हि क्षणभङ्गुरम्, एतदेव दुःखं यत्ते मनोरथो न कृच्छ्रेणापि पूरितः। तत् यावदेतत् प्रवहणं मनाक् धारयामि तावदस्य वटतरोः शाखां द्रुतमवलम्बस्व। कदाचित् तवेदृशाकृतेः जीवनोपायो भवेत्, को हि विधिविलसितानि सागरतरङ्गांश्च तर्कयेत्। एवं वदत एव सुधीरस्य सत्य-

व्रतस्य सविधे वटतरोः प्रवहणं तत् समगच्छत्। दर्शनेन च शक्तिदेवः जातोत्फालः साध्वसात् तस्य वटतरोर्विशालां शाखामग्रहीत्। सत्यक्तस्तु परार्थकल्पितेन देहेन वहनेन च वड़वामुखमविशत्। अथ शक्तिदेवः शाखाच्छादितदिशस्तस्य तरोः शाखामेकामाश्रित्य निराशः संचिन्तितवान् हा हन्त! मया सा पुरी न दृष्टा, प्रत्युत अपदे नश्यता दाशेन्द्रोऽपि मत्कृते नाशितः, अथवा केन पुनः सर्वजनशिरसि न्यस्तपदा भगवती भवितव्यता व्यतिक्रम्यते। एवं चिन्तयन् स विप्रकुमारः कथञ्चित् तस्मिन्नेव तरुस्कन्धे दिनमनयत्। सायञ्च तस्मिन् समन्ततः समागच्छतो महाविहगान् बहून् शब्दपूरितदिङ्मुखान् पृथुपक्षवातधूतार्णवोर्म्मिभिः परिचयप्रीत्या कृतप्रत्युद्गमानिव गृध्रान् ददर्श। ततश्च क्रमेण शाखाविलीनानां तेषां पक्षिणां मनुष्यवाचा मिथः संलापं स पत्रसङ्घैः समावृतदेहः समशृणोत्। कश्चित् द्वीपान्तरं कोऽपि गिरिं कश्चित् दिगन्तरं तद्दिनचरणस्थानमेकैकः समकथयत्। तेषाञ्चैको वृद्धगृध्रः समभाषत अहमद्य कनकपुरीं विहर्त्तुमगमं, प्रातश्च तत्रैव सुखं विहर्त्तुं गमिष्यामीति। एवमतर्कितसुधासारसमेन वचसा सः शक्तिदेवः शान्ततापः समचिन्तयत् दिष्ट्या सा नगरी अस्त्येव, तत्प्राप्तौ च अयमेव विहगराजः मम वाहनीकृतः। इत्यालोच्य स शक्तिदेवः शनैरेत्य तस्य सुखसुप्तस्य विहगवरस्य पृष्ठपक्षान्तरे समलीयत। प्रातश्च तेषु अन्येषु पक्षिषु कृतस्ततो गतेषु स पक्षी दर्शितानर्थ्यपक्षपातः विधिरिव दृष्ठास्कन्धे पृष्ठे शक्तिदेवमलक्षितं वहन् क्षणात् तां कनक-

पुरीं चरितुं पुनर्जगाम। तत्रोद्यानान्तरे समुपविष्टे तस्मिन् विहङ्गे स शक्तिदेवः निभृतं तस्य पृष्ठादवातरत्। अपसृत्य च तस्मात् यावत् तत्र भ्राम्यति तावत् पुष्पावचयव्यग्रे द्वे महिले समदृश्येताम्। ते च सहसा तस्य विलोकनेन विस्मिते दृष्ट्वा सोऽब्रवीत् भद्रे! कः प्रदेशोऽयं, के च युवाम्? अथ ते तमूचतुः भद्र! इयं कनकपुरी नाम विद्याधरनगरी, अस्यां चन्द्रप्रभा नाम विद्याधरी वर्त्तते, तस्याश्चावामुद्यानपालिके विजानीहि, तदर्थश्चायं पुष्पावचय इति।

अथ स युवागदत् भद्रे! युवां दयां मे तथा कुरुतं यथा युवयोः स्वामिनीमहम् अद्य पश्यामि। एतदाकर्ण्य ते उभे तं विप्रयुवानं नगर्य्यामन्तः राजमन्दिरमनयताम्। सोऽपि तत्र गत्वा माणिक्यस्तम्भभास्वरं सम्पदां निकेतनमिव सौवर्णभित्ति तत्सदनमद्राक्षीत्। तत्रागतमपूर्वं युवानं दृष्ट्वा सर्वः परिजनः चन्द्रप्रभासकाशं गत्वा न्यवेदयत्। सापि श्रुत्वा अविलम्बितमेव प्रतीहारीमादिश्य तम् अभ्यन्तरं स्वनिकटं प्रावेशयत्। प्रविश्य च सः तां नेत्रानन्ददायिनीं धातुरद्भुतसृष्टिमिव रूपवतीमद्राक्षीत्। सापि तद्दर्शनजनितानन्दा तत्क्षणात् रत्नपर्य्यङ्कात् समुत्थाय स्वयं स्वागतेन समादृतवती। अब्रवीच्च समासीनं कल्याणिन्! कस्त्वमीदृशः? कथं वा मानुषागम्याम् इमां भूमिमनुप्राप्तो भवान्? इत्युक्तस्तया चन्द्रप्रभया स शक्तिदेवः सकुतूहलं निजं देशं जातिं नाम चावेद्य तत्पुरीदर्शनपणात् तां राजकन्यां कनकरेखां प्राप्तुं यथागतं तच्च

सर्वं समवर्णयत्। तदाकर्ण्य किमपि ध्यात्वा दीर्घं निःश्वस्य च चन्द्रप्रभा विजने तमवादीत् सुभग! श्रूयतां किञ्चित् ते वक्ष्यामि। अस्ति अस्यां पुरि शशिखण्डो नाम विद्याधरराजः। वयं चतस्रस्तस्य दुहितरो जाताः। ज्येष्ठा चन्द्रप्रभाहं, द्वितीया चन्द्ररेखा, तृतीया शशिरेखा, चतुर्थी शशिप्रभा। तासाञ्च नः पितृगृहे वर्द्धमानानां द्वितीयादयस्तिस्रः भगिन्यः कदाचित् कन्याव्रतस्थायां मयि स्नातुं मन्दाकिनीमगच्छन्। तत्रारब्धजलक्रीड़ाश्चासिञ्चन् सलिलैर्यौवनदर्पोद्धता अग्रतपसं नाम मुनिम्। स च मुनिः परिक्रुद्धस्ताः शशाप कुकन्यकाः! मर्त्यलोके प्रजायध्वमिति। विदित्वैतत् मम पित्रा तत्र गत्वा प्रसादितः स महर्षिः पृथक् पृथक् शापान्तमुक्त्वा सर्वासामेव तासां दिव्येन विज्ञानेन सह जातिस्मरत्वमादिशत्। ततस्तासु भगिनीषु स्वं स्वं देहं त्यक्त्वा मर्त्यलोकमितासु स मे पिता शोकार्त्तः मह्यमिमां नगरीं दत्त्वा वनमियाय।

अथ कदाचित् इह वसन्तीं मां देवी चण्डिका स्वप्ने किल समादिदेश पुत्रि! मानुषस्ते भर्त्ता भवितेति। तेन च बहून् विद्याधरान् समतिक्रम्य अद्यापि कन्यैवास्मि, अधुना च अद्भुतेनानेन ते आगमनेन वपुषा च वशीकृत्य तुभ्यमेवाहं समर्पिता। तदागामिन्यां चतुर्दश्यां पितरमामन्त्रयितुं भवत्कृते ऋषभाख्यं गिरिं गच्छामि। तत्र चास्यां तिथौ सर्वे विद्याधरा देवं त्र्यम्बकमर्चयितुं दिग्भ्यः समागत्य प्रतिवर्षं मिलन्ति। तातोऽपि तत्रायाति, अतस्तदनुज्ञामवाप्य तूर्णमिहागच्छामि, ततस्त्वं मां परिणेष्यसि।

उत्तिष्ठ तावत् इत्युक्त्वा सा चन्द्रप्रभा विद्याधरोचितैर्भोगैस्तं शक्तिदेवमुपाचरत् । तस्य च तत्र स्थितस्य तथा सुखमभूत् दावानलतप्तस्य यथा सुधाह्रदनिमज्जने । अथागतायां चतुर्दश्यां सा चन्द्रप्रभा तमब्रवीत् अद्याहं भवत्कृते पितरं विज्ञप्तुं गच्छामि, परिजनश्च सर्वः मयैव सह यास्यति, तत्त्वयैकाकिना अत्र मन्दिरे तिष्ठता दिवसद्वयं न दुःखं चिन्त्यं, मध्यमा भूमिः कथञ्चन नारोहणीया । इत्युक्त्वा तं युवानं तदन्तिकन्यस्तचित्ता तच्चिन्तानुगता च सा चन्द्रप्रभा पितुरन्तिकमगात् । शक्तिदेवोऽपि एकाकी तत्र वसन् स्थानस्थानेषु महासमृद्धिसम्पन्नेषु भ्रमंश्च किंस्विदनया विद्याधरसुतया मध्यमभूमावारोहणं निषिद्धमिति जातकौतूहलस्तामेव भूमिमध्यारुरोह । प्रायेण वारितकामा हि मानवानां प्रवृत्तिः । तत्रारुह्य त्रीन् गुप्तान् गर्भगृहान् दृष्ट्वा एकम् उद्घाटितद्वारं तेषां प्रविवेश । प्रविश्य च तत्र सद्रत्नपर्य्यङ्के न्यस्ततूलिके वसनाच्छादितदेहां शयानां कामपि नारीमपश्यत्, यावच्च उत्क्षिप्य पटमीक्षते तावत् परोपकारिनृपतेस्तनयां मृतां वरतनुं दृष्ट्वा समचिन्तयत् किमिदमद्भुतम् ? किमप्रबोधसुप्ता इयं किंवा मे भ्रमः, यस्याः कृते मम प्रवासः सा एव किमिह तिष्ठति, असावत्र गतप्राणा, तत्र देशे च जीवति अम्लानकान्तिश्च दृश्यते, अथवा विधात्रा मम मोहनार्थम् इन्द्रजालमिदं वितन्यते ? एवं संचिन्त्य तस्माच्च निर्गत्य क्रमात् अन्यौ मण्डपौ प्रविश्य तयोरन्तश्च तद्वत् द्वे कन्यके ददर्श । अथ ततोऽपि निर्गतः कौतुक-

ब्रह्मचैता अधस्तादुपविष्ट उत्तमां वापीमपश्यत्। तीरे च तस्या रत्नपर्य्याणमेकं वाजिनं दृष्ट्वा कौतुकात् तत्समीपं गत्वा तमारोढुमैच्छत्। तेन चाश्वेन पादेनाहत्य तस्यामेव वाप्यां निक्षिप्तः। स शक्तिदेवस्तत्र निमग्नः क्षिप्रं वर्द्धमानपुरात् निजादुद्यानदीर्घिकामध्यात् ससम्भ्रमः समुत्तस्थौ। ददर्श चात्मानं जन्मभूमौ वापीजले स्थितं चन्द्रप्रभाविरहदीनं कुमुदेन तुल्यम्। समचिन्तयच्च अहो किमेतत् आश्चर्य्यमायाकरण्डमुज्जृम्भितम्? कष्टं किमपि, केनापि मन्दभाग्योऽस्मि वञ्चितः, अथवा को जानाति कीदृशी भवितव्यता? एवं मनसा वितर्कयन् स शक्तिदेवः स्वं पितृभवनं गत्वा पित्रा चाभिनन्दितः सोत्सवैः स्वजनैः सह दिवसमनयत्। द्वितीये चाह्नि स वहिर्गतस्तदेव घोष्यमाणं सपटहं विप्रो वा क्षत्त्रियो यः कनकपुरीं तत्त्वतो दृष्टवान् स आगच्छतु तस्मै तनयां यौवराज्यसहितां ददाति नृपतिरिति वचनमशृणोत्।

तदाकर्ण्य सः पटहघोषिणः समुपेत्य समभाषत दृष्टा मया कनकपुरीति। तैश्च पूर्ववत् नृपतेरन्तिकं स समनीयत। नृपस्तु तं प्राग्वत् पुनर्वितथभाषिणममन्यत। ततस्तेन मिथ्यात् ब्रवीमि चेत् मम शरीरनिग्रह एवात्र पर्य्याप्तस्तु, अद्य राजपुत्री मां पृच्छतु एवमुदिते राजा तां सुतां सभायामानाययत्। सा तु दृष्टपूर्वं विप्रकुमारं दृष्ट्वा राजानमभ्यधात् पितरेष भूयोऽपि मिथ्यां किञ्चित् वक्ष्यतीति। शक्तिदेवोऽब्रवीत् राजपुत्रि! अहं सत्यं मृषैव वा ब्रवीमि, त्वन्तु वद तत्त्वतः, ममात्र महत् कौतुकं कनक-

पूर्य्यां त्वं पर्य्यङ्के गतजीविता मया दृष्टा, इह तु कथं जीवन्तीं पश्यामि भवतीम्। एवमुक्ता साभिज्ञानं शक्तिदेवेन सा नृपदुहिता कनकरेखा सद्यः पितरमवादीत् तात! सत्यमनेन महात्मना सा नगरी दृष्टा, अचिराच्च एष तत्रस्थाया मे भर्त्ता भविता, तत्र चान्या मम भगिनीश्च तिस्रः परिणेष्यति, करिष्यति च तस्यां पुरि विद्याधराधिराज्यम्। मया तत्रैव स्वा तनुः प्रवेश्या, सा पुरी च मुनिशापादेवाहं भवत्कुले सञ्जातास्मि। यदा कनकपुर्य्यां तव देहमालोक्य कश्चित् मानुषस्तत्त्वभेदं करिष्यति, तदा ते शापविमुक्तिः भविष्यति, स च मानवस्ते पतिरिति पुनः स मुनिः समादिशत्। अहञ्च मर्त्यभावेऽपि जातिस्मरा विज्ञानवती चाभवं तदधुना सिद्धये वैद्याधरं पदं व्रजामि। इत्युक्त्वा सा राजसुता सद्यस्तनुं त्यक्त्वा तिरोदधे। क्षणे च तस्मिन् उदभवत् तुमुलः समाक्रन्दस्तस्मिन् राजसद्मनि। शक्तिदेवस्तु किंकर्त्तव्यविमूढः असम्पूर्णमनोरथः ते द्वे अपि प्रेयस्यौ चिन्तयन् राजभवनात् निर्गत्य क्षणं पर्य्यालोचयत्, अभीष्टं मे अवश्यंभावि कनकरेखया उक्तं तत् किं विषीदामि, सिद्धिश्च सत्त्वमपेक्षते, तस्मात् तेनेव पथा पुनस्तां पुरीं गच्छामि, अवश्यमेव दैवमुपायं विधास्यति। इत्यालोच्य स तस्मात् प्रायात् नह्यसिद्धमनोरथा निवर्त्तन्ते सत्त्ववन्तः। गच्छंश्च चिरेण पुनर्विटङ्कपुरं प्राप्य तं सम्मुखागतं वणिजमपश्यदतर्कयच्च येन सह समुद्रं गतस्य प्रथमं पोतोऽभज्यत स एवायं समुद्रदत्तः दृश्यते, कथं स अम्बुधौ पतितस्ततः समुत्तीर्णः चित्रमिदम् अथवा

अहमेवात्र निदर्शनमिति। अथ यावत् स द्विजस्तमुपगच्छति तावत् स वणिक् तं परिज्ञाय हृष्टः कण्ठे समग्रहीत् अनैषीच्च स्वं निकेतनं अप्राचीच्च कृतातिथ्यः कृतस्नं वृत्तान्तम्। शक्तिदेवः सविस्तरं स्ववृत्तमाख्यत् यथाहं मत्स्यनिगीर्णः प्राक् उत्स्थलद्वीपमगमम्। ततश्च तमपि वणिजं प्रत्यपृच्छत् कथं त्वया अम्बुधिमग्नेन समुत्तीर्णं वर्ण्यतामिति। सोऽब्रवीत् अहमम्बुधिमग्नः दिनत्रयं प्लवन् एकं फलकमात्रमाश्रितः कथमपि आसम्। दैवाच्च तेन पथा एकं वहनमागच्छत् दृष्टम्। ततस्थैश्चाहमाक्रन्दन् दृष्ट्वा कृपया तत्राधिरोपितः स्वमेव पितरं तत्र स्थितं पूर्वं वाणिज्यार्थं द्वीपान्तरागतमपश्यम्। स तु मां चिरात् दृष्ट्वा प्रत्यभिज्ञाय च कृतकण्ठग्रहः रुदन्नपृच्छत् कथमेवमवस्थां गतोऽसीति। अहमब्रुवं तात! चिरेणापि प्रयाते भवति अनायाते विषीदन् कथमपि स्वजनैः परिसान्त्वितः पश्चात् स्वधर्म्म इति वाणिज्ये प्रवृत्तोऽस्मि। तत्प्रसङ्गेन च द्वीपान्तरं गच्छन् दुर्दैवात् वहनभङ्गतः अद्य दिनत्रयमम्बुधौ निमग्नः, सम्प्रति भवद्भिरुद्धृतः। एवमुक्तस्तातो मां सोपालम्भमब्रवीत् पुत्र! कथमीदृशान् प्राणसंशयानारोहसि? धनमस्ति मे प्रभूतम्, अहञ्च तदर्जने स्थितोऽस्मि, पश्य मयेदं काञ्चनपूरितं प्रवहणमानीतम्। एवमुक्त्वा मां समाश्वास्य तेन वहनेन पिता मां विटङ्कपुरेऽस्मिन् स्वं गृहमनयत्।

निशम्यैतत् स शक्तिदेवः विश्रम्य तां त्रियामां परेद्युस्तमभाषत भद्र! पुनर्मया उत्स्थलद्वीपं गन्तव्यं, कस्तत्रो-

पायः कथ्यतामिति । सोऽब्रवीत् मदीया व्यवहारिणस्तवैवाद्य गन्तुं प्रवृत्ताः, तत्त्वं तेषां यानमारुह्य तैः सह तत्र गच्छ । एवमुक्तः स द्विजयुवा यावत् तैः वणिग्भिः सह तत् उत्स्थलद्वीपं गन्तुं प्रवर्त्तते, तावत् दाशपतेः सत्यव्रतस्य सुता दैवात् तं दृष्ट्वा प्रत्यभिज्ञाय च इदमवदन् ब्रह्मन् ! तातेन साकं कनकपुरीं विचिन्वन् इतस्ततस्त्वमगाः अद्य एकः कथमागतो भवान् ? शक्तिदेवोऽब्रवीत् स युष्माकं पिता अम्बुराशौ अम्बुभराकृष्टवहनो बड़वामुखे निपतित इति । तदाकर्ण्य ते दाशपुत्राः परिक्रुद्धा भृत्यान् बभाषिरे दुरात्मानमिमं बध्नीत, अनेनैव स मम पिता निहतः, नो चेत् कथमेकस्मिन् प्रवहणे द्वयोरेकः बड़वामुखे पतेत् द्वितीयो जीवेत्, तस्मादेष नः पितृहन्ता देव्याश्चण्डिकायाः पुरस्तात् प्रभाते अस्माभिः पशूकृतो हन्तव्य इति । एवमुक्ता भृत्यान् ते सत्यव्रतस्य दाशपतेः पुत्राः तं शक्तिदेवं बद्धा भयावहं चण्डिकागृहमनयन् । तत्र चण्डीगृहे बद्धः स शक्तिदेवः स्वजीविते निराशः रात्रौ तां देवीं चण्डिकां व्यजिज्ञपत् भगवति ! वरदे ! सततमेव त्वया दानवदैत्यराक्षसादिनिपीड़ितं जगत् त्रायते, तन्मां शरणागतं सततप्रणतं दस्युहस्तगतं सुदूरागतमभीष्टजनतृष्णाया अकारणहत्याया रक्षस्व । इत्येवं देवीं विज्ञाप्य कथञ्चन जातनिद्रः स्वप्ने कामपि दिव्यां योषितमैक्षत । सा तु सदयाभ्येत्य तमब्रवीत् शक्तिदेव ! मा भैषीः नानिष्टं ते भविता, एषां दाशपुत्राणां स्वसा विन्दुमती नाम कन्यका प्रातस्त्वां वीक्ष्य मन्मथवशंवदा भर्त्तृत्वे अभ्यर्थयिष्यति, तदं

त्वं प्रतिपद्यस्व, सैव त्वां मोचयिष्यति। न च सा दाश-पुत्रीति शङ्कनीया, सा हि दिव्या महिला शापतश्च्युता। एतदाकर्ण्य प्रबुद्धस्य तस्य प्रातर्नेत्रामृतवर्षिणी सा दाश-सुता तदेव देवीगृहमाययौ। अब्रवीच्च एनमभ्येत्य आत्मानं निवेद्य समुत्सुका। सुभग! इतः सङ्कटात् त्वामहं मोच-यिष्यामि, त्वं मे अभीप्सितमङ्गीकुरुष्व, भ्रातॄणां सम्मताश्च वराः बहवः मया प्रत्याख्याताः, त्वयि तु मे भृशं प्रीतिरस्ति, तन्मां परिणय। इत्युक्तः शक्तिदेवः स्वप्नं स्मरन् हृष्ट-स्तथेति प्रत्यपद्यत। तया च मोचितस्तस्मात् सङ्कटात् तां सुन्दरीं परिनिणाय। तस्थौ च तया दिव्यया योषिता पुण्यैकलब्धया सुखमिहैव सह कञ्चित् कालम्।

एकदा हर्म्यपृष्ठगतः धृतगोमांसभारं पथि समायान्तं चाण्डालमेकं दृष्ट्वा स तां प्रियामब्रवीत् प्रिये! पश्य या-स्त्रिजगतां वन्द्या धेनवः, तासां पिशितमयं पापात्मा अश्नाति। तदाकर्ण्य सा बिन्दुमती अवादीत् नाथ! अचिन्त्यमेतत् पापं किमत्रोच्यते, अहं गवामेव प्रभावात् स्वल्पेनाप्यपराधेन दाशकुलेऽस्मिन् जातास्मीति। एव-मुक्तवतीं तामब्रवीत् शक्तिदेवः चित्रमेतत् प्रिये! का त्वं कथमत्र दाशकुले ते जननमिति। अतिनिर्बन्धपृष्टा च सा तमभाषत नाथ! ब्रवीमि गोप्यमप्येतत् यदि मे वचनं करोषि। बाढं करोमि वचनमिति सप्रपथ तेनोक्ते स समवोचत् आर्य्यपुत्र! अस्मिंश्च द्वीपे ते द्वितीया भार्य्या भविता सा चाचिरात् गर्भवती भविष्यति, अष्टमे च गर्भ-मासे त्वया तस्या उदरं पाटयित्वा तस्या गर्भः क्रष्टव्यः,

नैवात्र ते घृणा कार्य्या। एवमुक्ता सा कथमेतदिति विस्मिते तस्मिन् पुनर्दाशेन्द्रपुत्री अवादीत् कान्त ! इत्येतत् त्वया कस्यापि हेतोः कर्त्तव्यं, शृणु मम वचनं, या चाहं यथा च मे दाशकुले जन्म तदपि आकर्ण्य। अहं पूर्वं कापि विद्याधरी आसं साम्प्रतं शापदोषेण मर्त्यलोके परिभ्रष्टास्मि, विद्याधरत्वे दन्तैश्छित्वा वीणासु तन्त्रीः समयोजयत्, तेनैव इह दाशकुले जातास्मि। तदेवं शुष्केण गवां स्नायुना वदनस्य स्पर्शात् ईदृशी मे अधोगतिः, किं वक्तव्यं तन्मांसभक्षणे। इत्येवं वदन्त्यां तस्यां सहसा तस्या भ्राता समेत्य शक्तिदेवमवादीत् द्रुतमुत्तिष्ठ। एष कुतोऽपि आगत्य शूकरः निहताशेषजनः दर्पात् इतोऽभिमुखमायाति। तदाकर्ण्य स शक्तिदेवः ससम्भ्रमं हर्म्यपृष्ठादवतीर्य्य अश्वमेकं समारुह्य तं शूकरं प्रति अधावत्, प्राहरच्च। तस्मिन् वीरेऽभिधावति दृष्ट्वैव सोऽपि वराहः प्रहारसञ्जातव्रणः पलाय्य सत्वरं विलमेकमविशत्। शक्तिदेवोऽपि तमन्विष्यन् तदेव विलं प्रविश्य क्षणात् महदेकम् उद्यानं सहर्म्यं पश्यन् तत्र अद्भुताकृतिं कन्यकामेकां सम्भ्रमेणोपेतः प्रीत्या वनदेवतामिवाद्राक्षीदप्राक्षीच्च कल्याणि ! का त्वं, कथञ्च ते सम्भ्रमः ? तदाकर्ण्य सा सुमुखी तं प्रत्यभाषत।

अस्ति दक्षिणस्या दिशोऽधिपतिर्नृपतिश्चण्डविक्रमो नाम। सुभग ! तस्याहं विन्दुरेखा नाम कन्यका, अकस्माच्च पापः कश्चित् दैत्यश्छलेन मामपहृत्य पितुरालयादत्रानीतवान्। स चाद्य आमिषार्थी वाराहं रूपमास्थाय

बहिर्गतः क्षुधार्त्तः केनचिद् वीरेण शक्त्या विद्धः प्रविश्यै-
वात्र पञ्चतामगमत्। तददूषितकौमारा चाहम्। तदा-
कर्ण्य शक्तिदेवस्तामुवाच कस्तर्हि सम्भ्रमः? नृपात्मजे!
मयैव स दुरात्मा शूकरो निहतः। ततः सा अवदत् ब्रूहि
तर्हि को भवानिति। स चोवाच अहं शक्तिदेवो नाम
द्विजातिः। तया चोक्तं तर्हि त्वमेव मे पतिः। सोऽपि
वीरस्तथेति तामादाय विलद्वारेण निर्गत्य दाशपतेरालय-
मेत्य भार्य्यायै विन्दुमत्यै तन्निवेद्य तदनुमत्या तां विन्दु-
रेखामुदवहत्। ततस्तयोर्भार्य्ययोरेका विन्दुरेखा गर्भ-
मधत्त। अष्टमे च गर्भमासे आगते विन्दुमती रहसि तं
शक्तिदेवमुपेत्य अवोचत् वीर! स्मर तत् प्रतिश्रुतं यत्त्वया
मह्यं, सोऽयं द्वितीयभार्य्यायास्ते अष्टमो गर्भमासः समुप-
स्थितः, तद् गत्वा अस्या गर्भं विपाट्य उदरमाहर, अनति-
क्रमणीयं हि अङ्गीकृतं महात्मनाम्। एवमुक्तस्तया शक्ति-
देवः स्नेहकृपाकुलः प्रतिज्ञापरतन्त्रश्च दोलाचलचित्तवृत्तिः
क्षणं निरुत्तर एवासीत् अगमच्च जातोद्वेगस्तां विन्दुरेखाम्।
सापि खिन्नमागतं तं पतिं विलोक्याब्रवीत् नाथ! विषण्णो-
ऽसि कथं, वेद्मि अहं विन्दुमत्या यदर्थं मत्सकाशं प्रेषितः,
तच्च त्वया अवश्यं कार्य्यं, हेतुरत्र विशेषोऽस्ति; नाथ्यत्र
नैष्ठुर्य्यं, तस्मात् मा घृणां कार्षीः, तथाहि अत्र देवदत्तक-
थामेतां शृणु कथयामि।

पुरासीत् हरिदत्तो नाम कश्चित् द्विजः कम्बुकाख्ये
पुरे। तस्य च श्रीमतः पुत्रः देवदत्तो नाम शैशवे कृत-
विद्योऽपि द्यूतैकव्यसनी अभूत्। स एकदा द्यूतहारित-

वस्त्रादिः पितृगृहं गन्तुमशक्तः शून्यमेकं देवगृहमविशत्। अपश्यच्च तत्र जालपादाभिधं साधितानेककामं जपन्तं महाव्रतं कञ्चित् पुरुषम्। शनैश्च तमुपेत्य कृतप्रणतिर्मौनेन च समाप्तव्रतेन स्वागतेन अभ्यनन्द्यत। चणाच्च तत्र स्थितस्तेन कातर्य्यदर्शिना पृष्टः स्वस्य व्यसनजनितमापदं शशंस। ततः स व्रती तं देवदत्तमगदत्। वत्स! व्यसनिनां पर्य्याप्तं धनं भुवि न विद्यते। यदि विपदं हातुं तेऽभिलाषस्तदा मद्वचनं शृणु, हे सुलक्षण! मया विद्याधरत्वप्राप्तार्थं यत् परिकरः कृतः, त्वमपि तत् साधय। ममादेशस्तव पालनीयस्तर्हि ते विपदो नश्यन्ति। एवमुक्तस्तेन महाव्रतिना स देवदत्तस्तथेति प्रतिश्रुत्य तत्पार्श्वे स्थितिमकरोत्। अपरेद्युश्च स महाव्रती श्मशानान्ते गत्वा वटतरोरधस्तात् रजन्यां पूजां विधाय परमान्नं निवेद्य दिक्षु बलीन् विक्षिप्य च समापितार्चनविधिस्तं पार्श्ववर्त्तिनं विप्रमब्रवीत् वत्स! एवमेव त्वया विद्युत्प्रभे! गृहाणेमां पूजामिति वदता प्रत्यहमर्चनं कार्य्यम्। ततश्चावयोः सिद्धिर्ध्रुवा न चान्यथा इति। एवमुपदिश्य स व्रती तेन समं स्वालयं गतवान्। देवदत्तोऽपि प्रत्यहं तथैव तस्य तयोरधस्तात् गत्वा यथोपदिष्टमर्चनमकरोत्। एकदा च सपर्य्यान्ते तस्य पश्यत एवाकस्मात् कापि दिव्या द्विधाभूतात् तस्मात् तरोर्विनिष्क्रम्य एहि भद्र! अस्मत्स्वामिनी त्वां ब्रवीति इति वदन्ती तं तस्यैव तरोरभ्यन्तरे प्रवेशयामास। स तु तत्र प्रविश्य दिव्यं मणिमयं गृहं तत्रस्थाञ्च काञ्चित् पर्य्यङ्कनिषण्णां वराङ्गीमैक्षत। यावच्च स विग्रहवती अस्मत्सिद्धिरियमिति

ध्यायति तावत् सा कृतातिथिसत्कारा वराङ्गना समुत्थाय रणिताभरणैरङ्गैर्विहितस्वागतवचनैरिव, तं स्वपर्य्यङ्के स्वयं समुपावेशयत् अवादीच्च महाभाग! अहं यक्षपते रत्नवर्षस्य कन्यका विद्युत्प्रभा नाम। एष च जालपादो महाव्रती मामाराधयत्, तस्यार्थसिद्धिदायिनी अस्मि, त्वन्तु मे प्राणानामपि प्रभुः, तस्मात् अनुरागिण्या मे पाणिग्रहं कुरु। इत्युक्तस्तया स देवदत्तस्तथेति तद्वचनात् तां परिणीय कञ्चित् कालं तत्र स्थित्वा तस्याञ्च गर्भवत्यां पुनरागमिष्या-मीत्युक्त्वा तं महाव्रतिनं प्रति प्रतस्थे। कथयामास च तस्मै स्ववृत्तान्तं सभयम्। सोऽपि महाव्रती स्वसिद्धये तमवादीत् भद्र! भद्रं कृतं त्वया, परन्तु गत्वा अस्या यक्षतनयाया उदरं विपाट्य शीघ्रं गर्भं समानय। इत्युक्त्वा स्मारयित्वा च पूर्वाङ्गीकारं तेन प्रेषितः स देवदत्तस्तां प्रियामगात् यावच्च स तद्भावनया दुर्मनास्तत्र तिष्ठति तावत् सा यक्षी विद्युत्प्रभा स्वयमभाषत आर्य्यपुत्र! विषीदसि किमर्थं वि-दितं मया यदादिष्टं ते जालपादेन मम गर्भपाटनं तदेतत् उदरं पाटयित्वा गर्भमाकर्ष, न चेत् स्वयं करोम्येतत् कार्य्यमत्र किञ्चन विद्यते। तथा एवमुक्तोऽपि स देवदत्त-स्तत् कर्तुं यदा नाशकत् तदा सा स्वयं पाटितोदरा गर्भ-माकृष्टवती तच्चाकृष्टं पुरतस्त्यक्त्वा तं पतिमभाषत भोक्तु-र्विद्याधरत्वस्य कारणमयं गृह्यताम्। अहं हि विद्याधरी शापात् यक्षी जाता, अयञ्च ममेदृक् शापान्तः, जातिस्मरा चास्मि। इदानीमहं स्वं धाम व्रजामि, भविता चावयोः पुनः सङ्गमः। इत्याभाष्य सा विद्युत्प्रभा क्वापि विलय-

मनात्। देवदत्तोऽपि तं गर्भमादाय खिन्नमनास्तस्य व्रतिनो जालपादस्य सकाशमायात्। उपानयत् तस्मै तं गर्भं सिद्धिप्रदायिनम्। साधवो हि दुर्लभे वस्तुनि नालब्धरितं व्रजन्ति। सोऽपि महाव्रती तत् गर्भमांसं पाटयित्वा भैरवार्च्चार्थं तं देवदत्तं व्यसृजत्। अथ यावत् दत्तवलिरागत्य स देवदत्तः पश्यति तावत् तेन व्रतिना अशेषं तन्मांसं भक्षितम्। कथं त्वया सर्वं भुक्तमिति वदत एवास्य देवदत्तस्य स जालपादः जिह्मो विद्याधरो भूत्वा सद्यः खमुदपतत्। तस्मिंश्च तथा भूते स देवदत्तः समचिन्तयत् कष्टं किमेतत् अनेनाहं पापमतिना विप्रलब्धोऽस्मि, अथवा अतिमार्द्दवं कस्य न परिभूतये? तदेतस्यापकारस्य कथमपि प्रतिक्रियाः कुर्य्यां विद्याधरीभूतः, नात्र वेतालसाधनादन्यः कश्चिदुपायोऽस्ति इति निश्चित्य स रात्रौ पितृवनमगमत्। तत्र च तरुमूले नरकलेवरे वेतालमाहूय पूजयित्वा नृमांसवलितर्पणमकार्षीत् यावच्च स अतृप्यन्तम् अन्यानयनासहं तं वेतालं तर्पयिष्यन् स्वमांसानि छेत्तुमुपक्रमते, तावत् स वेतालस्तं महासत्त्वमभाषत महापुरुष! तवानेन सत्त्वेन तुष्टोऽस्मि मा साहसं कार्षीः, किन्तेऽभीष्टं वद साधयामि तत्। इत्युक्तवचनं वेतालं स वीरः समभ्यधात् भद्र! विश्वस्तवञ्चको जालपादो नाम व्रती यत्र स्थितः, तं विद्याधरनिवासं तन्निग्रहाय मां नय। तथेत्युक्तवता तेन वेतालेन स्कन्धे आरोप्य क्षणात् गगनमार्गेण स देवदत्तः वैद्याधरपदं नीतस्तं जालपादं प्रासादवर्त्तिनं विद्याधरराजत्वदृप्तं रत्नासनाधिष्ठितं तामेव लब्धविद्याधरीपदां विद्याधरीमग्नि-

च्छन्तीं भार्य्यां कर्तुं तत्तद्युक्तिभिः प्रतारयन्तमद्राक्षीत्। दृष्ट्वैव स वेतालारूढ़ः क्षुभ्यद्विद्युत्प्रभानेत्रानन्दनो युवा तमभ्यधावत्। जालपादोऽपि अकस्मात् तथागतं दृष्ट्वा त्रासात् विच्युतासिरासमात् भुवि पपात। देवदत्तस्तु तं खड्गं लब्ध्वापि तं नावधीत् भीतेषु रिपुष्वपि सानुकम्पा हि महान्तः। तञ्च वेतालं तं जिघांसुं दृष्ट्वा स वारयन् निजगाद भद्र! पाषण्डिनानेन हतेनापि किम्? स्थाप्यतामयं भुवि नीत्वा स्वनिलये, भूयोऽपि तत्रैव पापः कापालिकस्तिष्ठतु। एवं वदतस्तस्य तत्क्षणात् दिवः अवतीर्य्य देवी भवानी प्रत्यक्षपरिदृश्यमाना तं प्रणतं देवदत्तमब्रवीत् पुत्र! तुष्टास्मि ते अनन्यसदृशेन सत्त्वोत्कर्षेण तन्मया, विद्याधरराजत्वं मयाद्य ते दत्तम्। एवमुक्त्वा सा अर्पितविद्या देवी सद्यस्तिरोभूत्। जालपादस्तु विभ्रष्टसिद्धिस्तेन वेतालेन भूतले नीत्वा तथैव निहितः न ह्यधर्म्मश्चिरमृद्धये? देवदत्तस्तु तया विद्युत्प्रभया समेतः प्राप्तविद्याधराधिपत्यः सुखमवात्सीत्।

कथामेतामुक्त्वा सा विन्दुरेखा मृदुमधुरभाषिणी सत्वरा पुनस्तं अग्निदेवमवादीत् नाथ! एवमीदृशानि कार्य्याणि सन्ति, तदिदं मे गर्भं विन्दुमत्या कथितं गर्भं विपाटय, नात्र शोकः कार्य्यः। एवमभिदधत्यां तस्यां पापशङ्किते च अग्निदेवे सहसा गगनादुदभूद् भारती अग्निदेव! निःशङ्कं त्वमस्या गर्भो विपाट्यतां, कण्ठे च मुष्ट्या गृहीतोऽसौ गर्भस्ते हस्तगः खड्गो भविष्यतीति। तां दिव्यां गिरं श्रुत्वा स अग्निदेवः आशु तस्या गर्भं पाटितोदरं कृत्वा समा-

तस्य पाणिना कण्ठे समग्रहीत्। गृहीतमात्रश्च स तस्य हस्तगतः खड्गः सिद्धेः पाश इव समुपस्थितः । ततः स विप्रः सहसा विद्याधरः समजनि, विन्दुरेखा च तत्क्षणमदर्शन-मगात्। ततश्च स विद्याधरीभूतः शक्तिदेवः दाशपुरीं गत्वा विन्दुमत्यै यथावृत्तमकथयत्। ततश्च सा प्राह नाथ ! वयं विद्याधरपतेः सुतास्तिस्रो भगिन्यः कनकपुरीतः शाप-तश्च्युताः । एका कनकरेखा, यस्यास्त्वया वर्द्धमानपुरे शापान्तो दृष्टः, सा तु तां स्वां पुरीं गता, द्वितीया विन्दु-रेखा, तस्याश्च शापान्तस्त्वया कृतः, तृतीया चाहम्, अधुना च मे शापान्तः भविता, मया चाद्य स्वा पुरी गन्तव्या, नाथ ! तत्रास्माकं विद्याधरशरीराणि सन्ति। चन्द्रप्रभा हि अस्माकं ज्यायसी भगिनी तत्रैव स्थिता, तत् त्वमपि खड्ग-सिद्धिप्रभावात् आशु तत्रायाहि, अस्मांश्च चतस्रः भार्य्याः सं-प्राप्य वनस्थेन पित्रा समर्पितास्तस्यां पुरि राज्यं करिष्यसि। इत्येवं निजतत्त्वमुक्तवत्या विन्दुमत्या सह स शक्तिदेवः प्राप्त-विद्याधरशरीरः गगनपथा तां कनकपुरीं प्रतस्थे। तस्याञ्च यानि पर्य्यङ्कतलनिषण्णानि मृतशरीराणि दृष्टानि तान्यनु-प्रविष्टाः कनकरेखाद्याः निजप्रियाः प्रणतास्तिस्रः। तासां ज्येष्ठां रचितमङ्गलां चन्द्रप्रभाञ्च चिरदर्शनोत्सुकया दृष्ट्या पिबन्तीमिवाद्राक्षीत्। अथ नियोगव्यापृतपरिजनगणैरभि-नन्द्यमानो वासगृहगतस्तया चन्द्रप्रभया जगदे सुभग ! या तत्र वर्द्धमानपुरे कनकरेखा नाम राजसुता दृष्टा, सैवेयं चन्द्ररेखा नाम मम भगिनी। या च दाशाधिपपुत्री विन्दु-मती उत्स्थलद्वीपे प्राप्ता सेयं शशिरेखा नाम द्वितीया मम

स्वसा। या तु तत्र विन्दुरेखाख्या राजनन्दिनी दानवाहृता त्वया परिणीता, सेयं शशिप्रभाभिधाना मम तृतीया भगिनी। तदिदानीमस्मत्पितुरन्तिकमेहि, तेन प्रत्ताश्च अस्मान् यथाविधि परिणयस्व।

एवं तस्यामभिदधत्यां चन्द्रप्रभायां स शक्तिदेवस्ताभिश्चतसृभिः सहितस्तत्पितुः सकाशं वनान्तमगमत्। स च विद्याधरराजश्चरणनताभिस्ताभिरावेदितो दिव्यवाक्प्रेरितश्च युगपत् तस्मै शक्तिदेवाय हृष्टस्ताश्चतस्र एव कन्यकाः प्रादात्। व्यतरच्च तदनु कनकपुर्य्यां विद्याधराधिराज्यं स्वाश्च समस्ता विद्याः। अधित च समुदितेन स्वनाम्ना विद्याधरेषु स्वेषु तमेव शक्तिदेवम्। ततश्च अन्यो न जेष्यति त्वामति प्रभाववन्तं केवलमेको वत्सेश्वरात् यश्चक्रवर्त्ती उदेष्यति नरवाहनदत्तो नाम, स एव तव विभुर्भविता, तस्यैव नतिं विदध्या इति उपदिश्य महाप्रभावः स आत्म तपोवनात् तं सप्रियतमं निजराजधानीं सत्कृत्य प्राहिणोत्। अथ स शक्तिवेगो राजा भूत्वा स्ववधूभिः समं कनकपुरीं विद्याधरलोक वैजयन्तीं गत्वा प्रविवेश। तस्याञ्च तिष्ठन् असौ परमप्रेयसीभिस्ताभिश्चतसृभिः समं विद्याधरैश्वर्य्यसुखमलभत।

इत्येवं स्वचरितमाख्याय शक्तिवेगो वाग्मी भूयो वत्सेश्वरमवादीत् चन्द्रवंशावतंस! मां शक्तिवेगमुपागतं विद्धि, उत्पन्नस्य भाविनः निजचक्रवर्त्तिनः भवत्सुतस्य पादयुगलदर्शनार्थिनम्। तदेवं मयापि मनुजेन शङ्करप्रसादात् विद्याधराधिपतित्वं लब्धं, व्रजाम्यधुना स्वं धाम, दृष्टश्च नः

प्रभुः, साम्प्रतमभङ्गुरं मङ्गलं तेऽस्तु । एवमभिधाय कृता-ञ्जलौ प्रामाणिके तस्मिन्नुत्पतिते मृगाङ्ककान्तौ द्यां प्रवि-विष्टे वत्सेश्वरोऽपि देवीभ्यां सह स बालतनयः मन्त्रिभिः परिवृतः कामपि सम्मदमयीमवस्थामभजत ।

इति षड्विंशस्तरङ्गः ।

समाप्तोऽयं चतुर्दारिका नाम

पञ्चमो लम्बकः ।

---

## मदनमञ्चुका नामकः षष्ठो लम्बकः ।

### अथ सप्तविंशस्तरङ्गः ।

कुमारो नरवाहनदत्तः पितुः प्रयत्नात् निजैर्गुणैर्दिने दिने परिवर्द्धमानः नवमे वर्षे मन्त्रिकुमारैः सार्द्धं विद्यानु-शीलनरतः क्रमेण अस्त्रविद्यामभ्यस्तवान् । अत्रान्तरे वित-स्तानदीतीरे तक्षशिलानाम्नि नगरे कलिङ्गदत्तो नाम क-श्चित् जैनो नरपतिरासीत् । स तु राजधर्मं विहाय सततं प्रजाः स्वावलम्बितधर्ममशिक्षयत् । अस्मिन्नेव नगरे वित-स्तदत्तो नाम कोऽपि प्रभूतधनसम्पन्नो वणिक् वसति स्म । स तु नितरामतिथिप्रिय इति तत्पुत्रो रत्नदत्तो जनकं पापिनमिति निरन्तरमकुत्सयत् । कदाचित् असौ वणिक्-पुत्रः पित्रा निन्दाकारणमनुयुक्तः सासूयमभ्यभात् तात !

त्रयीधर्मं विहाय केवलं भिक्षुकसेवातत्परेण भवता महान् अधर्मः सञ्चीयते इति ।

वणिक् पुत्रेणैवमुक्तः प्रत्यभाषत वत्स ! धर्मो हि नानाप्रकारतया संविभक्तः तेषु प्रकारेषु अहिंसैव परमो धर्म इति मन्यन्ते सुधियः, अहं तदनुसारेणैव प्रवर्त्ते, तत् कथं मामधार्म्मिकं मन्यसे ? रत्नदत्तः पितुरेवमुपदेशेनापि असन्तुष्टस्तथैव पितरमनिन्दत् । पिता पुत्रेणैवं विनिन्दितः सातिशयमसहमानः राजानं कलिङ्गदत्तं व्यजिज्ञपत । तदाकर्ण्य राजा तेन तस्य वणिक्सुतस्य स्वमतविरुद्धव्यवहारेण भृशं सञ्जातकोपः तस्य बधदण्डमादिदेश । वितस्तदत्तेन तु पुत्रस्य बधादेशमाकर्ण्य सभयं तन्निवारणाय पुनरावेदितो नरपतिरभ्यभाषत साधो ! अस्य मासद्वयम् अवसरो दीयते, यदि एतावत्सु कालेषु असौ प्रकृतिस्थः धर्मचर्य्यासु प्रवर्त्तते तर्हि मत्समीपमानेतव्यः क्षन्तव्यश्चेति । एवमभिधाय वणिक्सुते परित्यक्ते तत्पिता पुत्रं गृहीत्वा स्वं गृहमगमत् ।

रत्नदत्तस्तु राजाज्ञया नितरां त्रस्तः आसन्नमृत्युचिन्तया त्यक्ताहारनिन्द्रः दिने दिने अतितरां कार्श्यमापन्नः । क्रमेण अतीते मासद्वये वितस्तदत्तः स्वतनयं राजान्तिकमनयत । नृपतिर्वणिक्सुतं तथा कृशमालोक्य अवादीत् कथं त्वमेवं कृशः संवृत्तः ? तव आहारं न रहितमकार्षम् । वणिक्पुत्रः समब्रवीत् राजन् ! यावत् ममोपरि बधदण्डादेशः कृतः ततः प्रभृति तच्चिन्तयैव दिवारजन्यतिपातात् इत्थम्भूतः कृशोऽस्मि संवृत्तः । राजाब्रवीत् ज्ञातं तर्हि,

मृत्योर्भयानकत्वं कौशलेनैतदुपदेशार्थं मया तवोपरि वध-दण्डादेशः पातितः सम्प्रति समालोचय तावत् मृत्युः तवेव सर्वेषामेव भयावहः, तद्हिंसादेर्लोकोपकारकात् अन्यः महान् धर्म्मः कोऽस्ति ? मृत्युभयप्रदर्शनेन त्वां प्रति धर्म्मोपदेशं कृतवानस्मि, बुद्धिमन्तो हि मरणादतित्रासमापन्ना मोक्षधर्म्मं कामयन्ते। तस्मात् त्वमिदानीं मोक्षार्थिनं पितरं मा निन्दीः।

एतदाकर्ण्य वणिक्सुतः समभाषत महीपते! अहमिदानीं श्रीमत एतादृशं धर्म्मोपदेशमाकर्ण्य कृतार्थतामगमम्। मोक्षलाभे च मे महान् आग्रहः समभूत्। नृपते! तदेतस्य धर्म्मस्योपयोगिनो विषयान् उपदेष्टुमिदानीमर्हसि येन सत्वरं चरितार्थो भविष्यामीति। राजा तथा तेनाभिहितः सम्प्रीतः कदाचित् नगरोत्सवे वणिक्सुतस्य तस्य हस्ते तैलपूर्णमेकं पात्रं दत्त्वा समभ्यधात् वत्स! एतदादाय नगरं परिभ्रम्यागच्छ, पश्य तावत् विन्दुमात्रमपि तैलमस्मात् यथा न निपतेत् तथा अवहितेन भवितव्यं, यदि पतेत् तदा एते त्वत्पृष्ठगामिनो राजपुरुषास्त्वां तत्क्षणमेव विनाशयेयुः। एवमुपदिश्य राज्ञा सम्प्रेषितो वणिक्तनयः नगरं भ्रमितुमुपचक्रमे, राजपुरुषाश्च तत्पश्चात् निष्कोषासिपाणयः प्रतस्थिरे। क्रमेणासौ वणिक्पुत्रः कृच्छ्रेण नगरं परिभ्रम्य राजान्तिकमुपाजगाम।

अथ नृपतिर्यथादिष्टं विना तैलपातमागतं तं वीक्ष्य अवादीत् वत्स! भ्रमता त्वया नगरे लोकानामुत्सवदर्शना-

र्विनामितस्ततः सञ्चारो दृष्टः कश्चित्? सोऽब्रवीत् देव! तैलबिन्दुपाते राजपुरुषाणां निष्कोषासिपातभयात् किमपि न श्रुतं नापि दृष्टम्। तदाकर्ण्य भूपतिरवोचत् वत्स! त्वं तैलपातं प्रति यादृगेकाग्रचित्तः किमपि नाद्राक्षीः, नाप्यश्रौषीः, तथा समवधानेन परमात्मानमनुचिन्तय, एकाग्रतया बाह्यवस्तुभ्यः स्वान्तर्निवर्त्तनात् तत्त्वज्ञानं जायते, तत्त्वदर्शी तु पुनः कर्म्मजालेन न जडीक्रियते, तदेषः संक्षेपेण ते मोक्षोपायः प्रदर्शितः। एवमभिधाय राजा तं वणिक्सुतं स्वं निवेशनं संप्रेष्य सहर्षं गृहाभ्यन्तरमगच्छत्।

कलिङ्गदत्तस्य नरपतेः महिषी तारादत्ता नाम अतिगुणवती रूपवती च। राजा तया सार्द्धं परमसुखेनैव कालमतिवाहयामास।

कदाचित् कस्मिंश्चित् महोत्सवे देवसभायां सवर्वा अप्सरसः विना सुरभिदत्तां समागताः समालोक्य देवपतिरिन्द्रः प्रणिधानेनापश्यत् यथा सुरभिदत्ता नन्दनाभ्यन्तरे विद्याधरसम्भोगेन मत्ताधितिष्ठति। तदवलोक्य कुपितेन तेन चिन्तितं अाः कष्टं कथमेते एतादृशाः दुराचाराः कामपरतन्त्राः यत् सुखासङ्गेन मत्ता अस्मानपि न स्मरन्ति? अत्र च विद्याधरस्य तथापराधो न सम्भवेत् यतः सः तस्या अप्सरस एव रूपेणाकृष्ट इत्यमसदृशमाचरति नूनम्। पुरा यावत् पुराणपुरुषः यावतामेव वस्तूनां सारभूतं तिलशः संगृह्य तिलोत्तमां निर्म्ममे, तावत् तां वीक्ष्य त्रिलोक्यां को न मोहमुपागतः? विश्वामित्रस्य

महर्षिर्मेनकामवलोक्य किं तपसो न निवहते ? ययातिरपि नरपतिः शर्मिष्ठाया रूपविमोहितः किं जरायां न न्यपतत् ? तस्मात् मन्ये विद्याधरस्य कश्चिदत्र दोषो नास्तीति ।

एवमालोच्य देवेन्द्रः स्त्रिय एवानर्थमूलानीति विचार्य्य सुरभिदत्तामभिशशाप पापीयसि ! अनेन दोषेण त्वं मर्त्त्यलोके अयोनिजा जन्मपरिग्रहं कुरु, तत्र च स्थिता यदा स्वर्गोचितकर्त्तव्यकर्म्माणि अनुष्ठास्यसि तदैव शापमोचस्ते भवितेति ।

अत्रान्तरे च राजमहिषी तारादत्ता ऋतुमती आसीत् । सा तु अप्सराः शापभ्रष्टा तस्या एव उदरे समुदपद्यत । तस्मिंश्च समये तारादत्ताया हृदये कश्चित् स्वप्नदर्शन इव भावः समजनि यथा किमपि तेजः गगनादागत्य मदुदरे प्रविशतीति । अनन्तर तया तद्वृत्तान्तमावेदितो नरपतिः कलिङ्गदत्तः सहर्षमब्रवीत् प्रिये ! युज्यते खल्वेतत्, स्वर्गिणो हि शापच्युताः मानुषलोके जन्म लभन्ते । मन्ये कश्चित् देवयोनिर्वा देवो वा देव्या गर्भे जननार्थं प्रविष्टः, शुभाशुभकर्म्माण्येव जन्तूनां संसारप्राप्तिबीजानि । राज्ञी प्रत्यभाषत देव ! सत्यम् अहमप्येतदनुकारिणीं कामपि कथयामि श्रूयताम् ।

पुरा किल कोशलाख्ये जनपदे समभूत् धर्म्मदत्तो नाम भूपतिः । तस्य नागश्रीर्नाम पतिव्रता महिषी आसीत् । गच्छता कालेनाहमेव तस्य कन्या अजनिषि । शैशवे च वर्त्तमानायां मयि मज्जननी अकस्मात् पूर्वजातिं स्मृत्वा

पितरं मे समवादीत् देव! अद्य सहसा मम पूर्वजननं स्मृतिपथमायातं परं तस्मे नातिप्रीतिकरम् एतस्य प्रकटन-मात्र एव मे मृत्युर्भविता तदेतदनुस्मृत्य अहमतीव विषाद-मुपगतास्मि। राजोवाच प्रिये! तवेव ममापि सहसा पूर्वजातिरनुस्मृता, तत् त्वयाग्रे एव पूर्ववृत्तमनुवर्णय, पश्चादहमपि वर्णयिष्यामि स्ववृत्तम्। कोऽतिवर्त्तेत दैवम्। एवमभिहिता सा देवी समभाषत, नाथ! भव तैवमनुरुद्धया अवश्यमेव मया वक्तव्यं शृणु तावत्। अस्मि न्नेव जनपदे अस्ति माधवदत्तो नाम कश्चित् द्विजातिः। अहं तस्य गृहे दासी आसम्। देवदासो नाम मम पति रपि कस्यचित् वणिजो निकेतने दासत्वमकरोत। आवाम् अवस्थोचितमेकं कुटीरं निर्म्माय तत्रैव वसावः स्म। अथ स्वयाव च स्वात् स्वात् स्वामिगृहात् सिद्धान्नमानीय। घटो कलसः मार्ज्जनो अहं पतिश्च एते एव षट् गृहाधि वासिन आसन् नान्यत् किमपि, यदि च किञ्चिदधिक वस्त्रादिकं कदाचित् लब्धमभूत् तदपि ततक्षणात् दुर्गतेभ्यः प्रायच्छाव। तदेवं परमेण सुखेनैवावां कालमत्यवाहयाव।

अथैकदा दुर्भिक्षे सञ्जाते स्वामिगृहे यदावाभ्यामन्न प्रापिव तदपि अल्पमात्रकमभवत्। किं कुर्वः, तेनैव उभौ कथमपि जीवनमतिवाहयन्तौ नितरां कृशौ समभूव। अत्रान्तरे कश्चित् बुभुक्षुः क्लान्ततरः द्विज. अस्मद्भवनं आहारकाल एव अतिथिः समाययौ। कथमतिथिमभोज-यित्वा भुञ्जावहे इति विविच्य प्राणसंशयेऽपि अतिथये तत् सर्व्वमावयोराहारद्रव्यं समर्पयाव: स्म। तेन च अतिथौ

सपरितोषं भुक्त्वा प्रस्थिते पतिर्मम क्षुधार्त्तस्तत्क्षणमेव प्राणान् जहौ। समनन्तरञ्च पतिं श्मशानं नीत्वा चितां ज्वलन्तीमधिरोह्य अहमपि तेनैव सह तामेव ज्वलच्चिता-मारूढ़वत्यस्मि। अथ राजवंशे समुत्पद्य तव महिषी संवृत्तास्मीति।

अथ राजा धर्म्मदत्तः समब्रवीत् प्रिये! अहमेव स तव पूर्व्वजन्मपतिः। अहमेव देवदासो नाम कस्यचित् वणिजो गेहे भृत्यत्वमकार्षम्। अद्यैतत् सर्व्वं स्मृतिपथमारूढ़म्। एवमभिधाय उभावपि स्वर्गमीयतुः। तदा च मदीया मातृस्वसा मामादाय स्वं निलयमगात्। कौमारे च वर्त्त-मानां मां कदाचित् सा मम मातृभगिनी गृहागतस्य कस्यचित् अतिथेः परिचर्य्यार्थं नियुक्तवती। मया च यथोचितं यथासामर्थ्यञ्च परिचर्य्यायां कृतायां सोऽतिथिः सम्यक् परितोषमापन्नः मह्यं वरं दत्त्वा प्रायात्,तत्प्रभावेणैवं अहं भवन्तं पतिमवाप, तस्मात् धर्म्म एव लोकमङ्गल-हेतुरिति।

एवं देव्याभिहितः कलिङ्गदत्तः निजगाद देवि! स्वल्पेऽपि धर्म्मे सम्यगाचरिते तत्प्रभावेण भूरिशः फला-वाप्तिर्दृष्टा, तदत्र सप्तानां ब्राह्मणानामाख्यानं कथ्यते श्रूयताम्।

अस्ति कुण्डिनं नाम नगरम्। तत्रासीत् कश्चिदुपा-ध्यायः। तस्य सप्त द्विजकुमाराः शिष्या आसन्। उपा-ध्यायः दुर्भिक्षविक्लवः कदाचित् श्वशुरं धेनुमर्थयितुं शिष्यान् प्राहिणोत्। शिष्या उपाध्यायस्य श्वशुरभवने समागत्य

धेनुमभ्यर्थितवन्तः। श्वशुरोऽपि जामातुरभ्यर्थनया एकां धेनुं तेभ्यः प्रायच्छत्, परं कस्मैचिदपि एकामन्नमुष्टिं न ददौ। शिष्यास्तु अगत्या धेनुमादाय सद्य एव प्रस्थिताः अर्द्धपथ एव क्षुत्पिपासापरिक्लान्ता सर्व एव धरातले निपेतुः। तस्माच्च प्रदेशादुपाध्यायगृहस्य अतिदूरवर्त्तितया तेषां प्राणत्राणं नितराम् असाध्यमिति समालोच्य सर्व एव तां धेनुं विनाश्य जीवनं दिरक्षिषवस्तन्मांसेन प्राणयात्रामकुर्वन्। अथ भुक्तावशिष्टन्तु मांसं गृहीत्वा गुरोः सकाशमभ्येत्य प्रणम्य च यथावृत्तमस्मै न्यवेदयन्। उपाध्यायस्तु तेषां सत्यवचसा सम्प्रीतः कृतापधान् अपि तान् क्षमयामास। सत्यवचनस्य प्रभावाच्च ते सापराधा अपि निस्तारमापुः, जातिस्मराश्च बभूवुः। देवि! इत्थं विशुद्धेन सङ्कल्पवारिणा सिक्तेषु पुण्यबीजेषु अङ्कुरितेषु शुभानि फलानि अवश्यमेव जायन्ते, वैपरीत्ये वैपरीत्यमेव। अत्र चाख्यानमिदं कथयामि श्रूयताम्।

पुरा किल कश्चित् ब्राह्मणः कश्चन चाण्डालश्च गङ्गातटे अनशनव्रतमाचरन्तौ तपश्चेरतुः। एकदासौ ब्राह्मणः क्षुधानिपीड़ितः कस्यचित् मत्स्यजीविनः सकाशात् मत्स्यं भिक्षित्वा भक्षयन् व्यचिन्तयत् अहो! एते खलु धीवरा एव धरण्यां धन्याः, ये प्रतिदिनममृतोपमं शफरमांसं यथेच्छं भुञ्जते। चाण्डालस्तु तान् धीवरान् दृष्ट्वा पापीयसो मत्वा निमीलितलोचनोऽभवत्। अथ गच्छता कालेन तयोरनशनेन निधनमापन्नयोः ब्राह्मणः श्वभिर्भक्षितः। चाण्डालस्तु गङ्गाजले विलीन आसीत्। अनन्तरमनयो-

रैको ब्राह्मणः कैवर्त्तकुले जन्म परिग्रहन् जातिस्मरतया निरन्तरमनुतापानलदग्धः कालमत्यवाहयत्। द्वितीयस्तु चाण्डालः गङ्गातीरे जातिस्मरो जारकुलोत्पन्नः सततं परमेणानन्दसन्दोहेन सुचिरमतिष्ठत्। तस्मात् यस्य यादृश-मन्तरं स तदनुरूपमेव फलं भजते।.

राजा कलिङ्गदत्तः राजमहिषीमेवमुक्ता पुनरभ्यभाषत देवि! अवन्तिदेशे उज्जयिनी नाम या नगरी अस्ति तस्याममरसिंहो नाम राजासीत्। स खलु बाहुवीर्य्ये अस्त्रवेदे च नितरां पटीयान्। देशेषु कोऽपि तस्य प्रति-द्वन्द्वी नासीदिति सोऽन्वतप्यत। कदाचित् नृपतेराशय-वित् महामन्त्री अमरगुप्तो नाम देवं रहसि व्यजिज्ञपत् प्रभो! श्रीमद्भिर्दोर्दण्डास्त्रवेददर्पेण प्रतियोद्धारमनासा-दितवद्भिरनुदिनमनुतप्यते मया विज्ञातम्। परं भवादृशा-मेतदसदृशं मन्यामहे वयम्। प्रभूतबलशालिनोऽपि शत्रुभिः परिभूयन्ते, अतः सर्वदा अहङ्कारं परिहृत्य सन्तोष्टव्यम्। यदि देवस्य शस्त्रशिक्षानैपुण्यं दर्शयितुमिष्टं तर्हि अटव्यां गत्वा मृगया कार्य्या। मृगया हि राज्ञां व्यायामाद्यर्थं सेव्यैव। मृगयया श्रमसहत्वमभ्यस्यते, अश्र-मशीला हि नैव कदाचित् युद्धादिके वीरकार्य्ये समर्था भवन्ति। अपरञ्च वन्या दुष्टजन्तवः पृथ्वीं जनशून्यां चिकी-र्षन्ति, तस्मात् तेषां बधार्थमपि मृगया विधेया। समधिका च मृगया नितरां दोषमावहति, तथा च बहवो नृपाः क्षयं नीताः श्रूयन्ते।

राजा विक्रमसिंहः मन्त्रिणस्तादृशं हितोपदेशमाकर्ण्य

तथैव प्रत्यपद्यत। निर्जगाम च प्रत्यूषे मृगयार्थं बद्धपरिकरः ससज्जः नगरात्। ददर्श च पथि कस्मिंश्चित् देवसद्मनि द्वौ पुरुषौ किमपि मन्त्रयतः। अनन्तरं काननं पर्य्यटन् इतस्ततो मृगमनुसरन् श्रान्तचेताः पुनः स्वनगरीमुज्जयिनीं प्रति निवर्त्तमानस्तथैव तस्मिन् देवनिलये तावेव पुरुषौ किमपि मन्त्रयन्तौ दृष्ट्वा व्यचिन्तयत् अहो! कावेतौ? कथं वा विजनेऽस्मिन् किमुद्दिश्य मन्त्रयतः? मन्ये इमौ कस्यापि भूपतेः गूढ़चरौ। एवं विचार्य्य प्रतीहारमुखेन तावाहूय आनीय चापृच्छत् कौ युवाम्? किं मन्त्रयथः, निःशङ्कं ब्रूथ इति। इत्थं महीपतिनाभिहिते तयोरेकः अभयदानेन निर्भीकः समब्रवीत् देव! श्रूयताम्।

आसीदत्र नगरे करभको नाम कश्चित् विप्रः। तेन सुपुत्रकामेन अग्निदेवे उपासिते अहमजनि। दुर्भाग्यात् शैशव एव वर्त्तमानस्य मम पितरौ पञ्चतामायातौ, अनाथश्चाहमासम्। विद्यारसास्वादमलभमानेन च मया स्वधर्मं विहाय द्यूतशस्त्रविद्ययोरनुशीलने प्रवृत्तम्। क्रमेणातीतशैशवः कदाचित् शरनिक्षेपशिक्षार्थं वनं प्रवेष्टुकामः येन पथा नगरात् निरगच्छम् तेनैव पथा काचित् रमणी यानमारुह्य सहचरीभिः कतिभिः सह नगरात् निरगमत्। क्षणे चास्मिन् सहसा कोऽपि करीन्द्रः भग्नशृङ्खलः कस्मादपि स्थानात् समागत्य तां ललनामभ्यधावत्। तदवलोक्य च सर्वे तदनुयायिनो भयात् आत्मरक्षणार्थिनः पलायाञ्चक्रिरे। अहन्तु तदवलोक्य चिन्ताकुलः पर्य्यालोचयं हा! असारचेतस इमे तपस्विनीं वधूमनाथां परिहाय पलायिताः,

तदहमेतां मृत्युमुखादस्मात् परिरक्षामि, आपदर्थैतादृशः परित्राणे अबलायाः वैमुख्यमसाराणां लक्षणं, तज्जीवनात् मरणमेव वरम्। एवमभिधाय हुङ्कारपूर्वं तं हस्तिनमभ्यधावम्। मयात्यन्तं निर्भत्सितश्च गजपतिस्तां महिलां परित्यज्य मां प्रत्याचक्राम। अहञ्च सचीत्कारं धावन् हस्तिनं समतिक्रामन् पर्णभूयिष्ठस्य कस्यचित् भग्नतरोः शाखायां समाच्छादितकलेवरः स्थितिमकरवम्। स्तम्बेरमस्तु क्रोधात् द्विगुणरयः समापत्य तस्य वृक्षस्य शाखाः समचूर्णयितुं प्रववृते। अत्रान्तरे अलक्षितगतिना मया तस्या एव कामिन्याः सन्निधिः समासादितः। अनन्तरं भयविह्वलां तां सीमन्तिनीमनामयमपृच्छम्। सा च मद्दर्शनसमाश्वासिता सलज्जमवादीत् भद्र! मम तावत् कुशलं दूरे तिष्ठतु, भवान् पुनः मम परित्राणार्थमुद्यतः अक्षतशरीरः प्रत्यागतः एतदेव परमं मङ्गलम्। अद्य भवन्तमेव पतिं वृणे, आगच्छतु भवान् मम पश्चात्। गते च कियति अध्वनि सुयोगवशेन मिलितावावां कमपि देशं प्रति प्रस्थास्यावहे। अहञ्च तामन्वसरम्। अतीते च कियति क्षणे तस्याः पतिः स्वदलपरिवृतस्तामन्वेषयितुमुदचलत्। अहन्तु तया दत्तं किञ्चित् पाथेयमवलम्ब्य कथञ्चित् प्राणान् धारयन् सुगुप्तं तामन्वगच्छन् व्यलोकयं सा रमणी हस्त्याक्रमणजं गात्रवेदनं छलमाकलय्य पत्ये स्वाङ्गस्पर्शमपि कर्तुं न प्रायच्छत्। क्रमेण च वयं लोहनगरवर्त्तिनि तदीये भर्त्तृगृहे उपतिष्ठाम। गृहं गतेषु च तेषु अहं तस्यैव नगरस्य बाह्ये क्वचित् देवालयमाश्रित्य तं दिवसमत्यवाहयम्।

अस्मिन्नेवावसरे अयं मे ब्राह्मणो मित्रं मामुपस्थितः। चिरं प्राक्तनं प्रथयमवबुध्यते, तथाहि प्रथमेनैव दर्शनेनावां नितरामार्द्रौ समाश्वस्तौ चाभूव। अनन्तरं मया मदीये तादृशे रहस्ये आवेदिते सखायं परिचिततया तस्या एव कामिन्या ननन्द्रा मदभीष्टं साधयितुं प्रत्यजानात्। गत्वा च तदानीमेव तस्याः सकाशं सर्वं सुगुप्तमावेदयत्। सापि चतुरा परेद्यवि तां भ्रातृजायां पुंवेशेन सुगूढ़ं देवालयं समानीय मित्रं मम भ्रातृवधूवेशधारिणं कृत्वा पुनर्नगरमनैषीत्। अहन्तु तया पुरुषवेशिन्या सह मिलितः तस्मात् प्रदेशात् सद्य एव नगरीमुज्जयिनीं प्रति प्रातिष्ठे। सा च ननन्द्रा तां रात्रिं भ्रातृगृहेऽवस्थाय तेन मित्रेण सह पूर्वसङ्केतमनुसृत्य मया सह मिलिता। भूपते ! इत्यमावां हे तरुण्यौ समधिगम्य सभयौ विजनेऽस्मिन् देवालये वसतिमकार्ष्व। अद्य तु कथमनयोर्योगक्षेमविधिः सम्पद्येतेति मन्त्रयन्तौ देवस्य दृष्टिपथे पतितौ। ततश्च प्रतीहारिणा समाहूतो देवसकाशमासाद्य यथावृत्तं सर्वमावेदितवानस्मि, तदत्र देवः प्रमाणमिति।

नृपतिर्विक्रमसेनः तस्य ब्राह्मणस्य तत् सर्वं वृत्तमाकर्ण्य तावब्रवीत् प्रीतोऽस्मि वः, निर्भया एवात्र नगर्यां वसथ। यथेष्टमर्थञ्च वः प्रदास्यामि। एवमभिधाय नृपतिना गृहं गत्वा प्रचुरेषु अर्थेषु प्रहितेषु ते तत्रैवोज्जयिन्यां राजप्रसादेन निर्भयाः सुखेन अवसन्। तदेवमध्यवसायमवलम्ब्य सर्वं कार्य्यं साध्यते, साहससम्पन्ने बुद्धिमति च जने राजप्रसादः सर्वथा सम्भवेत्, कर्म्मबलेनैव शुभाशुभं सङ्घटते च,

इह परत्र च शुभदं कविभिरुच्यते। तदत्र सुलोचनाया आख्यानं श्रुतिपथमारूढं कथयामि शृणु।

आसीत् पुरा चित्रकूटाख्ये पर्वते परमरूपवान् युवा कश्चित् नरपतिः सुषेणो नाम। स तु तस्मिन्नेव महीध्रे एकमतिरमणीयमुद्यानं प्रस्तुतमकरोत्, येन दिव्यं नन्दन काननमपि विस्मार्य्यते। तत्रोपवने कमलसन्तानसुशोभिता रत्नालङ्कृतसोपानराजिविराजिता कापि दीर्घिका निर्मिता। राजा अनुरूपाया महिष्या अलाभात् निरन्तरमेव तदीये तटे अवस्थानमकरोत्। कदाचित् सुरसुन्दरी रम्भा यदृच्छया विहायसा गच्छन्ती तत्र कानने परिवर्त्तमानं सुषेणमद्राक्षीत्, व्यचिन्तयच्च तदीयेन रूपराशिना विमोहिता, अहो! न दृष्टपूर्वः कदाप्येवंविधो रूपवान्। एकाकी अयं विचरति किमसौ सहचरीविरहितः? एवमालोच्य कुतूहलाक्रान्ता तस्मिन्नेवोद्याने अवततार, धृतमानवरूपा च तत्समीपमुपतस्थे। नृपस्तु तादृशीं दिव्ययोषितं सम्मुखीनामवलोक्य सविस्मयः क्षणमचिन्तयत् अहो! केयं? न कदापीयं मानवी, तथात्वे पदधूलिर्नेत्रनिमेषश्च स्यात्, तदेषा कापि देवी भवितुमर्हति। सहसा परिचयप्रश्नश्च साहसमवलम्बते, न जाने विरक्ता वा स्यात् पलायेत वा। इत्थमालोचयन् नृपतिस्तदन्तिकमाययौ। प्रस्तुताश्चोभयोः परस्परमालापाः।

अथोभौ परस्परं तथानुरक्तौ यथा कण्ठाश्लेषमासाद्य तस्मिन्नेव उपवने विहारमारेभाते। रम्भा तु सुषेणसंसर्गमासाद्य स्वावासभूतां सुरपुरीमपि विसस्मार, सुषुवे

च क्रमेण तत्सहयोगेन गर्भवती काममपि परमसुन्दरीं कन्यकाम् ।

अनन्तरं सा राजानमभ्यधात् नाथ ! अहं रम्भा नाम सुरयोषित् । मम कोऽपि शापोऽभूत्, येन त्वत्सहयोगमवाप्तवती अस्मि, अधुना स शापोऽन्तर्हितः, त्वां प्रत्यनुरक्ताया मम गर्भे आसीत्, तदिमां कन्यकां यत्नेन पालयस्व, ममायं स्वर्गप्रस्थानकाल एवमभिधाय सा पश्यत एव नृपतेरन्तर्दधे ।

अथ राजा सुषेणस्तस्याः सुरनार्य्या वियोगार्त्तः प्राणान् विहातुमुद्यतोऽपि मन्त्रिणामाश्वासवचोभिः कथञ्चित् धैर्य्यमवलम्ब्य भाविनः पुनःसङ्गमस्य प्रत्याशया तां कन्यां जग्राह, चकार च तस्याः सुलोचनेति नामधेयम् । सुलोचनान्तु क्रमेणातीतशैशवां तस्मिन्नेवोद्याने विचरन्तीं यदृच्छया वत्सो नाम मुनिः पर्य्यटन्नपश्यत् । दृष्ट्वैवासौ तथा वीतरागोऽपि रागपरतन्त्रः समचिन्तयत् अहो अपूर्वमिदं रूपं, यद्यहमेतां नावाप्नुयां तर्हि तपश्चर्य्या मे विफला । इति विचिन्त्य स तपोधनः क्रमेण तस्या नयनयोरतिथिरभवत् । सापि सुलोचना साक्षसूत्रकमण्डलुं मुनिं निरीक्ष्य सहसा अनुरागवती कोऽयं शान्तात्मा कमनीयाकृतिश्चेति वितर्क्य तं महर्षिं नयनोत्पलमालया संवेष्ट्य प्रणतिमकरोत् । स तु मदनबाणव्यथाकुल एव तामाशिषा समवर्द्धयत् अचिरेणैव सदृशं पतिमाप्नुहीति ।

अथ सुलोचना मुनियुवकस्य असामान्यरूपदर्शनेन विगलितलज्जा सादरमब्रवीत् भगवन् ! यदि भवतां वर-

इतनं न परिहासजल्पितं तर्हि मत्पितुः सकाशं गत्वा मां प्रार्थयस्व। मुनिकुमारस्तु कन्याया अभिप्रायं विदित्वा प्रथमं तदीयकुलपरिचयं गृहीत्वा पश्चात् तत्पितुः समीपमभ्येत्य तां सुलोचनां ययाचे। नृपतिः कन्याप्रार्थिनं तं तपोधनसुतानं परमरूपगुणभूषितमालोक्य सविनयमवादीत् भगवन्! मदीयेयं कन्या रम्भाभिधानाया अप्सरसः सम्भूता। रम्भायाः शापमोचावसरे उक्तिरियं यदस्या विवाहाय परतः सुरलोके तया सह मम समागमो भवितेति। तदेनां परिणाय्य कथं मया दिवि उपस्थेयमिति कथयित्वा कन्यायाः मम पाणिं गृह्णातु भवानिति।

एतद्वाक्यमाकर्ण्य मुनिसुतः क्षणमचिन्तयत् पुरा किल मुनयस्तपोबलेन किमिव न कृतवन्तः? विश्वामित्रो महर्षिस्त्रिशङ्कुं यथा स्वर्गमनयत् अहमपि तथैनं नरेश्वरं स्वतपसा सुरलोकं नेष्यामि। एवमालोच्य देववृन्द! अयं नृपः सुषेणः मदीयेन तपोऽंशेन सशरीरः स्वर्गं गत्वा रम्भासंसर्गमवाप्नोतु इति संसदि अनौचैरभिहिते तथेति अन्तरीक्षचारिणी वागुदचरत्। श्रुत्वैतत् नृपतिः सुषेणः वत्साय मुनिकुमाराय सुलोचनां सम्प्रदाय त्रिदिवमगादापश्च देवशरीरः सह रम्भया सुखसन्तानसम्भोगम्।

तदेवं कुमारि! राजा सुषेणः कन्यागुणेनैव कृतार्थतामवाप। भवादृशी सुतेषु च तादृशः कन्यकाः समुत्पद्यन्ते, कन्येयं तव सम्भवतैव क्वापि सुरकामिनी शापात् प्रच्युता भवतः कुले समुत्पन्नेति निःसंशयं प्रतिभाति तदेनां कन्यां मत्वा न शोचितुमर्हसीति।

नरपतिः कलिङ्गदत्तः वृद्धमुखात् कथामिमामाकर्ण्य चिन्तां परिहाय सहर्षं कन्यां कलिङ्गसेनाभिधामकार्षीत्। सा तु कन्या सखीभिः परिवृता प्रतिदिनमवर्द्धत शशिकलेव। विजहार च कस्मिंचित् प्रासादोपरितले कस्मिंश्चिद्वा उपवनमण्डपे सविलासम्। एकदा हर्म्यतले विहरन्तीं तां सोमप्रभा नाम मयदानवकुमारी गगनतलसञ्चारिणी समपश्यत्, व्यतर्कयच्च तस्या रूपमाधुरीमवलोक्य सविस्मयम् अहो! केयं न चन्द्रमाः, स हि दिवसे न शोभते, रतिरपि नेयं, यतो बालिका। तदेनां मन्ये कापि देवी शापात् विच्युता महीतलमवतीर्णेति। अपरञ्च यथास्यां दृष्टायां मनो नितरामनुरज्यते तत् सम्भावयामि पूर्वस्मिन् जन्मनि अनया सह मम सख्यमासीदिति तदिमामहं स्वयंवरसखीं करोमीति निश्चित्य तस्या भीतिपरिहाराय अलक्षितं नभोमण्डलादवतीर्य्य मानवकन्यावेशेन तत्समीपमुपययौ। कलिङ्गसेना तु तादृशीममानुषाकृतिं बालां सहसोपस्थितामालोक्य अभ्युत्थाय सादरं सखीभावेन समालिलिङ्ग, पप्रच्छ च तदीयं नाम गोत्रञ्च। सोमप्रभा तु क्षणं तिष्ठ सर्वमभिधास्ये इत्युक्त्वा परस्परं पाणिना पाणिमावेष्ट्य सख्यमकरोत्।

अथ सोमप्रभा समवोचत् सखि! त्वं राजबाला, राजबालकैः सह ते सख्यं सम्भाव्यते। परं तदतीव क्लेशबहुलम्, अल्पेनैवापराधेन ते कुप्यन्ति, अत्रेमामाख्यायिकां ब्रवीमि आकर्ण्यताम्।

आसीत् पुष्करावत्यां नगर्य्यां गूढसेनो नाम नृपतिः।

तस्यैक एव पुत्रः। एकपुत्रो राजा पुत्रेण कृतमन्यायाचरणमपि सेहे, न कदापि तं प्रति चुकोप। एकदासौ राजतनयः स्वोपवने भ्रमन् कञ्चित् वणिक्सुतं रूपसम्पदृश्यात्मनः सदृशं विलोक्य तेन सह सौहृद्यमकरोत्। ततः प्रभृति तयोरन्योन्यं प्रति तथानुरक्तं मनः, यथा मुहूर्त्तमपि परस्परमदर्शने नितरां व्याकुलतामाप। मनो हि जन्मान्तरसङ्गमवबुध्यते।

अथ गच्छता कालेन विवाहसम्बन्धे समुपस्थिते राजपुत्रस्तेन मित्रेण सह करिपोतमारुह्य ससैन्यः अहिच्छत्रं नाम नगरं प्रतस्थे। इक्षुमत्यास्तीरे सायंकालस्य उपस्थितेस्तत्र ते सर्वे अवतस्थिरे। क्रमेण भगवति चन्द्रमसि समुदिते तावुभौ सुहृदौ सुरापानेन मत्तावभूताम्। राजपुत्रस्तु स्वधात्र्या अनुरुध्यमानः गल्पं कर्तुं प्रारेभे, परं कथाप्रारम्भ एव श्रान्ततया मत्ततया च अग्रत एव निद्रामवाप। ततश्च धात्री राजलोकाश्च सर्वे क्रमशः श्रान्ततया निद्राभिभूता आसन्। केवलमेको वणिक्सुतो जजागार। क्षणे चास्मिन् राजपुत्रमुद्दिश्य खेचरीणां संलापाः प्रावर्त्तन्त। एकाब्रवीत् यतोऽसौ पापीयान् कथाशेषमकृत्वा निद्रां गतः, तस्मादहमेनं शपामि यथा प्रातरसौ यं हारं लप्स्यते तस्मिन् कण्ठधृत एव मरिष्यति। द्वितीयोवाच अस्मात् शापादयं समुत्तीर्णोऽपि पथि यं फलिनम् आम्रतरुं द्रक्ष्यति, तस्य फलभक्षणेऽपि प्राणान् विहास्यति। तृतीयावोचत् एतस्मादपि कथञ्चित् यदि मोक्षः स्यात् तदा विवाहात् परं गृहं प्रविशत एवास्य छादभङ्गः पृष्ठे पति-

ष्यति। चतुर्थी समभ्यधात् यद्यसौ अस्या विपदोऽपि सम्-
त्तीर्णः स्यात् तदा वासगृहं प्रविश्य यत् शतखण्डः क्रतं
करिष्यति तत्र यदि कोऽपि जीवेति वाक्यं शतवारं न वदेत्
तदा तत्क्षणमेव मृत्युमवाप्स्यति। अपरञ्च यदि कश्चित्
कथामिमां श्रुत्वा अस्य रक्षार्थे एतत् सर्वं सद्यः प्रकाशयेत्
सोऽपि कालकवले पतिष्यति। एवमभिधाय सर्वास्तूष्णी-
मासन्।

वणिक्तनयः आकाशचारिणीं वाचमिमामाकर्ण्य
सञ्जाततदाकर्णोत्कण्ठः समचिन्तयत हा! मित्रं मे यां कथा-
मारब्धवत् देव्यस्तां आत्मलक्षिता अतिष्ठन्। परं तस्या-
नसमाप्तायामस्य निद्राभिभवात् एनमभिशापेनायोजयन्।
का गतिः? मित्रमस्या आपदः कथमुद्धरेयम्? यदि नोद्धर्तुं
शक्नुयां तदा जीवनं वृथैव। तद् यावत् प्राणसमं बन्धुम-
वश्यमेव युक्त्या रक्षिष्यामि। यदि वृत्तान्तमिमं व्यक्तीकुर्यां
तदाहमपि मरिष्यामि। इत्थं समनुचिन्तयन्नसौ परमेणा-
सुखेनैव रजनीमयापयत्। प्रभात एव राजपुत्रः निद्रां
विहाय बन्धुना सह अध्वंशेषं गन्तुमारेभे। गच्छंश्च
पथि सहसा भूतलपतितं हारमेकं दृष्ट्वा ग्रहीतुकामं दृष्ट्वा
वणिक्सुतो निवार्य्यावदत् मित्र! नायं हारः, ध्रुवमेषा
माया, नो चेत् कथमग्रयायिनः सैनिकपुरुषा न प्रापुः,
तदेषः त्यज्यताम्। तदाकर्ण्य राजसुतः हारं त्यक्त्वा
प्रतस्थे।

अथ कियन्तमध्वानमतिक्रम्य फलवन्तमेकमाम्रतरु-
मालोक्य राजपुत्रे तत्फलं जिघृक्षति वणिजस्तनयोऽसौ

तथैव न्यवारयत्। ततः श्वशुरगृहे समुत्तीर्णस्य तस्य विवाहव्यापारे निर्वृत्ते राजकुमारो यदा गृहं प्रविशति तदासौ वणिक्सुतस्तथैव तं प्रवेष्टुं न्यवारयत्। इत्थमापन्नयात् समुत्तीर्णो राजपुत्रो वासगृहं यदा प्रविशति तदा वणिक्तनयोऽपि अलक्षितनेव तत्र प्रविवेश। अथ यावत् नृपात्मजः शय्यायां शयित्वैव शतकृत्वः क्षुतमकरोत् तावदसौ बन्धुरपि जीवेति शतवारमुच्चार्य्य तं मृत्युमुखान्मोचयित्वा आत्मानं कृतार्थममन्यत। ततः सम्प्रहृष्टो यावत् गृहादस्मात् निरगमत् तावत् नृपसुतस्तं दृष्ट्वा ईर्ष्यापरश्चुक्रोध आदिदेश च दौवारिकं तद्बन्धनाय। द्वारपालोऽपि तथादिष्टस्तां रात्रिं वणिक्सुतं बन्धनागारे न्यक्षिपत्। प्रत्यूषसि वध्यभूमिं नीयमानः स वणिगात्मजः समवोचत् घातकाः! प्रथमं मां राजपुत्रसकाशं नय, तत्सकाशे मे वक्तव्यमस्ति किञ्चित्, ततो मां हनिष्यथ।

अथ दौवारिकस्तां तस्य कथां राजपुत्राय व्यजिज्ञपत्। राजपुत्रोऽसम्मतोऽपि मन्त्रिभिरनुबध्यमानः तं साक्षात् कर्तुमाज्ञापयत्। वणिक्पुत्रस्तथा बद्धः सम्मुखे स्थित्वा यावत् सर्वं वृत्तमवर्णयत् तावत् राजपुत्रः तत्क्षणं गृहपातघटनया तत्सर्वं सत्यं मत्वा सम्प्रीतः बन्धुं बन्धनान्मोचयित्वा तत्रैव परिणाय्य स्वां राजधानीं प्रत्यागमत्। तदानीं वणिक्सुतं प्रतिष्ठमानं सर्वे प्रशशंसुः।

सखि! राजपुत्रा इत्थं मत्तहस्तिन इव सततमुच्छृङ्खला हिताहितं नावबुध्यन्ते। वेताला इव ते हसन्त एव प्राणिनो विहिंसन्ति। तस्मात् तैः सार्द्धं प्रणयो न कार्य्य एव।

एतदाकर्ण्य कलिङ्गसेना सस्नेहं सोमप्रभां सम्बोध्याब्रवीत् सखि! एवं तर्हि ते पिशाचाः, न राजपुत्राः, किन्तु राजकन्या नेष्टव्यः, तदहं राजपुत्राणां चरितं सम्यगवबुद्धवती, कदापि तैः सङ्गं न करिष्यामि, त्वं निश्चिन्ता भव। सोमप्रभा कलिङ्गसेनायाः कथामाकर्ण्य प्रीता आकाशयानेन स्वस्थानं प्रस्थिता।

कलिङ्गसेना सख्यास्तादृशीमद्भुतगतिमालक्ष्य विस्मिता व्यतर्कयत् सखीयं मे किं सिद्धाङ्गना, वा सुरनारी, आहोस्वित् विद्याधरी? अनेन गगनसञ्चारिणास्याः दिव्यत्वं स्पष्टमवगम्यते। स्वर्गवासिन्यः प्रायशः एवं भूमण्डले विचरन्ति, सख्यं बध्नन्ति च मानुषीषु। श्रुतं मया, पुरा सुरलोकवासिनी अरुन्धती पृथुराजस्य कन्यया सौहृद्यमकार्षीत्। तेन च प्रणयेन पृथुराजः सुरभिं कामधेनुं त्रिदिवात् भुवमानिनाय, जगाम च। तस्याः क्षीरपानेन स्वर्गच्युतोऽपि पुनः स्वर्गम्। तदहमपि धन्या, यानया सखीभावेनानुगृहीतेति चिन्तयन्ती रात्रिमत्यावाहयत्। सोमप्रभापि सुरलोकमिता पुनः कलिङ्गसेनादर्शनोत्सुका कष्टेनैव शर्वरीमनयत्।

इति अष्टाविंशस्तरङ्गः।

—०—

# अथ अनविंशस्तरङ्गः।

---

प्रत्यूषस्यैव सोमप्रभा स्वां करण्डिकामादाय आकाशचारेण कलिङ्गसेनान्तिकमागतवती। कलिङ्गसेना तां तथागतामालोक्य सानन्दगद्गदं पार्श्ववर्त्तिनी कण्ठे धृत्वावदत् सखि! तव वदनशशाङ्कमदृष्ट्वा त्रियामा मे शतयामेव आयामवती प्रतिभाति स्म। तदहं मन्ये त्वया सह मे जन्मान्तरीणं सख्यमस्तीति। सखि! तत् यदि तव विदितं स्यात् तदाख्याय मामाप्यायस्व। सोमप्रभा चख्यौ सखि! यदात्थ, तत् सम्भाव्यते, परमहमपि तन्नाज्ञासिष मजातिस्मरा।

अनन्तरं कलिङ्गसेना सविश्रम्भं सोमप्रभामपृच्छत् सखि! कस्तव पिता? कञ्च वंशमलङ्कृतवत्यसि? किमाख्या वासि? करण्डिका चेयं किमर्थं विधृता? किं वात्र वस्तु विद्यते? एतत्सर्वं श्रोतुं परं कौतूहलं मे वर्त्तते इति। सोमप्रभा सख्याः सप्रणयः विश्रम्भं वचनमाकर्ण्य सर्वमाख्यातुं प्रचक्रमे सखि! त्रिलोकीतलविदिते दानवेन्द्रे मये असुरभावं विहाय भगवन्तं शरणमापन्ने विश्वस्मात् भगवान् नारायणस्तमभयदानेन कृतार्थमकरोत्। तदा प्रभृति दितिजभियासौ विन्ध्याद्रेरभ्यन्तरे यन्मायागृहं निर्म्मितवान् तस्य निर्म्माणकौशलस्य वैचित्र्यात् असुराः कथमपि तत् प्रवेष्टुं नाशक्नुवन्। स एवास्माकं

पिता, द्वे कन्ये तस्य, ज्येष्ठा स्वयंप्रभा, ब्रह्मचारिणी एव पितृसदने न्यवसत्, अहन्तु कनिष्ठा सोमप्रभा नाम पित्रा कुवेरपुत्राय नलकूवराय सम्प्रदत्ता। या चेयं करण्डिका दृश्यते, अस्यां पितुः शिक्षितानि मायायन्त्राणि मे सन्ति, इयञ्च त्वां दर्शयितुं मयात्रानीता। एवमभिधाय करण्डिकामुद्‌घाट्य विविधानि कौतुकानि प्रदर्श्य सख्याश्चित्तविनोदं कृत्वा करण्डिकां सखीसविधे संरक्ष्य स्वस्थानं प्रतस्थे।

तानि च विविधानि कौतुकानि दृष्ट्वा कलिङ्गसेना क्षुत्पिपासाविवर्जिता तस्मिन् दिने किमपि भोज्यं नाभक्षयत्। जननी तारादत्ता कन्याया आहारविमुखतां दृष्ट्वा पीड़ां सम्भाव्य आनन्दनामानं कमपि वैद्यकमानीय कन्यामदर्शयत्। वैद्यस्तु दृष्ट्वा समाचचक्षे देवि! नास्या रोगो लक्ष्यते, आनन्देनैव क्षुधा तृष्णा च विलुप्ता, तस्मादेनां समुचितस्नानं भोजनञ्च कारय, एवमवस्था विलयमेष्यतीति।

अथापरेद्युः सोमप्रभा कलिङ्गसेनान्तिकमागत्य न्यगदत् सखि! पतिर्मे सम्मुखेनावयोः सख्यवृत्तमाकर्ण्य सातिशयं सन्तोषमवाप, आदिदेश च त्वत्सकाशं मामागन्तुम्। अधुना त्वमपि पित्रोरनुमतिं गृहीत्वा मया सह निर्भयं विहरस्व।

कलिङ्गसेना सोमप्रभां हस्ते गृहीत्वा पित्रोः सकाशमभ्येत्य तस्याः परिचयमदात्। पितरौ च सोमप्रभामालोक्य सानन्दमाचख्यतुः वत्से! अद्य प्रभृति वत्सा कलिङ्गसेना तव हस्ते समर्पिता। युवां यथेच्छविहारेण

चित्तविनोदं कुरुतम्। कलिङ्गसेना पित्रोरभ्यनुज्ञामासाद्य चरितार्था करण्डिकासहचारिण्या सोमप्रभया सह उद्यानं विचरितुमगात्। सोमप्रभा तस्याः करण्डिकाया यन्त्रमयं यक्षमेकं निःसार्य्य तत्याज। स तु यक्षः क्षणेन विहायसा गत्वा, मुक्तारत्नं स्वर्णकमलञ्चानिनाय। सोमप्रभा तेन पूजोपहारेण बुद्धदेवमपूपुजत्।

ततश्च राजदम्पती त वृत्तान्तमाकर्ण्य स्वयमुद्यानं समुपस्थितौ त यन्त्रवृत्तान्तमपृच्छताम्। सोमप्रभा समाचख्यौ राजन्! यन्त्रस्यास्य विचित्रं वृत्तं, पुरा मम पिता यानि विविधानि मायायन्त्राणि निर्म्ममे तेषु पृथिवीप्रदानयन्त्रं तोययन्त्रं तेजोमययन्त्रं वातयन्त्रम् आकाशयन्त्रम् अन्यच्च कतिपययन्त्रं मह्यं शिक्षितानि। प्रथमस्यायं प्रभावः यत् द्वारि रुद्धायां न कोऽपि तामुद्घाटयितुं शक्नोति। द्वितीयेन यन्त्रेण निर्जीवः सजीव इव दृश्यते। तृतीयात् यन्त्रात् ज्वाला निर्गच्छति। चतुर्थेन वातयन्त्रेण सर्वत्र गन्तुं शक्यते। पञ्चमेन आकाशयन्त्रेण आलापः स्पष्टीक्रियते अन्यच्च यत् चक्रयन्त्रमस्ति तत्पितैव मे जानाति नान्यः। एतत् सर्वमाकर्ण्य राजा राज्ञी च परं विस्मयमासाद्य भवनमाययतुः।

अत्रान्तरे सोमप्रभापि यन्त्रबलेन कलिङ्गसेनामादाय अन्तरीक्षगत्या समुत्थाय क्षणेन विन्ध्याद्रेरभ्यन्तरवर्त्तिनि पितृनिकेतने ज्येष्ठायाः स्वयंप्रभायाः सकाशमाजगाम। कलिङ्गसेना स्वयंप्रभाया रूपसम्पदा विमोहिता सोमप्रभा चोभे स्वयम्प्रभां प्रणेमतुः। स्वयंप्रभा तु यथोचितसमादरेण

उभाभ्यां विविधानि सुमिष्टफलानि आहारार्थमददात्। सोमप्रभा कलिङ्गसेनां सम्बोध्य समब्रवीत् सखि! फलमिदम् अभ्यवहारयितुं त्वमिहानीता, फले चास्मिन् भक्षिते शरीरे जरा न प्रविशेत्। एतत् श्रुत्वा कलिङ्गसेना तानि फलानि यत्नेन बुभुजे। फलेषु च भुक्तेषु शरीरमस्या अमृतरससिक्तमिवाभूत्। अनन्तरं सा सम्मुखवर्त्तिनि मनोरमे उद्याने विहर्त्तुमगमत्, भ्रमन्ती च नानाविधानि अद्भुतानि वस्तूनि अवलोक्य विस्मयाम्बुधौ न्यमज्जत्। अथ सोमप्रभा कलिङ्गसेनां तत्रशिलायां संरक्ष्य स्वस्थानं प्रचलिता। कलिङ्गसेना मयदानवसदने गत्वा यानि यानि अद्भुतानि दृष्टानि तानि सर्वाणि पित्रोः सकाशे समवर्णयत्।

इत्थमुभयोः प्रतिदिनमवर्द्धत सख्यम्। एकदा सोमप्रभा कलिङ्गसेनामाह सखि! यावत् ते परिणयः न सम्पद्यते, तावत् त्वया सह मे सख्यं स्थास्यति, ततश्च यदा त्वं भर्तृभवनं गमिष्यसि तदा त्वया सह मे पुनः साक्षात्कारो न भविता। परन्तु विशेषमविविच्य कमपि भर्तृत्वेन न वृणुष्व, पश्य श्वश्रूर्व्याघ्रीव मेषरूपां पुत्रवधूं प्रायशो भक्षयितुं यतते। अत्रेमां कीर्त्तिसेनायाः कथां कथयामि श्रूयताम्।

आसीत् पाटलिपुत्रनगरे धनपालितनाम्नः कस्यचित् धनशालिनो वणिजः कीर्तिसेनाख्या परमसुन्दरी कन्या। वणिक् मगधदेशभवाय देवसेननाम्ने तुल्यधनवते वणिजे तां प्राणसमां कन्यां प्रददौ। देवसेनः अतीव सुचरित्रः,

परं तस्य विधवा जननी तथा दुर्वृत्ता, यथा तां देवीसदृशीं स्नुषां दृष्ट्वैव कोपज्वलिता अभवत्। निरभर्त्सयच्च पुत्रे परोक्षवर्तिनि सततम्। कीर्तिसेना तु तत् सर्वं भर्तृसकाशे कथयितुं न शशाक। हा कष्टं कुटिलमत्यास्तादृश्याः श्वश्र्वाः सकाशे अवस्थानमतिभयङ्करं वधूनाम्।

कदाचित् देवसेनं मित्रकार्य्यार्थं वल्लभीनगरीयायिनं कीर्तिसेना आह स्म आर्य्यपुत्र! बहोर्दिवसात् मया विज्ञापयितुमिष्टं, परं न विज्ञापितम्, अद्य तु अविज्ञाप्य स्थातुं न शक्नोमि। भवति गृहस्थितेऽपि जननी विना कारणं मां सततं तिरस्करोति, अद्य तु प्रोषिते किं करिष्यति, तत् कथं वक्तुं शक्नुयाम्। देवसेनः पत्न्या ईदृशं वचनमाकर्ण्य उद्भ्रान्तचित्तः समभवत्, अवदच्च समयं मातृसकाशमभ्येत्य सप्रणामम्। मातः! अहन्तु विदेशं व्रजामि, कीर्तिसेना तव हस्ते समर्पिता, एषा कुलीनतनया, एतस्यां सस्नेहं व्यवहर्तव्यमिति।

देवसेनमाता पुत्रस्य एतादृशं वचनमाकर्ण्य कीर्त्तिसेनामाहूय पुत्रं सम्बोध्य चाब्रवीत् वत्स! त्वमेव वधूं पृच्छ, अहमस्याः किमकार्षं, युवामुभावेव मे समानौ। देवसेनः जनन्यास्तत् वचः समाकर्ण्य समाश्वस्तो बभूव। कीर्त्तिसेना तु सोत्कण्ठं स्मितमुखी एवातिष्ठत्। अथान्येद्युर्देवसेने वल्लभीनगर्य्यां प्रस्थिते कीर्तिसेनां भर्तृविरहातुरां प्रति श्वश्रूः सातिशयं ललाग। वध्वा दासीं निराचकार, प्रजहार च निजया दास्या मन्त्रयित्वा पुत्रवधूं विजने समाहूय विवसनां कृत्वा केशेष्वाकृष्य निष्ठुरं निर्भर्त्स्य च। अथ

तेनापि क्रोधानपायात् विनाशार्थम् एकस्मिन् अन्धकारमये गृहे निपात्य द्वारं बबन्ध, प्रददौ च दिनान्ते यत्किञ्चना-हारद्रव्यं, निश्चिकाय च पतिविरहोत्कण्ठया स्वयं मृतेति पुत्रसकाशे दोषक्षालनवचनम्।

सुखोचिता कीर्तिसेना तादृशीं दुर्दशामासाद्य क्लेशस्य परां काष्ठामवाप। निरन्तरं रोरुद्यमाना चाचिन्तयत् पतिर्मे कुलीनो धनवान् सुचरित्रश्च। हा दैवम् ईदृशस्य हस्ते पतितायाः अपि मे एतादृशी दुरवस्था! एतदर्थमेव बन्धुजनाः कन्याजननं विनिन्दन्ति। श्वश्रूः ननान्दुश्च सकाशात् या यन्त्रणा सा अतिभयङ्करी। एवं चिन्तयन्ती तस्मिन्नेव गृहे खनित्रमेकमासादितवती। तेन च तथैकां सुरङ्गामखनत् यथा तेन पथा वहिर्गन्तुं शक्यते। ततश्च स्वान्याभरणानि वसनानि च गृहीत्वा तेन सुरङ्गापथेन रजन्यामवसितायां वहिर्निर्जगाम। अनेन वेशेन पितृ-भवने गमनात् पत्युः सकाश एव गमनं वरमिति सम्प्रधार्य राजपुत्रवेशेन विपणिं गत्वा किञ्चित् सुवर्णं विक्रीय कस्य-चिद् वणिजः सदने तं दिवसमनयत्। परेद्युः समुद्रसेनो नाम वणिक् वलभीं गमिष्यतीति संवादमवगम्य तत्-समीपं गत्वा च तेन सह संलापमकरोत्, प्रययौ च तेनैव सार्द्धं वलभीनगरीम्। समुद्रसेनस्तु तां सद्वंशजातं सम्भ्रान्तराजतनयं मत्वा पथि समुचितेन यत्नेनोपचचार। परन्तु दौर्भाग्यात् शुल्कभयेन विजने पथि गच्छन् भीष-णायाः कस्याश्चिदटव्याः सम्मुखे समुपतस्थौ। वेलावसान-वशात् अग्रसरेण न भवितव्यमिति निश्चित्य अरण्यप्रान्त

एवावतस्थे। क्रमेणास्तमिते भगवति पद्मिनीप्राणकान्ते अन्धकारपटलैः धरणी समाच्छन्ना आसीत् शिवाश्च भीषणं चीत्काररवमारेभिरे। वणिजः सर्वे चौरापातभयात् गृहीतास्त्रशस्त्राः सशङ्कमवतस्थिरे।

अत्रान्तरे पुरुषवेशा कीर्तिसेना व्यचिन्तयत् हा कष्टम् अहं येन भयेन श्वश्रूसकाशात् पलायिता, अद्य पुनस्तदेव भयमुपस्थितम्। यदि तस्करकरे म्रियेयं तदा भर्त्ता मामन्यासक्ताम्पलायितामवगमिष्यति। यद्यत्र कोऽपि मां स्त्रियमवबुध्यते तदा मे चारित्रं संशयितुं स्यात् तन्मृत्युरेव वरम्। तदेनं सुहृदं वणिजमपहाय आत्मरक्षा कर्तव्या, स्त्रीणां सतीत्वमेव परमं धनम्, इत्थमवधार्य्य कीर्तिसेना इतस्ततोऽन्विष्यन् गृहाकृति तरुकोटरमेकं प्राप्य चरितार्थंमन्या सत्वरं तदभ्यन्तरं प्रविश्य पत्रसङ्घैः शरीरमाच्छाद्य च पतिसमागमप्रत्याशया तूष्णीमवास्थित।

अथ निशीथे महती चौरसेना शस्त्रास्त्रपाणिस्तत् सार्थवाहशिविरं परिवेष्ट्य सकोलाहलमाचक्रमे। उभौ पक्षौ घोरतरं संग्रामं कृत्वा मेदिनीं रुधिरस्रोतसा समाच्छादितवन्तौ। ततस्तस्कराः विजयिनः समुद्रसेनं सवर्गं निहत्य सर्वस्वं हृत्वा च स्वस्थानं प्रतस्थिरे। क्रमेण प्रभातायां रजन्यां सूरे च गगनमण्डलं रश्मिभिरापूरितवति कीर्तिसेना तस्मात् तरुकोटरात् विनिर्गता। भाग्यवशात् तस्मिन्नेव क्षणे कश्चित् तापसः कमण्डलुकरस्तत्रागत्य कीर्तिसेनां वृत्तान्तमपृच्छत्। अथ तया सर्वमावेदितो मुनिः समाश्वास्य तां कमण्डलूदकं पानाय तस्यै प्रादात् अन्तर्दधे च

प्रदर्श्य वलभीगमनाय पन्थानम्। सा तु पीतकमण्डलु जला शान्तक्षुत्पिपासा तापसदर्शितेन पथा पतिमुद्दिश्य प्रचचाल। क्रमेण दिवसमन्यावस्तमुपगते सा पुनरपि तथैव महारण्यसकाशमुपागमत्। उपायान्तराभावेन च आश्रय-मन्विष्यन्ती तथैव कमपि तरुगर्भं प्राप्य तदभ्यन्तरं प्रविश्य च काष्ठान्तरेण तस्य द्वारमवरुरोध। क्षणान्तरे च ददर्श छिद्रदत्तलोचना, कापि राक्षसी कतिपयैः शिशुभिः सह तत्रोपस्थिता। ताञ्च दृष्ट्वा कीर्त्तिसेनाया जीवनाशा सम्यक् विलुप्ता। पश्यन्त्या एव तस्याः सा निशाचरी तस्य वृक्ष-स्यान्तिकमुपगच्छन्ती क्रमेण तदुपरि समारुरोह। शिशवश्च क्रमेणारुरुहुः। ततश्च ते मातरं रात्रिचरीमब्रुवन् मातः! किं भक्षयामः, किमपि अस्मभ्यं देहि। राक्षसी प्रोवाच वत्साः! अद्य महाश्मशाने किमपि अप्राप्तवती डाकिनीभ्यः किञ्चित् प्रार्थयं, परं किमपि न प्राप्तम्। ततश्च भगवन्तं भैरवं प्रार्थयन्तीं मां स खलु कृपापरतन्त्रः नामगोत्रे च आपृच्छ्य आदिष्टवान् निशाचरि! परिचयेन ज्ञातं त्वं खरदूषणवंशजा, तस्मात् सन्निहितं वसुदत्ताख्यं नगरं व्रज, तस्मिन् वसुसेनो नाम कश्चित् धार्मिकः पृथिवीपतिः प्रतिवसति। स एव इमां सर्वामटवीं रक्षति शुल्कं गृह्णाति चौरांश्च शास्ति। एकदासौ राजा अटव्यां मृगयार्थं भ्रमन् परिश्रान्ततया निद्रामवाप्तवान्। तस्मिंश्च निद्रया अभिभूते कृमिरेकस्तस्य कर्णविवरं प्रविष्टः। गच्छता च कालेन तस्मिन् कृमौ तस्य मस्तकाभ्यन्तरे असंख्यान् कृमीन् प्रसूतवति नृपतिः स्नायुशोषाख्यरोगेण आक्रान्त आसीत्। शतश-

श्चिकित्सकाः समागच्छन् परं कोऽपि रोगं निर्णेतुं नाशक्नोत् न शक्ष्यति च। तदसौ नरपालः सत्वरमेव कालसागरे पतिष्यति, तस्मादपेक्षस्व, तन्मांसभक्षणेन षाण्मासिकीं तृप्तिं प्राप्स्यसीति। पुत्राः! भूतनाथो भैरवः स्वयं मदर्थं यदा भाग्यं निरदिशत्, तदा अहं किं करिष्यामि, कथं वा युष्मभ्यमाहारं दास्यामीति।

एतदाकर्ण्य पुत्रा ऊचुः मातः! नृपतेस्तस्य रोगस्य शान्तये उपायोऽस्ति कश्चित्? राक्षसी प्रोवाच वत्साः! रोगं निर्णीय चिकित्सितं राजा जीवितुं शक्ष्यति। एक-मात्रोऽस्य शान्तेरुपायोऽस्ति शृणुत। इत्युक्त्वा रोगशान्ते-रुपायं सर्वं वर्णितवती। कीर्तिसेना तरुकोटरान्तरवर्तिनी समस्तं वृत्तान्तमाकर्ण्य व्यचिन्तयत् यद्यहमद्य अस्याः विपदः निस्तारं लभेयं, तदा राजानमेनं रक्षिष्यामि। समुद्रसेने-नोक्तम् अस्या अटव्याः प्रान्तभागस्य शुल्कमल्पमिति वणिजः सततम् अनेनैव पथा गच्छन्ति, पतिश्च मम अनेनैव गृह-मागमिष्यति। तदहमस्य महारण्यस्य प्रान्तवर्तिनि वसु-दत्तनगरे गत्वा राजानं नीरुजं कृत्वा तत्रैव पतिमपे-क्षिष्ये।

इत्यवधार्य कीर्तिसेना कथमपि निशामतीत्य प्रात-स्तरुकोटरात् निःसृत्य तेनैव अटवीमार्गेण गच्छन्ती दिन-शेषे कमपि सुचरितं गोपालमपश्यत्। किमाख्यमिदं स्थानमिति पृष्टश्च सोऽब्रवीत् महाशय! एषा सम्मुखवर्तिनी वसुदत्तनगरी दृश्यते। सम्प्रति अस्याः पतिः वसुसेनो नाम नृपतिः व्याधितः मरणं प्रतीक्षमाणस्तिष्ठति। एवमभि-

ह्निता सा तत्रभावत भद्र। यदि कश्चिन् मां तत्र नयेत्, तदाहं राजानं रोगोन्मुक्तं कर्त्तुं शक्नोमि। श्रुत्वैतत् गोरक्षकः प्राह महाशय! अहं तत्र गमिष्यामि, मया सहैवागच्छतु भवान्, यथाशक्ति भवन्तं प्रति यत्नं विधास्यामि। एवमुक्त्वासौ तां तां नगरीमनयत्। अवोचच्च राजद्वारि उपस्थाय प्रतीहारं सर्वं वृत्तम्। प्रतस्थे च समर्प्य पुंवेशां कीर्तिसेनां तत्करे।

प्रतीहारी तु तत्क्षणमेव तं संवादं विज्ञाप्य कीर्त्तिसेनां राजान्तिकं निनाय। मुमूर्षुः नरनाथः अद्भुताकृतिं चिकित्सकमालोक्य एव किञ्चित् समाश्वस्तः समब्रवीत भद्र! यदि त्वमस्मात् रोगान्मां मोचयितुं शक्नोषि, तदा तुभ्यं राज्यार्द्धं प्रदास्यामि। एवमुक्ता कीर्तिसेना तथेति प्रतिज्ञाय यथाश्रुतेन राक्षसीकथितेन उपायेन राजानं निरोगं कर्त्तुमचेष्टत। सर्वे तत्रत्याः राज्ञस्तथाविधरोगमुक्तिप्रक्रियादर्शनविस्मिताः कीर्त्तिसेनां बहुशः प्रशशंसुः। राज्ञः प्रधानमहिषी तां समधिकेन सेवाविधानेन राजयोग्ये सदने अवस्थाममकारयत्। परेद्युर्मध्याह्ने कीर्तिसेना सर्वजनसमक्षं राक्षसीकथितया युक्त्या राज्ञः कर्णविवरात् सार्द्धशतमितान् कृमीन् बहिरकरोत्। तदा राजा सम्यक् रोगनिर्मुक्तः लब्धस्वास्थ्यः स्नानाहारादिकं निरवर्तयत्। अददाच्च तदानीमेव चिकित्सकाय असंख्यान् ग्रामान् हस्तिनः अश्वान् प्रचुराणि च सुवर्णानि सन्तोषार्थम्। मन्त्रिणः राजमहिष्यश्च पृथक् पृथक् वस्त्रालङ्कारादिभिस्तमतोषयत्। कीर्तिसेना तत् सर्वमधिगम्य तस्मि-

स्मिन्नेव नगरे अवतस्थे। अथ गच्छति कियति काले सार्थ-वाहान् वलभ्यां नगर्य्यामागच्छत: श्रुत्वा सत्वरं तान् उप-गम्य तेषु च पतिमवलोक्य सवेगं धावन्ती तच्चरणयोर्नि-पपात।

देवसेने तु प्रथममपरिचितविमूढ़तया चणं स्थित्वा सत्वरं स्वां प्रियामलचयित्वा विस्मिते सर्वे वणिज: साश्चर्य्यं सर्वं वृत्तान्तमपृच्छन्। अथ सा आमूलत: सर्वं वृत्तमवर्ण-यत्। संवादमेतमाकर्ण्य राजा वसुसेन: स्वयमागत्य तस्या: कीर्तिमुद्दिश्य सम्यक प्रशशंस। ततो देवसेन: समस्तं वृत्तान्तमाकर्ण्य कोपचमाविस्मयहर्षजड़: स्वमातरि सम्यक् विद्वेषमकार्षीत्। अथ तत्रत्या: सर्वे एकमतय: समब्रुवन् यासां पतिभक्ति: रथ:, सुशीलं कवचं, धर्म्म: सारथि:, पतिश्च अस्त्रं ता: सत्य: कदाचन न परिभूयन्ते, प्रत्युत सर्वत्र जयं लभन्ते। एवमभिधाय कीर्तिसेनाया यशो गायन्ति स्म। ततो नृपतिरब्रवीत्, इयं पतिभक्त्या सीता-मप्यतिचक्राम, तदेषा मम धर्म्मभगिनी अभूत्। एतदा-कर्ण्य कीर्तिसेनावदत् देव! भवता प्रीतेन यानि द्रव्याणि मह्यं पुरस्कृतानि तानि सर्वाणि मम पत्ये समर्पयतु। राजापि तानि सर्वाणि देवसेनाय दत्त्वा पुन: तस्य शिरसि विशेषसम्मानसूचकं पट्टबन्धमेकमबध्नात्।

अनन्तरं देवसेन: स्वोपार्जितं राजदत्तञ्च वसुजात-मासाद्य कीर्तिसेनां बहुश: प्रशस्य दुरन्तां जननीं परित्यज्य च तस्मिन्नेव वसुदत्ताख्ये नगरे सुखेन वसतिमकरोत्। कीर्तिसेना तु पतिभक्तिनिदर्शनभूता

धरातले असामान्यां कीर्तिं लब्ध्वा पत्या सह परमसुखेन न्यवसत्।

सोमप्रभा एवमुक्त्वा पुनरवदत् राजपुत्रि! एवं वध्वः श्वश्रूणां ननन्दृणाञ्च दोषेण बहून् क्लेशान् प्राप्नुवन्ति। तस्मात् भगवन्तमभ्यर्थाय यथा त्वं भर्तृभवने सुखेन वस, श्वश्रूननन्दारश्च ते सदाशया भवन्तु। कलिङ्गसेना सोमप्रभामुखात् आख्यानमिदं श्रुत्वा परमं सन्तोषं लेभे। अथ सा सोमप्रभा सखीमालिङ्ग्य सत्वरं स्वस्थानं प्रातिष्ठत।

ऊनत्रिंशस्तरङ्गः समाप्तः।

---

## अथ त्रिंशस्तरङ्गः।



अथापरेद्युः प्रातः कलिङ्गसेनां प्रियसख्यागमनं प्रतीक्षमाणां कश्चित् मदनवेगो नाम विद्याधरः विमानेन सञ्चरन् ददर्श। दृष्ट्वा च तस्या रूपलावण्यं विमुग्धश्चाचिन्तयत् अहो! किमाश्चर्य्यं मानुषेषु निर्म्माणकौशलं, यदीयं मे प्रेयसी न स्यात्, तदा जीवनं विफलम्, अथवा विद्याधरोऽहं कथं मानुषीसंसर्गदूषितो भवेयम्? एवं विचिन्त्य प्रज्ञप्तिं नाम विद्यां सस्मार। सा च तत्क्षणं देहधारिणी समीपमागत्य अभाषत नेयं कन्या मानषी, कापि सुराङ्गना शापभ्रष्टा कलिङ्गदत्ताभिधानस्य राज्ञः कुले सम-

जायत। तदाकर्ण्य मदनवेगः स्वालयमेत्य इत्थं निश्चयमकरोत्, यथा कन्येयं नापहृत्य बलात् भोक्तव्या, तथात्वे मम मृत्युशापोऽस्ति, तदेतस्याः प्राप्तये गौरीपतिमाराधयामि।

एवमवधार्य्य मदनवेगः ऋषभाख्यं पर्वतं गत्वा तत्र पदैकेन तिष्ठन् घोरं तपश्चचार। देवादिदेवो नीलकण्ठस्तस्य तादृशेनातिकठोरेण तपसा सन्तोषितः समागत्य समभ्यधात् वत्स! कन्या कलिङ्गसेना पृथिव्यां यादृशी सुन्दरी, तादृशस्तस्याः सदृशो वरः वत्सराजस्तिष्ठति। स खलु एनां परिणेतुमभिलषति केवलं वासवदत्तायाः भयाकुलः स्पष्टाचरमेनां प्रार्थयितुं न शक्नोति। कलिङ्गसेना तु सोमप्रभामुखात् वत्सराजगुणान् श्रुत्वा स्वयंवरार्थिनी तदीयां राजधानीं गमिष्यति। तस्मात् त्वं स्वयंवरात् प्राक् तत्र सन्निधेहि, पूरयस्व च वत्सेश्वरवेशधारी गान्धर्वविधिना तामुद्वाह्य स्वमनोरथम्।

एतस्मिन्नन्तरे भूतलस्थाः सर्वे राजानः कलिङ्गसेनाया रूपगुणसमृद्धिवार्त्तामाकर्ण्य तां प्रार्थयितुं कलिङ्गदत्तस्य नृपतेरन्तिकं दूतान् प्राहिण्वन्। कलिङ्गदत्तस्तु कस्यापि प्रार्थनानामदत्तकर्णः केवलं श्रावस्तीनगरीपतेः वृद्धस्य राज्ञः प्रसेनस्य प्रार्थनां पूरयितुमभिललाष। कलिङ्गसेनया तु तस्यां वार्त्तायां निवेदितायां सोमप्रभा दुःखिता रुदती समभाषत सखि! नरेश्वरः प्रसेनो मया सम्यक् ज्ञातः, स खलु सर्वमेव प्रियसख्या योग्यः, परं वृद्धः। वृद्धेन सह तव परिणयः मम न सम्मतः। तस्मादेतत्कृते मम हर्षो दूरं

आस्तां, प्रत्युत विषाद एव संवृत्तः । कल्याणि ! यदि वत्सेश्वरः उदयनस्ते पतिः स्यात्, तदा सर्वाङ्गीनं कुशलं भवेत् । रूपे गुणे समृद्धौ शौर्य्ये विद्यायां वा तत्सदृशः पुमान् पृथिव्यां नास्ति । तदेवं योग्ययोजने विधातुः सृष्टिकौशलस्य साफल्यं नो चेत् वैफल्यमिति ।

एतदाकर्ण्य कलिङ्गसेना वत्सराजं प्रति सातिशयमनुरक्ता अवादीत् सखि ! स वत्सराजः कस्मात् कुलात् सम्भूतः, कथं वासौ उदयननामा, एतन्मे आख्याय कौतुकं मे उपशामय । सोमप्रभाब्रवीत् सखि ! एतत् तव श्रुतिपथमायातम् ? यत् अर्ज्जुनः पाण्डुसुतः, तत्पुत्रोऽभिमन्युः, तस्य तनयः परिचित् नाम सुप्रसिद्धो नरपतिः, तदात्मजो जनमेजयः, तस्य सुतः शतानीकः, स खलु वत्सदेशानां महानगर्थ्यां कौशाम्ब्यामध्यास्त । यश्च देवासुरयुद्धे असुरान् निहत्य सशरीरः स्वर्गमगात्, तत्पुत्रः सहस्रानीकः । तस्य मृगावती नाम महिषी आसीत् । तस्या उदरे उदयनो नृपः समजनि । एकदा मृगावती अन्तर्वत्नी शोणितमयहृदे स्नानार्थमभिलाषमकरोत् । राजा प्रेयस्यास्तादृशमभिलाषं श्रुत्वा शङ्कितः लाक्षारसपूर्णां वापीमेकामखानयत् । राजमहिष्यां तत्र स्नातुमवतीर्णायां सहसा पक्षिराजो गरुड़ः समापत्य आमिषलोभात् तां तस्मात् ह्रदात् हृत्वा जीवन्तीमवलोक्य उदयाचले निचिक्षेप । तत्र जमदग्निर्नाम महर्षिरासीत् । स कदाचित् भ्रमन् तां पतितां मृगावतीं दृष्ट्वा स्वमाश्रममनयत् । अरचच्च सयत्नं पतिलाभाश्वासं दत्त्वा तां तस्मिन्नाश्रमे । तस्याश्च ईदृश्या

अवस्थायाः कारणं श्रूयतां, पूर्वमेकदा स्वर्गवनिता मृगावती तिलोत्तमामवजज्ञे। तिलोत्तमा तेन तामभिशशाप, तस्य फलमिदं सा भुक्तवती।

अथ दशमे मासि सा मृगावती तस्मिन्नेवोदयगिरौ पुत्रमसूत। तदा च दैववाणी तां वराकीं समाश्वासयत् देवि! यं पुत्रं प्रसूतवती असि, अयं हि विद्याधराधिराजः सम्भविष्यति, ख्यातिमाप्स्यति च उदयन इति समाख्यया। सखि! तदयमुदयनो नाम। अत्रान्तरे राजनि सहस्रानीके मृगावतीं विना नितरां शोकाकुले कथञ्चित् कालं नयति एकदा उदयगिरिनिवासी कोऽपि शवरः कार्य्यानुरोधेन मृगावत्याः शापावसानकालस्यागमात् देवप्रहित इव कौशाम्बीं नगरीमाजगाम। अस्मिंश्च क्षणान्तरे अन्तरीक्षवाण्या प्रियतमासंवादमवगम्य नृपतिस्तेन शवरराजेन सह प्रेयसीमानेतुमुदयाचलं प्रातिष्ठत। तत्र च गत्वा सपुत्रां प्रियतमामादाय पुनः स्वां नगरीमनुप्राप्तः पुत्रमुदयनं यौवराज्ये अभिषिच्य मन्त्रिपुत्रान् यौगन्धरायणादीन् तद्वयस्यभावे नियुज्य कियन्तं कालं सुखेनानयत्। गच्छता च कालेन तस्मिन् नरनाथे सचिववृन्दैः साकं महापथं प्रस्थिते असौ उदयनः सम्प्रति पितृसाम्राज्यं प्राप्य तैस्तैर्मन्त्रिपुत्रैः पृथिवीमनुशास्ति।

इत्युक्त्वा सोमप्रभा पुनः समभाषत सखि! असावेवोदयनस्तवानुरूपः पतिः, त्रिलोक्यां तस्य समो द्वितीयो नास्ति। स चोदयनस्तव भुवनविख्यातं नाम श्रुत्वा त्वय्यनुरक्तोऽपि केवलं प्रधानमहिष्या वासवदत्ताया भयात् स्पष्टं

प्रार्थयितुं न शशाक। तस्याश्च वासवदत्तायाः नरवाहनदत्तो नाम यः पुत्रः सम्भूतः, स एव विद्याधरचक्रवर्त्ती भवितेति दैववाक् तस्य जन्माभ्यनन्दयत्। तदेवं तवाभिमतिरेव प्रमाणमिति।

कलिङ्गसेना सोमप्रभामुखात् उदयनचरितमाकर्ण्य समवादीत् सखि! श्रुतं सर्वं, सिद्धान्तितश्च स एव मे योग्यः पतिरिति, किन्तु दुर्घटोऽयं मे मनोरथः पित्रोरपि।

सखि! त्वं सर्वज्ञा प्रभावशालिनी अपि, तदत्र त्वामन्तरेण नास्त्यभ्युपायः वैवाहिकी विधिश्च दैवायत्तः, अत्रेमामाख्यायिकां वर्णयामि निशामय।

आसीत् पुरा उज्जयिन्यां विक्रमसेनो नाम नृपः। तस्य तेजस्वती नाम एका सुन्दरी कन्यका अजनिष्ट। राजा तदर्थं बहु अन्विष्यन्नपि अभिमतं वरं कुत्रापि नावाप्तवान्। कदाचित् तेजस्वती हर्म्यपृष्ठमधिष्ठिता कञ्चन पथिकं दृष्ट्वा तस्मिन्ननुरागपरतन्त्रा स्वाभिप्रायं व्यञ्जयितुं स्वां सहचरीं तदन्तिकं प्राहिणोत्। सख्यां सकाशमेत्य कन्यायाः प्रार्थनां निवेदितवत्यां पथिकः शङ्काकुलः तां राजकन्याप्रार्थनां नाभ्यनन्दत्। परन्तु राजनन्दिन्याः सखी सनिर्बन्धं समभाषत भद्र! नास्त्यत्र ते भयम्। त्वं सन्ध्यायामुपस्थितायां अस्मिन् देवभवने राजपुत्रीं प्रतीक्षस्व। एवमुक्त्वा दास्यां प्रचलितायां पथिकोऽसौ कथञ्चित् सम्मतोऽपि भयात् पलायाञ्चक्रे न पुनराजगाम।

अत्रान्तरे सोमदत्तो नाम कश्चित् सामन्तपुत्रः पितरि स्वर्गते दायादैर्हृतराज्यः राजाधिराजसकाशमभियोक्तुम्

उज्जयिनीमागच्छन् सहसा तं प्रदेशमागत्य सन्ध्यायां-मुत्तीर्णायां स्थित्यर्थं तं देवालयमविशत्। तेजस्वती च तदानीं सङ्केतमनुसृत्य तत्रोपस्थिता कोऽयमिति मं दृष्ट्वैव पथिकं मत्वा तं राजतनयं पतित्वे ववार। सोमदत्तोऽपि सविस्मयः अनुक्तप्रतिवचनः सानन्दं तस्याः प्रार्थनामभि-ननन्द। अथ राजपुत्री सोमदत्तं सत्यपाशेन संयम्य आत्मानं कृतार्थम् मन्यमाना सुखावासं प्रत्याजगाम। राजपुत्रः सोमदत्तोऽपि एकाकी तत्रावस्थाय तां रजनी-मत्यवाहयत्। अथ प्रातः मित्रं विक्रमसेनमेत्य स्ववृत्तान्त-मावेद्य तत्साहाय्यमभ्यर्थयामास। विक्रमसेनोऽपि तदीय-शत्रुदलने कृतसङ्कल्पः तस्मै एव सोमदत्ताय स्वां तनयां दातुं प्रस्तावमकार्षीत्। सोऽपि पूर्वरात्रिपरिचितां विक्रम-सेनदुहितरं विवेद, सुतरां विवाहप्रसङ्गं श्रुत्वा विक्रम-सेनाय तत् वृत्तं सर्वमवर्णयत्। तेजस्वती च गृहमेत्य विश्व-स्तया सख्या रात्रिवृत्तान्तं मात्रे न्यवेदयत्। अथ राजनि काकतालीयवत् एतत् संघटनं श्रुत्वा विस्मितवति मन्त्री समुवाच देव! भवितव्यनैवेयं सतां प्रयोजनसिद्धये विधि-रेव जागर्त्ति, तदत्र कथामेकामाकर्णय।

आसीत् कस्मिंश्चित् जनपदे हरिशर्म्मा नाम ब्राह्मणः। स तु मूर्खो दरिद्रश्च। तस्य बहवः पुत्रा आसन्। एक-दासौ भिक्षार्थमटन् सपरिवारः नगरमेकं प्राविशत्। तत्र च स्थूलदत्तं नाम गृहपतिं शरणं गतः पुत्रान् तस्य गोरक्षणे, भार्य्यां दासीत्वे, स्वयञ्च दास्ये नियोज्य तदालय-सकाशे न्यवसत्। कदाचित् गृहपतेः कन्यापरिणयोत्सवे

बहवो लोकाः निमन्त्रिताः। हरिशर्म्मा सपरिवारः प्रभु-गृहे यथेष्टं भोजं भोक्तुम् अनाहारमेवातिष्ठत्। क्रमशः सर्व्वे एव सयत्नमाहूय भोजं कारिताः, परं हरिशर्म्मा एव सपरिजनो नाहूतः। हरिशर्म्मा अनाहारेण नितरां क्लिष्टः रजन्यां गृहिणीमब्रवीत्, पश्य, मां दरिद्रं मूर्खञ्च मत्वा अगौरवात् कोऽपि भोजनार्थं नाहूतवान्। तस्मादहं युक्त्या एवं करोमि यथा शीलदत्तो मां सगौरवमाद्रियते। अहं सर्व्वासमक्षम् अस्य जामातुरश्वं हृत्वा स्थानान्तरे गोपयिष्यामि। ततश्च अश्वानुसन्धाने संवृत्ते यदा कोऽपि तमनुसन्धातुं न शक्ष्यति, तदाहं गणनाविद्यायां मम नैपुण्यं प्रकटयिष्यामि। अथ सर्व्वेषु निद्रितेषु असौ हरिशर्म्मा सुगूढम् अश्वं स्थानान्तरं निनाय। प्रातश्च अश्वमदृष्ट्वा परिजनेषु अमङ्गलमाशंसत्सु सर्व्वे एव अनुसन्धानाय सत्वरा अभवन्। परं कोऽपि अश्वं नापश्यत्। ततश्च हरिशर्म्मणो गृहिणी यथाशिक्षितं शीलदत्ताय समाचख्यौ महाशय! मम भर्त्ता गणनायां निपुणो भवदन्तिके आस्ते, तं पृच्छ, स खलु गणनया सर्व्वं वेत्स्यति।

एवमुक्तः शीलदत्तो हरिशर्म्माणमाहूय प्रोवाच भद्र! पूर्व्वेद्युर्विस्मृतिहेतोः त्वामाहूय भोजनं न कारितवानस्मि, अद्य अश्वे चोरिते स्मृतं तन्मनसि दुःखं मा कृथाः, सम्प्रति गणनायां निपुणस्त्वं ब्रूहि को मे जामातुरश्वमपजहार। एवमुक्तो हरिशर्म्मा कियतीर्मिथ्यारेखा अङ्कयित्वा प्राब्रवीत् महाशय! तस्कराः स्थानादस्मात् दक्षिणस्यां दिशि अश्वमपहृत्य सुगुप्तं ररक्षुः, नेष्यन्ति च रात्रौ स्थानान्तरम्।

तत् साम्प्रतमेव गत्वा सत्वरमश्वमानयत्त। एवमुक्ते कियतो लोकाः दक्षिणस्यां प्रचलिताः प्रत्यागताश्च सत्वरम् अश्वं नीत्वा। तद् दृष्ट्वा सर्वे हरिशर्म्मणो गणनानैपुण्यं प्रशशंसुः। प्रायच्छंश्च ततः प्रभृति तं ज्ञानिनं मत्वा बहु सम्मानम्। शीलदत्तोऽपि तं बहुयत्नेन समादृतवान्।

अथ गते च कियति काले राजगृहात् प्रभूतानि सुवर्णानि चोरितानि। बहुसन्धानेनापि चौरेषु अप्राप्तेषु गणनार्थं हरिशर्म्मा समाहूतः। सुतरां घोरायामापदि पतितः हरिशर्म्मा राजभवनमेत्य पलायनार्थं कल्यं गणयिष्यामीत्युक्तवान्। राजा तु तम् एकस्मिन् गृहे अवरोद्धुमादिदेश। रक्षिणश्च तथैव चक्रुः। कोऽतिवर्त्तते दैवम्। राज्ञः अन्तःपुरचारिणी जिह्वानाम्नी कापि चेटी आसीत्। सा स्वेन भ्रात्रा सह चक्रान्तं कृत्वा उल्लिखितानि द्रव्याणि अपाहरत्। हरिशर्म्मणि तथा स्थिते सा निशायां तद्गृहद्वारि निभृतं स्थित्वा किं वदेदिति कर्णं दत्त्वा अतिष्ठत्। क्षणे च तस्मिन् हरिशर्म्मा स्वां जिह्वां सम्बोध्य समुवाच जिह्वे! कथमीदृशं कर्म्म कृतवती, तदिदानीं यादृशं कर्म्म, तदनुरूपं फलं लभस्वेति।

एतदाकर्ण्य चेटी स्वकृतं चौर्य्यं गणको ज्ञातवानिति निश्चित्य निरुपायमन्या कौशलेन हरिशर्म्मणो गृहमविशत्, अवदच्च तत्पदयोः पतित्वा महाशय! गणनया यं चौरं निश्चितवानसि, साहं जिह्वा नाम। अहमेव समस्तं धनम् अपहृत्य अस्य सदनस्य पश्चिमायां दिशि उद्यानाभ्यन्तरे दाड़िम्बमूले निहितवत्यस्मि।

तदिदानीं ब्रह्मन्! मम हस्ताभरणमेतत् गृहीत्वा मां रक्ष।

हरिशर्म्मा तु चेटीमुखेन सर्वं श्रुत्वा सगर्वमाह स्म रे पापीयसि! गच्छ दूरम्, अहं त्रिकालदर्शी न विदित-स्तव। तद् यावत् त्वं दरिद्रा, तव कथां न प्रकाशयिष्यामि, परं तव हस्ते यदस्ति तत् मह्यमर्पय। चेटी तथेति प्रति-ज्ञाय तस्मात् गृहात् प्रचलिता। हरिशर्म्मा सविस्मय-श्चिन्तितवान् अनुकूलदैवस्य सर्वं समीहितं सेत्स्यति, क्वाहं स्वां जिह्वां निन्दामि, क्व वा कृतचौर्य्या जिह्वानाम्नी किङ्करी, या मद्वचनश्रवणार्थं ममावरोधगृहे दत्तकर्णा तिष्ठन्ती जिह्वायाः निन्दावादं श्रुत्वा मां परिज्ञातवानिति निश्चित्य मत्पदयोर्निपतिता सर्वं वृत्तान्तं न्यवेदयत्। इत्थं विचिन्तयन् हरिशर्म्मा हृष्टो रात्रिमयापयत्। प्रातश्चोत्थाय अलीकगणनया धनस्थानमदर्शयत्, क्षमयामास च राजानं चौरः किमपि न गृहीत्वा पलायित इति।

राजा तु तस्य तादृशगणनानैपुण्येन भृशमनुरञ्जितः तस्मै कतिपयान् ग्रामान् सुवर्णानि छत्राणि वाहनानि च प्रदत्तवान्। इत्थमसौ चातुर्य्येण क्रमशः समृद्धिमान् सम-भूत्। तदेवं देव! दैवमेवानुकूलं पुरुषार्थान् साधयति। तद्देव सोमदत्तमानीय राजनन्दिनीमयोजयत्।

मन्त्रिण एतादृशं वचनमाकर्ण्य नृपतिः प्रीत्या तेज-स्वतीं सोमदत्ताय सम्प्रददौ। सोमदत्तश्च श्वशुरसैन्यपरि-वृतः स्वान् शत्रून् निराचकार, निनाय च सुखेन कालं प्राप्तराज्यः सकलत्रः।

तस्मात् सखि ! दैवं सहायमन्तरेण कः समर्थो वत्सराजं प्रति त्वां घटयितुम्। कलिङ्गसेना सोमप्रभामुखात् सर्वमाकर्ण्य तस्मिन्नेव वत्सेश्वरे अनुरागिणी त्यक्तत्रपाभया तत्प्राप्तये एव अयतिष्ट। सायञ्च कमलिनीबान्धवे अस्तमुपगच्छति सोमप्रभा स्वालयं प्रातिष्ठत।

---

## अथ एकविंशस्तरङ्गः।

---

परेद्युः प्रातरेव सोमप्रभायामुपस्थितायां कलिङ्गसेना प्रावोचत् सखि ! श्रुतं मया, तातो मम प्रसेनेन नरपतिना सह मत्परिणयार्थं यतते, परं त्वया वत्सराजं प्रति समासञ्जिताहं दिवानिशं तद्गुणानेव चिन्तयामि, तद्भवती मां नरेश्वरं प्रसेनं दर्शयित्वा तदनु वत्सराजं प्रति नयतु। नाहमिदानीं पितृभ्यां बिभेमि। एतच्छ्रुत्वा सोमप्रभावदत सखि ! तर्हि अन्तरीक्षेण यथा यन्त्रमाकह्य गमिष्यावः। त्वमात्मनः सर्वं द्रव्यजातं गृहीत्वा सत्वरा भव, यतो वत्सेश्वरं सकृद् दृष्ट्वा त्वं पुनः प्रत्यागन्तुं न शक्ष्यसि। पितरं मातरं माञ्च विस्मयिष्यसि। तदेवमहमपि पुनर्नागमिष्यामि। कलिङ्गसेना एतदाकर्ण्य रुदती प्राब्रवीत् सखि ! यद्येवं त्वमेव गत्वा तं वत्सेश्वरमिहानय। नाहं त्वया विना तत्र क्षणमपि स्थातुं शक्ष्यामि, श्रुतवत्यस्मि, चित्रलेखा ऊषाया दानवनन्दिन्याः कृते अनिरुद्धमानीतवती।

मन्ये त्वमपि एतदाख्यानं जानासि, मया पुनराख्यायते श्रूयताम्।

आसीत् पुरा असुरराजस्य वाणस्य ऊषा नाम कन्यका। तया गौर्य्यामाराधितायां सा तस्यै वरमदात् यथा त्वं स्वप्ने यमालिङ्गिष्यति स एव तव पतिर्भविष्यति। ततश्च निद्रावस्थायां कोऽपि देवकुमारो गान्धर्व्वविधिना तामाश्लिषत्। अथ निद्रापगमे यदा सा तं देवसुतं न प्रत्युत, ततसम्भोगचिह्नमपश्यत् तदा देव्या वरस्मरणेन विस्मिता। चित्रलेखामब्रवीत् सखि! स्वप्ने यो मया दृष्टः आलिङ्गितश्च देवकुमारः, तस्य नामगोत्रे न मया विदिते, नाभिज्ञानञ्च किमपि रचितं, किमिदानीं करोमि, तेन विना क्षणमपि स्थातुं न शक्नोमि, सत्वरमुपायः क्रियतामिति। योगेश्वरी चित्रलेखा प्रत्युवाच सखि! सर्व्वमेवैष: गौर्य्या वरप्रभावः। परं किमप्यभिज्ञानं विना कथं तमन्वेषयामि, यदि त्वयासौ सम्यक् आकारतोऽपि परिज्ञातः, तदाप्यहमनुसन्धातुं शक्नोमि, अहं सुरासुरमानवसहितं जगत् अविकलं चित्रयामि, तन्मध्यादपि यदि त्वत्प्रियतमं दर्शयितुं पारयसि, तदप्यहं योगबलेन तमिहानेष्यामीति। तथेति ऊषयाभिहिता सा तूलिकया समस्तं जगत् अङ्कितवती। अनन्तरमूषा सविशेषमभिनिविश्य अङ्गुल्या द्वारकानिलयं यदुप्रवीरमनिरुद्धमदर्शयत्।

चित्रलेखा समभाषत सखि! धन्या त्वं, यया भगवतः कृष्णस्य पौत्रः पतिर्लब्धः। स खलु अस्मात् प्रदेशात् सहस्राष्टकयोजनान्तरे तिष्ठति। ऊषोवाच सखि! अद्यैव

गत्वा तमिहानय, नो चेत् जीवनं मे संशयितमवगच्छ। एवमुक्ता सखीं चित्रलेखामनिरुद्धसकाशं प्राहिणोत्।

चित्रलेखा च तत्क्षणं द्वारकामेत्य अनिरुद्धावासमविशत्, अनयच्च प्रसुप्तं अनिरुद्धं योगबलेन प्रियसखीसकाशम्। तत्प्राप्त्या च दानवेन्द्रसुता चरितार्था बभूव। बाणराजश्च तद्वृत्तान्तमाकर्ण्य क्रुधा अनिरुद्धं बन्धनागारमनैषीत्। अथ भगवान् नारायणः पौत्रं तथा निरुद्धं नारदमुखात् श्रुत्वा ससैन्यो बाणनगरं करोध, प्रत्यानिनाय च पौत्रं वधूसहितं द्वारकां बाणासुरं जित्वा। तदेवं सखि! त्वमपि वत्सराजमिहानेतुमर्हसि। सोमप्रभा न्यगदत् सखि! चित्रलेखाया मम च महदन्तरम्। तस्मात् गच्छ, त्वां तत्रैव नयामि। तदाकर्ण्य कलिङ्गसेना सद्य एव स्वसम्पत्तिं परिगृह्य पितरौ अनापृच्छ्य सोमप्रभया सह मायायन्त्रेण आकाशमार्गं समुत्तस्थौ। सोमप्रभा अग्रतः प्रसेनं नृपं दर्शयितुं श्रावस्तीं गत्वा दूरात् राजानं मृगयार्थं निर्गतं दृष्ट्वा कलिङ्गसेनामब्रवीत् सखि! पश्याग्रतः, स्थविरो नृपतिः प्रसेनः मृगयार्थं यात्रामकरोत्, पिता तव अस्यैव हस्ते त्वां समर्पयितुमभिललाष। कलिङ्गसेना दूरात् राजानं वीक्ष्य कोपज्वलिता सोमप्रभामवादीत् सखि! दृष्टोऽयं, सम्प्रति वत्सराजसकाशं गच्छ। तथाभिहिता सोमप्रभा कौशाम्बीमभिप्रस्थिता क्षणेन तस्याः प्रान्तभूमावुपस्थिता उद्यानस्थितं वत्सेश्वरमदर्शयत्। कलिङ्गसेना दृष्ट्वैव विमोहिता सोमप्रभामवादीत् सखि! दृष्टं द्रष्टव्यं, विलम्बेनालं सत्वरम् अनेन मां संयोजयस्व।

सोमप्रभा तस्याः सत्वरतामालोक्य प्रोवाच सखि! अद्य किञ्चित् अशुभं दृश्यते, तदद्य अस्मिन्नेवोद्याने अलक्षिता तिष्ठ, दूतादिकं न प्रेषणीयम्। अहं परेद्युः प्रातरेवागत्य युवयोर्यथा मेलनं स्यात् तथा यतिष्ये। एवमभिधाय पत्युश्चित्तविनोदार्थं गृहमगात्। वत्सेश्वरोऽपि तस्मादुद्यानात् राजभवनमियाय।

एतस्मिन्नेवावसरे विलम्बमसहमाना कलिङ्गसेना सखीवचनमुल्लङ्घ्य वत्सराजं प्रति महत्तरं नाम दूतं प्रास्थापयत्। दूतो राजसकाशमेत्य प्रणम्य च सविनयमभाषत राजन्! श्रुतमेतत् कल्याणाभिनिवेशिनां, यत् तक्षशिलायां नगर्यां कलिङ्गदत्तो नाम नरपतिरस्ति। तस्य भुवनमोहिनी कलिङ्गसेनाख्यकन्यका वर्त्तते, तस्याः सखी सोमप्रभा नाम, सा खलु मयदानवनन्दिनी नलकूवरस्य कुबेरतनयस्य पत्नी। तस्याः प्रमुखात् श्रोतृणां गुणराशीनाकर्ण्य मत्स्वामिदुहिता कलिङ्गसेना विमोहिता गुरुजननिरपेक्षा निभृतं तयैव सोमप्रभया सह मायाविमानमारुह्य देवस्य उद्यानमवतीर्णा महाराजं स्वयंवरमाल्येनाभ्यर्चयितुमभिकाङ्क्षति, तदेवं स्थिते देवः प्रमाणमिति।

वत्सराजः महत्तरमुखात् वार्त्तामिमामाकर्ण्य भृशं सन्तोषमवाप। सम्मतश्च दूताय पारितोषिकं यथेष्टं प्रादात्। अथ मन्त्रिवरं यौगन्धरायणमाहूय अब्रवीत् पश्य कलिङ्गदत्तस्य नरपतेः कन्या जगन्मोहिनी कलिङ्गसेना मां पतित्वेन वरयितुमिह दूतं प्रजिघाय। तदेवं सा परित्यक्तुं न युज्यते। अहं शीघ्रं तां परिणेष्यामि। यूयं त्वरा-

वन्तः लग्नं निरूपयध्वम्। राजहिताकाङ्क्षी मन्त्रिप्रवरो यौगन्धरायणः श्रुत्वैतत् क्षणमचिन्तयत् श्रुतं, कलिङ्गसेना अद्वितीया रूपवती। यदि राजा तामुद्वहेत् तदा सर्वं राजकार्य्यादिकं परिहरेत्। देवी च वासवदत्ता म्रियेत। मातृवियोगेन च राजकुमारस्य नरवाहनदत्तस्य अनिष्टमभिसम्भवितुमर्हति। अन्या च देवी विपदमाप्नुयात्। एतस्याः पितरौ च राजानं प्रति कुपितौ स्याताम्। तदेवं सर्वं सङ्कुलं दृश्यते। अन्यच्च यदि राजा अस्मादाग्रहात् निवार्य्येत, तदास्यापि महदनिष्टं सम्भाव्यम्। तस्मादस्य विधेर्विशेषविवेचनतया कालहरणं कर्त्तुं युक्तमिति विचार्य्य राजानमब्रवीत् देव! धन्यो भवान्, देवा अपि यां प्रार्थयन्तो न लभन्ते, सा पुनरद्य महाराजं स्वयंवरीतुमागता। तदेकं गणकमाहूय शुभलग्नं निश्चयम्, अनन्तरं देवः कलिङ्गसेनां परिणेष्यति। साम्प्रतं तां समुचितेन सम्मानेन समभ्यर्च्चयतु, प्रयच्छतु च वासभवनमशनवसनादिकञ्च समुचितं भवान्। श्रुत्वा तु राजा सम्प्रहृष्टस्तत्क्षणं कलिङ्गसेनायाः सवर्णां व्यवस्थामादिदेश भृत्यान्। सा च प्रहर्षमुपगता राजनिर्द्दिष्टं वासभवनं प्राविशत्।

चतुराग्रणीर्यौगन्धरायणः सर्वं व्यवस्थाय गृहं गत्वा प्रायेण कालहरणमेवाशुभकर्म्मणः प्रतिक्रिया इति विभाव्य गणकमाहूय च कालविलम्बेन लग्नं निरूपयितुमादिक्षत्। अत्रान्तरे विदितवृत्तान्ता देवी वासवदत्ता मन्त्रिवरं यौगन्धरायणं स्वभवनमानीय सास्रमुवाच आर्य्य! पूर्व्वतः प्रतिश्रुतं भवता, यत् पद्मावतीमन्तरेण मम नान्या

सपत्नी कदाचन न भविता, युतश्चाद्य आर्य्यपुत्रः कलिङ्ग-सेनामुद्वक्ष्यति, तदेवं भवतो मृषावादित्वं मम मरणं समं निपतितं का गतिरिति। यौगन्धरायणः प्राह देवि! समाश्वस, जीविते मयि नैतत् कदापि सम्भाव्यते। मदनु-रोधेन च भवत्यः महाराजं प्रति मातुं प्रतिकूलवर्त्तिन्योऽ-भूत। न हि रोगिणः भिषजां प्रतिकूलवचसा वशी-क्रियन्ते। तस्मात् राजा यदा युष्माकमन्तिके तिष्ठेत् तदा यूयमविकृतमनस एव तं सेवेध्वं वर्णयेध्वञ्च तस्याः पाणि-ग्रहणे हर्षं प्रदर्श्य राज्यवृद्धेः सम्भावनाम्। एवं स्थिते महा-राजो भवतीदाक्षिण्येन सततं पश्येदेव। तदेवं देवि! निश्चिन्तया त्वया मदीयं युक्तिबलं दृश्यताम्। एवं वासव-दत्तां प्रबोध्य मन्त्री स्वस्थानं सम्प्रतस्थे। देवी तद्वचसा विश्वस्ता तदादेशानुरूपाचरिणी व्यवस्थिता।

---

## द्वात्रिंशस्तरङ्गः।

अथापरेद्युः प्रातरेव गणकरो मन्त्रिवरः राजान्तिक-मुपगम्य प्रोवाच देव! शुभस्य शीघ्रम् अद्यैव शुभलग्नं प्राप्येत चेत्। किं वा महाराजो भणति? राजाब्रवीत् ममापि एवमाशयः, कलिङ्गसेनां विना भृशमुत्कण्ठते मे चेतः, अद्यैव लग्ने प्राप्ते सुमङ्गलं स्यात्। एवमुक्ता सम्मुखस्थं

प्रतीहारिणं गणकाह्वानार्थमादिशत्। प्रतिहारी च तत्-क्षणं गणकान् आनिनाय। ते चागत्य मन्त्रिमतानुवर्त्तिनः कपटगणनया अवदन् देव! मासषट्काभ्यन्तरे वैवाहिकं लग्नं न लभ्यते इति। एतदाकर्ण्य धूर्त्तशिरोमणिर्यौगन्धरायणः किमप्येते न जानन्तीत्यभिधाय तं विज्ञं गणक-राजं महाराजसम्मतमानाय्य दिनावधारणं करोतु देव इति न्यवेदयत्। तन्निशम्य राजा तं गणकमानेतुम् आदि-देश। स च राजाज्ञया समीपमेत्य तथैव मासषट्कान्तरे सुलग्नं न प्राप्यत इति कथितवान्।

अथ यौगन्धरायणे कपटोद्वेगं प्रकटयित्वा किमिदानीं कर्त्तुमुचितमिति कथयति राजा सोत्कण्ठः समभ्यधात् साम्प्रतमत्र कलिङ्गसेनाया अभिप्रायो ज्ञातुमुचितः। एव-मुक्ता यौगन्धरायणं सगणकवृन्दं तदन्तिकं प्रहितवान्। स खलु धूर्त्ततमो मन्त्री गत्वा समवोचत् राजपुत्रि! अह-मद्य महाराजादेशेन युवयोः परिणययोग्यं शुभलग्नं स्थिरीकर्तुं गणकैः सार्द्धमागतः। एवमुक्ता कलिङ्गसेनाया जन्मनक्षत्रे जिज्ञासिते तस्याः परिजनाः तदीयं जन्म-नक्षत्रमाख्यन्। ततस्ते गणकाः कपटगणनया समवादिषुः षण्मासाभ्यन्तरे शुभलग्नं न लभ्यते इति। राज-बालायां गणकानां तद्वचनमाकर्ण्य नितरामुत्कण्ठितायां महत्तरोऽब्रवीत् अनुकूललग्नं यावत् न प्राप्यते तावदेष परिणयः तिष्ठतु, सर्वथा उभयोर्मङ्गलं वाञ्छनीयमिति। तदाकर्ण्य सर्वे सन्तुष्टा अभवन्। यौगन्धरायणः प्रोवाच अशुभे लग्ने विवाहे संवृत्ते राजा कलिङ्गदत्तोऽपि अत्यन्त

दुःखितः स्यात् । तदाकर्ण्य कलिङ्गसेना यद् भवद्भ्यो रोचत इत्यभिधाय तूष्णीमभवत् ।

अथ यौगन्धरायणः, गणकवर्गैः सह राजान्तिकमुपगम्य राजबन्दिन्यास्तमभिप्रायं निवेद्य राजानञ्च सुस्थिरं कृत्वा गृहमगमत् । विश्रान्तश्च क्षणं योगेश्वरं नाम सुहृदं ब्रह्मराक्षसं सस्मार । स्मृतश्च स तत्क्षणमुपेत्य सप्रश्रयमवोचत् मित्र ! किमर्थं मां स्मृतवानसि ? ततो मन्त्री राजकलिङ्गसेनयोर्वैवाहिकीं वार्त्तां कथयित्वा अब्रवीत् मित्र ! साम्प्रतं मासषट्काभ्यन्तरे विवाहः प्रतिबद्धः, एतस्मिन्नन्तरे अस्याः प्रवृत्तिस्त्वया प्रच्छन्नमवगन्तव्या, विद्याधरा निश्चितमेवेनां प्रच्छन्नं कामयन्ते, न खलु तादृशी रूपराशिस्त्रिलोक्यां दृष्टचरा वा श्रुतपूर्वा । यथा केनापि सिद्धविद्याधरेणास्याः सङ्गमः स्यात् तथा भवता यतितव्यं, तथा सति अस्माकं राजा तामन्यासक्तां दृष्ट्वा विरज्येत । ब्रह्मराक्षसोऽभ्यधात् मन्त्रिन् ! यदि तुभ्यं रोचते, तदेनां कौशलेन निहनिष्यामि । मन्त्री न्यगदत् मित्र ! मामैवं, तथात्वे सम्यक् अधर्मोऽस्माकं भवेत् । तत्त्वया यथा कथञ्चिदस्या दोषानुद्घाटयितुं यतस्व, तेनैवास्माकं मनोरथसिद्धिर्भविता । एवमुपदिश्य ब्रह्मराक्षसं प्रास्थापयत् ।

अथ ब्रह्मराक्षसे तदादेशं शिरसि गृहीत्वा प्रच्छन्नं कलिङ्गदेशगृहं प्रविशति सा दानवकन्या सोमप्रभा तदन्तिकमाजगाम । श्रुत्वा च तन्मुखात् रात्रिवृत्तान्तं वक्तुं प्राक्रमत सखि ! बहुपूर्वमागताहं प्रच्छन्नं यौगन्धरायणेन सह युष्माकमालापान् श्रुतवत्यस्मि, त्वया मम निषेध-

मुल्लङ्घ्य सहसा कथं राजान्तिकं दूतः प्रहितः ? दुर्निमित्त-मदूरीकृत्य कार्य्यं समारब्धे प्रायशः अनिष्टं घटत एव, अत्र तां कथां शृणु ।

पुरासीत् अन्तर्वेद्यां नगर्य्यां वसुदत्तो नाम ब्राह्मणः । तस्य विष्णुदत्ताख्ये तनये षोड़शवर्षीये विद्यालाभाय वलभीं गन्तुमुद्यते अन्ये सप्त ब्राह्मणसुताः सङ्गिनः समभवन् । सर्व एव ते मूर्खाः, केवलं विष्णुदत्तः सुबुद्धिः कुलीनश्च । प्रयाणात् पूर्वं ते परस्परशपथमकार्षुः कोऽपि कमपि न परित्यक्ष्यतीति । एवं स्थिते विष्णुदत्तः पितृभ्यामननुमोदित एव रात्रौ प्रस्थितः पथि सहसा किमपि दुर्निमित्तं दृष्ट्वा अन्यान् बन्धून् गृहं प्रत्यागन्तुं परामर्शमदात् । अकरोच्च पुनः शुभेऽहनि यात्रायाः प्रस्तावम् । परं मूर्खाः सहचराः तत्रासम्मताः प्रत्यागन्तुं नैच्छन् । अगत्या विष्णुदत्तोऽपि निरन्तरं हरिं स्मरन् तैः सह अनिच्छन्नेव गन्तुं प्रारभत । परेद्युश्च गच्छन् अपरमेकमनिमित्तं दृष्ट्वा बन्धून् पुनः प्रत्यागन्तुमवदत् परं ते समधिकभर्त्सनया तं तिरश्चक्रुः । तदा विष्णुदत्तः क्षुब्धमना एव चचाल, प्रतिजज्ञे च प्राणहानावपि हितमहितं वा किमपि न कदाचित् कथयिष्यामीति ।

एवमधार्य्य विष्णुदत्तो गच्छन् सायं कमपि शवरग्राममासेदितवान् । तत्र च कामपि तरुणीं शवरीं दृष्ट्वा विश्रामाय सर्वे तद्गृहं प्राविशन् । अथ श्रान्तेषु सर्वेषु निद्राभिभूतेषु केवलमेको विष्णुदत्तो जाग्रदवतस्थे । ददर्श च क्षणान्तरे कमपि युवानं प्रच्छन्नं तद्गृहमागच्छन्तम् । ततश्च

सुचिरं तौ विहरन्तौ क्रमेण निद्रया अभिभूतौ दृष्ट्वा विष्णु-दत्तः सनिर्वेदं सुचिन्तित एव तस्थौ ।

अत्रान्तरे गृहपतिर्गृहमागत्य तथास्थितं जारं दृष्ट्वैव तच्छिरश्चिच्छेद । सा तु युवती तथैव निद्रिता व्यतिष्ठत । अथ स करस्थमसिं भुवि निक्षिप्य खट्टान्तरे अशेत । क्षणा-न्तरे च सा जागरिता उपपतिं विनष्टं पतिं निद्रितञ्च दृष्ट्वा उत्थाय एकेन हस्तेन जारस्य शिरः, अपरेण कबन्धं गृहीत्वा गृहात् निश्चक्राम । ततश्च शीघ्रमेव तच्छरीरं कस्मिंश्चित् भस्मराशौ निधाय पुनर्गृहं प्रत्यागमत् । विष्णु-दत्तोऽपि शवर्याः पश्चात् निष्क्रान्तस्तत् सर्वं दृष्ट्वा अग्र एव प्रत्यागत्य बन्धूनां मध्ये शयनमकरोत् । अपश्यच्च सा शवरी पुनर्गृहं प्रविश्य तेनैवासिना पत्युः शिरश्छित्त्वा वहिर्गत्वा चीत्कारमकार्षीत् । तेन च चीत्काररवेण सर्वे ते बन्धवः अजागरुः प्रतिवासिनश्च सर्वे समागच्छन् । अथ ते शवर-राजं तथा निहतं दृष्ट्वा यावत् तान् पथिकान् बन्धून् हन्तु-मुद्यच्छन् तावत् विष्णुदत्तः सविनयमब्रवीत् भद्राः ! मा ब्रह्महत्या कार्य्या, न वयमस्य अकार्य्यस्य कर्त्तारः, इयमेव दुराचारा शवरी पतिं निहतवती, मया द्वारान्तरालात् सर्वमामूलतो दृष्टं वहिर्गत्वा च । यद्यभयं दीयते, तदा सर्वमाख्यातुमिच्छामि । एवमभिहिते सर्वे ते साम्प्रतं क्षमा-वन्तः सर्वमाख्यातुं समादिशन् । ततोऽसौ विष्णुदत्तः तान् वहिर्नीत्वा तस्मिन् भस्मकूटे सकबन्धं मस्तकमेकमदर्शयत् ।

तथा दृष्ट्वा ते शवराः विष्णुदत्तादीन् निर्दोषान् मत्वा सत्यजुः । ते च सर्वे मूर्खा बन्धवः प्रस्थिता दुर्निमित्तदर्शने-

नैवेयमापदुपस्थितेति निश्चितवन्तः विष्णुदत्तं बहुशः प्रशशंसुः ।

सोमप्रभा कलिङ्गसेनामेतदाख्याय पुनरब्रवीत् सखि ! कस्मिंश्चिदपि कार्य्ये आरब्धे यदि तत्र किमपि अनिमित्तं दृश्यते तदा अनिष्टमेव घटते, तस्मात् राजान्तिकं दूतप्रेषणेन भवत्या न भद्रं कृतम् । विधाता निर्विघ्नेन ते पाणिग्रहणं सम्पादयतु, परं कुलस्य उद्यमस्य कृतत्वात् विवाहो विलम्बतः सम्भविष्यतीति मन्ये । अन्यच्च देवतास्त्वां प्रति अनुरागिण्यो लक्ष्यन्ते, नीतिनिपुणो यौगन्धरायणश्च ते नानुकूल इव प्रतिभाति, स खलु धूर्त्ततमो धर्म्मशीलत्वात् त्वां न विनाशयेत् परं विवाहविघ्नं जनयेदेव, यतेत च विवाहे निश्चितेऽपि दोषाननुसन्धातुम् । अपरञ्च श्रूयताम् ।

अस्ति इक्षुमती नाम नगरी । तस्याः प्रान्ते इक्षुमती नाम या नदी वर्त्तते, सा विश्वामित्रस्य राजर्षेः सृष्टिः । अस्याः समीपे यत् महावनमस्ति तत्रैवास्य महर्षेराश्रमः । तत्रैवाश्रमे मङ्कणको नाम कश्चिदूर्द्ध्वपादो महामुनिस्तपश्चचार । कदाचित् मेनका नामाप्सराः अन्तरीक्षेण गच्छन्ती तस्य ऋषेर्नयनानन्दिनी अभूत् । तेनैवास्य वीर्य्यं स्खलितं कस्मिंश्चित् कदलीगर्भे पपात, तस्माच्च कन्यैका अजनि । मङ्कणकस्तां नाम्ना कदलीगर्भामकरोत् । सा च तदाश्रम एव दिने शशिकलेव व्यवर्द्धत ।

एकदा मध्यदेशाधिपतिर्दृढवर्म्मा मृगयार्थमश्वारूढ़स्तद्वनं प्रविष्टस्तां कदलीगर्भां निरीक्ष्य तां परिणेतुमियेष । मुनौ समित्कुशादिकमाहृत्य आश्रममुपगते राजा अश्व-

पृष्ठादवरुह्य प्रणम्य च स्वं परिचयमदात्। ततश्च मुनिना आहूय राज्ञ: आतिथ्यं कर्तुमादिष्टासौ कन्यका सविनयं राजानं यथोचितेनातिथ्येन समभ्यर्चितवती। अथ राज्ञा कन्यावृत्तान्तं परिपृष्टो मन्त्रर्षिस्तस्या आजन्मवृत्तान्तं नाम च समाख्यत्। अनन्तरं तां मेनकासम्भूतां विदित्वा राज्ञा तद्विवाहार्थमभिलषिते मुनिरपि तां तस्मै दातुमभिललाष।

मेनका च दिव्यदृष्ट्या कन्यापरिणयं जानन्ती तमाश्रमसमागम्य विवाहयोग्येन वेशेन कन्यामलङ्कृत्य तस्याश्च हस्ते कतिपयान् सर्षपान् दत्त्वा समभाषत वत्से! यदि कदाचित् पत्युरवमता अत्रागन्तुमभिलषे:, तदा एतेषां सर्षपाणां प्रभावेण अत्रागन्तुं शक्ष्यसि। एवमुपदिश्य कन्यां यथाविधि समुद्वाह्य राज्ञा सह प्रास्थापयत्। कन्या च मातुरादेशेन सर्षपान् पथि विकिरन्ती पत्या सह प्रस्थिता। क्रमेण नृपति: स्वां राजधानीमुपस्थित: सचिवान् सर्वं वृत्तान्तमाख्याय अन्यस्त्रीसङ्गवर्जित: केवलया कदलीगर्भयैव समं निरन्तरं विजहार।

अथ महादेवी पत्युस्तथाचरितेन नितरां विरक्ता मन्त्रिणं रहसि आहूय सकरुणमवादीत् धीमन्! राजासौ नवीनां वधूमासाद्य अस्मान् सर्वा एव परित्यक्तवान् विस्मृतवांश्च अस्माकं पूर्वानुरागम्। तद् यावत् कौशलेन सपत्नीमिमां दूरीकुरुष्व, नो चेत् प्राणांस्त्यक्ष्यामीति। मन्त्री अवादीत् देवि! नैतत् मादृशानां कर्म, कार्य्ये चास्मिन् बहु कुहकं कूटञ्च प्रयोक्तव्यम्। परिव्राजिका एव अत्र निपुणा, तत् कामपि परिव्राजिकामाहूय अभीष्टं साध-

यितुं यतस्व। एवमुपदिश्य मन्त्रिणि प्रस्थिते राजमहिषी चेटीमुखात् समाहूय परिव्राजिकामेकां स्वमभिप्रायं तस्यै निवेद्य बहून् पारितोषिकान् दातुमङ्गीचकार।

अथ परिव्राजिका धनलुब्धा महाराज्ञ्या अभीष्टं साधयितुं सम्मता प्रतस्थे। न चचाल च बहुतरमनिष्टमाशङ्कमानापि तदध्यवसायात्। ततश्च सुहृदमेकं नापितमासाद्य सर्वे वृत्तान्ते तया वर्णिते धूर्त्तोऽसौ नापितः प्रभूतार्थलोभात् कदलीगर्भां दूरीकर्त्तुं प्रतिजानानस्तथा कौशलं प्रायुङ्क्त, यथा राजा अविलम्बमेव तां परितत्याज। कदलीगर्भा तु महत्यामापदि निपतिता स्वनिक्षिप्तसर्षपजनितान् वृक्षान् अनुसृत्य पितुराश्रममागमत्। पिता च सहसोपस्थितां तां समीक्ष्य प्रथमं दुश्चारिणीं मत्वा समनन्तरमेव प्रणिधानेन सर्वं वृत्तान्तमवगम्य स्वयं कन्यां पुनस्तत्पतिसमीपं नीत्वा राज्ञे समस्तं वृत्तान्तं न्यवेदयत् प्राबोधयच्च राजन्! देव्याः प्रबलतरसापत्न्यभाव एवास्यानर्थस्य मूलं, तदत्र यद् भवते रोचते तत् क्रियताम्। नापितश्च तदानीमुपस्थितः ऋषेर्भयात् सर्वं प्रकटितवान्। राजा च तत्सर्वमाकर्ण्य सम्यक् विश्वस्तः पुनः कदलीगर्भां गृहीत्वा मुनिं समुचितेन सत्कारेण सन्तोष्य आश्रमं प्रास्थापयत्।

तदेवं सखि! सपत्न्यः विना हेतुं नाना दोषान् उद्भावयन्ति। तस्मात् त्वमत्र अवहिता तिष्ठस्व, मा केनापि विप्रलब्धा भूः, केवलं वत्सेश्वरं प्रति समनुरक्ता कालं प्रतीक्षस्व। अहमद्य बहुयत्नेन भर्त्तुरादेशं लब्ध्वा त्वदन्तिकमा-

गता, अतः परं पुनरागमनं मे नैव घटते, तदिदानीमहं गृहं गच्छामि, कार्य्यञ्च मे प्रभूतं विद्यते, यदि पुनः स्वामी तवान्तिकमामन्तुं मामनुमन्येत, तदा पुनरागमिष्यामीति समाख्याय साश्रुमुखी प्रस्थानमकरोत् ।

---

# चयस्त्रिंशत्तरङ्गः ।

---

अथ कलिङ्गसेना त्यक्तपितृमातृबन्धुवर्गा केवलं वत्सराजं ध्यायन्ती कौशाम्ब्यां नगर्य्यामेकाकिनी कालं निनाय । वत्सराजः कलिङ्गसेनाप्राप्तौ बहु विलम्बं दृष्ट्वा अत्यर्थमुत्कण्ठितः चित्तविनोदनार्थं देव्या वासवदत्तायाः भवनं प्राविशत् । देवी च सा मन्त्रिणः परामर्शेन राजानं सविशेषं परिचचार । राजा कलिङ्गसेनावृत्तान्तेन देवी विरक्तेति सम्भाव्य शुश्रूषया तु तद्विपरीतं दृष्ट्वा देवीमपृच्छत् प्रिये ! श्रुतं भवत्या यत् कलिङ्गसेना नाम राजकन्या स्वयंवरार्थं मामुपगतेति । तदाकर्ण्य देवी अविकृतमना एव प्रत्यभाषत नाथ ! श्रुतं सर्वम्, आह्लादिता चास्मि । आर्य्यपुत्रेण तस्याः पाणौ गृहीते कलिङ्गदत्तोऽस्माकं वशे भविष्यति, तद्राज्यञ्च नाथेन लप्स्यते । एतदाकर्ण्य वत्सभूपतिरतीव प्रीतमनास्तामभ्यनन्दत् । क्रमेण रजन्यामुपस्थितायाम् उभौ राजा राज्ञी च पानभोजने कृत्वा सुखेन निद्रामगमताम् ।

क्षणेन च राजा निद्रां विहाय जागरितश्चाचिन्तयत् किमसौ देवी महानुभावा, उतास्मन्मनस्तुष्टये एवमभ्यधत्त, कलिङ्गसेनायां सपत्न्यां कथमेवं मनस्तुष्टिः सम्भवेत्, पद्मावती वा मनस्विनी किमेतदनुमोदना सहिष्यते? मन्ये परिणये संवृत्त एव उभे प्राणान् त्यक्ष्यत इति तदेवं महद्-निष्टं सर्वनाशश्च सम्भवेत्, तस्मात् कलिङ्गसेनापरिणयनं न मे श्रेयस्करमिति। एवमालोच्य तां रात्रिं तत्र नीत्वा परेद्युरपराह्णसमये पद्मावतीगृहमगमत्। सा च अविकृतमनसैव पत्युः शुश्रूषायां निरता तथैव राजानं पर्य्यचरत्, यथा तस्याः किमपि चित्तवैलक्षण्यं न लक्ष्यते स्म।

परेद्युर्नृपतिर्देव्योराचरणं सर्वं यौगन्धरायणाय व्यज्ञापयत्। ततः कालज्ञो मन्त्री राजनि दृष्टिं निवेश्य क्षणं विविच्य चाब्रवीत् देव! यद् भवता मनसि क्रियते, तादृशमनयोः प्रकृतिर्न। स्त्रीणां भयङ्कर एष स्वभावः, यत् साध्व्यः स्त्रियः प्राणान्तेऽपि सापत्न्यं न सहन्ते। दर्शयन्ति च सर्वेषु विषयेषु निःस्पृहताम्। तन्मन्ये देव्यौ मरणाय कृतनिश्चये अभूताम्। अत्रैतां कथां कथयामि श्रूयताम्।

अस्ति भारतवर्षस्य दक्षिणे गोकर्णं नाम नगरम्। तत्रासीत् श्रुतसेनो नाम कृतविद्यो नृपतिः। स तु सर्वासां विद्यानां सम्पदाञ्च आश्रयोऽपि अनुरूपायाः पत्न्या अभावात् सततमतप्यत। कदाचित् हरिशर्म्मा नाम कश्चिद् ब्राह्मणः प्राह देव! मया अद्भुतद्वयं दृष्टं श्रूयताम्।

पुराहं तीर्थदर्शनार्थमयासिषम्। क्रमेण पञ्चसु तीर्थेषु कृतस्नानो गच्छन्नपश्यं कश्चित् कृषीवलः क्षेत्रेऽवस्थाय

गायति। अवसरे चास्मिन् कश्चन परिव्राजकः समागत्य पन्थानमपृच्छत्। कर्षकोऽनवधानात् तद्वाक्यं नाशृणोत्। परिव्राजकस्तु कुपितस्तं तिरश्चकार। ततः कृषीबलस्तस्य तिरस्कारं श्रुत्वा सङ्गीतं विहाय चाब्रवीत् अहो! परिव्राडपि धर्मस्य लेशमपि नावगतवान्, हा कष्टम्! अहं मूर्खोऽपि धर्मतत्त्वमज्ञासिषम्। तदाकर्ण्य भिक्षुः कौतुकादब्रवीत् भद्र! किं त्वया धर्मतत्त्वमवगतं ब्रूहि। कर्षकोऽब्रवीत् यदि ते कौतूहलं तदस्यां छायायामुपविश्य, ब्रवीमि। परिव्राडुपाविशत्, कर्षकश्च वक्तुमारभत।

अन्यत्र देशे यज्ञदत्तः सोमदत्तः विश्वदत्तश्चेति त्रयः सोदरा द्विजातयः। तेषु ज्येष्ठमध्यमौ कृतदारौ, कनिष्ठस्य तु विवाहो न समजनि। अहं तेषां गृहस्थितः कर्षकः। कनिष्ठस्तु भृत्यवत् मयैव सह सततमतिष्ठत्। विश्वदत्तस्तु सच्चरित्रः परं नितरां निर्बोधः। कदाचित् भ्रातृपत्न्यौ कामपरे कनिष्ठान्तिकमुपयाते अपि स तयोरभिमतं नैव चकार। ततश्च ते स्वं स्वं पतिमुपगच्छन्त्यौ देवरोऽयमस्मान् कामयते इति मिथ्याभियोगं ददतुः। स्त्रीबुद्धिर्हि लोकानां सदसद्विवेकहरी। तथाच तौ तदाकर्ण्य भृशं कुपितौ कनिष्ठमूचतुः भ्रातः! त्वं क्षेत्रेषु गत्वा तत्रत्यं वल्मीकं कर्त्तित्वा समानं कुरु। तस्मिंश्च भ्रात्रोर्वचनमाकर्ण्य क्षेत्रं गत्वा कुद्दालेन तत् वल्मीकं कर्त्तितुमुपक्रान्ते अहं निषिध्य तमब्रुवं वल्मीकं मा खन्त, सर्पोऽत्र तिष्ठति।

स तु अश्रुतमद्वचन एव यदा तत् खनति तदैव तस्मात् स्वर्णपूरितं कलसद्वयं निर्गतम्। मया निषिद्धोऽपि

असौ तदादाय भ्रात्रोः सकाशं गत्वा ताभ्यां तत् समर्पयत्। तथापि क्रूरमती तौ सोदरौ अंशं दातुमनिच्छन्तौ तस्य हस्तौ पदौ च कर्त्तितवन्तौ। तथापि कनिष्ठस्तयोरुपरि न विद्वेषमकरोत्। अनन्तरञ्च तस्य ज्येष्ठभ्रातृभक्त्यतिशयेन पुनर्हस्तपदौ प्ररूढौ। अहमेतादृशं व्यापारं स्वचक्षुषा निरीक्ष्य क्रोधमलं पर्य्यहरम्। त्वं तापसोऽपि क्रोधमद्यापि न परित्यक्तवानसि। अक्रोध एव स्वर्गसोपानमित्यत्रैव पश्य। एवमुक्त्वा स कर्षकः सद्य एव देहं त्यक्त्वा स्वर्गमगमत्। इदमेव प्रथममद्भुतं, द्वितीयं शृणु।

अहमेकदा तीर्थं पर्य्यटन् समुद्रतटे वसन्तसेननाम्नः कस्यचित् नृपतेः नगरमगमम्। अपश्यञ्च तत्र राजभवने यज्ञोत्सवनिमित्तं ब्राह्मणभोजनं प्रवृत्तम्। अहमपि तत्रोपस्थितः राजान्तिकं गतः तस्य विद्युद्द्योतां नाम कन्यकामद्राक्षम्। तस्याः सौन्दर्य्यं दृष्ट्वा मुनयोऽपि कामसन्तप्ताः प्राणान् धारयितुं न शक्नुवन्ति। तादृशमद्भुतं रूपं कदाचित् न दृष्टम्। श्रायते मया सम्यक् यन्महाराजो विद्युद्द्योतां लभेत चेत्, सर्वं त्यक्ष्यतीति तथापि मया वक्तव्यमेव। पुरा देवसेनो नाम नृपतिरुन्मादिनीं नाम कामपि वणिक्सुतामलक्षणेति न परिणीतवान्, परं तस्य प्रधानसचिवस्तां परिजग्राह। कदाचित् उन्मादिनीं स्वामिगृहोपरि गवाक्षमार्गे दृश्यमानां निरीक्ष्य राजा परित्यक्तसर्वविषयः प्राणान् जहौ।

अथ नृपतेः श्रुतसेनो विप्रमुखात् विद्युद्द्योतामाकर्ण्य उन्मत्तवत् अस्थिरचेताः सद्य एव ब्राह्मणेन तामानाय्य पर्य्य-

पर्य्यणैषीत्। अनन्तरञ्च मालदत्ताख्यायाम् अन्यस्यां कन्यायां परिणीतायां सा विद्युद्योता शुचा विदीर्णहृदया एव सद्यः प्राणान् तत्याज। तच्छ्रुत्वा राजा ममार, मालदत्ता अग्निं प्रविवेश, राज्यञ्च तदीयं विनष्टमभूत्।

तदेवं राजन्! प्रकृष्टप्रेमभङ्गः नितरां दुःसहः। यदि भवान् कलिङ्गसेनां परिणयेत् तदा देव्यौ वासवदत्तापद्मावत्यौ निःसंशयमेव प्राणान् त्यक्ष्यतः। तथा मातृशोकार्त्तौ राजकुमारो नरवाहनदत्तश्च शोचनीयां दशामाप्स्यति, देवोऽपि निरतिशयमनुतापं लप्स्यते। तदेवं महाननर्थपातः सम्भाव्यते। तस्मात् यथा सर्वं समञ्जसं स्यात् तथा देवेन संविधातव्यं, तिर्य्यञ्चोऽपि स्वार्थमपरित्यजन्त एव चेष्टन्ते। महाराजः सर्वं जानाति, किमधिकेनास्माकं प्रज्ञापेन। इत्युक्त्वा यौगन्धरायणो विरराम।

अथ वत्सेश्वरस्तद्वचनमाकर्ण्य सचेतनः समभाषत मन्त्रिन्! यदुक्तं भवता, तत्र नास्ति सन्देहः, तदलं कलिङ्गसेनापरिणयेन, लग्नं दूरवर्त्तितया यन्निर्णीतं तद्भद्रं कृतम्। नो चेत् स्वयंवराया महिलायाः परित्यागे महानधर्म्मः समभविष्यत्। एवं नृपतिनोक्ते यौगन्धरायणः परं हर्षमवाप। ततश्च राजा देवीं वासवदत्तामुपगम्य तां सान्त्वयन् प्रोवाच देवि! कमलस्य कमलमिव त्वं मे जीवितं, विवाहो दूरे आस्तां, नाहं तस्या नामापि करिष्यामि। एवमभिधाय सानन्दं तया सह तां रात्रिमनयत्।

यौगन्धरायणनियुक्तोऽपि ब्रह्मराक्षसः कलिङ्गसेनाप्रवृत्तिमवगच्छन् तस्यामेव रजन्यां स्वस्य प्रभुसकाशमाप, प्रोवाच

च अहं कलिङ्गसेनाया गृहाभ्यन्तरे तद्वहिश्च स्थितः सम्यग्-द्राक्षं, तत्र दिव्यो वा मानुषः समागमो नास्ति। परन्त्वस्य सायमेकोऽव्यक्तशब्दः सहसा हर्म्याग्रभूम्यन्तरीक्षतः श्रुतः। श्रुत्वा च तत्कारणं विज्ञातुं ज्ञापनीं विद्यामचोदयम्। सापि किमपि निश्चेतुं नाशकत्। अथाहं बहु चिन्तयन् निश्चय-मकार्षं यथा कलिङ्गसेनाया रूपलावण्यविमुग्धः कश्चित् दिव्यपुरुष एवास्य निदानमिति। इमाञ्च दिव्या अभिलष-न्तीति तत्सख्या वचनेनैव विज्ञातम्। एतद्विज्ञापनमेव अस्या गमनस्य प्रयोजनम्। साम्प्रतं पृच्छाम्येतत् तिर्य्यञ्चोऽपि आत्मानं रक्षित्वा स्वार्थाय यतन्ते इति यद्राजान्तिके भव तोक्तं तदहमलक्षितं स्थित्वा अशृणवं कौतूहलञ्च तदा-रभ्य तद्वृत्तं श्रोतुं वर्त्तते, तदाख्याय तदाख्यानं मामा-प्यायस्व। यौगन्धरायणोऽब्रवीत् मित्र ! शृणु, कथयामि।

आसीत् विदिशाया नगर्य्या वहिर्महान् वटतरुः। तत्र नकुलोलूकमार्जारमूषिकाः निवसन्ति स्म। सर्वेषामेव तेषां कुलायाः विभिन्नाः। नकुलमूषिकौ मूलदेशवर्त्तिनि विले, विड़ालः मध्यवर्त्तिनि कोटरे, पेचकः शिरःस्थिते लता-सन्ताने न्यवसन्। एषु च मूषिकस्त्रयाणामेव वध्यः, मार्जा-रस्तु त्रयाणामेव हन्ता। मूषिकः नकुलविड़ालाभ्यां भयात् आहारार्थं पेचकस्तु स्वभावत एव रात्रौ भ्रमति स्म। मार्जारः पुनर्दिवा रात्रौ च निर्भयं विचरन्ति स्म। वृक्षस्य तस्यान्तिके यदेकं यवक्षेत्रमासीत्, विड़ालः सर्वदैव तस्मिन् मूषिकान् अन्वेषितुमगमत्। अन्येऽपि यवान् खादितुं गच्छन्ति स्म।

कदाचित् कस्मिंश्चित् व्याधे तत्रागत्य विड़ालस्य पद-पङ्क्तिं दृष्ट्वा पाशं बध्नति मार्जारोऽसौ रजन्यामागत्य तत्र बद्धः । मूषिकः आहारार्थं तस्मिन्नागच्छन् जालपतितं विड़ालं दृष्ट्वा गाढ़ाढ़ं नृत्यति स्म । इत्थं व्यतिकरे मूषिक-प्रवेशमार्गेण पेचकनकुलावपि तत्रागच्छताम् । तौ विड़ालं पाशबद्धं दृष्ट्वा मूषिकं धर्तुं बद्धपरिकरावभूताम् । मूषिको दूरात् तदवलोक्य सोद्वेगमचिन्तयत् किमिदानीं कर्तुं युज्यते, यदीदानीं सामान्यशत्रुं विड़ालमाश्रयेयं तदासौ बद्धोऽपि मामेकेनैव प्रहारेण हन्यात् । अथास्माद्विड़ालात् पलाय्य दूरमपसरामि, तदेतयोः कोऽपि मां नाशयेत् । तदस्मिन् शत्रुसङ्कटे क्व गच्छामि, किं वा करोमि, यद् भवतु, विपन्नमेनं मार्जारमेवाश्रये । कदाचित् मां पाश-च्छेदनसमर्थं दृष्ट्वा आत्मरक्षार्थं रक्षिष्यति ।

एवं विभाव्य मूषिकः शनैर्मार्जारसकाशमेत्य अब्रवीत् भद्र ! त्वां पाशबद्धं दृष्ट्वा दुःखितोऽस्मि, यद्यनुकम्पेथाः, त्वां पाशात् छित्वा रक्षामि । सहवासस्नेहात् सुमतीनां शत्रु-ष्वपि स्नेहो जायते । किन्तु यावत् तव मनो न ज्ञातं तावत् त्वयि नैव विश्वासः । एतदाकर्ण्य विड़ालोऽवदत् भद्र ! विश्वसितु भवान्, प्राणदानेनाद्य त्वं मम मित्रं जातः । एतच्छ्रुत्वा मूषिकस्तं मार्जारं क्रोड़ं निनाय । नकुलोलूकौ तद् दृष्ट्वा निराशौ पलायाञ्चक्राते । अथ विड़ालः पाशबन्धनेन पीड़ितः मूषिकमब्रवीत् मित्र ! रात्रिर्गता एव । तत् शीघ्रं मे पाशान् छिन्धि । मूषिकः शनैः शनैः पाशान् छेत्तुमारब्धः व्याधागमनं प्रतीक्षते स्म । यावत् व्याधः समीपं

नागच्छति, तावत् मिथ्यादशनशब्दं करोति स्म। प्रातश्च यावद् व्याधः समायाति तावत् सोऽपि पाशान् चिच्छेद। मार्जारः व्याधभयात् पलायते स्म, मूषिकोऽपि पलायमानः स्वं विवरं प्रविष्टः। अथ मार्जारे पुनराहृतवति मूषिको नोत्तरं ददौ। तदेवं कार्य्यानुरोधेन शत्रुणापि मित्रता कर्त्तुं युज्यते, पश्य मूषिकस्तिर्य्यग्योनिरपि प्रज्ञाबलेन बहुभ्यः शत्रुभ्योऽपि आत्मानम् अरक्षत्, का कथा मनुष्याणाम्। तस्मात् बुद्धिरेव परं मित्रं न पुरुषकारः। तदेवं योगिन्! बुद्ध्या तथा सर्वमनुतिष्ठ, यथा कलिङ्गसेनायाः कोऽपि दोष उद्घाश्येत। इदञ्च निश्चितं, यत् देवता अपि कलिङ्गसेनां प्रार्थयन्ते। त्वञ्चाकाशे कस्यापि आलापं श्रुतवानसि, तस्मिंश्च शब्दे पुनर्गृहान्तरे श्रुते कलिङ्गसेनायाः सम्यग् अमङ्गलं भविता, राजा तां न कदाचनोद्वहेत्। अकृते च विवाहे न तस्याधर्म्मः।

मन्त्रिणैवमभिहितो योगेश्वरस्तस्य प्रज्ञाबलं बहु प्रशस्य अब्रवीत् मित्र! अभीष्टसाधनाय गच्छामीति उक्त्वा सम्प्रतस्थे। कलिङ्गसेना च वत्सराजानुरागिणी तद्विरहेण व्याकुला कदाचित् राजानं हर्म्योपरि पादचारेण विहरन्तं दृष्ट्वा शान्तिमलभत।

अत्रान्तरे विद्याधरराजो मदनवेगः कलिङ्गसेनादर्शनेन सञ्जातमदनवेगः तल्लाभार्थं सुयोगमन्विच्छन् अपि अकृतकार्य्य एव प्रतिदिनं तस्या वासभवनोपरि सञ्चरमाण एव गच्छति स्म। अथ तपसाराधितस्य धूर्जटेरादेशं स्मरन् विद्याप्रभावेण वत्सराजवेशः कलिङ्गसेनागृहं प्राविशत्।

सा च स्वाभिमतं वत्सेश्वरमुपस्थितं वीक्ष्य भयसम्भ्रमकम्पित-कलेवरा समुत्थाय गान्धर्वविधानेन तस्य पाणिं जग्राह। अस्मिंश्चावसरे योगेश्वरो ब्रह्मराक्षसः अलक्षितं तद्गृहं प्रविष्टः वत्सराजं तत्र स्थितं दृष्ट्वा विषादमुपगतः सत्वर-मागत्य तद्वृत्तान्तं यौगन्धरायणाय प्रोवाच। यौगन्धराय-णेन वासवदत्तागृहं गत्वा पश्य इत्यभितोऽसौ राक्षसः सत्वरं तत्र गत्वा देव्या वासवदत्तायाः पार्श्वे निद्रितं वत्सभूपति-मद्राक्षीत्। दृष्ट्वा च पुनः प्रतिनिवृत्तः कलिङ्गसेनागृहे तद्वेशधारिणं मदनवेगं निद्रितमपश्यत्। ततश्च योगेश्वरः पुनर्मन्त्रिवरमभ्येत्य अभाषत, मित्र! अन्यो मादृशः क्षुद्र-मतिः, त्वन्तु नीतिचक्षुषा सर्वमेव वेत्सि, तव मन्त्रबलेन असाध्यमपि साध्यते। असूर्य्यमाकाशम्, अनन्तः सरः, मन्त्रिशून्यं राज्यं सत्यशून्यञ्च वचः शोचनीयमित्युक्त्वा तिरो-ऽभूत्।

अथापरेद्युः प्रातः यौगन्धरायणः योगेश्वरमानीय तेन सह प्रस्तावसदृशम् आलापं कृत्वा राजान्तिकमाजगाम, प्रोवाच च कलिङ्गसेनाकामुकं राजानम्। देव! कलिङ्ग-सेना स्वैरिणी, तस्याः पाणिग्रहणं महाराजस्य नैव कर्त्त-व्यम्। इयं प्रथमतः प्रसेनं नरपतिमभिगता, ततस्त्वं वृद्धं दृष्ट्वा विरक्ता भवन्तं सर्वगुणरूपभूषितमुपस्थिता। तदेषा इच्छया अन्यसङ्गमपि कर्तुं न पारयति इति न। नात्र कि-मपिवैचित्र्यम्? तदाकर्ण्य राजावदत् मन्त्रिन्! कुलका-मिनी सा, ईदृशे अकार्य्ये किं प्रवर्त्तते? मदन्तःपुरे च प्रवेशे कस्य शक्तिरस्ति? एवमुक्तो यौगन्धरायणः प्रत्यभाषत देव!

यदि मे वचसि न विश्वासः, तद्रात्रावद्य प्रत्यक्षं दर्शयिष्यामि, तथात्वे देवस्य संशयनिरासः स्यात्। अतश्च दिव्यपुरुषाः कलिङ्गसेनामर्थयन्ते, ते चाप्रतिहतगतयः, कथं तेषां गतिर्निवार्य्येत। एवमभिहितो नृपतिस्तूष्णीमासीत्। यौगन्धरायणश्च राजानं प्रणम्य देवीं वासवदत्तामभ्येत्य सहर्षमवादीत् देवि! सिद्धं नः समीहितम्। इत्युक्त्वा सर्वस्मिन् वृत्तान्ते आवेदिते सा सन्तुष्टा मन्त्रिणं प्रणनाम।

अथ निशीथे वत्सराजो यौगन्धरायणेन सह कलिङ्गसेनागृहम् अलक्षितं यावत् प्रविशति, तावत् तत्पार्श्वे निजवेशधरं मदनवेगं शयानमद्राक्षीत्। तदवलोक्य राजा यावत् तं हन्तुं यतते, तावत् स जागरित एव स्वया विद्यया विद्याधररूपः सहसा गृहान्निःसृत्य खमुत्पपात। अनन्तरं च कलिङ्गसेना विगतनिद्रा शय्यां शून्यामालोक्य सोत्कण्ठमवादीत् कथं वत्सराजः अग्रत एव जागरितः मां त्यक्त्वा गच्छति? एतदाकर्ण्य यौगन्धरायणः प्राब्रवीत् देव! दिव्योऽयं पुरुषः महाराजरूपेण अबलामिमामग्रहीत्। अहमग्रत एव योगबलनैतत् दृष्ट्वा अद्य महाराजं स्वचक्षुषा दर्शितवान्, विद्याप्रभावेण देव एनं हन्तुं नैवाशकत्।

एवमभिभाष्य उभौ कलिङ्गसेनान्तिकमगच्छताम्। सा च तावुभौ दृष्ट्वा समुचितसमादरेण समभाषत महाराज! सहसा मां विहाय कुत्र गतोऽसि, मया एतावन्तं कालं अतिशयमुत्कण्ठया स्थीयते। अथ यौगन्धरायणः प्रोवाच राजपुत्रि! कोऽपि वत्सराजवेशं छलागतस्त्वां प्रतार्य्य पर्य्यणैषीत्, प्रभुरस्माकं त्वां न परिणीतवान्। एवमुक्त्वा

कलिङ्गसेना शल्यप्रोतहृदयेव क्षणं विह्वला साश्रुलोचना समब्रवीत् देव ! पुरा दुष्मन्तः शकुन्तलामिव मां गान्धर्व-विधिना परिणीय अद्य विस्मृतवानसि ? राजा तदाकर्ण्य अवनतमुखः समब्रवीत् राजकन्ये ! सत्यमेवाहं त्वां न पर्य्यणैषम्, अद्यैव तव गृहमभ्यागतोऽस्मि। ततश्च यौगन्धरायणः आगच्छतु देव इत्यभिधाय राजानं स्वगृह-मनयत्।

अथ तस्मिन् नृपे समन्त्रिणि गृहाविष्क्रान्ते सा विदे-शिनी यूथच्युतेव मृगी शोचनीयामवस्थां गता आत्मानम् असहायं निरुपायञ्चालोक्य अन्तरीक्षनिहितदृष्टिरवादीत् योऽसौ देवः वत्सेश्वररूपेण मां प्रलोभ्य पाणिमग्रहीत् सोऽधुना आत्मानं प्रकाश्य मत्समीपमागच्छतु, स एव मे प्रियतमः पतिरिति। एवमुक्त्वा विरतायां तस्यां सहसा मदनवेगो दिव्यवेशेन नभोमण्डलादवतीर्य्य तत्समीप-माययौ। कलिङ्गसेनापृच्छत् कस्त्वम् ? सोऽब्रवीत् अहं मदनवेगो नाम विद्याधराधिपतिः। पूर्वमहं स्वेच्छया भ्रमन् त्वां तव पितृभवनवर्त्तिनीं दृष्ट्वा विमोहितस्त्वत्प्राप्तये देवं त्रिलोकीनाथमाराधितवानस्मि। स तु देवदेवो मत्त-पसा प्रसन्नः मह्यं वरमभिमतं दत्त्वा अभाषत वत्स ! कलिङ्ग-सेना ते पत्नी भविता, यदा सा वत्सराजं प्रत्यनुरक्ता तत्-परिणयार्थिनी स्थास्यति, तदा त्वं वत्सराजरूपेण तां परिणेष्यसीति। तदहं तस्य भगवतो वरप्रदानप्रभावेण त्वां परिणीतवानस्मि। कलिङ्गसेनां तदाकर्ण्य समाश्वस्तां प्रियतमामालोक्य बहुविधेन अलङ्कारेण भूषयित्वा तस्मा-

आनुरोधेन तत्रैव संरक्ष्य पुनरागमनाय आकाशयानेन स्वस्थानं प्रातिष्ठत ।



## अथ चतुस्त्रिंशत्तरङ्गः ।

अथ कदाचित् वत्सनाथः कलिङ्गसेनाया निरुपमसौन्दर्य्यमालोक्य सञ्जातमन्मथावेश रजन्यां बद्धनिस्त्रिंश एकाकी तस्या गृहं प्राविशत् । तया च सगौरवं दत्तासनस्तां प्रार्थयामास । तदा सा अहं परकलत्रमिति उक्त्वा तत्प्रार्थनां नाभ्यनन्दत् । राजाब्रवीत् तृतीये पुरुषे अनुरक्तासि, तस्मात्त्वं बन्धकी जाता, त्वया सह संसर्गे न मम परदाराभिगमनदोषः सम्भवेत् ।

एतदाकर्ण्य कलिङ्गसेना प्रत्यभाषत राजन् ! भवत्स्वयंवरार्थिनीं मां विद्याधरो मदनवेगः महाराजस्य रूपेण मां प्रलोभ्य परिणिनाय । स एव मे पतिर्न द्वितीयः, तत् कथमहं बन्धकीति देवेनाभ्यधायि ? याः खलु कुमार्य्यः बन्धून् परित्यज्य एवं स्वेच्छाचारं प्रवर्त्तन्ते, तासामियमापद् घटेत, नात्र सन्देहः । सख्यां मम दुर्निमित्तं विदित्वा भवत्सकाशं दूतं प्रेषयितुं निवारयन्त्यामपि नाहं विलम्बमसहमाना तद्वाक्यमशृणवं तस्यैवैतत् फलम् । यदि भवान् मामसहायां प्रसह्य गृह्णीयाः, तदाहं सद्य एव प्राणान् त्यक्ष्यामि, कुलवधूर्भूत्वा पत्युरमङ्गलं कदापि नैव

करिष्यामि । महाराज ! पुरा चेदिवंशसम्भूतः इन्द्रदत्तो नाम राजासीत् । स खलु स्वकीर्तिमक्षयां कर्तुं कस्मिंश्चित्तीर्थे देवालयं प्रतिष्ठाप्य अन्तरान्तरा तद्दर्शनार्थमगमत् । अन्ये च बहवो लोकाः स्नानार्थं तत्र समागच्छन्ति स्म । कदाचित् एकस्यां वणिक्पत्न्यां तत्र स्नातुमागतायां स राजा तां दृष्ट्वा मोहितस्तस्यामेव रजन्यां तामभ्येत्य स्वाभिलाषं प्रकाशयामास । सा तु विदेशिनी कुलकामिनी प्रत्यब्रवीत् राजन् ! स्वयं रक्षकेण एतद्कार्य्यं नैव करणीयं, यदि कृतबुद्धिः बलात् मां स्पृशेः, तदा ते महानधर्म्मः भविष्यति । अहमपि सद्यः प्राणांस्त्यक्त्वा स्वं कलङ्कं क्षालयिष्यामि । अथ कामान्धो नरपतिर्यावत् तस्याः विनयवचनमगणयित्वा तां बलात् धर्तुं यतते, तावदेव सा भयविदीर्णहृदया प्राणान् परितत्याज । ततश्च पापात्मासौ नृपस्तेन पापेन दग्धः अल्पीयसैव कालेन पञ्चतामापत् ।

एवमुक्त्वा सा पुनरपि राजानमब्रवीत् देव ! मम प्राणान् हत्वा नाधर्मं सञ्चेतुमर्हसि, अहं भवतः सदने वसामि, यदि अनुमन्येत, स्थानान्तरं गम्यते । वत्सेश्वरः कलिङ्गसेनायास्तत् सर्वं वचनमाकर्ण्य सविनयमब्रवीत् राजनन्दिनि ! त्वं पत्या सह अस्मिन्नेव आवासे निर्भया निवस, नातःपरमहं त्वां किमपि वक्ष्यामि ।

एवमुक्त्वा नृपे प्रचलिते मदनवेगः गगनमण्डलात् अलक्षितं सर्वमिदं श्रुत्वा सहसा कलिङ्गसेनालयं प्रविश्य अवादीत् प्रिये ! भद्रं कृतं, यद्येवं नाकरिष्यः, तदा ते शुभं नाभविष्यत्, अहं कदापि तत् सोढुं नैव शक्नुयाम् । इत्य-

भुक्त्वा तां सान्त्वयित्वा सुखेन रजनीमतिवाह्य प्रातस्तिरोऽभवत्। एवं स प्रत्यहं कलिङ्गसेनासम्भोगार्थं यातायातमकरोत्।

कियता कालेन सा गर्भवती। कदाचित् विद्याधरो मदनवेगस्तस्या गर्भलक्षणमालक्ष्य अभाषत प्रेयसि! स्वर्गवासिनामस्माकमेष नियमः, यत् मनुष्यगर्भं परित्यज्य गम्यते, यथा कण्वमुनेराश्रमे मेनका शकुन्तलां तत्याज इति, तत्त्वयापि मानवगर्भस्त्याज्यः, परं त्वं पूर्वमप्सरा आसीः, इदानीं स्वेनैव अविनयेन देवराजात् शापं प्राप्य मनुष्ययोनिं प्राप्तासि, साध्वी अपि अस्मिन् लोके बन्धकीत्यभिहितासि च। तदिदानीं स्वं गर्भं रक्ष, अहं स्वस्थानं प्रतिष्ठे, यदाहं त्वया स्मर्य्येय, तत्क्षणमेव त्वत्समीपमागमिष्यामि। एतदाकर्ण्य सा अश्रुमुखी यावत् न किञ्चित् वक्तुं शशाक तावत् मदनवेगस्तां बहुरत्नादिप्रदानेन समाश्वास्य प्रतिज्ञापाशेन बद्ध्वा च स्वावासं प्रतस्थे। कलिङ्गसेना च अपत्यलालसा तस्मिन्नेव वत्सेश्वरनिकेतने अवास्थित।

एतस्मिन्नन्तरे भगवानुमापतिः कामपत्नीं रतिमादिशत् यथा तव पतिर्मत्सकाशे भृशमपराद्धतया भस्मीभूतः। सोऽधुना मदनुग्रहात् वत्सराजगृहे नरवाहनदत्ताख्यया समजनि। यदि त्वं पतिं पुनः प्राप्तुमिच्छसि, तदा मत्प्रसादेन मर्त्त्यलोके अयोनिसम्भवा भूत्वा स्वं पतिं पुनर्लभस्व। एवं रतिमादिश्य अम्बिकापतिर्ब्रह्माणमादिशत् त्वं रतिं त्वाजिर्तादिव्यदेहां मानुषीं कन्यां सृष्ट्वा कलिङ्गसेनाप्रसूतं पुत्रं मायया हृत्वा तत्स्थाने तां कन्यां संरक्ष

च आगच्छ। पद्मयोनिश्च ईश्वरादेशेन तत् सर्वं ज्ञात्वा स्वं धाम प्रययौ।

अथ कलिङ्गसेना अलोकसामान्यां तनयां प्रसूय पुत्र-लाभादपि समधिकं सन्तोषमवाप। वत्सराजः कलिङ्ग-सेनायाः कन्याजननवार्त्तामीश्वरानुग्रहादवगम्य शृण्वति यौगन्धरायणे वासवदत्तामवादीत् अहं निश्चितमशासिषं, कलिङ्गसेना सुरयोषित् शापच्युता मर्त्त्यलोकमागता, तस्याश्च या अद्भुतरूपा कन्या जाता, सा अतिसौन्दर्य्येण मम पुत्रस्य योग्या। सैव नरवाहनदत्तस्य महादेवी भविता। मन्त्री अब्रवीत् देव! कथमेवमात्थ, राजतनयो नरवाहन-दत्तः विशुद्धवंशसम्भूतः, सा तु बन्धक्याः कलिङ्गसेनायाः पुत्री, तदनयोर्महदन्तरम्। तस्मादनयोः संयोगो न प्रशं-सनीयः। एतदाकर्ण्य राजा क्षणं विचिन्त्याब्रवीत् नाहं स्वयमेवं ब्रवीमि, कश्चिद् दिव्यपुरुषो मदन्तः प्रविश्य मामाह। कलिङ्गसेना चेयं सद्वंशसम्भूता एकपत्नी च कर्म्मदोषेण बन्धकीत्यभिधीयते।

मन्त्री प्रोवाच देव! श्रूयते रतिर्मानवदेहं लब्ध्वा मर्त्त्य-लोकमवतीर्णेन पत्या मदनेन पुनः सङ्गममाप्स्यति। कामदाहात् परं तपसा सन्तुष्टो हरस्तस्यै एवं वरमदात्। अन्यच्च आकाशवाक् राजपुत्रं नरवाहनदत्तं मदनावतारं रतेश्च हरादेशेन मनुष्यलोके जन्म प्रथममेवासूचयत्। अद्य च या धात्री कलिङ्गसेनां प्रासावयत्, सा रहसि मामेत्य अब्रवीत् देव! प्रथमं गर्भशय्या पुत्रिणी दृष्टा, पश्चाच्च कन्यावती दृश्यत इति अनेन च प्रमाणेन अवधार्य्यते यथेयं

कन्या अयोनिसम्भवा रतिरेव। कश्चिद् गर्भतस्करो देवः इत्थं विनिमयमकार्षीदिति मे मतिः। तदियं कन्या कन्दर्पावतारभूतस्य राजपुत्रस्य महिषी भविष्यति। एवमुक्त्वा यां कथामकथयत् तां मन्त्रिवचः श्रुत्वा राजदम्पती परं विश्वासं जग्मतुः। गते च मन्त्रिप्रवरे अन्तःपुरं प्रविश्य विविधेन पानभोजनेन परितुष्टौ दिवसं निन्यतुः। कन्या च कलिङ्गसेनाया दिने दिने रुचा रूपसम्पदा वव्रुधे। मदनवेगस्य पुत्रीति तां मदनमञ्चुकेति नाम्ना सर्वे समाह्वयन्ति स्म।

एकदा देवी वासवदत्ता मदनमञ्चुकाया निरुपमरूपं श्रुत्वा तां द्रष्टुं स्वं गृहमनयत्। सर्वे तस्या अलौकिकनयनानन्दकरं रूपं दृष्ट्वा रतिरेव मूर्तिमतीति तां निश्चिक्युः। तां दृष्ट्वा देवी स्वं नेत्रानन्दं पुत्रं तत्रानिनाय। तावुभौ शिशू अन्योन्यावलोकनेन अपरितृप्तौ तथा समासज्जतुः, यथा क्षणमपि अदर्शनं न सेहाते। तद् दृष्ट्वा राजनि उभयोः परिणयार्थं त्वरावति कलिङ्गसेना तं नृपतेरभिप्रायं ज्ञात्वा परं सन्तोषमाप; चकार च ततः प्रभृति नरवाहनदत्ते जामातृस्नेहम्।

अथ राजा नरवाहनदत्तं यौवराज्ये अभ्यषिञ्चत्। अभिषेकाम्बुना तदीये मुखकमले धौते दिशः सर्वाः प्रसेदुः। जननीषु माङ्गल्यमालां वर्षन्तीषु त्रिदिवात् पुष्पमाल्यानि अपतन्। देवदुन्दुभयः आनन्दतूर्यरवैः सह नभोमण्डलं पूरयामासुः। ततो नृपतिः पुत्रस्य शैशवबन्धून् आनाय्य यथायोग्यं तस्य कर्मणि न्ययोजयत्। यौगन्धरायणपुत्राय

मरुभूतये मन्त्रित्वं रुमख्रत्पुत्राय हरिशिखाय सैनापत्यं वसन्तकपुत्राय नर्म्मसाचिव्यं गोमुखाय प्रतीहारं वैश्वानराय शान्तिसोमाय च पौरोहित्यं दत्तवान्। इत्थं तेषु तेषु तत्तत्कर्म्मसु नियुक्तेषु सपुष्पवृष्टिराकाशभवा सरस्वती सहसा समुदतिष्ठत्। यथा एते नियुक्ताः पुरुषा अस्य युवराजस्य सर्वार्थसाधका भविष्यन्ति, गोमुखस्तु अस्मादभिन्नशरीर एव भविष्यति चेति। एतच्च दैववचनमाकर्ण्य राजा सम्प्रहृष्टः मन्त्रिभ्यो वसनाभरणादिकं पारितोषिकम् अन्येभ्यश्च अनुजीविभ्यः प्रचुरमर्थं प्रददौ। नगरी पताकामण्डलैः हसन्तीव व्यतिष्ठत। नर्त्तकाश्चारणाश्च समन्तात् आनन्दमहोत्सवं वितेनुः, वासवदत्ताप्रभृतयश्च राजयोषितः परं हर्षमवापुः।

अथ युवराजो जयकुञ्जरमारुह्य नगरीं प्रदक्षिणीकुर्वन् स्वभवनं प्रत्यागमत्। कलिङ्गसेना समधिकेन रत्नाभरणवसनादिना जामातरमभ्यनन्दयत्। इत्थं पूर्णमहोत्सवायां नगर्य्यां रात्रौ कलिङ्गसेना शय्यायां शयाना सोमप्रभां सस्मार। स्मृतमात्रा च सा स्वामिने निवेद्य किं कर्त्तव्यमिति समादेशं प्रतीक्षमाणा तस्थौ। ज्ञानी नलकूवरश्च तामब्रवीत् प्रिये! कलिङ्गसेना सोत्कण्ठमद्य त्वां स्मरति, त्वं तत्र गत्वा तस्याः कन्यायाः कृते एकं दिव्यमुद्यानं निर्म्माय प्रयच्छ। एवमादिष्टा च सोमप्रभा सत्वरमागम्य बहोः कालात् परं तस्याः कण्ठं धृत्वा सवाष्पं समाश्वास्य कुशलवार्त्तामापृच्छ्य च समभाषत सखि! देवदेवस्य प्रसादेन त्वं विद्याधरसहधर्म्मिणी अभूः, रतिश्च ते कान्ता सम-

जनि। वत्सराजतनयश्च नरवाहनदत्तः कन्दर्पावतारः सम्भूतः, तवेयं नन्दिनी च तस्य प्रणयिनी भविष्यति। स हि तव जामाता कालेन विद्याधरचक्रवर्त्ती भविता। त्वं पूर्वम् अप्सरा आसीः, महेन्द्रशापात् भुवनमवतीर्णासि। अस्मिंश्च लोके तव कार्य्ये शेषिते शापमुक्तिर्भविष्यति। सर्वज्ञो मे पतिरेतत् सर्वं कथितवान्। मा उद्वेगं कार्षीः, अतः परं ते शुभं भविष्यति, साम्प्रतं तव कन्यार्थमेकं दिव्यं सुमनोहरमुद्यानं निर्म्माय प्रयच्छामि, यत् त्रिलोक्यां कुत्रापि न दृश्यते। एवमुक्ता दिव्येन प्रभावेण उद्यानं निर्म्माय दत्त्वा च स्वस्थानं प्रतस्थे।

अथ रजन्यां प्रभातायां सहसा अतर्कितं मनोहरमुद्यानं निरीक्ष्य सर्वे विस्मयोत्फुल्ললোचना अभूवन्। क्रमेण एतद्वृत्तान्ते सर्वतः प्रसृते राजा युवराजेन मन्त्रिभिश्च परिवृतः तद्दर्शनार्थमापपात, ददर्श च प्रविश्योद्यानं, पुष्पाणि फलानि च सर्वर्त्तुलभ्यानि विराजन्ते वृक्षराजिषु। नानामणिमयस्तम्भसमेतभित्तिशोभितभूमिभागैः परिवेष्टिता दीर्घिका शोभते। नानाविधाः सौवर्णाः पक्षिणः समन्ततः सञ्चरन्ति, सुरभिवनवाताश्च मन्दं मन्दं वहन्ति। राजा तादृशमद्भुतमुद्यानं निरीक्ष्य कलिङ्गसेनामपृच्छत्। कलिङ्गसेना राजानं समुचितेन सत्कारेणाभ्यर्च्य सर्वसमक्षमवादीत् श्रुतमेतत् महाराजस्य यत् विश्वकर्म्मावतारो मयो नाम दानवराजोऽस्ति, यश्च पुरा राज्ञो युधिष्ठिरस्य यज्ञगृहं निर्मितवान्। तस्य सोमप्रभा नाम कन्या मम प्रियसखी, सा गतायां रजन्यां मत्समीपमागत्य उद्यानमिदं

मायया निर्माय मत्कन्यायै दत्त्वा प्रस्थिता। एवमुक्त्वा सखी-प्रोक्तं सर्वं भूतं भविष्यत् वर्तमानञ्च वृत्तं समवर्णयत्। तदा-कर्ण्य सर्वे सुविस्मिताः परं सन्तोषमापुः। वत्सराजस्तु तया सत्कृतः सपुत्रमन्त्रिवर्गस्तस्मिन्नेवोद्याने तं दिवसमनैषीत्।

अथापरेद्युर्नरपतिर्दैवदर्शनार्थं देवालयं प्रविष्टः कति-पया वसनाभरणाद्यलङ्कृताः स्त्रियः पश्यन् का यूयमिति अपृच्छत्। ता अब्रुवन् राजन्! वयं विद्याः कलाश्च त्वत्-पुत्रार्थमागताः स्मः, तदयं तच्छरीरं प्रविशाम इत्युक्त्वा ता अन्तर्हिताः। तद् दृष्ट्वा वत्सराजो गृहं प्रतिनिवृत्य सर्वा-ननुजीविनः समाहूय तद्वृत्तान्तमाख्यत्। सर्वे च ते तद्वचः समभिनन्द्य अवदन् देव! सर्वमिदं दैवानुग्रह एव।

कदाचित् राजा पुत्रं नरवाहनदत्तं कलासु शिक्षितं परीक्षितुं वासवदत्तां वीणावादनार्थं समादिशत्। तस्याञ्च वीणां वादयितुं प्रवृत्तायां पुत्रो युवराजः सविनयमब्रवीत् मातः! वीणेयं स्थानात् च्युता लक्ष्यते। एवमुक्तायां मातरि तत्क्षणं पुत्रहस्ते वीणां समर्पयन्त्यां स खलु युवराजस्तथा वीणामवादयत यथा तत् श्रुत्वा गन्धर्वा अपि विमोहिताः समभवन्। एवं कलासु सर्वासु विद्यासु च पारदर्शिनि जाते पुत्रे राजा परीक्ष्य नितरां सन्तोषमलभत कलिङ्ग-सेनासुतां च मदनमञ्चुकां शिक्षयितुमारेभे।

एकदा युवराजो मदनमञ्चुकामदृष्ट्वा अतीव समुत्सुकः तदीयमुद्यानमगमत्। मदनमञ्चुका च तदानीं तत्समीप-माययौ। चतुरो गोमुखो नानालापैः युवराजस्य सन्तोष-मतनोत्। मदनमञ्चुका च नृत्यगीतादिकलासु सम्यक्

शिक्षिता युवराजस्य परं सन्तोषमकार्षीत्। इत्थं विविधैः प्रमोदैः कौमारे समतिक्रान्ते एकदा युवराजः प्रियासहचरः गोमुखेन सह नागवनं जगाम। तत्र काचित् वणिग्वधूर्गोमुखं विषेण हन्तुमैषीत्। गोमुखस्तु तद्विदित्वा कथञ्चित् तस्मान्मुक्तः स्त्रीजातिमुद्दिश्य सातिशयमनिन्दत्। धाता अग्रतः साहसं सृष्ट्वा परतः स्त्रियं समर्ज, तस्या अकार्य्यं न किमपि। अस्याश्च सृष्टौ अमृतं विषञ्चोभयम् उपादानम्, अस्यामनुरक्तायाम् अमृतं, विरक्तायान्तु विषं निःसरेत्। बालकोऽपि गोमुखः एवं स्त्रीचरितमनिन्दत्। ततश्च युवराजो नागान् समाराध्य गृहमयासीत्।

एकदा युवराजेन राजनीतिमनुयुक्तो गोमुखः समभाषत राजनन्दन! राजा सिंहासनोपविष्ट एव प्रथमं दुर्दान्तान् वाह्येन्द्रियगणान् वशीकृत्य पश्चात् कामादीन् आभ्यन्तरशत्रून् जयेत्। विना जितेन्द्रियतां न केनापि प्रकारेण वाह्यशत्रुजये अधिकरोति। तस्मात् प्रथममेव प्रधानेन्द्रियं मनो जयेत्। ततो मन्त्रिवर्गाणामपि इन्द्रियदमनं यत्नं कुर्य्यात्। पुरोहितम् अथर्वसंहितायां तपसि च सुदक्षं कारयेत्। मन्त्रिणश्च सुपरीक्षार्थं छलं विदध्यात्। कार्य्यव्यापृतांश्च सततं परीक्षेत, सत्येन सन्तुष्येत्, कापथ्ये दण्डयेत्। चारैश्च नियुक्तैः कार्य्यकारिणां चरित्रं पश्येत्। इत्थं सर्वतोदृष्टिः शत्रूनुन्मूल्य अर्थं चिन्तयेत्। ततश्च क्रमेण बद्धमूलः स्वपरराष्ट्राणामवस्थां पर्य्यालोच्य विजयार्थं यतेत। आप्तैर्विचक्षणैर्विद्वद्भिः सह सततं मन्त्रयेत्। मन्त्रितञ्च विजवुदा सर्वाङ्गविशुद्धं कुर्य्यात्। सामादिषु उपायेषु च

सुविचक्षणः सततं योगक्षेमं विदध्यात्, सन्धिविग्रहादिकञ्च षाड्गुण्यं यथायथं प्रयुञ्जीत। इत्थं सततं सावधानो नरपतिः स्वं परञ्च चिन्तयित्वा कार्य्येषु विचरन् अवश्यमेव विजयी भवेत्। अन्धं कामान्धञ्च नृपं धूर्त्ता अधिकारिणः प्रतार्य्य विपन्नं कुर्वन्ति, सर्वस्वं हृत्वा च स्वेषां, स्वार्थं साधयन्ति, परित्यजन्ति च। तस्मात् राज्ञा जितेन्द्रियेन युक्तदण्डेन विशेषज्ञेन च सदा भाव्यम्। यश्च प्रजानामनुरञ्जने तत्परः स्यात् तस्य श्रीरनपायिनी वर्द्धेत।

युवराजो नरवाहनदत्तः गोमुखमुखादेवं राजनीतिं श्रुत्वा हृष्टः मदनमञ्चुकादर्शनार्थं समुत्सुकः कलिङ्गसेनाभवनमगात्। सर्वेषु युवराजपरिजनेषु कृतासनपरिग्रहेषु कलिङ्गसेना गोमुखं सम्बोध्याब्रवीत् आयुष्मतो युवराजस्य आगमनविलम्बेन समुत्सुकायां वत्सायां मदनमञ्चुकायां मया सह हर्म्यपृष्ठमारोहन्त्यां सहसा कश्चिद् विमानचारी पुरुषः असिहस्तः समवरुह्य मामवादीत् प्रिये! अहं मदनवेगो नाम विद्याधरराजः, त्वं मम पूर्वपत्नी सुरभिदत्ता नामाप्सराः, वासवशापात् भूतलमवतीर्णा। कन्या चेयं यथा तव तथा ममापि, तदेनां मम हस्ते समर्प्य विद्याधरजातिसदृशं समाचारमवलम्बस्व।

तेनैवमुक्ताहं सस्मितमवादिषम् आर्य्यपुत्र! भगवान् भवानीपतिरस्याः कृते नरवाहनदत्तं कामावतारं निर्माय सर्वविद्याधराधिपत्ये अभिषेक्तुमादिदेश। तत् कथमिमां तव हस्ते समर्पयामीति। एतदाकर्ण्य स आकाशमार्गेण यथागतं सम्प्रतस्थे।

तदाकर्ण्य गोमुखोऽभ्यधात् विद्याधरोऽसौ राजकुमारं भाविनं प्रभुं श्रुत्वा अन्तरीक्षमावह्य भावावबोधार्थं भवत्याः सकाशमागतः। मन्ये विघ्नकरणार्थमेव विद्याधरमण्डलेषु चक्रान्तं वर्त्तते, भद्रे! उत्पथगामिनो हि एवं विद्वेषं समाचरन्ति। यद्भवतु, भगवानुमाकान्तः अयत एव इमं व्यापारमवगत्य नरवाहनदत्तं रक्षितुं स्वानुचरान् प्रमथान् नियुक्तवान्। एषा नारदोक्तिर्मया पितृमुखात् श्रुता, साम्प्रतं विद्याधरा अस्माकं सम्यक् वैरिणः संवृत्ताः।

एतन्निशम्य कलिङ्गसेना सत्रासमवादीत् भद्र! साम्प्रतं ममैतद्भयं यत् कोऽपि विद्याधरः मामिव मायया मदनमञ्चुकां प्रतार्य्य यदि परिणयेत्। तदहं सद्य एव राजकुमारेण मदनमञ्चुकां परिणीतामिच्छामि। गोमुखादयश्च सर्वे तदाकर्ण्य वत्सराजम् अस्मिन् व्यापारे त्वरयितुं तामेव कलिङ्गसेनामनुबबन्धुः।

अत्रान्तरे युवराजो मदनमञ्चुकां प्रति सातिशयमनुरक्तस्तयैव सह उद्यानविहाराय मनो निदधे, तां विना क्षणमपि नावस्थातुमशक्नोत्। मदनमञ्चुकाया वदनमुत्फुल्लकमलं, नयने विकसिते कुवलये, ओष्ठाधरौ बिम्बफलोपमौ, स्तनद्वयं मन्दारस्तवकसमं, सौकुमार्य्यं शिरीषकुसुमादपि चारु, किमन्यत्, मदनः जगद्विजेतुमिव पुष्पमयं मदनमञ्चुकाया देहं विरचितवानित्येव दिवानिशं तस्य मनस्तां प्रत्यौत्सुक्येनाकलयत्।

अथ कलिङ्गसेनया पुत्र्या विवाहार्थं त्वर्य्यमाणो नृपस्तां तथेत्युक्त्वा मन्त्रिणः समाहूय देव्याः वासवदत्तायाः समक्ष-

मब्रवीत् पश्यत, कलिङ्गसेना विवाहार्थं त्वरयति, परं बन्धक्या सह कथं वा वैवाहिकसम्बन्धः स्थिरीक्रियते? कलिङ्गसेनां निर्दोषामपि लोको न विश्वसिति। पुरा नृपतो रामचन्द्रो लोकरञ्जनार्थं प्रेयसीं निर्दोषामपि जानकीं परिजहार। पुरा भ्रातुः परिणयटानीतसुकेन भीष्मेण अन्यव्रता अम्बेव मया अन्यव्रता सा परित्यक्ता पश्चात् मदनवेगेन परिणीता। एतदर्थमेव लोको निन्दति, तन्ममायमभिप्रायः, यत् पुत्रः स्वयं मदनमञ्जुकां गान्धर्वेण विधिना परिणयतु, ममात्र हस्तावलम्बनेनालम्।

एवमुक्त्वा राजनि विरते मन्त्रिवरो यौगन्धरायणः प्रत्यभाषत देव! ईदृशे कार्य्ये कलिङ्गसेनायाः सम्मतिर्न सम्भाव्यते, सा खलु दिव्या योषित् न सामान्या, मित्राद् ब्रह्मराक्षसात् पुनः पुनर्मया श्रुता। इत्थं व्यतिकरे दिव्यवाणी आविरासीत् यथा कामे मम नेत्रानलदग्धे पुनरहं कृपया तं कामं नरवाहनदत्तरूपेण सृष्टवानस्मि, तदनन्तरं रतेश्च तपसा सम्प्रीतस्तामपि मदनमञ्जुकां कृत्वा भुवमवतारितवानस्मि। तदयं नरवाहनदत्तः मदनुग्रहेण शत्रून् जित्वा मदनमञ्जुकां महादेवीं कृत्वा राज्यसुखमनुभविष्यतीति।

एतदाकर्ण्य राजा सपरिजनः शम्भुं प्रणम्य सहर्षं पुत्रस्य विवाहमहोत्सवविधानार्थं यत्नमकरोत्।

अथ वत्सराजो मन्त्रिवरं यौगन्धरायणं प्रशस्य सुविज्ञान् गणकानाहूय विवाहार्थं शुभलग्नस्थिरीकरणाय समादिशत्। ते च सद्य एव शुभं लग्नं निश्चित्य अवदन् देव! युवराजः स्वल्पं कालं मदनमञ्जुकां सम्भुज्य विच्छेद-

मवाप्स्यतीति। ततो राजा शुभेऽहनि मदनमञ्चुकया सह पुत्रस्य विवाहदीक्षाम् उत्साहविभवानुरूपां निरवर्त्तयत्।

---

## अथ सप्तमो लम्बकः।

## अथ पञ्चत्रिंशत्तरङ्गः।

अथ परिणीतमदनमञ्चुको नरवाहनदत्तः वयस्यवर्गैः परिवृतः कौशाम्ब्यां सुखेन वसन् मनसा यत् यत् काङ्क्षितं तत्तत् सर्वं यथायथमभुनक्। कदाचित् वसन्तोदये तरवः नवं नवं पल्लवं कुसुमञ्च निःसार्य्य दिशोऽशोभयन्। मलय-समीरणः सुमन्दं वहति स्म। पुष्पाणां सौरभैश्चतुर्दिशः आमोदिताः, कौसुमैरजोभिः समाच्छन्ना मधुलिहोऽमाद्यन्त, पुंस्कोकिला मधुरमकूजन्। प्राणिनः सर्वे प्रफुल्ल-मनसः समभवन्, वियोगिनः क्लेशेन संयोगिनश्च सुखेन व्यचरन्।

अस्मिंश्च समये युवराजो मन्त्रिगणपरिवृतः उद्यान-विहारार्थं यात्रामकरोत्, सर्वे चानुजीविनः स्वेच्छया इत-स्ततः परिभ्रमन्तः सुखेन विचरन्ति स्म। क्षणान्तरे वस-न्तकतनयस्तपन्तको युवराजमभ्येत्य अवादीत् सखे! स्थानादस्मादनतिदूरे परिभ्रमन्नहम् एकमपूर्वं वस्तु दृष्ट्वा विस्मितः समभवम्। भ्रमन्नपश्यम् नभोमण्डलात् कापि

परमसुन्दरी सह सखीभिर्भुवमवतीर्णा सन्निहितमेकमशोकतरुमूलमाश्रिता मां दृष्ट्वा समाहूय च भवदाह्वानार्थं प्रहितवती, तत् सत्वरमागत्य नेत्रानन्दं विदधातु युवराज इति।

श्रुत्वैतत् राजतनयः सत्वरमधावत्, सचिवाश्च तमनुव्रजन्ति स्म। नरवाहनदत्तः दूरादेव अशोकमूले स्थितायास्तस्याः अद्भुतं रूपमालोक्य विस्मितः क्रमेण तदन्तिकमगमत्। सा दृष्ट्वैव तं सविनयं प्राणमत्। ततश्च सर्वेषु समासीनेषु मन्त्रिवरो गोमुखः कन्यां तामपृच्छत्। सा च सगद्गदमीषद्विगलितलज्जा सतृष्णं युवराजं निरीक्ष्य स्वं वृत्तान्तमवोचत् भद्र!

अस्ति कैलासशिरसि काञ्चनशृङ्गं नाम स्वर्णमयं नगरम्। तत्र हेमप्रभो नाम विद्याधरः प्रतिवसति। तस्य सत्यपि परिग्रहबहुत्वे रोहिणीव चन्द्रमसः अलङ्कारवती नाम पत्नी एव प्रियतमा। स खलु सुधार्मिकः भगवतोः पार्वतीपरमेश्वरयोरतिभक्तः प्रतिदिनं प्रातः स्नात्वा देवदेवं देवीञ्च प्रेयस्या सह समाराधयति। अनन्तरञ्च भूतलमागत्य दीनदरिद्रानाथेभ्यः भूदेवेभ्यश्च लक्षसुवर्णमुद्राः प्रदाय पुनर्गृहं गत्वा स्वकार्य्यं करोति। मुनिवच्च नियतव्रतः पानभोजनं सम्पादयति।

गच्छति च काले अमुं विद्याधरं पुत्रहीनतया उद्विग्नमनसं दृष्ट्वा प्रियतमा अलङ्कारवती कारणमपृच्छत्। सोऽब्रवीत् प्रिये! मम सर्वा एव सम्पत्तयः सन्ति, केवलमेकः पुत्रो नास्ति, एतेनैव दुःखेनाहं समुद्विग्नचेताः कालं

नयामि। पूर्वं मया अपुत्रस्य समाख्या श्रुता, अद्य तु सा स्मृतिपथमवतीर्णा मां भृशं कलुषीकरोति।

अथ प्रियया सनिर्बन्धं कथय तां कथामित्यभिहितः स विद्याधरवरः पुनरब्रवीत् सुन्दरि। आसीत् चित्रकूटाख्ये नगरे कश्चित् द्विजवरो नाम नरपतिः। स किल ब्राह्मणेषु भक्तिमान्। तस्य सत्त्वशीलो नामैकः प्रवीरपुरुष आसीत्। स तु प्रभोः सकाशात् शतसुवर्णं मासिकं वेतनं प्राप्यापि दानशीलतया सततमभाववानेव क्लेशेन जीवन् कदा-चित् चिन्तयामास अहमपुत्रोऽपि दानशीलतया कथञ्चित् सन्तोषं लभे, परन्तु विधिर्मह्यं तदुपयोगि धनमपि अदत्त्वा तेनापि सुखेन मां वञ्चितवान्, तस्मात् दरिद्रस्य दातु-र्जीवनात् वनेषु जीर्णशुष्कतरूणां पाषाणानाञ्च जन्मग्रहणं वरम्। अथैकदा स इतस्ततो भ्रमन् सहसा किञ्चित् धन-मासाद्य भृत्यैर्गृहीत्वा गृहमयासीत्। ततः प्रभृति यथेच्छं सुखेन वितरन् स्वयञ्च भोगसुखेन कालं हरन् व्यतिष्ठत।

अत्रान्तरे तस्य धनप्राप्तिवार्त्तायां ज्ञातिवर्गैराविष्कृतायां राजा सद्य एव तमाजुहाव। श्रुत्वैव तस्मिन् राजभवन-मागते दौवारिकः राजानं तद्वार्त्तां न्यवेदयत्। अत्रान्तरे सत्वशीलः अन्यमनस्कतया वज्रसमेन मुष्टिप्रहारेण प्राङ्गणं खनन् तत्र प्रचुरार्थपूर्णं ताम्रपात्रमपश्यत्, समाच्छादयच्च सद्य एव मृत्तिकाभिः। अथ प्रतीहारो समागत्य तं राजा-न्तिकं निनाय।

राजा तमभ्यागतं दृष्ट्वा अवदत् सत्वशील! त्वया यत् धनमासादितं तत् सर्वं राजप्राप्यं, तस्मादनीय तत् मह्यं

समर्पय। तदाकर्ण्य सत्वशीलः अम्लानवदनः समभ्यधात् देव! किं पूर्वलब्धम् उत अद्य लब्धं दास्यामि, आज्ञापयतु देवः। राज्ञोक्तम् अद्य लब्धमानय। सत्वशीलस्तत्क्षणमेव राजभवनप्राङ्गणलब्धं तत् सर्वमुत्तोल्य राजान्तिकमनयत्। तद् दृष्ट्वा सम्प्रीतो नरपतिः तस्मै पूर्वलब्धं सर्वं धनं भोगार्गं प्रादात्। स तु गृहं गत्वा तत् यथेच्छमुपभोज्य अपुत्रता-निमित्तं क्लेशं विस्मरन् अतिष्ठत्।

अलङ्कारवती प्रत्यभाषत आर्य्यपुत्र! सत्यमेव विधिः सुचतुरस्य जनस्य साहायकं करोति। सत्वशीलो विपदि यत्नादृशम् अपरं धनमाससाद तत्र विधातुरेव हस्तालम्बः कारणम्। भवानपि निजेनैव सत्वेन स्वमभीष्टमासादयिष्यसि, अत्रैतदाख्यानं स्मृतिपथमारूढ़ं कथयामि श्रूयताम्।

पुरासीत् पाटलिपुत्रं नाम नगरम्। तत्र विक्रमतुङ्गो नाम नरपतिराविरासीत्। एकदा स मृगयायां पर्य्यटन् कश्चित् अग्नौ विल्वपत्राणि हवनीयानि प्रयच्छन्तं ब्राह्मणं दृष्ट्वा कोऽसौ ब्राह्मणः कथं वात्र जुहोतीति प्रष्टुकामोऽपि मृगमनुसरन् अतिदूरतरं गहनं काननं प्रविवेश। क्रमेण बहून् वन्यान् स्वीकृत्य विहृत्य च विविधेन कन्दुकक्रीड़नादिभिः सार्धं तमेव ब्राह्मणमभ्यागमत्। अपृच्छत् तं तद्-वस्थं दृष्ट्वा सप्रणामं क्रियमाणकर्म्मफलम्। ब्राह्मणो जयोऽस्तु महाराज इत्याशिषं प्रयुज्य प्रत्यभाषत राजन्! अहं नाग-शर्म्मा नाम इदञ्च होमफलं यत् देवे वैश्वानरे सन्तुष्टे अस्मात् अग्निकुण्डात् सुवर्णकुण्डलं निर्गमिष्यति, वर-ञ्चाभिमतं स भगवान् दास्यतीति। अहन्तु सुचिरमेतत्

कार्य्यं करोमि, तदपि मम दौर्भाग्यात् देवो ममाभीष्टं न साधयति।

एतदाकर्ण्य धीरो नरपतिरवोचत् ब्रह्मन्! यदि कृपया माम् एकं विल्वपत्रं होतुम् अनुमन्येथाः, तदाहमेकेनैव आहुतिप्रदानेन भगवन्तं प्रसादयामि। विप्रोऽब्रवीत् सम्भाव्यते, परं भवान् अशुचिः, अशुचिना कथमेतत् समाधातुं शक्यते? राजाब्रवीत् ब्रह्मन्! तदर्थं मा चिन्तय, भवान् एकं विल्वदलं मह्यं दत्त्वा आश्चर्य्यं पश्यतु। विप्रस्तथेत्युक्त्वा तस्मै विल्वपत्रमेकं ददौ। राजा कायेन मनसा वाचा ध्यात्वा तत् पत्रं जुह्वदुवाच देव! यद्यनेन न तुष्येः, तदा स्वेन मस्तकेन आहुतीकृतेन त्वां तोषयामीति। एवमुक्ते सहसा भगवान् जातवेदा हैमं विल्वदलं बिभ्रत् आविर्भूय समभ्यधात् राजन्! सन्तुष्टोऽस्मि तव साहसात्, वरं गृहाण। ततश्च राजा सप्रणाममवादीत् देव! वरेण मे नालं यदि तुष्टोऽसि, द्विजाय अस्मै अभिलषितं प्रयच्छ। देवस्तनूनपात् नृपतेस्तादृशमौदार्य्यं दृष्ट्वा ततोऽपि प्रीतः प्रोवाच राजन्! ब्राह्मणोऽसौ मत्प्रसादेन अतुलम् ऐश्वर्य्यं लभतां, त्वञ्च अक्षयां सम्पत्तिं प्राप्नुहि। ततो द्विजः प्राब्रवीत् देव! भगवान् यथेच्छचारी, राज्ञ एकेनैव विल्वदलेन सन्तुष्टः सहसा आविरासीः, मया एतावन्तं कालमुपासितोऽपि मह्यं दर्शनं नाददाः, कोऽत्र हेतुः?

एतदाकर्ण्य अग्निरुवाच विप्र! यद्यहं राज्ञे दर्शनं नादास्यं, तदा तीक्ष्णवीर्य्योऽसौ नरपतिः सद्य एव स्वं मस्तकं छित्त्वा मह्यम् आहुतिमदास्यत्। तदवेहि तीक्ष्ण-

वीर्य्यस्य कार्य्यसिद्धिरल्पवीर्य्यकार्य्यसिद्धेः शीघ्रतरा । एव-मुक्ता देवे तिरोहिते नागशर्मा विक्रमतुङ्गं सम्भाष्य कृतार्थः स्वं गृहं गत्वा अतुलैश्वर्य्यवानभूत् । ततश्च एतत् अद्भुतं कार्य्यं दृष्ट्वा अनुचरैः सविस्मयं प्रशस्यमानो नरपतिः स्वं नगरं प्रातिष्ठत ।

कदाचित् तस्मिन् विक्रमतुङ्गे सभामण्डपम् अध्या-सीने शत्रुञ्जयो नाम द्वारपालः समुपेत्य सप्रणाममवादीत् देव ! कश्चित् द्विजन्मा रहसि महाराजान्तिके किमपि विज्ञापयितुं द्वारि तिष्ठति, तदत्र देवः प्रमाणमिति । तथोक्तो नरवरस्तमानेतुमादिदेश । दौवारिकश्च तदा-देशेन द्विजं राजसमीपमनयत् ।

ब्राह्मणः स्वस्तिवाच्य समब्रवीत् राजन् ! अहं चूर्ण-संयोगेन ताम्रं सुवर्णं कर्तुं शक्नोमि । तदाकर्ण्य राजा विस्मितस्तत्क्षणमेव ताम्रमानाय्य तस्मै प्रादात् । ततोऽसौ ब्राह्मणस्ताम्रं द्रवीकृत्य यावत् तत्र चूर्णं प्रक्षिपति तावत् कश्चिद् यक्षः अलक्षितमेत्य तत् हरति स्म । चूर्णसंयोगा-भावेन च ताम्रं न सुवर्णीभूतम् । ब्राह्मणः पुनः पुनस्तथैव त्रिः प्रक्रियामकरोत्, परम् अकृतकार्य्यतया परां त्रपा-मवाप । विक्रमतुङ्गस्तु पूर्वमग्निमतोषयत्, तेनैव स यक्षं चूर्णं हरन्तमद्राक्षीत्, ततः स स्वयं यावत् चूर्णं गलितताम्रे व्यक्षिपत् तावत् सद्य एव तत् सुवर्णीभूतं दृष्ट्वा यक्षोऽसौ हर्त्तुमशक्नुवन् विलक्षितस्तस्मात् स्थानात् प्रतस्थे ।

तदवलोक्य विस्मिते विप्रे कारणं पृष्टवति राजा तं यक्षवृत्तान्तमवर्णयत् । अथ ब्राह्मणात् तस्य चूर्णस्य प्रक्रियां

शिचित्वा तस्मै परितुष्टः विवाहमदात्। स तु दरिद्रो द्विजातिस्तेनैव कृतार्थम्मन्यः स्वस्थानमगात्। अथ राजा तेन चूर्णेन सुबहूनि सुवर्णानि प्रस्तुत्य धनागारं पर्य्यपूरयत्, अनयच्च सुखेन कालं दरिद्रेभ्यः दीनेभ्यश्चानाथेभ्यः प्रार्थनाधिकं धनं वितरन्।

एवमुक्त्वा अलङ्कारवती पुनरगादीत् नाथ! विधाता भयाद्वा सन्तोषाद्वा तीक्ष्णवीर्य्यस्य कार्य्यं शीघ्रं साधयति, भवान् धीरप्रकृतिर्दानशीलश्च, भवता समाराधितो हरः अवश्यमेव पुत्रधनं प्रदास्यति, तस्मात् मा पुत्रार्थं दुःखितो भूः।

हेमप्रभः प्रेयस्याः समुदोरितमेतद्वचनमाकर्ण्य प्रोत्साहितः शिवमाराधयितुं समधिकभक्तिमानभूत्। परेद्युः प्रयस्या सह भवानीपतिमाराध्य कोटिस्वर्णमुद्राः सत्पात्रसात् कृत्वा दृढ़तराध्यवसायैः पुत्रप्राप्तये यतते स्म।

अनन्तरं निराहारं त्रिरात्रं तिष्ठन् भगवन्तं तथा तुष्टाव, यथा स सद्य एव परितुष्टः स्वप्ने तमादिदेश वत्स! मदनुग्रहेण तवैकः कुलधुर्य्योऽद्वितीयः पुत्रो जनिष्यते। भगवत्या गौर्य्याः कृपया येका कन्या जनिता, सा विद्याधरचक्रवर्त्तिनो नरवाहनदत्तस्य महिषी भविष्यतीति समाख्याय स खलु भक्तवत्सलस्तत्क्षणमेवान्तर्दधे। असौ विद्याधरो हेमप्रभः प्रत्यूषे समुत्थाय प्रियायै अलङ्कारवत्यै स्वप्नवृत्तान्तमकथयत्। ततः कृतस्नानो देवदेवं पूजयित्वा स्तुत्वा च पारणं चक्रे।

अथ गते कियति काले सालङ्कारवती पुत्रमसूत।

जातस्य तस्य देहप्रभया सूतिकागृहमरुणाभिर्भाभिरुद्भासितमभूत्। पिता पुत्रस्य रत्नवत् प्रभामालक्ष्य रत्नप्रभ इति नाम चकार। पुत्रोऽसौ प्रतिपच्चन्द्र इव प्रतिदिनमवर्द्धत। अनन्तरञ्च सा अलङ्कारवती पुनरापन्नसत्त्वा अलोकसामान्यामेकां चारुतरां पुत्रीं प्रसूतवती। सा च हेमप्रभेति कृतनामधेया शशिकलेव प्रतिदिनं वर्द्धते स्म।

अथ रत्नप्रभम् अतिक्रान्तशैशवं पिता अनुरूपकन्यया सह परिणाय्य तस्मिन् राज्यभारं समर्प्य निश्चिन्तोऽपि कन्याया हेमप्रभायाः परिणयार्थं समधिकोद्विग्नमनाः समभवत्। परन्तु तस्यां जातमात्रायामेव कन्येयं नरवाहनदत्तस्य सहधर्म्मिणी भविष्यतीति दैववाणीं स्मृत्वा राजा निवृत्तान्यवराभिलाष एव तस्थौ।

कदाचित् हेमप्रभा नरवाहनदत्तो मे पतिर्भवितेति पितुर्वचनमाकर्ण्य कन्यान्तःपुरं प्रविश्य कियन्तं कालं तदेव चिन्तयन्ती निद्रामभजत। निद्रितायाञ्च तस्यां स्वप्ने भगवती गौरी समादिशत् पुत्रि! श्वः प्रातरतिशुभम्, अस्मिंश्च समये त्वं कौशाम्बीं गत्वा वत्सराजसुतं पश्य। ततश्च तव पिता स्वयं तत्र गत्वा त स्वां राजधानीमानीय त्वां तस्मै प्रदास्यति। एवमुक्त्वा सा देवी तिरोऽभूत्, विभावरी च व्यरंसीत्।

अथ प्रातः हेमप्रभया समुत्थाय मातुरन्तिकमुपगम्य रात्रिवृत्तान्तं निवेदिता माता तां कौशाम्ब्यां गमनाय अनुमेने। सा तु सपरिजना मातुरादेशेन कौशाम्बीमभ्यागता उद्यानवर्तिनो नरवाहनदत्तस्य सकाशमुपस्थितेति।

राजपुत्रो नरवाहनदत्तस्तस्या रूपेण वाग्वैदग्ध्येन च विमोहितः प्रत्यवदत् सुन्दरि! अहमेव धन्यः, यत् तादृशी मनोहराकृतिरपि मामन्विच्छति। एवमुक्त्वा तां प्रेमदृष्ट्या सन्तोषयति युवराजे सहसा अन्तरीक्षात् तत्पिता सपुत्र-परिजनः सन्निपत्य समीपमागमत्। युवराजस्तान् दिव्य-पुरुषान् उपस्थितान् दृष्ट्वा आसनादिना समभ्यर्चयत्। तदनन्तरं राजा उदयनः वार्त्तामिमां विदित्वा समन्त्रि-वर्गः तत्र समागत्य विद्याधरराजस्य हेमप्रभस्य प्रस्तावमनु-जज्ञे। ततश्च तेनानुमतो हेमप्रभः विद्याबलेन विमानमेकं विरचय्य युवराजेन सपरिजनेन सह स्वं नगरं काञ्चनशृङ्गं प्रतीयाय। ददौ च तस्मै राजपुत्राय स्वां दुहितरम्। युव-राजश्च कियन्तं कालं श्वशुरभवनेऽवस्थाय तया पत्न्या सह कौशाम्बीं प्रत्यागम्य पितरौ नन्दयामास।

---

## अथ षट्त्रिंशत्तरङ्गः।

---

एकदा प्रातः गोमुखादिषु मन्त्रिषु शयनगृहद्वारमुप-स्थितेषु द्वाररक्षिणी तान् निषिध्य हेमप्रभां व्यज्ञिज्ञपत्। हेमप्रभा श्रुत्वैव तान् प्रवेशयितुमादिदेश। द्वारपालिका सर्वान् तान् स्वामिन्याः सकाशमनैषीत्। सा च तान् यथो-चितं समादृत्य द्वारपालिनीमवादीत् पश्य आर्य्यपुत्रस्य वयस्या मदभिन्नहृदयाः, अतः परमेतान् मदन्तःपुरं प्रवेष्टुं मा निवारय। एवमुक्त्वा नरवाहनदत्तं सम्बोध्य समभाषत

नाथ! स्त्रीणामन्तःपुरनिरोधनं कुनीतिर्मोहश्च। तासां चरित्रमेव तासां रक्षकं, तासां चापल्यं रक्षितुं देवता अपि न समर्थाः। विशेषेण च मत्ता योषित् स्रोतस्वत्याः सभा, कस्तस्या वेगं निषेद्धुं शक्नुयात्? अत्रैतां कथां कथयामि श्रूयताम्।

आसीत् समुद्रान्तर्वर्त्तिनि रत्नकूटाख्ये द्वीपे परमवैष्णवः कश्चित् राजा। स खलु सर्वां पृथ्वीं जेतुं सर्वाश्च राजकन्यकाः परिणेतुं भगवन्तं विष्णुमाराधयामास। कियता कालेन च समाराधितः प्रसन्नो देवः समागत्य अगादीत् वत्स! कश्चित् गन्धर्वः कुतश्चित् कारणात् मुनिनाभिशप्तः, श्वेतहस्तीभूत्वा कलिङ्गदेशे श्वेतरश्मिनाम्ना प्रसिद्धो वर्त्तते। स तु मत्प्रसादात् ज्ञानी आकाशचरो जातिस्मरश्च। अहं स्वप्ने तमादिशामि, यथा स तव आकाशमार्गे वाहनो भवितेति। त्वं तस्य हस्तिनः पृष्ठमारुह्य आकाशयानेन यं नृपमाक्रमिष्यसि, स कन्यादानमिषेण तुभ्यं करं दास्यति। इत्थं समग्रमेदिन्यामधीश्वरः अशीत्यधिकसहस्रराजकन्यानां पतिश्च भवितासि।

इत्थं वरं दत्त्वा देवे तिरोहिते राजा तपसः समुत्थाय पारणाह्निकं विधाय परेऽहनि प्रत्यूषे समुपस्थितं श्वेतरश्मिमारुह्य क्रमेण सर्वां धरित्रीमजयत्, स पर्य्यणैषीच्च अशीत्यधिकसहस्रराजकन्याः। अथ ताः सर्वाः समानीय तस्मिन्नेव रत्नकूटे सुखेन कालं निनाय, भोजयामास च प्रत्यहं पञ्चशतब्राह्मणान् श्वेतरश्मेस्तुष्टिहेतोः।

कदाचित् हस्तिपृष्ठमारुह्य स्वमण्डलोपरि आकाशे

भ्रमत एव तस्य पक्षिराजो गरुड़वञ्चुपुटेन तं खे तरस्विनं तथा आजघान, यथासौ वेगेन भूतले पतितो मूर्च्छितश्च। अथ राजनि त्वरितं पृष्ठादवतीर्णे करीन्द्रोऽसौ संज्ञां लेभे, परं पुनःपुनश्चेष्टमानोऽपि उत्थातुं नाशकत्। पञ्च दिवसान् निराहार एवातिष्ठत्। राजा च स्वयमपीड़ितोऽपि तत्पीड़या नितरां दुःखितः निराहारश्च विपदोऽस्याः समुत्तरणार्थं लोकपालेभ्यो वलिमुपहर्त्तुं स्वं मस्तकं खड्गेन छेत्तुं प्रावर्त्तत। एतस्मिन्नन्तरे अन्तरीक्षचारिणी वाणी तमभ्यतोषयत् राजन्! मा साहसं कार्षीः, कयापि साध्व्या स्त्रिया हस्तिनः पृष्ठे मार्जिते एव असौ आरोग्यं लप्स्यते।

एतदाकर्ण्य राजा आत्मनः प्रधानां महिषीमाहूय हस्तिपृष्ठमार्जनार्थमादिदेश। सा च राजमहिषी भर्त्तुरनुज्ञया हस्तिपृष्ठं मार्जितवती, परं हस्ती नोत्तस्थौ। क्रमेण सर्वासु पत्नीषु तथादिष्टासु हस्तिगात्रं मार्जितवतीषु अपि हस्ती नारोग्यं लेभे। इत्थम् अन्यास्वपि नगरवासिनीषु निरस्तासु राजा अत्यर्थं दुःखितोऽभवत्। अत्रान्तरे ताम्रलिप्तनिवासो हर्षगुप्तो नाम वणिक् सस्त्रीकस्तस्मिन् नगरे समाजगाम। तस्मिंश्च एतद्वृत्तान्तं ज्ञात्वा राजसकाशमुपस्थिते राजा तत्पत्नीं शीलवतीं नाम समादिशत्। तया च हस्तिगात्रे मार्जित एव असौ हस्ती स्वस्थः संवृत्तः, प्रवृत्तश्च भोक्तुम्। एतदवलोक्य सर्वे सविस्मयं शीलवतीं प्रशंसन्ति स्म।

अथासौ नरपतिस्तौ वणिग्दम्पती प्रति परं परितुष्टस्ताभ्यां बहुतरमर्थं पुरस्कृत्य प्रासादसविधे वासमदात्।

सर्वाश्च राजमहिषीर्व्यभिचारिणीर्विज्ञाय तत्संसर्गरहितः केवलं ग्रासाच्छादनदानेन पुपोष। ततो नृपः शीलवती-माहूय तत्पत्युः समक्षमब्रवीत् पतिव्रते! यदि ते पितृकुले त्वादृशी साधुशीला कन्या वर्त्तते, तदा तया सह मत्परिणयं विधेहि। शीलवती प्रोवाच राजन्! अस्ति ताम्र-लिप्ताख्ये नगरे राजदत्ता नाम मम भगिनी। सा अति-रूपवती सच्चरित्रा च। यदि रोचते तत्तां परिणेतुमर्हति देवः।

राजा तस्या वचसि सम्मतः ताभ्यां दम्पतीभ्यां सह श्वेत-रश्मिमारुह्य नभसा तत्क्षणमेव प्रस्थितः ताम्रलिप्तनगरे हर्षगुप्तभवनमाससाद। अथ शीलवत्या भगिन्याः परि-णयार्थमावेदितस्तत्पिता तथेति प्रतिज्ञाय शुभलग्नावधार-णाय गणकान् आजुहाव। ते चागत्य उभयोर्जन्मनक्षत्रे निरूप्य गणनया प्रोचुः राजन्! मासत्रयात् परं लग्नं वर्त्तते, परमद्य यत लग्नं दृश्यते तस्मिन् विवाहिता नैव साध्वी भविता, तदत्र यद् भवते रोचते इति।

राजा राजदत्तायाः रूपेण विमोहितः गणकानां वचसि विरक्तः समचिन्तयत् विलम्बेनालम्, अद्यैव परि-णयामि, शीलवत्या अनुजा न खलु निर्दया असती भवितु-मर्हति। समुद्रान्तः पुवर्जिते क्षुद्रे द्वीपे हर्म्यमेकं निर्म्माप्य केवलाभिः स्त्रीभिः सह राजदत्तां रक्षिष्यामि। तदेवमस्या असतीत्वं नैव कदाचित् सम्भविष्यति। एवमवधार्य तस्मि-न्नेव दिवसे राजदत्तायाः पाणिमग्रहीत्, प्रत्यागमञ्च सस्त्रीकहर्षगुप्तेन जवशश्वा च समं हस्तिपृष्ठमारुह्य रत्न-

कूटद्वीपम्। अत्यवाहयच्च राजदत्ता सम्भोगसुखेन तां रजनीम्। परेद्युश्च प्रत्यूषे हस्तिवाहनेन समुद्रान्तःपातिनि कस्मिंश्चित् पुरुषरहिते द्वीपे उपस्थाय एकामट्टालिकां निर्म्माप्य राजदत्तां तत्र कतिभिः स्त्रीभिः सहचरीभिः संरक्षितवान्। अविश्वस्तसर्वजनश्च प्रयोजनमनुसृत्य तेनैव हस्तिना स्वयमानीय सर्वाणि द्रव्याणि प्रदत्तवान्। रात्रौ राजदत्ताभवने सुखेन शयित्वा प्रातः रत्नकूटद्वीपे आगत्य राजकार्य्याणि दृष्टवांश्च।

कदाचित् अतिक्रान्तायां निशायां राजदत्ता दृष्टकुस्वप्ना पत्युरशुभं चिन्तयन्ती उद्वेगशमनार्थं सुरामपिबत्। तेन चातिमत्ता कथमपि राजानं त्यक्तुं नैच्छत्। परं राजा कार्य्यानुरोधपरतन्त्रः प्रियतमानिषेधवाक्यमगणयित्वा रत्नकूटं प्रतीयाय। तत्र राजकार्य्यप्रवृत्तोऽपि प्रियाया असमंस्त्यागमनेन विक्लवान्तःकरणः कथं तां विहाय आगममिति अन्वतपत्।

अत्रान्तरे परिचारिकासु स्वं स्वं कार्य्यमनुसृतासु मत्ता मगम्यदेशवर्त्तिनीमेकाकिनीं तां राजदत्तामाप कश्चित् परमरूपवाम् युवकः। राजदत्ता तमन्तिकागतं वीक्ष्याप्राक्षीत् कस्त्वं, कथं वा अगम्येऽस्मिन् प्रदेशे आगतः? सोऽवदत् अहमतीव हतभाग्यः, पितरि स्वर्गते ज्ञातिभिश्च मत्सर्वस्वे हृते अहमनन्यगतिर्दास्यमवलम्ब्य बहुकष्टेन किञ्चित् संस्थानं कृत्वा च वाणिज्यार्थं देशान्तरमगमम्। पथि तस्करा मे तदपि अपहृतवन्तः। ततश्च निःसम्बलः कतिपयैः समदशैः सहचरैः सार्द्धं भिक्षया अटन् रत्नाना-

माधारभूतं सुवर्णद्वीपं नाम स्थानमगच्छम्। तत्र च राज्ञे यथानिर्दिष्टं राजकरमङ्गीकृत्य सर्वे आकरात् रत्नानि सञ्चेतुं कृतसङ्कल्पा अभूम। संवत्सरं परिश्रम्य सर्वेऽपि किञ्चित् किञ्चित् रत्नमापुः, अहमेव केवलं निष्फल आसम्। तेनैव दुःखेन मयि प्राणान् त्यक्तुं सागरतटमागत्य अग्निप्रवेशाय समुद्योगं कुर्वति जीवदत्तो नाम कश्चित् समुद्रपोतवाही वणिक् मत्समीपमुपगम्य कृपया मां मरणव्यवसायात् निवार्य्य मासिकेन वेतनेन मां नीत्वा सुवर्णद्वीपमभिप्रययौ। पञ्चसु दिनेषु गतेषु सहसा अन्तरीक्षे मेघोदयात् वृष्टिः प्रबलवात्यया सह प्रादुरासीत्, तेनास्माकं तरणी जलमग्नाभूत्। अहमेकं काष्ठखण्डमवलम्ब्य सन्तरन् क्रमेण तीरमनुप्राप्तः समन्तात् दृष्टिं निक्षिपन् वनाभ्यन्तरे हर्म्म्यमिदं व्यलोकयम्। क्रमेण च सन्निहितः प्रविश्य भवत्या नयनपथे निपतितोऽस्मि, एष तावन्मम वृत्तान्तः।

यत्र स्त्री, पुमान्, विजनता, मत्तता, अवरुद्धता चेति पञ्चाग्नयः सन्ति तत्र सुचरित्रतृणं कियन्तं कालमदग्धं तिष्ठति ? सा राजदत्ता तस्य पुंसस्तं वृत्तान्तमाकर्ण्य तत्क्षणं कामयाञ्चक्रे, सम्बुभुजे च तेन रतिरसम्। अस्मिन्नेवावसरे राजा समुद्विग्नचेतास्तत्समीपमुपययौ, ददर्श च शय्यागृहे तेन पुरुषेण सह शयानां राजदत्ताम्। दृष्ट्वैव च क्रोधान्धो यावत् निष्कोषेण असिना तं दुराचारं हन्तुमुद्यच्छति स्म तावत् स आगन्तुकः नृपतिमाततायिनं दृष्ट्वा शरणमगमत्। राजा तथागतं तं दृष्ट्वा सहसा तद्विनाशात्

निहत्य राजदत्तां भयविह्वलामेवमालक्ष्य व्यचिन्तयत् मद्य-पानासक्तायाः स्त्रियाः सतीत्वं क्व ? चपला स्त्रीजातिरव-रुध्यापि नैव रक्षितुं शक्यते। भवतु, गणकानां कथाद्य सप्रमाणा, आप्तवचसि अवहेलिते अवश्यमेव क्लेशः प्राप्यते ? कोऽतिवर्तते दैवम्। राजा एवमालोच्य कथञ्चित् शान्त-क्रोध आसीत्। आगन्तोश्च सर्वं वृत्तान्तं श्रुत्वा तममोच-यत्। सोऽपि निरुपायतया पुनः समुद्रतटमेत्य काष्ठखण्ड-मेकं प्राप्य जले निपपात, चकार चोच्चैश्चीत्कारं मां जीव-येति।

अस्मिन्नेवावसरे दैवचोदित इव क्रोधवर्म्मा नाम समुद्रवणिक् तत्र प्रवहन् चीत्कारं श्रुत्वैव कृपया तं स्वं पोतमनयत्। यस्य हस्ते यस्य मृत्युर्विधिना निरूपितः, कस्तं खण्डयितुं शक्नोति, स खलु दुर्भगः पुमान् ज्ञात्वा श्रुत्वापि तस्मिन् स्वसंहारके कर्म्मणि प्रवर्तते। स समुद्धृतः पुरुषः जीवनप्रदस्य क्रोधवर्म्मण एव स्त्रिया सङ्गतः कोपात् तेन समुद्रं प्रक्षिप्तः पञ्चतां प्राप।

अथ नृपतिः सपरिजनः श्वेतरश्मिमारुह्य रत्नकूट-मागत्य राजदत्तां शीलवत्यै समर्प्य सर्वसमक्षं तद्वृत्तान्त-माख्याय च प्राब्रवीत् अहम् असारेऽस्मिन् परिणामविरसे भोगसुखे व्यासक्तः सन्तापस्य परां काष्ठामध्यगच्छम्। तस्मादिदानीं वनं गत्वा हरिं शरणं व्रजामि, पुनरीदृशे दुःखतरङ्गे संसारवारांनिधौ नैव निमज्जामीत्युक्त्वा विर-राम। मन्त्रिभिः शीलवत्या च सम्यक् बोधितोऽपि नाध्यव-सायाच्चचाल। ततो धनागारं गत्वा अर्द्धसम्पत्तिं शील-

वत्यै, अपराह्णे च ब्राह्मणेभ्यः समर्प्य पापभञ्जनं नाम द्विजं राज्यरक्षणे नियुज्य च तपोवनगमनोत्सुकः श्वेतहस्तिनमानिनाय। आश्चर्य्यम्! स किल हस्ती आनीत एव चतुष्पदरूपं परित्यज्य केयूरशोभितं दिव्यं गान्धर्वं वपुः समाससाद।

तदवलोक्य विस्मिते राजनि परिचयं पृष्टवति, सोऽब्रवीत् देव! आवामुभौ मलयगिरिवासिनौ सोदरौ, अहं सोमप्रभो नाम, भवान् देवप्रभः। राजवती नाम भवतः या प्रेयसी भार्य्यासीत्, तामुत्सङ्गे कृत्वा मया सहैकदा सिद्धवासं नाम स्थानं गतवानसि। तत्र भगवन्तमाराध्य अस्मासु मिलित्वा देवसमक्षं प्रारब्धसङ्गीतेषु सहसा कश्चित् सिद्धपुरुषस्तत्रागत्य निर्निमेषं राजवतीं पश्यति स्म। तदवलोक्य ईर्ष्यापरे भवति क्रोधेन तं तिरस्कुर्वति स सिद्धपुरुषः त्वां क्रोधेनाभिशशाप रे मूढ़! अहं सङ्गीतं प्रति समुत्सुकस्तव पत्नीं दृष्टवानस्मि न कामतः, तद् यथा त्वं मम असदभिसन्धिं मनसि कृत्वा मां विना दोषेण अवमतमकरोः, तथा त्वमीर्ष्यापर एव मर्त्त्यो भूतले जनिष्यसे, भार्य्याञ्चेमामन्यासक्तां द्रक्ष्यसि।

एवमुक्त्वा तस्मिन् सिद्धे विरते अहं बालचापल्यात् क्रुद्धः सन् हस्तस्थेन मृण्मयेन श्वेतहस्तिना तमाहतवान्। आहतश्च स मां प्रति कोपात् शशाप यस्त्वं मृण्मयेन हस्तिना मामकारणम् आहतवानसि, तस्मात्त्वं भूतले श्वेतहस्ती भूत्वा जन्म ग्रहीष्यसि! एवमुक्त्वा तस्मिन् विरते भवान् सभयं सविनयञ्च तं सिद्धमन्वनैषीः, तेन च स कृपा-

लुरेवं शापान्तमकरोत् यथा त्वं देवानुग्रहेण द्वीपाधिपति-र्भूत्वा अशीत्यधिकसहस्ररमणीनां पतिर्भवितासि, ततश्च लोकेषु तासामसतीत्वे प्रकटिते पुनरिमां स्त्रियमुद्वक्ष्यसि, अनन्तरं यदा अस्या अपि असतीत्वे प्रकटिते वैराग्यात् राज्यं परिहाय वनं गन्तुं यतिष्यसे, तदा ते सोदरोऽयं गजरूपं परित्यज्य दिव्यं रूपमवाप्स्यति, तदनन्तरञ्च त्वमपि स्वभार्य्यया शापमुक्तो भविष्यसीति, देव! आवयो-रीदृशः शाप आसीत्, अद्य सोऽतिक्रान्तः।

अथ रत्नकूटाधिपतिः भ्रातृमुखात् सर्वं श्रुत्वा पूर्वां जातिं स्मरन्नब्रवीत् हा कष्टम्! अद्य स्मृतम्, अहमेव स देवप्रभः, इयञ्च राजदत्ता मम पूर्वजाया राजवती, एव-मुक्त्वा भार्य्यया सह नरकलेवरं त्यक्त्वा सर्वसमक्षं गान्धर्वेण रूपेण आकाशमुत्पतन् मलयाचलमगात्। असौ शीलवती च चारित्रप्रभावेण अतुलां सम्पदमधिगम्य ताम्रलिप्ते नगरे सुखेनावात्सीत्। हेमप्रभा कथामिमां समाप्य पुनरभाषत नाथ! न कोऽपि त्रिलोकीतले बलेन स्त्रियं रक्षितुमीष्टे. एक एव तस्या विशुद्धः स्वभावस्तां रक्षति, तस्मादीर्ष्यैव मनुष्यस्य दुःखनिदानं सा रक्षितुमसमर्थैव प्रत्युत अन्यं प्रति औत्सुक्यं वर्द्धयतितराम्। एतदाकर्ण्य युवराजो नर-वाहनदत्तः परां तुष्टिमवाप।

---

## सप्तत्रिंशस्तरङ्गः।

अथ गोमुखोऽब्रवीत् 'युवराज! साधुशीलाः स्त्रियोऽतिविरला इत्यव्यभिचारि, अपरा स्वभावचपला अविश्वासिन्यश्च, अत्र कथामेतां कथयामि श्रूयताम्।

उज्जयिन्यां नगर्य्यां निश्चयदत्तो नाम कश्चित् वणिक्तनयः प्रतिवसति स्म। स खलु द्यूतेन बहूनि धनान्यर्जयित्वा सिप्रायां तरङ्गिण्यां स्नात्वा भगवन्तं महाकालेश्वरम् अर्च्चयित्वा ब्राह्मणेभ्यः दीनेभ्यः अनाथेभ्यश्च धनानि दत्त्वा च स्वयमङ्गरागम् आहारञ्चाकरोत्। अनन्तरः महाकालसन्निहिते श्मशानवर्त्तिनि शिलामये स्तम्भे विलेपनद्रव्यं संरक्ष्य तेन पृष्ठं घर्षति स्म। तेन बहुदिनमेवं कृते स्तम्भोऽयं मसृणतां प्राप। कदाचित् कश्चित् चित्रकरः केनचित् रूपकारिणा सह तेन पथा गच्छन् तस्मिन् स्तम्भे गौरीमूर्त्तिमङ्कयित्वा प्रचचाल।

अथैकदा काचित् विद्याधरकन्या भगवन्तं महाकालमाराधयितुं तत्रोपस्थाय तां गौरीमूर्त्तिं दृष्ट्वा अभ्यर्च्य च विश्रामार्थं तस्य स्तम्भस्य अभ्यन्तरं प्राविशत्। क्षणान्तरे स निश्चयदत्तस्तत्रागत्य स्तम्भपृष्ठे गौरीमूर्त्तिं विलोक्य विस्मितः पूर्ववत् तदेकदेशे चन्दनादिकं संरक्ष्य पृष्ठघर्षणे प्रवृत्ते। सा तु विद्याधरकुमारी अभ्यन्तरात् निश्चयदत्तस्य मोहनरूपेण विमोहिता प्रेम्णा बाहुं प्रसार्य्य तत्पृष्ठे चन्दनं विलेपितुमारेभे। निश्चयदत्तेन सहसा काङ्कणध्वनिं

श्रुत्वा करस्पर्शसुखञ्चानुभूय तस्या हस्ते धृते सा स्तम्भमध्यादुवाच भद्र! किन्तेऽपकृतं मया, यन्मम हस्तं धृतवानसि, तत् सत्वरं मुञ्चतु भवानिति। निश्चयदत्तोऽवदत् का त्वम्, अग्रतः परिचयं देहि, ततस्ते हस्तं त्यक्ष्यामि। विद्याधरी प्रत्यभाषत अग्रतः मुञ्च मां, ततः सम्मुखीना परिचयं ददामि। अथ निश्चयदत्तेन हस्ते मुक्ते विद्याधरी सम्मुखवर्त्तिनी उपविश्याब्रवीत् भद्र! अस्ति हिमाचलान्तर्वर्त्तिनि पुष्करावतीनगरे विन्ध्यसरो नाम विद्याधरः। अहमस्मि तस्या कन्या अनुरागपरा नाम। मयि भगवदाराधनार्थमागत्य अत्र विश्रमितुमुपस्थितायां भवान् पृष्ठविलेपनाय प्रवृत्तः, पतिता चाहं भवद्दर्शनपथे। अद्भुतः खलु भगवतः कुसुमायुधस्य प्रभावः, येन दृष्ट एव भवति हृदयं मे तथानुरञ्जितं यथा पृष्ठघर्षणप्रवृत्तस्य तव पृष्ठे स्वेन हस्तेन चन्दनं विलेपितुं प्रवृत्तास्मि, अनुरागपरतन्त्रया मया आत्मा स्वयमग्रतः धारितः, तेनैव त्वं मे करं धृतवान्। तदिदानीं मां विसर्जय, अहं गच्छामि। एवमुक्ता तस्यां गन्तुमुद्यतायां निश्चयदत्तः तदीयं मनोहरं रूपं वीक्ष्य अवादीत् सुन्दरि! अहं ते हृदयं हृतवानिति त्वया स्वयमेव कथितं, तत् साम्प्रतम् अमुक्ता त्वं कथं गन्तुं शक्नुयाः, तस्य तत् वचनमाकर्ण्य सा विद्याधरसुता अतीवानुरक्ता तं पुष्करावतीनगरे गमनाय आश्वास्य अनुरुध्य च प्रस्थानमकरोत्।

अथ निश्चयदत्तस्तस्या विद्याधर्याश्चिन्तया त्यक्तान्यकार्य्यः कथञ्चित् गृहं गत्वा तं दिवसमतिक्लेशेन यापया-

मास। ततः परेऽहनि प्रत्यूष एव उदङ्मुखः पथि गच्छन् उत्तरापथयायिनः कतिपयान् सार्थान् प्राप। क्रमेण बहूनि नगराणि ग्रामान् वनानि नदान् नदीश्च उत्तीर्य्य म्लेच्छ-बहुलामुत्तरभूमिमाससाद। तत्र ते सार्था निश्चयदत्तेन सह प्राणसंशयमापन्नाः। निश्चयदत्तस्तु तदा निरुपायः एकाग्रया भक्त्या भगवतीं भवानीं तथा तुष्टाव यथा सा तुष्टा तान् तेभ्यो दस्युमूर्तिभ्यो म्लेच्छेभ्यः मोचयामास। ततः सर्वेषु बहुतरमध्वानमतिक्रम्य म्लेच्छदेशमतिक्रान्तेषु सङ्गिनस्ते तत्रो दक्षिणापथं प्रतस्थिरे। निश्चयदत्तः केवल-मेकाकी अपि अनुरागपराया अनुरागमात्रसहायः उत्त-राभिमुख एव प्रातिष्ठत। पथि गच्छंश्च चतुर्भिर्यतिभिः सह मिलितो वितस्तां नदीमतिवाह्य आहारादिकमक-रोत्। ततश्च कृताहारास्ते अपराह्णसमये तस्मात् प्रदेशा दुत्थाय सायं कस्मिंश्चिद् विपिने प्रविष्टाः कियन्तमध्वानं गच्छन्तः कतिपयैः काष्ठभारिकैः सह समगच्छन्। ते ऊचुः भद्राः! अतः परमग्रसरा मा भूत, ग्रामो न सन्निहितः, वने चास्मिन् य एकः शिवालयोऽस्ति तदतीव भीषणं स्थानम्। यः खलु तस्मिन् मन्दिरे वा तद्बहिः तिष्ठति, तस्य जीवनाशा वृथा। तत्र शृङ्गोत्पादिनी नाम कापि यक्षी प्रतिवसति, सा शृङ्गोत्पादनमन्त्रेण मनुष्यान् मुग्धान् पशुवत् कृत्वा भक्षयति। तदिदानीं यद् भवद्भ्यो रोचते इति उक्त्वा ते स्वस्थानं प्रस्थिताः।

अथ सन्न्यासिनस्तेषां वचोऽविगणय्य निश्चयदत्तमब्रुवन् मित्र! वयं पञ्च, सा पुनर्यक्षी एकाकिनी, किमस्माकं

करिष्यति, वयं कतिषु कतिषु भीषणेषु श्मशानेषु अपि अवसाम। एवमुक्त्वा तेषु शिवालयमभिप्रस्थितेषु निश्चयदत्तोऽपि तैः सह तत् शिवमन्दिरमुपययौ। तत्र च सर्वे अङ्गेषु भस्मानि विलिप्य अग्निं प्रज्वाल्य आत्मरक्षार्थं मन्त्रं जपितुमारेभिरे। क्रमेण निशीथे समुपस्थिते सा शृङ्गोत्पादिनी कङ्कालमयवेणुं वादयन्ती नृत्यन्ती च तत्रोपतस्थे। ततश्च तेषामेकं सन्न्यासिनं प्रति दृष्टिं निक्षिप्य स्वं मन्त्रं पठितुमुपचक्रमे। मन्त्रप्रभावेण च तस्य सन्न्यासिनः शृङ्गमुत्तस्थौ। स तु उत्थितशृङ्ग एव मोहितो नृत्यन् तस्मिन् अग्निकुण्डे निपपात। अग्नावर्द्धदग्धञ्च तं सा यक्षी तस्मात् समाकृष्य सहर्षं भक्षयितुमारब्धवती। क्रमेण एकैकशस्त्रयोऽपि सन्न्यासिनो भक्षिताः। चतुर्थस्य सन्न्यासिनो भक्षणावसरे तस्यां स्वं वेणुयन्त्रं भूमौ संरक्ष्य भक्षयितुं प्रवृत्तायां निश्चयदत्तः समुत्पत्य तं वेणुयन्त्रं गृहीत्वा सनृत्यहासं वादयितुं प्रववृते। सा तु यक्षी वेणुविरहेण जड़मतिर्मृतेव सविनयं निश्चयदत्तमवादीत् साहसिन्! अहमबला स्वभावतश्च भीरुः। तन्मां मा विनाशय। इदानीमहं त्वां शरणं गता, भवान् मन्त्रं मा पठतु, रक्षिता अहं भवन्तमधुनैव अनुरागपरान्तिकं नेष्यामि, करिष्यामि च भवतोऽभीष्टसिद्धिम्।

एवमुक्त्वा विरतायां तस्यां निश्चयदत्तस्तद्वचसि विश्वस्तः वेणुवादनात् निवृत्तः। ततश्च सा निश्चयदत्तं स्कन्धमारोप्य आकाशयानेन अनुरागपरासकाशं प्रस्थिता। गत्वा च बहुतरं दूरं प्रभातायां शर्वर्य्यां कस्मिंश्चित् पर्वत-

कानने उपस्थाय निश्चयदत्तमवादीत् भद्र! उदिते कम-लिनीकान्ते अस्माकम् आकाशसञ्चरणसामर्थ्यं नश्यति, तद् भवानस्मिन् सुस्वादं फलं मूलञ्च भक्षयित्वा निर्झर-वारि च पीत्वा दिनमतिवाहयतु। अहमपि स्वस्थानं व्रजामि, रजन्यामागतायां पुनरागत्य अनुरागपरासमीपं नेष्यामि। एवमभिधाय तदनुमता स्वं स्थानं प्रतस्थौ।

अथैकाकी निश्चयदत्तः समन्तात् निक्षिप्तदृष्टिः समीप-वर्त्ति सरोवरमेकं दृष्ट्वा तदन्तिकमाजगाम। आघ्रायैव तद्वारि सविषं वह्निः स्वच्छशीतलमन्माय पिपासार्त्तोऽपि तज्जलपानविरतश्चचाल। गच्छंश्च अधित्यकायामारूह्य अद्राक्षीत् कश्चित् मर्कटो भूतलनिखातो वर्त्तते, परं तस्य चक्षुषी ज्वलिते इव राजेते दृष्ट्वैव विस्मयात् दण्डायमानं तमसौ मर्कटो मनुष्यवाचाब्रवीत् भद्र! अहं मानवः, ब्राह्म-णश्च, विधेः प्रतिकूलतया अस्यामवस्थायां निपतितोऽस्मि, यदि कृपया मामुद्धरसि, तदा स्वं वृत्तान्तमाख्याय कौतू-हलं निवारयामि।

कपिमुखात् तादृशं मनुष्यवचस्तमतीव विस्मिततर-मकरोत्। स खलु निश्चयदत्तस्तत्क्षणं तं भूमध्यात् उद्ध-धार। स तु उद्धृत एव उद्धर्तुः पदतले निपतितः सम-भाषत भद्र! लब्धजीवितोऽस्मि भवत्प्रसादात्, भवन्त-मिदानीं परिश्रान्तं पश्यामि, तन्मया सहागम्य परिश्रम-मपनयतु भवान्। भवत्प्रसादात् अद्य अहमपि पारणं करवाणि। एवमुक्त्वा निश्चयदत्तं कस्मिंश्चित् नदीतटे नीत्वा तत्रत्याच्च वृक्षात् नानाविधानि स्वादूनि फलानि आज-

हार। अथोभौ तानि फलानि भक्षयित्वा स्रोतस्तत्याश्च सुशीतलं पानीयं पीत्वा स्वस्थौ संवृत्तौ। क्षणान्तरे विश्रान्तेन निश्चयदत्तेन पृष्टः कपिः स्वं वृत्तान्तमवर्णयत्।

अहमासं वाराणसीनिवासी ब्राह्मणः सोमस्वामी नाम। पिता मम चन्द्रस्वामी, माता च सुवृत्ता नाम। क्रमेणाहमतिक्रान्तशैशवः सुदुर्दमं यौवनमनुप्राप्य नगरवासिनः कस्यचित् वणिजः कन्यायां बन्धुदत्ताभिधानायामासक्तः। सा हि मथुरावासिनः वराहदत्तनाम्नः कस्यचिद् वणिजो भार्य्यापि आविवाहात् पितुरालये एवातिष्ठत्। कियन्तं कालं तया सहैवं प्रणये चलिते तत्स्वामी तां नेतुं समाजगाम। तत्पित्रोर्जामातुरभ्यर्थनायां साह्लादं सम्मतयोः सा बन्धुदत्ता आत्मनः सर्वनाशमिव मन्यमाना रहसि विश्वस्तां सखीमाहूय समब्रवीत् सखि! पतिर्मां निश्चितमितो नेष्यति, परमहं सोमस्वामिनं विना न जीविष्यामि, कात्र गतिः?

एवमुक्ता अतिव्याकुलां तामवादीत् सुयशा नाम सा सखी, बन्धुदत्ते! मा उद्वेगं कृथाः, मम सन्निधौ मन्त्रद्वयं वर्त्तते, तयोरेकं पठित्वा कण्ठे सूत्रे बद्धे मनुष्यो वानरो भवति, द्वितीयं पठित्वा तस्मात् सूत्रे निष्कासिते असौ वानरो नरो भवति। तस्य च मानववानरस्य बुद्धिवृत्तिर्नान्यथा भवेत्। यदि रोचते, तत् तव प्रियतमं मर्कटमिश्रं विधाय स्वच्छन्दं श्वशुरालयं गच्छ। इदानीं मन्त्रद्वयं शिक्षस्व, तथा कृते ते प्रियसम्भोगो न कदाचित् व्याहन्येत।

बन्धुदत्ता सख्या उपदेशेन परमप्रीता तथेति मममं स्त । अनन्तरं रहसि समाहूय तथा प्रबोधिते अहमपि सम्मतिमकार्षम् । ततश्च सुखयशसो मन्त्रेण गलबद्धसूत्र एवाहं मर्कटोऽभूवम् । अनन्तरं सा मां पतिसमीपं नीत्वा अवादीत् नाथ ! सखी मे मर्कटशिशुमिमं प्रदत्तवती, तदहमिमं नीत्वा त्वया सह यास्यामि । इत्थमाग्रहेणानु-रुद्धोऽसौ सरलमतिर्वराहदत्तः सानन्दस्तथाभ्यनुजज्ञे । अथ पूर्ववत् बुद्धिवाक्‌शक्तिसम्पन्न एव मर्कटरूपेणातिष्ठम् । अहमश्च मनसि स्त्रीचरित्रमद्भुतमहिमेति समालोचयन् । व्यभावयञ्च कामुकानामीदृशी विड़म्बना प्रायेण घटते इति ।

अथ निरूपिते दिवसे बन्धुदत्ता पत्या सह मथुरां प्रस्थिता । वराहदत्तस्तु मां कस्यचित् भृत्यस्य स्कन्धमारो-पयामास । क्रमेण दिवसत्रये समतिक्रान्ते वयं वानरपूर्ण-मेकं काननमविशाम । प्रविष्टञ्च मां मानवस्कन्धारूढं दृष्ट्वा ते वानरा दलबद्धा अस्मान् प्रति अधावन्, अकुर्वंश्च समीप-मेत्य मद्वाहनं भृत्यं नखरैः क्षतविक्षताङ्गम् । भृत्यश्च तथा विक्लवे मां परित्यज्य पलायितः । ततस्तेषु मां गृहीत-वत्सु बन्धुदत्तामतिकातरां विलोक्य तत्पतिर्मां तेभ्यः समा-च्छेत्तुं सवर्गः सत्वरमाक्रमन् वानरान् प्रति घोरतरमाघातं कृतवान् । परं कथमपि तान् पराजितुमशक्नुवन् अगत्या मां विहाय गन्तुं प्रावर्तत ।

अथ वानरा लोमान्युत्पाट्य मां व्यतिव्यस्तमकार्षुः । अहमगतिः कियन्तं कालं मृतवदवस्थाय देवदेवं स्मरन्

सबलः संत्रस्तः परित्राणमलभे च तस्मात् पलाय्य एकं निविड़ं वनमाश्रित्य। क्रमेण बहूनि वनान्यतीत्य अस्मिन् उपस्थितोऽपि दुर्दैववशात् अपरां घोरामापदं प्राप्तवानस्मि। एकदा वर्षासु काचित् हस्तिनी सहसा समुपेत्य मां शुण्डेन गृहीत्वा अत्र वल्मीककर्दमे निधाय प्रस्थिता। अहं तस्मात् कर्दमात् उत्थातुं चेष्टमानोऽपि यदा नाशकं तदा अनुमितं सा करिणी न, कापि देवता तथाभूता मामीदृशीं दशां नेतुमागतेति। अहन्तु तत्र पतितो निरन्तरं भगवन्तं शम्भुं चिन्तयन्नजीविषं, मम तु क्षुधा तृषा च तदानीं नासीत्। एतावन्तं कालं विनाहारमतिष्ठं, तथापि मम बलहानिर्नासीत्। यद्भवतु, ममेदानीं मर्कटत्वमुक्तेरय-मेकोऽप्युपायोऽस्ति, यदि कदाचित् कापि योगिनी तं मन्त्रं पठित्वा मत्कण्ठात् सूत्रं मोचयेत् तदाहं पुनर्मनुष्यत्वं लभेयम्। एष मम वृत्तान्तः भवतस्तावदस्मिन् दुर्गमे वने समागमनकारणं श्रोतुमिच्छामि।

अथ निश्चयदत्तेन स्ववृत्तान्तमावेदितः कपिरूपी सोमस्वामी प्रत्यभाषत भद्र! अहमिव भवानपि स्त्रियाः कृते क्लेशमिमं भुङ्क्ते, वयस्य! स्त्रियः श्रियश्च कदाचित् न सुस्थिराः, अपरं स्त्री सन्ध्येव क्षणरागिणी, नदीव कुटिलाशया, भुजङ्गीव अविश्वासिनी, सौदामिनीव चपला च। तस्मात् सा विद्याधरदारिका यत् भवन्तं प्रति अनुरागं दर्शितवती, तदपि क्षणिकमवधारयतु। सा स्वाभिमतं सजातिं नायकं प्राप्यैव त्वदनुरागं तत्क्षणमेव त्यक्ष्यति। मित्र! परिणामविरसोऽयं व्यापारः। तदस्मा-

दध्यवसायाद् विरम्य यस्याः स्कन्धमारुह्य उज्जयिनीमेव प्रत्यागच्छं। मद्वाक्यमगणयित्वा नैव तत्र गन्तव्यं गतेन च ध्रुवं विप्रलम्भो लप्स्यते। अहमपि प्रथमं सुहृद्वचोऽवि-गणय्य इदानीमनुतपामि। हरिशर्म्मा नाम मम प्रियसुहृद् मां बन्धुदत्तासक्तां विज्ञाय निषिध्याब्रवीत् मित्र! स्त्रिया वशगो मा भूः, स्त्रिया अन्तःकरणमतिदुर्बोधम्। एतदुक्त्वा बहून् दृष्टान्तानदर्शयत्।

तेनैव प्रबोधितोऽपि तद्वाक्यमश्रुत्वा एवमवस्थां प्राप्तो-ऽस्मि। तद् भवानपि अनुरागपरानुरागं विजहातु। स्त्रोजातिर्नित्यं नवं नवं प्रार्थयते। तस्मात् ममेव तवापि शेषदशा पतिष्यति। कपेस्तत् वचनं निश्चयदत्तस्य मनसि तदा न स्थानमलभत। सोऽवदत् वयस्य! सा विद्याधरी विशुद्धे कुले जाता नैव मदनुरागं विस्मरिष्यति। एवमाल-पतोस्तयो रविरस्ताचलमगमत्।

सन्ध्यायामतिक्रान्तायाम् उपस्थितां यक्षीमालोक्य निश्चयदत्तः सोमस्वामिनमापृच्छ्य तस्याः स्कन्धमारुरोह। सा तु वेगेन गत्वा निशीथे पुष्करावतीं नगरीमाससाद। अनुरागपरा च योगेन प्रियतमागमनं विज्ञाय तं प्रत्युद्-जगाम। यक्षी अग्रत एव तामागतां समीक्ष्य अवादीत् असौ तव कान्ता समायाति, अधुनाहं व्रजामि, एवमुक्त्वा तमवरोप्य स्वस्थानमगात्। अनुरागपरा प्रियतमागमनेन पुलकिता तमालिङ्ग्य गान्धर्वेण विधिना पतिमकरोत्। पितरौ मा द्राष्टामिति कौशलेन विद्याबलात् उद्यान-वाटिकां निर्म्माय तत्र तेन सत्या समं सुखेनावात्सीत्।

अथ निश्चयदत्तेन अध्वक्लेशे आवेदिते अनुरागपरा तं यथोचितं सिषेवे। ततश्चैकदा सोमस्वामिनो मर्कटत्वमोचनाय तद्वृत्तान्ते विज्ञापिते साब्रवीत् तादृशं कार्य्यं नास्मदीयं, योगिन्य एव मन्त्रेण तत् साधयितुमर्हन्ति। तदपि तव प्रियमिति यथाशक्ति यतिष्ये तस्य मर्कटत्वमोचनाय। भद्ररूपा नाम अस्ति काचित् सिद्धयोगिनी, तया सह मे अतीव सौहार्द्दं वर्त्तते, तेनैव द्वारेणाहं त्वन्मित्रस्य कपित्वं मोचयिष्यामि। एतदाकर्ण्य अतीव सन्तुष्टेन निश्चयदत्तेन सोमस्वामिसकाशं गमनार्थमनुरुद्धा सा तत्क्षणमेव सममंस्त। आससाद च परेद्यवि प्रियतमं क्रोडे लब्ध्वा विद्याप्रभावेण सोमस्वामिसकाशम्।

सोमस्वामी निश्चयदत्तम् अनुरागपरया सहोपस्थितं दृष्ट्वा अभिनन्द्य च आशिषा आसनपरिग्रहार्थमनुरुरोध। अनन्तरमुभौ प्रणम्य तं शिलातले समुपविश्य कुशलवार्त्तां पृष्ट्वा कपित्वमोचनाय समाश्वास्य च स्वं स्थानं प्रत्ययासीत्। अथापरेद्युरपि निश्चयदत्तः पुनः सोमस्वामिसकाशगमनाय प्रियामनुरुरोध, परं सा तदसम्मता तस्मै आकाशसञ्चरणविद्यां दत्त्वा तमेव स्वयं गन्तुमचोदयत्। निश्चयदत्तोऽपि लब्धविद्याप्रभावेण आकाशसञ्चरणक्षमः सत्वरं कपिसकाशं तथैवोपस्थाय बहुभिः कथाप्रसङ्गैस्तमनन्दयत्।

अत्रान्तरे अनुरागपरायां नगरात् वहिर्गत्य उद्यानं प्रविश्य चोपविष्टायां कश्चिद् विद्याधरयुवकः अन्तरीक्षेण सञ्चरन् तत्र समाययौ। विवेद च विद्याप्रभावेण तां दृष्ट्वैव मनुष्यासक्ताम्। अथ सानुरागपरा तमागतं स्वावलोकनेन

मदनबाणजर्ज्जरितं वीक्ष्य अवनतमुखी मृदुमधुरमपृच्छत् कस्त्वम्? विद्याधरकुमारोऽवदत् भद्रे! अहं विद्याधरो रागरञ्जनो नाम। अहं तां दृष्ट्वैव सहसा मदनशरविद्धः समभवं, समर्पयञ्चात्मानं त्वयि अपश्यन्नन्योपायम्। यदि रोचते, तत् पितुरज्ञानतोऽपि मनुष्यपतिं विहाय मां पतित्वेन वृणुष्व। एवमुक्त्वा तस्मिन् विरते अनुरागपरा तमेव योग्यं पतिं विचिन्त्य तं प्रति साभिलाषं दृष्टिमदात्। स च तेनैव बोधितस्तां गाढ़माश्लिष्य प्रतस्थे।

अथ निश्चयदत्ते सोमस्वामिसकाशात् प्रत्यागते सा शिरोवेदनाव्याजेन तमालिङ्गनादिना पूर्ववत् नाभ्यनन्दत। अव्यग्रमतिर्निश्चयदत्तस्तत् सत्यं ज्ञात्वा तं दिवसमतिक्लेशेन अतिवाहयाञ्चकार। परेद्युर्वि तथैव सोमस्वामिसकाशमभ्येत्य सविषादमुपविष्टं तं सोमस्वामी कारणं पर्यपृच्छत्। निश्चयदत्तेन तु तस्याः शिरोवेदनैव विषादकारणमित्युक्ते ज्ञानी मर्कटः सस्मितमवादीत् मित्र! सर्वं ज्ञातं, यदीदानीं त्वं सत्वरं गत्वा निद्रितां तामनुरागपरामुत्सङ्गं नीत्वा मत्सकाशमानेतुं शक्नुयाः, तदा त्वामेकमद्भुतं दर्शयामि।

एतदाकर्ण्य निश्चयदत्तस्तथेति सम्मतिमकरोत्। अत्रावसरे स विद्याधरयुवा अनुरागपरान्तिकमुपगम्य तया सह सविशेषं सम्भोगसुखमुपभुज्य निद्रामयासीत्। सापि तिरस्करिण्या विद्यायाः प्रभावात् तमुत्सङ्गेनाच्छाद्य स्वयं निद्रामभजत।

अथ निश्चयदत्तः सत्वरं नभसा समुत्पत्य अनुरागपरा-

गृहमभ्येत्य च तां निद्रितामपश्यत्। दृष्ट्वैव च क्रोडेन गृहीत्वा पुनः समुत्पत्य सोमस्वामिसकाशमियाय। उपस्थितश्च तं दिव्यज्ञानसम्पन्नः सोमस्वामी योगप्रभावेण दिव्यचक्षुषमकार्षीत्। स च लब्धदिव्यदृष्टिरनुरागपराया उत्सङ्गे स्थितं विद्याधरयुवानं दृष्ट्वा विसिस्मिये। तच्च धिगिति वादिनं निश्चयदत्तं कपिरूपी असौ ज्ञानी यथार्थतत्त्वमबोधयत्।

अथ निश्चयदत्ते नितरां कुपिते असौ विद्याधरः योगबलेन आकाशमुत्पतन् तिरोदधे। अथानुरागपरां जागरितां सलज्जमधोमुखीं निर्भर्त्सयन्नाह पापिनि! त्वं विश्वस्तं वञ्चयसि? विदितमद्य अतिचपलं स्त्रीहृदयं, माया च तस्या अनुल्लङ्घ्येरगम्या। एवमुक्त्वा निर्भर्त्सिता सा निरुत्तरेव रुदती अन्तर्दधे।

अनन्तरं मर्कटः प्राह वयस्य! मद्वचः अनादृत्य यदनुरागपरामनुसृतवानसि, तस्यैतत् फलमनुतापं सहस्व। अस्मादृशः स्त्रियश्चातिचञ्चलाः, ताः प्रति क्षणमपि न विश्वसितव्यम्। तदलमनुतापेन, शाम्येदानीम्। कोऽतिक्रामति दैवम्? एवं प्रबोधितो निश्चयदत्तः शोकं मोहञ्च त्यक्त्वा सवैराग्यं देवदेवं शरणं ययौ। स च मर्कटस्तेनैव सह तत्राध्युवास।

गच्छति च काले कामपि तापसीं यदृच्छया तस्मिन् वने प्रविष्टामालोक्य निश्चयदत्तः सप्रणामं तदन्तिकमेत्य दण्डायमानोऽतिष्ठत्। तापसी अप्राक्षीत् भद्र! अस्मिन् भीषणे विपिने मर्कटेन सह तव मैत्री कथं जाता? निश्चयदत्तः

प्रथमं स्ववृत्तान्तं ततश्च मित्रवृत्तान्तमाख्याय मित्रं वानरत्वात् मोचयितुमनुरुरोध। सर्वज्ञासौ तापसी तथेति यावत् समन्त्रं मर्कटकण्ठात् सूत्रं मोचयति, तावत् स सोमस्वामी वानररूपं विहाय स्वं रूपं दधार। योगिनी च क्षणमेव तत्क्षणमन्तर्हिता।

अथ निश्चयदत्तः सोमस्वामी च तत्र वने तपसा देवं समाराध्य त्रिदिवमापतुः। नरवाहनदत्तोऽपि स्त्रीचापल्यविषयिणीं कथामिमामाकर्ण्य परितोषं लेभे।

---

## अष्टत्रिंशस्तरङ्गः।

अथ मरुभूतिरब्रवीत् देव! सर्वा एव स्त्रियश्चपला इत्यश्रद्धेयमेतत्। स्त्रियोऽपि परमसत्त्वसम्पन्ना दृष्टा, तत्प्रसङ्गेन यदेतदाख्यानं मे स्मृतिपथारूढं तदाकर्णयतु युवराजः।

आसीत् पाटलिपुत्रनगरे विक्रमादित्यो नाम भूपतिः। तस्य परमसुहृदौ राजानौ आस्ताम्। तयोरेको हयपतिः, द्वितीयो गजपतिर्नाम। सुविख्यातप्रतिष्ठानाख्यनगराधिपतिर्नरसिंहस्तस्य परमशत्रुरासीत्। सत्यपि नरसिंहस्य अपर्याप्ते पदातिबले राजा विक्रमादित्यः सुहृदोर्गजाश्वबलदर्पितः ससैन्यस्तदभिमुखं यात्रामकरोत्। सन्निवेशयच्च प्रतिष्ठाननगरात् बहिः सैन्यानि। राजा नरसिंहोऽपि

शत्रोरागमनं श्रुत्वा अमर्षपूरितः ससज्जस्तमाचक्राम। उभयोर्घोरः सम्प्रहारः संवृत्तः। बहुक्षणात् परं विक्रमादित्यसैन्येषु रणात् पराजितेषु राजा नरसिंहः जयश्रिया विराजमानः बन्दीगणान् गृहीत्वा पुरं प्रविवेश।

अथ राजा विक्रमादित्यः बलेन निर्जेतुमशक्नुवन् लोकापवादभयमगणयित्वा कौशलेन पराजेतुमयतत। स किल योग्ये मन्त्रिणि राज्यभारं समर्प्य बुद्धिवरं नाम प्रधानमन्त्रिणं शतं राजपुत्रान् पञ्च वीरपुरुषान् गृहीत्वा कार्पटिकवेशेन सुगुप्तं प्रतिष्ठाननगरमविशत्। अस्मिंश्च नगरे काचित् मदनमाला नाम परमसुन्दरी वेश्यासीत्। राजा सपरिजनस्तस्या एव गृहे अतिथिरभवत्। तस्या भवनं वेश्याभवनमिव नालक्ष्यत। सततं दासदासीहस्त्यश्वपूर्णं वर्तते। राजा पूर्वम् अपूर्वां भवनशोभामालक्ष्य प्रतीहारभूमिमुपस्थितो मदनमालान्तिकं संवादं प्राहिणोत्। मदनमाला श्रुत्वैव स्वयमागत्य राजानमन्तःपुरं नेतुं समाहूत्य आसनोपवेशनार्थमभ्यर्थयामास। राजा समुपविष्टः मदनमालाया अलौकिकं रूपलावण्यं सौजन्यञ्च विलोक्य चमत्कृतो मोहितश्चाभवत्। प्राशंसच्च तां भूरिशः साधुवादेन। विश्रामात् परं मदनमाला स्नानानुलेपनमहार्घवसनादिभिः राजानं विशेषेण सम्मानितवती, भोजितवती च राजानं मन्त्रिणं प्रधानानुचरांश्च विविधानि भोज्यद्रव्याणि। निर्द्धारितवती च अपरेषां परिजनानां दैनिकीं वृत्तिम्, इत्थं विविधैर्महोत्सवेन दिवसमतिवाह्य रात्रौ रजन्यामात्मानं राजहस्ते समर्पितवती। राजापि तत्-

सम्भोगेन परितृप्तस्त्वविशेषोऽपि यथोचितं दानादिकं कुर्वन् परमेण सुखेन कालमतिवाहयाञ्चकार। इत्थं राज्ञा मदनमालाया धने यौवने च सम्भुक्तेऽपि सा आत्मानं कृतार्थममन्यत। न्यवारयच्च पुरुषान्तरपराङ्मुखा नरसिंहागमनमपि कौशलेन।

एकदा राजा विक्रमादित्य मन्त्रिवरं बुद्धिवरं रहसि समाहूय अवादीत् मन्त्रिन्! पश्य मदनमालाया महानुभावत्वं, मयास्याः सर्वाः सम्पत्तयो भुज्यन्ते, तदपि न विरज्यते, प्रत्युत सन्तुष्यते एव। तस्मादस्याः कथं प्रत्युपकरोमि, उपदिश्यताम्। बुद्धिवरोऽवदत् देव! यदि प्रत्युपकर्त्तुमिच्छसि, तदा प्रपञ्चबुद्धिनामा भिक्षुर्यत् यदमूल्यं रत्नं भवते दत्तवान्, तस्य कियतांशेन एनां तोषयतु। राजोवाच मन्त्रिन्! यद्यहं भिक्षुदत्तानि सर्वाणि रत्नानि अस्यै प्रदद्यां तदपि अस्याः ऋणात् नैव मुक्तिः। मन्त्री प्रत्यभाषत देव! भिक्षुः कथमिमानि भवते प्रददौ? श्रोतुं मे परं कौतूहलं वर्त्तते। राजा बुद्धिवरेण निर्बन्धपृष्टः प्राब्रवीत्।

पुरा भिक्षुरसौ प्रत्यहं मत्समीपमेत्य एकमेकं दारुमयं पात्रमुपहृत्य गच्छति स्म। अहमपि तदनादृत्य कोषाध्यक्षहस्ते प्रादाम्। स च कोषाभ्यन्तर एव संरक्षितवान्। इत्थमेकस्मिन् वर्षे समतिक्रान्ते कदाचित् तद्दत्ते दारुभाजने मम हस्तात् सहसा भूपतिते एव भग्ने तस्मात् महामूल्यं रत्नमेकं वहिर्ययौ। तद्दर्शनविस्मितश्चाहं पूर्वप्रतानि सर्वाण्येव भाजनानि आनेतुमाज्ञापयम्। आदि-

ष्टेन च भाण्डागारिणा आनीतेभ्यस्तेभ्यो बहूनि रत्नानि समभ्यगच्छन् ।

परेद्यवि प्रपञ्चबुद्धिः समागतः कारणं परिपृष्टोऽब्रवीत् देव ! आगामिन्यां कृष्णचतुर्दश्यां श्मशानं गत्वा अहं कामपि विद्यां साधयिष्ये, तत्र च वीरपुरुषसाहाय्यमावश्यकं, तस्मिंश्च समये भवता कृतं किञ्चित् साहायकमिच्छामीति भवन्तमाराधितवानस्मि । एवमुक्त्वा तस्मिन् विरते अहमकपटमतिस्तत्प्रार्थनायां सममंसि, सोऽपि परितुष्टः स्वस्थानमगात् ।

अथ चतुर्दशीरात्रावागतायां भिक्षुप्रार्थना मत्स्मृतिपथमारूढ़ा । अहं सन्ध्यामुपास्य भुक्त्वा च निशीथं प्रतीक्षमाणोऽभ्यतिष्ठम् । दैवाच्च निद्रया समाकृष्टोऽशयिषि । अत्रान्तरे भगवान् नारायणः सदयः स्वप्ने मामादिष्टवान् वत्स ! प्रपञ्चबुद्धिरात्मनो मण्डलेश्वरत्ववासनया त्वां श्मशानं नीत्वा त्वन्मस्तकेन छिन्नेन अभीष्टदेवतामर्चयिष्यति । तदग्रत एव त्वां सावधानं करोमि, यदा स त्वां किमपि कर्तुमादेक्ष्यति, तदा त्वं तस्मात् तत् शिक्षितुमग्रतः कथयिष्यसि, त्वदनुशिष्टश्च स यदा त्वां तत् दर्शयिष्यति, तदैव त्वं खड्गेन तन्मस्तकं छेत्स्यसि । तदेवं कृते तदभिप्रायसिद्धिस्तवैव भविष्यतीति । एवमादिश्य तस्मिन् भक्तवत्सले तिरोहिते अहं प्रबुद्धोऽभ्यचिन्तयम् अद्य देवानुग्रहेणाहं लब्धजीवनः तं मायाविनं हनिष्यामि । एवमालोच्य प्रथमे यामे अतीते खड्गपाणिरेकाकी तत् श्मशानमुद्दिश्य प्रातिष्ठे । कापटिकोऽसौ भिक्षुर्मां दृष्ट्वा समाहृत्य चाब्रवीत् राजन् !

भवान् नेत्रे निमील्य अङ्गं प्रसार्य च भूतले शेतां ततश्चा-भयोरभीष्टसिद्धिर्भवितेति। अहमवादिषम् अज्ञोऽहमीदृश-माचरितुं, तदग्रतो मां दर्शयेति। भिक्षुस्तथेति मद्वचसि सम्मतो नेत्रे निमील्य अधोमुखो भुवि अशेत। तदैवाहं तथा शयानस्य तस्य शिरः सत्वरमेवासिना छिन्नमकरवम्। छिन्नमात्र एव तस्मिन् सहसा दैववाणी उदचरत् राजन्! इमं पापीयसं भिक्षुमुपहारीकृत्य त्वमेवास्य इष्टसिद्धेरधि-कारी अभवः। अहं धनपतिः कुवेरः, तवैतत् साहसं दृष्ट्वा प्रीतोऽस्मि, वरं वृणुष्व। एवमुक्त्वा तस्मिन् देवे सम्मुखीने अहं प्रणम्य तमब्रूवम् भगवन्! यदाहं वरं ग्रहीतुमेषि-ष्यामि तदैव भवन्तं स्मरिष्यामि, स भवान् तदैव मह्यं प्रदास्यसि, अधुना वरेणालम्। एवमुक्त्वा विरते मयि स देवस्तथेति अभिधाय तिरोदधे। अहञ्च सिद्धिलाभेन नभः-सञ्चरणक्षमस्तत्क्षणमेव गृहं प्रत्यागमम्। तदेष तस्य वृत्तान्तः। साम्प्रतं कुवेरवरेण मदनमालां प्रत्युपकर्तुमिच्छा-मीति उक्त्वा राजा महामात्यादीन् विसर्ज्य मदनमालया सह तां रात्रिं सुखेन यापयामास।

अथापरेऽहनि प्रातःकृत्यं समाप्य जपव्याजेनैकाकी देवमन्दिरं विवेश, सस्मार च देवं धनपतिम्। स्मृतमात्रञ्च तमुपस्थितं दृष्ट्वा राजा वरं प्रार्थयामास देव! मह्यं स्वर्ण-मयान् पञ्च अक्षयान् पुरुषान् प्रयच्छ, येन तेषां शरीरतो यावदिच्छं स्वर्णं ग्रहीतुं शक्नोमि, न च ते कदापि क्षयं गच्छन्तीति। तथेत्युक्त्वा च तस्मिन् देवे तिरोहिते तत्क्षण-मेव राजसमक्षं पञ्च सुवर्णमयाः पुरुषाः प्रादुरासन्। ततो

नरपतिः स्वां प्रतिज्ञां स्मरन् आकाशसञ्चारेण पाटलिपुत्र-मेत्य यथापूर्वं राजकार्य्याणि पर्य्यालोचयितुं मनो दधे, न तु विसस्मार प्रतिष्ठाननगरव्यापारम्।

अत्रान्तरे मदनमाला राजदर्शनव्याकुलिता तमन्वेष्टुं देवमन्दिरं गता अपश्यत् राजा तत्र नास्ति, केवलं स्वर्ण-मयाः पञ्च महाकायाः पुरुषास्तत्र स्थिताः। तदा सा विषण्ण-मनाः समचिन्तयत् प्रियतमो मे कश्चिद् विद्याधरो वा गन्धर्वः सम्भवति। मन्ये स एव महापुरुषो मदर्थं पञ्चै-तान् काञ्चनपुरुषान् रचयित्वा क्वापि गतः, तत्तेन विना मे किमेतैः? एवं चिन्तयन्ती परिजनान् इतस्ततः तत्संवाद पृच्छन्ती च तस्माद् देवगृहाद् वहिर्गत्वा च समन्तात् अन्वेषितुमारब्धवती। अथ कुत्रापि राजानमदृष्ट्वा प्राणां-स्त्यक्तुमुद्यतां तां परिजनाः अशिमतः समाश्वसन्। सा तु तदानीं प्राणत्यागाद्विरम्य प्रतिजज्ञे यदि षण्मासाभ्यन्तरे प्रियतमं न प्राप्नुयाम्, तदा सर्वस्वं अग्निसात् कृत्वा स्वय-मग्नौ प्रवेक्ष्यामीति। इत्थं प्रतिजानती एव केवलं राजानं निरन्तरं ध्यायन्ती मुक्तहस्ता सदा दानव्रतपरा व्यतिष्ठत। एकदा एकस्य काञ्चनपुरुषस्य हस्तमेकं छित्त्वा विप्रसात् कृत्वा च परेऽहनि प्रातरपश्यत् तत्तस्य हस्तस्तथैव तिष्ठति। दृष्ट्वा विस्मिता तस्मिन् दिने सर्वेषां हस्तान् छित्त्वा अर्थिभ्यः सम्प्रदत्तवती, परेद्यवि तथैव हस्तसमेतान् तान् सर्वान् अद्राक्षीत्। तदनन्तरमतीव विस्मयाविष्टा सुवर्णपुरुषान् अक्षयान् मन्यमाना प्रतिदिनं तेषां हस्तान् छित्त्वा अर्थि-सात् कर्तुमारेभे।

एवं दानशीलताकीर्त्तिं मदनमालायाः सर्वत्र प्रचारितां निशम्य पाटलीपुत्रनिवासी कश्चित् संग्रामदत्तो नाम दरिद्रो द्विजः मदनमालान्तिकं धनं याचितुमाजगाम। दानशीला मदनमाला चतुर्वेदिने विप्राय चतुरो हेमहस्तान् प्रददौ। संग्रामदत्तस्तस्या वदान्यतातिशयेन परितुष्टोऽपि तत्परिजनानां सकाशात् तदीयां कठिनां षण्मासोत्तरमरणरूपां प्रतिज्ञां निशम्य अत्यर्थं विषसाद। ततोऽसौ तत् हस्तचतुष्टयं हस्तिपृष्ठे निधाय गृहमेत्य राजानं विक्रमादित्यमब्रवीत् राजन्! अहमस्मि अस्मिन् नगरे सुदरिद्रो ब्राह्मणः संग्रामदत्तो नाम। अहं भिक्षार्थं दक्षिणापथं व्रजन् प्रतिष्ठानमगमम्, अशृणवञ्च तत्रत्या काचित् मदनमाला नाम वारयोषित् अतिदानशीला वर्त्तते, परं तत्सकाशे कोऽपि दिव्यपुरुषः कश्चित् कालमुषित्वा तस्यै पञ्च अक्षयान् काञ्चनपुरुषान् दत्त्वा तामनाथां कृत्वा पलायितः। सा तु वाराङ्गना तद्विरहेण नितान्तमुन्मना: प्राणांस्त्यक्तुमुद्यताभवत्। तत्परिजनस्तु ताम् अशेषेण सान्त्वयित्वा साम्प्रतं मरणव्यवसायात् निवर्त्तयामास, परं सा प्रतिजज्ञे यदि षण्मासाभ्यन्तरे प्रियतमं न लभेयं तदाग्नौ प्रवेक्ष्यामीति निश्चित्य मुक्तहस्ता ततः प्रभृति आहारनिद्रादिकमपि परित्यज्य दिने दिने कृशतामवाप। मह्यन्तु वेदचतुष्टयसंख्यया चतुरः स्वर्णमयान् हस्तान् प्रददौ। तन्महाराज! यदर्थं सा मर्त्तुमुद्यता, तस्य तां त्यक्तुमयुक्तम्। अहमिदानीं तद्दत्तेन स्वर्णहस्त-

चतुष्टयेन यज्ञं कर्त्तुमिच्छामि, परन्तु अस्मिन् महाराजेन सहायेन भवितव्यमिति।

राजा संग्रामदत्तमुखात् मदनमालावृत्तान्तमाकर्ण्य सविशेषमुद्भ्रान्तचित्तोऽभवत्, आदिशच्च विप्रसाहाय्यार्थं प्रतीहारम्। ततश्च मन्त्रिणि राजभारं समर्प्य व्योमयानेन पुनः प्रतिष्ठानं गत्वा मदनमालामजीवयत्। अनन्तरं कृत-प्रणयालापो राजा मदनमालां रहसि नीत्वा स्वं परि-चयमदात्। अथ यदर्थं गुप्तवेशेन प्रतिष्ठाने अवस्थानं, प्रपञ्चसारं भिक्षुं विनाश्य यथा खेचरत्वाधिगमः, कुवेर-सकाशात् वरप्राप्तिप्रभावेण यथा सुवर्णपुरुषचतुष्टयप्राप्तिः, यथा च विप्रमुखात् मदनमालावृत्तान्तश्रवणात् पुनः प्रति-ष्ठानागमनं तत्सर्वं वर्णयित्वा पुनरवादीत् प्रिये! राजा नरसिंहो बलात् जेतुमशक्यः। खेचरेण च द्वन्द्वयुद्धे भूचर-विनाशः क्षत्रियेण अधर्म्मयुद्धे जयलाभश्चातीव गर्हित इति मन्यमानः कौशलेन तं जेतुमेतत् सर्वमकरवम्। साम्प्रतं त्वया कृतं साहाय्यम् अभीष्टसिद्धेर्हेतुरिति कथयित्वा तत्-कर्णे एवमेवं कर्त्तव्यमिति समादिदेश। सा च वारवनिता तथेति प्रतिज्ञाय द्वारपालं वन्दिनः प्रतीहारश्चाहूय राजा-ज्ञानुसारेण कार्य्यं कर्त्तुमुपदिश्य सर्वान् विससर्ज।

अत्रान्तरे राजा नरसिंहोऽपि मदनमालाया दिगन्त-व्यापिनीं वदान्यताकीर्त्तिं निशम्य कदाचित् तां साक्षात्-कर्त्तुमभ्यागमत्। प्रतीहारस्तु स्वामिन्या आदेशेन तं प्रवेष्टुं न न्यवारयत्। प्रत्युत अन्तःपुरप्रवेशोद्यतन्तु तं द्वारस्था वन्दिनः तारस्वरेण प्राब्रुवन् देव! राजा नरसिंहो भवन्त-

मनुरक्ताः प्रणतश्चेति। ततश्च तैरेवमुक्ते नरसिंहः कुपितः शङ्कितश्चापृच्छत् अस्ति कोऽपि मदनमालागृहे साम्प्रतम् ? ते प्रोचुः, राजा विक्रमादित्योऽत्र वर्त्तते। इति निशम्य राजा नरसिंहः क्षणं चकितोऽचिन्तयत् मन्ये विक्रमादित्यो बलेन मां जेतुमशक्नुवन् कौशलेन जेतुं यतते, भो विक्रमादित्य! तव तेजस्वितां धिक्। साम्प्रतं गृहागतं मां बलेन निहन्तुं न युक्तमित्युक्त्वा अन्तःपुरं प्रविश्य सम्मुखीनोऽभवत्। विक्रमादित्यस्तु तमागतं वीक्ष्य सस्मितम् आसनादुत्थाय बाहुना कण्ठमाश्लिष्य समाहृतवान्। अनन्तरमुभौ कुशलं परिपृच्छन्तौ परां प्रीतिमवापतुः।

ततश्च प्रसङ्गेन सुवर्णपुरुषवृत्तान्ते नरसिंहेन पृष्टे राजा आमूलात् सर्वं वृत्तान्तमवर्णयत्। तदाकर्ण्य नरसिंहो विक्रमादित्यं विमानचारिणं महाबलशालिनञ्च मन्यमानः तेन सह मैत्रीमैच्छत्। विक्रमादित्योऽपि तस्य प्रस्तावमन्वमोदत। अनन्तरं नरसिंहस्तं विक्रमादित्यं मित्रं राजभवनं नीत्वा यथोचितं समाहृत्य च व्यसर्जयत्।

राजा विक्रमादित्यः इत्थं दुस्तरं प्रतिज्ञामुत्तीर्य्य मदनमालागृहं प्रत्येत्य स्वं नगरं गन्तुमभिप्रायमकरोत्। तदाकर्ण्य मदनमाला तद्विरहमसहमाना स्वं भवनं विप्रसात् कृत्वा राज्ञा सह गन्तुमैषीत्। राज्ञा च तत्प्रस्तावे सम्मते सा सर्वस्वमर्थिभ्यो दत्तवती। अथ राजा तया मदनमालया सह हस्त्यश्वरथपत्तिभिः स्वसैन्यैः परिवृतः स्वां राजधानीं प्रतस्थे। सुखमुवास च नरसिंहेन सह मैत्रीं विधाय।

मरुभूतिः कथामिमां समाप्य अवादीत् युवराज!

वेश्यापि यदा राजमहिषीव सुशीला दृढ़ानुरागिणी च दृश्यते, तदा कुलकामिन्यस्ताभ्यो भवन्त्येव नात्र कश्चित् संशयः इति। राजकुमारो नरवाहनदत्तः तस्य कथा-वैचित्रीं निशम्य परां तुष्टिमापेदे।

## ऊनचत्वारिंशत्तरङ्गः।

अथ हरिशिखः प्राब्रवीत् प्रभो! श्रूयताम्। आसीत् पुरा वर्द्धमाननगरे वीरबाहुर्नामातिधार्म्मिको नरपतिः। तस्य शतं महिला आसन्। तासु गुणवरानाम्नी महिषी एव प्रियतमाभूत्। राजा सर्वास्ताः अपुत्राः संवीक्ष्य पुत्रोत्पत्तेरौषधार्थं श्रुतवर्द्धनं नाम भिषजमाहूय स्वमभि-प्रायं व्यज्ञापयत्। वैद्यस्तथेति प्रतिज्ञाय वन्यमेकं छागं प्रार्थयामास।

अथ राज्ञा आनीतं छागं छित्त्वासौ भिषक् पाचकेन रन्धयित्वा राजमहिषीः सर्वाः समवेताश्चकार। एका गुण-वरा नागमत्। सा तु तत्कालं देवार्चनव्यग्रा राजान्तिक-मुपस्थितासीत्। वैद्यराजो गुणवरानपेक्ष्यैव तन्मांसक्वाथं केनचित् चूर्णेन मिश्रयित्वा सर्वाभ्य एव ताभ्यः विभज्य दत्तवान्। न रक्षितवांश्च गुणवरार्थं किञ्चिदपि।

अनन्तरं देवार्च्चायां समाप्तायां राजा गुणवरया सह तत्रागत्य मांसक्वाथो नास्तीति दृष्ट्वा अतीव विरक्तः सम-भवत्। तद् दृष्ट्वासौ वैद्यः नितान्तं लज्जितस्तत्क्षणं तस्य

छागस्य शृङ्गाथं प्रणम्य राजानमब्रवीत् देव! अनेनैव शृङ्गाथेन भवतोऽभीष्टसिद्धिर्भवितेति। एवमुक्त्वा तस्मिन् चूर्णं प्रक्षिप्य गुणवरायै दत्त्वा राजानं समतोषयत्।

अथ गच्छता कालेन सर्वा एव महिष्यः दशमे मासि एकैकं पुत्रं प्रसूतवत्यः। गुणवरा च सर्वेशेषतः सर्वलक्षण-युक्तं पुत्रमसूत।

राजा पुत्रजन्महर्षितः महोत्सवं विधाय पुत्राणां नामकरणमकरोत्। शृङ्गाथ भक्षणेन कनिष्ठपुत्रो जात इति तं शृङ्गभुज इति नाम्ना समाजुहाव। सर्व एव पुत्राः पितुः प्रयत्नेन दिने दिने वर्द्धमानाः क्रमेणातिक्रान्त-शैशवाः सर्वासु विद्यासु पारदर्शिनोऽभवन्। शृङ्गभुजस्तु रूपे कामेन, पराक्रमे भीमेन, धनुर्वेदे चार्ज्जुनेन समो-ऽभूत्। अपरा महिष्यः कनिष्ठं पुत्रं सर्वगुणालङ्कृतं दृष्ट्वा ईर्ष्याकलुषिताः सम्प्रथम् ऐकमत्येन गुणवराया दोषप्रक-टने चक्रान्तमकुर्वन्।

एकदा यशोलेखानाम्नी राजमहिषी सपत्नीभिः सह राजान्तिकमुपगम्य सविषादमब्रवीत् नाथ! महती हृदय-विदारिणी घटना उपस्थिता, अयाच्यमपि असह्यमिति निवेदयामि, यस्य परेषां दोषनिवारणं कार्य्यं स कथ-मात्मनस्तादृशं दोषं सहते? देवस्यान्तःपुररक्षिणा सुरक्षि-तेन सह भगिन्याः गुणवरायाः प्रसक्तिरन्तःपुरेषु प्रकटि-तेति। राजा यशोलेखया समुदीरितं निर्घातसमं वचन-माकर्ण्य म्रियमाण इव क्षणं तूष्णीमतिष्ठत्। अनन्तरं सर्वा एव महिष्यः राज्ञा सत्यनिर्णयार्थं पृष्टास्तत्रैवाम्लानवदनाः

सत्यमिति प्रत्यूचुः। परन्तु सुचतुरो जितेन्द्रियश्च राजा तादृशं प्रवादमसम्भवं विभाव्य परिणामदर्शनार्थं कौशलेन सर्वा एव ताः पर्य्यक्लमैषीत्।

अथापरेद्युः सभासीनो नरपतिः सुरक्षितं सर्वजनसमक्षमाहूय कपटकोपेन अभ्यभाषत पाप! मया ज्ञातं त्वं ब्रह्महत्यामकार्षीः, तद् यावत् त्वं तीर्थेषु पर्य्यटित्वा नागच्छसि तावत् ते मुखं न द्रक्ष्यामि। निरपराधः सुरक्षितस्तु सहसा अपवादमिमं श्रुत्वा भ्रान्तचित्तः नाहमीदृशं पापमाचरितवानिति कथयन्नपि राज्ञाभिहितः दुरात्मन्! नात्र काचित्ते कथा, सत्वरं काश्मीरं व्रज, तत्रत्यं विजयक्षेत्रं नन्दिक्षेत्रं वराहक्षेत्रञ्च अन्यच्च पुण्यक्षेत्रं परिभ्रम्य पापं प्रक्षालयन् आगच्छ। एवमुक्त्वा सुरक्षितं तीर्थयात्रायां प्राहिणोत्। सोऽपि निर्दोषः राजाज्ञापरतन्त्रः स्वदेशं परित्यज्य तीर्थभ्रमणार्थं प्रस्थितः।

अनन्तरं राजा गुणवरान्तिकमुपगम्य सस्नेहकोपं सदुःखञ्च उपाविशत्। पतिव्रता गुणवरा पत्युस्तथाविधं भावं दृष्ट्वा व्याकुलिता कारणं परिपप्रच्छ। राजा सकपटमवादीत् प्रिये! अद्य कोऽपि महापुरुषो मत्समीपमागतः समादिक्षत् राजन्! त्वं गुणवरां कञ्चित् भूमध्यवर्त्तिनि गृहे संरक्ष्य स्वयं कियन्तं कालं ब्रह्मचर्य्यमवलम्बस्व, नो चेत् राज्यनाशो भवितेति।

पतिहितैषिणी गुणवरा राज्यनाशवार्त्तामाकर्ण्य सभयमवादीत् नाथ! यद्येवं सत्वरं मां भूमध्यगृहे निर्वासय, मया प्राणेषु अपि दत्तेषु यदि भवतो हितं स्यात् तदपि

मे सम्मतम्। पतिरेव नारीणामिह परत्र च गतिः॥ राजा तस्या एवमुदारां वाचं निशम्य सवाष्पमचिन्तयत् मन्ये उभाविव निरपराधौ। मया यावत् सुरचितमालय ब्रह्महत्यापवादं दत्त्वा देशत्यागाय आदिष्टं, तावत् तस्य कोऽपि विकारो न लक्षितः॥ तद् यावत् अपवादमिमं सत्यमनिश्चित्य ईदृशे कार्य्ये प्रवृत्तिरतीव गर्हिता क्लेशदा च। इत्थं विविच्य दुःखेन गुणवरामन्तःपुरमध्यवर्त्तिनि क्वचित् भूगृहे निर्व्वासितवान्। गुणवरा पत्युर्हितमिति तदेव भूगृहं स्वर्गं मन्यमाना तत्रैवावसत्।

अथ राजपुत्रे शृङ्गभुजे सविषादं मातरं प्रति एतादृशाचरणकारणं पृष्टवति राजा राजमहिषीं यथा प्राबोधयत् तथा तमपि प्रबोध्य समाश्वासयत्।

यशोलेखा इत्थं सपत्नीं निर्व्वास्य तत्पुत्रमपि तथैव निर्व्वासयितुं स्वं पुत्रं निर्व्वासितभुजमनुरुरोध। सोऽपि मातुराज्ञया अन्यैर्भ्रातृभिः सम्भूय तथैव शृङ्गभुजं निर्व्वासयितुं कौशलमकार्षीत्।

अग्निशिखो नाम कश्चित् निशाचरो वकरूपेण मानवान् सततं संहरति स्म। तमेकदा क्रौञ्चरूपेण राजभवनोपरि उपविष्टं दृष्ट्वा सहसोपस्थितः कश्चित् क्षपणकः राजकुमारान् अदर्शयत्। ततश्च ते राजसुतास्तं प्रति शरवर्षमकार्षुः परं तं निहन्तुं नैव शेकुः। अथ क्षपणकेन शृङ्गभुज एव एनं वकं हन्तुं शक्त इत्यभिहिते अपरे पुत्रास्तेनैव सुयोगेन तं निर्व्वासयितुकामाः पितुर्धनुर्वाणञ्च गृहीत्वा तं मायाविनं हन्तुम् अनुरुरुधुः। ततश्च शृङ्गभुजेन

शरासने शरं सन्धाय विद्धः स वकस्तेन बाणेन सहैव पलाय्य वनमविशत्। अथ धूर्त्तो निर्वासितभुजः अपरै-र्भ्रातृभिः समेत्य शृङ्गभुजं पितुः स्वर्णनिर्मितं शरमानेतुं सनिर्बन्धमवादीत् यदि त्वं शरमिमं नानयेः, तदा वयं त्वत्समक्षमात्मघातिनो भविष्यामः। स तु भ्रातॄणां तथा प्रतिज्ञामाकर्ण्य पितुर्बाणमानेतुं प्रतिजानान एव स्वं धनुर्बाणं गृहीत्वा वकमनुससार। अथ ते भ्रातरः सहर्षं स्वां स्वां मातरमुपगम्य तं वृत्तान्तमवर्णयन्। ताश्चातीव सन्तोषमवापुः।

शृङ्गभुजस्तु रुधिरधारादर्शनेन वकमनुसरन् कामपि अटवीं प्रविश्य नगरमेकमपश्यत्। उपाविशच्च श्रमाप-नोदनार्थं नगरोपकण्ठवर्त्तिनि उद्यानतरुतले। क्षणेन च अद्भुतरूपा कापि कन्यका तत्समीपमाययौ। राजसुतः शृङ्गभुजस्तां स्ववृत्तान्तमपृच्छत्।

कन्या राजतनयं प्रति सकटाक्षं दृष्टिं निक्षिप्य साश्रु-लोचना मृदुमधुरमब्रवीत् भद्र! नगरमिदं धूमपुरं नाम। अग्निशिखो नाम राक्षसस्य अस्याधिपतिः। अहञ्च तस्य कन्या रूपशिखा नाम। अहमुद्यानपर्य्यटनार्थमागता भवतो रूपेण मोहितास्मि। तत् स्वं वृत्तान्तमाख्याय मे कौतूहलं खण्डयतु। शृङ्गभुजस्तयैवमभ्यर्थितः स्वं परिचयं दत्त्वा अवादीत् मया कश्चिद् बाणविद्धो वकस्तेनैव बाणेन सह अस्यामेव दिशि पलायितः, अहं तमनुसरन् अत्र समागतोऽस्मि।

रूपशिखावदत् महात्मन्! मम पितैव वकरूपेण भुवं

पर्य्यटति, परं तं निहन्तुं न कोऽपि त्रिभुवनवासिषु शक्नोति। भवता तु यदा वकरूपो पिता मे वाणेन विद्धः तदा त्वत्समो वीरस्त्रिलोक्यां न दृश्यते। पिता मम तं सुवर्णमयं शरमक्लेशेन सोढ़वान्। स्वस्थतामापेदिवांश्च तं वाणमुत्पाद्य विशल्यकरण्या महौषध्या। तद् यावदहं अद्यप्रभृति भवन्तम् आर्य्यपुत्रेति सम्बोध्य भवते आत्मानं समर्पयामि, स भवान् मां परिणीय ममाभिलाषं पूरयतु। क्षणमिह मामपेक्षतां भवान्, अहं गत्वा सत्वरं पितरमनुमान्य त्वामन्तःपुरं नेष्यामीति।

एवमभिधाय रूपशिखा सत्वरं पितुः समीपमेत्य राजपुत्रस्य शृङ्गभुजस्य आगमनं गुणग्रामांश्च कथयित्वा अवादीत् तात! यदि तेन सह मत्परिणयं न विदध्याः, तन्निश्चितं जीवितं त्यक्ष्यामीति।

अग्निशिखः कन्यायास्तादृशं निर्बन्धं श्रुत्वा तं शृङ्गभुजमन्तःपुरमानेतुमादिदेश।

रूपशिखा च पितुरादेशेन सन्तुष्टा राजपुत्रसकाशमेत्य सर्वं कथयित्वा पितुः सकाशं तमनयत्। शृङ्गभुजे सप्रणामं समक्षवर्त्तिनि राक्षसराजः सादरमब्रवीत् राजपुत्र! यदि कदापि मद्वचः नातिक्रामेः, तदाहं तुभ्यं कन्यामिमां ददामि। शृङ्गभुजं तथेति सम्मतं स्नानाय समादिश्य रूपशिखां तद्भगिनीनामानयनार्थमाज्ञापयत्।

पथि रूपशिखा शृङ्गभुजमाह नाथ! वयं शतं भगिन्यः अविवाहिताः, अस्माकं सर्वासामेव रूपं वसनं भूषणञ्च समम्। सर्वासामेव कण्ठे एकविधो हारः शोभते। शिता

मम त्वां कथयितुम् अस्माकं सर्वासां मध्यात् मां निर्वाच्य ग्रहीतुं त्वामादेक्ष्यति। अहन्तु तदा मत्कण्ठस्थं हारं शिरसि धारयिष्यामि, त्वं तेनैव सङ्केतेन मां लक्षयित्वा मत्कण्ठे वनमालाम् अर्पयिष्यसि। पितास्माकं जड़मतिः, तस्य हिताहितविवेको नास्ति। तस्मात् स यदा त्वां विप्रलब्धुं यद् यद् आदिशेत् तत् सर्वं सम्मत्य मत्समीपमागमिष्यसि, अहं तत् सर्वं प्रतिविधास्ये। एवमुक्त्वा भगिनीसकाशं गत्वा सर्वास्ताः पितुरन्तिकमानिनाय।

अत्रान्तरे शृङ्गभुजं स्नात्वा समीपमुपस्थितं दृष्ट्वा अग्निशिखस्तस्मै वनमालामेकां प्रदाय अब्रवीत् इयं माला तव प्रियतमायाः कण्ठमारोप्यताम्। शृङ्गभुजो मालाहस्तः कन्यानामन्तिकं गत्वा सङ्केतकारिण्या रूपशिखाया हारं शिरसि धृतां दृष्ट्वा च तस्या एव कण्ठे तां मालां समर्पयत्। ततश्च अग्निशिखः परेऽहनि प्रातर्विवाहदानाय सम्मतः कन्याभिः सह शृङ्गभुजमन्तःपुरं प्रावेशयत्।

क्षणान्तरे च राक्षसः शृङ्गभुजमाहूय वृषद्वयं प्रदाय पुराद् वहिः क्षेत्रं कर्षयित्वा तत्र समखारीमितान् तिलान् वप्तुमादिशत्। शृङ्गभुजस्तथेति प्रतिज्ञाय रूपशिखासमीपमेत्य तद्वृत्तान्तमकथयत्। सा च तं साहसं दत्त्वा क्षेत्रं प्रति प्राहिणोत्। स तु क्षेत्रं गत्वा राशीकृतान तिलान् दृष्ट्वा भीतः किंकर्तव्यविमूढ़ आसीत्, परम् अग्निशिखा मायया भूमिं कर्षयित्वा क्षणमात्रेण तिलान् तत्रोप्त्वा पत्युरुद्वेगमशमयत्।

शृङ्गभुजो रूपशिखाया मायाबलसाधितं कार्यजात-

मवलोक्य विस्मितश्चमत्कृतश्चाभवत्। ततोऽग्निशिखमुपेत्या-ब्रवीत् आर्य्य! भवदादेशः सम्पादितः। पुनश्च राक्षसोऽवदत् अद्यैव यदेतत् तिलवपनं कृतं तत् पुनः राशीकुरु। शृङ्गभुज-स्तथेति अभिधाय रूपशिखांन्तिकमेत्य तथादेशं न्यवेदयत्। सा च मायया तत्क्षणमेव तत् कार्य्यं सम्पादयामास। ततश्च शृङ्गभुजः श्वशुरमुपेत्य तथैव तत्समाधानमब्रवीत्।

मूर्खो धूर्त्तोऽग्निशिखस्तथाप्यसन्तुष्टः पुनः शृङ्गभुज-मादिक्षत् वत्स! स्थानादस्माद् दक्षिणेन योजनद्वयान्तर-वर्त्तिनि अरण्ये शिवमन्दिरमेकमस्ति। तत्र धूमशिखो नाम मत्सहोदरः कनीयान् प्रतिवसति। त्वं तत्र गत्वा तं निमन्त्र्य दण्डाभ्यन्तरे पुनरागच्छ। प्रत्यागताय च तुभ्यं श्वः प्रातरेव कन्यां दास्यामीति। राजपुत्रस्तथेति प्रतिज्ञाय पुनः प्रेयसीसमीपमेत्य तद्वृत्तान्तमावेदयत्। साध्वी रूप-शिखा राजकुमारं मृज्जलकण्टकाग्नीन् एकं सदश्वञ्च दत्त्वाब्रवीत् आर्य्यपुत्र! त्वमश्वमिममारुह्य गत्वा च त्वरितं तद्वनं, निमन्त्र्य च पितृव्यं नक्षत्रवेगेन अश्वं कशाघातेन ताड़यित्वा आगच्छन् मुखं प्रत्यावृत्य पुनः पुनः पश्चाद्भागं निरीक्षिष्यसे। यदि धूमशिखागमनं पश्येः, तर्हि पश्चाद्-भागे मृत्तिकामिमां निक्षिपेः, तथापि यदि पश्चादागच्छति, तदा जलमिदं प्रक्षेप्तव्यं, तथाप्यागच्छति चेत् पथि कण्टका-नेतान् निक्षिपेः, तथापि यदि आगच्छेत् तदा अग्नि-र्निक्षेप्तव्यः। सत्वरं धावन्नेव एतत्सर्वं कुर्वीथाः, क्षणमात्र-मपि न विश्रमितव्यम्। एवं कृते भवान् निर्बाधं प्रत्या-गमिष्यति, तद्भवता विश्रब्धं गम्यताम्।

राजकुमारो रूपशिखायास्तमुपदेशं श्रुत्वा तत्क्षणमेव मृत्तिकादिकं गृहीत्वा अश्वमारुह्य च तं देवालयमुद्दिश्य प्रस्थितः। क्षणान्तरे चाश्ववेगेन तं देवालयमुपस्थाय अद्राक्षीत् वामांशे गौरी, दक्षिणे गणपतिः, मध्ये विश्वेश्वरो विराजते। दृष्ट्वैव भक्त्या प्रणम्य देवदेवं निमन्त्र्य च धूमशिखं, सत्वरं वायुवेगेन अश्वमचोदयत्। अपश्यत् प्रत्यावृत्य धूमशिख आगच्छति, तच्च दृष्ट्वा राजपुत्त्रोऽसौ पश्चाद्भागे मृत्तिकां निक्षिप्तवान्, सा च निक्षिप्ता एव पर्वताकारा संवृत्ता। धूमशिखो बहुना क्लेशेनापि तं पर्वतमुल्लङ्घ्य शृङ्गभुजमनुससार। शृङ्गभुजः पुनरपि पश्चात् यावत् दृष्टिं निक्षिपति, धूमशिखमागच्छन्तं पुनरपश्यत्। सोऽपि राजतनयः तदागमनवारणाय जलं निचिक्षेप, निक्षिप्तमात्रमेव तज्जलं भीषणतरङ्गमालासङ्कुला महानदी प्रादुरासीत्, धूमशिखोऽपि तां नदीं कथमपि समुत्तीर्य्य तं शृङ्गभुजमनुसृतवान्। तदवलोक्य शृङ्गभुजेन पश्चात् निक्षिप्तं कण्टकं कण्टकाकीर्णं गहनं काननमभूत्। पापीयसा धूमशिखेन तस्मिन्नप्यतिक्रान्ते शृङ्गभुजः पश्चादग्निं न्यक्षिपत्। स खलु वैश्वानरः खाण्डवं दहन्निव प्रचण्डं प्रजज्वाल। धूमशिखस्तदवलोक्य तमतिक्रमितुमशक्नुवन् आकाशगतिमपि रूपशिखाया मायाप्रभावेण विस्मृत्य तस्मात् स्थानात् प्रत्यावर्त्तत।

अनन्तरं शृङ्गभुजः प्रेयस्यास्तादृशमद्भुतं मायाप्रपञ्चं दृष्ट्वा प्रशस्य च सम्प्रीतः पुनर्धूमनगरं प्रतिनिवृत्तः। प्रथमं रूपशिखान्तिकमेत्य तदीयामासंख्यशक्तिं सानन्दं वर्णयित्वा

अग्निशिखमभ्युपगम्य अवादीत् आर्य्य ! भ्राता ते निमन्त्रितः। अग्निशिखस्तदाकर्ण्य समभाषत वत्स ! निमन्त्रणप्रमाणमाख्याहि, नो चेत् कथं विश्वसितव्यम् ? सोऽब्रवीत् आर्य्य ! तस्मिन् देवमन्दिरे विभोर्वामे भगवती पार्वती, दक्षिणे च विनायको विराजते इति। अग्निशिखः कुमारस्य तद्वचः समाकर्ण्य सविस्मयं क्षणं स्थित्वा व्यचिन्तयत् कथमयं तत्र गत्वा प्राणान् रक्षित्वा प्रत्यागतः ? धूमशिखस्य दृष्टिपथं गतः कोऽपि न जीवेत्, तदयं न मानुषः, कश्चिद् देव एव मानवरूपेणागतः, तस्मादयमेव कन्यायाः सदृशो वर इत्यवधार्य्य शृङ्गभुजं रूपशिखान्तिकं प्राहिणोत्। शृङ्गभुजः प्रियान्तिकमेत्य परिणयोत्सुकोऽपि पानभोजनादिकं कृत्वा कथञ्चित् रात्रिमतिवाहयाम्बभूव।

अथापरेऽहनि अग्निशिखः अग्निमेव साक्षीकृत्य यथाविधि शृङ्गभुजाय रूपशिखां प्रादात्। किमद्भुतम् ? क्व मानवो राजपुत्रः, क्व वा राक्षसनन्दिनी, सर्वथा अदृष्टमेव जीवानां योजनपटीयः। ततः शृङ्गभुजो रूपशिखया सह श्वशुरगृहेऽवस्थाय विविधानि अलौकिकानि भोगसुखानि भुञ्जानः कियन्तं कालमयापयत्।

अथ कदाचित् स्वगृहगमनोत्सुको रूपशिखां रहसि समाहूय स्वमभिप्रायं प्रकाश्य तां तत्र नेतुमनुरुरोध। रूपशिखा तथेति सम्मताब्रवीत् नाथ ! किं जन्मभुवा, स्वजनवर्गेण वा, नारीणां पतिरेव सर्वस्वम्। पितरि एतदर्थं विज्ञापिते स कथमपि नानुमोदिष्यते। तस्मात् तद-

विज्ञातावेव प्रस्थास्यावहे। यदासौ आवयोः पलायनं श्रुत्वा आवामनुसरिष्यति तदाहं विद्याबलेन तं निवारयिष्यामि।

एतदाकर्ण्य शृङ्गभुजोऽतीव प्रीतः रूपशिखायै राज्यार्द्धं प्रतिशुश्राव। सा च प्रस्थातुमुद्यता तत् सौवर्णं शरम् आनीय स्वामिने प्रदत्तवती। अथापरेद्युः प्रातः उभौ उद्यानविहारव्याजेन शरवेगं नाम घोटकमारुह्य वर्द्धमानमभिप्रतस्थाते। इत्थं बहुषु अध्वसु गतेषु अग्निशिखः संवादं श्रुत्वा कुपितः नभोमार्गेण तावनुससार। अथ वेगात् तदागमनशब्दं निशम्य रूपशिखा शृङ्गभुजमब्रवीत् नाथ! पितावां प्रत्यानेतुमागच्छति, तद् भवान् अश्वोपरि निर्भयेन स्थित्वा, एनं यथा वक्ष्यामि तदालोकयतु, अहं तिरस्करिणीप्रभावेण त्वामाच्छाद्य तथा रचिष्यामि, यथा पिता कथमपि नावां द्रष्टुं शक्ष्यति। एवमभिधाय रूपशिखा अश्वादवतीर्य्य पुरुषवेशं धृत्वा च काष्ठाहरणार्थमागतं कमपि काष्ठिकं राक्षसागमनभयं प्रदर्श्य तूष्णीमवस्थातुमशिक्षयत्, प्रावर्त्तत च तदीयं कुठारं गृहीत्वा काष्ठकर्त्तनाय। शृङ्गभुजस्तु केवलं कौतुकं पश्यन्नेव तस्थौ।

अत्रान्तरे अग्निशिखः समेत्य तां काष्ठिकवेशिनीं रूपशिखामपृच्छत् भद्र! अत्र पथि काचित् कामिनी, कश्चित् पुरुषश्च गच्छन् दृष्टः? पुंवेशाऽब्रवीत् मान्य! नाहमत्र व्रजन्तं कमपि अद्राक्षम्, राक्षसपतिरग्निशिखो मृत इति तद्दाहार्थं काष्ठानि छिनद्मि। एतदाकर्ण्य निर्बोधोऽसौ राक्षसो व्यचिन्तयत् किमहं मृतः, तदलं मे कन्यया, इदानीं गृहं गत्वा परिजनं पृच्छामि। एवमुक्त्वा सत्वरं गृहाभि-

मुखः प्रतस्थे। रूपशिखा च हसन्ती स्वामिना सह वर्द्धमानं प्रायात्।

राक्षसो गृहमेत्य परिजनमपृच्छत् लोकैः कथ्यते अहं मृत इति। यदि तत् सत्यं तदा कन्यया मे किम्? परिजनस्तस्य हासजनकं वाक्यमाकर्ण्य मनसि हसन् तस्य संशयमभनक्। तदा च स सन्तुष्टः पुनः कन्यां प्रत्यानेतुमुद्तिष्ठत्। रूपशिखा पुनः सत्वरं पितरमागच्छन्तमवबुध्य अश्वादवतीर्य्य पतिं तथैवाच्छाद्य रूपं परिवर्त्त्य कस्यचित् पत्रवाहकस्य हस्तात् पत्रं गृहीत्वा च दण्डवत् व्यतिष्ठत। राक्षसः समीपमागत्य तथा प्रपच्छ। रूपशिखावदत् महाशय! न मया पथि दृष्टः कश्चित्? राक्षसपतिरग्निशिखः शत्रुहस्तेन आहतो मुमूर्षुदशायां पतितः कनिष्ठाय भ्रात्रे धूमशिखाय राज्यं दातुं पत्रमिदं मम हस्ते समर्प्य मां तदन्तिकं प्रजिघाय। हा प्रजापतेरद्भुतरूपा तामससृष्टिः! स खलु मूर्खोऽग्निशिखस्तदाकर्ण्य सन्दिहान एव तत्क्षणं पुनर्गृहं प्रत्यागमत्। अपृच्छच्च सर्वान् परिजनान् संशयभञ्जनाय। अथ तैः तत् सर्वं मिथ्येति प्रबोधिते असौ राक्षसराजः रूपशिखां विसस्मार। रूपशिखा इत्थं मूर्खं पितरं विप्रलभ्य अश्वमारुह्य पत्या सह निरुद्वेगं वर्द्धमानान्तिकमाजगाम। राजा वीरबाहुः चिरात् पुत्रं सस्त्रीकमागतं निशम्य सानन्दं नगरात् निष्क्रम्य आनन्दाश्रूणि वर्षन् प्रणतं सवधूकं पुत्रमाश्लिष्य राजधानीमनैषीत्।

अथ क्षणं विश्रम्य शृङ्गभुजः सर्वं वृत्तान्तं पित्रे निवेद्य

भ्रातॄन् आहूय तेभ्यः तं सौवर्णं शरं प्रददौ। तदा सुविज्ञो नरपतिः पुत्राणां चातुरीं विदित्वा अत्यर्थं तान् प्रति विरक्तः शृङ्गभुजं प्रति सन्तुष्टश्च भूत्वा सर्वं पर्य्यालोच्य गुणवरां निर्दोषां निश्चित्य च अकारणपरित्यागेन आत्मानं पापात्मानं मन्यमानो भृशमन्वतप्यत।

अथ समस्तं दिवसं बहुविधं समालोच्य रजन्यां यशोलेखागृहमविशत्। सा च भर्त्त्रा सह सुरां पीत्वा सम्भोगजनितनिद्रावेगा स्वप्ने एवमवादीत् यदि गुणवरां प्रति मिथ्यादोषं नारोपयिष्यं तदा पतिर्मे गृहं किमागमिष्यत्। राजा पापिन्याः कथामिमां श्रुत्वा निःसंशयः अतीव संक्रुद्धः समुत्थाय गृहात् निर्जगाम। समाजुहाव च स्वं गृहमेत्य महत्तरादीन्। सिद्धपुरुषादेशेन अनिष्टशान्त्यर्थं गुणवरां भूतलगृहमध्ये यदरक्षिषं, तस्य समयोऽतिक्रान्तः, तदिदानीमेव यूयं तत्र गत्वा गुणवरामानीय स्नापयित्वा मत्समीपमानयत।

तं च परिजनाः प्रभोरादेशेन भूगृहात् गुणवरामानीय स्नापयित्वा वसनाभरणादिना सुसज्जितां कृत्वा च राजान्तिकमनयन्। राजा चिरविरहात् गुणवरामासाद्य गाढ़माश्लिष्य सानन्दं पुत्रस्य शृङ्गभुजस्य वृत्तान्तं कथयित्वा प्रीतामकरोत्। अत्रान्तरे यशोलेखा प्रबुद्धा पतिमदृष्ट्वा नितरां विषादमगमत्। प्रातश्च वीरबाहुना समीपमानीतः सवधूकः शृङ्गभुजः सानन्दं मातरं दृष्ट्वा चरणयोर्निपपात। सा च पुत्रं पुत्रवधूञ्च सस्नेहमालिङ्ग्य आनन्दाम्बुधौ निममज्ज। अनन्तरं शृङ्गभुजेन पितुरादेशेन मातृ-

समक्षं रूपशिखाचरिते वर्णिते गुणवरा प्रीता प्रावोचत् वत्स! स्नुषेयं मे वत्सा रूपशिखा त्वदर्थं सर्वं परित्यज्य त्वय्येव जीवनं समर्प्य सतीनां शिरसि पदं न्यधात्। मन्ये कापीयं देवी, विधिना त्वदर्थं भूतलं प्रेषिता। इत्येवं प्रशस्य स्नुषामभ्यनन्दयत् सा राजा च। ततः सुरक्षित-माहूय सम्यक् सम्मान्य च अपरा दुश्चारिणीः राजमहिला भूगृहान्तः संरक्षितुं समादिशत्। स च प्रणम्य राजाज्ञां शिरसि दधार।

तदाकर्ण्य सर्वा एव महिष्यस्त्रस्ताः समभवन्। तदव-लोक्य गुणवरया दयावत्या पुनः पुनरनुरुद्धो नृपतिस्तासां तादृशाद् बन्धनदण्डात् विरराम। तास्तु सपत्नाः गुण-वराया औदार्य्यं दृष्ट्वा सलज्जमधोमुखाः स्वं स्वं निकेत-मगच्छन्। देव! महतामनुग्रह एव शत्रोः प्रतिविधानम्।

अथ नरपतिः निर्वासभुजादीन् जनशतपुत्रान् आहूयं तेषु नरहत्यापवादमारोप्य तीर्थपर्य्यटनाय समादिशत्। पुत्राः पितुरादेशं प्रतिहन्तुं नैवाशकन्। कः प्रभुकार्य्यं व्याहन्तुमीष्टे? ततः सर्वेषु नगरात् चलितुमुद्यतेषु दयार्द्रः शृङ्गभुजः भ्रातॄन् तथा कातरान् दृष्ट्वा सवाष्पं पितुश्चर-णयोर्निपत्य तेषां प्रथमापराधं क्षमयितुमनुरुरोध। राजा शृङ्गभुजं भूभारक्षमं विदित्वा तदनुरोधवशंवदः तेषां दुश्चरि-तानां पुत्राणां तमपराधं चक्षमे। अनन्तरं सर्वे ते भ्रातरः कनीयांसं शृङ्गभुजं प्राणदं मन्यमानास्तं बहुशः प्रशशंसुः। यावन्तः प्रकृतिवर्गाश्च शृङ्गभुजस्य गुणातिशयदर्शनेन सम्प्री-तास्तं प्रति भृशमनुरक्ता आसन्।

अथापरेद्युर्नृपतिः ज्येष्ठेषु सत्स्वपि कनीयांसं शृङ्गभुजं यौवराज्ये अभ्यषिचयत्। स च पित्रानुमतः सैन्यसामन्तपरिवृतो दिग्विजयाय प्रतस्थे। अथ जित्वा सर्वान् नृपतीन् संगृह्य च प्रचुरान् अर्थराशीन् जयश्रीविभूषितः स्वां पुरीं प्रत्याजगाम। अनन्तरं विनीतैर्भ्रातृभिः सार्द्धं राज्यभारं वहन् पितरं मातृश्च अत्यर्थमनन्दयत्। अनयच्च कालं रूपशिखया सह सुखसम्भोगेन।

देव! सत्यः स्त्रियः केवलं पतिसेवामेव परं धर्म्मं जानन्तीत्यस्य निदर्शनं गुणवरा रूपशिखा च। एवमुक्त्वा तस्मिन् विरते युवराजो नरवाहनदत्तः प्रियतमया सार्द्धं तं पुनः पुनः साधुवादेन समतोषयत्। अथ समुत्थाय प्रातःकृत्यं समाप्य च प्रियया सह पितुरन्तिकमाजगाम। तत्र च सर्वं दिनं स्थित्वा पितरमामन्त्र्य पुनरन्तःपुरं विवेश।

---

## चत्वारिंशत्तरङ्गः।

परेद्युः प्रातः युवराजं रत्नप्रभया सह समासीनं गोमुखादयो मन्त्रिणः समासदन्। ततो मरुभूतिं माल्यचन्दनं गृहीत्वा सहासं चिरेण स्खलितपदमागच्छन्तं दृष्ट्वा गोमुखः सपरिहासमब्रवीत् मरुभूते! त्वं यौगन्धरायणसुतोऽपि एतावन्तं कालं यत् नीतिं न शिक्षितः, एतदतीव कष्टं, प्रातः सुरां पीत्वा प्रभुसमीपागमनं किं नीतिसङ्गतम्? मरुभूतिः सक्रोधमभाषत गोमुख! राजाश्चाकं

गुरुः, स एव अस्मान् शिक्षयितुमधिकरोति, नान्यः पापीयान्। एतदाकर्ण्य गोमुखः सस्मितमवदत् मरुभूते! दुष्कर्म्मकारिणं प्रभुः स्वयं किं तिरस्करोति? यं प्रति यद्यदनुचितम् अधिकारिण एव तद्वदन्ति। अहं पापात्मा सत्यं, परं त्वं मन्त्रिवृषभः केवलं शृङ्गरहितः एतदपि असृषा। मरुभूतिरवादीत् गोमुख! तद्वृषभत्वं तवैव युक्तं, तथापि तव अवश्यत्वं जातिधर्म्मः।

उभयोरेवरूपं परिहासवचनमाकर्ण्य सर्वेषु हसत्सु गोमुखोऽप्यभाषत मरुभूतिरेकमवेध्यं रत्नं, कोऽपि अस्मिन् सूत्रं चालयितुं न शक्तः, परं पुरुषरत्नमेतद्विलक्षणं वस्तु, तदल्केशेनैव विद्धं कर्तुं शक्यते, अत्र वालुकासेताख्यानं कथ्यते श्रूयताम्।

आसीत् प्रतिष्ठाननगरे तपोदत्तो नाम कश्चिद् ब्राह्मणः। स तु शैशवे अध्ययनं एकान्तमनाविष्ट इति सर्वे स्वजनास्तं निरभर्त्सन्। एकदा स अत्यन्तं निर्भर्त्सितः सञ्जातवैराग्यः तपश्चरणार्थं गङ्गातीरमगात्। अथ गच्छता कालेन देवराजस्तं दुश्चरं तपश्चरन्तं दृष्ट्वा निवारयितुं द्विजवेशेन तत्रागत्य तटात् वालुकाः समुद्धृत्य तरङ्गोपरि निक्षेप्तुमारेभे। तपोदत्तेन तद्दर्शनजनितकौतुकेन मौनं परित्यज्य सनिर्बन्धं कारणं परिपृष्टस्सन्नब्रवीत् ब्रह्मन्! मया लोकानां पारगमनार्थं सेतुर्निर्मीयते। तदाकर्ण्य तपोदत्तः प्रोवाच ब्रह्मन्! प्रबलस्रोतसि वालुकाभिः सेतुनिर्म्माणप्रयासः केवलं मूर्खतामनुमापयति। तन्निवर्त्तस्व। इन्द्र उवाच यदि तव ईदृशं ज्ञानमस्ति, तदा विना अध्ययनम् उपदेशञ्च

व्रतोपवासैर्विद्यां साधयितुं कथमुद्यतोऽसि ? यदि एवं सति विद्या लभ्येत, तदा पृथिव्यां न कोऽपि अध्ययनाय यतेत। एवमुपदिष्टो देवराजेन, तपोदत्तस्तदीयमुपदेशं युक्तं मत्वा तपसो विरम्य गृहं प्रत्यावर्त्तत। तस्मात् सुबोधो जनोऽक्लेशेन बोध्यते न तु दुर्बोधः, स तु बोधितोऽपि प्रत्युत कुप्यति, तन्निदर्शनं मरुभूतिरिव।

अथ हरिशिखोऽवादीत् देव ! सुबुद्धिरनायासेन बोधितुं शक्यते, अत्र ममैका कथा स्मृतिमारूढ़ा, सा निशम्यताम्। पुरा वाराणस्यां विरूपशर्म्मा नाम कुरूपो निर्धनश्च कश्चित् ब्राह्मणः प्रतिवसति स्म। स खलु स्वस्य कुरूपतया निर्धन-तया च नितरां दुःखितस्तपोवनं गत्वा रूपसम्पत्तिलाभाय तपस्तेपे। कदाचित् देवराजं कुत्सितविकृतव्याधितशृगाल-वेशेन अग्रतः समुपस्थितं दृष्ट्वा असौ व्यचिन्तयत् सर्वमेव सुकृतमीश्वराधीनं तस्मात् अलं क्लेशेन, इत्यवधार्य्य तपसो विरम्य गृहं प्रस्थितः।

हरिशिखस्य दृष्टान्तगर्भमिदं श्रुत्वा गोमुखो अन्वमो-दत। परं मरुभूतिः सकोपमवादीत् गोमुखस्य मुखे एव सर्वं, हस्ते किमपि नास्ति। वीरा हि वाक्कलहं लज्जा-करमामनन्ति। एवमुक्त्वा योद्धुमुद्यतं तं युवराजः सस्मितं सान्त्वयित्वा गृहं प्राहिणोत्, अगमयच्च दिनं स्वयं दैनिकं कार्य्यं समाप्य।

अपरेद्युः सर्वेषु समासीनेषु मरुभूतिः पूर्वदिनव्यापा-रेण सलज्जमधोमुखः समतिष्ठत। ततो रत्नप्रभा समभाषत नाथ ! भवान् गुरुभक्तान् विश्वस्तचरितानेतान् मन्त्रिणः

प्राप्य यथा सौभाग्यशाली वर्त्तते, एते अपि त्वां प्रभुं प्राप्य तथा धन्यम्मन्या वर्त्तन्ते। तन्मन्ये भवतां पूर्वसुकृतमेव एतादृशसंयोगस्य कारणमिति।

रत्नप्रभायां विरतायां वसन्तकतनयस्तपन्तकः प्रोवाच देवि! सत्यं वयं प्राक्तनसुकृतप्रभावेण एतादृशं प्रभुमलभामहि। विना पूर्वसुकृतम् एतादृशी सङ्घटना नैव भवेत्, तदत्र कथामेकां कथयामि श्रूयताम्।

अस्ति श्रीकण्ठाख्ये जनपदे विलासपुरं नाम नगरम्। तत्रासीत् विलासशीलो नाम महीपतिः। स खलु प्राणसमया महिष्या कमलप्रभया सार्द्धं भोगसुखेन कालमनयत्। क्रमेण सौन्दर्य्यहारिण्यां जरायां तच्छरीरं प्रविष्टायां राजा नितरां दुःखितः जरया म्लानं मुखं प्रियायै दर्शयितुमनिच्छुर्बहु विचिन्त्य मरणमेव श्रेयस्करं निश्चिकाय। अनन्तरं सभासीनस्तरुणचन्द्रं नाम वैद्यमाहूय जराशान्तेरुपायमपृच्छत्। धूर्त्तो भिषक् राज्ञस्तथाविधं वचनमाकर्ण्य प्रबलेनार्थलोभेन परिणाममदृष्ट्वा अब्रवीत् महाराज! उत्तममौषधमस्ति, यदि भवान् षण्मासं निरन्तरं भूगृहेऽवस्थाय तदौषधं सेवेत, तदा निःसंशयं पुनर्यौवनमाप्स्यति। मूढमतिर्नृपस्तद्वचसि सुविश्वस्तः भूतले गृहमेकं विनिर्ममे। मूर्खा विषयिणः प्रायेण सदसद्विवेकरहिता भवन्ति, तथाहि मन्त्रिभिर्विशेषेण प्रबोधितः स राजा तेषां वचांसि अनादृत्य धूर्त्तं वैद्यमेव अनुससार। प्रविवेश च राजपरिच्छदं विहाय तत् भूमध्यगृहम्। केवलमेको वैद्यभृत्यस्तस्य परिचारकोऽभवत्।

षण्मासात् परमेकदासौ भिषक् तत्र राजानं द्रष्टुं गतोऽपश्यत् क्रमेण जराया एवं प्रादुर्भावो वर्त्तते। अनन्तरं बहिरागत्य अनुसन्धाय राजसदृशाकृतिं पुरुषमेकं प्राप्य सर्वं वृत्तान्तं तस्मै निवेद्य राज्यलोभं प्रदर्श्य वशीचकार। अनन्तरं तस्य भूगृहस्य अपरप्रान्तादारभ्य सुगुप्तं सुरङ्गामेकां निर्म्माय रात्रौ तया तत्र प्रविश्य राजानं सुप्तमवधीत्, अरक्षीच्च तं पुरुषं राजशय्यायां तिमिरमये कूपे राजकलेवरं निक्षिप्य। अनन्तरं सुरङ्गामरुणच्च।

परेऽहनि प्रातः धूर्त्तराजो वैद्यः सभामेत्य मन्त्रिणोऽब्रवीत् अहं षण्मासाभ्यन्तर एव जरां शमयित्वा राजानं युवानमकार्षम्, अनन्तरं मासद्वयात् परं राजा नूतनं कलेवरमाप्स्यति, यदि मम वचसि अविश्वासः, तर्हि भवन्तः सुरङ्गाद्वारि स्थित्वा प्रत्यक्षं पश्यन्तु। एवमुक्त्वा मन्त्रिणो भूगृहं नीत्वा दूरात् कृत्रिमं राजशरीरं दर्शयामास। कथयामास च अस्मिन्नेवावसरे मन्त्रिणां प्रत्येकस्य नामधेयम् अधिकारञ्च कृत्रिमाय राज्ञे। ततश्च क्रमेण मासत्रयाभ्यन्तरे कौशलेन अन्तःपुरवासिनां नामानि अधिकारांश्च कथयित्वा तं नूतननृपं सर्वाभिज्ञं चकार।

अथ नवमे मासि वैद्येन तस्मिन् नवे राजनि भोगपुष्टशरीरे भूगृहादानीते सर्वे मन्त्रिणः परिजनाश्च तं युवानं राजानं परितस्थुः। ततोऽसौ युवा नरपतिः कृतस्नानः अजरेति नाम ख्यापयन् सिंहासनासीनः प्रजापालनकर्म्मणि प्रावर्त्तत। प्रजाश्च वैद्यस्य रसायनप्रभावेण राजानं पुनर्यौवनप्राप्तममन्यन्त। अजरो नृपः प्रकृतिवर्गान् प्रधान-

महिषीञ्च वशीकृत्य मित्रैः सह सुखेन राज्यं शशास संवर्द्धयामास च विशेषसम्मानेन तरुणचन्द्रं मित्रं पद्म-दर्शनञ्च हस्तिनोऽश्वान् ग्रामांश्च पुरस्कृत्य। परं स तं वैद्यं विश्वासघातकम् अल्पमपि न विशश्वास। कदाचित् असौ वैद्यः तम् अजरं स्वेच्छाप्रवृत्तं दृष्ट्वा अवादीत् त्वं मामवज्ञाय स्वेच्छया आधिपत्यं करोषि, किमाश्चर्य्यम्? अनाज्ञ! न जानासि, कस्यानुग्रहेण राजासीरिति।

तदाकर्ण्य अजरोऽब्रवीत् वैद्य! त्वमतिमूर्खः, कोऽपि कस्यापि न कर्त्ता नापि दाता, प्राक्तनं कर्म्मैव सर्वस्य सर्वं विधत्ते। तत् त्वं वृथा दर्पं मा कार्षीः, अहं निजेन तपसैव राजाभवम्, अतिशीघ्रमेव तत् तव प्रत्यक्षीकरिष्यामि। एवमुक्त्वा तस्मिन् विरते भीतो वैद्यः समचिन्तयत्, हा कष्टम्! अद्य अजरो गम्भीरं प्राज्ञ इव कथयति, बिभेमि हि यदि विरक्तः सर्वं रहस्यं प्रकाशयेत्, तद् यावत् इदानीमजरो मया अनुवर्त्तनीयः, किञ्चायं मां किं प्रत्यक्षीकारयेत् तदपि द्रष्टव्यम्। इत्यालोच्य वैद्यस्तथेति विरराम।

एकदा नरपतिरजरस्तरुणचन्द्रादिभिः सार्द्धं पर्य्यटनार्थं बहिर्निर्गत्य कस्याश्चित् नद्यास्तीरे समुपतस्थे। तत्र च स्रोतसि *भासमानानि पञ्च सौवर्णानि पद्मानि दृष्ट्वा भृत्यैरानीतानि पर्य्यवेक्ष्य सन्निहितं तरुणचन्द्रं वैद्यं तदाकरान्वेषणाय समादिशत्। वैद्यः अगत्या राजादेशेन सम्मतः नद्यास्तीरमनुसृत्य पद्माकरमन्वेष्टुं जगाम। अजरश्च कियन्तं कालं पर्य्यटित्वा पुनर्गृहं प्रत्यागमत्।

वैद्यः सुबहुदूरं गत्वा नदीतटे एकं शिवमन्दिरं दृष्ट्वा

प्रविवेश, ददर्श च तत्समक्षम् अपूर्व्वमेकं सरः, तत्तीरे च महान् वटवृक्षः, तस्य शाखायाम् एकं नरकङ्कालं लम्बते। स तु तत्तरुतले चणं विश्रम्य तस्मिन् सरसि स्नात्वा देवदेवं प्रपूज्य च उपविष्टः स्वं कर्त्तव्यमचिन्तयत्। अत्रान्तरे सहसा मेघोदयात् वृष्टिः पपात, तेन च लम्बमानात् नरकङ्कालात् यावन्तो वारिविन्दवः सरसीसोपानसलिलेषु पेतुः ते एव सौवर्णकमलान्यभवन्। एतदवलोक्य विस्मितो वैद्यराजो व्यचिन्तयत् किमाश्चर्य्यम्? अस्मिन् विजने कं वा पृच्छामि, अथवा वैचित्र्यं विधातुः केन वा लक्ष्यते? भवतु तावत् पद्माकरोऽयं मया दृष्टः, इदानीं लम्बमानं नरकङ्कालं सरसि निक्षिपामि, यदा एतत्संयोगेन जलविन्दुभ्यः सौवर्णकमलानि उत्पद्यन्ते, तदा अस्मिन् सलिले निक्षिप्ते बहूनि तादृशानि पद्मानि सम्भविष्यन्ति। इत्यालोच्य वृक्षशाखायास्तत् नरकङ्कालं पातयित्वा सरसि निचिक्षेप। प्रतिनिववृते च स्वदेशाभिमुखं तं दिवसं तत्र देवमन्दिरे स्थित्वा। अथ कियता कालेन विलासपुरमेत्य अजरं नृपमभ्यवादयत्।

अथ तेन सकुशलं स्वं निदेशं परिपृष्टोऽसौ वैद्यराजः सर्वं वृत्तान्तमवर्णयत्। ततो नरपतिः वैद्यं निर्ज्जनमानीय अवादीत् यदिदं त्वया सौवर्णपद्मस्थानं दृष्टागतं तदतिमनोरमम्। तत्र च वटशाखायां यत् नरकङ्कालं दृष्टं तत् ममैव पूर्वकलेवरम्। पूर्वमहम् ऊर्द्धपदं स्थित्वा तपस्यामकरवं, सिद्धे च तपसि तत् कलेवरम् अत्यजम्। मदीयेन तपःप्रभावेणैव तत्कलेवरसंयोगात् सौवर्णकमलानि उत्-

पश्यन्ते। त्वं तत् कङ्कालं जले निक्षिप्य बन्धुकार्य्यं कृतवानसि, तस्मिंश्च जन्मनि त्वं मे बन्धुरासीः, तेन साम्प्रतमपि मया सहैव मिलितः। महाशय! अहं यत् पूर्वतपः-प्रभावात् जातिस्मरत्वं राज्यञ्चावाप्तवानस्मि, तत् त्वया प्रत्यक्षीकृतं, तस्मादहङ्कारं परिहर, मा दुःखं कार्षीः, विना प्राक्तनं कोऽपि किमपि दातुं न शक्नोति। प्राणिनः सर्व्वे भूमिष्ठा एव प्राक्तनस्य कर्म्मतरोः फलानि भुञ्जते। वैश्यराजः नरपतेरजरस्य तद्वाक्यं निशम्य विश्वास्य च सन्तोषमवाप। ततोऽसौ नरवरः वैश्याय प्रचुरान् अर्थान् प्रदाय बन्धुभिः परिवृतः पूर्वमुक्तिलब्धं राज्यं निष्कण्टकं बुभुजे। तन्महाराज! भवानपि अस्माकं पूर्वसुकृतोपार्ज्जितः प्रभुः, नो चेत् कथमेवं मादृशेषु देवस्य महान् प्रसादः? नरवाहनदत्तः अपूर्वमिदम् आख्यानं तपन्तकमुखात् श्रुत्वा स्नातुमुदतिष्ठत्। समाप्य च स्नानादिकं गत्वा च पितुरन्तिके तैस्तैर्मन्त्रिभिः साकम् आहारादिकमकरोत्। ततोऽपराह्णे सुरादिकं भोगद्रव्यं सेवित्वा सानन्दं तं दिवसमत्यावाहयत्।

---

## एकचत्वारिंशस्तरङ्गः।

परेद्युः नरवाहनदत्तः रत्नप्रभया मन्त्रिभिश्च सार्द्धं स्वभवनमध्यस्थितः नानाविधानालापान् कुर्व्वति भवनाद्

बहि: पुरुषस्य रोदनध्वनिरुदतिष्ठत्। कथं कथमिति युवराजेन पृष्टे कापि किङ्करी समेत्य अब्रवीत् देव! धर्म्मगिरिर्नाम कञ्चुकी तीर्थयात्रार्थं गत: प्राणान् तत्याज इति संवादम् एकस्मात् मूर्खात् बन्धो: प्रमुखात् आकर्ण्य तस्य भ्राता धर्म्ममित्र: शोकेन रोदिति। साम्प्रतं तत्स्वजनास्तं सान्त्वयित्वा गृहमनयन्।

एतदाकर्ण्य दयार्द्रचेतसं युवराजमतीव दु:खितं दृष्ट्वा रत्नप्रभा समभाषत नाथ! बन्धुवियोगो मानवानां यथा क्लेशावहस्तथान्य: कोऽपि न। यदि विधाता मनुष्यम् अजरामरमकरिष्यत् तदा ते नैतादृग्दु:खभागिनो आभविष्यन्। मरुभूतिरवादीत् देवि! यदाज्ञापयति भवती, तत् सत्यं, किन्तु मनुष्याणां तदसम्भवम्। अत्रैतां कथां कथयामि निशम्यताम्।

अस्ति चिराय नाम नगरम्। तत्रासीत् चिरायुर्नाम राजा। तस्य नागार्जुनाभिध: दयावीर: प्रसिद्ध: सचिवो ऽभवत्। स खलु रसायनगुणेन राजानमात्मानञ्च चिरायुषमकरोत्। कदाचित् सहसा स्वं पुत्रं कालकवले निपतितं दृष्ट्वा असौ अमात्य: नितरां शोकाकुलो भूत्वा मर्त्त्यलोकात् मृत्युं निवारयिष्यन् रसायनविद्याप्रभावेण अमृतं प्रसूतं कर्त्तुमुदयच्छत। क्रमेण अमृतं प्रायेण प्रसूतं परमेकमात्रयैव औषध्या विहीनमतिष्ठत्। तस्याश्च औषधेर्योगं प्रतीक्षमाणं तं नागार्जुनं दृष्ट्वा भीतो देवराज: तत्क्षणम् अश्विनौ समाहूय कार्य्यमुपदिश्य च मर्त्त्यलोकं प्राहिणोत्।

तौ च भवनवर्तीर्थ्य नागार्ज्जुनस्य गृहमेत्य तं सम्बोध्य च देवराजसन्देशं न्यवेदयतां महात्मन्! भवान् विधातृ-नियममुल्लङ्घ्य मरणधर्मिणो मानवान् अमरान् कर्त्तुमुद्यतः अनुचितमाचरति, एवं कृते देवमनुष्ययोः कः प्रभेदः? याज्ययाजकयोरसद्भावेन जगत् विनश्येत्, तदलममृत-करणप्रयासेन भवतः, नो चेत् देवाः क्रुद्धा भवन्तमभिश-प्स्यन्ति, भवान् यस्य शोकेन अभिभूतः कार्य्येऽस्मिन् प्राव-र्त्तत, स खलु स्वर्गं गतः।

एवमुक्त्वा अश्विनौ विरतौ दृष्ट्वा नागार्ज्जुनः सविषाद-मचिन्तयत् यद्यहं देववचसि अवज्ञामकरिष्यं तदेमौ देवकुमारौ साम्प्रतमेव मामभिशापेन अयोजयिष्यताम्, एतस्माच्च महोद्योगात् विरतौ मनोरथसिद्धेर्बाधः, पुत्रश्च मे न कश्चिदलेन स्वर्गमगात्, तदलं शोकेन, किं करोमीति समालोच्य कुमारौ सम्बोध्य प्रत्यवादीत् भवतोरादेशेन देवराजवाक्यं गृहीतं, यदि भवन्तौ अद्यप्रभृति पञ्च दिना-भ्यन्तरं नागमिष्यतां तदा मे एष समुद्योगः सफलोऽभवि-ष्यत्, मनुष्याश्च अजरामरा अभविष्यन्। एवमुक्त्वा पश्यतो-स्तयोरमृतनिर्म्माणोपयोगीनि सर्वाणि द्रव्याणि भूमध्ये निधाय तौ यथाविधि सत्कृत्य व्यसर्जयत्। तावपि त्रिदिवं गत्वा संवादमिममिन्द्राय निवेद्य तं निरुद्वेगमकार्ष्टाम्।

अथ चिरायुषा नरपतिना यौवराज्ये अभिषिक्तः पुत्रो जीवहरो नाम स्वां जननीं धनपराभिधाम् अभिवादयितुं तत्समीपमगात्। धनपरा पुत्रं प्राप्तयौवराज्यं सहर्षं दृष्ट्वा अवादीत् वत्स! यौवराज्यमिदं लब्ध्वा मा नन्दीः,

अस्य शक्तिस्ते कुलक्रमागता, न तु तपोलब्धा। तव अनेके सोदराः सचिरं यौवराज्यं कृत्वा कालग्रासे निपतिताः, कोऽपि तेषां कदापि राजा नाभवत्। तद् युष्माकं यौवराज्यं विडम्बनमेव। तव पिता साम्प्रतम् अष्टशताब्दीमतिक्रान्तः, अतोऽपि कति कालान् जीविष्यति, को वक्तुं शक्नुयात्।

तदाकर्ण्य विषण्णं पुत्रं पुनर्धनपरा प्राह वत्स! यदि राजा भवितुमिच्छसि, तदा इममुपायमवलम्बस्व। युष्माकममात्यः नागार्जुनः प्रतिदिनमाह्निकं समाप्य यदा भोजनाय गच्छेत् तदा यो यत् प्रार्थयते, तस्मै तद् दत्त्वा आहाराय स उपविशति। तद् यदि त्वं तस्मिन् समये तत्रोपस्थाय तं तदीयं मस्तकं प्रार्थयेथाः, तर्हि स सत्यपाशसंयतस्तत्क्षण तुभ्यं शिरो दत्त्वा प्राणान् त्यक्ष्यति। राजापि तादृशमन्त्रिशोकात् निश्चितं देहं त्यक्ष्यति वा वनमाश्रयिष्यति।

जीवहरो मातुर्वचनं बहु समादृत्य राज्यलोभेन तादृशे अतिभयावहे कार्ये प्रवृत्तः बन्धुस्नेहमपि विसस्मार। तस्यां च परस्मिन्नहनि नागार्जुनगृहं गत्वा तस्य आहारसमयं प्रतीक्षमाणः। अथाहारसमये उपस्थिते वदान्यवरो नागार्जुनः कोऽत्र उपस्थित इति अपृच्छत्। जीवहरस्तदैव तदन्तिकमुपसृत्य तन्मस्तकं प्रार्थयामास। नागार्जुनो राजनन्दनस्य तादृशीं प्रार्थनामाकर्ण्य सविस्मयमवादीत् वत्स! त्वं मांसास्थिशेषरक्तमयं मदीयं मस्तकं गृहीत्वा किं करिष्यसि? अथवा किं तेन श्रुतेन, यदि प्रयोजनं तदा छित्त्वा

गृहाण। एवमुक्त्वा तेन शिरसि प्रदातुं प्रसारिते राजकुमारो रसायनदृढ़ायां तद्ग्रीवायां खड्गमपातयत्, परं खड्ग एव चूर्णतामाप। इत्थं बहुषु खड्गेषु चूर्णितेषु जीवहरस्तन्मस्तकं ग्रहीतुमशक्नुवन् परं विसिस्मिये।

क्रमेण वार्त्तामिमामाकर्ण्य राजा तत्क्षणं मन्त्रिभवनमेत्य तस्मात् व्यापारात् पुत्रमवारयत्। नागार्जुनस्तु राजानं सम्बोध्य प्राब्रवीत् देव! अहं जातिस्मरः, अहं प्रथमात् जन्मनः प्रभृति अर्थिने स्वं शिरो ददद्देव नवाधिकनवति जन्म समतिक्रान्तवान्, अस्मिन् जनने शिरोदानव्रतं मे प्रतिष्ठां यास्यति। परार्थिनि पराङ्मुखे अहं शतजन्मार्जिते व्रतफले वञ्चितो भवामि, केवलमहं महाराजसाक्षात्कारं प्रतीक्षमाण एतावन्तं समयमत्यवाहयं, तदिदानीं राजसाक्षात्कारो मया लब्धः, तदलं विलम्बेन, राजकुमारेण सुखेन स्वं शिरश्छेदयामि, न वारयतु मां महाराज इत्युक्त्वा राजानमालिङ्ग्य एकविधं चूर्णमानीय राजकुमारस्य खड्गमलेपयत्। अवदच्च राजकुमारं प्रहर मामिति। ततश्च राजकुमार एकेनैव प्रहारेण तस्य शिरश्चिच्छेद। छिन्ने च तस्मिन् अन्तःपुरे महान् रोदनध्वनिरुत्तस्थौ। तच्छ्रुत्वा राजनि हा मन्त्रिन्! इत्युक्त्वा प्राणांस्त्यक्तुमुद्यते सहसा आकाशसरस्वती प्रादुरासीत् यथा नागार्जुनोऽयं जन्मान्तरे बोधिसत्त्वेन सदृशीं शुभां गतिं प्रतिपत्स्यते। तन्महाराज! आत्मत्यागाया विरम्य बन्धुवर्गेषु प्रशंसां लभताम्।

एवमुक्त्वा दैववाण्यां विरतायां राजा तदात्मत्यागव-

सायात् विरतः कियन्तं कालं गृहं गत्वा जीवहराय राज्यं समर्प्य तपोवनमगमत्, अलभत च कियन्तं कालं तपस्तप्त्वा शुभां गतिमिति।

कियति काले च गते नागार्जुनतनयाः पितृघातिनं जीवहरं सिंहासनस्थं यमसदनं प्रेषयामासुः। तस्य पुनः मृतं श्रुत्वा तन्माता च मानवीं लीलामत्यजत्। तस्माद् देवः पश्यतु, यो हि अनार्य्यचरिते पथि वर्त्तते, कदापि तस्य शुभं न भविष्यति। यश्च मर्त्यानां मृत्युनिवारणाय अमृतं सृष्ट्वा जगति अलौकिकीं रसायनविद्यानिपुणतां प्रादर्शयत् सोऽपि नागार्जुनो देहं त्यक्त्वा मृत्योर्वशतां प्रतिपेदे, का कथा अन्येषामिति।

---

## द्विचत्वारिंशत्तरङ्गः।

अथान्येद्युः प्रातर्युवराजो रत्नप्रभां सान्त्वयित्वा पित्रा सह मन्त्रिगणपरिवृतो मृगयार्थं ससैन्यः प्रायात्। सततं नानाविधान् वन्यान् जन्तूननुसरन् श्रमापनोदनार्थं कियन्तं कालं विशश्राम। विश्रमानन्तरं पुनरश्वमारुह्य गोमुखेन सह वनान्तरं प्रविश्य गुटिकाभिः क्रीड़ितुमारेभे। अत्रान्तरे तेन पथा कापि सिद्धतापसी गच्छन्ती सहसा युवराजप्रक्षिप्तां गुटिकां गात्रे पतितामवलोक्य सस्मितमवादीत् राजपुत्र! त्वादृशेन अहंयुना सह कर्पूरिकायाः

परिणयो युज्यते । एतदाकर्ण्य नरवाहनदत्तः अश्वादव-तीर्य्य तापसीसकाशमेत्य चमां प्रार्थयाञ्चक्रे । सापि तुष्टा तमाशिषा समयोजयत् ।

अथ युवराजस्तापसीं साधुशीलां सत्यवादिनीञ्चालक्ष्य सविनयमपृच्छत् भगवति ! भवती यस्याः कर्पूरिकायाः कथामाख्यातवती, सा का ? तस्याः परिचयदानेन मे कुतूहलं शमयतु । तापसी अब्रवीत् वत्स ! समुद्रपारवर्त्तिनि कर्पूरसम्भवनगरे कर्पूरको नाम राजा अस्ति, कर्पूरिका तस्यैव कन्या । नास्ति त्रिलोक्यां तत्समा कापि सुन्दरी । परमसौव पुरुषद्वेषिणी, विवाहकथायां प्रवृत्तायाम् अग्नि-रिव ज्वलति । मन्ये यदि त्वं स्वयं गत्वा तां प्रार्थयेथाः, तदा सा त्वां परिणेतुं कदाचित् अभिलषिष्यति । तत् सत्वरं गच्छ, पथि दुर्गमानि वनान्यतिक्रमितुं यस्ते क्लेशो भविता, तं न गणय, तस्मिन् क्लेशे सोढ़े तव परमं मङ्गलं भविष्यति ।

एवमुक्ता तापस्यामन्तर्हितायां नरवाहनदत्तः कर्पूरि-कार्थं नितान्तमुन्मना अभवत् । अथ कर्पूरिकान्वेषणार्थं त्वर्य्यमाणः पार्श्वचरो गोमुखोऽब्रवीत् देव ! नाममात्र-श्रवणेनैव दिव्याङ्गनां परित्यज्य एकस्याः सामान्यमानव्याः क्वते एकाकिनः संशयदोलामारुह्य सागरपारगमनं किं युक्तम् ? पश्यतु देवः कियदसङ्गतमेतत्, तद् विशेषविदुषा भवता सहसा ईदृशे कार्य्ये न प्रवर्त्तितव्यम् । इत्थं प्रबोध्य-मानोऽपि युवराजः सिद्धतापस्याः कथामनुसृत्य मन्त्रि-वाक्यमगणयित्वा अश्वमारुह्य कर्पूरनगरं प्रतस्थे । प्रभुणा

भृत्यवचसि अगृहीतेऽपि भृत्यस्य प्रभोरनुसरणमविचारेणैव कर्त्तव्यमिति विचिन्त्य गोमुखः युवराजमनुसरन् अश्वमचोदयत्।

राजा तु पुत्रं नरवाहनदत्तमदृष्ट्वा अग्रत एव चलित इति मन्यमानः ससैन्यः कौशाम्बीं प्रति न्यवर्त्तत। युवराजसहचारिणोऽपि तदेव विविच्य राजानमनुजग्मुः। क्रमेण राजा राजधानीमागत्य युवराजमनागतं निशम्य सोत्कण्ठं सपरिजनो रत्नप्रभान्तिकमगमत्। रत्नप्रभा युवराजस्य अनागमनेन नितान्तमुत्कण्ठितं श्वशुरं दृष्ट्वा प्रणिधानेन ज्ञातवृत्तान्ता अवादीत् देव! आर्य्यपुत्रः कस्या अपि सिद्धतापस्याः प्रमुखात् कर्पूरिकाया वार्त्तां निशम्य तामुद्दोढुं गोमुखेन सह समुद्रपारस्थं कर्पूरसम्भवं नगरं प्रायात्, शीघ्रमेव कृतकार्य्यः प्रत्यागमिष्यति। एतदाकर्ण्य समाश्वस्तः वत्सराजः स्वं मन्दिरं जगाम।

सपत्नीसङ्घटनेन स्त्रियः प्रायेण ईर्ष्यापरा भवन्ति, रत्नप्रभा प्रत्युत तदाकर्णनेन सन्तुष्टा एव पथि पत्युः क्लेशशान्तये मायावतीं नाम विद्यां प्राहिणोत्। सा च पथि युवराजं प्राप्य तं रक्षितुमनुससार। अहो पतिहितैषिण्यः पतिव्रता नियतमेव पत्युर्हितं कामयन्ते। नरवाहनदत्तस्तु गोमुखेन सह सुदूरं गत्वा यदा भीषणमेकमरण्यं विवेश तदा सा विद्या कुमारीवेशेन उपस्थाय तमब्रवीत् भद्र! अहं रत्नप्रभा प्रेषिता मायावती नाम विद्या, अहमलक्षिता पथि भवन्तं रक्षिष्यामि, तद् भवान् निःशङ्कं व्रजतु। एवमुक्त्वा तस्यामन्तर्हितायां तत्प्रभावेण युवराजस्य

क्षुधा तृष्णा अध्वश्रमश्च सुदूरमगमन्। तेनासौ रत्नप्रभां बहु प्रशशंस।

क्रमेण पद्मिनीनायके अस्ताचलशिखरमारोहति नरवाहनदत्तः गोमुखेन सहैकं सरः संप्राप्य स्नानादिकं विधाय स्वादूनि फलानि मूलानि चोपभुज्य तरुतलेषु अश्वं संयम्य वृक्षमारुह्य च निद्रामभजत। क्षणान्तरे सहसा तुरङ्गचीत्कारेण उभावेव जागरितौ तलेषु दृष्टिं निक्षिप्य एकं मृगेन्द्रम् अश्वमेकमाक्रम्य हतवन्तं ददृशतुः। एतदवलोक्य नरवाहनदत्तम् अश्वरक्षणार्थमवतरन्तं निषिध्य गोमुखोऽब्रवीत् देव! शरीरं सम्पत्तिः मन्त्रश्च राज्ञो राज्यमूलं, तत् सर्वथा शरीरं रक्षणीयं, भवान् तत् शरीरम् अगणयित्वा विना शस्त्रं केन साहसेन केशरिणमभिधावति? देहरक्षणायैव वयं वृक्षमारुह्य स्थिताः। तन्निवर्त्ततामस्मात् प्राणसंशयात्।

गोमुखे एवमुक्त्वा विरते नरवाहनदत्तः सकोपं तरोः स्कन्धात् एकेनैव छुरिकाप्रहारेण अश्वहन्तारं विव्याध। स तु विद्धोऽपि यदा द्वितीयमश्वमाक्रम्य विनाशितवान् तदा नरवाहनदत्तः गोमुखसकाशात् खड्गमादाय तं मृगराजं द्विखण्डमकरोत्। ततश्च वृक्षादवतीर्य्य खड्गं गृहीत्वा पुनर्वृक्षमारुह्य सुष्वाप।

अथ प्रभाते समुत्थाय पादचारेणैव कर्पूरिकामुद्दिश्य प्रस्थितं तं गोमुखश्चित्तविनोदनार्थं कथामेकां वक्तुमारेभे।

अस्ति इरावती नाम नगरी। तत्रासीत् परित्यागसेनो नाम नरपतिः। तस्य द्वे भार्य्ये, एका अधिकसङ्गमा

नाम मन्त्रिकन्या। द्वितीया काव्यालङ्काराख्या राज-वंशीया। द्वयोरपि पुत्रानुत्पत्तौ क्षुब्धमना राजा पुत्रकामो यथाविधि अम्बिकां देवीमाराधितवान्। अथ सन्तुष्टा सा भगवती प्रत्यक्षमाविर्भूय तस्मै दिव्यं फलद्वयं दत्त्वा समा-दिशत् वत्स! समुत्तिष्ठ, इमे फले नीत्वा पत्नीभ्यां प्रयच्छ, एतयोर्भक्षणात् तव पत्न्यौ वीरं सुतद्वयं प्रसोष्येते। एव-मुक्त्वा देव्यामन्तर्हितायां राजा प्रातरुत्थाय हस्तयोः फल-युगले दृष्ट्वा परां प्रीतिमापन्नः पत्नीभ्यां स्वस्ववृत्तान्तमा-ख्याय रात्रौ मन्त्रिणः सम्मानार्थं तद्दुहित्रे अधिक-सङ्गमायै अग्रतः एकं फलं दत्तवान्। सा च प्राप्तमात्रमेव तत् भक्षितवती। ततश्च राजा द्वितीयपत्न्यर्थं द्वितीयं फलं शय्याशिरसि निधाय तां रात्रिं तद्गृह एव यापयन् निद्रामलभत। अत्रान्तरे सा अधिकसङ्गमा एव पुत्रद्वया-र्थिनी राजानमनिवेद्य तत् फलमपि अभक्षयत्। प्रातश्च फलमन्वेषितुं प्रवृत्ते अधिकसङ्गमा अब्रवीत् देव! अहमेव तदपि अभक्षयम्। तच्छ्रुत्वा राजा सविषादं समस्तं दिन-मतिवाह्य रात्रौ काव्यालङ्कारायाः भवने शयितुमगमत्। तस्यां स्वं फलं प्रार्थितवत्यां राजा तत् सर्वं सत्यमेवाचख्यौ। तदाकर्ण्य सा नितरां दुःखिता तूष्णीमतिष्ठत्।

अथ गच्छति काले गर्भवती अधिकसङ्गमा समये पुत्र-द्वयमसूत। राजा पुत्रजन्मना हर्षितः बहून् महोत्सवान् कृत्वा ज्येष्ठं नाम्ना इन्दीवरसेनं कनिष्ठं स्वस्य अनिच्छया फलभक्षणात् अनिच्छासेनमकरोत्। काव्यालङ्कारा तु सपत्न्याः पुत्रयोर्दिनेदिने वृद्धिं निशम्य ईर्ष्यया समधिक-

दुःखिताभवत्, अचिन्तयच्च कौशलेन तौ विनाशयितुम्। बालकौ यथा प्रतिदिनं वृद्धिं प्रापतुस्तथा काव्यालङ्काराया अपि वैरतरुर्व्यवर्द्धत। क्रमेण तौ अतिक्रान्तशैशवौ भुजबलेन दर्पितौ पितरमेत्य दिशो विजेतुं प्रार्थितवन्तौ।

राजा पुत्रयोः प्रार्थनया नितरां प्रीतस्तावनुज्ञाय दिग्विजयार्थम् आयोजनाय समादिदेश। संवृत्ते च सर्वस्मिन् आयोजने पुत्रावाहूय प्रोवाच वत्सौ! युवां मे देवीदत्तौ सन्तानौ, यदा युवयोः किमपि सङ्कटमापतेत् तदा दुर्गतिहरां भगवतीमम्बिकां स्मरिष्यथः। एवमुपदिश्य पुत्रौ दिग्जयार्थं व्यसर्जयत्।

प्रयाणसमये च तयोर्जननी अधिकसङ्ख्या बहूनि मङ्गलानि अन्वतिष्ठत्। राजा पुत्रयोर्मातामहं प्राज्ञतमं प्रधानसचिवं सङ्गमकमपि पुत्रावनुप्राहिणोत्। भ्रातरौ प्रथमं प्राचीं जित्वा बहुभिर्नृपैः समेतौ दक्षिणाभिमुखं प्रतस्थाते। क्रमेण पुत्रयोर्जयवार्त्तामुपश्रुत्य राजदम्पती अत्यर्थं हर्षमापतुः, परं विमाता नितान्तदुःखिता प्रतिदिनं विद्वेषानलदग्धशरीरा तौ विनाशयितुकामा राजनामाङ्कितं पत्रमेकं लिखित्वा केनचित् स्वानुचरेण स्कन्धावारं प्रैषयत्। पत्रार्थोऽयं, यथा सामन्ता! पुत्रौ मम भुजबलदर्पितौ सर्वां पृथिवीं जित्वा ततो मां विनाश्य स्वयं राज्यं ग्रहीतुकामौ मया विदितौ, तद् यदि युष्माकं मयि अनुरागः स्यात् तदा पत्रपाठमात्रमेव इमौ निहत्य मां सुखीकुरुत इति।

पत्रवाहकस्तत् पत्रं गृहीत्वा क्रमेण स्कन्धावारं प्रविश्य

राजपुत्रयोरसमक्षं सामन्तान् समेत्य पत्रं प्रदत्तवान्। ते च पत्रार्थमवगम्य प्रभोरादेशात् तौ हन्तुम् उदयच्छन्। तत्र कश्चित् राजपुत्रयोः परमसुहृत् सैनिकपुरुषोऽतिष्ठत्, स तेषां चक्रान्तमवबुध्य सत्वरं कुमारौ समेत्य न्यवेदयत्। तौ च तत्क्षणं व्यापारमिमं मातामहाय मन्त्रिणे निवेद्य तत्परामर्शेन शिविरात् पलाय्य तेनैव मन्त्रिणा सह रजन्याम् अश्वमारुह्य विन्ध्यारण्यं समाश्रयताम्। अटव्यां रात्रौ प्रभातायामपि ते क्रमागतमगच्छन्। गच्छताञ्च तेषां मध्याह्नसमयः समुपस्थितः। अश्वास्तृष्णया समाकुलाः प्राणानत्यजन्। वृद्धो मातामहश्च क्षुधया तृष्णया च पश्यतोरेव तयोः कलेवरं विजहौ। ततः कुमारौ क्षुत्-पिपासार्दितौ असहायौ विपदोऽस्याः परित्राणाय उपायचिन्तनव्याकुलौ अभूताम्। विषेदतुश्च विमातरमेवास्य अनर्थस्य मूलं निश्चित्य। ततश्च पितुरुपदेशं स्मृत्वा विन्ध्यवासिनीं सस्मरतुः। स्मृतायाञ्च तस्यां तयोः क्षुधा तृष्णा च तिरोहिता। किञ्चित् बलं प्राप्य च तां द्रष्टुं प्रस्थितौ तत्र गत्वा निराहारौ देवीं समाराधयितुं प्रावर्त्तताम्।

अत्रान्तरे शिविरस्थाः सामन्ता राजपुत्रावनासाद्य मन्त्रभेदशङ्कया राजान्तिकं प्रत्यागच्छन्। अवर्णयंश्च तत्पत्रं दर्शयित्वा सर्वं वृत्तान्तम्। एतदाकर्ण्य राजा समुद्भ्रान्तः क्रुद्धश्चावदत् पत्रमिदं न मम, कस्यापि दुष्टाशयस्य प्रयोगोऽयम्। मूढाः! किं न जानीथ यूयम्, अहं विन्ध्यवासिनीमाराध्य बहुना कष्टेन पुत्राववाप्तवान्। यूयं निश्चितमेव मे तौ पुत्रौ निहनिष्यथ, केवलं मम सुकृतिबलेन मन्त्रिणश्च

सुमन्त्रेण तौ जीवत इत्युक्त्वा तं कूटपत्रवाहकं कायस्थमानाय्य तथ्यमुद्घाटयितुं निपीड्य सनिर्बन्धमपृच्छत्। ततः सः कथमपि रहस्यं गोपितुमशक्तः सर्वं प्रकाशयामास।

अनन्तरं राजा तं कारायामवरुध्य तां पुत्रघातिनीं भार्य्यां भूमध्यवर्त्तिनि गृहे न्यक्षिपत्। ततः समागतान् सामन्तानन्तरेण पुत्रवैरिणः सर्वान् विनाश्य अम्बिकां स्मरन् पत्न्या सह पुत्रावन्वेषितुं प्रावर्त्तत। इतो विन्ध्यवासिनी देवी राजपुत्रस्य इन्दीवरसेनस्य तपसा सन्तुष्टस्तस्मै स्वप्ने खड्गं प्रदाय प्रोवाच वत्स! अनेन खड्गेन युवां सर्वविजयिनौ भविष्यथः, यच्च मनसि एषिष्यथः, तत् सर्वं सेत्स्यति, इत्युद्दिश्य भगवती तिरोदधे।

अथ राजकुमार इन्दीवरसेनः प्रबुद्धः करे खड्गं दृष्ट्वा विस्मितः कनिष्ठाय सर्वं स्वप्नवृत्तान्तमाख्याय समाश्वस्तचित्तः फलान्युपभुज्य पारणामकार्षीत्। ततश्च भक्त्या भगवतीं प्रणम्य तमसिं हस्ते गृहीत्वा उभौ प्रतस्थाते। बहु दूरञ्च गत्वा सुवर्णमयमेकं नगरं तस्य द्वारि भीषणमेकं राक्षसं प्रहरिणञ्च दृष्ट्वा च पप्रच्छतुः भद्र! किन्नामेदं नगरं, कुत्रास्य प्रवेशमार्ग इति। सोऽवदत् नगरमिदं शैलपुरं नाम, यमदंष्ट्रो नाम राक्षसोऽस्याधिपतिः।

इन्दीवरसेनो राक्षसमुखात् तदाकर्ण्य यमदंष्ट्रं निहन्तुं पुरप्रवेशाभिमुखोऽभवत्। प्रथमं द्वारावरोधिनं तं राक्षसं कोपादेकेन खड्गप्रहारेण निहत्य सवेगं राजभवनमविशत् अपश्यच्च। भीषणकायो घोरदंष्ट्रवदनो यमदंष्ट्रः सिंहासन-

मधितिष्ठति, वामे एका वराङ्गी योषित्, दक्षिणे दिव्य रूपा एका कन्यका शोभते। क्रमेण तस्मिन् राजसुते यम दंष्ट्रं समेत्य युद्धाय समाह्वयति स दुष्टाशयः सत्वरं सिंहासनादुत्थाय असिं गृह्णन् संग्रामाय समुदयच्छत्। इन्दीवरसेनस्तत्क्षणम् एकेन खड्गाघातेनैव तस्य शिरोऽच्छिनत्। परं तत् शिरः पुनस्तत्कलेवरे युयोज। पुनश्छिन्नं तथैवाभवत्। एवं पुनः पुनश्छिन्नमपि पुनर्योगमवाप।

इत्यवलोक्य राजकुमारे विस्मयविलक्षिते पार्श्वस्थासौ कुमारी कुमारस्य अद्भुतं वीर्यं दृष्ट्वा सानुरागा राक्षसस्य छिन्नं शिरो द्विखण्डं कर्तुं समज्ञापयत्। इङ्गितज्ञश्च राजसुतः तदीयं मस्तकं छित्त्वा तत्क्षणं द्विखण्डमकरोत्। एवं कृते सा राक्षसी माया तिरोहिता, न पुनस्तत् शिरो योगमाप।

एवं राक्षसं विनाश्य सानुजोऽसौ इन्दीवरसेनः सहर्षमुपविष्टस्तां कुमारीं ताञ्च महिलामपृच्छत् के युवाम्? अस्मिन् नगरे कथमेकेन द्वारपालेन रक्षिते आस्तं, राक्षसे चास्मिन् निहते कथं सम्प्रहृष्टे? इत्यमनुयुक्ता कुमारी अवादीत् महानुभाव! अस्मिन् नगरे वीरभुजो नाम राजासीत्। इयं तस्य महिषी, मदनदंष्ट्रा नाम। कदाचित् अयं यमदंष्ट्रः सहसा समुपेत्य राजानं भक्षयित्वा मदनदंष्ट्रामिमां सुरूपां दृष्ट्वा भार्य्यामकरोत्। निरमाच्च पुरीमिमामनायासेनैव सुवर्णमयीम्। अहमस्य कनिष्ठा भगिनी खड्गदंष्ट्रा नाम। अहं भवन्तं दृष्ट्वैव अनुरक्ता शत्रुनाशार्थं कृतसङ्केता तवाशेन सम्प्रहृष्टा च। तदिदानीं मया भवतं

आत्मा समर्पितः, भवान् मां परिणीय स्वं मनोरथं पूरयतु। एवमभिहित इन्दीवरसेनः गान्धर्वेण विधानेन तां परिणीय खड्गप्रसादेन तदेव नगरमध्युवास।

एकदा इन्दीवरसेनः खड्गप्रभावेण विमानमानीय कनिष्ठं पित्रोः सकाशं प्रैषयत। अनिच्छासेनस्तेन इरावतीं नगरीमेत्य पितरावभ्यवादयत्। अथ पितृभ्यां समालिङ्गितः पुत्रः अनिच्छासेनः ज्येष्ठस्य कुशलवार्त्तया तावभिनन्द्य सर्वं वृत्तान्तमवर्णयत्। अभवच्च सुदुःखितः विमातुर्दुश्चेष्टां तस्याश्च पितृकृतां दुरवस्थां श्रुत्वा।

गच्छता कालेन अनिच्छासेनो दुःस्वप्नं दृष्ट्वा उत्कण्ठितः पितरमुपेत्य ज्येष्ठम् इन्दीवरसेनं गृहमानेतुं प्रस्तावमकरोत्। तदाकर्ण्य उत्कण्ठिताभ्यां राजदम्पतिभ्यामनुमोदितः अनिच्छासेनस्तत् दिव्ययानमारुह्य शैलपुरमेत्य भ्रातुर्भवनं प्रविश्य अद्राक्षीत् इन्दीवरसेनो विचेतनः पतितो वर्त्तते, तत्पार्श्वयोश्च खड्गदंष्ट्रा मदनदंष्ट्रा च अश्रूणि मुञ्चतः। तद्दर्शनजातोत्कण्ठेन अनिच्छासेनेन वृत्तान्ते परिपृष्टे खड्गदंष्ट्रा अधोवदनाब्रवीत् कुमार! त्वयि इतो निष्क्रान्ते एकदा स्नातुं चलितायां मयि मदनदंष्ट्रा अनेन सह सुरतक्रीडायां प्रवृत्तासीत्, तदानीमहं स्नानादागत्य उभयोस्तथाविधं व्यापारं दृष्ट्वा ईर्ष्याविमोहिता एनं शासितुम् अस्य दर्पभूतमसिमहार्षम्। न्यक्षिपञ्च रात्रौ अस्मिन् प्रसुप्ते तं खड्गम् अग्नौ। सोऽयं खड्गः यतः प्रभृति अग्निपातेन कलङ्कितां दशामापन्नः, तत आरभ्य तवायं भ्राता विचेतनतां प्राप्तः, तदहमेव अस्यानर्थस्य मूलमिति

निरन्तरमनुतप्ता मदनदंष्ट्रया तिरस्कृता शोकान्धचित्ता च प्राणांस्त्यक्तुमुद्यतास्मि। इदानीं त्वमागतोऽसि, तत्त्वमेव खड्गेनानेन मे शिरश्छिन्धि।

अनिच्छासेनो भ्रातृजायाप्रमुखात् सर्वं श्रुत्वा अनुतापाग्निना अ ह्यत। अत्रान्तरे सहसा अन्तरीक्षसरस्वती समुदचरत् राजपुत्र! भ्रातायं ते न मृतः, खड्गं प्रति अनास्थया भगवत्याः कोपात् मूर्च्छितस्तिष्ठति। अत्र खड्गदंष्ट्राया अपि नास्ति दोषः। इमे द्वे एव तव भ्रातुः पूर्वजन्मभार्य्ये। इदानीं देव्यां प्रसन्नायामेव सर्वापदो दूरं गमिष्यन्ति। एवमुक्ता तस्मिन् आकाशवचसि विरते तं अग्निकलङ्कितं खड्गमादाय तेनैव विमानेन विन्ध्यवासिनीमगात्। गत्वा च तत्र प्रबलया भक्त्या देवीं प्रसादयितुं स्वं शिरश्छेत्तुमुद्यत एव तस्मिन् गगनाद्भारतीयं समुदतिष्ठत् वत्स! प्रसन्नास्मि, तव ज्येष्ठश्च जीवितः, अयञ्च खड्गः पुनर्निर्मलतामापन्नः युवयोर्जयं विधास्यतीति।

अथ अनिच्छासेनः समुत्थाय पूर्ववत् सुनिर्म्मलं खड्गं दृष्ट्वा सम्प्रहृष्टः भगवतीं देवीं प्रदक्षिणं कृत्वा प्रणम्य च समुत्सुकस्तदेव विमानमारुह्य शैलपुरं समुच्चचाल। तत्रोपस्थितश्च तमनुजम् इन्दीवरसेनः सहसा निद्रितवत् समुत्थाय प्रणतं समालिलिङ्ग। ते च भ्रातृभार्य्ये देवरं पदतलपतितं बहु प्रशस्य अभ्यनन्दताम्। इन्दीवरसेनः सोदरमुखात् भगवत्याः प्रसादवार्त्तां निशम्य अनुजं प्रति सम्प्रहृष्टः खड्गदंष्ट्रोपरि जनितं क्रोधमत्यजत्। ततश्च भ्रातुर्मुखात् पितोर्दर्शनोत्सुक्यं विमातुर्दुःशीलताञ्च श्रुत्वा

खमसिं प्रगृह्य विमानं सस्मार, उत्पपात च ध्यातमात्र-मुपस्थितं तद्विमानमारुह्य सस्त्रीकः सानुजश्च नभोमण्ड-लम् । क्षणेन च इरावतीं प्राप्य विमानादवरुह्य पित्रोः सकाशं गत्वा च तौ प्रणनाम । तौ च राजदम्पती चिरा-गतं पुत्रमालोक्य हर्षेण क्षणमश्रूणि अत्यजताम् । अनन्तरं पुत्रमालिङ्ग्य अमृतह्रदमिवावगाढौ चिरसन्तापानलं निरवापयताम् । अथ कथाप्रसङ्गेन ते स्नुषे इन्दीवरसेनस्य पूर्वजन्मपत्न्यौ इति श्रुत्वा पुत्रस्य विमानगतिप्रभृतिमशेष-विधमलौकिकं प्रभावं दृष्ट्वा च परां प्रीतिमवापतुः । ततो-ऽसौ राजतनयः सस्त्रीकः सानुजश्च पित्रोरानन्दं वर्द्धयन् सुखेन कालमनयत् ।

अथ गच्छता कालेन इन्दीवरसेनः पितृभ्यामनुमतः पुनर्दिग्जयार्थं प्रतस्थे । जिगाय च तेन खड्गेन सर्वां पृथिवीम् । अथ अपरिमितान् हस्तिनो अश्वान् रत्नादींश्च जयलब्धान् समाहृत्य महोत्साहं गृहं प्रत्येत्य पुनः पित्रो-रानन्दमवर्द्धयत् । गृहागतश्च सहागतान् राजलोकान् संवर्द्ध्य परेद्यवि स्वहस्तजितां मेदिनीं पित्रे समर्प्य स्वां जातिं स्मरन्नब्रवीत् तात ! अद्य मम पूर्वजातिः स्मृति-पथमारूढ़ा, हिमालयान्तर्वर्त्तिनि मुक्तापुराख्ये नगरे मुक्तासेनो नाम विद्याधराधिपतिः प्रतिवसति । कम्बुवती नाम विद्याधरी तस्य प्रधानमहिषी । तस्या गर्भे पद्मसेन-रूपसेनाख्यौ द्वौ गुणवन्तौ रूपवन्तौ च पुत्रौ जातौ । सूर्य्यप्रभा नाम विद्याधरकन्या पद्मसेनं प्रति अनुरक्ता सख्या चन्द्रावत्या सह तं पतित्वेन आवृणोत् ।

गच्छति च काले पद्मसेनः पत्न्योः परस्परमीर्ष्याकलहेन नितान्तमुत्यक्तः संसारं परित्यज्य तपोवनमाश्रयितुमीहाञ्चक्रे। तदर्थञ्च पुनःपुनरनुमतौ प्रार्थितायां पिता मुक्तासेनः कुपितस्तं शशाप दुरात्मन्! तपोवनमगत्वा सपरिवारो मर्त्यलोकं व्रज। इयञ्च कलहकारिणी सूर्य्यप्रभा चन्द्रावती च राक्षसी भूत्वा तवैव भार्य्ये भविष्यतः। अयञ्च ते कनीयान् रूपसेनस्त्वामनुसृत्य तव कनिष्ठसोदरो भविता, तत्रापि त्वया द्विभार्य्यत्वेन कियन्तं कालं दुःखं सहिष्यते। अनन्तरं यदा पृथिवीं जित्वा पित्रे प्रदास्यसि, तदा सपरिजनो जातिं स्मृत्वा पुनर्दिव्यं कलेवरमाप्स्यसीति।

पितः! सोऽहं पद्मसेनः देवस्य ज्येष्ठपुत्रतया इन्दीवरसेननाम्ना समभवम्। अकरवञ्च स्वं कर्त्तव्यं मेदिनीं जित्वा तुभ्यं समर्प्य च। स च रूपसेनो भवतो द्वितीयपुत्रः अनिच्छासेनाख्यया सञ्जातः, ते च मम पूर्वभार्य्ये सूर्य्यप्रभाचन्द्रावत्यौ राक्षस्यौ भूत्वा खड्गदंष्ट्रा मदनदंष्ट्रा समाख्यया ममैव भार्य्ये अभूताम्। इदानीमस्माकं शापोऽवसितः, तदयं साम्प्रतं विद्याधरपदं पुनर्गच्छाम इति अभिधाय पितरौ प्रणम्य इन्दीवरसेनः सोदरेण पत्नीभ्याञ्च सह मानुषीं तनुं त्यक्त्वा प्रतिपन्नविद्याधरकलेवरः सभार्य्यः सोदरेण सह गगनमुत्पत्य तत्क्षणं मुक्तापुरमुपययौ। तत्र च गत्वा पित्रोरानन्दं वर्द्धयन् पूर्ववत् भोगरतः सुखमुवास।

गोमुखः पथि रमणीयमाख्यानमिदं कथयित्वा पुनर-

ब्रवीत् युवराज! इत्थं महतामपि द्विभार्य्यत्वेन महान् क्लेशः महोन्नतिश्च स्यात् किमपरेषां भवान् विद्याशक्ति-प्रभावेण यथा रत्नप्रभामवाप्तवान् तथा कर्पूरिकामपि अनायासेनैव प्राप्स्यति। युवराजो नरवाहनदत्तः गोमुख-मुखात् एतां रम्यां कथां शृण्वन् अपराह्नसमये एकं सरो-वरमाससाद। तत्र च कृतस्नानादिव्यापारः हरं पूजयित्वा फलानि मूलानि चोपयुयुजे। अनन्तरं तेन सहचरेण गोमुखेन सह पर्णशय्यासीन एव रजनीमतिवाहयाञ्चकार।

---

## त्रिचत्वारिंशत्तरङ्गः।

— ० —

अथ प्रत्यूषे युवराजः समुत्थाय पुनः प्रतिष्ठमानो गोमुखमभाषत मित्र! गतायां निशि अपूर्वमेकं स्वप्नमप-श्यम्। श्वेतवसना कापि दिव्याङ्गना मामुपेत्याब्रवीत् वत्स! अलमुद्वेगेन, शीघ्रमेव कर्पूरसम्भवं नगरं प्राप्य तस्य राजकन्यां कर्पूरिकामवाप्स्यसि। एवमुक्त्वा अन्त-र्हितायां तस्यामहं प्रबुद्ध आसम्। एतदाकर्ण्य गोमुखः प्रत्यभाषत देव! यदा देवा अपि भवदनुकूला दृश्यन्ते, तदा श्रीमतां न किमपि दुरापं वा दुष्करम्। सेत्स्यत्येव अचिरात् भवन्मनोरथः। गोमुखे एवं वदति नरवाहन-दत्तः सत्वरं समुद्रतीरस्थं तन्नगरं समासदत्, अपश्यच्च सवि-स्मयम् अपूर्वां तस्य शोभाम्।

अथ सुवर्णमयं सप्तप्रकोष्ठं राजभवनं क्रमेण पश्यन् अभ्यन्तरं प्रविश्य रत्नसिंहासनासीनं पुरुषमेकमद्राक्षीत्। स तु पुरुषो राजकुमारं दृष्ट्वा संवर्द्धयन् रत्नासनमेकमध्यासितुं प्रादात्। अप्राक्षीच्च सम्मुखासीनः महानुभाव! कथमिमाममानुषां भूमिमागतोऽसीति। नरवाहनदत्तः स्वं वृत्तान्तमाख्याय अपृच्छत् को भवान्? कथं वा नगरमिदं भवता निर्म्मितमिति। तदाकर्ण्य पुरुषोऽभ्यभाषत।

अस्ति सुप्रसिद्धे काञ्चीपुरे बाहुबलो नाम राजा। तस्मिंश्च पुरे सहोदरावावां निवसावः। जात्या वयं सूत्रधराः विचक्षणाश्च मयदानवसदृशे कारुकर्म्मणि। मम ज्यायान् प्राणधरो नाम नितरां वेश्यासु समासक्तः। अहं तस्यैव भ्रातुरनुरक्तो राज्यधरो नाम। स च वेश्यासक्तिवशात् सर्वां पैतृकीं सम्पदं हारयित्वा यदा मदुपार्जितामपि सम्पत्तिं विनाश्य निःस्वः संवृत्तः, तदा धनाहरणार्थं रज्जुयन्त्रवाहि हंसयुगलं निर्म्ममे। तत् हंसयुगलं रजन्यां यन्त्रबलेन बाहुबलस्य राज्ञः अन्तःपुरं गवाक्षमार्गेण प्रविश्य चञ्चुपुटेन तत्रत्यानि आभरणानि आनीय मद्भ्रात्रे प्रददौ। तानि च आभरणानि विक्रीय मद्भ्राता वेश्यामतोषयत्। मया बहुशो निवारितोऽपि कथमपि तस्मात् दुर्व्यवसायात् न निववृते।

अथ क्रमेण राजकोषे क्षयं गच्छति कोषाध्यक्षः रक्षिकारणमनुसन्धातुं प्रावर्त्तत। परं केन रूपेण रुद्धधनागारात् धनानि ह्रियन्ते इति निश्चेतुमशक्नुवन् इमं व्यापारं राजानं न्यवेदयत्। ततो राजा कतिपयान् रक्षिणो

धनाध्यक्षेण सह कोषागारे समरक्षत् । ते च प्रबुध्यमाना एव तिष्ठन्तः निशीथे गवाक्षमार्गेण काष्ठमयं हंसयुगलं कोषागारे रज्ज्वा प्रविश्य चञ्चुपुटेन आभरणानि गृहीत्वा गन्तुमुद्यतं दृष्ट्वा तां रज्जुं छित्त्वा तत् हंसद्वन्द्वं जगृहुः, निन्युश्च प्रातः राजसमीपम् ।

अत्रान्तरे छिन्नायां रज्ज्वां शिथिलायां भ्राता मम शशव्यस्तः समागत्य मामवादीत् भ्रातः ! सत्यं ते वचनं सञ्जातं, रक्षिणः यन्त्रहंसयुगलं छित्त्वा जगृहुः । श्वः प्रातरेवागत्य अस्मान् बद्ध्वा नेष्यन्ति । तदागच्छ, इदानीमेव स्थानादस्मात् पलायावहे । मम यद् वातयन्त्रमस्ति तत् प्रतिदिनं शताष्टयोजनं गच्छति । तदारुह्य अतिदूरे देशे प्रस्थातव्यम् । एवमुक्त्वा स स्वं वातयन्त्रमाश्रित्य प्रतस्थे । अहञ्च राजभयात् स्वहस्तनिर्मितं वातयन्त्रमारुह्य प्रातिष्ठे । शतयोजनद्वयमतीत्य क्षणं विश्रम्य पुनः शतयोजनद्वयमतिक्रान्तः सम्मुखापतितं समुद्रमपश्यम् । तत्र चावतरन् पादचारेण कियन्तमध्वानं गत्वा शून्यमिदं नगरं प्राप्य राजभवनमदः प्राविशम् । अपश्यञ्च राजभवनमिदं वसनाभरणशयनादिभिः राजभोग्यैरुपकरणैः परिपूर्णम् । पार्श्वे च मनोरममुद्यानं, स्वच्छसलिला दीर्घिका च । अथ सायं तज्जलमवगाह्य वृक्षात् नानाविधानि फलानि आहृत्य अभक्षयम् । सन्ध्यायां अतीतायां राजोचिते शयने शयित्वा अचिन्तयम् अस्मिन् जनशून्ये नगरे स्थित्वा एकाकी किं करिष्यामि, तत्प्रभाते स्थानान्तरं यास्यामि, यत्रागतोऽस्मि अत्र राजभयं न सम्भवेत् । इत्थं चिन्तयन् निद्रा-

मलभे। निद्रितञ्च मामेत्य कश्चिद् मयूरवाहनो दिव्यपुरुषः समब्रवीत् भद्र! त्वया कुत्रापि न गन्तव्यं अत्रैव निर्भयं वस। आहारसमये च मध्यमं पुरमारुह्य स्थातव्यम्।

इत्युक्त्वा तस्मिन् देवे तिरोहिते गतनिद्रोऽहमचिन्तयं स्थानमिदं कार्त्तिकेयेन निर्मितं नात्र संशयः। भगवान् कुमारः स्वप्ने आविर्भूय यन्मामनुजग्राह तत् केवलं मे पूर्वसुकृतबलेनैव। तदहमत्रैव वत्स्यामि, अत्र वासे कृते अवश्यमेव मङ्गलं भवितेति निश्चित्य स्नानादिकं समाप्तवानस्मि। क्रमेणाहारसमये प्राप्ते तस्यैव दिव्यपुरुषस्य आदेशमनुस्मरन् मध्यमं पुरमारुह्य अतिष्ठम्। क्षणान्तरे च मनोहरान्नव्यञ्जनादिपूर्णं स्वर्णभाजनं ममाग्रतः समुपस्थितम्। तदवलोक्य विस्मितोऽहं सुखेन तत्सर्वमुपयुज्य परां तृप्तिमन्वभवम्। इत्थं प्रतिदिनं राजभोगमुपयुञ्जानः अस्मिन्नेव नगरे परिचारकाभावेन कार्य्यसौकर्य्यार्थं यन्त्रमयान् इमान् सर्वान् मानवान् निर्माय सुखं वसामि। तदहं महाभाग! नगरेऽस्मिन् एकाको दैवानुग्रहेण राजत्वं भुञ्जान एव तिष्ठामि। प्रार्थये च भवन्तं विनयेन, यदि मद्भाग्यात् भवन्तोऽत्र समागताः, तदेकं दिनमत्रावस्थाय विश्रामसुखमनुभवतु महाभागः, अहं यथाशक्ति भवत्परिचर्य्यया आत्मानं कृतार्थं करवाणि।

एवमुक्त्वा राज्यधरो गोमुखेन सह युवराजं पार्श्वस्थमुद्यानमनैषीत्। सर्वे तत्र वापीमवगाह्य कमलानि उच्चिन्वन्तः भगवन्तं देवदेवं समभ्यर्च्चयन्। समागते च मध्याह्ने राज्यधरः तौ गोमुखनरवाहनौ द्वितीयतन-

मध्यारोहयत्। अनन्तरं यथासमयं विविधानि राजयोग्यानि अन्नव्यञ्जनादीनि समुपस्थितानि दृष्ट्वा तौ सपरितोषमभ्यवहारयत्। आहारान्ते च ताम्बूलासवादिकं दत्त्वा स्वयमाहारं कृत्वा तत्समीपमुपययौ। अथ नानालापैर्दिवसमवसाय्य तौ राज्यधरनिर्दिष्टे शयने अशयतां राज्यधरश्च अशेत। शयानश्च कर्पूरिका चिन्तया निर्निद्रः युवराजस्तं राज्यधरं कर्पूरिकावृत्तान्तमपृच्छत्। स च तं समाश्वास्य महासत्त्वं जनं स्त्री रूपं वृणोतीति प्रसङ्गमुत्थाप्य कथामिकां वक्तुं प्राक्रमत।

यत् पूर्वमुक्तं काञ्चीपुराधिपतेर्बाहुबलस्य चरितं किञ्चिदत्र भवति, तस्यार्थलोभो नाम कश्चित् धनशाली प्रतीहार आसीत्। तस्य मानपरा नाम्नी पत्नी। स च वाणिज्यमारभ्य सर्वं क्रयविक्रयभारं पत्न्यै समर्पयत्। मानपरा अनिच्छुरपि पत्युरनुरोधेन सम्मता मधुरवचसा सर्वं जनं सन्तोष्य क्रयविक्रयादिव्यापारं निर्वर्त्तितुमारेभे। तेनार्थलोभः क्रमेणोन्नतिं दृष्ट्वा परं सन्तोषमवाप।

कदाचित् सुदूरात् कश्चित् सुखधरो नाम वणिक् प्रभूतान् घोटकादीनादाय समागतः। तदवलोक्य अर्थलोभः भार्य्यामुपेत्य अवादीत् प्रिये! सुखधरो नाम वणिक् विंशतिसहस्राणि सदश्वान् चैनानि नानाविधानि वसनानि च गृहीत्वा वाणिज्यार्थमत्रागतः, तत् त्वं तत्समीपं गत्वा पञ्चसहस्राणि अश्वान् दशसहस्राणि च पट्टयुगलानि क्रीत्वा नय। अहं तान् अश्वान् वसनानि च राज्ञे उपहरिष्यामि वाणिज्यञ्च करिष्यामि। मानपरा पत्युर्वचसा

सम्मता सुखधरसमीपमेत्य अनुरूपाणामश्वानां वसनानाञ्च मूल्यम् अपृच्छत्। वणिक् तस्या रूपेण मधुरेण वचसा च विमोहितः तां रहसि समाहूय विना मूल्येन अश्वान् वसनानि च दास्यामीति प्रतिज्ञाय रतिं चकमे। निरङ्कुशां योषितं को वा न प्रार्थयते?

तेनैवं प्रार्थिता मानपरा ब्रवीत् अहं पतिपरतन्त्रा, तदेष प्रस्तावः स्वामिने विज्ञाप्यः। अहं निश्चितं जानामि, स मे पतिर्नितान्तलुब्धः, तत् भवतः प्रार्थनामवश्यमेव सफलयिष्यति। एवमुक्त्वा मानपरा गृहं प्रतिनिवृत्त्य पतिं तस्य वणिजः प्रार्थनां न्यवेदयत्। पापात्मा पतिरर्थलोभः धनलोभेन अन्ध इव सहर्षं मानपरां वणिक्सहवासे अनुज्ञाप्य अवादीत् प्रिये! का क्षतिः? अद्य रजनीं तेन सह तत्र स्थित्वा प्रातरश्वान् वसनानि चादाय आगमिष्यसि। मानपरा कापुरुषस्य भर्तुरीदृशं वचनमाकर्ण्य समचिन्तयत् हा कष्टं! यः पुरुषः अर्थलोभेन स्वं मानं पौरुषञ्च विक्रीणीते, तेन समः कापुरुषः कोऽपि त्रिलोक्यां न विद्यते। तदेनं कापुरुषं पतिं धिक् अस्मात् यः शतं शतम् अश्वान् चीनांशुकानि च दत्त्वा एकां रजनीं मत्सम्भोगं कामयते स एव श्रेयान् सहस्रशः प्रशंसनीयश्च।

इत्यवधार्य मानपरा सुखधरसमीपं गत्वा तत्सहवासे पत्युरनुज्ञां निवेदितवती। सुखधरस्तु तदाकर्ण्य विस्मितः आत्मानं कृतार्थं मन्यमानः प्रतिश्रुतानश्वान् पट्टवस्त्राणि च सत्वरं अर्थलोभाय प्राहिणोत्। अत्यवाहयच्च तां रजनीं मानपरासम्भोगसुखेन। प्रत्यूष एव निर्लज्जोऽर्थलोभः मान-

परां नेतुं सुखधरसमीपं भृत्यं प्रैरयत्। मानपरा तं भृत्यमवादीत् भद्र! युष्माकं स्वामी अर्थलोभात् मां विक्रीतवान्। यदाहम् अन्यसङ्गताभूवं तदा पुनर्निर्लज्जा कथं तत्सकाशं गमिष्यामि, तस्मात् यो मां क्रीतवान् अद्यप्रभृति तस्यैव पत्नी अभवम्। युष्माकं प्रभवे एषा कथा वक्तव्या। एवमुक्त्वा भृत्यान् व्यसर्जयत्। भृत्याः प्रत्यागम्य अवनतमुखाः प्रभवे अर्थलोभाय सर्वं न्यवेदयन्। अथ नराधमो यदा बलेन पत्नीमानेतुं कृतसङ्कल्पोऽभवत् तदा हरबलो नाम कश्चित् तत्सुहृदब्रवीत् मित्र! त्वं कदापि ताम् आनेतुं नैव शक्ष्यसि, यतः सुखधरो बाहुबलेन मित्रबलेन वा त्वत्तः श्रेयान्, तस्मात् तत्सकाशे तव वीरत्वं नैव सङ्गच्छते। अन्यच्च स दानशीलतया तव पत्न्या विशेषेण प्रेमबद्धः प्रोत्साहितः प्रबलैर्मित्रैः सह साम्प्रतं मिलितश्च। त्वन्तु अर्थलोभात् स्वां पत्नीं विक्रीय विशेषेण लोकसमाजे अपमानितः निन्दितश्च। यदीयं वार्त्ता राज्ञो विदिता स्यात् तर्हि सोऽपि त्वां प्रति अत्यर्थं कुपितो भविष्यति। अतस्त्वां परमसौहार्द्देन उपदिशामि कदापि तेन सह वैरं विधाय लोकान् मा हासय, निवर्त्तस्व।

निर्बोधोऽर्थलोभः सुहृद्वाक्यमविगणय्य सक्रोधं सैन्यपरिवृतः सुखधरगृहमवारुणत्। सुखधरबलानि सबन्धुसुखधरस्य आदेशेन अर्थलोभसैन्यानि तत्क्षणादाचक्रमुः, सहसा परासाञ्चक्रिरे च। अर्थलोभस्तु तेनापि अनिवृत्य राजद्वारं गत्वा पत्नीमानेतुमभियुक्तवान्। श्रुत्वैव राजा

क्रुद्धः सन् सुखधरमवरोद्धुमैषीत् परं सन्धाननामा मन्त्री सुखधरस्य बहुतराणि सैन्यानि मित्राणि च वर्णयित्वा विना तथ्यानुसन्धानं तमवरोद्धुं न्यवारयत्, उपादिशच्च दूतेन तथ्यानुसन्धानार्थम्।

अथ राजा मन्त्रिणस्तं परामर्शं श्रुत्वा क्रोधरहितः सुखधरसमीपं दूतं प्राहिणोत्। दूतेन समीपमेत्य राजादेशं निवेदितः सुखधरः मानपरां न्ययोजयत्। सा तु स्वं वृत्तान्तं समाचख्यौ। अथ दूतेन सर्वं वृत्तान्तं श्रुत्वा प्रत्यागत्य तथ्यमावेदितो नृपतिः सकौतुकं मानपरां द्रष्टुम् अर्थलोभेन सह सुखधरभवनं ययौ। सुखधरे राजानं दृष्ट्वा विनते राजा मानपराया रूपलावण्यं निरीक्ष्य विस्मयमगमत्। मानपरया प्रणम्य अर्थलोभसमक्षं सर्वस्मिन् वृत्तान्ते वर्णिते अर्थलोभो निरुत्तरोऽभवत्। राजा च मानपराया वचसि विश्वस्तस्तामेव साम्प्रतिकं कर्त्तव्यमपृच्छत्। मानपराब्रवीत् देव! यो मां केवलेन अर्थलोभेन अन्यस्मै विक्रीणीते स्म, कथमहमिदानीं तं पुरुषं भजे। एतदाकर्ण्य राजनि मानपरां साधुवादेन स्तुवति अर्थलोभः कामक्रोधलोभैर्नितरामाकुलोऽभवत्। अथ पुनरपि राजसमक्षं प्रार्थ्य अवादीत् देव! अलं सैन्यैः, आवाम् अन्योन्यं द्वन्द्वयुद्धं कुर्वः, तत्र यो जयेत्, स मानपरां लप्स्यते।

राज्ञा तथेति समादिष्टे उभौ अर्थलोभसुखधरौ स्वं स्वम् अश्वमारुह्य रणभूमिमवतीर्णौ। मानपरया सह राजनि मध्यस्थिते परस्परं घोरं संग्रामं चक्रतुः। परं सुखधरोऽर्थलोभं परासाच्चक्रे। ततः सर्वे सुखधरं साधु साध्विति

अमृवन्। राजा बाहुबलोऽपि तं सुखधरं बहु प्रशस्य मानपरां तस्मै समर्प्य अर्थलोभस्य च सर्वस्वमन्यायलब्ध-मिति कृत्वा तत्पदे अन्यं जनं प्रतिष्ठाप्य च सहर्षं स्वं भवनं प्रत्ययासीत्। सुखधरो मानपरया सह सुखेन काल-मनैषीत्। देव! एवं कामिन्यः सम्पदंश्च हीनसत्त्वं परित्यज्य महासत्त्वमाश्रयन्ते। तदलं चिन्तया, सुखेन निद्रां भजस्व, सत्वरमेव कर्पूरिकां लप्स्यसे।

नरवाहनदत्तः राज्यधरमुखादेतदाकर्ण्य गोमुखेन सह सुखं निद्रामभजत। गोमुखः प्रातरुत्थाय सर्वं कृत्यं समाप्य च राज्यधरं युवराजस्य विमानगमनाय वायुयन्त्रं सज्जितु-मनुरुरोध। राज्यधरः पूर्वनिर्मितं वायुविमानं सज्जयित्वा समानयत्। युवराजः गोमुखेन सह तद् विमानमारुह्य दुस्तरं सागरमतिक्रम्य क्षणेन समुद्रतीरवर्त्ति कर्पूरसम्भवं नगरमाससाद। अथ विमानादवतीर्य्य गोमुखेन सह नगरं प्रविश्य सकौतुकमितस्ततः पर्य्यटन् सानन्दं क्रमेण राज-सदनसमीपमगमत्। प्रविशंश्च तत्र कस्या अपि वृद्धाया योषितो गृहम्। वृद्धया तौ संवर्द्ध्य उपवेशनार्थमासने प्रदत्ते युवराजः क्षणं विश्रम्य तां तत्रत्यराजभवनवार्त्तां पप्रच्छ। वृद्धा नरवाहनदत्तस्य मनोहराकृतिनिरीक्षणेन सन्तुष्टा प्राब्रवीत् वत्स! अस्य नगरस्याधिपतिः कर्पूरसेनो नाम, अस्य महाराज्ञी बुद्धिकार्य्या, राजा अनपत्यतया सस्त्रीकः शिवं देवमाराधयितुं चिरात्रमुपावसत्। प्रापच्च स्वप्ने वरं कन्या ते पुत्रादपि समधिकप्रिया भविता, तस्याश्च पतिर्विद्याधरराज्येश्वरो भविष्यतीति। राजा प्रत्यूष एव

प्रबुद्धः राजमहिषीं स्वप्नवृत्तान्तं कथयित्वा तया सह पारणामकरोत्।

गच्छता कालेन राजमहिषी गर्भवती दशमे मासि निरुपमामेकां कन्यां प्रासोष्ट। राजा स्वेन नाम्ना कन्यां कर्पूरिकाख्यां कृत्वा यथाविधानेन महोत्सवमन्वतिष्ठत्। ताञ्च कन्यां शशधरकलामिव दिने दिने वृद्धिं गच्छन्तीं क्रमेण अतिक्रान्तशैशवां निरीक्ष्य राजा विवाहार्थं समुत्सुकोऽभूत्। कन्या तु अतिमनस्विनी पुरुषद्वेषात् विवाहं न कामयते। एकदा ममैकया कन्यया विवाहं प्रति विद्वेषहेतुं पृष्टा सा अवादीत् सखि! अहं जातिस्मरा, पूर्वजन्मवृत्तं मे सर्वं स्मृतम्। तदेव मे विवाहानिच्छाया हेतुः। स च वृत्तान्तोऽयम्—

समुद्रस्यास्य तीरे यो महान् चन्दनतरुरस्ति तस्य सन्निधौ एकं पद्मसरो वर्त्तते। अहं कर्म्मदोषात् तस्मिन् सरसि हंसयोनौ सञ्जाता। कदाचित् भर्त्रा सह तस्मिन् चन्दनपादपे कुलायो मया निर्म्मितः। कियता कालेन मम कतिपये शावकाः समभवन्। मया तैः शावकैः सह कुलाये तस्मिन्नध्युषिते सहसा समुद्रः वृद्धिं गच्छन् नीड़ात् मच्छिशून् तरङ्गैरपातयत्। अहमपत्यशोककातरा निराहारेण स्थित्वा तत्रत्यस्य कस्यचित् शिवलिङ्गस्य सन्निधौ अरुदम्। अत्रान्तरे मत्पतिः राजहंसः समागत्य मृतशावकार्थं शोकं कर्त्तुं निषिध्य अब्रवीत् प्रिये! अलं शोकेन, जीवतोरावयोर्बहवः शावकाः समुत्पत्स्यन्ते। अहं पत्युस्ताहशैर्वाग्बाणैर्हृदि विद्वा व्यथि-

त्वयं हा! पुरुषा अतिनिष्ठुराः, ते शिशून् भक्तिमतीं स्त्रियञ्च न स्नेहेन पश्यन्ति, तस्मै अलमनेन पत्या शोकसन्तप्तेन च देहेन। एवमुक्त्वा देवदेवं भक्त्या प्रणम्य तमेव हृदि ध्यायन्ती पत्युः समक्षं जन्मान्तरे जातिस्मरा राजकन्या भवितास्मीति कामनया समुद्रजले न्यपतम्। अनन्तरं पुरुषद्वेषिणी राजकन्या जातास्मि, तस्मात् विवाहो मे न रोचते, तदिदानीं यथाभाग्यं तदेव सम्पत्स्यते इति।

मत्कन्या च इमं वृत्तान्तं मह्यं निवेदितवती, तद्वत्स! मया एतावत् विदितं, मन्ये सा श्रीमतो भवत एव भार्य्या भाविनी, यतः विद्याधरचक्रवर्त्ती तस्याः पतिर्भविष्यतीति देवादेशः, तल्लक्षणञ्च सर्वं त्वयि दृश्यते, कथमन्यथा अस्मिन् प्रदेशे समये श्रीमतामभ्यागमनं, मन्ये विधाता एव अस्य संयोगकारी भवन्तमिहानीतवान्। साम्प्रतमस्मद्गृहे अवस्थानेन इमं जनं कृतार्थं कुरु। इत्यभिधाय वृद्धया यथालाभम् आहारद्रव्ये समाहृते युवराजः गोमुखेन सह तदुपयुज्य तां रात्रिं तत्र निनाय। ततश्च प्रातः प्रभाते नरवाहनदत्तः सन्न्यासिवेशो गोमुखेन सह राजद्वारं समेत्य हा हंसि! हा हंसि! इत्येवं पुनः पुनराजुहाव। तदवलोक्य तत्र जनतायां सविस्मयमुपस्थितायां कर्पूरिकायाः सख्योऽपि समागम्य तं विस्मयकरं व्यापारं राजदारिकायै गत्वा समाचख्युः भर्तृदारिके! द्वारि कश्चिदपूर्वः सन्न्यासी उपतिष्ठते, स सद्विनीतोऽपि रूपेण अद्वितीयत्वं बिभर्त्ति जगति। हा हंसि हा हंसीत्येवं मन्त्रं सततं जपति च। तञ्च मन्त्रं श्रुत्वा नारीणां मनांसि

नितरां मुह्यन्ति। पूर्वं हंसी राजकन्या चेटीमुखात् तदाकर्ण्य एकया चेट्या तं सन्न्यासिनं स्वसकाशं आहूय समानयत्। आनीतञ्च तं हरमाराधयितुं व्रतं धारयन्तं काममिव दृष्ट्वा मुमोह। युवराजः कर्पूरिकां निरीक्ष्य साक्षात् रतिमिव विग्रहिणीममन्यत। अथ तस्यां कर्पूरिकायां नरवाहनदत्तं प्रति हा हंसि हा हंसीति मन्त्रजपकारणं परिपृच्छन्त्यां स युवराजस्तदेव वाक्यं तथैव व्याजहार। ततस्तत्सहचरो गोमुखः कर्पूरिकायै हंसमिथुनवृत्तान्तमाख्याय पुनरब्रवीत् राजपुत्रि! अयं कौशाम्बीपतेरुदयनस्य पुत्रो नरवाहनदत्तो नाम जातिस्मरः समजायत। अस्मिंश्च प्रसूत एव आकाशवाणी उदचरत्, एष विद्याधरचक्रवर्त्ती भवितेति। ततोऽसुमतिक्रान्तशैशवं राजा यौवराज्ये अभिषिच्य मदनमञ्चुकया सह विवाहमदात्। ततश्च हेमप्रभनाम्नः विद्याधरपतेर्दुहिता रत्नप्रभा स्वयमागत्य एनं पतित्वेनावृणोत्। तदपि असौ युवराजः तस्या एव हस्याः कारणात् क्षणमपि सुस्थतामप्राप्नुवन् एकदा मृगयार्थं वनं गतः एकां सिद्धतापसीं सहसोपस्थितामद्राक्षीत्। सा तु कथाप्रसङ्गेन इममनुगृह्य प्रोवाच त्वं पूर्वजन्मकर्म्मबलात् हंसत्वं प्राप्य समुद्रतीरवर्त्तिनि चन्दनपादपे वसतिमकरोः, कापि स्वर्गवनिता शापात् हंसयोनौ पतिता तव भार्य्यासीत्। सहसा तस्याः शावकेषु समुद्रजले निपत्य मृतेषु सा हंसी सुतशोकात् तस्मिन्नेव उल्लम्फ्य प्राणान् विजहौ। त्वञ्च तस्याः शोकेन तत्पदवीमेव अवाप्तवान्। साम्प्रतं शम्भुवरेण त्वं राजराजतनयः जातिस्मरश्च संवृत्तो-

ऽसि। सा च हंसी समुद्रपारवर्त्तिनि कर्पूरसम्भवे नगरे कर्पूरसेननाम्नः नृपतेर्दुहिता जातिस्मरा च अजनि। तस्मात् वत्स ! त्वं तत्र गत्वा तां ते पूर्वभार्य्यां गृहाण। एवमुक्ता तस्यां तिरोहितायाम् अयं तव गतिं श्रुत्वा नितरामधीर एव मया एतन्नगरमुद्दिश्य प्रस्थितः। बहूनि दुर्गमाण्यतीत्य च क्रमेण समुद्रतीरवर्त्ति नगरमेकं प्राप्य तत्रत्यं राज्यधरं नाम एकं सूत्रधरं मित्रमाप। तेन च प्रदत्तं वायुविमानमाश्रित्य आवां समुद्रपारमेत्य नगरमिदं समासादितवन्तौ। अत्र चोपस्थाय अस्माकं युवराजोऽयं हा हंसि हा हंसीत्येवं सदा जपन् उन्मत्त इव विचरति, तदिदानीं भवत्यै यथा रोचते तत् क्रियतामिति।

एवमुक्ता गोमुखे विरते कर्पूरिका तत् सर्वं सत्यं प्रतीत्य आत्मानं प्रति नरवाहनदत्तस्य प्रगाढ़ं स्नेहमनुचिन्त्य प्रेमार्द्रा प्रत्यवादीत् सत्यमेवाहं सा हंसी, मदर्थञ्च आर्य्य-पुत्रः जननद्वयेऽपि महान्तं क्लेशं प्राप। तदहमेव धन्या, अद्यप्रभृति युवराजस्य प्रेमदासी अस्मीति समाख्याय स्नानभोजनादिना तौ परिचचार। अथेमं वृत्तान्तं परि-जनमुखादुपश्रुत्य राजा कर्पूरसेनस्तत्क्षणं युवराजसमीप-मेत्य तं चक्रवर्त्तिलक्षणाक्रान्तं तनयाजिघृक्षुञ्च दृष्ट्वा आत्मानं कृतार्थममन्यत। अथ शुभे लग्ने अग्निं साक्षी-कृत्य यथाविधि कन्यां तस्मै सम्प्रदाय त्रिकोटीः स्वर्णमुद्रा-स्तत्परिमितानि कर्पूराणि दशकोटि वस्त्राणि शतं दासीश्च यौतकानि अदात्।

अथ युवराजः प्रियया तया सह कियन्तं कालं श्वशुर-

गृहे सुखेनोषित्वा कर्पूरिकां प्रति कौशाम्बीं प्रत्यागन्तुं प्रस्तावमकार्षीत्। सा च सम्मता प्रत्यवोचत् नाथ! येन विमानेन भवान् आगतः, तदतीव क्षुद्रम्। अस्मादपि वृहत्तरं विमानं प्रस्तुत्य आनयामि। एवमुक्त्वा प्राणधरो नाम यो वैदेशिकः सूत्रधरः कियन्तं कालं तत्रागतः, तम् अभिमतयन्त्रनिर्माणार्थमादिदेश। आदिष्टेन च तेन तादृशं विमानं प्रस्तुत्य आनीतं दृष्ट्वा नरवाहनदत्तो व्यचिन्तयत् मन्ये अयमेव राज्यधरस्य भ्राता प्राणधरः। एवं विभाव्य तं परिचयमपृच्छत्, स च सर्वं यथातर्कितं युवराजाय न्यवेदयत्। अथ युवराजेन राज्यधरवृत्तान्ते कथिते सूत्रधरः सातिशयं परितुष्टः सत्वरं गत्वा स्वं विमानं गृहीत्वा समानयत्। अथ कर्पूरसेननृपेण यथोचितं विसर्जितः युवराजः प्रियया गोमुखेन तेन च सूत्रधरेण सह तत् विमानमारुह्य सत्वरं समुद्रपारवर्त्तिनं राज्यधरमाससाद। राज्यधरो ज्येष्ठसमागमेन परां प्रीतिमवाप्य तान् यथोचितं संवर्द्धयामास। अनन्तरं युवराजस्तमपि सहगन्तुकामं विमानमारोप्य सानन्दं कौशाम्बीं समाजगाम।

वत्सराजः पुत्रागमनवार्त्तां निशम्य सोत्साहानन्दनिर्भरं देवीभ्यां स्नुषाभ्यां मन्त्रिभिश्च परिवृतः युवराजं प्रत्युद्गन्तुं पुरात् निर्जगाम। नरवाहनदत्तः वध्वा सह विमानादवरुह्य पितरं मातरौ च प्रणम्य विनयनम्रः सर्वान् राजमन्त्रिणः आशिषः प्रयुञ्जानान् यथायथं सम्मानितवान्। ते च सर्वे तं सादरं समालिङ्ग्य हर्षाश्रुजर्जराः समभवन्। रत्नप्रभा मदनमञ्चुका चोभे सपत्नीसहितं पतिं-

मवाप्य भृशं ननन्दतुः । अथ राजपुत्रः सर्वं वृत्तान्तमभिधाय पित्रादिभिरभिनन्दितः यौगन्धरायणादिभिः प्राचीनमन्त्रिभिः सार्द्धं राजभवनं प्राविशत् । अथ युवराजेन समुचितं सत्कृत्य अपरिमितान् अर्थांश्च प्रदाय विसर्जितः प्राणधरः स्वं विमानमारुह्य कर्पूरसम्भवं नगरं प्रत्येत्य राजानं कर्पूरसेनं दुहितृजामात्रादीनां कुशलवार्त्तया सन्तोष्य स्वं भवनमगात् ।

---

## अथ अष्टमो लम्बकः ।

---

## अथ चतुश्चत्वारिंशस्तरङ्गः ।

---

अथ कदाचित् पुत्रेण सह सभासीने राजनि कश्चिद् विद्याधरः अन्तरीक्षाद् भूतलमवतीर्य्य राजान्तिकमुपगम्य तेन च राज्ञा संवर्द्धितः सत्कृतश्च अवादीत् राजन्! हिमालयान्तर्वर्त्तिनि वज्रकूटाख्ये नगरे मम वसतिः, अहं वज्रप्रभो नाम । भगवान् भवानीपतिर्मदीयेन तपसा सन्तुष्टः मामरातिदुर्जयमकार्षीत् । अद्य अहं भगवन्तं प्रणम्य आगच्छन् विद्यया अज्ञासिषं राजकुमारो नरवाहनदत्तः देवस्य उमापतेः परमो भक्तः, तदिच्छया च कामदेवांशेन सम्भूतः तस्यैव भगवतः कृपया उभयस्मिन् लोके राजत्वं करिष्यति । पुरा पृथ्वीपतिः सूर्य्यप्रभः महादेवं प्रसाद्य

विद्याधरसिंहासनस्य दक्षिणार्द्धं तथा श्रुतशर्म्मा नाम राजा उत्तरार्द्धं प्राप्तवान्। साम्प्रतं राजनन्दन: स्वेन पुण्यबलेन सर्व्वचक्रवर्त्ती भविष्यतीति।

एवमुक्त्वा वज्रप्रभे विरते नरवाहनदत्त: सूर्य्यप्रभस्य विद्याधरैश्वर्य्यलाभवार्त्ता कीदृशी इति तमपृच्छत्। सोऽब्रवीत् देव! पुरा मद्रजनपदानां प्रधाननगरे शाकले चन्द्रप्रभो नाम राजा प्रतिवसति स्म। तस्य प्रधाना महिषी कीर्त्तिर्नाम। एकदा गर्भवत्यास्तस्या: पुत्रे प्रसूते इयमाकाशभारती उदतिष्ठत् यथायं शिशुर्महादेवेन स्वहस्तनिर्मित:, अयञ्च सूर्य्यप्रभ इति प्रसिद्ध: विद्याधरचक्रवर्त्ती भविष्यतीति। राजा चन्द्रप्रभ: अनेन देवादेशेन अत्यन्तमानन्दित: महोत्साहं महत्या समृद्ध्या तस्य जातकर्म्मादिकमकरोत्। कुमार: क्रमेण दिने दिने शशीव वर्द्धमान: शैशव एव निखिलानि शास्त्राणि कलाश्च शिक्षितवान्। तदवलोक्य राजा अतीव हर्षित: शैशवातिक्रान्तमेव तं यौवराज्ये ऽभ्यषेचयत्। स च भासप्रभाससिद्धार्थनामभि: त्रिभिर्मन्त्रिपुत्रै: परिवृत: स्वं कार्य्यजातं यथायथं निरवर्त्तयत्।

कदाचिदमुष्मिन् युवराजे पित्रा सह सभासीने मयदानव: सहसा धरातलं विदार्य्य सभां प्रविष्ट: सप्रणाममवादीत् राजन्! भगवान् शूलपाणिर्युवराजं विद्याधरचक्रवर्त्तिनं कर्त्तुं स्वहस्तेन निर्म्माय मर्त्त्यलोकं प्राहिणोत्। इदानीं मामाहूय युवराजं तत्पदप्राप्त्यनुकूलान् विद्यासमूहान् शिक्षयितुं प्रैरिरत्। तन्महाराजेनादिष्ट: युवराजं शिक्षयितुं नेतुमिच्छामि। श्रुतशर्म्मा नाम राजा युव-

राजस्य प्रतिद्वन्द्वी, तमस्माकं साहाय्येन सिद्धविद्यः पराजित्य सिंहासनं लब्धव्यमिति ।

एवमुक्तो राजा चन्द्रप्रभः पुत्रं मयदानवाय सविश्रम्भं प्रादात् । दानवेन्द्रः राजपुत्रं स्वमन्त्रित्रयसहितं पातालं नीत्वा यथापूर्वं सर्वा विद्या अधिगमयत् । अनन्तरं भूतासनं नाम विमानं साधयित्वा युवराजं ससहचरं तेन विमानेन तत्पितरं प्रापय्य अब्रवीत् यावदहं पुनर्नागच्छामि, तावत् त्वं सिद्धविद्याप्रभावेण अशेषं सुखं सम्भुज्य कालं नय । इत्युक्त्वा तस्मिन् प्रस्थिते राजा चन्द्रप्रभः पुत्रस्य विद्यासाधनेन परां प्रीतिमन्वभवत् ।

अथ युवराजः सूर्य्यप्रभः सिद्धविद्याप्रभावेण विमानमारुह्य समन्त्रिवर्गः नानादेशान् परिभ्रमितुं प्रावर्त्तत । स खलु क्रमेण ताम्रलिप्तनगराधिराजस्य वीर्य्यभटस्य दुहितरं मदनसेनां, काञ्चीराजस्य कुम्भीरस्य तनयां चन्द्रिकावतीं, लावणकराजस्य पौरवस्य कन्यां वरुणसेनां, चीनाधिपतेः सुतां सुलोचनां, श्रीकण्ठराजस्य कान्तिसेनस्य पुत्रीं विद्युन्मालां, कौशाम्बीपतेरपराक्तस्य कुमारीं चन्द्रावतीं, तथा जनमेजयस्य राज्ञः कन्यकां परपुष्टां अपहृत्य ताभिः सह कदाचिद् व्योमयानेन वा कदाचित् उद्यानविहारेण कालं नयन् सुखमुवास ।

एकदासौ ताम्रलिप्तनगरोद्याने ताः सर्वा राजकन्यकाः संरक्ष्य मन्त्रिभिः सह विमानमारुह्य वज्रराज्ञं नाम नगरं जगाम । तत्र च तारावलीं नाम राजकन्यां तत्पितुः रक्षकस्य समक्षमपहरन् सत्वरं पुनस्ताम्रलिप्तं नगरं समास-

दत्। ततो विलासिनीं नाम राजकन्यामपहृत्य पित्रोः सकाशं गमिष्यन् सर्वाभिः पत्नीभिः सह शाकलनगरं प्रतस्थे।

अथ तस्मिन् युवराजि पित्रोः सकाशं प्राप्ते तासां राजकन्यानां पितरः नरपतेश्चन्द्रप्रभस्य सकाशं विधिवत् कन्यादानप्रस्तावं कर्त्तुं दूतान् प्रेरिरन्। राजा सन्तुष्टः तेषां प्रार्थनामनुमान्य सर्वत्र च गत्वा पुत्रोद्वाहविधिं यथाशास्त्रं निर्वर्त्तयाम। सर्वे एव राजानः कन्याभिः सह विविधानर्थान् यौतकीकृत्य राजानं बहुशः सत्कृत्य च प्राहिण्वन्। ताश्च सर्वाः कन्यकाः सदृशं पतिमवाप्य परां प्रीतिमनुभवन्त्यः सुखेन कालमनयन्।

: ——

## पञ्चचत्वारिंशत्तरङ्गः।



एकदा राजा चन्द्रप्रभः पुत्रेण सूर्य्यप्रभेण सह मन्त्रिभिः परिवृतो मयदानवं सस्मार। स्मरणमात्रेण सहसा सभामध्यभागे विदीर्णे सुगन्धवायुना सह मयदानवमुपस्थितं दृष्ट्वा तं सिंहासनमध्यवासयत्। स तु सत्कृतः समुपविष्टः प्राब्रवीत् युवराज! साम्प्रतं पार्थिवं सर्वं सुखमुपभुक्तं भवता, अतः परमन्यविधं सुखमन्वेषणीयम्। तद् भवानयतः दूतैः सर्वान् सम्बन्धिनो नृपतीनाह्वयतु, तदनन्तरं विद्याधरपतिना सुमेरुणा सह सख्यं कृत्वा तेन सहायेन श्रुतशर्म्माणं जयन् खेचरराज्याधीश्वरो भविष्यति। अतः

सुमेरुः देवदेवादेशेन युवराजाय कन्यां दत्वा साहाय्यं विधास्यति। चन्द्रप्रभो मयदानववचसा सर्वान् नृपतीन् समाह्वातुं प्रहस्तादीन् खेचरान् समन्ततः प्रेषयामास।

अथ एकस्मिन् दिवसे देवर्षिर्नारदः समागत्य अर्घ्यं गृहीत्वा समुपविष्टः प्रोवाच राजन्! देवराजः मां भवदन्तिकं प्रेष्य कथितवान् यूयं महादेवादेशेन मयसहाया यत् मर्त्यवासिनं सूर्यप्रभं विद्याधरपदे प्रतिष्ठापयितुं कृतसङ्कल्पाः स्थ, तत् सर्वथा असाम्प्रतम्। यतः पदमिदम् अस्माभिः पूर्वं श्रुतशर्मणे प्रदत्तं, तच्च तस्य कुलक्रमागतत्वेन निर्द्धारितम्। तदस्माकं प्रातिकूल्येन यद् यूयं चेष्टध्वे, तत् युष्माकमेव आत्मविनाशहेतुः। त्वञ्च रुद्रयज्ञं कर्तुमुद्यत इति श्रुत्वा त्वामश्वमेधं कर्त्तुं समादिशं तदपि त्वया न कृतम्। इत्थं सर्वान् देवानपहाय एकमात्रे शम्भौ समाराधिते युष्माकं मङ्गलं दूरापेतमवधार्य्यताम्।

एतद् देवर्षेर्वचनमाकर्ण्य मयः सस्मितमवादीत् देवर्षे! भवतः प्रमुखात् महेन्द्रेण यदुक्तं तत् सर्वथा अयुक्तम्। प्रथमतः अस्माकं युवराजं मर्त्त्यवासीति कृत्वा यद् नागणयत् तत् देवराजस्य अनुचितम्। युवराजोऽयं यत् सर्वशक्तिमान्, तत् किं दामोदरसंग्रामे न प्रत्यक्षीकृतं देवेन्द्रेण। यश्च मर्त्यः सर्वां शक्तिमापद्यते स किं सर्वसिद्धेरधीश्वरो न भवितुमर्हति। पूर्वं राजा नहुषः मर्त्यवासी अपि किं देवराज्यं नाकरोत्। तेनोक्तं तैः श्रुतशर्मणे विद्याधरपदं प्रदत्तमिति तस्य तत् कुलक्रमागतमिति तदपि न श्रद्धेयम्। अत्र महेश्वरः स्वयं दाता, तत्र अन्येषां का शक्तिः?

हिरण्याक्षस्य ज्येष्ठं हिरण्यकशिपुं यतस्त्वं कथं द्वतं तत् किं तस्य कुलक्रमागतं नासीत्? वयं देवानां प्राति-कूल्येन अधर्ममाचराम इत्यपि नैव वक्तुमुचितम्। वयं तावत् न मुनिपत्नीं हराम:, नापि ब्रह्महत्यां कुर्म्म:। वयं केवलं शत्रून् जेतुं चेष्टामहे, अत्र तावत् कोऽस्त्वधर्म:? वयमश्वमेधमकृत्वा रुद्रयागं कुर्म्म:, यतोऽस्माभिर्ज्ञातं रुद्र एव सर्वदेवमय:, तस्यार्च्चनयैव सर्वे देवा अर्च्चिता: परि-तुष्यन्ति, तत् कथमुक्तं देवान् प्रति वयमवज्ञां कुर्म्म इति। देवराजेन शिवाराधनया अमङ्गलभयं प्रदर्शितम् एतत् किं विज्ञस्य तस्य वक्तुमुचितम्। देवराजस्य कथामिमाकर्ण्य वयं नितान्तं दु:खिता: स्म:। सूर्य्ये अभ्युदिते किमपरै-स्तेजोभि:। महर्षे! भवान् एतत् सर्वं भवता देवराजाय गत्वा वक्तव्यम्। अस्माभिस्तावत् कर्म्मारब्धं, साम्प्रतं देव-राजाय यद् रोचते तत् क्रियतामिति।

एतदाकर्ण्य देवर्षौ प्रस्थिते चन्द्रप्रभो नृप: भयमाययौ। मयदानवोऽब्रवीत् महाराज! सर्वे दानवा भवतां सहाया:, भगवान् भवानीपतिरपि भवताम् अनुकूल:, तत् कस्मा-दपि भयं मा कृथा:, वीरा: यूयं मद्वाक्यानुसारिण: नि:शङ्कं कार्य्यमारभध्वम्। सर्वे मयवाक्यं बहु समादृत्य सन्तोष-मवापु:।

अत्रान्तरे दूतमुखादवगतवृत्तान्ता: सर्वे महीपतय: ससज्जाश्चन्द्रप्रभं समासदन्। चन्द्रप्रभे समागतान् नृपतीन् यथायोग्यं समादृत्य दत्तासने दानवराजो मय: सर्वसमक्षं पुनरवदत् राजन्! अद्य रजन्यां रुद्रमुद्दिश्य महाबलि:

प्रदातव्यः। ततोऽहं यद् यद् वच्यामि तत् तत् असङ्कुचितं कर्त्तव्यम्। ततो राजा मयोपदेशेन रुद्रबलियोग्यानि नानाद्रव्याणि समाहृत्य महारण्यं गत्वा च रुद्रमुद्दिश्य बलीन् प्रददौ, चकार च यथाविधानं होमान्। तत्र च तदा नन्दी प्रमथगणवृतः राजसमचमाविर्बभूव। स च राज्ञा सम्पूजितः प्रहृष्टः प्रोवाच राजन्! भगवान् भूतपति-र्भवते सन्दिष्टवान् यूयं मत्प्रसादात् शतात् शक्रेभ्योऽपि मा विभीत, युवराजः सूर्य्यप्रभः सत्वरमेव विद्याधरचक्र-वर्त्ती भविष्यतीति। एवमुक्त्वा तस्मिन् तिरोहिते राजा पुत्रस्य अभ्युन्नतौ स्थिरनिश्चयो भूत्वा कार्य्यं समाप्य च मयेन सह स्वं नगरं प्रत्यागमत्।

अथापरेद्युः प्रातः सर्वेषु राजसु सभासीनेषु दानवपति-र्मयः समब्रवीत् महाराज! रहस्यमाकर्ण्यतां भवान् सुनीथो नाम मत्पुत्रः, सूर्य्यप्रभः सुमण्डीकनामा भवदनुजः एतावुभौ देवासुरे संग्रामे निहतौ अत्र पितापुत्रभावेन समुत्पन्नौ। भवतस्तत् दानवशरीरं दिव्यौषधिभिर्घृतैश्च अनुलिप्य पाताले मया रक्षितम्। स भवान् मया सह पातालं गच्छतु, प्रविशतु च मदुपदिष्टेन मार्गेण तत् शरी-रम्। एवं कृते महातेजस्वी बलशाली च भूत्वा देवान् पराजेष्यते। सुमण्डीकावतारः सूर्य्यप्रभस्तु अनेनैव शरीरेण खेचरेश्वरत्वमाप्स्यतीति।

दानवराजस्य कथामिमां श्रुत्वा सुचतुरो मन्त्रिवरः सशङ्कः प्रोवाच दानवेन्द्र! अस्माकं प्रभुरन्यदेहं प्रविश्य किं पश्चतामाप्स्यति? मृत इवास्मान् विस्मरिष्यति च?

मय: प्रावदत् ! मन्त्रिन् युष्मत्प्रभुरेष: योगबलेन देहान्तरं प्रविश्य युष्मान् न विस्मरिष्यति, न च पञ्चतामाप्स्यति। अत्र तावदयं हेतु:, य: अस्वाधीनतया देहं विसृज्य अन्यगर्भे जायते, तस्य मरणादिक्लेशेन किमपि न स्मृतिपथमायाति। यश्च योगेन, विना क्लेशं देहान्तरं विशति, तस्य सर्वमेव स्मृतौ तिष्ठति। तदलमुद्वेगेन, युष्माकं राजा जराव्याधिशून्यं दिव्यशरीरमाप्स्यति। यूयञ्च सर्वे अनेन सह रसातलं गत्वा सुरापानेन नीरोगा: दिव्यदेहाश्च भवत इति वचनमाकर्ण्य सर्वे नि:संशया: संवृत्ता:।

परस्मिन्नहनि राजा चन्द्रप्रभ: सपरिजन: सवर्ग: नगरात् निर्गम्य चन्द्रभागैरावत्योर्नद्यो: सङ्गमे उपस्थाय तत्र सर्वान् नृपतीन् सूर्य्यप्रभस्य सर्वान् परिजनांश्च संरक्ष्य मयदर्शितेन विवरेण पातालमविशत्। सूर्य्यप्रभ: राजमहिष्य: सिद्धार्थादयो मन्त्रिणश्च तमनुजग्मु:।

अत्रान्तरे नभोमण्डलात् सहसा विद्याधरबलानि आविर्भूय मायया तान् नृपतीन् स्तम्भयित्वा सूर्य्यप्रभस्य सर्वा महिषीरपाहरन्। अपहृतमात्रमेव दिव्यवाणी उदतिष्ठत् रे पापीयन् श्रुतशर्म्मन्! यदि त्वं सूर्य्यप्रभस्य भार्य्या: स्पृशे:, तदा ससैन्यस्तत्क्षणं निधनमाप्स्यसि, एताश्च मातृवत् सगौरवं रक्ष, अहमधुनैव त्वां विनाश्य एता नोद्धृतवानस्मि, तस्यास्ति किञ्चित्कारणम्। एवमुक्त्वा राजान: ! यूयं क्षमध्वम्, एतासां योषितां नास्ति विनाश:। पुनरपि यूयं स्वां स्वां कन्यामवाप्स्यथ, अत्रैवेदानीं सुस्थिरास्तिष्ठत। एवमुक्त्वा दैववाण्यां विरतायां ते खेचरा भयात् तिरो-

स्थिताः। राजानश्च तस्मिन् देववचसि कृतविश्वासास्तथै-वावतस्थिरे।

अत्रान्तरे योगीश्वरो दानवेन्द्रः पातालमध्यवर्त्तिनि देवमन्दिरे स्थितं राजानं चन्द्रप्रभं देहान्तरप्रवेशाय योग-मुपदिश्य तस्मात् द्वितीयं रसातलं निनाय। राजा सवर्ग-स्तत्र प्रविश्य अपश्यत् सर्व एव तत्र निद्रागताः, एकस्मिंश्च शयने महाकायो भीषणमूर्त्तिः कश्चित् पुरुषः शेते। कति-पया दैत्यकन्यास्तं समन्तात् परितिष्ठन्ति। दैत्यराजो मयः अङ्गुलिसंज्ञया प्रोवाच राजन्! अयं स ते पूर्वदेहः, स्त्रीभिः परिवेष्टितस्तिष्ठति। तद् भवान् मदुपदिष्टेन योगेन अत्र प्रविशतु। राजापि तत्क्षणं वर्त्तमानशरीरं परित्यज्य योगेन पूर्वतनं दानवदेहं प्रविष्टः चन्द्रप्रभसुनीथ इति नाम दधार। प्रविष्टे च राजनि तत् कलेवरं जृम्भां परित्यज्य चक्षुषी उन्मील्य च समुत्तस्थौ। तदवलोक्य अद्य सुप्रभात-मस्माकं, देवः सुनीथः पुनर्जीवित इत्येवमानन्दकोलाहलै-रसुरवधूनां मुखकमलानि प्रापूर्य्यन्त। सूर्य्यप्रभादयस्तु नृपतेर्जीवशून्यं कलेवरं दृष्ट्वा परं विषादमवापुः।

अथ चन्द्रप्रभसुनीथं पितुर्दानवराजस्य चरणयोर्निप-तितं दृष्ट्वा दानवराजः पुत्रमालिङ्ग्य सर्वसमक्षमब्रवीत् पुत्र! तव जन्मद्वयं स्मृतिपथमायातम्? सुनीथः वाढ़मित्युक्त्वा उभ-योरेव जन्मनोर्वृत्तान्तमाचख्यौ। ततश्च दानवेन्द्रो मयश्चन्द्र-प्रभस्य तत् कलेवरं कदाचित् कार्य्यं करिष्यतीति विविच्य सयत्नमरक्षत्। अनन्तरं सर्वान् तृतीयं तलातलं नीत्वा एकां वापीं सुरासलिलामदर्शयत्। सर्वेषु तस्यास्तीरमुप-

विष्टेषु सुनीथमहिला सर्वेभ्य एव तेभ्यः पत्रपुटेन सुरा-मानीय प्रादात्। अथ सर्वे सूर्य्यप्रभादयः अमृतरसां तां सुरां पीत्वा मत्ताः सुप्तोत्थिता इव दिव्यं कलेवरं प्राप्य महाबलपराक्रान्ता अभवन्।

तदनन्तरं चन्द्रप्रभसुनीथश्चतुर्थम् अतलं प्रविश्य तत्र सर्वसम्पत्तिशालिनि निकेतने स्थितां जननीं लीलावतीं ददर्श। निपपात च तस्याश्चरणयोः। सा च पुत्रं चिरागतं दृष्ट्वा ससम्भ्रममासनात् उत्थाय समालिङ्ग्य तस्य शिरश्चुम्ब-नादिकं कृत्वा सानन्दं पत्युर्भूयसीं प्रशंसामकरोत्। अथ दानवराजः सूर्य्यप्रभं प्रति अङ्गुलिं निर्दिश्य अब्रवीत् देवि! सोऽयं ते द्वितीयः पुत्रः सुमुण्डीकः, इदानीं चन्द्रप्रभस्य पुत्रः सूर्य्यप्रभ इति प्रसिद्धिं गतः। भगवान् भवानीपति-रेनं विद्याधरचक्रवर्त्तिनं कर्तुं स्वहस्तेन सृष्ट्वा भूतलं प्राहि-णोत्, अयं हि मर्त्यशरीर एव तत्पदमवाप्स्यतीति।

एतत् श्रुत्वा सूर्य्यप्रभं सस्नेहं पश्यन्तीं लीलावतीं दृष्ट्वा सूर्य्यप्रभः सचिववृन्दैः सार्द्धं मातरं चरणयोर्ववन्दे। लीला-वती साशीर्वादमब्रवीत् वत्स! तवेदमेव शरीरमपूर्वां शोभां दधार, तदलं पूर्वशरीरेण। अथ दानवेन्द्रः कन्यां मन्दोदरीं विभीषणञ्चास्मरत्। तौ च स्मृतावेव तत्क्षण-मागत्य समुचितं सत्कारमवाप्य प्रोचतुः तात! वयं कमपि प्रति बलं प्रयोक्तुं नेच्छामः, तत् यदि देवराजः अस्मान् प्रति बलं प्रयुञ्ज्यात् तत् कथं वयं सहिष्यामहे। ये चासुरा देवैर्निहताः, तेषामनवधानता एव दोषः कारणम्। बलिप्रभृतीन् असुरान् सततमवहितान् देवा अपि न

विनाशयितुं शक्ताः, तदिदानीं गच्छाम इत्युक्त्वा तौ प्रस्थितौ। ततश्च दानवराजः बलिं दानवेन्द्रं साक्षात् कर्त्तुं सुनीथेन सूर्य्यप्रभादिभिश्च सह तृतीयं पातालं प्रविश्य तं दैत्यपतिं प्रणनाम। बलिना यथायथं सत्कृतेषु तेषु समासीनेषु बलिर्मयप्रमुखात् सर्वं वृत्तान्तं श्रुत्वा सानन्दं पितामहं प्रह्लादं चरणयोः निपत्य अवादीत् तात! सुनीथोऽयं स्वं शरीरं प्राप्य पुनर्जीवितः, सूर्य्यप्रभोऽयं मृतस्य सुमुण्डीकस्यावतारः। भगवान् भूतपतिरस्मै सुप्रसन्नः विद्याधरसाम्राज्यं दातुमादिष्टवान्। अहञ्च देवदेवस्य तस्य यज्ञप्रभावेण शिथिलबन्धनः संवृत्तोऽस्मि। तत् सुनीथसुमुण्डीकयोः पुनःप्राप्तिरस्माकं भाविने मङ्गलायैव। तदानीं तत्र स्थितः दैत्यगुरुः शुक्रोऽब्रवीत् धर्म्ये पथि वर्त्तमानानां कदापि नामङ्गलं, तन्मदीयं वाक्यमाकर्ण्य धर्म्मं चरतेति।

तच्च गुरुवाक्यं सर्वे सप्तपातालवासिनः असुरा अनुमुमुदिरे। राजा बलिश्च सुनीथप्राप्तिहर्षितः महोत्सवं व्यधात्।

ततः सुरपुरात् देवर्षिः बलेः सभामुपगतोऽर्घ्यं गृहीत्वा कृतासनपरिग्रहः सर्वानब्रवीत् दानवाः! देवपतिः पुनरपि मन्मुखेन युष्मान् इदमाह, अहं युष्माकं सुनीथस्य पुनर्जीवनं श्रुत्वा परमाप्यायितोऽस्मि, तदधुना अस्माभिः सह अकारणं वैरं मा कुरुत, मा विरुन्ध च अस्माकं पक्षेण श्रुतशर्म्मणा सह।

प्रह्लादः प्राब्रवीत् सुनीथस्य जीवनप्राप्त्या देवराजस्य परितोष इति लक्षितमस्माभिः, अद्य अस्माभिः गुरोः

सकाशे प्रतिज्ञातं कदाप्यधर्म्मं नाचरिष्याम इति। धर्म्मे पथि स्थिता एव सर्वं साधयिष्यामः, परन्तु देवपतिः श्रुतशर्म्मसहायोऽस्मान् प्रति यत् विरुद्धमाचरितुं प्रवृत्तः, तदतीव आश्चर्य्यमनुचितञ्च। भगवान् चन्द्रमौलिः सूर्य्यप्रभस्य सहायः। स खलु एनं प्रति प्रसन्नः अस्मै विद्याधरचक्रवर्त्तित्वं प्रदातुमादिदेश। तस्मात् देवदेवादिष्टे कर्म्मणि नास्माकं दोषावकाशः। तत्कथं देवपतिरस्मान् अकारणवैरिणः कथयति एतदस्माकमतीव दुःखाकारम्। नारदे दानवेन्द्रमुखादेतदाकर्ण्य इन्द्रं विनिन्द्य तिरोहिते शुक्रः प्राब्रवीत् कार्य्येऽस्मिन् इन्द्रस्यैव वैरानुबन्धो दृश्यते, यदा देवादिदेवोऽस्माकं पक्षो वर्त्तते, तदा देवेन्द्रस्य किं साध्यम् अस्माकमपक्रियायाम्? यच्च इन्द्रं प्रति उपेन्द्रस्य यत्नातिशयोऽस्ति, तेनैव वा युष्माकं का भीतिः? यूयं निर्भयं तिष्ठतेति। एतदाकर्ण्य सर्वे दैत्याः स्वं स्वं भवनं प्रतस्थिरे, बलिश्च सभागृहात् अन्तःपुरमासदत्।

अथ सुनीथे मातुःसमीपमेत्य कृताहारादिव्यापारे सा कुबेरदुहितरं तेजस्वतीं, तुम्बुरोः कन्यां मङ्गलावतीं, प्रभासस्य सुतां कीर्त्तिमतीञ्च प्रधानास्तिस्रो महिषीस्तस्य हस्ते समर्पयामास। ततः सुनीथे प्रथमं ज्येष्ठां भार्य्यामादाय शयनगृहं प्रविष्टे सूर्य्यप्रभादयः सर्वे स्वैः स्वैः परिजनैः सह गृहान्तराणि अविशन्। अथ सर्वेषु निद्रितेषु सूर्य्यप्रभो निर्निद्र एव तिष्ठन् कामपि महिलां सख्या सह तत्र प्रविष्टामद्राक्षीत्। दृष्ट्वैव व्यचिन्तयत् अहो रूपमाधुर्य्यम्! मन्ये स्वर्गे अस्यां स्थितायाम् अप्सरसामवमानः स्यादिति-

विधाता इमां पातालं नीत्वा अरचत्। सा तु क्रमेण सर्वान् सुप्तान् अवलोक्य पश्चात् चक्रवर्त्तिलक्षणोपेतं सूर्य्य-प्रभं समेत्य समभाषत सखि ! त्वमिमं पादयोः स्पृष्ट्वा प्रबो-धय इति। सखी च तथाकरोत्।

सूर्य्यप्रभस्तु व्याजनिद्रानिमीलिताक्षः क्रमेण चक्षुषी उन्मील्य अवादीत् का यूयम् ? किमर्थं वा अत्रागताः ? एतदाकर्ण्य सखी प्रत्यवादीत् भद्र ! हिरण्याक्षस्य यः अमीलनामा पुत्रः, तस्य इयं प्राणसमा दुहिता कलावती नाम। अद्य सोऽमीलः बलेरन्तिकात् गृहं गत्वा सुनीथस्य पुनर्जीवनं तदनन्तरं शम्भोः प्रदानेन सुमुण्डीकावतारस्य सूर्य्यप्रभस्य विद्याधरैश्वर्य्यस्य भवितव्यतां परिजनेभ्यः कथ-यित्वा सूर्य्यप्रभाय स्वां दुहितरं कलावतीमभिप्रायमका-र्षीत्। तदाकर्ण्य सेयं कलावती भवन्तं द्रष्टुमागतेति।

सूर्य्यप्रभः कथामिमामाकर्ण्य तस्याः आशयं जिज्ञासुः. पुनः कपटनिद्रामभजत। परं सा विनिद्रं प्रहस्तमुपेत्य सख्या स्वमभिप्रायं प्रकटय्य वहिरगात्।

अथ प्रहस्तः सूर्य्यप्रभं समेत्य प्रावोचत् देव ! जागर्षि ? सूर्य्यप्रभः सहसा नेत्रे समुन्मील्य वाढ़ं जागर्मि, अद्य अल्पमपि निद्रां न लभे। अपरं संवादमेकं कथयामि शृणु। साम्प्रतमेव काचित् परमसुन्दरी कन्यका सख्या सह गृहं प्रविश्य दर्शनं दत्त्वैव प्रस्थिता। तदनुसन्धेहि, सा कुत्र गतेति। प्रहस्तः श्रुत्वैव वहिरागत्य अपश्यत् सा कन्या सख्या सह दण्डायमाना तिष्ठति। तदवलोक्य स समीप-मेत्य तामब्रवीत् दानवकन्ये ! भवत्या अनुरोधात् प्रभुं

प्रबोधितवानस्मि, तद् भवती मदनुरोधेन पुनस्तं साक्षात्-कृत्य दर्शनेन्द्रियं सफलयतु। एवमुक्त्वा कलावतीं पुनः सूर्य्य-प्रभसकाशमनैषीत्। स च तां दृष्ट्वा प्राब्रवीत् चण्डि! निद्रि-तस्य हृदयं प्रविश्य हर्तुं युक्तं भवत्याः? तदिदानीं गान्ध-र्वेण विधिना आवयोः समागमो भवतु। एवमभिधाय तत्-क्षणं तेनैव विधानेन तस्याः पाणिमग्रहीत्।

प्रत्यूष एव सूर्य्यप्रभादयः सर्वे मिलित्वा प्रह्लादमुप-जग्मुः। प्रह्लादः समाहूय मयमब्रवीत् अद्य सुनीथस्य पुन-र्जीवनमहोत्सवे सर्वैरेव असुरैः समवेतैः सानन्दं भोक्तव्य-मिति सर्वान् दूतैर्निमन्त्रयस्व। मयस्तथेति दूतैः सर्वान् निमन्त्रयामास। अथ सर्वे निमन्त्रिताः समागत्य क्षणं विश्रम्य मयेन सह भोगवतीमवगाह्य चतुर्विधानि आहार-द्रव्याणि सानन्दमुपयुज्य च दानवकन्यानां नृत्यं द्रष्टुमुपा-विशन्। सूर्य्यप्रभः प्रह्लादकन्यां महल्लिकां दृष्ट्वा अनङ्ग-शरपीड़ितः मोहमापेदिवान्। ततश्च अमीलः कलावतीं प्रह्लादश्च महल्लिकां तस्मै सूर्य्यप्रभाय सानन्दं प्रायच्छत्। अथ स सूर्य्यप्रभः कुमुदावतीं मनोवतीं सुभद्रां सुन्दरीं सुमायाश्च असुरकन्यकाः परिणीतवान्।

कदाचित् सूर्य्यप्रभः कथाप्रसङ्गेन महल्लिकामपृच्छत् प्रिये! तस्यां रजन्यां ये द्वे सख्यौ त्वया सहागते, ते कुत्र गते? न दृश्यते किमिति।

महल्लिकावदत् नाथ! मम द्वादश सख्यः। पितृव्यो मम सर्वास्ताः स्वर्गात् अपहृत्य आनीतवान्। तासाम् अमृतप्रभा केशिनी च पर्वतस्य मुनेः कन्यके। कालिन्दी,

भद्रा, कनकमाला च एतास्तिस्रः महामुनेर्देवलस्य कन्यकाः। सौदामिनी उज्ज्वला च द्वे हाहाख्यस्य गन्धर्वस्य कुमार्य्यौ। हुहुनाम्नः गन्धर्वस्य कन्या पीवरा, काणस्य तनया खञ्जनिका च। केशरावली पिङ्गलाख्यस्य प्रमथस्य सुता। मालिनी कम्बलस्य दुहिता, वसोः कन्या मन्दारमाला। एताः सर्वा एव अप्सरःसम्भूता दिव्ययोषितः। तद् भवान् एतासामपि पाणीन् गृह्णातु एवमभिधाय सूर्य्यप्रभं प्रथमं पातालमनयत्। पर्य्यनाययच्च एकैकशः सर्वास्ताः स्वयम्। सूर्य्यप्रभस्तां रात्रिं ताभिरमृतप्रभादिभिः सह सुखेन नीत्वा परेऽहनि प्रातः प्रह्लादसभामाजगाम।

अथ दानवेन्द्रः प्रह्लादः मयसुनीथौ प्रोवाच यूयमतः परं दितिं दनुञ्च साक्षात् कुरुत। एवं दानवेन्द्रादेशं लब्ध्वा मयसुनीथौ भूतासनं नाम विमानं स्मृत्वा स्मृतमात्रोपस्थितञ्च तदारुह्य सपरिजनौ मलयाचलवर्त्तिनं कश्यपाश्रममासेदतुः। अथ मुनिभिर्दर्शितेन पथा तमाश्रमं गत्वा दैत्यदानवजननीं दितिं दनुञ्च चरणयोर्निपेततुः। ते च असुरमातरौ वंशधरान् तान् समागतान् अवलोक्य हर्षाश्रुनिर्भरं समाश्लिष्य आशिषा संवर्द्धयामासतुः। अथ ते मयमूचतुः वत्स! तव पुत्रं सुनीथं पुनर्जीवितं दृष्ट्वा परमाप्यायिते स्वः। त्वाञ्च अतिपुण्यवन्तं मन्यावहे। सुमुण्डीकश्च यत् सूर्य्यप्रभो भूत्वा भूतले अजनिष्ट, तदपि आकर्ण्य परां प्रीतिमनुभवावः। तद्वत्स! सत्वरं गत्वा प्रजापतिं कश्यपमभिनन्दयतं, कुरुतञ्च तदादेशवशवर्त्तिनौ कार्य्याणि, युष्माकं मङ्गलं भवत्विति।

इत्थं मातुरनुज्ञया ते सर्वे दिव्यमाश्रमं गत्वा गुरोः कश्यपस्य चरणौ ववन्दिरे। भगवान् कश्यपस्तान् आशिषा अभिनन्द्य उपवेष्टुमादिशत्। अवदच्च सहर्षम् अद्य सर्वान् सुतान् समवेतान् दृष्ट्वा परां प्रीतिमापन्नोऽस्मि। मय! त्वं सदाचरिते पथि तिष्ठन् अत्यन्तं प्रशंसनीयोऽसि, सुनीथ! त्वं पुनर्जीवितः परं सौभाग्यं प्रपन्नः। सूर्य्यप्रभः! त्वं स्वेन पुण्यबलेन विद्याधराधीश्वरो भवितासि। तत् साम्प्रतं सर्वे यूयं धर्म्ममास्थाय मदादेशेन परां प्रीतिं प्राप्नुत। अधुना युष्माकं पूर्ववत् पराभवो माऽस्तु। पूर्वं धर्म्मातिक्रमेण देवैः पराभूताः स्थ। सुनीथ! पुरा ये असुरा देवैर्निहताः, ते सर्व एव मर्त्यलोके समजायन्त। सुमुण्डीकः सूर्य्यप्रभोऽभूत्, अन्ये च बहवोऽस्य बान्धवरूपेण सञ्जाताः। सूर्य्यप्रभस्य मन्त्री प्रहस्तः शम्बरावतारः। त्रिशिराः सिद्धार्थ इति वातापिः प्रज्ञाढ्य इति, उलूकः शुभङ्कर इति, वीतभीतिः काण इति प्रसिद्धिं गता एते अस्य वयस्यतामापन्नाः। यौ च भासप्रभासौ मन्त्रिणौ, तौ वृषपर्वप्रवलनामकदैत्यावतारौ। मदनो भयङ्करश्च उभौ सुन्दोपसुन्दावास्ताम्। स्थिरबुद्धिमहाबुद्धिनामानौ सचिवौ हयग्रीवविकटाक्षावतारौ। अन्ये च ये दैत्यदानवाः पूर्वं देवैः पराजिता ते च क्रमेण वृद्धिं गता युष्मानेव आश्रयिष्यन्ते। यूयं सहिष्णवो भवत, सत्वरं वृद्धिं लप्स्यध्वे। कदाचिदपि अधर्म्मं मा कुरुत।

एवमुपदिशति देवासुरगुरौ दाक्षायण्यः अदितिप्रभृतयस्तत्पत्न्यस्तत्र समाजग्मुः। देवराजोऽपि सपत्नीकः पितर-

म ोा। दर्यितुं तत्राजगाम। अथ मयादिषु असुरेषु प्रणतेषु देवपतिः सरोषं सूर्य्यप्रभं प्रति दृष्टिं निक्षिप्य मयदानव-मब्रवीत् मया विज्ञायते बालकोऽयं विद्याधरचक्रवर्त्ती भवितुमभिवाञ्छति। किमनया अल्पया अभ्यर्थनया, इन्द्रत्वं प्रार्थयितुं युक्तमासीत्। मयोऽब्रवीत् देवेन्द्र! भगवान् जगदीश्वरो भवते यथा इन्द्रत्वमदात् तथा प्रसन्नः अस्मै खेचरत्वं दातुमङ्गीचकार। एतदाकर्ण्य देवेन्द्रः सकोप-परिहासमब्रवीत् मय! अयं यथा शुभलक्षणैः सम्पन्नः, तथाऽस्य विद्याधराधीशत्वं लघ्वी मात्रा। मयः प्रत्यवादीत् यदि श्रुतशर्म्मा विद्याधरराज्यमर्हति, तदा अस्माकं सूर्य्य-प्रभोऽपि इन्द्रत्वं प्राप्तुमर्हति। एतदाकर्ण्य महेन्द्रः क्रोध-रक्तेक्षणः सहसा वज्रपाणिरुदतिष्ठत्। तदवलोक्य भगवान् कश्यपः सरोषहुङ्कारमकरोत्। दितिप्रभृतयश्च कश्यपपत्न्यः कुपिता देवराजं धिगिति निरभर्त्सयन्। तद् दृष्ट्वा देवेन्द्रः सभयं वज्रं संहरन् अवनतमुखः समुपविश्य पितरं मातृंश्च चरणयोर्निपत्य कृताञ्जलिरवादीत् पितः! मयसहायेन अजेयसूर्य्यप्रभेण श्रुतशर्म्मणे अस्माभिर्दत्तं विद्याधरराज्य-मपहर्त्तुं युज्यते? कश्यपस्तदाकर्ण्य प्रत्यवोचत् इन्द्र! यथा श्रुतशर्म्मा तव प्रियः, तथा सूर्य्यप्रभोऽपि शम्भुप्रियः। यथा देवदेवो मयदानवं सूर्य्यप्रभार्थं नियुक्तवान्, तदाऽस्य को दोषः? अयं शिवाज्ञां लङ्घयितुं नालं, तस्य च देवस्य इच्छा न हि व्यर्थतामापत्स्यते। अयञ्च मयः धार्मिकः ज्ञान-वान् गुरुभक्तश्च। तस्य पराक्रमं त्वमनेकशो विदितवान्।

तद् यदि त्वम् एतान् प्रति विरुद्धमाचरेः, तदा वयं कोपात् त्वां तत्क्षणमेव भस्मीकरिष्याम इति।

इत्थमाकर्ण्य देवेन्द्रे सलज्जभयमधोमुखे तिष्ठति अदितिः श्रुतशर्म्माणमानयितुमादिदेश। इन्द्रः सारथिं मातलिं श्रुतशर्म्माणमानेतुं तत्क्षणं प्राहिणोत्। श्रुतशर्म्मा च मातलिनावेदितवृत्तान्तः सत्वरमुपगम्य सर्वान् तान् ताश्च प्रणम्य समुपाविशत्। कश्यपपत्न्यः उभौ प्रति दृष्टिं निक्षिप्य कश्यपमपृच्छन् नाथ! कोऽनयोः श्रुतशर्म्मसूर्य्यप्रभयोः समधिकेन रूपेण शुभेन च लक्षणेन विराजते? कश्यपः प्रत्यभाषत देव्यः! सूर्य्यप्रभ एव रूपेण लक्षणेन च श्रुतशर्म्मणः श्रेयान्, यथा चायं सौभाग्यचिह्नैरुपेतो दृश्यते, तथास्य इन्द्रत्वमपि सुलभं मन्ये। इन्द्रादन्ये सर्वे एव एतद्वचनमनुमुमुदिरे। अथ भगवान् कश्यपः सर्वेषु शृण्वत्सु मयमब्रवीत् वत्स! इन्द्रे वज्रमुद्यच्छति त्वं यत् निर्विकारमासीः, तेनाहं तुष्टः वरं ददामि यथा वज्रमयेण अस्त्रेण कदापि तव शरीरं न क्षयं गमिष्यति। सुनीथः सूर्य्यप्रभश्च शत्रूणामजेयौ भविष्यतः। मत्पुत्रः सुवासकुमारः स्मृत एव युष्माकं साहाय्यं करिष्यति च।

एवमभिधाय तस्मिन् महामुनौ विरते तत्पुत्राः अन्ये ऋषयः लोकपालाश्च सर्वे तान् मयादीन् वरप्रदानेन अभ्यनन्दन्। अथ देवमाता इन्द्रमब्रवीत् वत्स! शान्तो भव, इमञ्च मयदानवं प्रसादय। अद्य त्वया स्वेनैव चक्षुषा विनयस्य फलं दृष्टं, विनयबलेनैव मयः सर्वश्रेष्ठतासम्पादकं वरं प्राप्तवान्। इत्थं मातुर्वचः समाकर्ण्य देवेन्द्रः हृष्टो

हृत्वा मयं प्रासादयत्। श्रुतशर्म्मा च दिवसचन्द्रमा इव सूर्य्यप्रभसकाशे हीनकान्तिरभवत्। अथ देवराजः पितरं प्रणम्य लोकपालैः सह स्वं धाम प्रातिष्ठत। मयप्रभृतयश्च असुराः सानन्दं मुनिमभ्यनुज्ञाप्य स्वं स्वं कार्य्यं साधयितुं प्रतस्थिरे।

अथ सूर्य्यप्रभः कियन्तं कालं पाताले दानवैः सहोषित्वा मर्त्यलोकं स्मरन् पातालात् सुरङ्गया तया निर्गत्य चन्द्रभागैरावत्योः सङ्गमे रचितान् स्वान् परिजनान् नृपतींश्च सर्वान् समागमत्। ते च सर्वे तं प्राप्य भृशमरोदन्। सूर्य्यप्रभस्तान् तदा चन्द्रप्रभादर्शनविषण्णान् समाश्वास्य यथावृत्तं सर्वमवर्णयत्।

---

## षट्चत्वारिंशत्तरङ्गः।

अथ राजभिः श्रुतशर्म्मकर्त्तृकं सूर्य्यप्रभस्य दारापहरणवृत्तान्ते तदनन्तरञ्च दैववाणीवृत्तान्ते निवेदिते सूर्य्यप्रभः रोषताम्राक्षः दारापहारिणं तं संरक्षकमपि विनाशयितुं प्रतिजानानः सप्ताहात् परं युद्धयात्रार्थं दिनं निर्द्धारितवान्। अत्रान्तरे मयदानवः समागत्य वत्स! दुर्वृत्तः श्रुतशर्म्मा त्वदीयान् दारान् अपहृत्य पाताले रक्षितवान् इति वार्त्तामाख्याय सर्वान् सन्तोष्य च सूर्य्यप्रभेण सह पुनस्तेनैव पथा पातालमभ्यागमत्। समर्पयच्च तस्मै तदी-

यान् दारान्। अथ सूर्यप्रभः स्वानुचरैः सह दानवेन्द्रं प्रह्लादमुपागमत्, स तु कृतककोपः तमवदत् दुराचार! त्वया मत्सोदरेणानीता द्वादश सुरकन्यका हृताः? तदहमधुनैव त्वां विनाशयामीति। एतदाकर्ण्य सूर्यप्रभः सभयं निर्विकारचित्त एवाब्रवीत् प्रभो! शरीरमिदं भवदधीनं यथेच्छं कर्तुमर्हति इत्याभाष्य क्षमां ययाचे। प्रह्लादः सम्प्रीतः प्राह वत्स! अहं त्वां परीक्षितुमेवमवोचं, दृष्टं ते शरीरं निरहङ्कारं, तद् वरं वृणु। सूर्यप्रभः केवलं गुरुषु देवदेवे हरे चाचलां भक्तिमवृणोत्। तच्छ्रुत्वा सर्वे दनुजास्तमभ्यनन्दन्। प्रह्लादश्च तथेति वरं, तथा यामिनीं नाम द्वितीयतनयां तस्मै दत्त्वा पुत्रद्वयमपि तत्साहाय्यार्थं न्ययोजयत्। ततोऽसौ श्वशुरं दानवेन्द्रमभ्यनुज्ञाप्य अमीलमुपजगाम। स च सम्प्रीतः द्वितीयां सुतां सुखावतीं तस्मै प्रदाय स्वं पुत्रद्वयमपि तदानुकूल्यार्थं नियुयोज। सूर्यप्रभः सानुचरः षड् दिवसान् तस्य भवने अतिष्ठत्। तस्मिंश्च समये सुनीथस्य तिसृषु भार्य्यासु गर्भवतीषु मयदानवो दिव्येन चक्षुषा समपश्यत् पूर्वं विनष्टा असुरा एव तेषु गर्भेषु जननं लेभिरे इति। अथ सप्तमे दिवसे सूर्य्यप्रभः सपरिजनः पत्नीभिः सह पातालात् भूतलमभिययौ।

अथ चन्द्रप्रभस्य शिशुं पुत्रं पृथ्वीराज्ये अभिषिच्य भूतासनविमानेन विद्याधरराजस्य सुमेरोः गङ्गातीरस्थं तपोवनमभ्यागमत्। सुमेरुणा सर्वेषु यथायथं सत्कृतेषु मयदानवः सर्वं वृत्तान्तमकथयत्। अथ सूर्य्यप्रभः मयादिष्टया विद्यया सुमेरुसदनं प्राप्य स्वैः स्वैः सैन्यैः सह

बन्धुवर्गान् तत्रानेतुमादिदेश। आदिष्टैश्च दूतैः सर्वत्र संवादे प्रदत्ते सूर्य्यप्रभस्य श्वशुरवर्गीया दानवाः बान्धवैः परिवृतास्तत्र समाजग्मुः। समभ्ययुश्च रसातलेभ्यः हृष्टरोमा, महामायः, खदंष्ट्रः, प्रकम्पनः, तन्तुकच्छः, दुरारोहः सुमायः, वज्रपञ्जरः, धूमकेतुः, प्रमथनः, विकटाक्षः, अन्ये च दानवाः स्ववर्गाः समागच्छन्। तेषु च कोऽपि अयुतेन, कोऽपि सप्तभिरयुतैः, कश्चन अष्टायुतैः, कश्चित् षड्भिरयुतैः, कोऽपि त्रिभिरयुतैः, अतिसामान्योऽपि अर्द्धायुतेन रथैः परिवृताः समापतन्। कोऽपि त्रिभिर्लक्षैः, कश्चन द्विलक्षैः, कश्चित् लक्षपरिमितैः, अधमोऽपि अर्द्धलक्षमितैः सैन्यैः परिवृताः समापेतुः। सर्वेषामेव तेषां यथायोग्यं हस्त्यश्व-बलानि सहाजग्मुः। अनन्तरं मयसुनीथसूर्य्यप्रभाणाम-संख्यानि बलानि उपतस्थिरे। ततश्च वसुदत्तादीनां राज्ञां बलानि, सुभेरोश्च सैनिकानि समागमन्।

इत्थं पातालात् धरातलाच्च अगण्येषु सूर्य्यप्रभपक्षीय-बलेषु समवेतेषु मयदानवः कश्यपं सस्मार। स्मृतमात्रमुप-पस्थितञ्च तं मयः प्राब्रवीत् भगवन्! अत्र अगण्यानामस्म-दीयसैन्यानां सुचारुसन्निवेशो न घटते, तदाज्ञापयतु, क्वचित् सुविस्तृते प्रदेशे एतानि समावेश्य भवत दर्शयिष्याम इति। तदाकर्ण्य कश्यपस्तस्मात् स्थानात् योजनव्यवहिते कलापग्रामभूते सुविस्तीर्णप्रदेशे सैन्यानि प्रेषयितुमादि-शत्। आदिष्टाश्च सर्वे स्वानि स्वानि आयुधानि समादाय तस्मिन्नेव प्रदेशे समागत्य समवेता आसन्। इत्थं राज्ञा-मसुराणाञ्च वाहिनीषु समग्रं पृथक् पृथक् सन्निवेशितासु

विद्याधरराजः सुमेरुरभाषत, महर्षे! युवराजस्य सूर्य्यप्रभस्य पचीयाणि यादृशानि अपरिमितानि बलानि समावेशितानि, ईदृशानि कदापि न दृष्टानि। परन्तु विपक्षस्य श्रुतशर्म्मणः सैन्यानि एतेभ्योऽपि समधिकानि अनुमीयन्ते। तद् यावत् अहं तेभ्यो बहूनि भेदयित्वा आनेष्यामि। तत् प्रातरेवास्मात् स्थानात् वाल्मीकिनामके प्रदेशे अस्माभिर्गन्तव्यम्। कल्यं फाल्गुनकृष्णपक्षस्य महाष्टमी, तिथावस्यां तत्र गताश्चक्रवर्त्तिलक्षणं प्राप्नुवन्ति। एतस्मात् कारणात् प्रतिवर्षं विद्याधरा अस्यां तिथौ तत्र गच्छन्तीति।

इत्थं सुमेरोर्वचः श्रुत्वा सर्वे सम्मताः प्रातरेव ससैन्यास्तत्क्षेत्राभिमुखं जग्मुः। तत्र च गत्वा हिमालयप्रस्थदेशे सैनिकानि निवेश्य अदूरात् बहूनां विद्याधराणां समागमं ददृशुः। कश्चिद् विद्याधरोऽग्निं संस्थाप्य जुहोति, कोऽपि जपति, कश्चन पूजयति, कोऽपि वा स्नाति। ददाति, पाययति, पठति गायतीत्यादि। तदवलोक्य सूर्य्यप्रभस्तत्रावरुह्य क्वचित् प्रदेशे अग्निकुण्डं सज्जितवान्। सज्जितमात्रमेव तत् विद्याप्रभावात् स्वयं जज्वाल। तदवलोक्य सर्वे परं विस्मयमापेदिरे। केनचिद् विद्याधरेण विद्वेषपरेण मर्त्त्यवासिनामनुगत इति सुमेरौ तिरस्कृते सोऽपि सुमेरुस्तं निर्भर्त्स्य सूर्य्यप्रभमवादीत् देव! भीमो नाम कश्चिद् विद्याधरोऽस्ति, तत्पत्नीं स्वेच्छया ब्रह्मणाभिगतायाम् अयं समुदपद्यत, ब्रह्मरक्षितत्वाच्च ब्रह्मगुप्त इति समाख्यां भजते च। तद् यादृशमस्य जननं तादृशमेव

कचनम्। एवमुक्त्वा सुमेरुरपि एकमग्निकुण्डं प्राज्वालयत्। ततश्चोभौ सुमेरुसूर्य्यप्रभौ होमं कर्त्तुमारेभाते। च्णेन च जुह्वतोस्तयोर्होमप्रभावात् कश्चिदजगरः भूमभीत् भयङ्कराकृतिर्निर्गत्य फुत्कारवातेन सुमेरुतिरस्कारिणं तं ब्रह्मगुप्तं शतहस्तदूरे निचिक्षेप। अथ श्रुतशर्म्मणोऽनुचराः महावीरास्तेजःप्रभदुष्टदमनविरूपशक्त्यङ्कारविजृम्भकप्रभृतयो विद्याधरा आततायिनः अजगरं तमाक्रमन्। स च अवलीलयैव सर्वान् तान् तथैव फुत्कारवायुना दूरे निचिक्षिप्तवान्। तेषु च तेजःप्रभः अतिबलीयान् अजगरं तं निहन्तुं धावति स्म। अजगरस्तं तथैव निश्वासमारुतेन सुदूरं निचिक्षेप। तदवलोक्य दुष्टदमनविरूपशक्तिविजृम्भकाङ्गारकप्रभृतयो ये पुनर्धावन्ति स्म तानपि सोऽजगरस्तथैव दशामापादितवान्। इत्थं सर्वेषु विद्याधरेषु तेनाजगरेण परास्तेषु श्रुतशर्म्मा क्रुद्धः स्वयं तं भुजङ्गं नाशयितुं समापतत्। अजगरस्तमपि निश्वासवायुना दूरं न्यक्षिपत्। अथोत्थाय तं पुनर्मारणोद्यतं दृष्ट्वा अजगरस्तं तथा सुदूरं निक्षिप्तवान् यथा चूर्णिताङ्गः कथमपि समुत्थाय लज्जावनतवदनः सानुचरः पलायाञ्चक्रे।

अथ सुमेरुणा सर्पं तं धर्त्तुं समादिष्टं सूर्य्यप्रभम् अजगरसकाशं यान्तं दृष्ट्वा सर्वे विद्याधरा अहसन्। सूर्य्यप्रभस्तु क्रमेण समीपमुपगम्य यावत् अजगरं विलमध्यात् अवलीलया निरकासयति तावत् सोऽजगरः एकं तूणीरं भूत्वा तस्य हस्ते अशोभत। अथ सूर्य्यप्रभशिरसि दिव्या पुष्पवृष्टिः पपात, आकाशभारती च उदचरत् सूर्य्यप्रभ!

त्वमिदम् अक्षयं तूणं गृहाण, अनेन ते सर्वसिद्धिर्भवितेति। ततः सूर्य्यप्रभे तत् तूणं धृतवति विद्याधराः विषादं परं समासेदुः। असुरा राजानश्च सर्वे महतीं प्रीतिमापेदिरे।

अथ श्रुतशर्म्मणः कश्चिद् दूतः समागत्य सूर्य्यप्रभमब्रवीत् भद्र! अस्माकं प्रभुः श्रुतशर्म्मा भवन्तमादिशति यदि ते जीवितेन प्रयोजनं, तत् शीघ्रं तूणीरं मे समर्पय। सूर्य्यप्रभः प्रत्यवादीत् दूत! त्वं सत्वरं गत्वा तव प्रभुं ब्रूहि, यथा तव कलेवरमेव सत्वरं शरपूरितं तूणीरत्वम् आप्स्यति, किमन्येन तूणीरेणेति। एतदाकर्ण्य दूतः शीघ्रं गत्वा श्रुतशर्म्मणि सूर्य्यप्रभस्य प्रगल्भं वचनं न्यवेदयत्।

इत्थं देवानुग्रहेण सर्वसिद्धिप्रदायिनि अक्षये तूणे लब्धे सुमेरुप्रभृतयः सानन्दं तस्य जयशीलं धनुः साधयितुं सानुचराः हेमकूटस्य उत्तरपार्श्ववर्त्तिनि मानससरसि समुपस्थाय तदीयामपूर्वां शोभां, स्वच्छानि सलिलानि, सौवर्णानि कमलानि च अपश्यन्।

अत्रान्तरे श्रुतशर्म्मा सानुचरस्तत्र समुपस्थितः। सूर्य्यप्रभस्तु सवर्गः सघृतेन पद्मेन होमं कर्तुमारेभे। तस्य च होमस्य प्रभावात् सहसा तस्मात् सरसः सुघोरा मेघाः समुत्थाय प्रबलेन वेगेन वारीणि ववृषुः। वर्षद्भ्यश्च मेघेभ्यः सहसा कश्चित् सर्पः निःसृत्य सरसि निपपात। तत्क्षणाच्च सुमेरुणा समादिष्टः सूर्य्यप्रभः समुत्थाय तं सर्पं दधार। धृतमात्रश्च स मनोहरं धनुरभवत्। ततश्च तस्मात् मेघात् द्वितीयः सर्पस्तथैव सरसि पपात। सूर्य्यप्रभः पतन्तमेव तं तथैवाधारयत्। धृतमात्रश्च स तस्यैव धनुषः मौर्वी-

रूपमग्रहीत् । ततश्च तत् सर्वं मेघवृन्दं सहसैव विलयं प्रत्यपद्यत, न्यबधीश्चाग्निवर्षेण विपक्षान् खेचरान् । अनन्तरं सपुष्पवृष्टिराकाशवाणी पुनरुच्चचार वत्स ! सूर्य्यप्रभ ! त्वमिदम् अच्छेद्यगुणयुक्तमतिबलं धनुः गृहाणेति । तदाकर्ण्य सूर्य्यप्रभस्तत् सगुणं धनुर्गृहीत्वा सूर्य्यप्रभः समपद्यत । श्रुतशर्म्मणि तदवलोक्य सानुचरे निष्प्रभतां गते मयादयः सर्वे सानन्दं महोत्सवं विदधुः ।

अथ तैः सर्वैः तादृशस्य धनुषः समुत्पत्तेः कारणे पृष्टे सर्वज्ञः सुमेरुरब्रवीत् अस्मिन् प्रदेशे कीचकैः पूर्णं दिव्यमेकं नगरमस्ति । तस्माद् वंशं छित्त्वा अस्मिन् सरसि विक्षिप्ते नानाप्रकाराणि दिव्यानि धनूंषि उत्पद्यन्ते । सर्वैर्देवैरसुरैः गन्धर्वैः विद्याधरैः किन्नरैश्च अनेनोपायेन धनूंषि लभ्यन्ते, तानि च पृथक पृथक् संज्ञया अभिधीयन्ते । तेषु च चक्रवर्त्तिधनुरसितबलसमाख्यया कीर्त्त्यते । पुरा देवैः तादृशानि अत्र निक्षिप्तानि । ये च पुण्यवन्तः भाविचक्रवर्त्तित्वमभिवाञ्छन्ति ते एव बहुना क्लेशेन ईश्वरानुग्रहात् अमूनि संसाधयन्ति । अयञ्च सूर्य्यप्रभः ईश्वरस्य कृपया भाविचक्रवर्त्तिलक्षणं धनुरिदं प्राप्तवान् । अस्य च वयस्याः स्वं स्वमनुरूपं धनुः साधयितुं शक्नुवन्ति । तस्मात् ते यूयं स्वानि स्वानि अनुरूपाणि धनूंषि साधयत ।

एवं सुमेरोर्वचः समाकर्ण्य सूर्य्यप्रभानुचराः तत् कीचकनगरं गत्वा तत्रत्यं राजानं निर्जित्य वंशान् छित्त्वा तस्मिन्नेव मानससरसि न्यक्षिपन् । ततश्च जपहोमादिकं विधाय सप्ताहाभ्यन्तर एव स्वं स्वमनुरूपं धनुर्लब्ध्वा कृता-

र्थतामापुः। ततः सूर्य्यप्रभः सानुचरः धनुर्लाभेन कृतार्थ-म्मन्यः सुमेरोस्तपोवनं प्रति समागमत्। आगते च तपोवने सुमेरुः सूर्य्यप्रभानुगान् दुर्ज्जयस्य वेणुनगराधिपतेश्चन्द्र-दत्तस्य जयेन महापराक्रान्तान् इति प्रशशंस।

अथ दानवेन्द्रो मयः सूर्य्यप्रभं सम्बोध्याब्रवीत् वत्स! त्वं सर्वविद्याविशारदोऽसि, तत् साम्प्रतं महर्षिं याज्ञवल्क्य-मुपेत्य तत्सकाशात् मोहिनीं परिवर्त्तिनीञ्च नाम विद्यां लभस्व। सूर्य्यप्रभस्तथेति प्रतिज्ञाय महर्षिं समेत्य तां तां विद्यां ययाचे। महर्षिस्तदीयं मनोरथं पूरयितुं तं सप्ताहं भुजगकूटे तथा दिनत्रयम् अग्निमध्ये तपश्चरितुमादि-देश। अथ महर्षिस्तं सप्ताहं भुजङ्गदंशनं तथा दिनत्रयम् असह्यमग्निसन्तापम् अनुभूय तस्मादुत्तीर्णं दृष्ट्वा भृशं तुतोष, आदिदेश च दत्त्वा प्रार्थितविद्याद्वयीं पुनर्वह्निप्रवे-शाय। सोऽपि तथेति महर्षेरादेशं पुनः प्रतिपालितवान्। अस्मिंश्चावसरे नानारत्नमण्डितं महापद्मं नाम व्योमयानं सूर्य्यप्रभमुपाययौ, उच्चचार च दैवभारती वत्स! चक्रवर्त्ति-विमानमिदं गृहाण, अस्मिन् सिद्धविमानान्तःपुरे रक्षि-तास्ते अन्तःपुरिकाः कदाचन शत्रुभिर्न धर्षयितुं शक्याः इति। सूर्य्यप्रभस्तां दिव्यसरस्वतीमाकर्ण्य महर्षिसकाशं गत्वा च प्रोवाच भगवन्! कां ते दक्षिणामुपहरामीति। सोऽब्रवीत् वत्स! त्वम् अभिषेकसमये मां स्मरिष्यसि, तदेव मे दक्षिणा, साम्प्रतं गत्वा स्वैर्गणैः सङ्गच्छस्वेति उक्त्वा तं व्यसर्ज्जयत्।

सूर्य्यप्रभः भक्त्या मुनिं प्रणम्य तेन विमानेन सुमेरु-

भवनाभिमुखं प्रस्थितः क्षणेन आश्रममवरुह्य स्वैरनुचरैः सह मिलितः। मयादयः सर्वे तन्मुखात् विमानसिद्धि-प्रशंसां वार्त्तां निशम्य नितरां प्रीता अभवन्। अथ मुनी-शेन सुवासकुमारे स्मृते सं॰ तत्क्षणं तेषां पुरः आविर्भूय मयादीन् सर्वान् शत्रुजयार्थं समादिशत्। मयोऽब्रवीत् प्रयाणात् पूर्वं शत्रून् प्रति दूतः प्रेषणीय इति नीतिविदो मन्यन्ते। मुनिपुत्रोऽवदत् का क्षतिः? तत् प्रहस्तमेव दौत्यकार्य्ये नियुङ्क्ष्व, यतः स वचनरचनचतुरो दूत-कर्म्मज्ञः। अथ सर्वे तथेति मोदमानास्तं प्रहस्तमेव यथा-शथम् उपदिश्य श्रुतशर्म्मणोऽन्तिकं प्रेषयामासुः।

अथ सूर्य्यप्रभः सर्वान् अनुगामिनः समवेतानब्रवीत् वयस्याः! गते निशीथे मया स्वप्ने दृष्टं यथा वयं सर्वे एव नृत्यन्तः अनिमग्ना नदीरयेण नीयमानाः क्षणेन प्रतिकूले वायौ वहति केनचित् अग्निसमेन महापुरुषेण धृत्वा अग्निकुण्डे निक्षिप्ताः, परं न कोऽपि दह्यते स्म। अनन्तरं सहसा समुदितात् मेघात् शोणितवृष्ट्या चतस्र एव दिशो रक्तवर्णाः समजायन्त। एतदवलोक्य प्रबुद्धस्य मम निद्रा-देवी क्वापि गता, न पुनः प्रत्यावृत्ता।

एवमुक्त्वा तस्मिन् विरते सुवासकुमारः प्राब्रवीत् एतेन स्वप्नेन एतदेव सूचितं यथा अभ्युन्नतिः सम्यगायाससाध्या। जलस्रोतसि अनिमज्ज्य सनर्त्तनगमनम् अपराजयेन रणा-ङ्गणे विचरणं प्रतिपादयति। बहुक्षणजलनिमज्जनेन शीतार्त्तानाम् अग्निपरिचर्य्या एव विधेयेति महापुरुषो-ऽस्माकमाराध्यः शम्भुरेव अस्मान् अग्निकुण्डे निक्षिप्तवान्।

न तु ददाह इत्येव प्रतीयते। ततो मेघोदयात् रक्तवर्षणेन चतुर्दिशां लोहितीकरणात् शत्रूणां रुधिरपातेनैव तथा भविष्यतीति स च मेघः अस्माकं कश्चित् प्रवीर इति च ध्वन्यते। स्वप्नोऽपि द्विविधः, सत्यः असत्यश्च। सुषुप्तौ देवादीनामादेशरूपः प्रथमः। अनवरतचिन्तया स्वल्पनिद्राजनितः द्वितीयः। सत्यश्च कालवशात् सत्वरं सविलम्बं वा फलमुपदधाति। यश्च रात्रिशेषे दृश्यते सत्वरमेव फलति। मुनिसुते एवं स्वप्नफलाफलं वर्णितवति सर्वे निरुद्वेगाः समुत्थाय दिवसकृत्यं सम्पादयामासुः।

अथ श्रुतशर्म्मसकाशात् प्रत्यागतः प्रहस्तः सर्वानवादीत् अहमितस्त्रिकूटपर्वतोपरिस्थितं त्रिकूटपताकाख्यं सौवर्णं नगरं गत्वा राजद्वारि उपस्थाय राजान्तिकं संवादं प्राहिणवम्। आदिष्टश्च राज्ञा अभ्यन्तरं प्रविश्य अपश्यं राजचक्रवर्त्ती श्रुतशर्म्मा पित्रा सह विद्याधरगणैः परिवृतः सभामध्यास्ते। दामोदरादयश्च प्रधानामात्याः स्वं स्वं कार्य्यमनुतिष्ठन्ति। मया च समुपविष्टेन उक्तं श्रुतशर्म्मन्! अहमस्मि राजचक्रवर्त्तिनः सूर्य्यप्रभस्य दूतः, भगवतो धूर्जटेः प्रसादेन स खलु अलौकिकीं विद्यां सहायान् सम्पत्तीश्च लेभे, तत्त्वम् अस्मत्प्रभोरादेशेन सानुचरं तं शरणं व्रज। स केवलं विपक्षवह्निः, प्रणतानान्तु बान्धवः। अन्यच्च त्वं सुनीथस्य तनयामपहृत्य अतीव गर्हितमाचरितं, तामविलम्बं त्यज, नो चेत् महदमङ्गलं भवितेति। एवमुक्त्वा मयि विरते सर्वे विद्याधराः सकोपं युवराजं मानुष इति बहुशो निरभर्त्सयन्। मयोक्तं यदा देवाधिदेवस्तं चक्रवर्त्तिन-

मकरोत् तदा तस्य मानुष्येऽपि देवतात्वं सिद्धम्। युष्माभि-स्तत्पराक्रमो दृष्टः, अथवा अत्रागतस्य तस्य यथा पराक्रमं बलञ्च सर्वं द्रक्ष्यथ इति। एवं मयोक्तं निशम्य सर्वासु क्रोध-संक्षुभितासु श्रुतशर्म्मा धुरन्धरश्च मां हन्तुमुदयच्छताम्। अहमपि आगच्छेत्युक्त्वा समुदतिष्ठम्। दामोदरस्तु दूतो न वध्य इति ताववारयत्। ततो विक्रमशक्तिरब्रवीत् दूत! त्वं पलायस्व, तव प्रभुरिव वयमपि देवनिर्मिताः, तत् त्वं गत्वा ब्रूहि, वयं तं द्रक्ष्याम इति। तदाकर्ण्य मया सहास-मुक्तं यावत् गगनं न भेवैराव्रियते, राजहंसस्तावत् पद्म-वनेषु क्रीड़तीति समाख्याय तानवज्ञाय प्रातिष्ठम्। प्रहस्त-मुखादेतदाकर्ण्य सर्वे ससन्तोषं संग्रामाय कृतसङ्कल्पा अभूवन्। सैनापत्यं प्रभासहस्ते समर्पितम्। क्रमेण रजन्यां घोरायां सर्वे सुवासकुमारादेशेन शयनं भेजिरे।

अत्रान्तरे सुमेरोर्भ्रातृकन्या विलासिनी नाम सह-सखीजना सूर्य्यप्रभस्य शयनमन्दिरं प्रविष्टा तत्समीप-माययौ। सूर्य्यप्रभे दृष्ट्वैव मोहिते कौतुकाविष्टे च व्याज-निद्रामुपेते विलासिनी निःशब्दपदं समीपमेत्य तदीय-रूपदर्शनेन आत्मानं कृतार्थममन्यत। अथ [illegible]ा सख्याः सकाशं तदीयं रूपं प्रशस्य तमेव पतिं ल[illegible] [illegible]मा तस्य श्रुतशर्म्मणा संग्रामे जयमाचकाङ्क्ष। ततश्च [illegible] [illegible]ा सखी सूर्य्यप्रभस्य सर्वविद्यासु पारदर्शितां जयलाभस्य [illegible]वश्यं-भाविता वर्णयित्वा प्राब्रवीत् सखि! त्वं सुप्रभ[illegible] [illegible]ा एक-वंशीया, युवामस्य भार्य्ये भविष्यथः इति सिद्धा[illegible] [illegible]स्ति तत् तव बन्धूनामपेक्षणं वृथा। विलासिनी प्रोवा[illegible] [illegible]खि

तथमात्थ, अहं पुनर्बन्धूनापेक्षिष्ये। अयं सर्वविद्यासिद्धोऽपि ओषधिसिद्धो नेति परं दुःखितास्मि। चन्द्रपादस्य गिरेर्गुहायां या ओषधयः सन्ति, पुण्यशीलाश्चक्रवर्त्तिन एव ताः साधयितुमधिकुर्वन्ति। तद् यद्यसौ तत्र गत्वा ताः सर्वा ओषधीः साधयेत् तदास्य परं मङ्गलं भवितेति।

व्याजनिद्रितः सूर्य्यप्रभस्तत् सर्वं श्रुत्वा समुत्थाय च तमप्रणयमवादीत् सुन्दरि! त्वं मयि परं स्नेहं प्रदर्शितवती, तदागच्छ इदानीमेव चन्द्रपादगिरिगुहां गच्छाम इति। एवमुक्ता परिचये पृष्टे सा कन्या लज्जावनतमुखी आसीत्। तदीया सखी प्रावदत् युवराज! इयं विद्याधरराजस्य सुमेरोः कनिष्ठसोदरस्य तनया, विलासिनी नाम, भवन्तं द्रष्टुमिहागता, एवमुक्ता तस्यां विरतायां विलासिनी सखि! आगच्छ साम्प्रतं गच्छाव इति अभिधाय प्रस्थिता।

ततः सूर्य्यप्रभः सेनापतिं प्रभासं प्रबोध्य तन्मुखेन मयदानवादीनां सकाशे तम् ओषधिसाधनवृत्तान्तमकथयत्। ते च तस्यामेव रजन्यां सानुचरं तं चन्द्रपादगिरिं प्रेरयन्। यक्षान् गुह्यकांश्च मार्गरोधिनः सिद्धविद्यया निर्जित्य सूर्य्यप्रभः ससचिवः तस्य गिरेर्गुहाद्वारमुपाययौ। तत्र विविधान् विकृताननान् शिवानुचरान् प्रवेशवारकान् दृष्ट्वा सुवासकुमारः तैर्युद्धं निवार्य्य भगवन्तं देवदेवं स्तोतुं समादिशत्। सर्वे तद्वाक्यं बहु मत्वा भगवन्तं स्तोतुमुपचक्रमिरे। तेन च स्तवेन तुष्टाः प्रमथाः केवलं प्रभासमेव तदन्तः प्रवेष्टुम् आदिशन्। प्रवेशमात्रं गुहास्थिते तमसि विलीने प्रभासः सप्तविधा दिव्यौषधीः समाहृत्य वहिर्गत्वा

च सूर्य्यप्रभाय समर्पितवान्। ततश्च सूर्य्यप्रभः सानुचरः सुमेरोराश्रमं प्रत्यावृत्य सर्वेभ्यः ओषधिसाधनवृत्तान्तं वर्णयामास।

अथ सुनीथः सुवासकुमारमपृच्छत् भगवन्! गुहाभ्यन्तरे सूर्य्यप्रभप्रवेशनिषेधस्य प्रभासस्य समादरस्य च हेतुं श्रोतुमिच्छामि। सुवासकुमारः प्रत्यवादीत् प्रभासः सूर्य्यप्रभस्य परमं मित्रम् अद्वितीयो वीरश्च, पूर्वजन्मनि असौ गुहा प्रभासस्यैवाधिकृता आसीत्, तदर्थमस्य तादृशः समादरः। तदस्य पुरावृत्तं श्रूयताम्।

पुरासीत् नमुचिर्नाम सुविख्यातनामा दानवेन्द्रः। स खलु यथा वीरस्तथा दाता च। यो यत् प्रार्थयाञ्चक्रे, तस्मै तद् दत्त्वा तं सन्तुष्टमकरोत्। पूर्वं स दशसहस्राणि वत्सरान् धूमं पिबन् विष्णुमाराध्य तस्मात् लौहेन प्रस्तरेण काष्ठेन वा नाहं मरिष्यामीति वरं लेभे। इन्द्रोऽपि अस्मात् बिभ्यत् पलायाञ्चक्रे। अथ कश्यपः नमुचिमनुनीय उभयोः सन्धिमकारयत्।

अथ गच्छता कालेन देवासुरैः सम्भूय मन्दराद्रिणा क्षीरनिधौ मथिते यानि रत्नानि उदतिष्ठन्, तन्मध्यात् भगवान् नारायणः कमलां लेभे, नमुचिरुच्चैःश्रवसं नाम अश्वम्। अपरे देवासुराः विधातुरादेशेन यथायोग्यं रत्नानि विभज्य जगृहुः। यच्च मन्थनदण्डमन्दरायात् अमृतमुत्थितं तस्मिन् केवलं देवैरपहृते पुनर्देवासुरसंग्रामः प्रावर्त्तत। तत्र ये असुरा देवैर्निहतास्ते पुनरुच्चैःश्रवसा पुनर्जीवयितुं प्रारब्धाः। तस्माच्च असुरा देवानामजेया अभवन्।

तदा बृहस्पतिर्विपदं दृष्ट्वा इन्द्रमब्रवीत् देवराज! त्वं नमुचिसकाशं गत्वा उच्चैःश्रवसं प्रार्थयस्व, नमुचिः शत्रवेऽपि तुभ्यं तमश्वं दास्यति, न खलु स्वां वदान्यताकीर्त्तिं खण्डयिष्यति। शचीपतिः गुरोरुपदेशेन देवैः सह नमुचिसकाशं गत्वा तदश्वरत्नं ययाचे। अतिदानशीलो नमुचिरचिन्तयत् नाहं कदापि कमपि अर्थिनं विमुखं कृतवान्, अद्य देवराजः स्वयं याचकः, कथमेनं पराङ्मुखं करोमि? तदस्मै उच्चैःश्रवाः दातुं युज्यते। अस्मिंश्चार्थिनि निराकृते मम भुवनविख्यातं यशः कलुषितं भविष्यति, तथात्वे जीवनेन किम्? एवं विचिन्त्य गुरुणा काव्येन निषिद्धोऽपि वासवाय तत् हयरत्नं प्रादात्।

अथ वृत्रहा अन्यैरस्त्रैरवध्यं तं नमुचिं वज्रविन्यस्तेन गोशृङ्गेण निहतवान्। नास्ति विषयलालसायाः पर्यन्तः। देवा अपि एतदधीना दुष्कीर्त्तिमर्ज्जयन्ति। दानवमाता तपसा नमुचेर्विनाशमवगम्य शोकाकुला पुनरपि स्वोदरे नमुचेर्जन्म आचकाङ्क्ष। तेन च नमुचिस्तस्या गर्भे पुनः समुत्पद्य प्रबलो नाम दुर्जयो दानवः प्रादुरासीत्। सोऽपि शतकृत्वो देवराजं निर्जिगाय। कदाचित् देवा नरमेधव्याजेन तदीयं शरीरं ययाचिरे। सोऽपि दानवीरः शत्रुभ्योऽपि देवेभ्यो निजं शरीरं प्रददौ। देवाश्च तच्छरीरं शतधा चिच्छिदुः। तदनन्तरमसौ प्रबलः प्रभास इति प्रसिद्धो मर्त्यलोके समुदपद्यत। इयञ्च ओषधिगुहा तदा प्रबलस्यैव अधिकृतासीत्। तस्य चानुचराः किङ्करास्तां गुहां रक्षन्ति। अस्याश्च गुहाया अधस्तात् पाताले प्रबलस्य राजभवन-

मद्यापि विद्यते, तत्र चास्य द्वादश पत्न्यः, विविधानि रत्नानि, बहूनि च अस्त्राणि शस्त्राणि च सन्ति। प्रबलः स्वभुजबलेन अमूनि सर्वाण्युपार्जयत्। नमुचेरवतारस्य प्रभासस्य न किमपि असाध्यम्। तस्मात् तत्रस्थाः किङ्करा एनं समाहृत्य तत्र प्रवेशयामासुरिति।

अथ सूर्य्यप्रभः मुनिकुमारप्रमुखात् एतदद्भुतं वृत्तान्तं श्रुत्वा पातालात् प्रबलगृहान्तर्वर्त्तीनि रत्नानि संग्रहीतु-मुद्यच्छत्। प्रभासः एकाकी एव सुरङ्गया पातालं प्रविश्य स्वां पूर्वपत्नीं चिन्तामणिम् अश्वारोहीणि असुरसैन्यानि सर्वाणि रत्नानि च संगृह्य पातालादाजगाम, संवर्द्धयामास च प्रभवे सूर्य्यप्रभाय तत् सर्वं समर्प्य। अथ सूर्य्यप्रभः सानु-चरः स्वं शिविरमगात्।

—

## सप्तचत्वारिंशत्तरङ्गः।



अथ रात्रौ प्रभातायां सूर्य्यप्रभः श्रुतशर्म्माणं जेतुं सुमेरु-तपोवनात् ससैन्यः त्रिकूटाभिमुखं जगाम, निवेशयामास च तत्र गत्वा कस्मिंश्चित् विस्तृते क्षेत्रे स्कन्धावारम्। इमञ्च संवादं प्राप्य त्रिकूटाधिपतिस्तस्मै दूतं प्राहिणोत्। दूतः समागत्य खेचरेश्वरं सुमेरुं सम्बोध्य प्राब्रवीत् खेचरराज! श्रुतशर्म्मणः पितुस्त्रिकूटाधिराजस्य अयं सन्देशः। भवन्तं दूरवर्त्तिनं न कदाचित् वयं समाहृतवन्तः। स भवानद्य

खेचरौ: परिवृतौ मत्सौभाग्यात् देशमिममलङ्कृतवान्, तस्मादिच्छाम: समुचितेनातिथ्येन भवन्तं सत्कर्त्तुमद्य इति। सुमेरुर्दूतमुखात् शत्रुसन्देशमिमं श्रुत्वा दूतेन तेन सह प्रभुं त्रिकूटाधिपतिमभिययौ।

अत्रान्तरे सूर्य्यप्रभादयो जिगीषव: सेनानिवेशविभागान् द्रष्टुमुच्चैस्तरं प्रदेशमधिरुरुहु:। सुनीथ: पितरं मयं सैन्यानां रथादिकं पृथक् पृथक् वर्णयितुमनुरुरोध। मय: पुत्रेणाभ्यर्थित: प्रोवाच वत्स! सैन्येष्वेषु ये सुबाहुविघातमुष्टिकमोहनप्रलम्बप्रमाथकेकटपिप्पलवसुदत्तप्रभृतयो राजान: सन्ति, तेषां प्रत्येकं अर्द्धलचं रथा वर्त्तन्ते। विशालोमत्तकदेवशर्म्मपितृशर्म्मकुमारकहरिदत्तादीनां राज्ञां लचं रथा:। प्रकम्पककुम्भीरमहाभटवीरस्वामिधुराधरभाण्डीलकसिंहदत्तगुणशर्म्मकीकटभद्रङ्करादीनां नृपाणां द्विगुणा रथा:। विरोचनयज्ञसेनवीरसेनादीनां राजपुत्राणां त्रिगुणा रथा:। सुशर्म्मविशाखशलप्रचण्डप्रभृतीनां राजसुतानां चतुर्गुणा रथा:। जम्बुकीवीरशर्म्मप्रवीरसुप्रतिज्ञप्रभृतयो राजान: राजपुत्राश्च पञ्चगुणरथसमन्विता:। उग्रवर्म्मण: एकाकिनोऽपि षड्गुणा रथा:। विशोकसुतन्तुसुगमनरेन्द्रशर्म्मणां राजपुत्राणां रथा: सप्तगुणा:। सहस्रायुर्नाम राजकुमारो महारथ:। शतानीको महारथानां यूथपति:। सूर्य्यप्रभस्य वयस्या: शुभविमलसुहर्षभयङ्करशुभङ्करप्रभृतय: सर्वे एव महारथा:। अस्य च मन्त्रिणो विश्वरुचिभाससिद्धार्था: महारथानां यूथपतय:। महामात्य: प्रहस्तो रथयूथपति:। प्रज्ञाढ्यस्थिरबुद्धी अपि रथयूथपती।

सर्वंदमनो नाम दानवः असुराश्च प्रमथनधूमकेतुप्रवहन-वज्रपञ्जरकालचक्राः रथानामतिरथानाञ्च अधिपतयः । प्रकम्पनसिंहनादौ रथयूथपतीनामधिपती । महामाय-कम्बलिककालकम्पनप्रहृष्टाश्चत्वारो असुरेन्द्रा रथाधिपती-नामधिपतयः । प्रभासः सेनापतिः सूर्य्यप्रभेण तुल्यः । सुमेरु-तनयः श्रीकुन्धरः कुमारो महाहरिश्च यूथाधिपती । एव-मन्येऽपि एषु सैन्यसागरेषु बहवो वीराः सन्ति । पुत्र ! यत्र देवदेवः सहायः, तत्र एतत्संख्यकानि सैन्यानि किं जयं साधयितुं नालम् ?

इत्थं सैन्यविभागेषु वर्णितेषु त्रिकूटाधिपतेः सकाशात् द्वितीयो दूतः समागत्य प्रावदत् महाराजोऽस्माकमादिशति संग्रामस्तावत् वीराणामुत्सवदिवम् । इयञ्च भूमिरतिक्षुद्रा, तत् स्थानादस्मात् कलायग्रामाख्ये प्रदेशे सुविस्तृते सैन्यानि चालयन्तु भवन्त इति । तदाकर्ण्य सुनीथादयः तस्मिन् शत्रुप्रस्तावे सम्मताः कलायग्रामाभिमुखं सैन्यानि अचाल-यन् । समरोन्मुखः श्रुतशर्म्मा च विद्याधरसैन्यैः परिवृतः सैन्यानि कलायग्रामं नीत्वा स्कन्धावारं समस्थापयत् । सूर्य्य-प्रभः श्रुतशर्म्मणः सेनासु असंख्यानि गजसैनिकानि निरीक्ष्य सत्वरं गजसैन्यानि संजग्राह ।

श्रुतशर्म्मा महावीरं दामोदरं सेनापत्ये अभ्यषिञ्चत् । स्वयञ्चातिष्ठत् व्यूहपार्श्वे मन्त्रिभिः परिवृतः । दामोदरे च रणाग्रवर्त्तिनि स्थिते सर्वे महारथाः समन्तात् सैन्यानि संस्थाप्य अवतस्थिरे । सूर्य्यप्रभसेनापतिः प्रभासः अर्द्धचन्द्रं व्यूहं विरचय्य स्वयं मध्यविभागे व्यतिष्ठत । प्रहस्तः श्रीकुन्ध-

रेण कुमारेण च सह व्यूहस्य पार्श्वे अरक्षत्। सूर्य्यप्रभः सुनीथश्च सानुचरः व्यूहस्य पृष्ठदेशं ररक्षतुः। ततश्च सुमेरु-सुवासकुमारयोर्यथास्थानं स्थितयोः उभयोरेव सैन्ययो रण-भेर्य्यः समवाद्यन्त।

इत्थं सेनाव्यूहे सञ्जाते इन्द्रादयो देवा दिक्पालाश्च अप्सरोभिः सह नभोमण्डलं व्याप्य व्यतिष्ठन्त। भगवान् विश्वेश्वरोऽपि पार्वत्या मातृभिः प्रमथगणैश्च सह अन्तरीक्ष-मध्यतिष्ठत्। भगवान् पद्मयोनिः सावित्र्या महर्षिभिश्च सह गगनमधितष्ठौ। भगवान् विष्णुर्गरुड़ासनः कमलया सह रणदिदृक्षुः खमुदतिष्ठत्। महामुनिः कश्यपो भार्य्याभिः सह समागमत्। क्रमेण एकादश रुद्राः, अष्टौ वसवः, यक्षाः, राक्षसाः, गन्धर्वाः, किन्नराः, प्रह्लादादयोऽसुरेन्द्राश्च रणदिदृक्षया नभोमण्डलमध्यतिष्ठन्।

अथ वाद्यमानेषु रणवाद्येषु वीराः समुत्तेजिता मत्ताश्च बभूवुः। उभयोरेव सैन्ययोः शस्त्रपातानां भीषणध्वनिरुद-तिष्ठत्। दिशः सर्वाः शरनिकरैः समाच्छादिताः मेघावृता इव व्यराजन्त। अन्योन्यशरसङ्घर्षजनितो वैश्वानरो विद्यु-दिव व्यशोभत। शस्त्रक्षतानां गजानामश्वानां वीराणाञ्च शोणितैः समाच्छन्ना रणभूमिरभूत्। क्रमेण सा रणभूः वीराणां शृगालानां भूतगणानाञ्च महोत्सवक्षेत्रं सम-पद्यत। कोऽपि नृत्यति, कश्चन हसति, कश्चिच्च गायति। इत्थमसंख्येषु सैन्येषु निहतेषु सुबाहुर्हसन् अट्टहासेन द्वन्द्व-युद्धमकरोत्। सोऽट्टहासः तस्य शिरश्चिच्छेद। मुष्टिकोऽपि तदवलोक्य क्रोधात् तमाचक्राम। स च तमपि निधन-

मनैषीत्। अथ मुष्टिकं निहतं दृष्ट्वा नरपतिः प्रलम्बः क्रोधाध्मातः अट्टहासमभि शरान् ववर्ष। अट्टहासस्तदीयं सैन्यं निर्जित्य प्रलम्बं निजघान। प्रलम्बे पतिते मोहन-स्तमभिययौ। सोऽपि महावीरात् अट्टहासात् पञ्चता-माप।

इत्थम् अट्टहासेन चतुर्षु वीरेषु निहतेषु श्रुतशर्म्मणः सैन्यानि सिंहनादं कुर्वन्तः जयमघोषयन्। एतदाकर्ण्य सूर्य्यप्रभस्य मित्रं हर्षः ससैन्यः अट्टहासमभिगम्य बाणै-स्तदीयानि सैन्यानि निर्जित्य तस्य यन्तारमच्छिनत्। ततश्च तस्य धनुः शरांश्च निरस्य तमपातयत्। तस्मिंश्च वीरे अट्ट-हासे निपतिते महान् कलकलः समवर्त्तत। सैन्ययोरुभयो-रर्द्धमात्रमवशिष्टम्। इतस्ततः कबन्धाः विचरन्ति स्म। ततः सर्वे सायं स्वं स्वं व्यूहं भङ्क्त्वा शिविराणि जग्मुः।

---

## अष्टचत्वारिंशत्तरङ्गः।

अथ प्रभाते तावुभौ विजयप्रेप्सू पुनः स्वं स्वं सैन्यं सज्जयित्वा युद्धाय समुपस्थितौ। इन्द्रादयो दिक्पाला देवैः सह नभोमण्डलमध्यतिष्ठन्। यक्षा राक्षसाश्च रणदिदृक्षया समागच्छन्। विद्याधरसेनापतिर्दामोदरश्चक्रव्यूहं सूर्य्य-प्रभसेनानीः प्रहस्तश्च वज्रव्यूहं विरचय्य व्यतिष्ठत। ततः संग्रामे प्रवृत्ते रणतूर्य्यसैन्यघोषैर्नभः प्रापूर्य्यत। सेनानी-

प्रवरं प्रभासं दामोदरस्य व्यूहं भित्त्वा प्रविशन्तं दृष्ट्वा दामोदरः स्वयं व्यूहच्छिद्रम् आवृत्य युद्धाभिमुखोऽभवत। तदवलोक्य सूर्य्यप्रभः प्रभासमनु प्रकम्पनधूमकेतुसिंहनाद-प्रभृतीन् षष्टिमहारथान् प्राहिणोत्। तांश्च महारथान् वेगेन आगच्छतो दृष्ट्वा दामोदरः अपूर्वं रणकौशलं प्रदर्श-यन् एकाकी एव पञ्चदशभिर्वीरैः समयुध्यत।

एतदवलोक्य देवराजः पार्श्ववर्त्तिनं नारदमब्रवीत् देवर्षे! सूर्य्यप्रभादयः दानवांशसम्भूताः। श्रुतशर्म्माः मयां-शेन सञ्जातः। विद्याधराश्चेमे देवांशप्रभवाः। तस्मादयं देवासुरसंग्राम एव। भगवान् नारायणः श्रुतशर्म्मण एवं साहाय्यं करिष्यति। यतस्तत्सेनापतिर्दामोदरः विष्णो-रंशेन प्रादुर्भूतः। इत्थं नारदं प्रति देवराजे कथयति दामो-दरं रक्षितुं ब्रह्मगुप्तसुषेणयमदंष्ट्रप्रभृतयश्चतुर्दशमहारथाः समुत्तस्थुः। दामोदरस्तैर्मिलित्वा शत्रूनाचक्राम। दामो-दरः प्रकम्पनेन, धूमकेतुर्ब्रह्मगुप्तेन, महामायोऽतिबलेन, कालकम्पनस्तेजःप्रभेण, मरुद्वेगः वायुबलेन, वज्रपञ्जरः यमदंष्ट्रेण, कालचक्रश्च सुरोषेण सह द्वन्द्वयुद्धमकरोत्।

विक्षतदंष्ट्रे निहते चक्रवालनामा विद्याधरः सक्रोधं हर्षं प्रत्यभिगच्छन् तं सधनुष्कं चिच्छेद। अथ तं निप-तितं दृष्ट्वा अभिमुखमापतन्तं दैत्यनरपतिं स एव चक्रवालः सञ्जहार। ततश्चापरानपि चतुरो दैत्यवीरान् स एव यम-सदनमनैषीत्। ततो निर्घातनामा दितिजश्चक्रवालश्च विद्याधरः उभौ द्वन्द्वयुद्धं कुर्वाणौ अन्योन्यं रथं चूर्णया-मासतुः। अथ असिधरचक्रधरौ बहुचणं सुयुद्धं कृत्वा रण-

भूमौ शयानौ दृष्ट्वा उभे एव सैन्ये विषादमापतुः। ततः राजपुत्रः प्रकम्पनः कालकम्पनेन विद्याधरेण युध्यमानः क्षणेन रणभूम्यां शायितः। तञ्च निपतितं दृष्ट्वा तदनुयायिनः कालिकचण्डदत्तप्रभृतयो वीरा रथमारुह्य कालकम्पनमभ्यधावन्। महावीरः कालकम्पनः क्रमेण सर्वानेव रथेभ्यः निपात्य नाराचेन निजघान। तदालोक्य खेचरा भृशं सिंहनादमकुर्वन्, मनुजसैन्यानि तु परं विषादमापुः।

अनन्तरम् उन्मत्तकं प्रशस्तं विलम्बिकं धुरन्धरञ्च चतुरो वीरानाभिमुख्यमापततः एक एव महावीरः कालकम्पनः परिजग्राह, निजघान चावलीलयैव तानन्यांश्च बहून् महारथान्। तदवलोक्य सुगणो नाम राजपुत्रः क्रोधपूर्णेक्षणस्तमभिधावन् तुमुलं संग्राममकरोत्। परं रणपण्डितः कालकम्पनस्तमपि यमभवनातिथिमकार्षीत्। इत्थं चलति संग्रामे सहस्ररश्मिरस्तमगमत्। रणभूमौ शोणितपरिप्लुतायां कबन्धा नृत्तुः। एवं द्वितीयदिनसंग्रामे निर्वृत्ते उभयसैन्यानि रणाङ्गणं विहाय स्वं स्वं शिविरम् अभिययुः। अस्मिंश्च संग्रामे श्रुतशर्मपक्षीयास्त्रयः सूर्य्यप्रभपक्षीयाश्च त्रयस्त्रिंशत् महारथा निधनं गताः।

सूर्य्यप्रभः स्वजनानां बहूनां नाशात् सुदुःखितः शयनमन्दिरं गत्वा मन्त्रिभिः संग्रामविषयिणीं कथां कथयन् रात्रेः प्रथमं भागमतिवाहयति स्म। तदीया महिष्यः समवेताः बन्धुविनाशदुःखिताः क्षणं रुदित्वा परस्परं सान्त्ववादेन प्रबोधिताः शोकं व्यमयन्त। अनन्तरं तासां विविधा आलापाः प्रावर्त्तन्त। स्वभाव एव नारीणां यत् सुखे वा दुःखे

नानालापैस्ताभिः कालो नीयते इति। तासां काचित् राजनन्दिनी प्रोवाच आर्य्याः! कथमद्य आर्य्यपुत्रः एकाकी शयनं भजते? द्वितीयाब्रवीत् आर्य्यपुत्रोऽद्य बन्धुवियोग-व्याकुलः एकाकी शेते। तृतीयावदत् सत्यं यदि पुनरस्मिन् समये आर्य्यपुत्रः कामपि नवीनां कामिनीं प्राप्नुयात् तदा क्षणे चास्मिन् विस्मृतसर्वदुःखस्तया सह प्रमोदेनैव रजनी-मतिवाहयेत्। चतुर्थी अवादीत् यदि चार्य्यपुत्रः अत्यर्थं कामुकः, तथाप्यद्य कदापि नैव तादृशे व्यापारे रमेत। पञ्चमी प्राह आर्य्यपुत्रः कथमीदृशः स्त्रीषु लालसो भवति, वक्तुं पारयथ, राजानश्च नवीनां नवीनां राजकन्या-मासाद्य न च तृप्तिमाप्नुवन्ति च कथम्? एतदाकर्ण्य काचित् मनस्विनी प्राब्रवीत् राजानः अवस्थाभेदेन बहुवल्लभा भवन्ति। इत्थमालपन्तीषु तासु सा विभावरी व्ययासीत्।

परस्मिन्नहनि संग्रामे प्रवृत्ते सुनीथो मयमब्रवीत् हा कष्टं स्वपक्षान् विविधशस्त्रास्त्रपारगानपि महारथानव-रुद्धवत्सु प्रतिवीरेषु एकाकी सेनापतिः प्रभासः स्वच्छन्दं व्यूहं भित्त्वा प्रतिबलसागरं प्रविष्टः। न जाने प्रभासस्य का दशा भविष्यतीति। एतदाकर्ण्य सुवासकुमारोऽब्रवीत् वत्स! त्रिलोकी समवेतापि प्रभासस्य न किमपि कर्त्तुं शक्नुयात्, केवलाः खेचरास्तस्य किं करिष्यन्ति? विदित-प्रभासपराक्रमाणामपि युष्माकं कथमीदृशी शङ्का? एवमा-लापेषु प्रवृत्तेषु कालकम्पनः प्रभासमभिगच्छन् तुमुलं युद्ध-मकरोत्। प्रभासस्तु अवलीलयैव तं शरजालैः समाच्छाद्य निजघान। तदवलोक्य मानवबलानि सिंहनादेन गगन-

स पूरयन्, खेचरास्तु परं विषादमाविविदिरे। अथ विद्युत्प्रभो नाम खेचरः प्रभासं निहन्तुमाजगाम। प्रभासोऽपि तं विचित्रकौशलेन रणभूमौ न्यपातयत्।

एतदाकर्ण्य श्रुतशर्म्मा स्वपक्षान् अब्रवीत् हे वीराः! प्रभासोऽयम् अस्माकं द्वौ महारथौ निहतवान्, तदयं न चन्तव्यः, सर्वैः समवेतैरयं निहन्यतामिति। तदाकर्ण्य अर्द्धरोमा, विक्रोशनः, इन्द्रमाली, कान्तकः, वराहस्वामी, दुन्दुभिः, गर्द्दभरथः, कुमुदपर्वतश्चेति अष्टौ महारथाः समवेताः प्रभासमभिधावन्ति स्म। महावीरः प्रभासः अनवरतं शरनिकरान् वर्षन् तेषाम् अश्वान् सारथीन् ध्वजान् धनूंषि च क्रमेण छित्त्वा सर्वानेव शमनभवनं प्राहिणोत्। इत्थं जयति प्रभासे आकाशात् पुष्पवृष्टिरपतत्। असुरसैन्यानि मानवसैन्यैः सह परं हर्षमापुः, विद्याधराश्च निरुत्साहतां जग्मुः।

अथ श्रुतशर्म्मणा चोदिताः काचरकदिण्डिमालिविभावसुधवलनामानो वीराश्चत्वारः सन्निपत्य प्रभासम् अरुन्धन्। प्रभासः एकैकेन बाणेन तेषां ध्वजान् धनूंषि सारथींश्च निहत्य अष्टभिर्बाणैः शिरांसि चिच्छेद। ततश्चान्यानपि पञ्च योधान् सम्मुखमापततः शरववर्षेण समन्तात् व्याप्नुवतो दृष्ट्वा प्रभासः नारायणास्त्रेण सर्वानेव पातयामास। तदनन्तरं श्रुतशर्म्मणा प्रेरिता दशाख्यादयः अपरे दश योधाः प्रभासमवरुध्य घोरं युद्धमकुर्वन्। अत्र च सूर्यप्रभप्रेरितौ सकुञ्जरकुमारप्रहस्तौ व्यूहाग्रं विहाय समस्तौ आकाशमार्गेण प्रभासान्तिकमुपगम्य पादचारेण युध्यमानौ

रथस्थं प्रद्दमं नियमञ्च नाम वीरौ समाक्रम्य तयोर्धनुषी सारथी च निहत्य व्याकुलावकार्ष्टाम्। अथ तौ भयाकुलौ आकाशमुत्पतितौ अपि सकुञ्जरकुमारप्रहस्तौ आकाश-मुत्पत्य धावतः स्म। एतदवलोक्य सूर्य्यप्रभः महाबुद्धिमचल-बुद्धिञ्च तयोः सारथ्ये नियुज्य प्रैषयत्। अथ सकुञ्जरकुमार-प्रहस्तौ मायया अदृश्यौ सिद्धाञ्जनप्रयोगेण प्रद्दमनियमौ तथा वाणैरवाकिरतां यथा तौ क्षणमपि रणे स्थातुमशक्तौ भयात् पलायाञ्चक्राते। ततः प्रभासः अपरैर्द्वादशभिर्वीरैः समं युध्यमानः तेषां चापानि चिच्छेद। प्रहस्तस्तेषां सार-थीन् हतवान्। सकुञ्जरकुमारस्तेषाम् अश्वसैन्यानि न्यपा-तयत्। इत्थं ते द्वादश वीरा हताश्वसारथिचापाः शरैः क्षतविक्षतदेहाः संग्रामं परित्यज्य पलायिताः।

तदवलोक्य श्रुतशर्म्मणा क्रोधपरीतेन प्रेरितौ अपरौ द्वौ वीरौ शत्रुहस्तं प्राप्य निधनं गतौ सूर्य्यप्रभसैन्यानि अभ्य-नन्दयताम्। अथ श्रुतशर्म्मा महारथैश्चतुर्भिः परिवृतः स्वयं योद्धुमुपाययौ। ते च प्रभासादयस्त्रयस्तमभिधावन्ति स्म। वीराणां शरवृष्टिभिरन्तरीक्षं समाच्छन्नमदृश्यत। अत्रान्तरे च पूर्वभग्ना अपि वीराः समेत्य श्रुतशर्म्मणः साहा-य्यार्थमुपाधावन्। सूर्य्यप्रभः प्रभासादीनां साहाय्याय प्रज्ञाढ्यप्रभृतीन् बन्धून् भूतासनविमानेन प्रैषयत्। तदव-लोक्य अपरे च सर्वे विद्याधराः श्रुतशर्म्माणमन्वसरन्। उभय-सैन्येषु तुमुलः संग्रामः प्रावर्त्तत। क्रमेण बहूनि सैन्यानि उभयोरेव निधनं जग्मुः। श्रुतशर्म्मा बहूनां सैन्यानां क्षयं दृष्ट्वा क्रोधारुणाक्षः शतानीकमभ्यधावत। इत्थमसंख्येषु

सैन्येषु रणशय्यायां निपतत्सु, सन्ध्याकाल: समुपस्थित:। देवगन्धर्वादय: तादृशं घोरं संग्रामं दृष्ट्वा विस्मयमगमन्। शतश: कबन्धा: समुत्थिता नृत्यन्त: भूतानामानन्दमहोत्सवमसूचयन्। विद्याधरसैन्यानि सविषादं रणात् न्यवर्त्तन्त। असुराश्च सहर्षं जयलाभजनितोल्लासा: स्वं शिविरं प्रत्यगच्छन्।

अत्रान्तरे द्वौ विद्याधरौ सुमेरुणा समादिष्टौ श्रुतशर्म्माणं परित्यज्य सूर्य्यप्रभमभिजग्मतु:, ऊचतुश्च सप्रणामं प्रभो! आवां विद्याधरौ, महायानसुमायनामानौ। आवां विद्याधरगणालक्षितौ सिंहबलाख्येन विद्याधरेण सह महावेतालसिद्धये श्मशानमेकमध्यवात्स्व। कदाचित् शरभाननाख्या महाप्रभावा काचित् योगिनी आवामुपाययौ। आवाञ्च सप्रणामं तामपृच्छाव का भवती, क्व वा तिष्ठति, यत्र च स्थिता, तत्र किमपूर्वं वस्तु विद्यते? योगिनी प्राह अहं योगिनीभि: परिवृता प्रभुं द्रष्टुं महाकालनिकेतनं गत्वा अपश्यम् कश्चिद् वेताल: प्रभुमुपेत्य अब्रवीत् प्रभो! अस्माकं सेनाध्यक्षस्य या कन्यास्ति सा विद्याधरचक्रवर्त्तिन: पत्नी भवितेति सिद्धादेश:। परन्तु पश्यतु देव: तेज:प्रभो नाम विद्याधरस्तां बलात् हरति, तदेनामस्मात् मोचयितुमर्हति देव इति। तदाकर्ण्य भगवान् सदयोऽस्मान् प्रति तस्या मोचनाय समादिशत्। वयञ्च आदिष्टा एव आकाशचारिणं तेज:प्रभं कन्यां हरन्तं रुरुधिम। तस्मिंश्च तेज:प्रभे कन्येयं श्रुतशर्म्मण: कृते हृतेति उक्तवत्यपि वयं बलात् तस्मात् मोचयित्वा प्रभुमभ्येत्य तां समर्पितवत्य:। भग-

वानपि कन्यां तत्स्वजनाय समर्पितवान्। इदमेकमद्भुतं वस्तु दृष्ट्वा प्रभुं प्रणम्य कियन्तं कालं तत्र स्थित्वा अत्रागतास्मि।

एतदाकर्ण्य वयं पुनरपि तामवादिष्म योगिनि! नास्ति भवत्याः किमप्यविदितं, तदाख्यातु भवती, को विद्याधरचक्रवर्त्ती भविष्यतीति। एवं पृष्टा सा सूर्य्यप्रभ इति प्रत्यवादीत्। तदाकर्ण्य सिंहबलः प्राह इन्द्रादयो देवा यस्य पक्षाः तस्य पराजयो नैव सम्भाव्यते। योगिनी प्रत्यभाषत साम्प्रतं मद्वचसि युष्माकमप्रत्ययोऽस्तु, परमचिरभाविनि विद्याधरासुरसंग्रामे सिंहबलोऽयं युष्मत्सु पश्यत्सु मानवेन निहनिष्यते। इत्थं भाविनीं घटनां दृष्ट्वा युष्माकं मम वचसि विश्वासो भवितेति प्रोच्य तस्यां प्रचलितायाम् अद्य च सिंहबलं निहतं दृष्ट्वा योगिन्या वाक्यं सत्यं मन्यमानावावां भवन्तं शरणं गताविति।

सूर्य्यप्रभः शृण्वत्सु मयादिषु विद्याधरमुखादेतदाकर्ण्य सन्तुष्टः तौ संगृह्य समुचितेन सम्मानेन समवर्द्धयत्। श्रुतशर्म्माणं वार्त्तामिमां श्रुत्वा चिन्ताकुलं देवराजो विश्वावसुमुखेन नानाविधैः प्रबोधवाग्भिः समसान्त्वयत्। सूर्य्यप्रभः शुभया वार्त्तया सुलक्षणेन च परमानन्दितः सचिववर्गैः शय्यागृहमगात्।

---

## ऊनपञ्चाशत्तरङ्गः ।

---

अथ शयनतलगतः सूर्य्यप्रभः वीतभीतिं नाम अमात्य-मब्रवीत् सखे ! निद्रां न लभे, तत् त्वं वीरधर्म्माश्रितां कामपि कथामपूर्वां वर्णयित्वा मम चित्तं विनोदय । वीतभीतिस्तथेत्युक्त्वा कथामारेभे ।

आसीत् पुरा उज्जयिन्यां महासेनो नाम नृपतिः । तस्य चाशोकवती नाम परमसुन्दरी महिषी अभवत् । तत्र च गुणशर्म्मा नाम सर्वशास्त्रदर्शी कश्चिद् ब्राह्मणयुवा सततं राजानुचरः राजानमनन्दयत् । एकदा अन्तःपुरवर्त्ती राजा सर्वेषु समासीनेषु गुणशर्म्माणं नर्त्तितुमादिदेश । गुणशर्म्मणा शिष्टाचारविरोधात् अस्वीकृतेऽपि राजा राज-महिष्या आग्रहात् तं पुनरपि समादिशत् । स च राजा-देशलङ्घनभीतः कथमपि सम्मतः प्रथमं साङ्गविक्षेपं नृत्य-मारब्धवान् । तदवलोक्य राजा राजमहिषी च भृशं विस्मितौ ननन्दतुः ।

नृत्यानन्तरं राजा तस्मै वीणां वादयितुं प्रददौ । स तु वीणादिषु सुनिपुणस्तां वीणामादायैव नेयं प्रशस्तेति अन्यां वीणां प्रार्थयमानः समभाषत देव ! अस्या वीणाया-स्तन्त्रीषु कुक्कुरलोमानि विद्यन्ते इति । तदैव तत् परीक्ष्य सुविस्मितः अपरां वीणामानाय्य दत्तवान् । गुणशर्म्मापि तया वीणया संयोज्य मधुरेण स्वरेण सङ्गीतं कुर्वति राज-

दम्पती मदुक्तं मन्यमानौ परां प्रीतिमासेदतुः। राजा तस्य यन्त्रविद्यानैपुण्यमवलोक्य बहु प्रशस्य तं मन्त्रिणमकार्षीत्। राज्ञी अशोकवती गुणशर्म्मणो रूपेण तादृशेन गान्धर्वनैपुण्येन च सानुरागा व्यचिन्तयत् यद्येनं गुणनिधिं नासादयेयं तज्जीवनं मे वृथा। एवमवधार्य्य राजानमुपेत्य गुणशर्मणस्तादृशीं यन्त्रशक्तिं बहु प्रशस्य तस्मात् वीणां शिक्षिष्ये इति राजानमभ्यर्थयाञ्चक्रे। राजा देव्यास्तथाविधां प्रवृत्तिं निशम्य ससन्तोषं गुणशर्म्माणमाहूय राज्ञ्याः शिक्षार्थमादिदेश। स च तथेति राजाज्ञां शिरसि निधाय शुभे दिवसे शिक्षा आरब्धव्येति कथयित्वा गृहमगात्।

अथ शुभेऽहनि प्राप्ते गुणशर्म्मा राज्ञीं वीणां शिक्षयितुमारेभे। गच्छति च काले वीणाशिक्षको गुणशर्म्मा देव्याश्चरित्रं प्रति सन्दिहानो राज्ञः भोजनसमये उपस्थितः पाचकस्य व्यञ्जनं परिविशतो हस्ते व्यञ्जनं दृष्ट्वैव तत् दातुं तं न्यवारयत्। कथं कथमिति राज्ञा पृष्टश्चाब्रवीत् देव! व्यञ्जनमिदं विषाक्तं परीक्षतां महाराजः। यदि कोऽपि इदं भुक्त्वा विषमूर्च्छितो भवेत् तमहं निर्विषं करिष्यामीति। तदाकर्ण्य राजा तद् विषं पाचकमेवाभोजयत्। भक्षित एव मूर्च्छितं पाचकं स गुणशर्म्मा सत्वरं मन्त्रबलेन निर्विषमकरोत्। अथ राज्ञा इमं व्यापारमनुयुक्तोऽसौ पाचकः प्राब्रवीत् देव! गौड़ाधिपतिः राजा विक्रमशक्तिः भवन्तं विषं भक्षयितुं मां नियुक्तवान्। एतदर्थश्चाहं देवस्य पाकशालायां पाचकत्वमङ्गीकुर्वन् अवसरं प्रतीक्षमाणोऽध्यतिष्ठम्। अद्य तु सुयोगमनवबुध्य व्यञ्जनं सविषं दातुं

देवाय समुपस्थित एव अनेन महात्मना विदितः। तदिदानीं यथा रोचते देवस्येति अभिधाय तस्मिन् विरते राजा अविलम्बमेव तं कारायां बद्धा गुणशर्म्माणं प्रति सन्तुष्टः शतं ग्रामान् तस्मै पुरस्कार।

अथ गच्छता कालेन अशोकवती अतीवानुरक्ता गुणशर्म्माणं प्रति विविधान् विलासान् दर्शयित्वापि अकृतार्था आत्मनः दुष्टं मनोरथं वाचैव व्यक्तीचकार। तदाकर्ण्य गुणशर्म्माब्रवीत् राजमहिषि! भवती राजगेहिनी, भृत्यम् ईदृशं प्रार्थयितुं नार्हति, अस्माच्च असतो मनोरथात् विरमत्। एवमुक्ता अस्वीकुर्वन्तमपि तं सा दुराचारा बहु प्रलोभ्य पुनःपुनर्निर्बन्धमकरोत्। गुणशर्म्मा च विहस्यैव पुनःपुनस्तं परिजहार। अथ अशोकवत्यां तदा कुपितायां त्वां निहत्य स्वयमपि मरिष्यामीति भयं प्रदर्शयन्त्यामपि स गुणशर्म्मा अधर्म्मात् तदपि वरमिति अमन्यत, न तु तां भेजे। सदुपदेशः न कदापि असतीनामन्तःस्थानं लभते। तथापि सा तं प्रति नितरामासक्ता पुनःपुनः स्वं मनोरथं साधयितुं तमनुरुरोध। गुणशर्म्मा अतः परमुपदेशो निष्फल इति विचार्य्य कौशलेन तां सान्त्वयितुं वाचनिकीमाशां प्रदर्श्य कियन्तं कालं विलम्बितुमनुरोधं कृतवान्। नष्टा राज्ञी आपततस्तेनैव समाश्वासेन शान्तिमलभत।

अनन्तरं गच्छति काले राजा महासेनःससैन्यः समागत्य सोमेश्वरस्य राजधानीमवरुरोध। तदाकर्ण्य गौड़ेन्द्रो विक्रमशक्तिः सक्रोधं समागत्य तं ससैन्यमाचक्राम। ततश्च राजा महासेनेन सङ्कटमापतितं विलोक्य किं कर्त्तव्य-

मित्यनुयुक्तो गुणशर्म्मा समभाषत देव ! उत्कण्ठां मा कथाः, सत्वरमेव मया विपदोऽस्याः परित्राणाय प्रतीकारः कश्चित् क्रियते। एवमाख्याय राजानं समाश्वास्य रजन्यां योगबलेन नेत्रयोरन्तर्धानाञ्जनं प्रयुज्य च अलक्षितं विक्रमशक्तेः स्कन्धावारमविशत्। प्रविश्य च निद्रितं विक्रमशक्तिं प्रबोध्य प्रोवाच राजन्! देवदूतोऽस्मि, भवान् खलु विष्णुभक्तः, तस्माद् देवो नारायणस्तव हितार्थं मां भवत्सन्निधिं प्राहिणोत्, समदिशच्च भवान् महासेनेन सन्धत्तां, नो चेत् महान्तमनिष्टं लप्स्यते, भवता दूतमुखेन सन्धिं कर्त्तुं प्रार्थिते स राजा अवश्यमेव तत्र संमंस्यते इति।

एवमुक्त्वा गुणशर्म्मणि विरते राजा विक्रमशक्तिस्तथा दुष्प्रवेशे स्कन्धावारे मानवः कः प्रविशेदिति विचिन्त्य सत्यमेव तत् मत्वा सविस्मयस्तं देवं निश्चित्य आत्मानम् ईश्वरानुगृहीतममन्यत, सममन्यत च तस्मिन् प्रस्तावे। ततश्च तस्मिन् गुणशर्म्मणि अञ्जनप्रभावेण अन्तर्हिते राजा विक्रमशक्तिस्तत्र दृढं विश्वासमकार्षीत्। अथ गुणशर्म्माणम् इत्थं कार्य्यं साधयित्वा सकाशमुपस्थितं दृष्ट्वा राजा महासेनः अवगतवृत्तान्तस्तं कण्ठे धृत्वा अत्यर्थमादृतवान्। प्रातरेव विक्रमशक्तेः कश्चिद् दूतः समागत्य राज्ञा सह सन्धिं स्थापयित्वा विक्रमशक्तिसकाशं प्रायात्। स च तस्मात् आक्रमणात् विरम्य स्वां राजधानीं प्रतस्थे। अथ महासेनः गुणशर्म्मप्रभावेण सोमेश्वरं निर्जित्य उज्जयिनीं प्रतिनिववृते।

अथैकदा राजानं गुणशर्म्मणा सह नदीतीरवर्त्तिनि

उपवने गतं कश्चित् कृष्णसर्पः सहसा अदशत्। अशेषगुणा-करो गुणशर्म्मा सद्य एव तं निर्विषमकार्षीत्। कदाचित् नरपतिर्महासेनः ससज्जः पुनः विक्रमशक्तिमाचक्राम। स च विक्रमशक्तिस्तमभ्याजगाम। उभयोर्घोरः समरः प्रावर्त्तत। ततश्च द्वन्द्वयुद्धे विक्रमशक्तिना पातितं निरस्त्रं महासेनं स एव गुणशर्म्मा समजीवयत् न्यहनच्च विक्रम-शक्तिम्। ततश्च महासेनः गुणशर्म्मणः प्रभावेण विक्रम-शक्तेः सर्वं राज्यमात्मासात्कृत्य उज्जयिनीं प्रत्याजगाम, निनाय च निष्कण्टकः सुखेन कालम्।

एतावत्यपि समतिक्रान्ते काले अशोकवत्या गुण-शर्म्माणं प्रति सञ्जातश्चित्तानुरागः न शान्तिं लेभे, प्रत्युत वव्रधे एव। केनोपायेन गुणशर्म्माणं लभेयमिति चिन्तयैव सा कालमनयत्। यदा तु अपश्यत् गुणशर्म्मा प्राणानपि त्यक्ष्यति, तथापि मां न भजिष्यत इति तदा सञ्जातकोपा. तद्विनाशाय साभिमानं राजानमुपेत्य मिथ्या अभियोग-मकरोत्। नाथ ! विश्वस्तमुखात् श्रुतं गुणशर्म्मा भवन्तं विनाशयितुकामो गौड़पतेः सकाशादर्थलाभमाकाङ्क्षन् तत्समीपं दूतमेकं प्राहिणोत्। तस्मिंश्च दूते गौड़ेश्वरमुपेत्य गुणशर्म्मणोऽभिसन्धिं प्रकटयति तस्य राज्ञः कश्चिद् विश्वस्तः सचिवः विना स्वार्थं भवद्बधं स्वयं सम्पादयितुं प्रतिजज्ञे। प्रणिधाय च गुणशर्म्मणा प्रयुक्तं दूतमवरुध्य विषप्रदानेन भवन्तं नाशयितुं तं पाचकमुपदिश्य प्रैरयत्। अथान्तरे गुणशर्म्मप्रयुक्तेन दूतेन कौशलमुद्भाव्य तस्मादवरोधकष्टात् पलाय्य गुणशर्म्मसकाशमेत्य सर्वस्मिन् वृत्तान्ते समावेदिते

गुणशर्म्मासौ कुपितस्तं पाचकं विषप्रयोक्तारं कारायाञ्च विनाश्य अथ तस्य पाचकस्य वार्त्तां जिज्ञासुकामानुपस्थितान् तदीयान् भार्य्याजननीकनिष्ठसहोदरान् कारागारमवरुध्य तस्य पत्नीं जननीञ्च व्यवधीत्। भ्राता तु तस्य प्राणभयात् पलायमानः ममान्तःपुरमविशत्। मयि च तन्मुखात् सर्वं वृत्तान्तं शृण्वत्यां सहसा तं गुणशर्म्माणं वेगेन ममालयं प्रविशन्तं दृष्ट्वा असौ भयात् क्व पलायितस्तदहं न वेद्मि। गुणशर्म्मा तु सहसा मम सम्मुखमेत्य कर्त्तव्यविमूढ़ इव क्षणं किमपि चिन्तयन्नतिष्ठत्। ततश्च मया तदवस्थस्य तस्य आगमनप्रयोजनं परिपृष्टः स मूढ़मतिर्मत्कामुकः प्रत्युवाच यदि त्वं मम मनोरथं न पूरयेः, तदाहं प्राणान् परित्यक्ष्यामीति एवमभिधाय मम चरणयोरपतत्। तदवलोक्य भयेन पादावाकृष्य प्रद्रवन्तीं मां स दुरात्मा समुत्थाय बलात् समालिलिङ्ग। क्षणे च तस्मिन् पल्लविका नाम मदीया दासीं तत्रोपस्थितां दृष्ट्वा स दुराचारः पलायितः। यदि पल्लविका तत्र नागमिष्यत् तदासौ मम सतीत्वम् अवश्यमेवानाशयिष्यत्।

स्त्रीषु विश्वस्तानां महतामपि विवेकशक्तिर्विलुप्यते। राजा अशोकवत्यास्तद्वचनं निशम्य क्रोधज्वलितः प्रत्यवादीत् प्रिये! समाश्वस! सत्वरमेव तं दुराचारं यमसदनं प्रेषयामि, परं कौशलेनैतत् कार्य्यं सम्पाद्यं नो चेत् लोकेषु महती अकीर्त्तिर्भविता। स खलु पञ्चधा मां विपद्भ्यः समरक्षदिदं सर्वविदितं तदस्य ईदृशी नृशंसता न लोकेषु प्रकटनीया। एवमुक्ता नृपतिः सभामगमत्।

क्रमेण सर्वे एव पारिषदाः सामन्ताश्च समेत्य राजानं प्रणम्य यथास्थानमुपाविशन्। गुणशर्म्मा तु राजसभां गन्तुमुद्यतः पथि विविधानि दुर्निमित्तानि पश्यन् प्राणसंशयं सम्भावयन् राज्ञः शुभं भूयादिति मनसि चिन्तयंश्च क्रमेण सभामेत्य राजानं प्रणम्य च स्वमासनमध्यतिष्ठत्। राजा गुणशर्म्मणो यथापूर्वं समादरमकृत्वा वक्रचक्षुषा तं प्रति कोपकटाक्षमपातयत्। गुणशर्म्मा सहसा नृपतेर्भावान्तरमिदं दृष्ट्वा नितरां व्यथितः शङ्कितश्चाभवत्।

अथ राजानं सहसा सिंहासनात् उल्लम्फ्य स्कन्धमारूढ़मवलोक्य गुणशर्म्मा प्रोवाच प्रभो! भवानस्माकं स्वामी वयञ्च भृत्याः, भृत्येषु च प्रभोः सर्वतोमुखी प्रभुता, तद् भवान् सिंहासनमलङ्कृत्य यथारुचि समाज्ञापयतु। एवमुक्त्वा तस्मिन् विरते सर्वैर्मन्त्रिभिः प्रबोधितो राजा पुनः सिंहासनासीनः प्रावदत् मन्ये सर्वैरेतत् विदितं यदहं मौलान् मन्त्रिणोऽविगणय्य गुणशर्म्मणि मन्त्रित्वमदाम् मन्ये च आत्मना सदृशमेनम्। परमसौ गुणशर्म्मा अर्थलोभपरः गौड़ेश्वरसन्तोषाय मां विनाशयितुमुद्यत, आसीदित्यभिधाय अशोकवतीवर्णित सर्वम् अलीकं व्यापारं सर्वेषां समक्षमकीर्त्तयत्।

गुणशर्म्मा एतद्राजवचनमाकर्ण्य चमत्कृतः प्रत्यवादीत् महाराज! वृत्तान्तोऽयं कस्य मुखादाकर्णितो देवेन। राजाब्रवीत् यद्येतदसत्यं तर्हि त्वं व्यञ्जने विषं कथं विदितवान्? ज्ञानबलेन सर्वं विज्ञायते इति गुणशर्म्मणा प्रत्युक्ते विपक्षा मन्त्रिणस्तन्नागणयन्। गुणशर्म्मा पुनरब्रवीत् याथार्थ्यमननुसन्धाय सहसा कमपि दूषयितुमयुक्तं विशे-

र्त्तं राज्ञः। अविविकं नृपं विद्वांसो बहुशो विगर्हयन्ति। एतदाकर्ण्य राजा नितरां क्रुद्धः वेगेन निपत्य गुणशर्म्माणम् एकया छुरिकया आजघान। तदवलोक्य अन्येऽपि राजकिङ्करा गुणशर्म्माणं प्राहरन्। तदा च गुणशर्म्मा तं तं प्रहारं सोढुमशक्नुवन् समुत्थाय सर्वानेव तान् निरस्त्रान् कृत्वा केशेषु केशेषु बद्ध्वा सभामण्डपान्निरगात्। निर्गत्य च अनुधावमानान् शतम् आततायिनो विनाश्य अञ्जलस्थेन अन्तर्धानाञ्जनेन नेत्रे प्रलिप्य अदर्शनं गतः। क्षणेन च दक्षिणापथे उपनीतः समचिन्तयत् नियतमेव दुश्चारिण्या अशोकवत्याः परामर्शात् राजा निर्विवेकः कृतवानिदमकार्य्यम्। अद्य विदितं दुश्चारिणीनां न किमप्यसाध्यं साधूनाञ्च राजसेवा सर्वथैव अकरणीयेति।

एवं चिन्तयन् गुणशर्म्मा कमपि ग्राममासाद्य अपश्यत् कश्चिद् ब्राह्मणः वटतरुमूले समासीनः कतिपयान् छात्रानध्यापयतीति। क्रमेण तत्रागत्य कृतप्रणामं तम् अध्यापकः सादरः आतिथ्येन अभ्यर्च्य परिचयमप्राक्षीत्। गुणशर्म्माब्रवीत् ब्रह्मन्! सामवेदस्य द्वादशशाखाः, ऋग्वेदस्य द्वे शाखे यजुषः सप्त शाखाः, अथर्वणश्च एका शाखा मयाधीताः। उपाध्यायः गुणशर्म्मणो विद्यापरिचयेन विस्मितस्तं देवमिवोपाचरत्। गुणशर्म्मावदत् ब्रह्मन्! उज्जयिन्यामादित्यशर्म्मा नाम कश्चिद् ब्राह्मणः प्रतिवसति स्म। शैशव एव तस्य पितरि स्वर्गते माता च पतिमनुजगाम। ततश्च पितृमातृहीनोऽसौ तस्मिन्नेव नगरे मातुलभवनवासी वेदान् कलाश्च शिक्षितुं प्रावर्त्तत। क्रमेण कृत-

विद्यस्य तस्य जयव्रतसेविना केनचित् परिव्राजकेन सख्य-मभूत्। स च परिव्राट् तेन मित्रेण सह श्मशानं गत्वा यक्षीसिद्धये होममारेभे। कदाचित् कापि सर्वाभरण-भूषिता दिव्ययोषित् सखीगणपरिवृता स्वर्णविमानेन जुह्वतस्तस्य समीपमभ्येत्य मधुरवचसा प्राब्रवीत् अहं विद्यु-न्माला नाम यक्षी, एताश्च मे परिचारिण्यः, तदासां यामिच्छसि गृहाण। मत्प्राप्तिसाधनं मन्त्रप्रकरणञ्चा-न्यत्। तत् मदर्थं वृथा परिश्रममकृत्वा सन्तुष्टो भव। एवमुक्ता प्रबोधितोऽसौ परिव्राट् सम्मतस्तस्याः परिचा-रिणीनां मध्यात् एकां जग्राह। विद्युन्माला चान्तर्दधे।

अथ आदित्यशर्म्मा तां परिव्राजकस्य यक्षीमपृच्छत् अस्ति कापि विद्युन्मालायाः अपि श्रेयसी यक्षी? यक्षी प्रोवाच भद्र! विद्युन्माला, चन्द्रलेखा, सुलोचना चैता-स्तिस्र एव श्रेष्ठा यक्षकन्याः। तासु च सर्वश्रेष्ठा सुलोचना। एवमुक्ता सा यथासमयमागमिष्यामीति प्रतिज्ञाय अन्त-र्हिता। परिव्राडपि तेन मित्रेण सह स्वमावासं प्रस्थितः। सा तु यक्षी प्रतिदिनं यथासमयमागत्य तस्मै परिव्राजकाय विविधानि भोग्यवस्तूनि प्रदाय तं यथासुखं परिचरति स्म। एकदा आदित्यशर्म्मा यक्षकन्यायाः समक्षं परिव्राजकं सुलोचनासाधनार्थं मन्त्रविधिमपृच्छत्। यक्षी प्रोवाच ब्रह्मन्! दक्षिणस्यां दिशि अवितुन्तुनामके कानने समुद्रतट-वर्त्तिनि भदन्तो नाम प्रतिवसति कश्चित् यतिः। स एव अस्या यक्षकुमार्याः साधनमन्त्रं सम्यक् वेत्ति। आदित्य-शर्म्मा एतदाकर्ण्य तयैव यक्ष्यां सह भदन्ताश्रमाभिमुखं

प्रतस्थे। तत्र चागत्य वत्सरत्रयं तस्या यक्षकन्यायाः साहाय्येन तं भदन्तं सम्यक् पर्य्यचरत्। भदन्तश्च तस्य परिचर्य्यया सम्प्रीतः तस्मै सुलोचनासाधनमन्त्रमदात्। आदित्यशर्म्मणि मन्त्रबलेन विजने यथाविधि होमं कुर्वति सुलोचना विमानेनाविर्भूय तमब्रवीत् ब्रह्मन्! आगच्छ, त्वं मन्त्रबलेन मामाराधितवान्, परन्तु अद्यारभ्य षण्मासान् मे कुमारीव्रतं चेत् रक्षेः, तर्हि त्वं महावीरं सम्भृद्धं सुलक्षणं पुत्रमेकं लप्स्यसे। तच्च तत्र सुसम्मतं विज्ञाय सुलोचना स्वां पुरीं तमनयत्।

आदित्यशर्म्मा अलकायां सुलोचनया सह वसन् षण्मासान् आसिधारं व्रतम् अन्वतिष्ठत्। कुवेरस्तस्य व्रतेन सम्प्रीतस्तस्मै सुलोचनामदात्। अहं तस्यां सुलोचनायामजाये। पिता मां गुणवन्तं भाविनं सम्भाव्य गुणशर्म्माणं नाम्नाकरोत्। अहम् अलकायामेव वसन् तत्रत्यात् मणिवराख्यात् यक्षपतेः सकाशात् वेदान् कलाश्च सर्वाः शिक्षितवान्। कदाचित् देवेन्द्रे धनपतिसकाशमागते सर्वे समुत्थाय तं संवर्द्धयामासुः। पिता तु मम अनवहिततया न समुत्थानादिकमकरोत्। तेन च परिकुपितः स देवराजस्तं शशाप आदित्यशर्म्मन्! त्वमलकानिवासं नार्हसि, मर्त्यलोकं गच्छ। ततश्च पिता मे सुलोचनया सह बहु अनुनीतः स क्रोधं संहृत्य अवादीत् नाहं मृषा ब्रवीमि, तत्ते पुत्रो मर्त्यलोकं व्रजतु, पुत्र एव पितुरात्मेति श्रूयते इति।

एवमुक्त्वा देवराजे अन्तर्हिते पिता मां नीत्वा उज्जयिन्यां मातुलभवने संरक्ष्य प्रातिष्ठत। कोऽतिवर्त्तते

भाग्यम्। तत्र च तिष्ठतो मम दैवगत्या तत्रत्येन राज्ञा सख्यमासीत्। इत्युक्त्वा राजसम्बद्धं सर्वं वृत्तान्तमामूलात् समाख्याय गुणशर्म्मा अद्य भवदन्तिकं प्राप्तोऽस्मीति समवर्णयत्।

एतत् सर्वमाकर्ण्य ब्राह्मणः प्रावदत् अहमग्निदत्तो नाम भवदागमनेन कृतार्थोऽस्मि, मद्गृह एव स्थित्वा मामाप्यायस्व। एवमुक्त्वा गुणशर्म्माणं स्वं गृहमनयत्। गुणशर्म्माणं तस्य ब्राह्मणस्य निर्बन्धेन तद्गृहमभ्येत्य कृतस्नानं स ब्राह्मणः वसनाभरणादिना समभ्यर्चयत्। अभोजयच्च स्वादूनि द्रव्याणि। अथाग्निदत्तः लक्षणपरीक्षणव्याजेन सुन्दरीं नाम स्वां कन्यां तत्समक्षमानयत्, गुणशर्म्मा कन्याया रूपेण विमोहितः तस्या लक्षणानि दृष्ट्वावदत् ब्रह्मन्! योगेन अस्या नासिकायाम् ऊर्वोश्च कतिपये तिला दृश्यन्ते, तदस्याः कतिपयाः सपत्नाः सम्भविष्यन्तीति। अग्निदत्तः गुणशर्म्मणो विद्यापरीक्षार्थं पुत्रेण सुन्दर्य्यास्तत्तत्प्रदेशेषु तिलाः सन्ति न वेति परीक्षयाञ्चक्रे। ततश्च परीक्षया सविस्मयः विजने गुणशर्म्माणं नीत्वा कन्यां मे गृहीत्वा अत्रैव मद्गृहे वसेति अनुरुरोध। गुणशर्म्मा प्राब्रवीत् ब्रह्मन्! सत्यमेव भवदाश्रये स्थिते परमं सुखं भवेत्, परं राजापमानसन्तप्ते मदीये हृदये साम्प्रतं का प्रीतिः? स्त्रीप्रभृतयश्च सुखिनमेव सुखयन्ति, असुखिनन्तु दुःखयन्त्येव। स्वयमनुरक्ता स्त्रियः न कदापि व्यभिचरन्ति; परम् अशोकवतीव पितृदत्ता कन्या प्रायेण व्यभिचरति। अन्यच्च अस्मात् प्रदेशादुज्जयिनी सन्निहिततरा। अहमत्र

निवसामीति राजा महासेनः यदि शृणुयात्, तर्हि अत्रापि आगत्य मां पीड़यिष्यति। तदहं तीर्थेषु परिभ्रमन् एतज्जन्मपापानि चालयित्वा देहं त्यजन् निर्वृतिमाप्स्यामीति मतिमकरवम्।

एतदाकर्ण्य अग्निदत्तोऽब्रवीत् वत्स! यदि अज्ञानाम् अवमानैः भवादृशा अपि व्याकुलीक्रियन्ते तदा द्रुमसानुमतां किमन्तरम्? आकाशे लोष्ट्रनिक्षेपे निक्षेप्तुरेव उपरि तत् प्रायशः पतति, तथा अल्पेनैव कालेन राजासौ स्वस्या अज्ञतायाः फलमवाप्स्यति राजलक्ष्मीर्न हि तादृशमज्ञं निर्विवेकं चिरमाश्रयेत्। किञ्च एकामशीलवतीं दृष्ट्वा सर्वां स्त्रियं प्रति भवतामविश्वासो नैव युज्यते। कन्या च मम सुलक्षणेति भवता स्वयं परीक्षिता। तत्कथं तस्या अकारणं दोषं सम्भावयति भवान्। यदि चोज्जयिनी सन्निहितेति भीतोऽसि, तदहं तत् प्रतिकरोमि। भवन्तमेतादृशे प्रदेशे रक्षिष्यामि, यथा कोऽपि तमनुसन्धातुं न शक्नुयात्। गार्हस्थ्यं सर्वेषु आश्रमेषु प्रधानं, तदकृत्वा तीर्थाश्रयणं धर्म्मशास्त्रविरुद्धतया अवैधमेव। यच्च भवान् देहपरित्यागाय कृतसङ्कल्पः तदपि न युक्तम्, आत्मघातिनां हि नरकयातनायाः आनन्त्यं सर्ववादिसम्मतम्। तदस्मात् दुरध्यवसायाद् विरम्य मम वचनं शृणोतु। अहं त्वदर्थं मनोज्ञमेकं भूगृहं निर्म्मापयामि, तत्र स्थित्वा सुखेन कालं नयतु भवान्।

गुणशर्म्मा तस्य तादृशं सुपरामर्शमाकर्ण्य स्वादध्यवसायात् विरम्य प्रत्यवादीत् ब्रह्मन्! अहं भवतां प्रस्तावमेव

अनुमोदे, परमहमिदानीमकिञ्चनः अकृती च, तत् कथमिदानीं भवतः कन्यां गृह्लामि ? साम्प्रतं तस्य कृतघ्नस्य राज्ञः प्रतीकारवाञ्छया कमपि देवमाराधयामीति। अथ अग्निदत्तेन तथेत्यभ्यनुज्ञातः स गुणशर्म्मा तां रात्रिं तदीये भवने न्यवसत्। अनन्तरम् अग्निदत्तस्तदर्थं पातालगृहं नाम भूगृहमेकं निर्म्माप्य तस्मिन् तमवासयत्। गुणशर्म्मा तत्र स्थित्वा अग्निदत्तदत्तमन्त्रेण देवम् कुमारं आराधयितुमारेभे।

तस्मिन् तथा प्रवृत्ते अग्निदत्तकन्या सुन्दरी पितुरनुज्ञया तं पर्य्यचरत्। गच्छता कालेन भगवान् कुमारस्तं प्रति प्रसन्नः प्रादुर्भूय वरमदात् वत्स! गुणशर्म्मन्! त्वम् अतुलसम्पत्तिशाली भूत्वा महासेनं राजानं दण्डयन् निष्कण्टकं राज्यभोगसुखं लभस्वेति। एवमुक्त्वा देवे अन्तर्हिते गुणशर्म्मा अचिरेण अक्षयां सम्पदं लब्ध्वा अग्निदत्ततनयां सुन्दरीमुपयेमे। ततश्च क्रमेण बहूनि चतुरङ्गाणि बलानि संगृह्य उज्जयिनीमभिययौ। तत्र च गत्वा अशोकवत्याश्चारित्रमुद्घोष्य महासेनं समरे निपात्य तदीयं सिंहासनमध्यासीनः सुखेन राज्यमशासत्। इत्थं कोऽपि महासेनवत् अज्ञतया विपदमाप्नोति, कोऽपि वा गुणशर्म्मवत् धैर्य्यमाश्रित्य जितशत्रुः परमेण सुखेन कालं नयतीति। सूर्य्यप्रभ इत्थं मन्त्रिमुखादद्भुतं मनोहरमाख्यानं श्रुत्वा निर्भीकः प्रोत्साहितश्च रजनीमत्यवाहयत्।

---

## पञ्चाशत्तरङ्गः ।



प्रातश्च सूर्य्यप्रभः दानवसैन्यपरिवृतः सचिववृन्दैः सह संग्रामभूमिमवातरत् । श्रुतशर्म्मा च विद्याधरबलसंयुतः सूर्य्यप्रभमभ्याजगाम । रणदिदृक्षवश्च देवा असुराश्च गगनमध्यतिष्ठन् । उभयोरेव सैन्ययोरर्द्धचन्द्राकृतौ व्यूहे संग्रामः प्रावर्त्तत । सर्व्व एव सैनिकाः परस्परं सिंहनादं कुर्व्वन्तः प्रतिद्वन्द्विनः अभ्यधावन् । अस्त्रप्रहारक्षतानां वीराणां हस्तिनाम् अश्वानाञ्च रुधिरधाराभिः परिप्लुता असयः कृतान्तस्य रसना इव अलक्ष्यन्त । छिन्नैश्च वीराणां शिरोभिराकीर्णा भूः प्रेतराजस्य पानभूमिरिव व्यराजत ।

इत्थं बहुषु सैन्येषु उभयोरेव निपतितेषु सूर्य्यप्रभः श्रुतशर्म्मणा, दामोदरः प्रभासेन, अन्ये च महारथाः सदृशैः महावीरैः सह द्वन्द्वयुद्धमारेभिरे । महोत्पातः सिद्धार्थं प्रति धावन् वाणैर्वाणान् निवार्य्य अन्येन वाणेन तस्य धनुः अश्वान् सारथिञ्च न्यवधीत् । हताश्वसारथिश्छिन्नधन्वा च सिद्धार्थः क्रोधेन धावन् लौहदण्डेन महोत्पातस्य सवाहनं रथं चूर्णयित्वा बाहुयुद्धेन तमपि भूतलमपातयत् । पातितञ्च तं तस्य पिता भगः समापत्य रक्षितवान् ।

प्रहस्तः ब्रह्मगुप्तं सुचिरं योधयित्वा यावत् भूतलमध्यशाययत् तावत् तस्य पिता पद्मयोनिः समापत्य तमरक्षत् । तदवलोक्य दानवा जहसुः । देवा युद्धं द्रष्टुं नागताः केवलं स्वं स्वं पुत्रं रक्षितुमेवागता इति । वीतभयः

प्रद्युम्नास्त्रेण संक्रमम् उरसि दृढ़माजघान। प्रद्युम्नेन चन्द्रगुप्ते निहते तत्पिता देवश्चन्द्रमा पुत्रहन्तारं प्रति परमक्रुद्धः योद्धुं प्रावर्त्तत। सूर्य्यप्रभः सुतशर्म्मणा निहतं विरोचनमवलोक्य अतिक्रुद्धः दमं नाम विद्याधरं यमसदनमनैषीत्। तस्मिंश्च पुत्रे निहते अश्विनोनन्दनौ शोकक्रोधाकुलौ योद्धुमागतौ दृष्ट्वा सुनीथस्तावाचक्राम। स्थिरबुद्धिशक्तिना निहतं पुत्रं पराक्रमं दृष्ट्वा अष्टौ वसवः परिकुपिताः पुत्रहन्तारं प्रति योद्धुमभ्यागमन्।

प्रभासस्तु दामोदरेण युध्यमानः एकेन वाणेन मर्द्दनकं निजघान। प्रकम्पनेन तेजःप्रभे निहते भगवानग्निः पुत्रबधपरिक्रुद्धः रणभूमौ अवातरत्। धूमकेतुना यमदंष्ट्रे निपातिते यमः परिक्रुद्धः पुत्रहन्तारं प्रति योद्धुमभ्याययौ। सिंहदंष्ट्रेण सुषेणे शिलाप्रहारचूर्णिते तस्य पिता निरतिः पुत्रबधमसहमानः युद्धार्थमभिययौ। कालचक्रेण महारथेन चक्रेण द्विधाकृते वायुबले पवनः कोपात् पुत्रहन्तारमभि युद्धार्थमाजगाम। महामायेन मायया बहुविधानि रूपाणि कृत्वा कुवेरदत्ते निहते तत्पिता देवः कुवेरः कोपपूर्णः पुत्रघातकं प्रति योद्धुमागमत्। इत्थं सर्वं एव देवाः स्वं स्वम् अंशावतारं पुत्रं विपन्नं दृष्ट्वा क्रुद्धाः रणेषु प्रवृत्तिरे। बहवो विद्याधरा मानवैर्दानवैश्च युध्यमाना हता आहताश्चाभवन्।

अनन्तरं प्रभासदामोदरयोर्भीषणं युद्धं प्रावर्त्तत। महावीरः सेनापतिर्दामोदरः छिन्नधन्वा हतसारथिरपि स्वयं सारथ्यमपि कुर्वन् युयुधे। तदवलोक्य ब्रह्मा तं साधु-

वादेन समवर्द्धयत्। देवराजस्तुर्मुखमपृच्छत् प्रभो! पराजितं कथमेवं प्रशंसति भवान्? प्रजापतिः प्रत्यवादीत् दामोदरो विष्णोरवतारः, नो चेत् प्रभासेन सह एतावन्तं कालं योद्धुं कः समर्थः? अस्य प्रभासस्य सम्मुखे देवाः सर्वेऽपि तृणान्येव। नमुचिर्नाम यो दुर्जयो दानवः पुरासीत्, तस्य पुत्रः प्रबलः, प्रबलस्य तनयो भासः। भासः पूर्वं कालनेमिर्नाम असुर आसीत्। तस्य भासस्यायं पुत्रः प्रभासः। यश्च हिरण्यकशिपुर्नाम दैत्यराजः, तस्मात् कपिञ्जलः, कपिञ्जलात् सुमुण्डीकः। तस्यायं पुत्रः सूर्यप्रभः। पूर्वं यश्च हिरण्याक्ष आसीत्, स एवायं सुनीथः। ये चान्ये दैत्यदानवाः पूर्वं संग्रामे निहतास्त एव मयप्रभृतयः पुनरसुरकुलेषु सञ्जाताः सूर्यप्रभमाश्रिताः। पश्य अयं दैत्यराजो बलिः सूर्यप्रभस्य रुद्रयज्ञप्रभावेण बन्धनमुक्तो युद्धदर्शनार्थं समागतः। यः स्वं सत्यं पालयितुमधुना पातालतलमधिवसति। यश्च तवाधिकारात् परम् इन्द्रत्वं प्राप्स्यति। साम्प्रतं सर्वे असुरा देवदेवेन हरेण पाल्यन्ते, तदिदानीं न संग्रामावसरः, सन्धिरेव एतैः कर्त्तव्य इति।

एवं वदति पितामहे महावीरः प्रभासः पाशुपतमस्त्रममुञ्चत्। भगवान् नारायणः सर्वसंहरणचक्रं जाज्वल्यमानं तदस्त्रं निरीक्ष्य पुत्रस्नेहेन सुदर्शनमत्यजत्। उभयोरेव दिव्यास्त्रयोराविर्भावात् त्रिभुवनं चकम्पे। भगवान् विष्णुः सृष्टिसंहारभयार्त्तः प्रभासं पाशुपतास्त्रसंहरणार्थं पुनःपुनरनुरुरोध। प्रभासः प्रत्यवदत् भगवन्! ममैतदस्त्रं संहर्त्तुं शक्यते, भवानग्रतः दामोदरं परित्यज्य परा-

सुखी भवतु, ततोऽहम् अस्त्रं संहरिष्यामीति। भगवान-ब्रवीत् त्वमपि सुदर्शनं सम्मानय। प्रभासोऽवदत् तथास्तु, भवतश्चक्रं मदीयं रथं नाशयतु, इत्थमुभयोरेव साफल्य-मास्ताम्।

इत्थमवधारिते दामोदरः नारायणादेशात् संग्रामात् निवर्त्तते। पाशुपतसुदर्शने च प्रतिपक्षरथं विनाश्य संहृते। प्रभासदामोदरौ अन्यं रथमारुह्य स्वं स्वं प्रभुं प्रति प्रच-लितौ।

श्रुतशर्म्मसूर्य्यप्रभयोर्घोरं युद्धमासीत्। उभावेव अस्त्र-वृष्टिभिः स्वं स्वं रणकौशलं प्रदर्शयन्तौ सुचिरं युयुधाते। श्रुतशर्म्मा सूर्य्यप्रभाय ब्रह्मास्त्रं तत्याज। सूर्य्यप्रभोऽपि तत् संहर्त्तुं पाशुपतमस्त्रं मुमोच। यावत् तत् पाशुपतं ब्रह्मास्त्रं निरस्य श्रुतशर्म्माणं निहन्तुम् उद्यच्छति तावत् सर्वे एव इन्द्रादयो लोकपालाः स्वं स्वं कुलिशादिकमस्त्रं तत्यजुः। यावच्च तत् पाशुपतं सर्वेषामेव देवानामस्त्राणि न्यक्कृत्य क्रोधेन श्रुतशर्म्माणं प्रति गच्छति, तावत् सूर्य्यप्रभः कृता-ञ्जलिः अस्त्रराजं स्तुवन् प्रार्थयाञ्चक्रे हे महास्त्र! श्रुत-शर्म्माणं मा विनाशय, परं बद्ध्वा मदन्तिकमानयेति।

सर्वे एव देवा यदा श्रुतशर्म्माणमाश्रयन् तदा असुरा अपि सर्वे सूर्य्यप्रभसहाया बद्धपरिकराः संग्रामाय प्राव-र्त्तन्त। अत्रान्तरे वीरभद्रो नाम कश्चित् शिवानुचरः समा-गत्य देवान् निवार्य्याब्रवीत् देवाः! भवन्तो युद्धदिदृक्षया समागताः, न तु युद्धं कर्त्तुम्। यदि अन्यथाचरेयुः, महा-नर्थो भविता। तद् भवन्तः शाम्यन्तु इत्येष देवदेवादेशः।

एतदाकर्ण्य देवा अब्रुवन् भद्र ! एते विद्याधराः सर्व एव अस्मादंशसम्भूताः, पुत्रस्नेहः नातिक्रमणीयः, तदेषां विनाशं दृष्ट्वा कथमस्माभिः तूष्णीं स्थातुं शक्यते ? अवश्यमेव तेषां रक्षणार्थं यत्नः करणीय इत्युक्त्वा सर्व एव देवा असुरैः सार्द्धं योद्धुं प्रवव्रृतिरे। वीरभद्रोऽपि तदवलोक्य स्वस्थानं प्रतस्थे।

देवा असुरान् प्रति यानि यानि अस्त्राणि अमुञ्चन् भगवान् शम्भुर्हुङ्कारेणैव तानि तानि भस्मसाच्चकार। तदवलोक्य देवाः सर्वे सभयं पलायाञ्चक्रिरे। देवराजः स्वयं युध्यमानः सूर्य्यप्रभं प्रति यानि यानि महास्त्राणि तत्याज सूर्य्यप्रभस्तानि तानि लीलयैव छित्त्वा आकृष्टधन्वा नाराचवर्षेण देवेन्द्रं क्षतविक्षतमकरोत्। सुरपतिः क्रोधाध्मातो यावत् कुलिशं सूर्य्यप्रभाय न्यक्षिपत् तावत् भगवानुमापतिः घोरेण हुङ्कारेण तत् भस्मीचकार। नारायणोऽपि प्रभासेन युध्यमान यद् यद् अस्त्रं प्रभासाय न्यक्षिपत् रुद्रस्तत्तदपि खण्डयामास। इत्थं सर्व एव सेन्द्रोपेन्द्रा देवाः विषादमापन्नाः पराङ्मुखा आसन्। असुरा जयलाभेन सिंहनादं चक्रुः। श्रुतशर्म्मा लज्जितोऽभवत्।

अथ देवैः स्तूयमानो वृषध्वजः प्रसन्नस्तानब्रवीत् देवाः ! सूर्य्यप्रभस्य प्रतिज्ञा नान्यथा भवितुमर्हति। देवा ऊचुः अस्माभिः श्रुतशर्म्मणि यत् प्रतिश्रुतं तदपि न्यायादनपेतं, तदुभयोरपि साफल्यमस्तु। शम्भुरवदत् उभयोः पक्षयोः सन्धौ विहिते तत् सर्वं यथोचितमेव भविता। साम्प्रतं श्रुतशर्म्मा सानुचरः सूर्य्यप्रभं प्रणमतु, ततश्च उभयोरेव

कुशलं यथा भवेत् तत् कर्त्तव्यम्। देवास्तथेति श्रुतशर्म्माणं सूर्य्यप्रभं शरणमाश्रयितुमादिशन्। श्रुतशर्म्मणा तथा कृते सूर्य्यप्रभः वैरं त्यक्त्वा तं बन्धुतया आलिलिङ्ग। इत्थं देवासुरैः परस्परं सन्धौ स्थापिते देवादिदेवः सूर्य्यप्रभं सम्बोध्य अभ्यधात् वत्स! सूर्य्यप्रभ! त्वं वेद्या दक्षिणार्द्धं गृहीत्वा उत्तरार्द्धं श्रुतशर्म्मणे प्रयच्छ। अचिराच्च अस्मा-च्चतुर्गुणं किन्नरसाम्राज्यं लप्स्यसे। ततश्च किन्नराधिराजो भूत्वा दक्षिणार्द्धमेतत् सकुञ्जरकुमाराय दास्यसीति एवं संग्रामनिहतान् वीरान् पुनर्जीवयित्वा सानुचरः पश्यता-मेव सर्वेषामन्तर्दधे।

अथ सूर्य्यप्रभः सिंहासनार्द्धं श्रुतशर्म्मणे दत्त्वा अर्द्धं स्वयमधिचकार। प्रभासादयो मन्त्रिणः सूर्य्यप्रभमनु सभा-मधितस्थुः। दामोदरादयश्च श्रुतशर्म्माणमन्वनसन्। सुनीथा-दयोऽसुराः विद्याधराः सर्वे यथायोग्यमासनं भेजिरे। अथ सप्तपातालाधिपतयः प्रह्लादादयोऽसुरा इन्द्रादयश्च देवा सुमेरुप्रभृतयश्च विद्याधराः सूर्य्यप्रभसभाजनायोपतस्थिरे। सूर्य्यप्रभस्य पत्नयश्च भूतासनविमानेन सर्वा एव समाजग्मुः। इत्थं सर्वेषु समुपविष्टेषु सिद्धिर्नाम दनोः सहचरी समागत्य सर्वान् सम्बोध्याब्रवीत् देवासुराः! दनुः पृच्छति वः, यूयं देवासुराः कदापि एकस्यां सभायामीदृशं सौमनस्यमन्व-भवत? अद्य किं सौभाग्यदिनं! यत् चिरविरोधिनोऽपि अद्य एकत्र समासीनाः सौभ्रात्रसुखम् अनुभवथ। तदतः परं कदापि यूयं परस्परं मा विरोधं कुरुत, विरहाच्च दुःखं मा लभध्वम्। हिरण्याक्षादयो असुरेश्वराः स्वर्गाय

विरुद्धाः सर्व एव निधनं गताः, तदिदानीम् अलं विरोधेन, सर्वैरेकचित्तीभूय सुखमनुभवद्भिः स्थीयताम्, एवं कृते जगतां परमं मङ्गलं भवितेति ।

सिद्धिमुखादेतदाकर्ण्य देवराजेन सङ्केतितः सुरगुरुरब्रवीत् असुराणां सुरैः सह न कोऽपि सम्बन्धः, येन विरोधः सङ्घटेत्, केवलमसुरा एव देवैः सह वृथा विरोधमाचरन्ति । एतदाकर्ण्य मयः प्रत्यभाषत देवगुरो ! यदि असुराणां मनसि कापट्यमस्थास्यत् तदा नमुचिः कदापि देवराजाय मृतसञ्जीवनम् उच्चैःश्रवसं नादास्यत् प्रबलश्च देवेभ्यः स्वं शरीरं याचितः न प्रादास्यत् । बलिरपि त्रैलोक्यं विष्णवे दत्त्वा न पातालमध्यस्थास्यत् । अथोलोहश्च विश्वकर्मणे स्वशरीरं प्रदाय किं निर्विकारचित्ततायाः परां काष्ठां न प्रदर्शितवान् ? तदेवम् असुराः स्वभावत एव सर्वे निष्कपटाः, केवलं वञ्चनाचतुरैर्देवैः पदे पदे प्रवञ्च्यन्ते । एवमुक्त्वा मये विरते सिद्धिः मधुरेण वचसा सर्वानेव देवासुरान् सान्त्वयामास । ते च सर्वे सन्तुष्टाः परस्परमालिलिङ्गुः ।

अथ गौर्याः सखी जया सुमेरुमनुरुरोध । सुमेरुश्च तयानुरुद्धः सूर्यप्रभाय स्वां दुहितरं कामचूडामणिं नाम सम्प्रदाय महामूल्यं रत्नसमूहं यौतकमदात् । भवानीप्रेषिता जया समागत्य प्रथमलाजमोक्षणसमये तस्मै अम्लानमालां द्वितीयलाजमोक्षणसमये रत्नावलीमेकां तृतीयलाजमोक्षणसमये त्वपराम् दिव्यां मालां दत्तवती । सुमेरुश्च तदा द्विगुणानि रत्नानि रत्नञ्चैकं चिरयौवनसाधनीं सर्वसिद्धिदाञ्च गुलिका-

भैक्षां प्रादात्। इत्थमुद्वाहकर्म्मणि निर्वृत्ते सुमेरुः सर्वान् देवान् असुरान् विद्याधरांश्च सविनयं न्यमन्त्रयत्। परं न कोऽपि तस्य निमन्त्रणं सम्मानितवान्। अत्रान्तरे शिवानुचरो नन्दी समागत्य सर्वान् सुमेरुगृहे भोजनाय अनुरुध्य अब्रवीत् भवन्तस्तु सुमेरुमात्मपरिजनं गणयित्वा तद्भवनं गत्वा कृतभोजनेषु अस्माकं महती तृप्तिर्भवितेति प्रभोरादेशः। ततः सर्वे देवस्यादेशेन सुमेरुसदने निमन्त्रणं जगृहुः।

अथ विनायकमहाकालवीरभद्रादिषु प्रमथाधिपेषु सभाशालाशालीनेषु अप्सरसां नृत्यगीतानि प्रावर्त्तन्त। सुमेरुः कामधेनोरनुग्रहात् विविधानि भोज्यानि प्रस्तुत्य पश्यत्सु शिवानुचरेषु सर्वानेव देवासुरविद्याधरादीन् समादरेण भोजयामास। कृताहारांश्च सर्वान् समुचितवस्त्राभरणादिभिः संवर्द्ध्य प्रमथाः स्वं स्थानं प्रतस्थिरे। देवा मातरश्च स्वं स्वम् आवासं प्रत्यागमन्। अथ श्रुतशर्म्मणि सानुचरे प्रस्थिते सूर्य्यप्रभः कामचूड़ामणिं प्रधानमहिषीं कृत्वा अन्याभिर्म्महिषीभिः समं स्वभवनं प्राविशत्, अनयच्च नववध्वा सह सुरतप्रसङ्गेन तां रजनीम्।

अथ प्रभाते अन्याभिः महिलाभिः मधुरालापैर्विहरन्तं तं सुषेणो नाम विद्याधरः समेत्य सप्रणामम् अब्रवीत् देव! त्रिकूटाधिपतयो विद्याधरा मां भवदन्तिकं प्रेष्य मन्मुखेन निवेदयन्ति, इतस्तृतीये दिवसे ऋषभाख्ये पर्वते भवतः शुभाभिषेको भविता, तत् सर्वानामन्त्रयतु इति। तदाकर्ण्य सूर्य्यप्रभः प्रभासादीन् प्रति सर्वेषामामन्त्रणादि-

व्यापारभावं निवेश्य स्वयं कैलासं गत्वा प्रभुसकाशमुप तस्थे, तुष्टाव च पार्वतीपरमेश्वरौ निपत्य चरणेषु विविधैः स्तवैः। तौ च भक्तवत्सलौ तस्य स्तवैर्नितरां परितोषमापतुः। अथ भगवता विसर्जितः सूर्यप्रभः निर्द्धारिते दिवसे विद्याधरराज्याभिषेकं प्राप्य परमेण सुखेन कालं नयति स्म इति समाख्याय असौ वज्रप्रभस्तिरोदधे।

---

## अथ अलङ्कारवतीनामको नवमो लम्बकः।

### एकपञ्चाशत्तरङ्गः।

एतां महतीं कथामाकर्ण्य नरवाहनदत्तः सविस्मयः कदाचित् गोमुखेन सह गहनं काननं प्रविष्टः सुदूरात् वीणाध्वनिमशृणोत्। युवराजः तमनुधावन् कियन्तं दूरं गत्वा शिवमन्दिरमेकं ददर्श। क्रमेण सन्निहितः तरुतले अश्वं बद्धा मन्दिरं प्रविश्य अपश्यत् कापि दिव्यकुमारी सखोजनपरिवृता वीणायन्त्रेण मधुरस्वरेण देवदेवमुमापतिं स्तौति स्म। युवराजस्तां समीक्ष्यैव मदनशरजर्ज्जरितदेहः सहसा समपद्यत। कन्या च सा युवराजस्य रूपेण विमुग्धीकृता सद्य एव सङ्गीतादिव्यापारात् विरराम। प्रभुचित्तविदि गोमुखे कन्यायाः परिचयं प्रष्टुमुपक्रान्त एव अपरा कापि सुराङ्गना गगनादवतीर्णा कन्यान्तिकमागत

वती। कन्यां ससम्भ्रमं कृताभ्युत्थानप्रणामां सा योषित् सन्तुष्टा विद्याधरचक्रवर्त्ती ते पतिर्भूयादिति आशिषा संवर्द्धयामास।

अत्रान्तरे युवराजः समीपमभ्येत्य तां योषितं प्रणम्य कन्यायाः परिचयमपृच्छत्। विद्याधरी प्रोवाच भद्र! हिमालयान्तवर्त्तिनि सुन्दरपुरनामके नगरे अलङ्कारशीलो नाम प्रतिवसति कश्चिद् विद्याधरराजः। तस्य महिषी काञ्चनप्रभा नाम। सा खलु कदाचित् भगवत्या गौर्य्याः कृपया पुत्रमेकमसूत। अलङ्कारशीलश्च तस्य धर्म्मशील इति नामाकरोत्। तञ्च सुतं क्रमेणातिक्रान्तशैशवं गुणवन्तं दृष्ट्वा पिता यौवराज्ये अभ्यषिञ्चत्। अनन्तरमसौ काञ्चनप्रभा कन्यामेकां प्रासोष्ट। प्रसवानन्तरमेव आकाशभारती उदचरत् कन्येयं नरवाहनदत्तस्य भाविविद्याधरचक्रवर्त्तिनो महिषी भविष्यतीति। अथ पिता कन्यां नाम्ना अलङ्कारवतीमकार्षीत्। कन्या दिने दिने वर्द्धमाना क्रमेण समतिक्रान्तबालभावा पितुः सकाशात् समधिगतविद्या च पितुरनुज्ञया शिवपूजापरायणासीत्।

अथ गच्छति काले युवराजं धर्म्मशीलं विषयभोगविरक्तं वनं गन्तुकामं दृष्ट्वा स्वयमपि पुत्रस्नेहविक्लवस्तेनैव पुत्रेण सह वनं गमिष्यन् पत्न्यै अलङ्कारवतीं समर्प्य संवत्सरे पूर्णे इहागत्य नरवाहनदत्ताय कन्यां दास्यामि, जामाता चासौ मदीयं राज्यं लब्ध्वा आधिपत्यं करिष्यतीति च समाख्याय प्रतस्थे। काञ्चनप्रभा च भर्त्तुरादेशात् कन्यां पालयन्ती तस्मिन्नेव नगरे न्यवसत्।

अथ अलङ्कारवतीं मात्रा सह शिवाराधनतत्परां बहुषु देवायतनेषु भ्रमन्तीं कदाचित् प्रज्ञप्तिर्नाम विद्या इत्थमादिदेश यथा काश्मीरदेशान्तर्वर्त्तिनि स्वयम्भुक्षेत्रे यत् शिवलिङ्गमस्ति तस्मिन्नाराधिते शीघ्रमेव त्वं नरवाहनदत्तं पतिमाप्स्यसीति। तदाकर्ण्य अलङ्कारवती मात्रा सह काश्मीरं गत्वा तत् शिवलिङ्गमाराध्य अद्य गृहमायाता। या चास्मिन् देवमन्दिरे सखीभिः परिवृता देवमुमाकान्तं वीणया स्तौति स्म सैवेयमलङ्कारवती, अहञ्चास्या जननी काञ्चनप्रभा। अहमद्य विद्याप्रभावेण नरवाहनदत्तं भवन्तमत्रागतं विदित्वा सत्वरमागतास्मि। भर्त्ता च मे स्वयं सम्प्रदास्यतीति कथितमेव पूर्वमायुष्मते। तदपेक्षस्व दिनमेकम्। श्वः कन्यामिमां परिणीय अस्माकं मनोरथं पूरयित्वा कौशाम्बीं प्रति गमिष्यसि। एतदाकर्ण्य कन्याजामातरौ एकान्तानुरक्ततया विलम्बमसहमानौ दृष्ट्वा काञ्चनप्रभा पुनरब्रवीत् युवामेकं दिनं विरहदुःखं सोढुं न शक्नुथः, पश्यतं पुरा राजा रामचन्द्रः सीता च कियन्तं दीर्घकालं विरहयन्त्रणां सेहाते। एवमुक्त्वा सीतावनवासवृत्तान्तकीर्त्तनेन तौ समाश्वासयत्।

अथ काञ्चनप्रभायां प्रभाते आगमिष्यामीति प्रतिश्रुत्य सकन्यायां चलितायां नरवाहनदत्तोऽपि विमनास्तेन मित्रेण सह कौशाम्बीं प्रत्याजगाम। रात्रौ अलङ्कारवत्या विरहेण निर्निद्रं युवराजमालोक्य गोमुखस्तस्य चित्तविनोदाय मनोहरमेकमाख्यानं वक्तुमारेभे।

युवराज! अस्ति दक्षिणापथे प्रतिष्ठानं नाम नगरम्।

तत्रासीत् पृथ्वीरूपो नाम कश्चित् परमरूपवान् नृपतिः। एकदा परमज्ञानसम्पन्नौ द्वौ यती समीपमेत्य तस्य निरुपमरूपमाधुरीं दृष्ट्वा प्रोचतुः देव ! अस्माभिः सर्वा एव मही पर्य्यटिता, परं क्वचिदपि भवतः सदृशः रूपवान् पुरुषो न दृष्टः। मुक्तिपुराख्यद्वीपाधिपतेः रूपधरस्य रूपलता नाम कन्यैका अस्ति, सा एव देवस्य अनुरूपा सम्भाव्यते। विधाता यदि उभयोर्युवयोः संयोगं विधास्यति तत् परमं योग्ययोजनं स्यात्। एवमुक्त्वा विरतयोस्तयो राजा स्वं चित्रकरं कुमारीदत्तमाहूय स्वां प्रतिकृतिमङ्कयितुं समादिदेश। अथ प्रतिकृतौ चित्रितायां राजा ताभ्यां यतिभ्यां सह सचित्रं कुमारीदत्तं मुक्तिपुरं प्रजिघाय।

चित्रकरः सयतिः सत्वरं समुद्रतीरवर्त्तिनि पोत्रपुराख्ये नगरे पोतमारुह्य पञ्चभिर्द्दिवसैः मुक्तिपुरं प्राप, घोषयामास च राजद्वारि समुपस्थाय कौशलेन स्वं चित्रनैपुण्यम्। अथ राजा तदाकर्ण्य तं चित्रकरमाजुहाव। चित्रकरस्तु राजान्तिकमुपगम्य सप्रणामं स्वस्य चित्रनैपुण्यस्य परां काष्ठां ख्यापयन् अब्रवीत् देव ! पृथ्वीधरनरपतेः सकाशादागतोऽस्मीति। राजा तं कन्यायाः प्रतिकृतिं चित्रयितुमादिशन् तत्समक्षं कन्यामानयत्। अथ कुमारीदत्तेऽपि कन्याया रूपलतायाश्चित्रपटम् अङ्कयित्वा राजान्तिकमुपयाते राजा कुमारीदत्तस्य चित्रनैपुण्यं बहुशः प्रशस्य चित्रकरेण सहागतौ सन्यासिनौ समाहूय अपृच्छत् युवाभ्यां सर्वा एव पृथिवी भ्रान्ता, ब्रूतं तावत् मत्कन्यासमा रूपवती कापि कन्या कुत्रापि दृष्टा न वेति। सन्यासिनाववो-

चतां राजन्! भवतः कन्यायाः सदृशी रूपवती क्वापि नास्माभिर्दृष्टा, परं यादृशी भवतः कन्येयं तादृशो रूप-राशिः पृथ्वीधरो नाम राजा दृष्टः, अतश्च स राजा युवापि सदृश्याः कन्याया अलाभादद्यापि अपरिग्रह एव तिष्ठति, यद्येतयोः संयोजनं भवेत् तत् विधातुः रूपनिर्म्माणसाफल्यं स्यादिति। अस्मिन्नेवावसरे चित्रकरोऽपि यदि द्रष्टुमिच्छति देवस्तदेकं मम प्रभोश्चित्रपटं मत्समीपे वर्त्तते, अवलोक-यतु देव इत्युक्त्वा पृथ्वीधरस्य तत् चित्रपटं दर्शयामास। रूपधरस्तदवलोक्य बहुशः प्रशस्य च कन्यासकाशं प्रेषयत्। कन्या च दृष्ट्वैव तत् विमोहिता विस्मिता चाभवत्। राजा कन्यां तथाविधामालोक्य चित्रकरं पुरस्कृत्य च कन्याया-श्चित्रपटं दत्त्वा इदमब्रवीत् चित्रकर! गच्छ त्वत्प्रभुं पृथ्वी-धरं चित्रमेतदस्मै दर्शय, यदि तस्य चित्रदर्शनेन मम कन्यायामभिलाषः स्यात् तदासौ कन्यां मम रूपलतां परिणीय मां कृतार्थयतु इति। चित्रकरः भिक्षुभ्यां सह राजपुरस्कृतः समुद्रमुत्तीर्य्य प्रतिष्ठानं प्राप्य राजान्तिक-मुपगम्य रूपधरसन्देशं निवेद्य च रूपलतायाश्चित्रपटं दर्शयामास। पृथ्वीधरश्चित्रं दृष्ट्वैव विमुग्धीभूतः रूपधरस्य सन्देशश्रवणेन सम्प्रीतः चित्रकरं भिक्षू च धनैः परितोष्य तदेव चित्रं विलोकयन् अतिकष्टेण दिवसमनैषीत्।

अथापरेऽह्नि शुभं लग्नं निश्चित्य शङ्खमङ्गलं नाम हस्तिनमारुह्य च ससैन्यसामन्तः मुक्तिपुराभिमुखं प्रायात्। द्वितीये दिवसे विन्ध्याटवीं प्राप्त एव शबरसैन्यैराक्रान्तो-ऽपि तान् पराजित्य सागरमुत्तीर्य्य च अष्टभिर्दिवसैः मुक्ति-

पुरमुपेयाय। राजा रूपधरः पृथ्वीधरमुपस्थितं निशम्य ससम्भ्रमं प्रत्युद्गम्य तं राजधानीमानिनाय। सर्वे राजपरिजनास्तमनुरूपं वरमागतं दृष्ट्वा भृशं ननन्दुः। अथ राजा रूपधरः शुभे लग्ने पृथ्वीधरं यथोचितमभ्यर्च्य कन्यां सम्प्रददौ। अन्योन्यावलोकने च वधूवरौ परस्पररूपदर्शनेन चरितार्थतामापतुः।

सम्पन्ने च विवाहमहोत्सवे राजा रूपधरः पुनस्तं चित्रकरं भिक्षुकी च वस्त्रालङ्कारादिना समतोषयत्। जामाता पृथ्वीधरः स्वानुचरैः सह श्वशुरभवने दश दिनानि सुखेन नयन् एकादशेऽहनि प्रियतमया सह स्वां राजधानीं प्रति प्रतस्थे। रूपधरस्तु आसमुद्रतीरं तमनुजगाम। ततो राजा पृथ्वीधरः श्वशुरम् अभिनवकन्यावियोगाकुलं समाश्वास्य पोतेन समुद्रम् अष्टभिरहोभिः समुत्तीर्य्य तत्रत्यस्य पोत्रपुराधिपतेरुदारचरितस्य राज्ञः सदने आतिथ्यमङ्गीकृत्य च स्वां नगरीं प्रत्यागात्। पौराङ्गनाः रूपलतायाः रूपलावण्यदर्शनेन सञ्जातविस्मया अभूवन्। राजा राजभवनं प्रविश्य सर्वाननुयायिनो यथोचितं पुरस्कृत्य प्रियतमया रूपलतया सार्द्धं सुखेन कालमहरत्।

एतदुक्त्वा मन्त्रिवरो गोमुखः पुनरब्रवीत् देव! सर्वे एव महानुभावा राजानो राजपुत्राश्च इत्यम् अल्पं वा बहुतरं विरहदुःखं सहन्ते, भवान् पुनरेकामेव रजनीमतिवाहयितुमशक्तः व्याकुलतामुपयाति? रात्रौ प्रभातायामेव अलङ्कारवतीमाप्स्यतीति समाख्याय गोमुखे विरते मरुभूतिरुपस्थितोऽब्रवीत् यावत् लोकः कुसुमशरशरनिकर-

लक्ष्यतां नोपेयात् तावत् तस्य धैर्य्यशीलता तिष्ठेत्। देवी सरस्वती, देवः कुमारो जिनश्च एते त्रय एव वसनलग्नं तृण-मिव कामं सुदूरं निरस्य जगति जितेन्द्रियतायाः परां कोटि-मधिरूढ़ाः श्रूयन्ते। एवमुक्त्वा तूष्णींभूते तस्मिन् गोमुखः किञ्चिद् विमना इवाभवत्। युवराजस्तु तत्पक्षमेव समर्थयन् अन्याभिर्विविधाभिः कथाभिः कथञ्चित् तां रात्रिमनयत्।

अथ प्रभाते अलङ्कारशीलः पत्न्या काञ्चनमालया कन्यया चालङ्कारवत्या सह अन्तरीक्षात् भूतलमवतीर्य्य कृतनित्यक्रियं युवराजमभ्याजगाम। स च तं समुचितेन सत्कारेण समवर्द्धयत्। अथ बहवो विद्याधराः सुवर्णानां रत्नानाञ्च भारानादाय नभोमण्डलात् अवतेरुः। वत्सराजः समाकर्ण्य वार्त्तामिमां सपत्नीकः तत्रोपस्थितः अलङ्कार-शीलं सम्यगभ्यर्थयामास। अलङ्कारशीलः सविनयमवादीत् राजन्! कन्येयं मम अलङ्कारवती, अस्याञ्च प्रसूतायामेव दैववाण्युदतिष्ठत् भाविचक्रवर्त्तिनो नरवाहनदत्तस्य इयं प्रतिपादनीयेति। अद्य शुभलग्नं विद्यते, तदेनामादाय वयं सवर्गाः भवन्तमुपस्थिताः।

एतदाकर्ण्य वत्सराजः महाननुग्रह इत्युक्त्वा तमनुमुमुदे। अलङ्कारशीलः यथाविधि युवराजाय नरवाहनदत्ताय कन्यां सुबहुभिः रत्नैः सह सम्प्रदाय राज्ञा सम्पूजितः सद्य एव स्वस्थानं प्रतस्थे। वत्सराजश्च क्रमशः पुत्रस्य समुन्नतिं विलोक्य परां प्रीतिमनुभवन् सुखेन कालमनयत्।

---

# द्विपञ्चाशत्तरङ्गः ।

अथ गच्छति काले काञ्चनप्रभा कौशाम्बीमागत्य जामातरं स्वं नगरं नेतुं प्रस्तावमकार्षीत् । युवराजोऽपि सम्मतः पितुराज्ञया गोमुखेन मरुभूतिना सह काञ्चनप्रभादर्शितेन आकाशवर्त्मना हिमाचलमुपस्थितः अप्सरसां किन्नराणाञ्च मनोहरं सङ्गीतमाकर्णयन् पश्यंश्च विविधानि आश्चर्यवस्तूनि सुवर्णमयं सुन्दरग्रामं प्राप । तत्र काञ्चनप्रभया जामातृसमागमकरणीयमङ्गलसंविधानेन निजभवनं प्रवेशितः दिव्यप्रभावेण च सम्पादितदिव्यभोगः परिजनैः सह स्वर्गसुखमनुभवन् तं दिवसमनैषीत् ।

परेद्यवि प्रातः काञ्चनप्रभा जामातरम् अलङ्कारवत्या समेतं तत्रत्यं भूतपतिं शम्भुमाराधयितुं पतिनिर्मिते गङ्गासरोनामकतीर्थे मनोहरे उपवने विहारयितुमैच्छत् । कुमारश्च श्वश्रूसन्तोषाय सम्प्रीतः शम्भुमाराधयितुं प्रियया मन्त्रिभ्याञ्च सह तत्र गत्वा गङ्गासरसि तीर्थे कृतस्नानः उमापतिमर्चयामास । कृतार्चनविधिश्च तस्मिन् मनोज्ञे उद्याने विहरन् मरुभूतेः सकौतुकहास्यपरिहासात्मकविनोदेन प्रायशो मासमेकं स्वर्गसुखमन्वभवत् । अथ काञ्चनप्रभया नानाविधैर्दिव्यवसनाभरणादिभिः सत्कृतेषु सर्वेषु युवराजः श्वश्र्वा सज्जितं दिव्यं विमानमधिरुह्य सपत्नीपरिजनस्तया च काञ्चनप्रभया सह पुनः कौशाम्बीमेत्य पित्रोर्विरहपर्युत्सुकयोरानन्दमवर्द्धयत् ।

एकदा काञ्चनप्रभा राजदम्पत्योः समक्षम् अलङ्कारवतीमुपादिशत् वत्से ! न खलु ईर्ष्याकलुषितया कोपपरीतया वा भर्त्तुर्वैमनस्यं त्वया करणीयम्। वैमनस्यं हि पत्युर्महदनिष्टं जनयति। पूर्वमीर्ष्यावशाहं पत्युस्तथा मनोःदुखमदां यथासौ तेनैव वैराग्येण कलुषितात्मा वनमुपायात्। अद्याप्यहं तेनानुतापेन दग्धहृदया दिवानिशमदह्ये। एवमुक्त्वा तनयामाश्लिष्य रुदती स्वपुरं प्रातिष्ठत।

अथ परेऽहनि प्रातः कृतनित्यक्रिये युवराजे मन्त्रिभिः सह संलपति काचित् भयविह्वला महिला अलङ्कारवतीं शरणमागता। अलङ्कारवती तामभयदानेन समाश्वास्य वृत्तान्तमपृच्छत्। साब्रवीत् देवि ! अहमत्र नगरे बलसेनाख्यक्षत्रियस्य तनया अशोकमाला नाम। मां तरुणीं वीक्ष्य मदीयेन रूपेण समाकृष्टचेताः कश्चित् हठशर्म्मा नाम समृद्धिशाली द्विजः पितरं मे प्रार्थयाञ्चक्रे। तदाकर्ण्य पिता मम अनिच्छन्तीमपि मां भयेन तस्मै दत्तवान्। स तु मां परिणीय बलात् स्वं भवनमनैषीत्, अहन्तु तत्सहवासं परिहर्त्तुकामा कमपि क्षत्रिययुवानमशिश्रयम्। तत्रापि तेन दुराचारेण पत्या उपद्रुता तं क्षत्रियकुमारं विहाय अपरमाश्रितवती। तत्रापि भर्त्रा विरोधिता अन्यं शरणमगमम्। भर्त्तरि मम तमपि पीड़यितुमारब्धे अहं वीरशर्म्माख्यस्य कस्यचित् राजपुत्रस्य किङ्करी अभूवम्। तदवलोक्य पतिर्मे प्रतिकर्त्तुमशक्नुवन् सततोद्विग्नमना अस्थिचर्म्मावशेषोऽभवत्। बहोः कालादनन्तरम् अद्य पथि विनिर्गतां मां वीक्ष्य असिहस्तः द्रुत एव मां प्रति प्रधा-

षित:, तदहं प्राणभयात् पलायमाना प्रतीहारिण: कृपया भवतीं शरणमागता, मन्ये स दुरात्मा बहिर्द्वारभूमौ इदानीमपि वर्त्तते ।

एतदाकर्ण्य अलङ्कारवत्या सङ्केतितो युवराजस्तं हठशर्म्माणमाहूय सक्रोधं स्त्रीविनाशहेतुमप्राक्षीत् । सोऽवदत् युवराज ! इयं मम पत्नी, पत्न्या व्यभिचारं क: शक्नोति सोढुम् ? एतदाकर्ण्य अशोकमाला लोकपालान् सम्बोध्य निजचारित्रस्य याथार्थ्यं प्रकटयितुमनुरुरोध । अनुरुद्धवत्यामेव तस्यां सहसा आकाशात् भारती समुदचरत् शृणुत यूयम् इयमशोकमाला पूर्वस्मिन् जन्मनि अशोकवरस्य विद्याधरस्य कन्यासीत् । परिणयोचिते चास्या वयसि पित्रानीतेषु कतिपयेषु वरेषु एषा रूपमदेन मत्ता कमपि नाङ्गीकृतवती । ततश्चास्या: पिता कुपित: शापेनैनामयोजयत् दुर्वृत्ते ! त्वं मानवी भूत्वा क्रमपि दुर्जनं गमिष्यसि । ततश्च तं परित्यज्य बहुषु पुरुषेषु विचरिष्यसि, अनन्तरं यदा ते पति: पथि त्वां दृष्ट्वा प्रहर्त्तुमुद्यमं करिष्यति, तदा त्वं राजभवनं गत्वा राजसकाशमुपस्थिता शापनिर्मुक्ता भविष्यसि । अथ विद्याधरी भूत्वा विद्याधरलोकमागत्य अभिरुचेर्विद्याधरस्य सहधर्म्मिणी भविष्यसीति । एवमुक्त्वा दैववचसि विरते अशोकमाला सद्य एव परित्यक्तमर्त्त्यदेहा स्वं रूपमास्थाय विद्याधरलोकं गत्वा च अभीष्टं पतिं लेभे । एतदवलोक्य विस्मिते नरवाहनदत्ते सपत्नीके हठशर्म्मा विगतक्रोध: सहसा स्वां जातिं स्मरन् युवराजमब्रवीत् राजपुत्र ! स्मृतं

मया साम्प्रतं, पूर्वमहं हिमालयान्तर्वर्त्तिनि मदनपुरे प्रलम्बभुजाख्यस्य विद्याधरस्य तनयः स्थूलभुजो नामाऽभवम्। अहञ्च पितुः शापात् मर्त्त्यभूमिं प्रपन्नोऽस्मि। श्रूयतां कुमारेण, एकदा समतीतशैशवं तारुण्ये वयसि वर्त्तमानं मां दृष्ट्वा सुरभिवत्सो नाम विद्याधरः स्वां कन्यां सुरभिदत्ताख्यां गृहीत्वा पितुर्मे सकाशमेत्य मह्यं कन्यादानाय प्रसङ्गमकरोत्। पिता मम करणीयसम्बन्धं विगणय्य मामाहूयन् सुरभिदत्तामुद्वोढुमन्वमन्यत। अहन्तु तदा स्वेनैव रूपमदेन पितृवाक्यं तत् न गृहीतवान्। यदा च पिता भूयोभूयो निर्बन्धेनापि मम असम्मतिमज्ञासीत् तदा सञ्जातकोप एवं मामभिशशाप दुरात्मन्! यतस्त्वं रूपगर्वेण मत्तः इमां कन्यां मदनुरुद्धोऽपि न गृहीतवान्, तस्मात् कुरूपो विकटाननश्च मर्त्त्यभूमौ जनिष्यसे, शापभ्रष्टाञ्च अशोकमालां तदिच्छामन्तरेणापि परिणेष्यसि। ततश्च तां त्वां परित्यज्य पुनःपुनरन्यासक्तां वीक्ष्य त्वं तद्विरहेण जनितान्तर्दाहः बहून् क्लेशान् सहिष्यसे इति। अनन्तरं सुरभिदत्तया सातिशयमनुनीतः स कृपया मामवदत् वत्स स्थूलभुज! मम शापो नान्यथा भवितुमर्हति, परं तस्यामशोकमालायां शापनिर्मुक्तायां त्वमपि सञ्जातपूर्वजननस्मृतिः तत्क्षणं शापच्युतो निजं विद्याधरकलेवरं प्राप्य सुरभिदत्तामिमां परिणयन् सुखमवाप्स्यसीति।

एतदाकर्ण्य सा साध्वी सुरभिदत्ता धैर्य्यमवालम्बत। अहमहङ्कारदोषेण एतावन्तं कालम् ईदृशं दुःखमन्वभवम्।

नाहङ्कारात् परो रिपुरस्य मया विदितः। तदस्य मे शापः अस्तमुपगतः, तदिदानीं स्वां गतिं गच्छामीति अभिधाय पश्यत्सु राजपुत्रादिषु विकृतं देहं त्यक्त्वा हठशर्म्मा विद्याधरलोकं गत्वा सुरभिदत्तां परिणीय विविधानि सुखानि बुभुजे।

एतदवलोक्य सर्वेषु विस्मितेषु गोमुखः युवराजं सम्बोध्याब्रवीत् देव! महावराहनाम्नः कस्यचित् नरपतेः परमरूपवती अनङ्गरतिर्नाम कन्यैकासीत्। सा परिणयोचितवयस्का पितरमब्रवीत् तात! वीरं रूपवन्तं ज्ञानवन्तञ्चान्तरेण नान्यं पतिमहं न वरिष्यामीति। तदाकर्ण्य महावराहस्तमभिप्रायं कन्यकाया डिण्डिमेनाघोषयत्। श्रुत्वा तं वृत्तान्तं बहवो महीपालास्तामर्थयितुं समागमन्, परं सा तेषु न कमपि मनोनीतमकरोत्। कदाचित् दक्षिणापथादागताश्चत्वारो युवानः अनङ्गरतिं प्रार्थयितुं राजान्तिकमभिययुः। अथ राज्ञा तेषां परिचये जिज्ञासिते एकः प्रोवाच राजन्। अहं शूद्रजातिः पञ्चपट्टिको नाम, प्रत्यहमहं पञ्च पट्टयुगलानि बन्धुं शक्नोमि। द्वितीयः प्रावदत् अहं जात्या वैश्यः भाषाज्ञो नाम, अहं मृगपक्षिणां भाषाः सम्यक् वेद्मि। तृतीयोऽभ्यधात् अहं क्षत्रियः खड्गधरो नाम, खड्गयुद्धे नास्ति मत्समस्त्रिलोक्याम्। चतुर्थोऽवदत् अहं ब्राह्मणः जीवदत्तो नाम, अहं गौर्य्याः प्रसादलब्धया विद्यया मृतं जीवयामि। एवं तेषु स्वं स्वं नाम जातिगुणानां परिचयं दत्तवत्सु राजा तान् प्रतीहारभवने वासार्थं समादिशत्। अथ अनङ्गरतिमाहूय

एतेषां परिचयं दत्तवति राजनि अनङ्गरतिस्तान् सर्वान् एव सुयोग्यानवधार्य्य वरत्वेन कामयाञ्चक्रे ।

परस्मिन्नहनि ते चत्वारो युवान: नगरदिदृक्षया वहिर्गत्य ददृशु: पद्मकवलो नाम राजहस्ती भग्नालान: पथि धावन् इतस्ततो लोकान् विहस्तीकरोति । कोऽपि तत् प्रतिकर्त्तुं न शक्नोतीति । अथ ते उद्यतायुधास्तं हस्तिनं प्रति धावन्ति स्म । सोऽपि हस्ती तानापतत: समीक्ष्य वेगेन तानेवाभिगच्छति स्म । तदवलोक्य खड्गधर: सर्वान् तान् त्रीन् बन्धून् निषिध्य स्वयमेव एकाकी हस्तिनं प्रति धावन् द्वाभ्यामेव खड्गप्रहाराभ्यां गजराजं विनाश्य अपातयत् ।

तस्य तादृशं पराक्रमं दृष्ट्वा नगरवासिन: सर्वे विस्मितास्तं प्रशशंसु: । राजापि तां वार्त्तामुपलभ्य सविस्मय: समभ्यनन्दत् । अनन्तरं परेऽहनि तैश्चतुर्भिरेव वीरै: सार्द्धं मृगयार्थं वनमगमत् । तत्र च ते राजसमक्षम् अवलीलयैव महाबलान् भीषणान् सिंहव्याघ्रादीनपि बहून् जन्तून् विनाश्य अलौकिकं शौर्य्यमदर्शयन् । राजा तदवलोक्य साधु साध्विति प्रशस्य तेषु श्रेष्ठं वीरं खड्गधरमेव निश्चित्य तस्मै कन्यां दातुं कृतसङ्कल्प: स्वां राजधानीं प्रतीयाय ।

अथ अन्त:पुरं प्रविश्य अनङ्गरतिमाहूय खड्गधराय वरत्वेनानुमन्तुं निर्बन्धमकरोत् । सा च पितुराज्ञया तथेति समसंस्त । अथ राजा महावराह: सुविज्ञं गणकमाहूय कन्याया: शुभलग्नं निरूपयितुमादिदेश । गणक: कियन्तं कालं गणयित्वा अब्रवीत् राजन् ! मद्गणनया दृश्यते, कन्याया अस्या: परिणयो भूलोके नैवं भवेत्, कन्या चेयं शापभ्रष्टा

मर्त्यलोकमागता, मासत्रयाच्च परमनया शापनिर्मुक्तया भवितव्यमिति। तदहं विवेचयामि, मासत्रयात् परमस्या विवाहविधिरायोजनीय इति। एतदालोक्य युवानश्चत्वारस्तदेवाभ्यमन्यन्त। विश्वस्तगणकवचसा च मासत्रयं तस्मिन्नेव राजनिर्दिष्टे भवने अवतस्थिरे।

क्रमेण चातीतेषु त्रिषु मासेषु राजा सर्वसमक्षं दैवज्ञानाहूय पुनः कर्त्तव्यमपृच्छत्। एतस्मिन्नेवावसरे अनङ्गरतिर्वस्त्राञ्चलेन मुखमाच्छाद्य स्वां जातिं स्मरन्ती मानुषीं तनुमत्यजत्। समनन्तरञ्च यावत् कन्याया मुखावरणमुद्घाटितं तावत् कन्यां त्यक्तजीवितां विलोक्य राजा राज्ञी च भृशं शोकार्त्तौ भूतले मूर्च्छितावपतताम्। ततश्च क्षणेन लब्धचेतनो राजा अनङ्गरतिं जीवयितुमनुरुध्य जीवनदायिने एव जीवदत्ताय कन्यां दातुं प्रत्यशृणोत्।

जीवदत्तस्तु अनङ्गरतिं जीवयितुं विन्ध्यवासिनीदत्तं सर्वं प्रकरणं प्रायुङ्क्त, परं केनापि प्रकारेण कन्या न जीविता। तदवलोक्य विवाहेन विद्यया जीवनस्य च वैफल्यं निश्चित्य स्वं शिरः छेत्तुमुपक्रान्ते सहसा आकाशसरस्वती प्रादुरासीत् वत्स जीवदत्त! अनङ्गरतिः स्वर्गं गता, त्वमिदानीं साहसात् निवृत्य पुनर्विन्ध्यवासिनीमाराधय, तस्याः प्रसादात् अवश्यमेव तां प्राप्स्यसीति। एवमुक्त्वा आकाशसरस्वत्यां विरतायां राजा शोकं परित्यज्य कन्यायाः संस्कारादिकमकरोत्। अपरे त्रयो वीराः स्वं स्वं स्थानं गताः। जीवदत्त एव विन्ध्याचलं गत्वा तामाराधयामास।

अथ गते कियति काले विन्ध्यवासिनी देवी प्रसन्ना तमवादीत् वत्स! हिमालयान्तर्वर्त्तिनि वीरपुराख्ये नगरे समरो नाम विद्याधरः प्रतिवसति। तस्य अनङ्गरति-नाम्न्यां भार्य्यायाम् अनङ्गप्रभा नाम कापि कन्यका समजनि। ताञ्च कन्यां रूपयौवनमदात् कमपि वरत्वेन अगणयन्तीमालोक्य तस्याः पितरौ तामभिशापेन अयोजयतां यथा त्वं मानुष्यकं लब्ध्वापि पतिसुखेन वञ्चिता भविष्यसि, वर्षे च षोड़शे प्राप्ते तत् मनुष्यकलेवरं विहाय पुनः स्वर्गमास्यसि च। एकदा खड्गसिद्धः कश्चित् वीरः कस्यापि मुनेस्तनयामभिलषन् तदपराधात् मुनिना तेनाभिशप्तः मनुष्य एव तव पतिर्भूत्वा अनिच्छन्तीमपि त्वां मर्त्यलोकं नेष्यति, तव विरहेण च अत्यर्थं दुःखं लप्स्यते। स तव पतिः पूर्वस्मिन् जन्मनि अष्टौ महिला हृतवान् तेनैव पापेन अस्मिन्नेव जनने अष्टजन्मभोग्यं दुःखं समवाप्स्यति। मदनप्रभो नाम यः खेचरस्त्वां चकमे, स एव मनुष्यो भूत्वा तव पतिर्भविष्यति। अनन्तरं त्वं शापनिर्मुक्ता स्वर्गमास्यसि, तव पतिश्च पुनः खेचरत्वमवाप्य त्वामेव लप्स्यते। इत्थम् अनङ्गरतिः पित्राभिशप्ता भूतलमवतीर्णा साम्प्रतं त्यक्तमनुष्यदेहा पितृसमीपमेव गता अनङ्गप्रभाख्याभवत्। तत् त्वम् इदानीं वीरपुरं गत्वा तदीयं पितरं संग्रामेण निर्जित्य तां परिणय। असिरयं मया दीयते गृहाण, एतत्प्रभावेण खेचरोऽजेयश्च भवितासि। इत्युक्त्वा खड्गं प्रदाय देवी सद्य एवान्तर्दधे।

अथ जीवदत्तः समुत्थाय देव्याः प्रसादेन विगततपः-

क्षेशः तं देवीदत्तम् असिं करे गृहीत्वा आकाशमुत्पपात, गत्वा च हिमालयान्तवर्त्ति वीरपुरं तत्र श्वशुरं निर्जित्य प्रियामनङ्गप्रभां लेभे। अथ श्वशुरेणानुमतः अनङ्गप्रभां भूतलमानेतुं यत्नमकरोत्। अनङ्गप्रभाम् अनिच्छन्तीमपि अगत्या सम्मतामङ्के धृत्वा असौ वीरः नभोमार्गमुदगमत्। पथि अनङ्गप्रभानुरोधात् पर्वतमेकमासाद्य श्रमविनोदनाय तत्र कृतपानभोजनादिव्यापारौ सुखेन कञ्चित् कालमवतस्थाते। तत्रासौ जीवदत्तः अनङ्गप्रभां किञ्चित् सङ्गीतं कर्तुमनुरुरोध। तस्याश्च पत्युर्निर्बन्धेन मधुरस्वरं शिवस्तोत्रसङ्गीतं कुर्वत्यां जीवदत्तः सुखेन निद्रामवाप।

अत्रान्तरे राजा हरिवरो मृगमनुसरन् पिपासया जलाहरणार्थी सहसा तं गीतध्वनिमाकर्ण्य मृग इव मुग्धः समाकृष्ट एकाकी एव तत्र समाययौ, मुमोह च तस्या रूपेण गीतेन चानङ्गशरनिकरवशतामापन्नः। सा चानङ्गप्रभा राजानम् अतिरूपवन्तं दृष्ट्वा समां दशामापन्ना तं मनसि बहुशः प्रशस्य परिचयमपृच्छत्। राजा च सर्वं स्ववृत्तान्तमाख्याय तां परिचयमप्राक्षीत्।

अनङ्गप्रभा मितया वाचाब्रवीत् अहं विद्याधरी, अयं मम पतिः खड्गसिद्धः। अहं भवन्तं दृष्ट्वैव भवदनुरागिणी संवृत्तास्मि इति समाख्याय निद्रितं पतिं विहाय सर्वं वृत्तान्तं तव भवन एव गत्वा वक्ष्यामीति ब्रुवाणा राजानं हरिवरमुपागमत्।

हरिवरस्तु तां प्राप्य कृतार्थंमन्यः त्रिभुवनराज्यमपि नामन्यत। अनङ्गप्रभा सत्वरं राजानमङ्के कृत्वा आकाश-

मुत्पपात, परं भर्तृद्रोहेण तेन विद्याभ्रष्टा सद्य एव पितृशापस्मरणात् विषसाद च। तदालोक्य राजाब्रवीत् प्रिये! नायं विषादसमय इत्युक्त्वा तां स्वं रथं नीत्वा स्वं नगरमगमत्, सुखमवसच्च तया दिव्ययोषिता सह क्रीडन्। अनङ्गप्रभा च शापप्रभावात् विस्मृतपतिका हरिवरेणैव सह कालमनयत्।

अत्रान्तरे जीवदत्तः प्रबुद्धः अनङ्गप्रभां खड्गञ्च अदृष्ट्वा सहसा समुद्भ्रान्तचित्त एवाभवत्, अनुसमधत्त च तस्मिन् पर्वते नानातर्कानुद्भावयन्। अनन्तरं पर्वतादवतीर्य्य वने वने भ्रमन् क्वचिदपि अन्विष्य अन्विष्य तां न प्राप। अथ हा दुरात्मन्! दुर्दैव हतक! प्रियतमां मह्यं दत्त्वा कथं पुनरहरः? इत्येवं विलपन् अनश्नन एव भ्रमंश्च कश्चित् ग्रामं विवेश, प्राप च कस्यचित् समृद्धस्य द्विजस्य भवनम्। सुभगा प्रियदत्तानाम्नी गृहस्वामिनी जीवदत्तमासने उपवेश्य त्रयोदश दिनानि अभुक्तमिति सञ्जातकृपा पादप्रक्षालनाय सखीमादिशत्। तदाकर्ण्य जीवदत्तः सविस्मयश्चिन्तयामास अत्र किमनङ्गप्रभा मे विद्यते? अथवा इयमन्तर्य्यामिनी कापि योगिनी? नो चेत् ईदृशसमये कथं मामनुकम्पते इति। एवं विचिन्त्य प्रक्षालितकरचरणः तया दत्तं भोज्यवस्तु किञ्चिद् भुक्त्वा सप्रणाममपृच्छत् सुभगे! मन्ये भवती मद्वृत्तान्तं सम्यक् अवगच्छति, तदनुकम्पया मम प्रियतमा प्राणाधिकः खड्गश्च क्व वर्त्तते? वक्तुमर्हसीति।

एवमभिहिता पतिव्रता ब्राह्मणी प्रत्यब्रवीत् अहं पत्यु-

रन्यं पुरुषं न कदापि मनसि स्थापयामि, सर्वांश्च अन्यान् पुरुषान् भ्रातॄन् मन्ये। अन्यच्च मद्गृहात् कदापि अतिथिः पराङ्मुखतां नाप्नोति। एतस्मादहं भूतं भवत् भविष्यच्च ज्ञातुं शक्नोमि, यदा त्वं निद्रित आसीः, तदा हरिवरो नाम राजा तव प्रियतमां हृत्वा स्वं नगरमगात्। राजा चासौ अतीव दुर्धर्षः, तस्मादनङ्गप्रभा ते प्रिया आनेतुमशक्या, कथञ्चिदानीतापि सा कुलटा त्वां पुनः परित्यज्य अन्यत्र गमिष्यति, यदा च सा ह्रियते स्म, तदैव स खड्गो देव्याः सकाशं गतः, एतच्च सर्वं देव्या तव पूर्वमादिष्टम् अपि विस्मृतं त्वया? तदलम् अवश्यभाविनि वृथानुतापेन, त्वं तस्याः पापीयस्याः समासक्तिं मुञ्च, तवोपरि द्रोहेण च तस्या विद्या विफलीभूता।

एवमावेदितस्तया गृहस्वामिन्या जीवदत्तः विगतसन्तापः तस्यां निराशश्च तामब्रवीत् पतिव्रते! प्राक्तनपापवशादेव ईदृशं दुःखदुर्दिनं घटते, तद् यथा पुनः पापपङ्के न पतेयं तथा यतिष्ये इत्यभिधाय निर्मत्सरस्तीर्थयात्रायां कृतसङ्कल्पः समभवत्।

अत्रान्तरे गृहस्वामी गृहमागत्य गृहिण्या कृतातिथ्यमतिथिं बहु प्रबोध्य पुनरपि तं सान्त्वयामास। स च तेन सम्यक् सान्त्वितः तीर्थेषु क्रमशः पर्य्यटन् पुनर्विन्ध्यवासिनीदर्शनार्थं विन्ध्याचलमुपागमत्, चकार च दुश्चरं तपः देवीमन्त्रं जपन्। ततश्च देवी पुनः परितुष्टा अवादीत् वत्स! उत्तिष्ठ पूर्वं पञ्चचूडः चतुर्वक्त्रः महोदरः विकटाननश्च इति चत्वारो हरानुचराः कदाचित् गङ्गाम्भसि विहरन्तः

कपिलजटस्य मुनेस्तनयां शापलेखां नाम गङ्गायां स्नान्तीं चक्रमिरे। कन्यया निवारितास्तेषां त्रयः मुनेर्भयात् व्यवर्त्तन्त, एकस्तु बलात् तस्याः करं जग्राह। तस्यान्तु ऋषिकन्यायां हा तात! परित्राहीति आरटन्त्यां मुनिरसौ सहसा समीपमागत्य तां तथा व्याकुलितां दृष्ट्वा क्रोधेन सर्वानेव शशाप पापात्मानः! सद्य एव अधोगामिनो भवत इति। ततश्च तैः त्रिभिः प्रणतैरनुनीतः इत्थं शापान्तमकरोत् यदा यूयं राजकन्यामनङ्गरतिं कामयिष्यध्वे, तदा यूयं शापनिर्मुक्ताः पुनः स्वं पदं प्राप्स्यथ, अयन्तु दुरात्मा तामनङ्गरतिम् अनङ्गप्रभानामान्तरितां पुनः प्राप्यापि हारयिष्यति। अस्याश्च शापलेखायाः करस्पर्शेन परदारहरणजनितां घोरां मनःपीडामाप्स्यति चेति। अनन्तरं यूयं दक्षिणापथे सम्भूताः पञ्चकुटिकभाषाङ्गखड्गधरजीवदत्ताख्यया प्रसिद्धिमगमत। प्रथमे त्रयः अनङ्गवत्यां मृतायां मत्प्रसादात् स्वं स्वं पदमधिरूढाः, केवलं तेषामवरस्त्वं जीवदत्तः बहून् क्लेशाननुभूय साम्प्रतं मत्सेवया निष्पापः संवृत्तोऽसि, अधुना अग्निदैवतां धारणां मत्सकाशात् गृहीत्वा तनुं त्यज। एवमुक्त्वा धारणां प्रदाय देव्यामन्तर्हितायां जीवदत्तस्तया धारणया कलेवरं त्यक्त्वा स्वं पदमधिरोह।

परदारस्पर्शे देवानामपि एषा दुर्गतिः, का कथा मानवानाम्? अनन्तरं राजा हरिवरः मन्त्रिणि सुमन्त्रे राज्यभारं निधाय दिवानिशम् अनङ्गप्रभासम्भोगेनैव अनैषीत्। एकदा मध्यदेशात् लब्धवरो नाम कश्चित्

नवीनो नाव्याचार्य्यः हरिवरं राजानमुपागमत्। राजा तस्य नाव्यनैपुण्यदर्शनेन सम्प्रीतः तमन्तःपुरनाव्या-चार्य्यकर्मणि न्ययोजयत्। सर्वासु शिष्यासु अनङ्गप्रभा एव नर्त्तनशिक्षायां समधिकं नैपुण्यमलभत। अपरा अपि तामनुकर्त्तुं अयतन्त, परं न कापि शशाक। अथ नाव्या-चार्य्यः सततमेकत्रावस्थानभोजनपानादिसाहचर्य्यात् अ-नङ्गप्रभां प्रति समनुरक्तः तां हृत्वा पलायमानः वियोगपुरं नाम नगरमियाय। तत्र च तावुभौ सुखेन विहरन्तौ कालमनयताम्।

अथ राजा हरिवरः अनङ्गप्रभाविरहेण नितरां व्याकुलः प्राणानपि परित्यक्तुमैच्छत्, परं मन्त्रिणा सुमन्त्रेण प्रबोध्य मरणव्यवसायात् निवर्त्तितः शोकं परिहृत्य राज-महिष्या एव सह पूर्ववत् सुखमनुभवन् कथञ्चित् न्यवसत्। अथ गच्छता कालेन वियोगपुरे नगरे लब्धवरस्य केनचित् सुदर्शनाख्येन द्यूतकरेण सम्प्रीतिरभवत्। क्रमेण लब्धवरः सुदर्शनेन सह दीव्यन् सर्वस्वमहारयत्। अनङ्गप्रभा लब्ध-वरं निःस्वं दृष्ट्वा सुदर्शनं पतिमकरोत्। लब्धवरस्तु प्रियया धनैश्च वञ्चितः सञ्जातविरागः जटावल्कलधारी तपस्वी सन् गङ्गातटे वासमरोचत।

अथ कदाचित् चौरैर्हृतसर्व्वस्वः सुदर्शनः नितरां दारिद्र्यमवाप। अनङ्गप्रभां पत्युस्तादृशीं दुर्गतिं दृष्ट्वा अनुतापिनीमाश्वास्य सुदर्शनस्तयैव सार्द्धं हिरण्यगुप्तसकाशं गत्वा किञ्चित् ऋणमयाचत। स तु हिरण्यगुप्तः अनङ्ग-प्रभाया रूपेण विमुग्धः तां प्रति साभिलाषदृष्टिं व्यकि-

पत्, अन्वरुणञ्च भोजनाय सुदर्शनं परेद्यवि अर्थं दास्यामि, अद्य तिष्ठ मद्गृहे इति वदन्। सुदर्शने भोजनार्थं स्थातुमसम्मतेऽपि तदीयां पत्नीमनङ्गप्रभां न्यमन्त्रयच्च। सा तु अनङ्गप्रभा दृष्ट्वैव तदासक्ता तथेति प्रतिश्रुत्य तत्रैव हिरण्यगुप्तसदने अतिष्ठत्, व्यहरच्च तदन्तःपुरं गता तेन नवीनेन पुरुषेण यथाकामम्। सुदर्शनस्तु अर्थप्राप्तिलालसया अनङ्गप्रभागमनप्रत्याशया च वहिरेव निस्तब्धो व्यवास्थित। अथ चिरेणापि कामपि वार्त्तामप्राप्य सुदर्शनेन कस्मिंश्चित् अन्तःपुरं प्रेषिते हिरण्यगुप्तस्तमित्थमुक्ता व्यसर्जयत् त्वं गत्वा सुदर्शनं ब्रूहि यथा अनङ्गप्रभा कृताहारा क्वापि गतेति। अथ सुदर्शनं मृषा तदिति पुनःपुनः कृतनिर्बन्धं निशम्य असौ हिरण्यगुप्तो वणिक् तं प्रहृत्य वहिरकरोत्,

अथ सुदर्शनः सविषादं गृहं गत्वा पापस्य फलं मयोपलब्धमिति निश्चित्य क्रोधविरहितः वदरिकाश्रममगमत्। अचरच्च संसारच्छेदाय दुश्चरं तपः। अनङ्गप्रभा तु पुष्पान्तरगता भृङ्गीव तेन नवेन पत्या सह सुखमभुनक्।

कदाचित् हिरण्यगुप्तः बहूनि धनानि संगृह्य अनङ्गप्रभया सह सुवर्णभूमिनाम्नि द्वीपे वाणिज्यकरणाय सागरतटमियाय। तत्र तस्य सागरवीराख्येन धीवरराजेन सह सख्यमभूत्। तत्र उभौ एताम् अर्णवपोतमारुह्य यात्रामकार्ष्टाम्। पथि सहसा प्रबलात् मेघमण्डलादुदितात् महावात्यया सह मुषलधारया वृष्टिराविरासीत्। अर्णवपोते चास्मिन् उद्दामसागरतरङ्गसञ्चयैर्दोलायिते क्रमेण जलेषु निमग्ने हिरण्यगुप्तः कटिबद्धोत्तरीयः अनङ्ग-

प्रभाया मुखकमलं निरीक्ष्य हा प्रिये! इत्युच्चैरारटन् समुद्राम्भसि निममज्ज। ततश्च सन्तरन् दैवात् प्रवहणीमाश्रित्य पञ्चभिर्दिवसैः तीरमुत्तीर्णः प्रियाविरहकातरः दुःखेन स्वं गृहं प्रत्यगात्। सागरवीरस्तु अनङ्गप्रभया सह एकं फलकमवलम्ब्य प्राणान् पर्य्यरक्षत्। क्रमेण नभोमण्डले मेघावरणशून्ये शान्ते च सागरे बाहुबलेन क्षेपणीं वाहयन् एकेनैवाह्ना समुद्रतीरमापन्नः अनङ्गप्रभया सह स्वं गृहमयासीत्। सा च तं दासपतिमतुलैश्वर्य्यशालिनं दृष्ट्वा पतित्वेनाश्रित्य सुखेन तद्गृह एव न्यवसत्।

अथैकदा अनङ्गप्रभा हर्म्याग्रे विचरन्ती पथि गच्छन्तं विजयवर्म्मनामकं कमपि सुरूपं क्षत्रिययुवानं दृष्ट्वा हर्म्यादवरुह्य तत्समीपमागता तमुपयाचितवती। स तु आकाशचन्द्रमिव तां हस्ते प्राप्य परमहर्षितः स्वं गृहमनैषीत्। सागरवीरस्तु तादृश्याः प्रियतमाया विरहात् संसारमसारं मन्यमानः तपसा देहविसर्ज्जनकामः जाह्नवीतटमगात्। कदाचित् तन्नत्यो राजा सागरदत्तो नाम करेणुकामारुह्य नगरीं परिभ्रमन् अनङ्गप्रभां नूतनपतिगृहगवाक्षवर्त्तिनीं दृष्ट्वा मुमोह। अनङ्गप्रभा च राजानं तदवस्थं दृष्ट्वा सर्वजनसमक्षमाहूय तेन सह तां करेणुकामारुह्य तदङ्कवर्त्तिनी तं कृतार्थमकरोत्। राजापि तां निधिमिवासाद्य नितरां हर्षितः स्वं भवनं प्रत्यगात्। विजयवर्म्मा तु संवादमिममाकर्ण्यैव क्रोधपरीतः राजद्वारि समुपस्थाय विवदमानः राजभटैः युध्यमानः प्राणान् विजह्रौ। वीराः भार्य्याया व्यभिचारदर्शिनः प्राणान्

तृणमिव गणयित्वा परित्यजन्ति हि। ततश्चानङ्गप्रभा सागरदत्ते नितान्तमनुरक्ता न्यवसत्। गच्छता कालेन अनङ्गप्रभा गर्भवती यथासमये पुत्रमेकमसूत। सागरदत्तः पुत्रं सागरवर्म्माणं नाम्ना कृत्वा महोत्साहेन महासमृद्ध्या च महोत्सवमकार्षीत्। अथ सागरदत्तः क्रमेण परिवर्द्धमानमतिक्रान्तशैशवं पुत्रं सागरवर्म्माणं यौवराज्ये अभिषिच्य कमलवतीसमाख्यया कयाचित् कन्यया परिणाय्य पुत्रगुणेन परां प्रीतिमुद्वहन् कालमत्यवाहयत्। ततश्च विदित्वा पुत्रं राज्यभारवहनक्षमं तस्मै राज्यं सर्वं प्रादात्।

सागरवर्म्मा प्राप्तराज्यः पितरं प्रणम्य दिग्विजयार्थमनुज्ञां प्रार्थयाञ्चक्रे। पितरि तद्विरहसहनाक्षमतया असम्मतेऽपि निर्बन्धातिशयेन कथमपि पित्रा दत्ताभ्यनुज्ञः दिग्विजयाय प्रतस्थे। अथ क्रमेण सर्वां पृथिवीं निर्जित्य हस्त्यश्वरत्नसञ्चयपरिपूरितः स्वं नगरं प्रतिनिववृते। सागरदत्तस्तथा प्रत्यागतं पुत्रं राज्ये प्रतिष्ठितं दृष्ट्वा प्रियया अनङ्गप्रभया सह प्रयागमगात्। सागरवर्म्मा च पितरं तथा परित्यक्तराज्यमनुशोचन् मन्त्रिभिः प्रबोधितः स्वं राज्यं यथाशास्त्रमन्वशात्।

कदाचित् भगवान् शम्भुः निशावसानसमये स्वप्ने सागरदत्तमादिशत् वत्स! अहं त्वां प्रति परितुष्टोऽस्मि, पूर्वस्मिन् जन्मनि अनङ्गप्रभा त्वञ्च विद्याधरौ आस्तं, शापच्युतौ मर्त्यलोकमागतौ, अद्य युवयोः शापक्षयोऽभूत्, प्रभाते युवाभ्यां स्वं पदं गन्तव्यमिति। प्रातश्चोत्थाय राजा अनङ्गप्रभान्तिकं स्वप्नवृत्तान्तमवर्णयत्। अनङ्गप्रभा सहर्ष-

मवादीत् नाथ! अहं विद्याधरराजस्य समरस्य तनया, पितृशापात् भ्रष्टा विद्याहीना च मनुष्यलोके स्थिता, विद्याधरीत्वञ्च मया विस्मृतम् अद्य तु सर्वमेव स्मृतावाविर्भूतम् इति वदन्त्यामेव तस्याम् आकाशात् तत्पिता समरः भूतलमवतीर्य्य सागरदत्तेन कृतप्रणामोऽनङ्गप्रभामब्रवीत् वत्से! शापस्ते गतः, तदागच्छ, विद्यां गृहाण, हा त्वमेकस्मिन् जन्मनि अष्टजन्मक्लेशमन्वभवः! एवमुक्त्वा कन्यां क्रोड़े कृत्वा विद्यां दत्त्वा च सागरदत्तमवादीत् भवान् मदनप्रभो नाम विद्याधरराजः, अहं समरः, कन्या चेयमनङ्गप्रभा, पूर्व्वमियं रूपगर्विता बहून् वरान् मयानीतानपि नागणयत्। त्वमस्याः सदृशोऽपि दुर्बुद्धिहतयानया अवधीरितः, तस्मादहं क्रोधादिमामशपम्। तेनैवेयं भूतलमवतीर्णा। त्वञ्च गौरीपतिं मनसा ध्यायन् मर्त्यलोकेऽपि इयं मे भार्य्या भवतु इति कामनया योगमार्गेण विद्याधरतनुं त्यक्त्वा मर्त्त्यदेहं परिगृहीतवानसि, ततश्च इयं भूतले तव भार्य्या भूता, इदानीं युवां स्वं धाम प्रतिपद्येथाम्।

सागरदत्तः समरमुखादेतदाकर्ण्य गङ्गायमुनासङ्गमपवित्रे प्रयागे देहं त्यक्त्वा सद्यः स्वं मदनप्रभदेहं परिजग्राह। अनङ्गप्रभा च विद्याधरपरिग्रहेण दीप्तिमती समुज्ज्वलाभं स्वं रूपं प्रत्यपद्यत। ततः सर्वे सम्प्रीता विद्याधरनगरे वीरपुरे प्रतस्थिरे। ततः समरः यथाशास्त्रं मदनप्रभमभ्यर्च्य तस्मै अनङ्गप्रभां प्रादात्। मदनप्रभोऽपि प्रियतमया सह स्वं गृहमेत्य सुखेन न्यवसत्।

युवराज! देवा अपि इत्थं शापभ्रष्टा नरलोकेषु जायन्ते, शापमुक्ताश्च पूर्वसुकृतबलेन पुनः स्वं स्वं पदं प्राप्नुवन्ति च। नरवाहनदत्तः प्रेयस्या सह गोमुखात् इमामद्भुतां कथामाकर्ण्य परां प्रीतिमवाप।

---

## विपञ्चाशत्तरङ्गः।

अथापरेद्युः मरुभूतिरलङ्कारवत्या समासीनं युवराजमब्रवीत् देव! अयं जटिलः सन्यासी चर्म्मवासास्तव द्वारि दिवारात्रं शीतातपवर्षमपि अगणयन् निश्चलः समासीनस्तिष्ठति, एनं प्रति भवतो दया समुचिता। समये अल्पदानमपि वरं न तु असमये प्रचुरमपि, तदेष यावत् जीवति, तावदस्मै किञ्चित् अनुकम्पया दीयतामिति। गोमुखोऽपि मरुभूतेर्वचस्तथेति अभिनन्द्याब्रवीत् सत्यं परं यावत् मानवो न निष्पापो भवेत्, तावद्नुकद्धोऽपि तस्मै दातुं कश्चित् नाभिलषति। क्षीणपापाय तु निवारितोऽपि प्रभुरर्थिने स्वयं दातुमिच्छति। सर्वमेव मनुष्यस्य कर्म्मायत्तम्, अत्रैतां कथां कथयामि श्रूयताम्।

अस्ति लक्षपुरं नाम नगरम्। तत्रासीत् लक्षदत्तो नाम नृपतिः। स खलु कदाचिदपि लक्षमुद्रान्यूनं कस्मैचिदपि न दत्तवान्। तेनैव च लक्षदत्त इति तस्य प्रसिद्धिः। तस्य सिंहद्वारि लब्धदत्तो नाम कश्चित् दरिद्रः भिक्षुः

सुचिरं कालं दिवारात्रं न्यवसत् । राजा कदापि दयया तस्मै किमपि न ददौ ।

कदाचिदसौ नरपतिः सशस्त्रः मृगयामगमत् । द्वारस्थः सन्न्यासी च लगुडपाणिस्तमनुसरन् काननं प्रविश्य तेनैव लगुड़ेन अग्रत एव बहून् पशून् व्यनाशयत् । तदा राजा तस्य पौरुषदर्शनेन तं महावीरं जानन्नपि तस्मै किमपि नादात् । समाप्ते च मृगयाव्यापारे राजा गृहमागमत् । सोऽपि भिक्षुस्तथैव तमनुगच्छन् राजद्वारि पूर्ववत् आगत्य तस्थौ ।

एकदा दायादैर्विरोधितो नृपः ससैन्यस्तान् अभिजगाम । स च सन्न्यासी राजसमक्षमेव एकाकी तेषां विरोधिनां दायादानां बहूनि सैन्यानि तेनैव लगुड़ेन संजहार । राजा जयलाभेन सम्प्रीतः स्वं गृहं प्रत्याजगाम । तथापि तस्मै भिक्षवे किमपि न प्रददौ । इत्थं पञ्च वत्सरान् अतिक्लेशेन अतिवाहयति तस्मै एकदा राजा परितुष्टः किञ्चित् दित्सुरपि कमला तं प्रति सदया न वेति कौशलेन परीक्षितुमभिललाष । ततश्च एकस्मिन् निम्बौ बहूनि रत्नानि पूरयित्वा सर्वसमक्षं लक्ष्यदत्तमाजुहाव । सोऽपि राजाज्ञया सद्य एव समीपमाजगाम । अथ राज्ञा किमपि आवर्त्तयितुमादिष्टोऽसौ इमामार्य्यां पपाठ ।

"पूरयति पूर्णमेषा तरङ्गिणीसंहतिः समुद्रमिव ।
लक्ष्मीरधनस्य पुनर्लोचनमार्गेऽपि न संयाति ॥"

राजा आर्य्यां श्रुत्वा सन्तुष्टोऽपि पुनः पाठयित्वा तस्मै तत् रत्नपूर्णं निम्बु प्रददौ । सन्न्यासी तादृशं पुरस्कारं लब्ध्वा

दुःखितोऽपि तदादायैव प्रतस्थे। सभ्याश्च सर्वे अस्य याथा-
तथ्यमविदित्वा परस्परं सुदुःखिताः अब्रुवन् राजायं यं प्रति
सन्तुष्येत् तस्य दारिद्र्यं नश्यति, परमस्य भिक्षोर्हतभाग्यतां
पश्यत, हतभाग्यानां कल्पतरवोऽपि पलाशविटपिन इति।

अथासौ भिक्षुः राजदर्शनार्थमागताय राजवन्दिनाम्ने
भिक्षुकाय वसनविनिमयेन तत् रत्नपूर्णं मातुलुङ्गं प्रादात्।
सोऽपि राजान्तिकमुपगम्य तस्मै तत् उपायनं प्रददौ।
राज्ञा विदितमपि तदागमहेतुं परिपृष्टोऽसौ तस्यैव
सन्न्यासिनो नामाकरोत्। तदाकर्ण्य राजा विस्मितः
नाद्यापि अस्य पापक्षयो जात इति निश्चित्य तत् निम्बु
गृहीत्वा स्नानादिव्यापारसमाधानाय आस्थानमण्डपात्
समुत्तस्थौ।

अथापरेद्युः पुनरपि राजा तं सन्न्यासिनमाहूय पार्श्वे
समुपवेश्य तथैव तामार्यां पाठयित्वा पूर्ववत् तदेव निम्बु
तस्मै पुरश्चकार। ततश्च सन्न्यासिनि तथैव तदादाय निर्गते
सर्वे पारिषदाः राज्ञः वृथा पुरस्कार इति मन्यमानाः
विषेदुः। अथासौ भिक्षुः राजदर्शनार्थमागताय कस्मैचित्
विषयिणे वस्त्रयुगलविनिमयेन तत् निम्बु पुनः प्रददौ।
सोऽपि अन्यैर्नानाविधैः द्रव्यैः तदपि राज्ञे उपायनीचकार।
राजा तमपि पूर्ववत् निम्बुप्राप्तिकारणमपृच्छत्। सोऽपि
तमेव सन्न्यासिनमदर्शयत्।

राजा तदाकर्ण्य अद्यापि लक्ष्मीस्तं नानुकम्पते इति
दुःखितः सभामण्डपात् समुत्थाय अन्तःपुरमविशत्। सन्न्यासी
तयोरेकं वस्त्रखण्डं विक्रीय आहारादिकं संजग्राह चकार

च द्वितीयं छित्वा परिधेयवसनम्। अथ तृतीयेऽह्नि राजा तथैव भिक्षुमाहूय तामार्य्यां पाठयन् तदेव मातुलुङ्गं पुरश्चकार। तदवलोक्य पारिषदाः सर्वे नितरां विस्मिताः समभूवन्। सन्यासी राजसकाशात् निर्गत्य तत् मातुलुङ्गं राजवारविलासिन्यै समर्पयत्। वाराङ्गना परितुष्टा तस्मै किञ्चित् स्वर्णं दत्त्वा व्यसर्जयत्। सन्यासी तदवाप्तरा सन्तुष्टः सुखी चाभवत्।

अथ सा वारयोषित् राजान्तिकमुपगम्य तत् रमणीयं फलं राज्ञे उपाहरत्। राजा तदादाय तदागमकारणं विदित्वापि तामपृच्छत् कुतस्त्वयेदमासादितमिति। गणिकावदत् सन्यासिनः सकाशादधिगतमिति। राजा सन्यासिनं प्रति कमलाया नितान्तवैमुख्यं विचिन्तयन् समुत्थाय स्नानभोजनाद्यर्थम् अन्तःपुरमगात्।

अथ चतुर्थेऽहनि राजा यावत् तस्मै सन्यासिने तत् फलं पुरस्करोति, तावत् तत् तस्य सन्यासिनो हस्तात् सहसा भूमौ पतद्भज्यत। भग्नमात्राच्च तस्मात् राजरञ्जितानि रत्नानि निरगच्छन्। तदालोक्य सर्वे सभासदः सविस्मयमवदन् देव! वयमस्य तत्त्वमजानन्तः एतावन्तं कालं देवस्य दयानुग्रह इति मन्यमानाः भ्रान्ताः समभूम। तद् यावत् देवस्य अनुग्रहप्रकार एवंविध एव।

अथ राजाब्रवीत् लक्ष्मीः कियति काले एनं पापिष्ठम् अनुगृह्णीयतीति जिज्ञासुरहं कौशलमिदमुद्भावयम्। दृष्टमद्य एनं प्रति सदया, तन्मन्ये अस्य पापक्षयो जात इति कथयित्वा तस्मै अन्यदपि प्रचुरमैश्वर्य्यं प्रादात्।

एतद्वाक्यं श्रुत्वा सर्वे राजानं साधु साधु इति प्राशंसन्। ततश्च राजनि सभागृहादुच्चलिते भिक्षुरसौ सिद्धकामः स्वं स्थानं प्रतिपेदे।

युवराज! अक्षीणे पापे प्रभवोऽपि भृत्यान् प्रति न प्रसीदन्ति, सति दुरदृष्टे बहुषु क्लेशेषु पतितमपि जनं न कोऽपि अनुकम्पते। तन्मन्ये अद्यापि अस्य सन्न्यासिनः पापक्षयो न जातः, नो चेत् प्रभुरवश्यमेव एनं प्रति सदयो भवेत्।

युवराजो नरवाहनदत्तः गोमुखमुखात् सन्न्यासिनो वार्त्तां श्रुत्वा तं भूयसा प्रशशंस प्रददौ च तं सन्न्यासिनमाहूय तस्मै प्रचुराणि धनानि। कृतज्ञं सुशीलं प्रभुं सेवित्वा न कोऽपि निष्फलो भवति।

अथैकदा दक्षिणापथादागतः प्रलम्बबाहुर्नाम कश्चित् वीरो द्विजातिः युवराजस्य दिगन्तव्यापिनीं कीर्त्तिं समाकर्ण्य समीपमागत्य प्रत्यहं शतमुद्रावृत्तिमयाचत। युवराजोऽपि तस्य मनोरथमविचार्य्यैव पूरयामास। तदवलोक्य गोमुखः युवराजं बहु प्रशस्य कथामेतामाचख्यौ।

अस्ति विक्रमपुरं नाम नगरम्। तत्रासीत् विक्रमतुङ्गो नाम भूपतिः। तस्य वीरवरो नाम कश्चित् सेवकः। तस्य परिजनास्त्रयः, एका धर्म्मवती पत्नी, द्वितीया वीरवती कन्या, तृतीयः सत्त्ववरो नाम पुत्रः। स खलु राज्ञः सकाशात् प्रत्यहं पञ्च शतानि दीनारान् वेतनं ययाचे। राजा गुणज्ञतया तं गुणवन्तं विदित्वा तथैवाङ्गीचकार, नियुक्तोज च कञ्चित् चरं स एताभिर्मुद्राभिः किं करोतीति

तथ्यमनुसन्धातुम् । चारः सम्यक् अनुसन्धाय राजानं व्यज्ञापयत् देव ! देवसकाशात् असौ पञ्चशतदीनारान् प्राप्य तेषु एकं शतं गार्हस्थ्यनिर्वाहाय पत्न्यै समर्पयति, शतद्वयेन देवार्चनार्थं वस्त्रमाल्यादिद्रव्याणि क्रीणाति, अपरेण च शतद्वयेन ब्राह्मणान् दीनाननाथांश्च परितोषयति । एतत् सर्वं समाप्य दिवारात्रं देवस्य सिंहद्वारि समासीनस्तिष्ठति । एतदाकर्ण्य राजा तं प्रति परितुष्टः चारम् एतद्वृत्तान्तं प्रकटयितुं निवार्य्य व्यसर्जयत् ।

कदाचित् महामेघपटलावृतात् गगनतलात् साशनिपातासु मुषलधारया पतन्तीषु वृष्टिषु पृथिवी समाप्लाविता । गृहस्थिता अपि प्रलयमिव मन्यमानाः परां शङ्कामवापुः । वीरो वीरवरस्तु एकाकी तस्मिन्नेव सिंहद्वारि निश्चलस्तस्थौ । राजा विक्रमतुङ्गः प्रासादात् वीरवरमेकाकिनं तथा स्थितं दृष्ट्वा बहु प्रशस्य च महानुभावत्वेन महासाहसिकत्वेन समुन्नतपदयोग्यममन्यत ।

अत्रान्तरे दूरात् वामारोदनध्वनिर्नृपकर्णविवरं प्राविशत् । राजा सद्य एव वीरवरं तदनुसन्धानाय समादिश्य स्वयमपि तमनुससार । वीरवरस्तथेति राजाज्ञां शिरसि विधृत्य तं सूचीभेद्यं तमोराशिं भिन्दन् रोदनानुसरणक्रमेण एकं सरसीतटमगात्, अद्राक्षीच्च तत्र कापि रमणी हा नाथ ! हा अनुकम्पिन् वीर ! क्व मां परित्यज्य गमिष्यसीति विलपन्ती तारस्वरेण रोदिति, वीरवरेण शनैः समीपमुपस्थितेन किमर्थं रोदिषि, का त्वमिति परिपृष्टा सा प्राब्रवीत् अहं त्रिकालज्ञा पृथ्वी, धार्म्मिको राजा

विक्रमतुङ्गो मम पतिः, इतस्तृतीये दिवसे पतिर्मे मरिष्यति, तत्तादृशः पतिः क्व वान्यत्र मया लप्स्यते ? इत्येतत् मे शोकहेतुरिति ।

एतदुक्त्वा विरतां तां वीरवरः प्रोवाच देवि ! अस्ति कश्चिदस्य प्रतीकार इति । वसुन्धरा प्रत्यभाषत वत्स ! यदि कश्चित् तस्य सेवकः चण्डिकायै स्वं पुत्रं बलिरूपेणोपाहरेत् तदा राजा जीवष्यतीति । वीरवरस्तथेत्यभिधाय गृहं प्रत्ययात् । देवी च भूतधात्री अन्तर्दधे ।

वीरवरस्तु सद्य एव गृहमेत्य स्वं पुत्रं सत्त्ववरं प्रबोध्य वसुमतीसंवादमकीर्त्तयत् । पुत्रोऽपि सानन्दं तत् सममंस्त । अथ वीरवरस्तं पुत्रं बहु प्रशस्य स्कन्धे निधाय पत्नीं तनयाञ्च पृष्ठतः कृत्वा चण्डिकामन्दिराभिमुखं प्रतस्थे । राजापि किमयं करोतीति कुतूहलाक्रान्तहृदयः तमनुसरन् देवीमन्दिरं प्रति अलक्षितः प्रचचाल । वीरवरश्चण्डीगृहं प्राप्य सत्त्ववरं पत्नीं तनयाञ्च अवरोप्य कृताञ्जलि देवीं व्यजिज्ञपत् मातः ! अनेन पुत्रशिरसा सम्प्रीता अस्मत्स्वामिनः प्राणान् रक्षतु भवती, स च राजा निष्कण्टकं राज्यं भुनक्तु इति प्रार्थ्य धन्योऽसि पुत्र ! इति वदन् तस्य शिरश्चिच्छेद, उपजहार च तत् राज्ञः कुशलं भूयादित्युक्त्वा देवीसमक्षम् ।

समनन्तरञ्च आकाशात् दिव्या वागुदचरत् वीरवर ! धन्योऽसि त्वमेव साधुः, त्वं प्रभोः कुशलार्थी पुत्रशिरःप्रदानेनापि देवीं प्रीणयित्वा प्रभुभक्तेः परां काष्ठां प्रादर्शयथाः, अथवा प्रभुभक्तानाम् आत्मनि वा पुत्रे दारेषु च

न ममताभिमानः स्यात् इति। राजा वृत्तान्तमिमं प्रत्य-क्षीकृत्य श्रुत्वा च परं विस्मयमाजगाम। अथ वीरवरस्य तनया वीरवती भ्रातृशोकविधुरा तत् छिन्नं मस्तकमादाय पुनश्चुम्बित्वा च हा भ्रातरित्युच्चैर्विलपन्ती प्राणान् विजहौ। ततश्च तत्पत्नी धर्म्मवती पुत्रकन्ययोर्विनाशं पश्यन्ती कृता-ञ्जलिः सकरुणं वीरवरमभाषत नाथ! राज्ञस्तावत् मङ्गल-मभूत्, साम्प्रतम् अनुमन्यस्व माम्, अहम् अग्निं प्रविश्य प्राणान् त्यजामीति। शिशुमेतां कन्यां भ्रातृशोकेन त्यक्त-जीवितामालोक्य ममेदानीं जीवनं न कथमपि शोभते इति। पत्न्या एतद्वचनमाकर्ण्य वीरवरः प्रोवाच प्रिये! पुत्रशोकमयेऽस्मिन् संसारे स्थित्वा तव सुखं नास्ति सत्यं तदपेक्षस्व, अहमेव त्वदर्थं चितां रचयामि, यत्र प्रविश्य तवाङ्गं शीतलं भविष्यतीति समाख्याय तस्मिन्नेव चण्डी-क्षेत्रे काष्ठान्याहृत्य चितां रचयित्वा प्राज्वालयत्। धर्म्म-वती प्रत्युश्चरणावभिवाद्य आर्य्यपुत्र! जन्मान्तरेऽपि त्वमेव मे पतिर्भूयाः, राज्ञश्च शुभमित्युक्त्वा ज्वलन्तीं चितामधि-रुरोह।

राजा विक्रमतुङ्गः अद्भुतं लोमहर्षणं व्यापारमिमम् अवलोक्य कथमहं वीरवरणादात्मानं मोचयामीति चिन्ता-सरसीसलिले न्यमज्जत्। धीरवरो वीरवरस्तु इत्थं स्वामि-कार्य्यं निर्वर्त्त्य व्यचिन्तयत् मया सर्वस्वभूतेन पुत्रेण स्वामि-कार्य्यं निर्वाह्य भर्त्तृपिण्डस्य आनृण्यं लब्धं, श्रुतञ्च दिव्य-वचः, तदेवं स्थिते साम्प्रतं स्वजीवनार्थं प्रयासाः आत्म-भरित्वमेव, तस्मादसारेण निष्प्रयोजनेनानेन जीवनेन

देवीमर्चयन् जीवनं सफलयामीति निश्चित्य देवीं स्तुवन् यावत् स वीरवरः स्वं शिरश्छेत्तुमुद्यच्छति, तावद् अन्तरीक्षवाक् समुदतिष्ठत् पुत्र ! निवर्त्तस्वास्माद् व्यवसायात्, तव अलोकसामान्येन साहसेन नितरां तुष्टास्मि, तद् गृहाण वरं यदिच्छसि तदेव ददामीति ।

एतदाकर्ण्य वीरवरः स्वशिरश्छेदनाद्विरम्य कृताञ्जलिरवादीत् मातः ! यदि प्रसन्नासि, तदा राजानं विक्रमतुङ्गं शतायुषं कृत्वा मम पुत्रं कन्यां पत्नीञ्च जीवयतु भवतीति । अथ "तथास्तु" इति दैववाचि उच्चरितायामेव सर्वे वीरवरपुत्रादयो अक्षतकलेवराः सुप्तोत्थिता इव समुत्तस्थुः । वीरवरः पुत्रकन्ये पत्नीञ्च जीवितां विलोक्य सानन्दः सपरिजनः देवीं प्रणम्य गृहं प्रति प्रायात् । रक्षित्वा गृहे परिजनान् पुनः नृपतेः सिंहद्वारमागत्य तथैव निश्चलस्तस्थौ ।

राजा तु सर्वं वृत्तान्तं दृष्ट्वा विस्मितो हृष्टश्च तथैवालक्षित एव राजभवनमेत्य प्रासादमध्यतिष्ठत् । विश्रम्य च क्षणं पुनरपृच्छत् कोऽस्ति सिंहद्वारि साम्प्रतम् ? वीरवरः प्रत्यभाषत प्रभो ! अहं तिष्ठामि वीरवरः, यां स्त्रियमनुसर्त्तुं मामादिशन्महाराजः, सा मया सकृत् अवलोकितैव अन्तर्हितेति । सर्ववृत्तान्तदर्शी नृपतिः वीरवरमुखादित्थमाकर्ण्य भूयोऽपि विस्मयाम्बुधौ निमग्नः समचिन्तयत् किमद्भुतम् ? ईदृशालौकिकप्रकृतिः पुरुषः कदापि क्वापि न श्रुतो न च दृष्टः, अयमीदृशम् अलोकसाध्यं कर्म कृत्वापि सकृदपि मुखेन तदुल्लेखं नाकरोत्

सागरो गम्भीरो विशालो महासत्त्वोऽपि वात्यया क्षुभ्यति, वीरवरस्तु न कथमपि । किमिदानीं करोमि, यः सपरिवारो जीवनप्रदानेन मां जीवितवान्, केन प्रत्युपकारेण तस्य ऋणादात्मानं मोचयामि, किमपि निश्चेतुं न शक्यते । एवं चिन्तयन् अन्तःपुरं प्रविश्य निशामत्यवाहयत् ।

अथ प्रभाते राजा सभासीनः सर्वजनसमक्षं वीरवरमाहूय रात्रिवृत्तान्तमवर्णयत् । तदाकर्ण्य विस्मिताः सर्वे वीरवरं भूयसा प्रशंसन्ति स्म । राजा पश्यत्सु पारिषदेषु वीरवरशिरसि सम्मानदं पट्टबन्धं ददत् प्रभूतया सम्पदा तं पुरस्चकार । वीरवरस्तामतुलां सम्पदमासाद्य सुखेन द्वितीयो नृप इव कालमनयत् ।

गोमुखः इदमाख्यानमुक्त्वा पुनरवदत् युवराज ! भवतः सिंहद्वारि स्थितः प्रलम्बबाहुरपि तथाभूतसर्वगुणसम्पन्नः कोऽपि महात्मा भवितुमर्हति, अस्य आकृतिप्रकृती दृष्ट्वा मन्ये नायं साधारणो मानव इति । नरवाहनदत्तः गोमुखात् सर्वमेतदाकर्ण्य परां प्रीतिमवाप ।

---

## चतुःपञ्चाशत्तरङ्गः ।

कदाचित् नरवाहनदत्तः गोमुखेन सह रथमारुह्य मृगयार्थमरण्यमगात् । सह्यासौ प्रलम्बबाहुरपि तदग्रतः अश्वादीनप्यतिक्रम्य गच्छति स्म । युवराजः रथस्थित

एव शरैः दुष्टमृगान् सिंहव्याघ्रादीन् व्यापादयामास। प्रलम्बबाहुस्तु पादचारी असिमात्रसहायः बहून् सिंहादीन् अनाशयत्। युवराजः प्रलम्बबाहोरसामान्यं शौर्यं वीक्ष्य विस्मितः मृगयाश्रमेण तृषाकुलः जलान्वेषणाय दूरवर्त्ति महावनमविशत्, अपश्यच्च तत्र समुत्फुल्लसुवर्णकमल-शोभितमेकमपूर्वं सरः। अथ तत्र सर्वे क्षणं विश्रम्य स्नान-पानादिकमकुर्वन्।

अथ युवराजः सहसोपस्थितान् तानि कमलानि चेतुं चतुरः पुरुषानवलोक्य तेषामन्तिकमाजगाम। ते च तं दृष्ट्वा परिचयमपृच्छन्। अथ युवराजेन स्वपरिचये दत्ते तेऽब्रुवन् सागरमध्यवर्त्तिनि नारिकेलद्वीपे मैनाको वृषभः चक्रः बलाहकश्चेति सन्ति चत्वारः पर्वताः। तेषु वयं वसामः। अस्माकमेको रूपसिद्धिः द्वितीयः प्रमाण-सिद्धिः, तृतीयो ज्ञानसिद्धिश्चतुर्थो देवसिद्धिर्नाम। रूप-सिद्धिर्बहुरूपं धत्ते, प्रमाणसिद्धिर्वृहत् सूक्ष्मञ्च प्रमाणं साधयितुं शक्नोति, ज्ञानसिद्धिः कालत्रयं वेत्ति, देवसिद्धिः सर्वासु देवतासु सिद्धिमापन्नः। वयं श्वेतद्वीपवासिनो भगवतो नारायणस्य सेवकाः तत्कृपयैव एषु पर्वतेषु आधिपत्यं कुर्मः। साम्प्रतं तदाराधनार्थं पद्मान्याहर्त्तुमा-गताः, आहृतेषु च पद्मेषु पुनस्तत्रैव गमिष्यामः। यदि भवान् भगवन्तं द्रष्टुमिच्छति, तदागच्छतु अस्माभिः सह। वयं विमानेन भवन्तं तत्र नेष्याम इति।

युवराजस्तेषां देवानां वचसि सम्मतः गोमुखादीन् तत्रैव सरसीतीरे अपेक्षितुमादिश्य तैः सह श्वेतद्वीपं

प्रायात्। गत्वा च तत्र भगवन्तं गरुड़ध्वजम् आराधयितु-
मागच्छत: भक्तान् नारदप्रमुखान् सिद्धान् गन्धर्वान् विद्या-
धरांश्च दृष्ट्वा स्वयं भक्तिनम्रकाय: स्तोतुमारेभे। भगवान्
नारायण: युवराजं प्रति प्रसन्न: नारदम् अब्रवीत् नारद!
गच्छ त्वममरावतीं वाच्यश्च त्वया मद्वचनात् देवराजः,
यथा पूर्वमह क्षीरसागरात् या: काश्चिदप्सरसस्त्वयि न्यस्ताः,
ताः सत्वरं मत्प्रकाशं प्रेष्यन्तामिति सन्दिश्य नारदं
व्यसर्जयत्। अब्रवीच्च युवराजं नरवाहनदत्त! त्वं विद्या-
धरचक्रवर्त्ती भविष्यसि, त्वमेवासामप्सरसां योग्य: पति-
रिति एतास्तुभ्यं दास्यामीति। नरवाहनदत्त: भगवत-
स्तादृशेन अनुग्रहेण कृताञ्जलि: साष्टाङ्गपातं प्रणिपतत्।

अथ देवेन्द्र: हरेरादेशात् रथेन ता: अप्सरस: प्रेष्य
सारथिं मातलिमादिशत् मातले! त्वमिमा: सुरसुन्दर्य्यः
श्वेतद्वीपवर्त्तिने नरवाहनदत्ताय प्रदेया:, स च येन पथा
राजधानीं गन्तुमेष्यति, तेनैव पथा आभि: सुराङ्गनाभि:
सह स्वं राजभवनं नेतव्य इति। मातलिस्तथेति भर्त्तु-
राज्ञया युवराजसमीपमेत्य अप्सरसस्तस्मै दत्त्वा इन्द्रसन्देश-
मकथयत्। युवराजस्तु रूपसिद्धादीनामनुरोधपरतन्त्र:
मातलिसारथिना रथेन नारिकेलद्वीपमुत्तीर्य्य चतुरो दिव-
सान् तत्रत्येषु पर्वतेषु चतुर्षु नानाविधानि अद्भुतानि
द्रष्टव्यानि वस्तूनि समालोक्य तैर्विसर्ज्जित: देवविमानेन
तेन तत् सरोवरमाजगाम। आगत्य च तत्र गोमुखादीन्
गमनाय समादिश्य मातलिसारथिना रथेन ताभिरप्स-
रोभि: परिवृत: कौशाम्बीं प्रत्यागमत्। आगत्य च स्वं

भवनं मातलिं सम्मानयन् विसर्ज्य सुरसुन्दरीभिः सह अन्तःपुरं प्रविश्य ताश्च यथास्थानं संरच्य पित्रोः सकाशं गत्वा प्रणिपपात। तौ च पुत्रं तादृशाभ्युदयशालिन-मभिनन्द्य परां प्रीतिमूहतुः।

अथ गोमुखे प्रलम्बबाहुना सह नगरमागते राजा तत्प्रमुखात् नरवाहनदत्तं प्रति भगवतस्तादृशम् अनुग्रहं श्रुत्वा विस्मितः प्रहृष्टश्च महामहोत्सवमकारयत्। अथ गोमुखेन वन्दयितुमानीताः देवरूपादीः चतस्रः सुरसुन्दरीः दासीभिः समवेताः समीक्ष्य परमानन्दमलभत। कौशाम्बी अप्सरसां सङ्गेन सुरपुरीव व्यराजत। अथ नरवाहनदत्तः विरहक्षशाः पूर्वप्रेयसीः सम्बर्ध्य सर्वा एव सुखिनीरकार्षीत्।

एकदा युवराजः अलङ्कारवत्या समासीनः गोमुखादिषु पारिषदेषु तिष्ठत्सु सहसा तूर्य्यध्वनिमशृणोत्। कथमेतत् सहसा ध्वनतीति पृष्टो युवराजेन हरिशिखः सत्वरं बहिर्निर्गत्य सर्वं वृत्तं विज्ञाय पुनः प्रविश्य च अवादीत् देव! एतन्नगरवासी रुद्रो नाम वणिक् सुवर्णद्वीपे वाणिज्यार्थं गतः यथायथं कृतवाणिज्यः गृहं प्रत्यागच्छन् समुद्रे भग्नपोतोऽभूत्। तत्र च जलसात्सर्वस्वोऽसौ एकाकी कथञ्चित् जीवन् गृहं प्रत्यागात्। अद्य दिवसषट्कमतीतं तस्य प्रत्यागमनदिनात्। स खलु वराकः धनशोकेन निरन्तरं म्लानवदनः शीर्णकलेवरः सौभाग्योदयात् स्वमुद्यानं विचरन् धनराशिं दैवदत्तमासादितवान्। तदीयेव दुःखदैन्यायमानायितचेतोभिस्तां वार्त्तां विज्ञापिते

इत्युक्तो स भयेन राजान्तिकं समेत्य सर्वं तत् अर्थजातं प्रभुचरणेषु समर्पितवान्। महाराजस्तु तस्य सम्पद्विनाश-श्रवणेन दुःखितः तत् सर्वं धनं तस्मै एव भोक्तुं समादिदेश। तदर्थं वणिक् प्रभुचरणेषु निपत्य प्रभुणा समाश्वासितो हर्षेण तूर्य्यनादं कारयन् गृहं प्रति गच्छतीति।

एतदाकर्ण्य युवराजः पितुरसामान्यामुदारतां प्रशस्य सविस्मयमवादीत् चित्रमिदं विदिता यथा अर्थान् नाशयति, तथैव ददाति, केवलं संसारवृत्तमिदं तस्य क्रीडाविलसितमेव। एतदाकर्ण्य गोमुखस्तथेति तद्वाक्यं प्रतिनन्द्य प्राब्रवीत्।

देव! पुरा हर्षाख्ये नगरे समुद्रशूरो नाम कश्चित् समृद्धो धार्मिको वणिक् प्रतिवसति स्म। स एकदा वाणिज्यार्थं सुवर्णद्वीपं यास्यन् अर्णवतीरमागत्य समुद्रपोतमारुरोह। कियन्तमध्वानं गते तस्मिन् सहसा समुदितात् मेघमण्डलात् सवातवृष्टिरतिमहती प्रादुरासीत्। तत्र प्रवहणं प्रबलतरङ्गाघातेन भग्नं दृष्ट्वा समुद्रशूरः जलराशौ निपत्य कमपि शवमाश्रयत्। क्रमेण वात्यया सह वृष्टिषु निवृत्तासु शान्ते च जलनिधौ अनुकूलवायुवशात् भासमान एव॰ सुवर्णद्वीपस्य उपकण्ठं प्राप। तत्र च तीरमुत्तीर्य्य किञ्चित् लब्धस्वास्थ्यः शवस्य परिधेयात् सहसा निर्गतं बहु रत्नमयं स्वर्णहारं प्राप्य सागरजलनिमग्नं सर्वं स्वं धनं तृणाय मन्यमानः परां प्रीतिमवाप। ततः कृतस्नानाहारः कलसाख्यं नगरमभिजगाम। गच्छंश्च पथि देवालयमेकं दृष्ट्वा तदन्तः प्रविवेश। प्रविश्य च तत्र श्रमार्त्तः

वृक्षच्छायायां सुष्वाप। निद्रितस्य तस्य हस्ते तत् बहु-मूल्यं कण्ठाभरणं दृष्ट्वा राजपुरुषास्तत्रागताः तत्रत्यराज-कन्यायाश्चक्रसेनाया अपहृतं तदाभरणं प्रत्यभिज्ञाय चौर इति तं जगृहुः, निन्युश्च राजद्वारम्। अथ राज्ञा पीड़ितः स सर्वमेव यथावृत्तमाख्यत्, परं राजा तत् सर्वमलीकं मत्वा यावत् तदाभरणं हस्ते कृत्वा सभ्यान् दर्शयति, तावत् सहसा आकाशात् एको गृध्रो निपत्य राजहस्तात् तदाच्छिद्य उत्पपात। तदालोक्य बणिक् रुदन् देवदेवं शम्भुं शरणमस्मरत्। अथ राज्ञा क्रुद्धेन तं प्रति बधदण्डे आज्ञप्ते सहसा दैववाणी अभवत् राजन्! मा विनाशयै-नम्। अयं हर्षपुरवासी समुद्रशूरो नाम बणिक्। अति-सज्जनोऽयं कार्य्यवशात् भवद्विषयमुपागतः। आभरणमिदं राजकन्याया एव यश्चादश्चौरितवान्, स नगररक्षकभयात् पलायमानः समुद्रं गत्वा प्राणानत्यजत्। वाणिज्यार्थ-मागच्छन्नेष बणिक् यानभङ्गविनष्टसर्वस्वः सागराम्भसि पतितः दैववशात् तस्यैव चौरस्य मृतदेहं जले भासमान-माश्रित्य कथञ्चित् तीरमुत्तीर्णः। ततः सहसा शवस्य वस्त्रात् आभरणमिदं प्राप्य भवद्विषयमुपस्थितः। तदेन-मदत्वा सादरं पुरस्कृत्य विसर्जयेति।

एतदाकर्ण्य राजा सविस्मयः सर्वं तथ्यं मत्वा समुद्र-शूरं बधदण्डात् मोचयित्वा बहुतरमर्थं तस्मै पुरस्कृत्य व्यस-र्ज्जयत्। समुद्रशूरः इत्थं बहूनर्थान् प्राप्य तैश्च बहुतराणि द्रव्याणि क्रीत्वा निर्विघ्नेन समुद्रादुत्तीर्णः गृहाभिमुखं गच्छन् पथि कतिपयैः सार्थवाहैर्मिलितः प्राक् सन्ध्यायाः

कामपि अटवीं प्रविवेश। विभावरी च घोरा समायात्। ततश्चागतिकेषु सर्वेषु तरुमूलमाश्रित्य श्रमवशात् निद्रितेषु केवलमेकः समुद्रशूर एव जजागार। अथ निशीथे सहसा चौराः समागत्य तान् पान्थान् सार्थवाहान् हताहतान् कुर्वन्तः सर्वाणि अर्थजातानि तेषामहरन्। एकः समुद्र-शूरः त्यक्तसर्वस्व एव पलाय्य अलक्षितं वटतरुमारोहन् प्राणानरक्षत्। अथ गतेषु दस्युषु समुद्रशूरः कथञ्चित् तमेव वृक्षमाश्रित्य रजनीमयापयत्। ततश्च प्रातः यावत् तरोरवरोहति, तावत् तस्यैव तरोः स्कन्धदेशवर्त्तिनि विवरे देदीप्यमानं पक्षिकुलायमेकं दृष्ट्वा तदन्तिकं गत्वैव तत् कण्ठाभरणमद्राक्षीत्। दृष्ट्वैव तदेवैतदिति प्रत्यभि-ज्ञाय तरोरधस्तादवतीर्य सानन्दं देवी विचित्रा गति-रिति विभावयन् स्वगृहाभिमुखं प्रतस्थे। समागत्य च गृहं सपरिवारः सुखेन कालं नयति स्म। युवराज! विधिविलसितं पश्यन् देवः, सकृतिनः बहून् क्लेशान् प्राप्यापि परिणामसुखिनो भवन्त्येव। एतदाकर्ण्य गोमुख-मुखात् युवराजः स्नानभोजनादिसमाधानाय सभामण्ड-पादुत्तस्थौ।

अथापरेद्युः सर्वेषु समासीनेषु गोमुखोऽवदत् प्रभो! आसीत् हस्तिनापुरे समरबालो नाम सर्वशक्तिसम्पन्नः कश्चिन्महीपतिः। एकदा तत्प्रतिवासिनो दायादाः समेत्य तं पराजेतुं कृतसङ्कल्पाः गणकानाहूय प्रयाणस्य शुभलग्नं निर्द्धारयितुं समादिशन्। गणका गणयन्तः सम-ब्रुवन् वर्षाभ्यन्तरे एकमपि दिनं यात्रिकं नास्ति, यदि

भवन्तो निषेधमवजानन्तो यात्रां कुर्य्युत, नियतमेव भवतां विपदापतिष्यति। समधिकाः सम्पदोऽपि निजाः क्षयं गमिष्यन्ति। एवमुक्ता गणकाः कथामेतामाख्यातुमुपचक्रमिरे।

अस्ति कौतुकपुरं नाम नगरम्। तत्रासीत् बहुसुवर्णो नाम नृपतिः। तस्य यशोवर्म्माख्यः कश्चित् क्षत्रियः सेवकोऽभूत्। तेनार्थमर्थितो राजा कदापि तस्मै किमपि न प्रादात्। केवलं सूर्य्यदेवं दर्शयित्वा इत्थमवादीत् पश्य अहं तुभ्यं दातुमिच्छामि, परं देवोऽयं भास्वान् तुभ्यं दातुं निषेधति। तदत्र नास्ति मे दोष इति। पुनःपुनरेवमर्थयन्नपि राज्ञा प्रतारितोऽसौ यशोवर्म्मा एकदा सूर्य्यग्रहणोपलक्षेण बहुमर्थान् दातुं प्रवृत्तं महीपतिमभ्येत्य न्यवेदयत् प्रभो! योऽयं दिवाकरो मां प्रति विरुद्धः सततं दित्सुमपि देवं निवारयति, सोऽयमद्य राहुणा ग्रस्यते, तदस्मिन्नेव समये मह्यं किञ्चित् ददातु महाराज इति। राजा तस्य एतद् वचनमाकर्ण्य सहासं तस्मै वसनानि सुवर्णादीनि च प्रददौ।

अथ कियता कालेन निःशेषितसर्वधनो यशोवर्म्मा पुनरपि राजानं किञ्चिदर्थयन् न किमपि आससाद। राजा पूर्ववत् तं प्रतार्य्य न किमपि तस्मै प्रादात्। अथैकदा पत्न्यां मृतायां यशोवर्म्मा अर्थकार्श्यात् देहविसर्जनाय कृतसङ्कल्पः विन्ध्यारण्यवासिनीं विन्ध्यवासिनीमुद्दिश्य प्रायात्। तत्र च गत्वा अनाहारेण तिष्ठन् देवीमाराधयितुं दुष्करं तपश्चचार। देवी तपसा तुष्टा तं स्वप्ने समादिशत् वत्स!

प्रीतास्मि ते तपसा, तत् अर्थश्रियं वा भोगश्रियं प्रार्थयसे वद।

एतदाकर्ण्य यशोवर्म्माऽवदत् देवि! भगवत्या आदिष्टायाः श्रियोर्भेदं नावगच्छामि। देवी प्रत्यभाषत पुत्र! तव देशे भोगवर्म्मा अर्थवर्म्मा च द्वौ वणिजौ वर्त्तेते। तयोः सुखसमृद्धिमालक्ष्य यत्ते ऽभिरोचते, मदन्तिकमेत्य तत् प्रार्थयस्व, अहं तत् तुभ्यं दास्यामीति।

एतत् श्रुत्वा यशोवर्म्मा प्रबुद्धः व्रतपारणां निर्वर्त्त्य स्वदेशं हर्षणपुरं प्रत्यगात्। प्रथममर्थवर्म्मणः समीपमेत्य स्वर्णरत्नादीनां धनजातानां व्यवसायेन समुपार्ज्जितां बह्वीं सम्पत्तिं दृष्ट्वा अर्थश्रीशब्दस्य तात्पर्य्यं बुबुधे। अर्थवर्म्मा गृहागतं यशोवर्म्माणम् आतिथ्येन निमन्त्र्य तदर्थं घृतपक्वानि मांसानि विविधानि व्यञ्जनानि च प्रस्तुत्य तमाहाराय आजुहाव। यशोवर्म्मा अर्थवर्म्मणः पार्श्वोपविष्टः तान्युत्तमान्नानि बुभुजे। अर्थवर्म्मा तु अर्द्धपलमात्रकेण घृतेन सह अन्नव्यञ्जनादिकमल्पमात्रमेवाभक्षयत्। यशोवर्म्मणा अर्थवर्म्मणस्तादृशाल्पभोजनकारणं परिपृष्टोऽसौ अर्थवर्म्माब्रवीत् भद्र! अद्याहं भवदनुरोधेनैव एतादृशं सघृतमन्नव्यञ्जनं भक्षितवानस्मि, नित्यभोजनन्तु मम केवलमर्द्धपलमितं हविरल्पमात्रश्च शक्तुः, अग्निमान्द्यादतोऽधिकं न परिपाकमेति।

यशोवर्म्मा एतदाकर्ण्य अर्थवर्म्मणस्तादृशीं सम्पत्तिं वृथेति मनसा निनिन्द। अथार्थवर्म्मणा आनीतं क्षीरं यशोवर्म्मा प्राचुर्य्येण भक्षितवान्, अर्थवर्म्मा तु पलमात्रक-

मिव तत् भक्षयामास। कृतभोजनौ च तौ एकस्मिन्नेव शयने अशेताम्। निशीथे समनुप्राप्ते यशोवर्म्मा स्वप्ने अपश्यत् दण्डपाणय: कतिपये पुरुषा गृहं प्रविश्य अर्थवर्म्माणं रे पापिष्ठ! त्वमद्य घृतमांसादिकं चौरश्च भुक्तवानसि, इत्युक्त्वा प्रहरन्त: यत् किञ्चित्तेन भक्षितं तत् सर्वं तस्योदरात् वहिरकारयन्। यशोवर्म्मा सहसा जागरित: समपश्यत् अर्थवर्म्मा शूलवेदनानिपीड़ित: केवलं वमति, ततश्च वमनानन्तरं शूलवेदनाया मुक्त:। यशोवर्म्मा एतदालोक्य अर्थश्रियं धिक्कृत्य तस्मात् निर्गत: भोगवर्म्मगृहमुपायात्। भोगवर्म्मा तमतिथिमागतं दृष्ट्वा सत्कृत्य च भोजनार्थं न्यमन्त्रयत्। यशोवर्म्मा भोगवर्म्मण: काममपि अर्थसम्पत्तिं नालोकितवान् केवलं सुन्दरं हर्म्यं सुशोभनानि वसनाभरणादीनि एव अद्राक्षीत्। भोगवर्म्मण: स्वं मूलधनं न किञ्चिदप्यस्ति, केवलं समाजेषु सम्भ्रमो विद्यते। तेनैव च अन्यस्य सम्पत्तिमन्यस्मै दत्त्वा तस्मात् किञ्चित् किञ्चिदुपार्ज्जयति। तस्मिंश्च दिवसे तथैव रीत्या अर्थमाहृत्य सर्वमेव भृत्यहस्ते समर्प्य विविधानि अन्नव्यञ्जनानि प्रस्तोतुमादिदेश। अत्रान्तरे इच्छाभरणो नाम कश्चित् सुहृदागत्य प्रावोचत् मित्र! समुत्तिष्ठ, प्रस्तुतं भोजनम्, अपरे बन्धवस्त्वां प्रतीक्षन्ते इति। तदाकर्ण्य भोगवर्म्माऽवदत् मित्र! अद्य मद्भवने अतिथिरागत:, तदहमद्य कथं गच्छामीति, तदाकर्ण्य इच्छाभरण: सनिर्बन्धमुभावपि स्वं भवनं नीत्वा उत्तमांसादिकमभोजयत्। ततश्च भोगवर्म्मा यशोवर्म्माणं स्वं गृहमानीय रजन्यां स्वादूनि

अन्नानि भोजयामास। अथ स स्वां पत्नीं कुम्भेषु सारोऽस्ति न वेति अपृच्छत्। साब्रवीत् नाथ! नाद्य सारो विद्यते इति। भोगवर्म्मा तदहं रात्रिशेषे कथं जलं पास्यामीति उक्त्वा शयनं भेजे। यशोवर्म्मा च तत्पार्श्वे शयित्वा निद्रामवाप। अपश्यच्च पूर्ववत् स्वप्ने, द्वौ पुरुषौ अग्रतः प्रविशन्तौ अन्वसरन् कतिपये अपराः पुरुषाः। प्राहरंश्च रात्रिशेषभोजनाय प्रभोः कथं सारो न रक्षित इति। ततश्च दण्डाहताभ्यां ताभ्यां स्वापराधे स्वीकृते सर्वे शान्ता बहिरगमन्निति। ततश्च यशोवर्म्मा प्रबुद्धः किमाश्चर्य्यं भोगश्रियः भोगसम्पदागमनमचिन्त्यं प्रशंसनीयञ्च। इति चिन्तयन् रात्रिमत्यवाहयत्।

अथ प्रभाते यशोवर्म्मा भोगवर्म्माणमामन्त्र्य विन्ध्यवासिनीसकाशं प्रतस्थे, प्रार्थयामास च तां भोगश्रियमेव। देवी तस्मै तां प्रादात्। ततो यशोवर्म्मा कृतार्थम्मन्यः गृहमागत्य सततम् अचिन्तितोपस्थितेन अर्थेन परमां सुखसमृद्धिं बुभुजे। तस्मात् भोगरहितायाः समधिकाया अपि सम्पदो भोगयुक्तात्यसम्पदपि श्रेयसी। अस्य च कृपणस्य राज्ञः समरबालस्य सम्पदा कोऽर्थः? तदाक्रमणं भवतां न शुभावहमिति मतमस्माकम्। शुभलग्नाभावात् भवतां जयाशा न हि दृश्यत इति।

गणकेषु एवमभिधाय विरम्य प्रस्थितेषु ते सामन्ता दायादाः समरबालं प्रति संग्रामाय निरगच्छन्। समरबालेन विपक्षान् सन्निहितान् दृष्ट्वा कृतस्नानेन देवदेवे आराधिते एषा दैववाणी ईदभूत् यथा त्वं निःशङ्कं गत्वा

शत्रून् विजयस्वेति। एतदाकर्ण्य राजा सम्प्रहृष्टः सन्निलों युद्धाय निरगात्। संग्रामप्रवृत्तेन च क्रमेण तेषां पञ्चसु वीरेषु निर्जितवत्सु अपराणि सैन्यानि भयेन समन्तात् प्रदुद्रुवुः। अथ राजा समरबालः विपक्षमुख्यस्य सामन्तस्य प्रतापसेनस्य सुन्दरीं महिषीं बलादानीय स्वं नगरं प्रविशत्। पुरस्कार च स्वान् सेनापतीन् सैन्यानि च यथायोग्यं पट्टबन्धादिदानेन। युवराजः गोमुखमुखादेतदाख्यानं श्रुत्वा स्नानभोजनाद्यर्थं समुत्तस्थौ।

---

## पञ्चपञ्चाशत्तरङ्गः।

अथान्ये द्युरलङ्कारवती सद्मन्यवस्थितं नरवाहनदत्तं सर्वेषु मन्त्रिषु स्थितेषु समभ्येत्य मरुभूतेः सेवकः राजान्तःपुररक्षिणः सौविदल्लस्य सहोदरः कश्चित् व्यजिज्ञपत् देव! मयास्य मरुभूतेः वर्षद्वयं सेवा कृता, अमुना च सपत्नीकस्य मे भोजनाच्छादनानि दत्तानि, निर्धारितानि च वेतनानि प्रतिवर्षं पञ्चाशत् सुवर्णानि। मया तु तद्वेतनप्राप्तये बहुवो विज्ञप्तं परं नासादितं किमपि। अथ निर्बन्धातिशये कृते असौ मां पदाहन्। तेन च भवतां सिंहद्वारे अहं प्रायोपवेशनमाचरामि। यदि देवो नात्र विचारयेत् तदाहं अग्निप्रवेशं करिष्यामि। इत्युक्त्वा तस्मिन् विरतवचसि मरुभूतिरब्रवीत् देव! देया मयास्मै सुवर्णदीनाराः, साम्प्रतन्तु मे न सन्ति। इत्युक्तवन्तं तं सर्वेषु

मन्त्रिषु हसत्सु मंन्त्रिणं प्रोवाच नरवाहनदत्तः । किमेवं मन्यसे मूर्ख ! नेयं ते समीचीना मतिः, तदुत्तिष्ठ देह्यस्मै दीनारशतमविलम्बेन । एवं प्रभोर्वचः समाकर्ण्य विलज्जितो मरुभूतिः सपदिं तत् सुवर्णशतं स्वगृहात् समानीय सर्वं तस्मै सेवकाय प्रदत्तवान् ।

ततस्तत्र गोमुखोऽब्रवीत् देव ! नायं वाच्यो मरुभूतिः। अस्य स्रष्टौ देवस्य प्रजापतेः विचित्रा चित्तवृत्तिः प्रकाशिता । भवद्भिरेषां चिरदातुः नृपतेः प्रसङ्गाभिधेयस्य सेवकस्य च कथा न श्रुता । कथयामि तामवहितैर्भवितव्यम् ।

पुराभूत् राजा चिरदातेति चिरपुराधिपतिः । स खलु अतिसुजनः, परं तस्य परिजनोऽतिदुर्जन आसीत् । कदाचित् प्रसङ्गो नाम मित्राभ्यामन्वितः देशान्तरागतः कश्चित् तस्य भूपतेः परिचारको बभूव । क्रमेण पञ्चाब्देषु व्यतीतेष्वपि सेवमानाय तस्मै राजासौ निमित्तेष्वप्युत्सवादिषु न किञ्चित् प्रददौ । स च प्रसङ्गः कालेष्वेतावत्सु प्रभुसन्निधौ विज्ञप्त्यवसरं नालभत । अथैकदा तस्य राज्ञः शिशुरेकस्तनयः पञ्चत्वमपद्यत । सर्वेऽपि भृत्या दुःखितास्तं शोकार्त्तं महीपतिं पर्य्यवारयन् । तत्र चासौ सेवकः शोककालोऽयं न विज्ञापनावसर इति सुहृद्भ्यां वार्य्यमाणोऽपि तं राजानं व्यज्ञपयत् देव ! आबहोः कालात् वयं देवस्य सेवकाः, न च किञ्चिदद्यापि श्रीमद्भिरस्मभ्यं दत्तं, केवलं भवत्सुतानुरोधेन एतावन्तं कालम् अस्माभिः स्थितं, राजपुत्रः अस्मानेवं प्राबोधयत् 'यदि राजा युष्मभ्यं वेतनानि

न दास्यति तदाहमेव दास्यामीति। सोऽपीदानीं दैवेन नीतः, तत् किमिदानीं साम्प्रतं व्रजामो वयमित्युक्त्वा सखिभ्यामुपेतः राज्ञः पादयोः पतित्वा निरगात्। राजा तु अहो पुत्रे मम बद्धास्था इमे सेवकाः सुदृढ़ाः नैव मे त्याज्या इति सपदि विचिन्त्य तान् प्रसङ्गादीन् तथा धनैरपूरयत् यथा ते दैन्यनिर्मुक्ताः समभूवन्।

हे देव! एवं विचित्रा दृश्यन्ते देहिनां स्वभावाः यदसौ राजा काले किञ्चिन्नादात्, अकाले तु समधिकं ददौ।

इत्युक्त्वा कथाविचक्षणो गोमुखः पुनर्वत्सेश्वरसुतादेशादिमां कथामाचख्यौ।

आसीत् पुरा गङ्गातले तदम्भःपूतपौरं सौराज्यरम्यं कनकपुरं नाम नगरोत्तमम्। यत्र गिरां बन्धः, पत्राणां छेदः, नारीणामलकेषु भङ्गः, मत्स्यानां संग्रहणे खलः सदा प्रजानां समदृश्यत। तत्रासीत् वासुकेर्नागराजस्य यशोदनाख्यायां राजसुतायां जातः तनयः कनकवर्षो नाम नृपतिः। यः समग्रधरणीभारवाहकोऽपि अशेषगुणरञ्जितः, यशसि लोलुपः न त्वर्थेषु, भीतः पापात् न तु शत्रुतः, मूर्खः परापवादेषु न तु शास्त्रेषु समभवत्। यस्य च महात्मनः कोपेषु अल्पता, न प्रसादेषु, चापेषु बद्धमुष्टित्वं न दानेषु समदर्शि। येन चाद्भुतरूपेण रक्षिणापि दृष्टेन सर्व एव जगतीतलवासी नारीजनः मन्मथव्यथाकुलः कृतः।

एकदासौ नरपतिः सोष्मणि उन्मदगजराजे राजहंसकुलानन्दिनि महोत्सवपूर्णलोके शरदृतौ समगुणैर्वयस्यैः रन्तुं चित्रप्रासादमाविशत्। यावत्तत्र आकृष्टकमलामोदे

वहति मन्दं मन्दं समीरणे स राजा तानि तानि प्रासादस्थानि चित्राणि प्रशंसति, तावत् कश्चित् प्रतीहारस्तत्र प्रविश्य तं भूपं व्यजिज्ञपत् प्रभो! अपूर्वः कश्चन चित्रकरः रोलदेवो नाम विदर्भेभ्यः समागतः। स च चित्रकर्मणि आत्मनः अनन्यसाधारणत्वमस्मासु समाचक्षाणः देवस्य सिंहद्वारे स्थितः लिपिमिमां प्रादात्। तदाकर्ण्य वाचयित्वा लिपिं नरपतिः तमानयेति प्रतीहारमादिशत्। प्रतीहारोऽपि गत्वा तत्क्षणं तं चित्रकरं राजान्तिकमानयत्। स च चित्रकरः प्रविश्य चित्रालोकनोत्सुकं वारविलासिनीकुचोत्सङ्गसमर्पितकलेवरभरं सविलासमञ्चितकरोपात्तताम्बूलवीटिकं तं भूपतिं सबहुमानादरं प्रणिपत्य शनैः सविनयं न्यवेदयत्। देव! भवच्चरणसरोरुहदिदृक्षयैव मया चीरिका उल्लम्बिता, न तु विज्ञानमदात्, तदिदानीं क्षन्तव्यं मम समुद्धतं वचः, आदिश्यतामधुना किञ्चित् आलिखितुकामोऽस्मि। राज्ञोक्तं किञ्चिदालिख्यतां त्वया येन त्वत्कौशलेन वयं चक्षुःप्रीतिमनुभवाम इति। ततः पार्श्वस्था राजानुचराः प्राब्रुवन् राजा एव त्वयाभिलिख्यतां किमन्यैर्विरूपैरभिलिखितैः। एवमभिहितः स रोलदेवाख्यः चित्रकृत् परमप्रीतस्तं राजानं तुङ्गनासिकम् आयतारक्तनयनं विपुलललाटोरस्कं नीलकुञ्चितमूर्धजं रूढ़वाणव्रणशोभिताङ्गम् आजानुलम्बितबाहुम् उपायनीकृतमुष्टिमेयमध्यमिव पराक्रमपराजितैः केशरीन्द्रकिशोरैः, यौवनद्विरदालाननिभोरुयुगम् अशोकपल्लवारुणाङ्घ्रियुगलं सर्वावयवानवद्यं समालिखत्। दृष्टे

वयस्याः अद्भुतं मन्यमानास्तं चित्रकरं साधु साधु इति प्राशंसन्। अगदंश्च च वयमेकाकिनं प्रभुं द्रष्टुमिच्छामः, तदस्यां चित्रभित्तौ एतास्वालिखितासु राज्ञीषु एकां सुचित्रार्थं अनुरूपाम् अस्य नृपतेः पार्श्वे अभिलिख, येनास्माकं नेत्रोत्सवः पूर्णोऽस्तु। तदाकर्ण्य स विलोक्य चित्राणि प्राब्रवीत् बह्वीष्वप्येतासु अस्य राज्ञः समनुरूपा नात्र काचन। मन्ये च धरायामस्यामस्यानुरूपाङ्गना नास्ति क्वापि, एकैवास्ति राजसुता, शृणुत कथयामि ताम्।

अस्ति विदर्भेषु श्रीमत् कुण्डिनाख्यं नगरम्। तत्र च देवशक्तिरिति ख्यातो नरपतिरस्ति। तस्यानन्तवती नाम प्राणाधिकप्रियतमा राज्ञी वर्त्तते। तस्याञ्च मदनसुन्दरी नाम तस्य राज्ञः सुतैका समुत्पन्ना। तस्या रूपं वर्णयितुमेकया रसनया मादृशः कः प्रगल्भते, परमेतावन्मात्रं कथयामि यद्धि तां निर्माय विधिः सञ्जातेच्छोऽपि तदाकारामन्यां निर्मातुं युगसहस्रेणापि नैव शक्नोतीति। सा एवैका अस्य राज्ञः रूपलावण्यविनयैर्वयसा कुलेन च सदृशी राजकन्या। एकदाहं तयान्तःपुरस्थया तत्रत्यचेटिकया समाहूतस्तदन्तिकमगाम्, अद्राक्षञ्च तत्र तां चन्दनार्द्रविलेपनां मृणालहारां बिसिनीपत्रान्तरविवर्त्तिनीं सखीजनैः कदलीदलव्यजनैर्वीज्यमानां पाण्डुक्षामामभिव्यक्तस्मरज्वरलक्षणां हे सख्यः! किमेभिश्चन्दनालेपकदलीदलवीजनैः विफलेन श्रमेण वः, एतानि शिशिराण्यपि मन्दभाग्यां मां दहन्ति इत्येवं वदन्तीञ्च। अहञ्च ताः सखीराश्वाससमाकुलास्तदवस्थाञ्च तामवलोक्य सवितर्कं कृतप्रणामस्तस्याचर-

शीघ्रान्ते समुपाविशम्। अथ सा उपाध्याय! इदमालिख्य चित्रे मे रूपकं देहि इत्यभिधाय वेपमानेन पाणिना धृतवर्त्तिना शनैरालिख्य मां दर्शयन्ती राजसुता मया कश्चित् अतिरूपवन्तं युवानमलेखयत्। मया च सुन्दरावयवं तदभिलिख्य चिन्तितं कामः एवायं साक्षात् मया आलेखितः, परं पुष्पचापः अस्य करे न लेखितः, तेनावगतं न कामोऽयं तद्रूपः कोऽपि युवा, अयञ्च नूनमनया क्वापि दृष्टः श्रुतो वा तन्निबन्धनञ्चास्याः स्मरविजृम्भितं तदिदानीं मे अमुनैव पथा यथागतं गन्तव्यम् अयञ्च नृप उग्रदण्डः अस्याः पिता देवशक्तिर्नैव दोषं क्षमेत। इत्यालोच्य ताञ्च प्रणम्य मदनसुन्दरीं तत्सम्मानितश्च तस्मादन्तःपुराद्विरगाम्। हे महाराज! ततश्चात्र मया परिजनात् मिथः स्वैरं कथयतः सा त्वयि सानुरागेति श्रुतम्। ततश्चित्रपटे गुप्तां तां नृपात्मजामालिख्य आदाय भवत्पादमूलं त्वरितगतिरागच्छम्। साम्प्रतं देवस्य आकारं दृष्ट्वा संशयो मे निवृत्तः। ज्ञातञ्च देव एव तया मत्करेणाभिलेखितः। सा चासक्तैव लिखितुं शक्या इति चित्रैकपार्श्वे समामपि न लिखामीत्युक्तवन्तं तं रोलदेवं राजा प्राह तर्हि सा त्वच्चित्रस्था क्षिप्रं दृश्यतामिति। ततोऽसौ चित्रकरः स्वचित्रार्पितां तां मदनसुन्दरीमदर्शयत्। राजापि कनकवर्षस्तां चित्रगतामपि चित्ररूपामालोक्य सद्यः स्मरशरसंलक्ष्यतामाययौ। बहुना च काञ्चनेन तं चित्रकृतं समभ्यर्च्य गृहीततच्चित्रपटः स्वमभ्यन्तरमगात्। ततश्च स राजा तस्या रूपलावण्यदर्शनाद्वृत्तलोचनः परित्यक्तसर्वकार्य्यः

तदेकमना: समयमतिवाहयाम्बभूव। लब्धान्तरश्च मदनः रूपस्पर्द्धासमुद्भूतमात्सर्य्य इव धैर्य्यहारी तं शरैर्निघ्नन् बबाधे। रूपलुब्धानां योजितां तेन या स्मरार्त्तिर्दत्ता सा तस्य महीभुजः शतशाखं फलितेव। ततः कतिपयेषु दिनेषु गच्छत्सु विरहक्षामः पाण्डुच्छायः स राजा प्राप्तेभ्यः सचिवेभ्यस्तां वार्त्तां पृच्छद्भ्यः स्वं मनोगतं शशंस। ततश्च मन्त्रिभिर्मन्त्रयित्वा तां मदनसुन्दरीं प्रार्थयितुं राज्ञे देव-शक्तये सङ्गमस्वामिनामानं कार्य्यज्ञं कालवेदिनं विप्रमाप्तं कुलीनं मधुरोदात्तभाषिणं दूतं प्राहिणोत्। स तु दूतः सुमहार्हेण परिकरेण तान् विदर्भान् गत्वा कुण्डिनं पुरं प्राविशत्। अपश्यच्च तत्र राजानं देवशक्तिम्। ययाचे च तत्सुतां स्वामिनोऽर्थे। तदाकर्ण्य देवशक्तिः, देयैव मे अन्यस्मै दुहितैषा समन्विष्य, यदि कनकवर्षः स्वयमेवैना-मदृष्टामपि प्रार्थयते तदास्मै एव एतां दास्यामीति सम्मन्त्र्य तत्सङ्गमस्वामिनो वचः श्रद्दधानः तस्मै दूताय रम्यं रूप-मिव अद्भुतं मदनसुन्दर्य्या नृत्यमदर्शयत्। ततः स राजा तद्दर्शनप्रीतं सङ्गमस्वामिनं सुतादानस्वीकारेण सम्मान्य तेन सह उद्वाहलग्नं निर्द्धार्य्य आगम्यतामिति सन्दिश्य राज्ञे कनकवर्षाय प्रतिदूतं व्यसर्जयत्। अथ सङ्गमस्वामी प्रतिदूतेन तेन सह प्रतिनिवृत्य राज्ञे कनकवर्षाय सिद्धं कार्य्यं न्यवेदयत्। अथ शुभं लग्नं विचिन्त्य तं प्रतिदूतं प्रपूज्य च तां रत्नां मदनसुन्दरीं विभाव्य तद्विवाहाय निःशङ्कमानसः स राजा तत् कुण्डिनं पुरं प्रायात्। पथि अश्वारूढः दुर्वारवीर्य्यः स भूपतिः प्रत्यन्तारण्यचारिणः

प्राणिप्राणहरान् सिंहादीन् दस्यूनिव विनिघ्नन् विदर्भान् प्राप्य कुण्डिनं प्राविशत्। ततश्चाग्रतो निर्गतेन राज्ञा देवशक्तिना प्रत्युद्गतः पौराङ्गनानां नेत्रोत्सवं वर्धयन् सज्जितोद्वाहसम्भारं राजमन्दिरमविशत्। अथाभ्यर्च तत्र सपरिच्छदः देवशक्तिना यथोपचारमनुरञ्जितः तं दिवसम्।

अथापरेद्युः देवशक्तिः तस्मै मदनसुन्दरीं तनयां राज्यैकशेषेण सर्वस्वेन समं प्रादात्। ततः स राजा कनकवर्षः तत्र सप्ताहमवस्थाय नववध्वा समागतः स्वं नगरमागमत्। तस्मिंश्च प्राप्तकान्तारत्ने जगदाह्लाददायिनि सकौमुदीकं शशिनीव तत् पुरं महोत्सवपूर्णमभवत्। सा च मदनसुन्दरी बह्ववरोधस्यापि तस्य कृष्णस्य रुक्मिणीवत् प्राणाधिकप्रिया आसीत्। अन्योन्यमुखसंसक्तैश्चारुपक्ष्मभिः लोचनैः सायकैरिव तौ दम्पती कीलितौ इवास्ताम्।

अथैकदा विकसत्केसरनिचयः मानिनीमानमातङ्गविदारी मधुकेसरी समाजगाम। कुसुमाकरः लग्नालिमालामौर्वीकाणि पुष्पधन्वनः प्रोत्फुल्लचूतवल्लीधनूंषि सज्जयामास। मलयानिलश्च उपवनानीवाध्वगयोषितां समुद्दीपितकामानि चेतांसि कम्पयन् ववौ। नदीनां सलिलानि तरूणां कुसुमानि शशिनश्च कलाः क्षीणानि पुनः पोषमायान्ति न तु यौवनानि देहिनां, तदुन्मुक्तमानकलहाः सदयिता रमध्वमितीव मधुरालापाः कोकिलानां शुश्रुविरे। तस्मिंश्च काले स राजा मधुवनं विहर्तुकामः सर्वाभिरन्तःपुरिकाभिः समं प्रविवेश। तत्र च सावरोधोऽपि देव्या मदनसुन्दर्या एव समं कुसुमावचयनादिभिः क्रियन्त,

कालं विहृत्य जातु गोदावरीं नदीं सान्तःपुरजनः सम-वतीर्य्य जलक्रीड़ां व्यधात्। तस्य चाङ्गनाः तरङ्गदर्शिता-मर्षभ्रूभङ्गायास्तस्या नद्याः पद्मानि मुखैः, उत्पलानि नयनैः, रथाङ्गयुग्मानि पयोधरैः, पुलिनानि च नितम्बैः विजित्य आशयं चोभयामासुः। करवारिणा सिक्तेन सर्वान्तःपुरिकासु पश्यन्तीषु विस्रस्तवसनमालोक्य सा वरारोहा मदनसुन्दरी सेर्ष्या मृदुकोपा च कियत् चोभ्या नदीत्येवं वदन्ती उत्तीर्य्य तस्मादम्भसः परिहितवसना-न्तरा रुषा स्वसखीभ्यः प्रियापराधं शंसन्ती स्वमन्दिरं प्रायात्। ततो राजा विज्ञाताशयस्तस्याः जलक्रीड़ां विमुच्य तस्या एव वासगृहमाययौ। तत्र च पञ्जरस्थैरपि शुकैर्वार्य्यमाणः प्रविश्य तामन्तर्मन्युभरपीड़ितां वामहस्त-तलन्यस्तवदनाम्बुजां स्वच्छमुक्ताफलनिभैः पतद्भिर्वाष्पविन्दु-भिरुपेतां करुणं विलपन्तीं कोपेऽपि मनोरमां कान्तामप-श्यत् उपायाच्च सलज्जसाध्वसः समीपम्। अथ पराङ्मुखीं तां प्रीतिपेशलैर्वचोभिराश्लिष्य सविनयं प्रसादयितुं प्रावर्त्तत। अशक्नुवंश्च विविधाभिर्वक्रोक्तिमनोरमाभिर्वाग्भिः प्रसादय-यितुं आत्मानमपराधिनं शंसन् पादयोस्तस्या निपपात। सा अश्रुबारिणेव तन्मन्युना गलितेन अस्य कण्ठे लग्ना भूपतेः प्रससाद। अथ स राजा हृष्टः कुपिततुष्टया तया सह दिनं नीत्वा सुरतमासेव्य च निशि निद्रामगात्।

ततः सुप्तः सहसापश्यत् स्वप्ने, विकृता कापि नारी कण्ठात् एकावलीं शिरसश्च चूड़ारत्नं हरति। ततश्च क्वचित् वेतालं नानाप्राण्यङ्गविग्रहं बाहुयुद्धप्रवृत्तं दृष्ट्वा

स्वयं तं भूमाववपातयत्। अथ पृष्टेन उपविष्टेन च तेन पक्षिणेव विहायसा उड्डीय अम्भोनिधौ स निचिक्षिपे। ततः कथञ्चिदुत्तीर्य्य समुद्रपारं तथैव गले एकावलीं मूर्ध्नि च स्थितं चूड़ारत्नमैक्षत। इत्येवं स्वप्नं दृष्ट्वा सम्प्रबुद्धः स राजा प्रातः परिचयागतं क्षपणकमेकमस्य स्वप्नस्य फलाफलं परिप्रपच्छ। स चाब्रवीत् देव! न वाच्यमप्रियं किन्तु पृष्टोऽहं कथं न वदामि, त्वया या एकावली च्युता दृष्टा चूड़ामणिश्च, एतावता तव देव्या पुत्रेण च सह वियोगो भावीति यच्च पुनरुत्तीर्णाम्बुधिना त्वया सा एकावली पुनः प्राप्ता स च चूड़ामणिः, तेन दुःखान्ते ते पुनः पत्नीपुत्रसमागमो भविष्यतीति सूच्यते। इत्येवं क्षपणकेनाभिहितः स राजा प्राब्रवीत् पुत्रो मे नाद्यापि जातः, स तु तावज्जायतामिति। अथ स कदाचित् समागतात् कस्माच्चित् रामायणपाठकात् अश्रौषीत् पुत्रार्थं विहितक्लेशं राजानं दशरथम्। अथ स भूपतिः क्षपणके गते राज्ञः दशरथस्य अद्भुतस्वरूपां सुतोत्पत्तिं चिन्तयन् विमनास्तद्दिनमनयत्। रात्रौ च एकाकी शयने स्थितः विदितः सहसा अनुद्घाटितद्वारेऽपि अन्तःप्रविष्टां स्त्रियमैक्षत। विनीतसौम्यरूपा च सा तं राजानं साश्चर्य्यमुत्थितं कृतप्रणामं क्षितीश्वरम् आशीर्भिरभिनन्द्य अभाषत पुत्र! मां नागराजस्य वासुकेरात्मजां त्वत्पितुर्ज्येष्ठां भगिनीं रत्नप्रभां नाम जानीहि। रक्षार्थं ते सततमदृश्या तवान्तिके वसामि, अद्य तु त्वां सचिन्तं दृष्ट्वा आत्मा मम ते दर्शितः तव ग्लानिं द्रष्टुं नोत्सहे, तत्कारणं ब्रूहि। इत्युक्तः स

पितृष्वसा तया तां जगाद हे अम्ब ! धन्योऽहं यत् त्वं मे प्रसादं करोषि पुत्राभावनिबन्धनामनिर्वृतिं मे विद्धि, राजर्षयोऽपि दशरथादयः स्वर्गार्थं पुत्रानैच्छन् । हे मातः ! तव मादृशः कथं नेच्छतु । एतत्तस्य कनकवर्षस्य नृपतेः तत् वचनमाकर्ण्य सा रत्नप्रभा भ्रातुः पुत्रं तमब्रवीत् पुत्र ! उपायमेकं वदामि, कुरुष्व तम् । गत्वा त्वं स्वामिनः कुमारस्य सकाशं तं प्रसादय । याच ते शरीरे विघ्नधारा पतिष्यति तां मम त्वच्छरीरप्रविष्टायाः प्रभावात् सहिष्यसे । क्रमेण विघ्नधारामतीत्य वाञ्छितं लप्स्यसे । इत्युक्त्वा सा नागी अन्तर्दधे, राजा च हृष्टः क्षपामक्षपयत् । प्रातश्च मन्त्रिषु सन्न्यस्तराज्यतन्त्रः पुत्रकाङ्क्षया स्वामिकुमारस्य पादमूलमगात् स राजा कनकवर्षः । तत्र च गत्वा तीव्रेण तपसा तमाराधयन् व्यतिष्ठत अन्तःप्रविष्टनागीदत्तप्रभावः । अथ तस्य राज्ञः मूर्द्धनि अशनिनिभ ।कुमारेण प्रेरिता वारिधारा अनारतं पतितुं प्रवृत्ता । स च राजा शरीरान्तर्गतनागीबलेन तां सेहे । ततश्च पुनर्विघ्नार्थं कुमारः हेरम्बं प्रैरयत् । स तु हेरम्बः तासां धाराणां मध्ये महाविषमत्युग्रम् आजगारमसृजत् । स च राजा तेनापि नाकम्पत । अथ विनायकः साक्षात् एत्य तस्य राज्ञ उरसि दन्ताघातान् दातुं प्रववृते । अथ स राजा देवैरपि दुर्जयं तं मत्वा तं दन्ताघाते विषह्यैव स्तोतुमुपचक्रमे । सर्वार्थसिद्धिदायिने लम्बोदराय विघ्नेशाय नमस्ते । त्वं लीलोत्क्षिप्तकराघातेन आसनपङ्कजं धुन्वन् ब्रह्माणमपि सोत्कम्पमकरोः जय विभो गजानन ! ।

लोकैकशरण्ये शङ्करप्रिये त्वयि अतुष्टे सुरासुरमुनीन्द्राणामपि सिद्धिर्न जायते। सुरोत्तमास्त्वां घटोदरः, शूर्पकर्णः, गणाध्यक्षः, महोत्कटः, पाशहस्तः, अम्बरीषः, जम्बकः, त्रिशिखायुधः इत्यादिभिः पापघ्नैरष्टषष्टिभिर्नामभिः स्तुवन्ति स्म। प्रभो! त्वां स्मरतः स्मरतः रणात् राजकुलात् द्यूतात् चौरात् अग्नेः श्वापदादितश्च भयं विनश्यति। इत्येवमन्यैश्च विविधैः स्तुतिपदैरसौ राजा कनकवर्षः विघ्नेश्वरमपूपुजत्। ततश्च सुप्रसन्नः स विघ्नजित् तुष्टोऽस्मि न ते विघ्नं करिष्यामि, पुत्रमाप्नुहि इत्युक्त्वा पश्यतस्तस्य राज्ञः अन्तर्दधे। ततः स्वामिकुमारस्तं धाराधारिणं नृपमब्रवीत् वत्स! तुष्टोऽस्मि ते, याचस्व वरमिति। तदाकर्ण्य स राजा तं देवं व्यजिज्ञपत् प्रभो! भवत्प्रसादेन मे पुत्र उत्पाद्यतामिति। एवमस्तु, सुतस्ते भावी मद्गणांशजः। हे भूपते! स च नाम्ना हिरण्यवर्षो भविष्यति। इत्युक्त्वा अन्तर्गृहप्रवेशाय सविशेषप्रसादाभिलाषिणं तमाह्वयत् शिखिवाहनः। अत्रान्तरे सा नागी नृपस्य देहात् अदृश्या निरगात्। राजा च तस्य देवस्य पावकेरन्तर्भवनं प्राविशत्। स तु देवः शाप्यनधिष्ठानात् पूर्वतेजोविरहितं नृपं दृष्ट्वा किमेतदिति चिन्तयन् प्रणिधानात् नागीबलव्याजेन निर्व्यूढविषमव्रणं ज्ञात्वा शशाप। यतस्त्वया महाराधने व्याजः कृतः, अतः जातेन तनयेन महादेव्या च ते वियोगो भवितेति। निर्घातदारुणमेतं शापमाकर्ण्य स महाकविः भूपतिः मोहमुक्त्वा सूक्तैस्तं देवं तुष्टाव। तेन च सन्तुष्टः षण्मुखस्तमभाषत राजन्! तुष्टोऽस्मि ते सूक्तैः, तव शापान्त

वच्मि, अब्दमात्रं ते पत्नीपुत्रवियोगः स्थास्यति, इत्युक्त्वा विरते षण्मुखे स राजा तं प्रणम्य तत्प्रसादेन परितुष्टः स्वपुरमगात्।

अथ कालेन देवी मदनसुन्दरी गर्भमधात्, प्रासोष्ट च सुपुत्रं सुखेन। राजा पुत्रमुखदर्शनेन परां निर्वृतिं लभमानः महोत्सवं विदधत्, दीनेभ्यः अनाथेभ्यः द्विजेभ्यश्च प्रचुराणि वसूनि वर्षन् निजां कनकवर्षाख्यां भुवि यथार्थामकरोत्। अथ पञ्चसु रात्रिषु गतासु षष्ठ्यां रजन्यां जातवेश्मनि यथाविधि अनुष्ठितरक्षाविधाने सहसा मेघः नभसि प्रादुरासीत्, तेन च क्षुद्रेणापि क्रमशो वृद्धिं गच्छता उपेक्षितेन शत्रुणा प्रमादिनः नृपस्य राज्यमिव क्रमशः नभः समाक्रान्तम्। ततश्च वर्षस्य मदस्येव धाराः क्षिपन् उन्मूलयंश्च द्रुमान् वातमत्तमतङ्गजः प्रवाति स्म। क्षणे च तस्मिन् भीषणा कापि नारी सार्गलमपि द्वारमुद्घाट्य छुरिकाहस्ता तत् जातवेश्म प्राविशत्। सा च देव्या मदनसुन्दर्याः स्तनासक्तमुखं तं बालं बलात् हृत्वा सहसा प्रदुद्रुवे। सा च राज्ञी हा हा हृतो मे पुत्रः राक्षस्या इति विलपन्ती विह्वला क्रन्दन्ती च तमस्यपि तां राक्षसीमन्वधावत्। सा तु स्त्री सबालका कस्मिंश्चित् सरसि पतात। राज्ञी चागत्य पुत्रलालसा तामन्वपतत्। क्षणेन च मेघोऽन्तर्हितः यामिनी व्ययासीत्। एतस्मिन्नन्तरे परिवारस्य जातवेश्मगतस्य महानाक्रन्दः समभवत्। राजा कनकवर्षोऽपि तमाकर्ण्य जातवेश्म गत्वा शून्यमालोक्य भूमौ पपात, विललाप च भगवन् स्कन्द! मन्द-

भाग्यस्य मे वरः शापसंयुक्तः कथं त्वया विषामृतसन्निभो दत्तः, हा हा देव्या विना युगसहस्रायमाणं कथं नेष्यामि वत्सरम्। एवमाक्रन्दन् भूपतिः मन्त्रिभिः तत्तद्वृत्तान्तेन बोध्यमानोऽपि नैव धृतिमाससाद। क्रमेण च मदनावेग-विवशः स राजा पुरात् निर्गतः उन्मत्त इव भ्रमन् विन्ध्य-कान्तारमगमत्। तत्र च बालमृगीनेत्रैः प्रियाया लोचन-श्रियं चमरीबालसञ्चयैः कबरीभारसौन्दर्य्यं करिकरेणूनां गतैः गतिं मन्यरतां स्मरतस्तस्य सुतरां जज्वाल मदनानलः। क्रमेण च भ्राम्यन् तृषातापाकुलः विन्ध्यपाद-मवाप्य निर्झरपानीयं पीत्वा तरुमूले यावत् उपाविशत् तावत् विन्ध्यस्य गुहामुखात् अट्टहास इव उद्वदन् सटालः सिंहस्तं हन्तुमुत्पपात। क्षणे च तस्मिन् गगनतलादाप-तितः कश्चित् विद्याधरः जवात् निपत्य असिना तं सिंहं द्विधा अकरोत्। अपृच्छत् समीपमागत्य तं भूपतिं राजन्! कथमेतां भुवं प्राप्तोऽसि? तदाकर्ण्य स राजा स्मृतिं लब्ध्वा तं प्रत्यवदत् भद्र! विरहानिलविच्छिन्नं मां विद्धि। ततश्च विद्याधरोऽब्रवीत् राजन्! अहं मानुषः बन्धुमित्राख्यः पुरा त्वत्पुरे न्यवसम्। ततः सेवया प्रार्थिना मया त्वया साहा-य्ये कृते अहं प्रव्राजको भूत्वा वेतालसाधनात् विद्या-धरत्वं प्राप्तोऽस्मि। तेन च त्वां प्रत्यभिज्ञाय प्रत्युपकारा-र्थिना मया त्वज्जिघांसुरयं सिंहः व्यापादितः। साम्प्रतं बन्धुप्रभ इति गृहीतनामास्मि। इति वादिनं तं राजा सम्प्रहृष्टस्तमवादीत् हन्त स्मरामि ते मैत्रीं, सा चाद्य त्वया निर्वाहिता। तदिदानीं ब्रूहि कदा मे भार्य्यापुत्रसमा-

गमो भावीति। इति तस्य वचः श्रुत्वा विद्याधरः विद्या-प्रभावेण विदित्वा प्राब्रवीत् राजन्! दृष्टायां विन्ध्य-वासिन्यां ते पत्नीपुत्री समाप्स्यसि। तत्तत्र सिद्धैर गच्छ, अहञ्च स्वं लोकं व्रजामि, इत्युक्ता तस्मिन् खेचरे खं गते राजा लब्धधृतिः शनैः तां विन्ध्यवासिनीं द्रष्टुं समाययौ। गच्छन्तञ्च तं नृपं कश्चित् वन्यः महान् आधूतमस्तकः मत्तः करी करं प्रसारयन् अभ्यधावत्। तदवलोक्य स राजा श्वभ्रमार्गेण तथा अचरत् यथा स गजः तमन्वधावन् श्वभ्र-पतितः विपद्मपश्यत। ततः स राजा अध्वश्रमार्त्तः व्रजन् उद्दण्डपुण्डरीकाख्यम् एकं महत् सरः प्रापत्। तत्र स्नात्वा पीत्वा च जलं जग्धमृणालः पादपतले विश्रान्तः क्षणेन निद्रया जज्ञे। ततश्च मृगयानिवृत्ताः कतिचित् शबराः तेन पथा समागतास्तं तथागतं सुलक्षणं राजानं व्यलोक-यन्। दृष्ट्वैव ते देव्युपहारार्थं बद्ध्वा तत्क्षणमेव तं स्वामिनो मुक्ताफलाख्यस्य शबरराजस्य सकाशं निन्युः। सोऽपि शबरनराधिपः तं प्रशस्तम् उपहारं विविच्य विन्ध्यवासिन्याः मन्दिरं पशूकर्त्तुमनयत्। दृष्ट्वैव च स राजा तां देवीं प्रण-मन् तदनुग्रहात् स्कन्दप्रसादाच्च तत्क्षणमेव स्रस्तबन्धनः समभवत्। तदालोक्य अद्भुतं मत्वा च देव्यनुग्रहं स शबरा-धिपः तं वधादमोचयत्। इत्थं तृतीयादपमृत्युतः अप-क्रान्तस्य तस्य कनकवर्षस्य पूर्णं तच्छापवत्सरमभवत्। तावच्च सा नागी पितृस्वसा सपुत्रां राज्ञीं मदनसुन्दरी-मुपादाय तत्रैवायात्। अवादीच्च तं राजन्! विदित-कुमारशापया मया तवैतौ जायापुत्रौ युक्त्या स्वभवनं

नीत्वा रक्षितौ, तदिदानीम् इमौ प्रियासुतौ गृहाण, अधुना चीर्णशापः पृथिवीराज्यं भुङ्क्ष्व। इत्युक्त्वा तं प्रणतं नृपतिं सा नागी तिरोदधे। राजा च तं भार्य्यासुतागमं स्वप्नमिव मेने। ततश्च राजदम्पत्योः चिरात् मिथः आश्लिष्यतोः विरहक्लेशः सह हर्षवाष्पाम्बुभिः निरगलत्। ततः कनकवर्षं तं पृथ्वीपतिं प्रभुं बुद्ध्वा मुक्ताफलोऽपि शवरराजः तस्य पादयोरपतत्। स्वाञ्च पत्नीं नमयित्वा प्रवेश्य च निजोचितैस्तैस्तैरुपचारैस्तं नृपम् अपूजयत्। अथ स राजा कनकवर्षः तत्र स्थितः दूतैः श्वशुरं देवशक्तिं निजञ्च सैन्यं स्वपुरात् अनाययत्। ततश्च आस्थितकरेणुकां प्रियां मदनसुन्दरीं कुमारकृतहिरण्यवर्षनामधेयञ्च सुतं पुरतः विधाय श्वशुरवेश्म वर्त्माश्रितः तेन श्वशुरेण समन्वितः चचार। क्रमेण च कतिपयैर्वासरैः समृद्धं श्वाशुरं विदर्भजनपदाश्रयं कुण्डिनाख्यं नगरमासाद्य तत्र श्वशुरेण सुसत्कृतः कानिचित् दिनानि सपुत्रदारः स्थितिमकरोत्। ततश्च शनैः स्वं कनकपुरं प्राप्य चिरादर्शनोत्सुकैः पौरवधूजननयनैर्निपीयमान इव सपुत्रकलत्रः स्वं राजप्रासादमविशन् उत्सव इव विग्रहवान्। तत्र च सर्वान्तःपुरमुख्यां मदनसुन्दरीमभिषिच्य बद्धपट्टामकरोत्। अथ तया देव्या सुतेन च तेन नित्यबद्धोत्सवः पुनरदृष्टविरहदुःखं निष्कण्टकं कनकराज्यमशासत्। इत्थं मन्त्रिमुख्यात् गोमुखात् रुचिरामिमां कथामाकर्ण्य नरवाहनदत्तस्तया अलङ्कारवत्या समं सुतरां तुतोष।

---

## षट्पञ्चाशत्तरङ्गः ।

अथ प्रियासखः नरवाहनदत्तः गोमुखाख्यातया कथया परितुष्टः कोपविक्ततं सेर्ष्यं मरुभूतिमालोक्य तमनुरञ्जयन् व्यगादीत् मरुभूते ! त्वमपि एकां कथामाख्यातुमर्हसि । ततः स मरुभूतिर्वाढ़मित्युक्ता परितुष्टेन चेतसा कथामेतां वक्तुं प्रचक्रमे ।

देव ! पुरासीत् कमलवर्म्मा नाम नृपतिः । तस्य कमलपुराख्ये नगरे चन्द्रस्वामी नाम ब्राह्मणः प्रतिवसति स्म । तस्य सुमतेः लक्ष्मीसरस्वत्योस्तृतीया विनयवती देवमतिर्नाम सदृशी भार्य्याभवत् । कालेन तस्यां तस्य विप्रस्य सुलक्षणस्तनयः समजनि । यस्मिंश्च जात एव अन्तरीक्षात् वाणी समुदचरत् यथा चन्द्रस्वामिन् ! त्वया पुत्रोऽयं नाम्ना महीपालः कार्य्यः । यदयं राजा भूत्वा चिरं महीं पालयिष्यतीति । एतद्दैववचः समाकर्ण्य स विप्रः महोत्सवेन सह तं तनयं नाम्ना महीपालमकरोत् । क्रमेण च स महीपालः परिवर्द्धमानः सर्वासु शस्त्रास्त्रविद्यासु शाक्षितः सुशिक्षितश्चाभवत् । तदानीञ्च सा देवमतिः चन्द्रस्वामिपत्नी सर्वावयवानवद्यामेकां तनयामसूत । ताञ्च पिता चन्द्रावतीनाम्नीमकार्षीत् । क्रमेण तौ विप्रसुतौ पितृवेश्मनि परिवृद्धिमापतुः ।

अथ तस्मिन् देशे रविरश्मिभिः शस्येषु विदग्धेषु दुर्भि-

चिन्वती महानुपप्लवः समपद्यत। राजा च मुक्तसत्पथः तथाविधेऽपि समये अधर्म्मेण प्रजाभ्यः करान् आदातुं प्रारभत। तदा च देवमतिरसौ ब्राह्मणी तं ब्राह्मणं चन्द्रस्वामिनमवादीत् नाथ! आगच्छ, सर्वे वयं मत्पितृगृहं व्रजामः, इह स्थिते अपत्ये एते विनश्येताम्। तदाकर्ण्य स विप्रः ब्राह्मणीं तामाह स्म प्रिये! दुर्भिक्षे गेहात् पलायनं महत्पापं, तदेतौ बालकौ नीत्वा त्वत्पितृसद्मनि स्थापयित्वा, अहं शीघ्रमेष्यामि, त्वमिहैवास्व। एवमुक्त्वा भार्य्यां तां स्वगृहे एव स्थापयित्वा तौ च दारकौ गृहीत्वा चन्द्रस्वामी तस्मान्नगरात् श्वशुरगृहं प्रति प्रतस्थे। गच्छंश्च क्रमेण त्रिचतुरैर्द्दिनैः सूर्य्यांशुतप्तसिकतां विशुष्कविरलद्रुमां कामपि महाटवीं प्राप्य तृषातुरौ बालकौ तत्र स्थापयित्वा तयोः कृते वारि अन्वेष्टुं किञ्चित् दूरमयासीत्। गच्छतश्च तस्य अग्रतः सिंहदंष्ट्राख्यः कश्चित् शबराधिपः क्वचित् कार्य्यार्थं सानुगः प्रस्थितः समाययौ। स च भिल्लपतिस्तं जलार्थिनं दृष्ट्वा पृष्ट्वा बुद्ध्वा च संज्ञया भृत्यान् समचोदयत् प्राप्यतामयं जलान्तिकमिति। तदाकर्ण्य तस्य भृत्या द्वित्रा लब्धाशयाः तम् ऋजुं चन्द्रस्वामिनं पल्लीं नीत्वा बद्धमकुर्वत। एवं विवशश्च चन्द्रस्वामी नरोपहाराय सुसंयतमात्मानमवबुध्य अटवीगतौ निजौ दारकौ शुशोच हा वत्स महीपाल! हा वत्से चन्द्रावति! कथं मया मूढेन अपदे सिंहव्याघ्रसमाकुले कान्तारे युवां परित्यक्तौ। आत्मा च चौरैर्घातितः, न चास्ति मे शरणम् इत्येवमाक्रन्दन् स ब्राह्मणः व्योम्नि निविष्टदृष्टिः सवितार-

मपश्यत्, अवदच्च अहमिदानीं स्वप्रभुं विपद्स्तारम् एन-
माश्रये इति। एवमालोच्य स आदित्यमुपस्तोतुमुपचक्रमे।
हे परापराकाशशायिन् ज्योतिषाम्पते! बाह्याभ्यन्तरतमो-
नुत् देव! तुभ्यं नमोऽस्तु। त्वं त्रिजगद्व्यापी विष्णुः, त्वं
सर्वश्रेयसामाकरः शिवः, त्वं सुप्तं जगत् विचेष्टयसि, त्वं
परमः प्रजापतिरसि। तव अप्रकाशे एतौ चन्द्राग्नी प्रकाशे-
तामितीव दयया तयोः न्यस्तात्मतेजसे तुभ्यं नमः। त्वयि
अभ्युदिते रक्षांसि विद्रवन्ति, दस्यवः पलायन्ते, गुणिनश्च
प्रमोदन्ते। हे त्रैलोक्यैकप्रदीप! शरणागतं मां रक्ष, इदं
दुःखान्धकारं विदारय, आशु दयां कुरु। इत्येवमभिष्टु-
वतोऽस्य चन्द्रस्वामिनः पुरतः सहसा गगनादुच्चचार वाक्
हे चन्द्रस्वामिन्! तुष्टोऽस्मि ते, नैव त्वं बधमाप्स्यसि, मम
प्रसादाच्च ते पुत्रादिसङ्गमो भविता। इत्युक्तो दिव्यवाचा
चन्द्रस्वामी तत्र जातस्वस्थः शबरोपाहृतस्नानभोजन-
स्तस्थौ।

एतस्मिंश्चावसरे कश्चित् सार्थधरो नाम महान् सार्थ-
वाहस्तेन पथा समागच्छन् तं महीपालं चन्द्रस्वामितनयं
भगिन्या चन्द्रावत्या युतम् अरण्यगं पितर्य्यनागते शोक-
विधुरम् अशुभशङ्किनमाससाद। पप्रच्छ च असौ युवां
किमर्थमिहागतौ, कथञ्च युवयोरीदृशी समवस्थेति। अथ
ताभ्यां स्ववृत्तान्तमाख्यातः स वणिक् तावाश्वास्य सुलक्षणौ
च दृष्ट्वा स्वं देशमनैषीत्। तत्रासौ महीपालः बाल्येऽपि
अस्त्रक्रियायां निरत आसीत्।

एकदा तस्य वणिजः पुत्रस्नेहेन तौ पालयतः सदने

तारापुरनिवासिनः रीतोवर्म्मनामकस्य नृपतेर्मन्त्री अनन्तस्वामी नाम सार्थवाहस्य सखा द्विजः हस्त्यश्वपदातिभिः सह कार्य्यार्थमागतः। स तु कियन्तं कालं विश्रम्य तत्र तं महीपालं शुभाकृतिं जपाग्निकार्य्यादिनिरतं दृष्ट्वा वृत्तान्तं परिपृच्छ्य विदित्वा च सार्थवाहमुखात् तयोः सवर्णतां बन्धुं सार्थवाहं तौ अपत्यार्थी ययाचे। अथ तेन वैश्येन दत्तौ तौ दारकौ गृहीत्वा सः अनन्तस्वामी तारापुरं ययौ। तत्र तेन मन्त्रिणा पुत्रीकृतः स महीपालस्तस्यैव भवने स्वस्त्रा सह अवात्सीत्।

अत्रान्तरे स भिल्लपतिः सिंहदंष्ट्रः तं बद्धं चन्द्रस्वामिनमेत्य तस्यामेव पल्लयामभाषत ब्रह्मन्! मया स्वप्ने भगवता सहस्रभानुना समादिष्टोऽस्मि, यथा भवान् संपूज्य मोक्तव्यः, नैव हन्तव्यः, तदुत्तिष्ठ, यथेच्छं व्रज इत्युक्त्वा बहून् मुक्ताफलमृगमदादीन् आनुयात्रिकांश्च दत्त्वा तममुञ्चत्। अथ मुक्तः स चन्द्रस्वामी इतस्ततो गवेषयन् अनुजायुतं तं महीपालमरण्यतः अलब्ध्वा भ्रमन् सागरतटे जलपुरं नाम पुरं प्राप। विवेश च अतिथिर्भूत्वा कस्यचित् गृहिणो गृहम्। तेन चातिथ्येन सुसत्कृतं तं चन्द्रस्वामिनं वृत्तान्तं परिपृच्छ्य स गृहपतिस्तमब्रवीत् ब्रह्मन्! कनकवर्म्माख्यः कश्चिद् वणिक् अतीतेषु दिनेषु इहागात्। तेन चाटव्यां स्वसृसहितः कश्चित् ब्राह्मणदारकः प्राप्तः, आगतश्च तौ सुभव्यौ दृष्ट्वा चादाय इह नारिकेलमहाद्वीपे तेन तु तयोर्नामनी नोक्ते। तदाकर्ण्य तावेव मामकाविति चिन्तयन् सं चन्द्रस्वामी तं द्वीपवरं गन्तु

मतिमकरोत्। अथ कथञ्चित् रात्रिमतिवाह्य नारिकेलं प्रयास्यता केनचित् विष्णुवर्म्मणा नाम वणिजा सह सङ्गतिमकार्षीत्। तेन च सहायेन यानपात्रं समारुह्य स चन्द्रस्वामी सुतस्नेहात् तदेव द्वीपमगात्। तत्र गत्वा पृच्छन्तं तं सर्व्वे वणिजः समब्रुवन् कनकवर्म्माख्यो वणिक् अत्रागत आसीत्। अधुना तु सुरूपौ अरण्यप्राप्तौ द्वौ द्विजदारकौ गृहीत्वा कटाहद्वीपमगमत्। तदाकर्ण्य स विप्रः दानवर्म्माख्येन गच्छता वणिजा सह कटाहद्वीपमभ्यगात्। तत्रापि स विप्रः तं वणिजं कनकवर्म्माणं ततः द्वीपात् कर्पूरद्वीपं गतमश्रौषीत्। एवं क्रमेण वणिग्भिः सह तत्तत् कर्पूरसुवर्णसिंहलादिकं द्वीपं गत्वापि तं वणिजं न प्राप। ततश्च सिंहलद्वीपे शुश्राव तं वणिजं निजं देशं चित्रकूटाभिधं गतम्। अथ कोटीश्वराख्येन केनचित् वणिजा समं चन्द्रस्वामी तत्पोतेन समुत्तीर्णवारिधिः चित्रकूटमगच्छत्। प्रापच्च तं वणिजं कनकवर्म्माणं तत्र। आख्यच्च तस्मै स्वोदन्तं पुत्रसमुत्सुकः। ततः कनकवर्म्मा ज्ञातार्त्तिस्तस्य दारकौ दर्शयामास उवाच एतौ मया अरण्यतः समानीतौ इति। चन्द्रस्वामी यावत् तौ वीक्षते, तावत् तौ तदीयौ न, अन्यौ कौचन इति बुद्धा वाष्पशोकार्त्तो निराशश्च विललाप हा इयद्भ्रान्त्वापि मया नासादितौ दारकौ, धात्रा कुप्रभुणेवाशा मे दर्शिता, न च पूरिता,मिथ्यैव दूराद्दूरं भ्रामितोऽस्मि। इत्येवं बहु विलपन् चन्द्रस्वामी तेन कनकवर्म्मणा समाश्वासितः शुचाब्रवीत् यद्यत्र भुवं भ्रमन् आत्मजौ न प्राप्स्यामि ततस्त्यक्ष्यामि शरीरं

सागराश्रमि। इत्युक्तवन्तं तं कोऽपि ज्ञानी समभ्यधात् ब्रह्मन्! नारायण्याः प्रसादात् आत्मजो प्राप्स्यस्येव, व्रज। तदाकर्ण्य सम्प्रहृष्टः भास्करानुग्रहं स्मरन् वणिग्भिः पूजितस्तस्मात् पुरात् प्रायात्। ततः क्रमेण अग्रहारान् ग्रामान् नगराणि च चिन्वन् प्रांशुमहाद्रुमं महारण्यमाससाद। तत्र रात्रिं क्षपयितुं फलाम्बुभिर्वृत्तिं विधाय सिंहव्याघ्रादिशङ्कया तरुमेकं महान्तमारुह्य तस्थौ।

निशीथे समनुप्राप्ते अनिद्रः स तरोरधस्तात् महानारायणं मुख्यं मातृचक्रं भैरवप्रतीक्षया समागतमपश्यत्। ताश्च मातरः चिरयति कथमद्य देव इति नारायणीमपृच्छन्। सा तु जहास न किमपि प्रत्यब्रवीत्। अथ निर्बन्धपृष्टा ताभिः सा प्रत्यवादीत् सख्यः! यद्यपि लज्जावहमेतत् तथापि युष्माकमाग्रहात् वच्मि।

अस्ति सुरपुराख्ये पुरे शूरसेनो नाम राजा। तस्य विद्याधरी नाम ख्यातरूपा आत्मजा वर्त्तते। तेन च राज्ञा प्रदेयायाः कन्यायास्तस्या रूपसमः विमलाख्यस्य नृपतेस्तनयः प्रभाकरः श्रुतः। अथ तस्मिन् राज्ञि तां कन्यां तस्मै दित्सति तेनापि विमलेन स्वपुत्रानुरूपा सा श्रुता। ततश्च स विमलः दूतमुखैः तं शूरसेनं तत्पुत्रीं विद्याधरीं स्वपुत्रार्थे अयाचत। शूरसेनश्च तत्सुताय प्रभाकराय यथाविधि तां कन्यामदात्। ततः सा विद्याधरी विमलपुराख्यं श्वाशुरं पुरमवाप्य भर्त्रा समं निशिशयनीयमगात्। तत्र सा यावत् सुप्तं पतिं प्रभाकरं निरीक्षते तावत् तं नपुंसकमपश्यत्। दृष्ट्वैव हा हतास्मि, कथं मया षण्डः पति-

लब्ध इति शोचन्ती कथञ्चित् तां रात्रिमनयत्, प्राहिणोच्च प्रातः पित्रे लेखम् अपुंसकाय अहं त्वया अनन्विष्य कथं दत्तेति। स तु शूरसेनः तं लेखं वाचयित्वा विमलेनास्मि वञ्चितश्छद्मनेति क्रुद्धः विमलं प्रति यदहं त्वया नपुंसकाय स्वसुताय व्याजात् सुतां दापितः, तत्फलं भुङ्क्ष्व, पश्य, त्वामचिरात् निहन्मि इति लेखेन सन्दिदेश। विमलोऽपि तं लेखमधिगम्य मन्त्रिभिः विमृश्य दुर्जये तस्मिन् शूरसेने कञ्चिदपि नोपायमैक्षत। ततस्तं विमलं लिङ्गदत्ताख्यो मन्त्री समभ्यधात् देव! अस्त्येक एव उपायः तमवलम्बतां देवः श्रेयसे। अस्ति स्थूलशिरा नाम यक्षः। तस्याहं मन्त्रं वेद्मि, येन आराधितोऽसौ इष्टवरं ददाति। तेन च मन्त्रेण साम्प्रतं यक्षमाराध्य पुत्रार्थं लिङ्गं याचस्व, सद्यश्च विग्रहः शाम्यतु। इत्युक्तो मन्त्रिणा असौ विमलस्तं मन्त्रमादाय सुतार्थं लिङ्गप्राप्तये तं यक्षमाराध्य अयाचत। यक्षेण च तदाराधितप्रसन्नेन दत्तस्वलिङ्गस्तत्सुतः प्रभाकरः सद्य एव पुमानभूत्, यक्षस्तु नपुंसक एव तस्थौ। अथ सा विद्याधरी तं प्रभाकरं सद्यः पुमांसं दृष्ट्वा तेन पत्या अवाप्तरतसौख्या व्यचिन्तयत् कथमहं भ्रान्ता, न मे भर्त्ता नपुंसकः, पुमानेवैष सुभगः, तदस्य मया वृथा विमानना कृता, इत्यालोच्य तमेवार्थं पुनर्लिखित्वा लज्जिता पित्रे लेखं प्राहिणोत् स च तेन शममभजत। एवं वृत्तान्तं ज्ञात्वा अथ कुपितेन भैरवेण देवेन स स्थूलशिरा यक्षः आमाय्य शप्तः यतस्त्वया लिङ्गत्यागेन षण्ढत्वमाश्रितं ततः त्वमाजीवं षण्ढ एव भव, सोऽस्तु प्रभाकरः पुमान्। एवं

स गुह्यकः नपुंसकीभूतः अद्य दुःखभाक् प्रभाकरश्च पुरुषी-भूतः सुखाय भागी समजायत। तदेतेन व्यापारेण देवस्य भैरवस्य आगमने मनाक् विलम्बः सञ्जातः, शीघ्रमेव आगतं तं विजानीत। एवं यावत् नारायणी देवी मधुरं ताः प्रब्रवीति तावदेव चक्रेश्वरः स देवो भैरवः तत्र समाययौ। स ताभिर्मातृभिः समुपचारैः सम्पूजितः क्षणं ताण्डवेन नृत्यन् ताभिर्योगिनीभिरक्रीड़त। तच्च सर्वं तरुपृष्ठस्थितश्चन्द्रस्वामी व्यलोकयत् नारायण्याश्चैकां दासीम्। सा च दासी तमैक्षत। दैवाच्च तौ तदा अन्योन्यं साभिलाषौ समभूताम्। नारायणी च देवी तौ तथाविधौ विवेद। अथ गते तस्मिन् देवे भैरवे मातृसहिते सा नारायणी विलम्ब्य पादपस्थं तं चन्द्रस्वामिनमाह्वयत्। ततः सा अवरुह्य समुपस्थितं तं ताञ्च दासीं पप्रच्छ कश्चिदन्योन्यमभिलाषोऽस्ति वामिति। अहन्तु एतां दासीं ते ददामि, युवां निर्वृतौ भवतम्। तदाकर्ण्य सोऽब्रवीत् देवि! यद्यपि चञ्चलं मनो मां रुणद्धि, तथापि परकीयां न स्पृशामि, ममैषा प्रकृतिः, तदेतत् कायिकं पापं नाचरणीयमित्यूचिवांसं तं धीरं विप्रं देवी नारायणी जगाद वत्स! प्रीतास्मि ते वचसा, भैरवश्चायं सुप्रीतः, शीघ्रं पुत्रादीनाप्स्यसि, इदञ्च अम्लानमुत्पलं मया दत्तं गृहाण इत्युक्त्वा सदासी सा तिरोदधे। स च चन्द्रस्वामी प्राप्तोत्पलः तस्यां रात्र्यां व्यतीतायां ततः प्रस्थितः भ्रमन् क्रमेण तारापुरं नगरं प्राप यत्रास्य पुत्रो महीपालः सुता च चन्द्रावती व्यतिष्ठत। तत्र गत्वा स विप्रः तमनन्तस्वामिनं विप्रं मन्त्रिणम् अतिथिप्रियं श्रुत्वा

भोजनार्थं तस्यैव गृहद्वारि उपस्थाय भाज्ञामतिथिं न्यवे-
दयत्। स च मन्त्री प्रतीहारैरावेदितान्तः प्रवेशितं विहा-
सं तं दृष्ट्वैव भोजनाय न्यमन्त्रयत। अथ निमन्त्रितश्चन्द्रस्वामी
तत्र पापहरम् अनन्तह्रदाख्यं सरः स्नातुं तत्र समभ्य-
गात्। यावच्च स स्नात्वा तस्मादागच्छति तावत् तत्र नगरे
हा कष्टशब्दमशृणोत्। तत्कारणञ्च पृच्छन्तं तं तत्रस्थो
जनोऽवदत् इह महीपालो नाम कश्चिद् ब्राह्मण पुत्रः
स्थितः। स खलु सार्थधरेण सार्थवाहेन अटव्याः प्राप्तः।
स च सुलक्षण इति ज्ञात्वा मन्त्रिणा अनन्तस्वामिना
अपुत्रेण तं सार्थवाहं याचित्वा सभगिनीकः इहानीतः,
पुत्रीकृतश्च परं प्रियत्वमगाच्च तारावर्माख्यनृपतेः। स
चाद्य कालसर्पेण दष्ट इति पुरे महान् हाहारवः श्रूयते।
तदाकर्ण्य स एव मे पुत्र इति चिन्तयन् त्वरितं मन्त्रि-
गृहमाययौ, ददर्श च तत्र सर्वैः परिजनैर्वृतं तथाभूतं
सुतं सुताञ्च। दृष्ट्वैव स हस्तस्थदेवीदत्तागदोत्पलः श्रम-
मनन्दत्, अढौकयच्च तत् नीलोत्पलं महीपालस्य नासा-
याम्। तेन तस्य गन्धेन स महीपालः सहसा सुप्तोत्थित
इव निर्विषः समुदतिष्ठत्। सर्वश्च सराजकः जनः पुरे
तस्मिन् महोत्सवमकरोत्। तदानीं चन्द्रस्वामी न मनुष्यः,
कोऽपि देवांश इति अनन्तस्वामिना मन्त्रिणा पौरैः राज्ञा
च बहुभिर्धनैरपूज्यत। स च तत्र मन्त्रिसद्मनि सुसत्कृतः
सुतं सुताञ्च पश्यन् सुखमतिष्ठत्। त्रयश्च ते पुत्रदुहितृ-
पितरः परस्परं परिज्ञायैव तूष्णीं तस्थुः, न हि कार्या-
भिज्ञो नराः अकाले अभिव्यक्तिं कुर्वन्ति।

अथ ताराधर्म्मा नृपतिः गुणाकृष्टचेताः तस्मै महीपालाय बन्धुमतीं नाम सुतां राज्यार्द्धेन समं प्रादात्, व्यधाच्च अनन्यपुत्रतया तस्मिन्नेव सुखी राज्यधुरां त्यक्ताम् । स महीपालः सम्प्राप्तराज्यः तं चन्द्रस्वामिनं पितरं प्रख्याप्य स्वामनुजाञ्च सदृशाय गुणशीलसम्पन्नाय दत्त्वा यथासुखमस्थात् ।

एकदा पिता चन्द्रस्वामी तं स्वैरमभाषत पुत्र ! एहि ते मातुरानयनार्थं स्वदेशं गच्छावः । सा हि राज्यस्थं त्वां विज्ञाय कथं विस्मृतास्मि चिरदुःखिनीति आत्मानमवमतं मन्यमाना क्रोधेन जातु त्वां शपेत् । मातापित्रोर्मनःपीड़ासु दत्तासु न जन्तुः सुखमश्नुते कदाचित् । तदत्र पुरातनीं वणिक्पुत्रकथां शृणु ।

पुरासीत् धवलाख्ये पुरे चक्रो नाम वणिक्पुत्रः । स कदाचित् पित्रोरनिच्छतोः वाणिज्यार्थं स्वर्णद्वीपमगात् । क्रमेण पञ्चभिरब्दैरुपार्ज्जितमहाधनः रत्नपूरितं यानमास्थाय समुद्रपथमाश्रयत् । क्रमेण अल्पावशेषगन्तव्ये वारिधौ सहसा महावातवर्षवेगाकुलः अम्बुदः उन्नदन् उदतिष्ठत् । पितराववमत्य किमेष निर्गतः इतीव क्रोधात् तस्य वहनं निर्बभञ्जुर्महान्तस्तरङ्गाः । तत्रस्थाः केऽपि तोयैर्हृताः, अपरे मकरैर्भक्षिताः, चक्रस्तु वणिक्सुतः स्वायुषो बलात् तीरं प्रति वीचिभिर्निक्षिप्तः । तत्रस्थश्चावशः स स्वप्न इव रौद्रासिताकृतिं पाशहस्तं पुरुषमेकं ददर्श । तेन पुरुषेण समुत्क्षिप्य पाशवेष्टितः स चक्रः दूरं सिंहासनस्थेन केनचित् पुंसाश्रितां सभां नीतः । ततश्च तस्य सिंहासन-

श्चैकदा तेन पाशभृता पुरुषेण स वणिक्तनयः लौह-
मये गेहे न्यवेश्यत। तत्र स चक्रः कमपि पुरुषं मूर्ध्नि तप्तेन
लौहेन अनिशं भ्रमता चक्रेण अन्तःपीड्यमानमपश्यत्,
अपृच्छच्च कस्त्वं, केन च दुष्कृतेन तवेदृशी गतिरिति। स
प्रत्यवदत् अहं खड्गो नाम वणिक्। पित्रोर्वचः मया न
कृतं, तेन च क्रुद्धौ तौ मामशपतां यदावां सन्तप्तलौहचक्र-
वत् दुर्वचसा दुनोषि तदीदृश्येव ते यातना भविष्यतीति।
इत्युक्त्वा विरतौ तौ रुदन्तं मामवोचतां मा रोदीर्वत्स!
एकमेव मासं ते ईदृशी पीड़ा भवितेति। तदाकर्ण्य अहं
विमनाः शुचा तद्दिनं शयनमाश्रितः निशि स्वप्न इव समा-
गतं भीमं पुरुषमेकमद्राक्षम्। तेन च पुरुषेण बलादस्मिन्
लौहमये अहं निक्षिप्तः, न्यस्तञ्च मे मूर्ध्नि ज्वलच्चक्रमिदम्।
इत्येवं यातनयापि पितृशापात् मे प्राणा न यान्ति, स च
मासोऽद्य सम्पूर्णः, न चाहं मुच्ये अस्या आपद इति।

एवं वादिनं खड्गं स चक्रः सकृपोऽब्रवीत् भद्र! मयापि
अर्थलालसया प्रवसता पित्रोर्वचः न कृतम्। तौ च प्राप्तं
ते वित्तं नङ्क्ष्यतीति मां शपतः स्म। तेन समग्रं द्वीपा-
न्तरार्जितं मे वित्तं सागराम्भसि निमग्नं, तदलं मे जीवि-
तेन, देहि मे शिरसि चक्रमेतत्, व्यपैतु ते शाप इति ब्रुवति
चक्रे सहसा दिव्या वाणी अश्रूयत। खड्ग! मुक्तोऽसि त्वं
शापात्, चक्रस्यास्य मूर्ध्नि चक्रमेतदर्पय इति। तदाकर्ण्य
केनापि अदृश्येन भूतेन चक्रशिरसि न्यस्तचक्रः स खड्गः
पितृगृहमेवानीयत। आसीच्च तत्र पुनरनुल्लङ्घितपितृ-
शासनः। चक्रस्तु शिरसि तत् चक्रमादाय एवमभ्यधात्।

पापिनोऽन्येऽपि तत्तत्पातकेभ्यो मुच्यन्ताम्, एतत्तु चक्रम् आपापक्षयं मे मूर्ध्नि भ्राम्यतु। इत्युक्तवन्तं तं धीरसत्त्वं नभःस्थिता देवाः पुष्पवृष्टिमुचः परितुष्य एवमब्रुवन् साधु महासत्त्व! साधु, अनया करुणया ते पापं शान्तं व्रज, वित्तञ्च ते अक्षयं भविष्यतीति। एवमभिहितवत्सु देवेषु चक्रं तत्क्षणात् चक्रस्य शिरसः क्वाप्यदर्शनं जगाम। एकश्च विद्याधरकुमारः सहसोपेत्य तुष्टेन इन्द्रेण प्रेषितं महार्घं रत्ननिचयं दत्त्वा तं चक्रम् अङ्के कृत्वा धवलाभिधं तन्नगरं प्रापयामास। सोऽपि चक्रः पित्रोरन्तिकमेत्य बन्धूनानन्दयन् स्ववृत्तान्तं यथावदाख्यत्। चन्द्रस्वामी पुत्रं महीपालमेवमाख्याय पुनरवदत् पुत्र! विना माता-पितरौ धनं पापफलं तद्भक्तिस्तु कामधेनुस्तत्राप्येतां कथां शृणु।

आसीत् पुरा कोऽपि महातपाः वनवासी मुनिः। कदाचित् तरुच्छायोपविष्टस्य तस्योपरि वलाकैका पुरीष-मुत्ससर्ज। स च क्रुद्धस्तां ददर्श। दृष्टमात्रैव सा वलाका भस्मसादभूत्। ततश्च स मुनिः तपःप्रभावादहङ्कारमाप-द्यत। एकदासौ मुनिः क्वापि नगरे एकं ब्राह्मणगृहमेत्य तद्गृहिणीं भैक्षमयाचत। सा तु गृहिणी पतिव्रता प्रतीक्षस्व क्षणं यावद् भर्त्तुः परिचर्य्यां समापये इति तं निजगाद। ततश्च तं कोपदृष्ट्या वीक्षमाणं निरीक्ष्य सा विहस्य अभ्यभाषत मुने! नाहं वलाकेति। तदाकर्ण्य मुनिरद्भुतम्मन्यमानः समुपविश्य एतत् कथमिव ज्ञातमनया इति चिन्तयन् तत्र तस्थौ। ततश्च सा साध्वी आदौ अग्नि-

कार्य्यं ततः भर्त्तुः शुश्रूषां कृत्वा भैक्ष्यमादाय मुनेरन्तिकमाजगाम। स च मुनिर्बद्धाञ्जलिस्तामवदत् कथं त्वया अनन्यगोचरौ बलाकावृत्तान्तौ ज्ञात इत्येतौ ब्रूहि, ततो भिक्षां ग्रहीष्ये इत्युक्तवन्तं तं मुनिं सोवाच मुने! न भर्त्तृसेवाया अपरं कञ्चन धर्मं करोम्यहं, तेन तत्प्रसादेन मे एतादृशं विज्ञानम्। किञ्चेतः धर्म्मव्याधाख्यं कञ्चन मांसविक्रयिणं गत्वा एतत् पृच्छ, ततस्ते श्रेयः, निरहङ्कारश्च भविष्यसीति एवं सर्वविदा पतिव्रतयाभिहितः गृहीतातिथिसत्कारस्तां प्रणम्य स मुनिस्तस्माद् गृहात् निरयात्।

अन्येद्युः स मुनिः समन्विष्य तं धर्म्मव्याधं विपणिस्थं मांसानि विक्रीणन्तमुपागच्छत्। धर्म्मव्याधश्च दृष्ट्वैव तं मुनिमभाषत ब्रह्मन्! किं पतिव्रतया तया इह त्वं प्रेषितः? तदाकर्ण्य स मुनिर्विस्मितस्तं धर्म्मव्याधमवादीत् भद्र! मांसविक्रयिणस्ते कथमीदृशं विज्ञानम्? इत्यभिहितवन्तं तं मुनिं धर्म्मव्याधो निजगाद ब्रह्मन्! अहं मातापितृभक्तः, तौ हि मम परायणं, तयोः स्नपितयोः स्नामि, भोजितयोः भुञ्जे, शायितयोश्च शये, तेन मे एतादृशं विज्ञानम्। अन्यहतानाञ्च मृगादीनां मांसानि स्वधर्म्म इति वृत्त्यर्थं न तु अर्थलालस्येन विक्रीणे, हे मुने! ज्ञानविघ्नमहङ्कारम् अहं सा च पतिव्रता नैव कुर्वः, तेनैव हेतुना आवयोरीदृशं निर्बाधं ज्ञानं तस्मात्त्वमपि अहङ्कारं मुक्त्वा स्वधर्म्मं चर, येनाशु परं श्रेयोऽवाप्स्यसीति। इत्येवमनुशिष्टस्तेन धर्म्मव्याधेन स मुनिस्तद्गृहान् गत्वा तस्य धर्म्म-

श्यौधस्य सर्वां क्रियामवलोक्य परितुष्टः वनमगात्, अवा-
प्तञ्च तदुपदेशात् सिद्धिम्। तावपि पतिव्रताधर्म्मव्याधौ
सद्धर्म्मचर्य्यया परमां सिद्धिं गतौ। पतिव्रतानां पितृपरा-
णाञ्च एवं प्रभावः, तदेहि वत्स! दर्शनोत्सुकां मातरं
सम्भावय। एवं पित्राभिहितः स महीपालः मातृदर्शनोत्-
सुकः स्वदेशाय गन्तुं प्रत्यपद्यत। ततश्च धर्म्मपित्रे अनन्त-
स्वामिने सत् सर्वं निवेद्य तस्मिन् निक्षिप्तराज्यभारः पित्रा
सह निशि प्रायात्। क्रमात् स्वदेशं दर्शनोत्सुकां जननीञ्च
देवमतिं प्राप्य मधुरिव कोकिलां समानन्दयत्। तत्र
च बान्धवसत्कृतः कञ्चित् कालं मात्रा वृत्तान्ताख्यायिना
च पित्रा सह तस्थौ।

तावच्च तत्र तारापुरे सा राजकन्या महीपालप्रिया
बन्धुमती निशायामवसन्नायां सुप्ता व्यबुध्यत। दृष्ट्वा च
पतिं क्वापि गतं विरहातुरा क्वापि प्रासादादिषु रतिं
नालभत, व्यलपच्च द्विगुणीकृतहारेण वाष्पेण रुदती मृत्युना
सुखमभिकाङ्क्षन्ती सकरुणम्। अथ मन्त्री अनन्तस्वामी
तां प्रबोध्य समाश्वासयत् पुत्रि! स ते प्रियः, यामि
कार्य्यार्थं, शीघ्रमेष्यामि इति स्वैरमुक्त्वैव गतः, तन्मा शोकं
कृथा इति। एवमुक्ता सा कथमपि धृतिमलभत। ततः
सा भर्त्तुः प्रवृत्तिविज्ञानाय देशान्तरागतान् द्विजपुङ्गवान्
दानैः सदा समपूजयत्।

एकदा सा दूरागतं सङ्गमदत्ताभिधं कञ्चिद् द्विजम्
अभिज्ञाननाममनी उक्त्वा भर्त्तुर्वार्त्तां पप्रच्छ। ततः स
द्विजः प्रोवाच नैवंविधो मैया दृष्टः कश्चित्, तथाप्यत्र नैव

त्वया अष्टत्या भवितव्यं, चिरादभीष्टसंयोगः शुभेन कर्मणा सम्पत्स्यते, यच्च मया आश्चर्यं दृष्टं तदाकर्णय तव कथयामि। अहं तीर्थानि परिभ्रमन् एकदा हिमाद्रौ मानसं सरः अध्यगच्छम्, अपश्यञ्च तत्रादर्श इव मणिमयं गृहम्। ततश्च अकस्मात् खड्गपाणिरेकः पुमान् दिव्याङ्गनापरिवृतः तत् सरस्तीरमध्यारोहत्। तत्रोद्याने स ताभिः सुरसुन्दरीभिः मधु पिबन् अक्रीड़त्। अहञ्च दूरात् सकौतुकं पश्यन् अलक्षित एव तत्रातिष्ठम्। तावच्च कुतोऽपि तत्र कश्चित् सुभगः पुरुषः समागात्। मया च मिलिताय तस्मै तत् सर्वं यथादृष्टमाख्यातम्। दर्शितश्च सह दिव्याङ्गनाभिः स पुमान् तस्मै। तद्दृष्ट्वैव स स्ववृत्तान्तं मां समाचख्यौ।

अहमासं त्रिभुवनाख्ये पुरे त्रिभुवनाधिपः राजा। तत्र मे कश्चित् पाशुपतः सुचिरं सेवां व्यधात्। स तु स्वैरं कारणं परिपृष्टः मामभ्यधात् राजन्! विलखड्गप्रसाधने मे सहायकं कुरु, मया च तत् प्रतिपन्नम्। ततो मया सहासौ पाशुपतः निशि अरण्यं गत्वा विवरं प्रकटीकृत्य मामब्रवीत् वीर! प्रविशात्र त्वं पूर्वं ततश्च खड्गं प्राप्य निर्गत्य च मामपि प्रवेशयेः इत्यत्र समयः क्रियताम्। इत्येवमुक्तस्तेन अहं तेन सह समयं कृत्वा विवरं प्रविश्य एकं दिव्यं रत्नमयं गृहं व्यलोकयम्। ततः सहसा निर्गत्य कापि सुराङ्गना प्रधाना प्रेम्णा मामन्तःपुरं प्रावेशयत्, प्रादाच्च खड्गम्। सर्वसिद्धिप्रद एष खड्गः खगतिदायी च, रक्षैनं यत्नत इति वादिन्या च तया सह तत्र सुखमवसम्।

गच्छति च कालेऽखड्गहस्तोऽहं स्मृत्वा निर्गत्य तेन विवरेण तं पाशुपतं तस्मिन्नसुरपुरे प्रावेशयम् । अहं तया प्रथमोद्दिष्टया सपरिजनया कन्यया सह स च पाशुपतः द्वितीयया सपरिजनया कन्यया सह सुखेन तत्र न्यवसाव: । एकदा पानमत्तस्य मम हस्तात् स पाशुपतश्छलात् खड्गं हृत्वा निजहस्तगमकरोत् । तस्मिन् हस्तस्थिते खड्गे स प्राप्तमहासिद्धिः क्षणात् मामादाय तस्माद् विवरात् निष्कास्य बहिः प्राक्षिपत् । ततो द्वादश वर्षाणि तस्मिन् बिलमुखे कदाचित् स निर्गच्छेदिति स्थितं मया, अद्य तु सोऽयं शठः मद्दृष्टिपथे मदीययैवासुरकन्यया क्रीड़न् निपतितः । हे देवि ! यावत् स त्रिभुवनाभिधः राजा इत्येवं मां वक्ति तावत् स पाशुपतः पानमदात् निद्रामवाप । स च राजा सहसा सुप्तस्य तस्य हस्तात् खड्गं तमग्रहीत् प्रापच्च दिव्यं प्रभावम् । ततस्तं पाशुपतं पादप्रहारेण प्रबोध्य निरभर्त्सयत्, केवलं नावधीत्, प्राविशच्च सपरिच्छदया तयासुरकन्यया सिद्धेरिव मूर्त्तिमत्या सह तत् असुरसदनम् । स च पाशुपतः सिद्धिभ्रष्टः परं कष्टमापद्यत । एवं कृतघ्नाश्चिरसिद्धार्था अपि ध्रुवं विनश्यन्ति हि । एतत् साक्षादवलोक्य स्वयमिहागतः, तद् देवि ! अवश्यमेव ते त्रिभुवनस्येव प्रियसङ्गमो भविता न हि शुभकृदवसीदति इति श्रुत्वा द्विजमुखात् सा बन्धुमती परं परितोषं ययौ चकार तं विप्रं बहुधनं दत्त्वा कृतार्थम् ।

अपरेद्युश्च अपूर्वः कश्चिद् द्विजः अतिदूरतस्तत्रागात् । तच्च बन्धुमती कथितनामाभिज्ञाना भर्त्तुः वार्त्तां पर्य्यपृ-

च्छत्। सोऽप्यवादीत् देवि! न मया स तव भर्त्ता दृष्टः क्वापि, किन्त्वहम् अन्वर्थः सुमना नाम अद्य ते गृहमागतः, तदाशु ते सौमनस्यं मे मनः कथयति, ईदृशे सौमनस्ये चिरविश्लेषिणामपि संयोगो भवत्येव, तदत्र कथामेतां कथयामि श्रूयताम्।

पुरासीत् नलो नाम निषधाधिपतिर्नृपतिः। यस्य रूपेणेव विजितः कामो अवमत्यात्मानं कोपितस्य त्रिपुरारेर्नेत्राग्नौ तनुमजहात्। तेनाकृतदारेण विचिन्वता दमयन्तीति भीमस्य विदर्भाधिपतेः सुता सुसदृशी अश्रावि। भीमेनापि धरां विचिन्वता सर्वेषु राजसु नलादपरो राजा स्वदुहितुः सदृशः न ददृशे। अत्रान्तरे दमयन्ती जलक्रीड़ार्थं सरोवरमेकमवातरत्। तत्र कमपि राजहंसं दृष्टाम्बुजं दृष्ट्वा क्रीड़ार्थं चित्रोत्तरीया बबन्ध। स बद्धस्तां दिव्यहंसः दिव्यया गिरा समब्रवीत् राजपुत्रि! ते महान्तमुपकारं करिष्यामि, विमुञ्च माम्, अस्ति नैषधेषु नलो नाम राजा, यं हि सद्गुणैर्गुम्फिताहारमिव हृदि दिव्याङ्गनाः सततं वहन्ति। तस्य त्वं सदृशी भार्य्या, स च तव सदृशः पतिः, तदत्र योग्यसंयोगे अहं युवयोः कामदूतो भवामि। तदाकर्ण्य सा दिव्यहंसं तं सत्यवादिनं मत्वा एवमस्तु इति वादिनी तममुञ्चत्। अगदच्च न मया अन्यः नलात् वरणीय इति।

ततश्च हंसोऽसौ निषधेषु आशु गत्वा जलक्रीड़ाप्रवृत्तेन नलेन सङ्गतं सरः समाश्रयत्। नलोऽपि तमपूर्वं राजहंसं दृष्ट्वा कौतुकाच्छिन्नचेताः स्वोत्तरीयेण तं बबन्ध। अथ

बद्धोऽसौ राजहंसः मनुष्यगिरा समवादीत् राजन्! मुञ्च मां त्वदुपकारार्थमागतं, शृणु यदहं कथयामि।

अस्ति विदर्भेषु भीमस्य राज्ञः सुता क्षितितलतिलोत्तमा देवैरपि स्पृहणीया दमयन्ती नाम। त्वद्गुणाकृष्टचेतसा तया त्वमेव भर्त्ता वृतस्तदहं वक्तुमितस्त्वामुपागतः। इत्येवं राजहंसस्य सफलोज्ज्वलैर्वचोभिः पुष्पधन्वनो विशिखैश्च सममसौ नलोऽविध्यत। अब्रवीच्च हंसराज! धन्योऽस्मि योऽहं मूर्त्तयेव मनोरथसम्पत्त्या तया वृत इत्युक्त्वा तेन राज्ञा मुक्तोऽसौ हंसः गत्वा दमयन्त्यै यथावृत्तं यथाक्रमं शशंस, जगाम च स्वस्थानम्। दमयन्ती च सोत्कण्ठा युक्त्या मातृमुखेन निजं पितरं नलप्राप्तैय स्वयंवरमयाचत। राजा च विदर्भपतिस्तस्याः स्वयंवरमनुमत्य पृथिव्यां सर्वान् पार्थिवान् प्रति दूतान् व्यसर्जयत्। दूतमुखात् विदितवार्त्ताश्च भूमिपाः विदर्भान् प्रति व्रजन्ति स्म। नलोऽपि समुत्सुको रथारूढश्चचाल। तावच्च इन्द्रादयो लोकपाला नारदान्मुनेः दमयन्त्यास्तस्या नलप्रेम स्वयंवरौ शृण्वन्ति स्म। तेषु च इन्द्रवायुयमाग्निवरुणाः सम्मन्त्र्य समुत्सुकाः गच्छतस्तस्य नलस्यैवान्तिकमुपजग्मुः। ऊचुश्च तं विनीतं विदर्भान् प्रति प्रस्थितं नलमेत्य। राजन्! इतो गत्वा अस्मद्वचनात् दमयन्तीमिदं वचः ब्रूहि, पञ्चानामस्माकमेकतमं वरय, मर्त्त्येन नलेन ते किम्? मर्त्त्याः मरणशीलाः, देवास्तु अमराः। नृपते! त्वञ्च अस्मद्वरात् अन्यैरलक्षितस्तत्पार्श्वं प्रवेक्ष्यसीति। नलोऽपि तथेति देवाज्ञां शिरसि गृहीत्वा गत्वा चान्तःपुरं तस्या अलक्षित एव

राजपुरुषैः प्रशंस सर्वं देवनिदेशं दमयन्त्यै। सा तु श्रुत्वै-तत् साध्वी प्राब्रवीत् देवास्ते सन्तु तादृशाः, मम तु नल एव भर्त्ता, न प्रयोजनं मे देवैरिति तस्या वचः श्रुत्वा नलः आत्मानं प्रकाश्य गत्वा च यथावृत्तं देवेभ्यः समाचचक्षे। देवाश्च वश्या वयं ते स्मृतमात्रोपगामिनो भविष्याम इति तुष्टा वरं तस्मै नलाय प्रददुः। अथ हृष्टे नले विदर्भान् प्रति प्रयाते तैश्च सुरेश्वरैर्दमयन्त्या वचनशुश्रूषुभिर्विदर्भान् गत्वा नलरूपमकारि। ततश्च भीमसभां गत्वा स्वयंवरे प्रवृत्ते मर्त्त्यधर्म्मानुपाश्रिता नलान्तिकमेवोपाविशन्।

अथ दमयन्ती स्वयंवरा स्वयंवरमेत्य स्वेन भ्राता समावेद्यमानान् एकैकशो नृपान् उज्झती क्रमात् नला-न्तिकमापत्। दृष्ट्वा च तत्र छायानिमेषादिगुणान् षट् नलान् उपविष्टान् समुद्भ्रान्ता व्याकुला च समचिन्तयत् नूनं तैर्लोकपालैः पञ्चभिर्मायैषा परिकल्पिता, षष्ठञ्चैषां नलं मन्ये, न चात्र मेऽस्ति गतिः। इत्यालोच्यैव साध्वी सा नलैकासक्तमानसा आदित्याभिमुखी एवमब्रवीत् हे लोकपालाः! यदि मे मनः स्वप्नेऽपि नलादन्यत्र न चलितं तत्तेन सत्येन यूयं मे स्वं स्वं रूपं दर्शयत, कन्यायाः पूर्व-वृतात् वरात् अन्ये परपुरुषाः, सा च कन्या तेषां पर-दाराः, तत् कथमेष मोहो युष्माकम्? एतदाकर्ण्य ते शक्रा-दयः पञ्च स्वेन स्वेन रूपेण तदा व्यराजन्, षष्ठस्तु सत्यनल एवाभवत्। अथ सा दमयन्ती तस्मिन् फुल्लेन्दीवरसम्मितां दृशं वरणमालाञ्च संप्रहृष्टा समर्पयत्! पुष्पवृष्टिश्च तदानीं नभसः समुत्पपात। ततो 'राजा भीमः तस्य नलस्य

तैश्चाथ दमयन्त्या विवाहमङ्गलं व्यधात्। तैश्च नृपेण विदर्भपतिना यथायथं कृतसत्क्रिया अपरे नृपा देवाश्च महेन्द्रादयः यथागतं प्रतिजग्मुः। गच्छन्तश्च शक्रादयः द्वावागच्छन्तौ पथि दमयन्त्यर्थं कलिद्वापरौ ददृशुः। जगुश्च न गन्तव्यं विदर्भेषु युवाभ्यां तत एवागता वयं, वृत्तश्चासौ स्वयंवरः, नृपतिर्नल एव तया दमयन्त्या वृत इति। ताबूचतुः पापौ क्रोधपरीतौ, देवान् भवादृशान् हित्वा यत् स मर्त्त्यस्तया वृतः, तदवश्यमावां तयोर्वियोगं करिष्यावः। एवं कृतप्रतिज्ञौ तौ निवृत्य स्वस्थानं ययतुः। नलश्च सप्त दिवसान् श्वशुरसद्मनि स्थित्वा दमयन्त्या समं कृतार्थो निषधान् देशान् प्रत्यगमत्। तत्र तु दम्पत्योस्तयोर्यथा प्रेम समभवत् तथा गौरीशङ्करयोरपि न, गौरी शङ्करस्य देहार्द्धं, सा तु दमयन्ती तस्य नलस्य आत्मैवाभूत्।

कालेन सा दमयन्ती नलात् इन्द्रसेनं नाम तनयम् इन्द्रसेनाञ्च नाम कन्यकां क्रमात् प्रासूत। तावच्च कलिरसौ अनुच्छास्त्रवर्त्तिनोऽपि नलस्य चिराय छिद्रं प्राप्य प्रतिज्ञातार्थनिश्चितः समभवत्। एकदासौ नलः पानमदेन मुषितस्मृतिरक्षालितचरणः सन्ध्यामनुपास्यैव सुष्वाप। दिवानिशं दत्तदृष्टिः कलिश्छिद्रमेतदवाप्य तस्य नलस्य शरीरान्तरमविशत्। देहप्रविष्टेन च तेन कलिना अपहृतज्ञानः असौ नृपः धर्म्मंमाचारमपहाय यथारुचि समाचचार। अक्षैरदीव्यत्, दासीभिररंस्त, असत्यमब्रवीत्, दिवास्वप्नमसेवत, रात्रिषु जजागार, अकारणं कोपं चकार, अन्यायेनार्थमाददे, सतामवमानमसताञ्च सम्मानं चकार

च। द्वापरञ्च छिद्रं प्राप्य प्रविष्टान्तःशरीरः तस्य राज्ञः भ्रातरं पुष्कराक्षं समुत्सृष्टसत्पथं व्यधत्त।

कदाचित् नृपतिर्नलः भ्रातुः पुष्कराक्षस्य गृहे दानाख्यं सुन्दरं धवलं वृषं व्यलोकयत्। लोभाच्च तं वृषं मृगयमाणाय तस्मै ज्यायसे नलाय असौ द्वापरग्रस्ततद्भक्तिः पुष्कराक्षः न प्रादात्। अवादीच्च यदि ते तस्मिन् वृषभे वाञ्छास्ति, तद् द्यूतेन मत्त एनं विजित्य गृहाण। तदाकर्ण्य सोऽपि नलस्तथैव प्रतिपेदे। प्रवृत्तं भ्रात्रोरुभयोः परस्परं द्यूतम्। पुष्कराक्षस्य धनं स एव वृषः, नलस्य तु इभादीनि बहूनि। पुष्कराक्षः पुनःपुनर्जिगाय, नलस्तु अजीयत एव। इत्थं द्वित्रैर्दिनैः समग्रे बले कोषे च दुरोदरहारिते वार्यमाणोऽपि नलः नैव चचाल व्यवसायात् कलिविप्लुतमतिः।

अथ क्रमेण समग्रं राज्यं हृतं विदित्वा दमयन्ती निजौ तनयौ रथमारोप्य स्वपितुर्गृहं प्राहिणोत्। ततः सर्वं हारितमवलोक्य पुष्कराक्षः नलमब्रवीत् त्वया अन्यत् सर्वं हारितम्, इदानीं मत्समक्षं दमयन्तीमानीय प्रतिपणं कुरु। इत्युक्तिवात्ययानल इवासौ नलः प्रजज्वाल, न चाकाले किञ्चित् प्रत्युवाच, नापि तां पणीचकार। ततः पुष्कराक्षः समब्रवीत् न करोषि चेत् भार्य्यापणं तदस्मात् मम राज्यात् सभार्य्यः सत्वरं निर्याहि। तत् श्रुत्वैव नलः दमयन्त्या समं देशात्तस्मात् राजपुरुषैरासीमान्तप्रवासितः निर्ययौ। हा कष्टं, नलस्यापि कलिना एतादृगवस्था कृता, किमन्येषां अमीषामिव देहिनां,

धिक् धिक् राजर्षीणामपि ईदृशं वैक्लव्यदं विपदामाश्रयं भूतम्।

अथ भ्रातृहृतैश्वर्य्योऽसौ नलः विदेशं व्रजन् दमयन्त्या सह क्षुधापरीतः वनात् वनान्तरं प्रापत्। तत्र तया कुशक्षतसुकुमारचरणया साकं कस्मिंश्चित् सरित्तीरे विश्रान्तश्चरन्तौ द्वौ हंसौ समैक्षत। दृष्ट्वैव आहारार्थं तयोर्ग्रहणाय उत्तरीयकं चिक्षेप, तौ च हंसौ तत् हृत्वा प्रजग्मतुः। ततश्च विस्मितोऽसौ नलः हंसरूपेण तावेव कलिद्वापरौ वासस्ते हृत्वा गताविति अन्तरीक्षात् वाचः शुश्राव। अथ स राजा एकवस्त्रः विमनाश्च युक्त्या दमयन्त्याः पितुर्गृहगमनाय पन्थानमदर्शयत्। हे प्रिये! अयं पितृगृहगमनाय विदर्भजनपदमार्गः, एषः अङ्गदेशगमनमार्गः असौ च कोसलजनपदपथः। तदाकर्ण्य सा दमयन्ती किमयं मामार्य्यपुत्रस्त्यजन्निव मार्गं वदतीति शङ्कितेवाभवत्। ततस्तौ दम्पती फलमूलभुजौ तत्र वने निशायां श्रान्तौ कुशसंस्तरे समविशताम्। क्रमेण अध्वखिन्ना दमयन्ती निद्रामवाप। नलस्तु कलिमोहितो गन्तुमनाः समुत्थाय एकवस्त्रस्तां दमयन्तीं विमुच्य छित्त्वा तदुत्तरीयार्द्धं प्रावृत्य च प्रययौ। दमयन्ती तु रात्र्यर्द्धे प्रबुध्य तं पतिमपश्यन्ती समन्तात् विचित्य विललाप हा आर्य्यपुत्र! महासत्त्व! रिपुष्वपि कृपालो! हा मत्प्रियतम! केनासि मयि निष्करुणीकृतः? एकाकी च कथं पद्भ्याम् अटवीषु विचरिष्यसि? कस्ते श्रमापनयनाय सलिलादिदानेन सेवां करिष्यति? यौ च ते चरणाम्बुजौ अहोभुजां मौलिमालापरागेण सततं

रञ्जितौ कथं तौ धूलिः कलुषयिष्यति ? यच्च तेऽङ्गं हरिचन्दनचूर्णेनालिप्तं, तत् कथं मध्याह्नार्कातपं सहिष्यते ? किं मे शिशुना पुत्रेण दुहित्रा वा आत्मना, तवैकस्यैव शिवं देवाः कुर्वन्तु यदि अहं सती।' इत्येवमनुशोचती एकाकिनी दमयन्ती तत्पूर्वदर्शितेन पथा शनैः प्रतस्थे। कथञ्चित् सा नदीशैलवनानि अतिचक्राम, नातिचक्राम तु भर्त्तरि ऐकान्तिकीं भक्तिम्। सतीतेजश्च मार्गे तामरक्षत्, येन भुजङ्गं ग्रसन्तं निघ्नन् कश्चित् लुब्धकः तां दमयन्तीं कामयमानः क्षणादेव भस्मसादभूत्। ततो दैवात् वणिकसार्थेन अन्तरामिलितेन सह गत्वा सुबाहुनाम्नः नरपतेः पुरं प्राप। स च राजा दूरात् तां राजपुत्रीमिव सौन्दर्य्यसमुज्ज्वलां दृष्ट्वा स्वात् हर्म्यतः अवतीर्य्य दासीभिः ससत्कारमानाय्य मात्रे प्राभृतीचकार। सा तु तस्या महादेव्याः सकाशे सततं भर्तृत्यक्तेति विमनाः समतिष्ठत। तावच्च तस्याः पिता भीमनरपतिः तं नलोदन्तमवगत्य तयोर्दम्पत्योरन्वेषणाय आप्तान् द्विजान् व्यसर्जयत्। तेषाञ्च सुषेणो नाम एकः सचिवो ब्राह्मणरूपेण भ्रमन् तां सुबाहुराजधानीं प्राप। स तु तत्र तां दमयन्तीं सुदुःखितामागन्तुं समुदैक्षत, सा तं तथैव पितृमन्त्रिणमद्राक्षीत्।

अथान्योन्यं प्रत्यभिज्ञाय समेत्य तौ तथा रुदतः स्म यथा अस्य सुबाहो राज्ञी नाबुध्यत। यावच्च सा देवी तौ यथावत् वस्तु पृच्छति, तावत् तां दमयन्ती स्वं भगिनीसुतं बुबुधे। ततः सा तद्वृत्तान्तं भर्त्तुरावेद्य तां यथोचितं सम्मान्य रथारूढां कृत्वा सुषेणसैनिकसहितां पितृ-

गृहं प्रैषयत्। तत्र सा दमयन्ती प्राप्तापत्यद्वया पित्रा प्रबोध्यमानापि सततं पत्युर्वार्त्तां विचिन्वती व्यतिष्ठत। ततश्च तत्पिता समन्ततः तं नलं सूदस्यन्दनविद्याभ्यां दिव्याभ्यामुपेतं समन्वेष्टुं चारान् व्यसर्जयत्, आदिशच्च भवद्भिर्यत्र स स्थितः सम्भाव्यते तत्र एवं वक्तव्यं यथा हे नृशंस! चन्द्र! त्वाम् वने प्रसुप्तां कान्तां कुमुदिनीं सन्त्यज्य अम्बरखण्डं प्राप्य च अदृश्यः क्व यातोऽसि?

अत्रान्तरे स राजा नलश्च तस्मिन् वने निशि प्राप्त-ताडिगर्टा दूरं गत्वा दावाग्निमैक्षत, अपश्यच्च तत्र भो महासत्त्व! यावदहं न दह्ये अनेन दावाग्निना तावन्माम् अस्य समीपादपसारय इति वदन्तम् आबद्धमण्डलं फल-रत्नप्रभाजालजटिलं वनवह्निना उग्रहेतिहस्तेन शिरसि गृहीतमिव कञ्चन नागम्। यावच्च स उपेत्य कृपया तं दूरतो नीत्वा त्यजति तावत् स नागस्तमब्रवीत् भद्र! इतः पदानि दश गणयित्वा मां नय। ततः स नलः पदानि गणयन्नेव दश प्रययौ। एकं द्वौ त्रीणि चत्वारि पञ्च षट् सप्त अष्टौ नव दश इति उक्तवन्तं तं नलं स्कन्धस्थितो नागो ललाटान्ते अदशत्। तेन चासौ नृपः ह्रस्वभुजः कृष्णः विरूपश्चाभवत्। ततः स राजा स्कन्धादवहिमव-तार्थ्य पृष्टवान् को भवान्? त्वया च केयं मे प्रत्युपक्रिया कृता? एतत्तस्य वचः श्रुत्वा स नागस्तमब्रवीत् राजन्! कर्कोटनामानं नागराजं मामवगच्छ, दंशोऽयञ्च मया कृतस्ते गुणायैव, पश्चात् वेत्स्यसि। गूढ़ावासे च वैरूप्यं महतां कार्य्यसिद्धये, गृहाण च अग्निशौचाख्यमिदं महत्तं

वसनद्वयम्, अनेन प्रावृतेन च सुरूपं पुनः प्रतिपत्स्यसे। इत्युक्त्वा दत्ताग्निग्रीचवसनयुगे कर्कोटके गते नलस्तस्मात् प्रदेशात् गत्वा कोसलान् प्रत्यपद्यत। तत्र स कोसलाधिपस्य ऋतुपर्णस्य ह्रस्वबाहुनामा सन् सूदत्वमकरोत्। तस्य च दिव्यरसानि भोजनानि यच्चकार तेन रथचर्य्याविज्ञानतश्च स परां प्रसिद्धिमगमत्।

एवं गच्छत्सु कालेषु एकदा विदर्भराजचाराणां कश्चित् तत्र समाययौ। स तु चारः अत्र सूदरथविद्ययोर्नलतुल्यः कश्चित् ह्रस्वबाहुरिति सूदः अस्तीति वचः शुश्राव। ततश्च स तं नृपतेरास्थाने स्थितं दृष्ट्वा नलं सम्भाव्य युक्त्या तत्र एतां प्रभुणा उपदिष्टां

आलां वने प्रसुप्तां नृशंस! सन्त्यज्य कुमुदिनीं कान्ताम्।
प्राप्यैवाम्बरखण्डं चन्द्रादृश्यः क्व यातोऽसि॥

इति आर्य्यां पपाठ। तत्रस्थाश्च जनास्तदाकर्ण्य उन्मत्तवाक्यमिव मेनिरे। छद्मस्थितस्तु सूदः तं प्रत्युवाच अस्वैकदेशवर्त्ती क्षीणश्चन्द्रः अन्यमण्डलं प्राप्य प्रविशन् कुमुदिन्या यददृश्यः तत्तस्य का नृशंसता? एतत्तदुत्तरं श्रुत्वा सत्यमेव तं नलं विपदुद्भूतवैरूप्यं सम्भाव्य स चारस्ततः प्रययौ। आगत्य च विदर्भेषु भीमाय राज्ञे दमयन्त्यै च तत् सर्वं दृष्टं श्रुतञ्च समवर्णयत्। ततः सा दमयन्ती स्वैरं पितरमब्रवीत् तात! सत्यमेवासौ आर्य्यपुत्रः सूदव्याजमुपाश्रितः, तस्मात्तदानयने मम्मतानुसारिणी युक्तिर्विधीयताम्। तस्य ऋतुपर्णस्य राज्ञः समीपे दूतो विसृज्यताम्। गतेन च तेन दूतेन स राजा तत्र

भैष्मीं यथा नलः क्वापि गतः, नाद्यापि तद्वार्त्ता श्रूयते, तत् प्रातरेव दमयन्ती भूयः स्वयंवरं कुरुते, अतोऽद्यैव त्वया विदर्भेषु शीघ्रमागम्यतामिति। ततः श्रुत्वैतां वार्त्तां रथचर्य्यानिपुणेन ऋतुपर्णेन स राजा एकाहेनैव ध्रुवमिह आनेतव्यः इति। एवमभिहितो दमयन्त्या स राजा भीमः दूतमेवं सन्दिश्य कोसलेषु व्यसृजत्। तेन च तूर्णं गत्वा तथैवोक्तः स ऋतुपर्णः समुत्सुकः सूदरूपं तं पार्श्वगं नलं समानयन् जगाद ह्रस्वबाहो! रथज्ञानं ममास्तीति अवदद् भवान् तद् यदि शक्नोषि तत् शीघ्रमद्यैव मां विदर्भान् प्रापय। तदाकर्ण्य नलः वाढ़ं प्रापयामि इत्युदीर्य्य गत्वा वराश्वान् संयोज्य रथोत्तमं सज्जीचकार। स्वयंवर-प्रवादोऽयं केवलं मत्प्राप्तये नूनं तया कल्पितः, न तु मा स्वप्नेऽपि ईदृशो सम्भवति। तद् यावदहं तत्र गच्छामि, पश्यामि च तामिति विचिन्त्य तस्य ऋतुपर्णस्य राज्ञः रथमुपानयत्। ततश्च तस्मिन् रथमारूढ़े नृपे नलः तार्क्ष्यजवजेत्रेण रंहसा रथं वाहयितुं प्रववृते। पथि रथवेगच्युतं वस्त्रं ग्रहीतुं रथविधारणं कर्त्तुकाममृतुपर्णं नलः प्रोवाच राजन्! क्व तव वस्त्रम्? अनेन क्षणेनायं ते रथः बहूनि योजनानि व्यतिक्रान्तः। श्रुत्वैतदृतुपर्णस्तम-वादीत् ह्रस्वबाहो! देहि मे इदं रथज्ञानम्, अहं ते अक्ष-ज्ञानं ददामि, येन अक्षा वश्या भवन्ति संख्याज्ञानञ्च जायते। साम्प्रतमत्र पश्य, ते विश्वासं जनयामि, यः पुरतो-ऽयं तरुर्विद्यते, अस्य फलपत्राणां संख्यां वच्मि, गणयित्वा एतं पश्य। इत्युक्त्वा स ऋतुपर्णः यावन्त्येव फलपर्णानि

जगाद, तावन्त्येव नलेन अस्य तरोः गणितानि। ततो नलोऽपि ऋतुपर्णाय रथज्ञानं पाददात्। ऋतुपर्णोऽपि तस्मै अक्षज्ञानं तत् प्रददौ। अथ नलः अपरं तरौ तज्ज्ञानं परीक्षितं स्म, सम्यग् बुबुधे च। ततो यावत् स नलः हृष्यति तावत् तस्य शरीरतः कृष्णकायः कश्चित् पुरुषः निरगात्। कोऽसीति पृष्टवन्तं तं स पुरुषः प्राब्रवीत् अहं कलिः, दमयन्तीवृतस्य ते शरीरमीर्ष्यया प्राविशम्, तेन ते श्रियः तादृशीं दशामवाप्ताः, वने च कर्कोटकेन त्वं दष्टोऽपि न दग्धः, अहन्तु त्वयि स्थितः दग्ध एव, पश्य, मिथ्या परापकारः न हि कस्यापि शर्म्मणि भवति, तदिदानीं गच्छाम्येषः, शुभन्ते भूयादिति अभिधाय तिरोऽभूत्। नलश्च तत्क्षणात् प्राग्धर्म्मस्मतिः प्राग्वदभवत्। अथ रथमारुह्य तस्मिन्नेवाह्नि तेनैव जवेन तम् ऋतुपर्णं विदर्भाननयत्। आगत्य च पृष्टागमनकारणैस्तत्रत्यैर्जनैरुपहस्यमानो राजा ऋतुपर्णः राजगृहासन्नभूमौ समुपाविशत्। दमयन्ती तु आश्चर्य्यरथशब्दमाकर्ण्य सम्भावितनलागमना तं नलं प्राप्तं बुद्ध्वा जहर्ष विससर्ज च तत्त्वमन्वेष्टुं स्वां चेटिकाम्। सा च चेटी अन्विष्यागता तां प्रियोत्सुकामुवाच देवि! मया गत्वा अन्विष्टं य एषः कोसलेश्वर ऋतुपर्णस्ते स्वयंवरप्रवादं श्रुत्वा आगतः स एकेन ह्रस्वबाहुना रथवाहेन सूदेन रथविज्ञानशालिना एकेनाह्ना आनीतः। स च सूदः सूदशालायां गत्वा मया निरीक्षितः कृष्णवर्णः विरूपश्च, परं तस्य कोऽपि प्रभावः, यद् अक्षिप्तमपि पानीयं तस्य चरुषु उत्थितं काष्ठान्यपि अनर्पितानि स्वयं प्रज्वलितानि।

चणेन च तत्तत् भोजनीयं दिव्यं निष्पन्नम्। एतत् महाश्चर्य्यं दृष्ट्वा अहमिहागता।

एतदाकर्ण्य चेटीमुखात् दमयन्ती व्यचिन्तयत् यदयं वश्याग्निवरुणः रथविद्यारहस्यवित्, तदयमेवार्य्यपुत्रः, मन्ये मद्विप्रयोगेण वैरूप्यं गतः, तदहममुं पृच्छामि इति सङ्कल्प्य युक्त्या तया चेटिकया सह द्वौ दारकौ दर्शयितुं तदन्तिकं प्रैषयत्। स च नलः तौ निजौ सुतौ दृष्ट्वा अङ्के कृत्वा चिरं बद्धाश्रुधारः समरोदीत्, अवादीच्च तां चेटीं वार्त्तां पृच्छन्तीं ईदृशावेव मे बालौ मातामहगृहे स्थितौ, तत्स्मरणान्मे दुःखं जातमिति। सा तु चेटी शिशुभ्यां सहागत्य दमयन्त्यै तत् सर्वं यथावत् शशंस। सापि तेन सम्यक् विश्वस्ताभवत्। अपरेद्युश्च प्रातः सा स्वां चेटीं समादिशत् सखि! गत्वा त्वं मद्वचनात् तं सूदं वद, श्रुतं मया, यत् भवता तुल्यो नान्योऽस्ति कश्चित् सूपकृत्, तदद्य त्वयागत्य मम व्यञ्जनं निष्पाद्यतामिति। तथेति स तया चेट्या समर्थितः ऋतुपर्णमनुज्ञाप्य दमयन्तीमुपाययौ। अथ तं दृष्ट्वा सा दमयन्ती प्राब्रवीत् सत्यं ब्रूहि, यदि त्वं नलो राजा सूदरूपधारी, चिन्ताब्धिमग्नं मां समुत्तारय इति। स तु श्रुत्वा नलः स्नेहहर्षदुःखलज्जाजड़ः अवाङ्मुखः अश्रुगद्गदं तामवादीत् देवि! स एवास्मि नलः पापः कुलिशकर्कशः, येन त्वां सन्तापयता व्यामोहात् अनलायितं, ततः साब्रवीत् कथं त्वयेदृशं वैरूप्यमासादितम्? ततः स नलः तस्यै सर्वं स्वोदन्तम् आकार्कोटसख्यात् कलिनिर्गमनान्तमवर्णयत्। तत्क्षणाच्च सः कार्कोटदत्तमनि-

शौचं तद् वस्त्रयुग्मं प्रावृत्य स्वं रूपं प्रत्यपद्यत। ततस्तं प्राणाभिरामरूपं नलं दृष्ट्वा सा दमयन्ती विकसद्वदनारविन्दा नेत्राम्बुभिः शमितदुःखाग्नि कमपि, अनुपमं हर्षमवाप। अथ एतद्वृत्तान्तं परिजनमुखादाकर्ण्य विदर्भनाथः नलं समभिनन्द्य प्रपूज्य च पुरं महोत्सवपूर्णमकार्षीत्, व्यसर्जयच्च कृतयथोचितसत्क्रियः सत्वरम् ऋतपर्णं कोसलान् प्रति। ततश्च नलः निषधान् गत्वा तं पुष्कराक्षम् अक्षज्ञानेन पुनर्विजित्य धर्माचाररतः देहाद् गतद्वापरमनुजं तं कृतसंविभागं कृत्वा दमयन्त्या सह राज्यं सुखेनाशासत्। इत्येवं स सुमतो नाम द्विजः तारापुरे नगरे राजसुतां बन्धुमतीमिति कथां व्याख्याय पुनरब्रवीत् देवि! एवं महान्तो विपदमतीत्य पुनः कल्याणं भजन्ते, अस्तगमनदुःखमनुभूय दिनकृत् पुनरुदयं लभते हि। तस्मात्त्वमपि अनतिचिरं तं पतिमवाप्स्यसि, धृतिमवलम्बस्व। इत्येवमुक्तवन्तं द्विजं बहुना धनेन अभ्यर्च्य धृतिमवलम्ब्य च दयितप्रतीक्षा बन्धुमती समाश्वस्ता व्यतिष्ठत। अथ अल्पीयसैव कालेन स महीपालः देशान्तरागतां तां जननीमादाय पितृसहितः समाययौ। आगत्य च अमृतांशुरिव पार्वणः लक्ष्मीं जनयन् तां बन्धुमतीमभ्यनन्दयत्, अभुनक् च तत्र श्वशुरदत्तराज्यधुरः राजा सन् अभीप्सितान् भोगान्।

इत्यात्ममन्त्रिमरुभूतिमुखात् अपूर्वामाख्यायिकां निशम्य प्रियासखः स नरवाहनदत्तः सुभृशमभ्यनन्दत्।

——

## सप्तपञ्चाशस्तरङ्गः ।

अथ रत्नदत्तनामा वणिक् वत्सेश्वराय विज्ञापयितुं प्रतीहारनिवेदितः तत्सकाशमाययौ । स तु प्रविश्य राजानम् उदयनं नत्वा व्यजिज्ञपत् देव ! अस्तीह वसुधरो नाम कश्चिद् दरिद्रो भारिकः । साम्प्रतन्तु स यथेच्छं ददत् खादन् पिबंश्च दृश्यते । मया पुनः कैतवेन स गृहं नीत्वा यथेष्टं पानभोजनादिना परितोष्य वृत्तान्तं परिपृष्टोऽब्रवीत् मया राजकुलात् सत् रत्नकटकं लब्धं, ततश्चैकं रत्नमुत्सार्य्य अहं विक्रीतवान् । तेन च दीनारलक्षाणि मयाप्तानि हिरण्यगुप्ताख्यवणिजः । तेनाहमिदानीं सुखेन तिष्ठामीति उक्त्वा तेन देवनामाङ्कितं तत् कटकं मे दर्शितं, तदिदानीं देवो मया विज्ञप्त इति । तदाकर्ण्य स वत्सेश्वरः तत्र तं भारिकं तञ्च सन्तं रत्नवणिजं हिरण्यगुप्तं सविनयमानाययामास । ततः स राजा तत् कटकं दृष्ट्वा प्राब्रवीत् हन्त स्मृतं कटकमिदं मत्प्रकोष्ठादत्र पुरे भ्रष्टमिति । तदेतत् कटकं किं त्वया लब्धमिति सभ्यैः पृष्टः स भारिकः प्रत्यवादीत् भारजीवी कुतो राजनामाक्षराणि वेद्मि, दारिद्र्यदुःखदग्धेन मया एतत् लब्ध्वा स्वीकृतम् । इत्येवमुक्तवति तस्मिन् रत्नार्थमाक्षिप्तः स वणिगब्रवीत् मया मूल्येन आपणे गृहीतमिदं, न चात्र रत्ने राजनाम अङ्कितमस्ति, कटकान्निष्कासितत्वादस्य इति हिरण्यगुप्तस्य वचो

निशम्य यौगन्धरायणः प्रावोचत् नात्र कस्यापि दोषः, दरिद्रस्य अलिपिज्ञस्य भारिकस्य किमनेन। दारिद्र्यात् चौर्य्यमपि क्रियते, अनेन तु पथि च्युतं लब्धं, वणिक् चायं मूल्येन गृहीतवान् नैव वाच्यः। इत्येवं महामन्त्रिणो वचनमाकर्ण्य वत्सेशः अङ्गदं आददे च भारिकेण व्ययीकृतां पञ्चसहस्रीं दत्त्वा हिरण्यगुप्तात्तस्मात् स्वं रत्नम्। अकरोच्च तं भारिकं मुक्तं स्वं कटकं गृहीत्वा। स च भुक्तपञ्चसहस्रीकोऽपि गतभीर्गृहं प्रायात्। विश्वासघाती पापोऽयमिति अन्तर्द्विषन् नृपतिस्तं रत्नदत्तं वणिजं कार्य्यार्थमानयत्।

अथ गतेषु तेषु राजाग्रगः वसन्तकः प्राब्रवीत् अहो दैवाभिशप्तानां प्राप्तोऽपि अर्थः प्रणश्यति? यदस्य भारिकस्य भद्रघटवद् वृत्तान्तः संवृत्तः। तथाहि आसीत् कश्चित् पाटलिपुत्रे नगरे शुभदत्तो नाम। स प्रत्यहं वनात् काष्ठभारम् आनीय विक्रीय स्वं कुटुम्बकम् अपुषत्। एकदा सः दूरं वनं यातो ददर्श चतुरो दिव्याभरणभूषितान् यक्षान्। ते सर्वे तमागतं भीतं वीक्ष्य यथायथं पृष्ट्वा दरिद्रं बुद्ध्वा सञ्जातकृपा बभाषिरे भद्र! इहास्मदन्तिके एकं कर्म्म कुरु, वयं तव अक्लेशेन गृहनिर्वाहं करिष्यामः। इत्युक्तस्तैः शुभदत्तस्तदन्तिके आसीत् अकरोच्च तेषां स्नानादिपरिचर्य्यां कृतस्नाम्। अथ भोजनस्थाने सञ्जाते ते यक्षास्तमब्रुवन् भद्र! अमुतो घटात् अस्मासु आहारं देहि। ततः स यावत् तं शून्यं घटं दृष्ट्वा विलम्बते, तावत् ते गुह्यकाः सस्मिताननास्तमवोचन् शुभदत्त! न वेत्सि त्वम्,

अस्मिन् घटान्तरे हस्तं क्षिप, यथेष्टं लप्स्यसे, घटोऽयं कामप्रदो हि। तदाकर्ण्य यावत् पाणिं घटान्तरे क्षिपति, तावत् यथाकाममाहारस्नानादिकं तत्रापश्यत्। ततः शुभदत्तस्तेभ्यस्तद् यथाकाममददात् स्वयञ्च बुभुजे। एवं भक्त्या भीत्या च तान् परिचरन् प्रतिदिनं कुटुम्बचिन्तार्त्तस्तदन्तिके अस्थात्। तत्कुटुम्बकञ्च तैर्गुह्यकैः स्वप्नादेशेन आश्वासितं, तेषां प्रत्ययात् कथमपि आसाञ्चक्रे। एवं मासं परिचरन्तं तं शुभदत्तं यक्षाः समभ्यधुः भद्र! तुष्टाः स्मः तव अनया भक्त्या, ब्रूहि किं ते प्रियमुपकुर्म्मः? सोऽब्रवीत् यदि भवन्तः तुष्टाः सत्यतः, तन्मे एष भद्रघटः प्रदीयताम्। तमूचुस्ते यक्षाः भद्र! नैष शक्यः त्वया रक्षितुं भङ्क्त्वा पलायत एवैषः, तदपरं वरं वृणुष्व। इत्युक्तोऽपि स यक्षैः शुभदत्तः यदा अपरं वरं नैच्छत् तदा ते तस्मै तमेव भद्रघटं ददुः। ततः स तान् प्रणम्य हृष्टः तं घटमादाय जवात् गृहमागतः बान्धवाननन्दयत्। तत्र तस्मात् घटात् यद् यद् भोजनादि आवश्यकं तत्तद् वहिष्कृत्य कुटुम्बं परिपोष्य स्वयमपि अभुङ्क्त। एवं क्रमेण स भारमुक्तः सर्वान् कामानवाप्य पानमत्तो बभूव। एकदा बन्धुभिः कुतस्तवेदृशी श्रीरिति परिपृष्टः स मूढ़ः देवदत्तं न व्यक्तमवदत्। तञ्च घटं गृहीत्वा स्कन्धमारोप्य तथा नर्त्तितुं प्रारेभे यथा स मदोद्रेकस्खलद्गतेस्तस्य स्कन्धात् विच्युतः भुवि पतित्वा खण्डशः समभवत्, तिरोदधे च तदैवाक्षतीभूय निजस्थानाय। स च शुभदत्तः सविषादं पूर्वामवस्थामवाप। तदेवं पानदोषादिप्रमादविहतधियः अभव्याः प्राप्तमप्यर्थं

परिरचितुं नैव शक्नुवन्ति। इत्येवं भद्रघटाख्यानं वसन्त-कात् निशम्य वत्सपतिरास्थानमण्डपादुत्थाय स्नानाहारा-दिकाः क्रियाश्चकार। नरवाहनदत्तोऽपि स्नात्वा पितु-रन्तिके भुक्ता दिनान्ते सखिभिः सार्द्धं स्वं भवनमगात्। तत्र रात्रौ अनिद्रं शयनतलगतं तं सुहृत् मरुभूतिः शृण्वत्सु सर्वेषु दिव्यां कथामाचचक्षे देव! जानेऽहं दासीसङ्गे-च्छया त्वया अन्तःपुरं नाहृतं, सापि दासी नाहृता, तेन तेऽद्य निद्रा नास्ति, तत् किमद्यापि जानन्नपि वेश्यासु अनुरज्यसे? न हि आसां सद्भावः कदापि भवेत्, तदत्र कथामेतां शृणु।

अस्तीह चित्रकूटाख्यं प्रधानं महासमृद्धं नगरम्। तत्रासीत् रत्नवर्म्मा नाम महाधनपतिर्वणिक्। ईश्वरानु-ग्रहेण तस्य कश्चित् सूनुरजायत। तञ्च नाम्ना ईश्वरवर्म्मा-णमकरोत् पिता। क्रमेणाधीतविद्यम् अतिक्रान्तशैशवं तं पुत्रं वीक्ष्य स एकपुत्रो रत्नवर्म्मा व्यचिन्तयत् वेश्या नाम आढ्यानां यौवनान्धानां धनप्राणापहारिणी रूपिणी कुसृतिर्धात्रा सृष्टा, तदिममात्मजं कस्याश्चित् कुट्टन्याः समर्पयामि वेश्यानां कापट्यशिक्षार्थं, येन ताभिर्नासौ वञ्च्यते। इत्यालोच्य सपुत्रेण तेन यमजिह्वाख्यायाः कस्या-श्चित् कुट्टन्याः सदनमासादितम्। तत्र स स्थूलहनुं दीर्घ-दशनां वक्रनासां सुदुहितरं शिक्षयन्तीं तां कुट्टनीं ददर्श हे पुत्रि! धनेन सर्वः पूज्यते, विशेषतः वेश्या, अनुरागि-णस्तु तत् धनं नास्ति, तस्मात् वेश्या रागं त्यजेत्, रागो हि वेश्यासायंसन्ध्ययोः दोषाग्रदूतः, तस्माद् वेश्या मिथ्यैव

रागं दर्शयेत्, नटीव सुरक्षिता रम्यं रञ्जयेत्, रक्ताच्च धनं दुह्यात्। लुब्धार्थञ्च तं त्यजेत्, पुनश्च प्राप्तार्थं गृह्णीयात्। तथा वेश्याजनः मुनिवत् सर्वत्र यूनि शिशौ वृद्धे विरूपे तथा रूपवति समः स्यात्, एवं सति सर्वदा सुखमश्नुते। इत्येवमुपदिशन्तीं दुहितरं तां कुट्टनीं समाससाद। रत्नवर्म्मा तया कृतातिथ्यस्ते सहस्रं निष्क्रयं ददामि त्वं मे पुत्रं विविधाः कलाः शिक्षय इति ताम् अभ्यर्थयत्। सा च यमजिह्वा तदाकर्ण्य तं तस्य पुत्रं तास्ताः कलाः शिक्षयामास। स तु पुत्रः वर्षेणैकेन सर्वाः शिक्षित्वा पितुरन्तिकमाजगाम। प्राप्तषोड़शवर्षश्च तं पितरमुवाच तात! अर्थादेव धर्म्मकामौ स्तः, तत् किञ्चिन्मे अर्थजातं देहि। एवमुक्तः पिता तद्वचसि श्रद्धाय प्रीतः सन् पञ्चानां द्रव्यकोटीनां भाण्डं तस्मै ददौ। तदादाय स वणिक्पुत्रः ईश्वरवर्म्मा ससार्थः शुभे अहनि स्वर्णद्वीपाभिगमेच्छया प्रायात्। अथ क्रमेण पथि गच्छन् काञ्चनपुरं नाम नगरं प्राप्य तत्रासन्नवाह्योद्याने समावसत्। ततस्तत्र स्नातानुलिप्तश्च प्रविश्य नगरं प्रेक्षणकं द्रष्टुमेकं देवालयं जगाम। ददर्श च तत्र नृत्यन्तीं सुन्दरीं नाम तारुण्यवातोच्छलितां लहरीमिव रूपाब्धेः कामपि कामिनीम्। स तु युवा दृष्ट्वैव तां तदायत्तमनाः तथा समभवत्, यथा सा कुट्टनीशिक्षा क्वेव तस्य दूरे अभवत्। ततश्च स वयस्यं प्रेष्य नृत्यान्ते तां प्रार्थयामास। सा च विनीता धन्यास्मीति वदन्ती तदन्वमन्यत। अथेश्वरवर्म्मा स्वे निवासे निपुणान् भाण्डरक्षिणः स्थापयित्वा तस्याः सुन्दर्य्या मन्दिरमगात्।

तच्च गृहमायातं तस्याः वेश्याया माता तत्कालोचितै-स्तैस्तैरुपचारैर्बहुसमादरमुपाचरत्। अथ निशागमे तया स्फुरद्रत्नवितानं विन्यस्तपर्य्यङ्कं शयनगृहं स प्रावेश्यत। तत्र च तया विचित्रकरणे नृत्ये सुरते च विदग्धया तया सुन्दर्य्या सममरमत। गाढ़दर्शितानुरागां सततपार्श्व-चरीं तां दृष्ट्वा स द्वितीयेऽह्नि निर्गन्तुं नैव शशाक? ददौ च तस्यै पञ्चविंशं हेम लक्षाणाम्। सा तु सुन्दरी प्राप्तं मया भूरि धनं परं भवादृशं पुरुषरत्नं नाहं प्राप्ता, स चेत् भवान् मया प्राप्तः, किं मे धनेन, इत्येवमसत्याभिसन्धानेन तद्रत्नजातमगृह्णतीं सुन्दरीं माता एकापत्या मकरकटी नाम तामवादीत् पुत्रि! इदानीम् अस्मदीयं यत् तदस्यैव स्वकं धनं, तदेतत् अनेन दत्तम् अर्थजातं तस्मिन्नेव स्थापय, कात्र क्षतिः? एवमुक्ता सा सुन्दरी लज्जादिव तत् सर्व-मग्रहीत्। ईश्वरवर्म्मा च मूढ़स्तां सत्यानुरागिणीमम-न्यत। इत्थं तस्या रूपेण नृत्येन गीतेन च हृतात्मनस्तत्रैव स्थितस्य तस्य मासद्वयमतिचक्राम। तावच्च स तस्यै सुन्दर्य्यै द्वे कोटी क्रमेण ददौ। अथ अर्थदत्तो नाम सखा उपेत्य तं स्वैरमुवाच सखे! सा यत्नोपार्ज्जितापि कुट्टनीशिक्षा कातरस्य अस्त्रविद्येव किं निष्फला समवर्त्तत। यदस्मिन् वेश्याप्रेमणि सद्भावस्त्वया बुध्यते? मरुमरीचिकासु किं जलं सत्यं स्यात्? तद् यावदिह ते समग्रं धनं न क्षीयते तावद् व्रजामः। ते पिता एतत् नैव जातु क्षमेत।

इत्येवमुक्तस्तेन मित्रेण स वणिग्युवा प्रत्यवादीत् सखे! सत्यं वदति विश्वासः, सुन्दरी तु न हि तादृशी, असौ

क्षणमपि मामपश्यन्ती प्राणान् मुञ्चेत्, तद्भवान् एतां बोधयतु यदि सर्व्वथा गन्तव्यम् । एवमुक्तस्तेनार्थदत्तः तस्य मकरकव्याश्च सन्निधौ तां सुन्दरीमवदत् सखि ! तव तावत् ईश्वरवर्म्मणि असामान्या प्रीतिः, अनेन च अधुना वणिज्यया स्वर्णद्वीपमवश्यं गन्तव्यं ततश्चायं तथा महतीं समृद्धिं प्राप्स्यति यथागत्य पुनस्त्वदन्तिके यावत्कालं सुखं स्थास्यति, तस्मादनुमन्यस्व तव प्रियतममीश्वरवर्म्मागमम् । तदाकर्ण्य साश्रुमुखी ईश्वरवर्म्मणो मुखमवलोकयन्ती सविषादा प्राब्रवीत् यूयं जानीत, किमहं वच्मि, अन्तमनवेक्ष्य का कस्य प्रत्येति, तदलं यद्विधत्तां विधिर्मम । तदाकर्ण्य माता तामवादीत् पुत्रि ! मा दुःखं कुरुष्व, ते धृतिरस्तु, सिद्धार्थश्च ते प्रियोऽयम् इह एष्यत्येव इत्येवमाश्वास्य माता स्थितसंवित् तया सह एकस्मिन् कूपे मार्गाग्रगुप्तं जालमकारयत् । तदा चेश्वरवर्म्मा दोलारूढ़मानसः समभवत्, सुन्दरी च शुचेव अल्पाल्पमाहारं पानञ्च अकार्षीत्, न बबन्ध च गीतवादित्रनृत्येषु रतिम् । ईश्वरवर्म्मणा च तैस्तैः प्रणयवचनैः सा समाश्वास्यते स्म ।

ततो वयस्येन उक्ते दिवसे स ईश्वरवर्म्मा कुट्टनीकृतमङ्गलस्तस्मात् सुन्दरीभवनात् निर्जगाम, सुन्दरी च सा उदश्रुः समातृका नगराद्बहिराकूपात् बद्धान्तर्जालकात् तमनुवव्राज । ततश्च यावत् स सुन्दरीं निवर्त्त्य प्रयाति तावत् तया सुन्दर्य्या तस्मिन् जालपृष्ठे कूपे आत्मा निचिक्षिपे । हा हा पुत्रि ! क्व गतासीति महानाक्रन्दः सहसा तस्या दासीनां भृत्यानां मातुश्च संजज्ञे । तेन च प्रतिनि-

दत्त: समित्र: स ईश्वरवर्म्मा कूपे चिप्ततनुं तां कान्तां दृष्ट्वा मोहमुपागमत्। सा च मकरकटी बहु विलपन्ती तस्मिन् कूपे स्निग्धान् स्वान् ससंविद: भृत्यानवातारयत्। ते च रज्जुभिरवतीर्य्यैव दिष्ट्या जीवति जीवतीति उक्ता तां सुन्दरीं तत: कूपादुदचिपन्। अथोत्चिप्ता मृतकल्पा सा आत्मानं विनिवेद्य प्रत्यागतं वणिक्पुत्रं दृष्ट्वा शनकै-रालापमकरोत्। ततश्चेश्वरवर्म्मा सवयस्य: सुप्रहृष्ट: तां समाश्वस्तां प्रियामादाय प्रत्याहृत्य तद्गृहमेव प्रायात्, अजहाच्च सुन्दरीप्रेमप्रत्ययं निश्चित्य तत्प्राप्तिञ्च जन्मन: फलं मत्वा पुनर्यात्राबुद्धिम्।

अथैकदा सोऽर्थदत्त: सखा पुन: तमभ्यधात् सखे! मोहात् त्वया किमात्मा नाश्यते? कूपपातत: सुन्दरी-स्नेहप्रत्ययस्ते मा भूत्, अतर्क्या हि कुट्टनीकूटरचना विधेरपि। चयितार्थश्च पितुरन्तिके किं वक्ष्यसि, क्व वा यास्यसि? तदधुनापि यदि ते कल्याणी मति: तन्निर्याहि। एवं तस्य वच: अवधीर्य्य असौ वणिग्युवा मासेन अन्यत् कोटित्रयं व्ययीचकार। ततो हृतसर्वस्व स: अर्द्धचन्द्रं दत्त्वा तस्मात् सुन्दरीगृहात् तया कुट्टन्या निरवास्यत। ते च अर्थदत्तादय: त्वरितं स्वनगरं गत्वा तत्पित्रे तत् सर्वमशे-षत: समाचख्यु:। स च तत्पिता रत्नवर्म्मा तद्विदित्वा सुदु:खित: तां कुट्टनीं यमजिह्वामभ्येत्य समभाषत एतावत् मूल्यं गृहीत्वा त्वया मे सुतस्तथा शिचित: यथा मकर-कट्या तत्सर्वस्वं हेलया हृतम्। इत्युक्त्वा तस्यै तत् सर्वं वृत्तान्तमवर्णयत्। ततस्तं यमजिह्वा वृद्धकुट्टनी प्रत्यवादीत्

भद्रे ! आनायय ते पुत्रमिह, अहं तथा तं करिष्ये यथा स मकरकट्यास्तत् सर्वं धनं हरिष्यति । एवं तया प्रतिज्ञाते स वणिक्पतिस्तदैव शीघ्रं दानपुरःसरया हृत्त्या तां परितोष्य तस्य पुत्रस्यानयनाय हितैषिणं मित्रमर्थदत्तं प्राहिणोत् । अर्थदत्तश्च पुनस्तत् काञ्चनपुरं गत्वा तस्मै ईश्वरवर्म्मणे तत् सर्वमुदन्तजातमशंसत्, पुनश्चाब्रवीत् मित्र ! त्वं मे वचः नाकार्षीः, अद्य च वेश्यानुरागस्त्वया प्रत्यक्षं कृतः, कोटिं एकं दत्त्वापि अर्द्धचन्द्रः प्राप्तश्च, कः प्राज्ञो वेश्यासु स्नेहमभिलषेत् । किमिह भवता वक्तव्यम्, ईदृशी वस्तुवृत्तिर्हि । तावत् नरो विदग्धः धीरः शुभभागी च यावत् रामाविभ्रमभूमिषु न पतेत् । तदागच्छ पितुरन्तिकं, मन्युप्रतिकृतिं कुरुष्व, इत्युक्त्वा तेनार्थदत्तेन सः सत्वरं स्वं पुरमनीयत । स चेश्वरवर्म्मा आश्वास्य पितुः पार्श्वमुपागतः । पित्रा च एकापत्यस्नेहात् सान्त्वयित्वा पुनर्यमजिह्वायाः सकाशं नीतः । तत्र च तया पृष्टः सर्वम् अर्थदत्तमुखेन सुन्दरीकूपनिपातान्तं धनक्षयवृत्तान्तमाचख्यौ । यमजिह्वावादीत् अहमेवात्रापराधिनी, यन्मया विस्मृत्य एतामेष विद्यां न शिक्षितः, यया हि विद्यया मकरकट्या अन्तर्निबद्धजाले कूपपृष्ठे सुन्दरी देहमक्षिपत् न तु ममार । तदत्रास्ति प्रतीकार इत्युक्त्वा सा कुट्टनी स्वदासीभिः आलं नाम स्वं मर्कटमानाययत् । दत्त्वा च तदग्रतः स्वं दीनारसहस्रं सा तमुवाच निगिलेति । सोऽपि शिक्षितस्तत् सर्वं निगीर्णवान् । पुत्र ! अस्मै विंशतिं देहि, अस्मै पञ्चविंशतिं देहि, अस्मै षष्टिम्,

अस्मै शतमिति नानाविधेषु व्ययेषु तया यमजिह्वया दाप्यमानोऽसौ मर्कटस्तांस्तान् निगीर्णवान् पुनरुद्गीर्य्य उद्गीर्य्य सर्वमेव ददौ। इत्थमाप्तयुक्तिं प्रदर्श्य पुनर्यमजिह्वाब्रवीत् ईश्वरवर्म्मन्! त्वमेतं मर्कटपोतकं गृहाण। गृहीत्वा चैतं पुनः सुन्दरीसदनं गत्वा दिने दिने गुप्तनिगीर्णान् तान् अमुतो व्ययं मृगयस्व, सा तु सुन्दरी आल' चिन्तामणिनिभं दृष्ट्वा त्वां प्रार्थ्य सर्वस्वं दत्त्वा कपिमेतं ग्रहीष्यति। ततश्च अनेन मर्कटेन गृहीततत्सर्वधनः दूरमविलम्बितं यायाः, इत्युक्त्वा यमजिह्वा तस्मै ईश्वरवर्म्मणे तं मर्कटं ददौ तथा तत् पिता पुनः कोटिद्वयं प्रादात्। स च तद् गृहीत्वा पुनः काञ्चनपुरं प्रायात्, प्राविशच्च त्वरितं सुन्दरीभवनम्। सा च सुन्दरी तं तथा धनपूर्णमवेक्ष्य ससुहृदं कण्ठाश्लेषादिभिर्भृशमनन्दयत्। अथेश्वरवर्म्मा यथासमयं तां विश्वास्य आलमानय गत्वा इति अर्थदत्तमवादीत्। तथेति तेन गत्वा स मर्कटः समानीयत। तच्च निगीर्णपूर्वदीनारसहस्रं सोऽब्रवीत् आल पुत्र! अद्य दीनाराणां शतत्रयं प्रयच्छ पानाहारक्रियाकृते, शतं ताम्बूलादिव्ययाय, शतं मकरकट्यै अम्बायै तथा शतं द्विजातिभ्यः समर्पय इत्येवमीश्वरवर्म्मणोक्तो मर्कटस्तथैव तान् उद्गीर्य्य उद्गीर्य्य प्रददाति स्म। एतदवलोक्य सा सुन्दरी मकरकट्या समं व्यचिन्तयत् अहो अस्य कपिरूपधृक् चिन्तामणिः सिद्धः, यः प्रत्यहं सहस्रं दीनाराणां प्रयच्छति। अमुना चेश्वरवर्म्मणा एष चेन्मह्यं दत्तः तदा सिद्धं नः मनोरथैः। इत्यालोच्य मात्रा समं सा सुन्दरी

भुक्तोत्तरसुखस्थितम् ईश्वरवर्म्माणमर्थयत् नाथ! यदि ते मयि प्रसादः सत्यं तदेतमालं मे प्रयच्छ। तदाकर्ण्य ईश्वरवर्म्मा हसन्निव तां न्यगादीत् प्रिये! असौ तातस्य सर्वस्वं तत् दातुं न युज्यते, इत्युक्तवन्तं तं सुन्दरी पुनरभ्यधात् अहं पञ्च कोटीर्ददामि, तदयं दीयतामिति। ततश्चेश्वरवर्म्मा क्षणं विचिन्त्य तामब्रवीत् प्रिये! यदि सर्वस्वं वा इदं नगरं ददासि, तथापि अयं नैव देयः, किमुत कोटिभिः। श्रुत्वैतत् सुन्दरी पुनराह स्म सर्वस्वं ते ददाम्यहं देहि एतं मर्कटं मह्यम् इत्युक्त्वा सुन्दरी तस्य ईश्वरवर्म्मणः पादौ जग्राह। तदा अर्थदत्तादयः सर्वे जगुः दीयतामयं मर्कटः, ततो भवितव्यं यथा तद्भवतु। ततश्चेश्वरवर्म्मा तं तथा दत्तममन्यत, अनयच्च तं दिनं सुन्दर्य्या सम्प्रहृष्टया सह परमसुखेन। प्रातश्च पुनरभ्यर्थमानायै सुन्दर्य्यै निगीर्णपूर्वदीनारसहस्रद्वितयं तं मर्कटं प्रादात्। ततश्च तन्मूल्यं गृहसर्वस्वं तस्याः समादाय तत्क्षणं द्रुतं स्वर्णद्वीपं वणिज्यया प्रायात्। कपिश्च स तस्यै सुन्दर्य्यै प्रहृष्टायै दिनद्वयं सहस्रं सहस्रं दीनारान् प्रददौ। हतीयेऽह्नि असौ प्रीत्या याच्यमानोऽपि यदा किञ्चिन्नादात् तदा सुन्दरी मुष्ट्या तमताड़यत्। स ताड़ितः क्रुधा आपत्य दशनैर्नखैश्च सुन्दर्य्यास्तज्जनन्याश्च मुखं चिच्छेद। ततस्तज्जननी स्रवद्रक्तमुखी क्रुधा लगुडैस्तं तथा ताड़यामास यथा स कपिस्तत्क्षणात् ममार। तं मृतं सर्वस्वञ्च नष्टमालोक्य दुःखेन सा सुन्दरी मात्रा सह प्राणत्यागोद्यता अभूत्। तदा च तत्र विज्ञातवृत्तान्तो जनः

मकरकव्या जालं ज्ञात्वा यस्य धनं हृतं, तेन सुधिया जाल-मुपायं ज्ञात्वा सर्वस्वं पुनर्हृतं तया अन्यस्य कृते जालं ज्ञातं न तु आत्मन: कृते जाल इति ब्रुवन् व्यहसत्। तत: सा सुन्दरी स्वजनैर्जननीयुक्त्या नष्टार्थी पाटितानना च देह-त्यागात् कथञ्चित् न्यवर्त्तत। स चेश्वरवर्म्मा स्वर्णद्वीपाद-र्जिताधिकसम्पत्ति: सत्वरं पितुर्गृहं चित्रकूटवर्त्ति समा-यात्। तमुपागतमुपार्ज्जितवित्तमालोक्य पिता रत्नवर्म्मा समभिनन्द्य कुट्टनीञ्च यमजिह्वां परितोष्य महोत्सवमका-र्षीत्। ईश्वरवर्म्मा च विलासिनीसङ्गे विदितातुलमाय: विरक्तचेता: स्वगृहे कृतदारसंग्रह: सुखेन न्यवात्सीत्। हे नरेन्द्र! एवं वनिताहृदये कूटाहृते न कदापि सत्यकथा-लवोऽपि वसति, तत् भूतिकाम: स्वार्थसाधनपरासु सदैव तासु शून्याटवीष्विव न रमेत। इत्येवं मरुभूतेर्वदनात् यथावद्वालजालकथां निपीय नरवाहनदत्त: अद्धाय गोमुखादिभि: सह जहास।

---

## अष्टपञ्चाशत्तरङ्ग:।

एवं वेश्यासु असद्भावे मरुभूतिना कथिते धीमान् गोमुख: कुमुदिकां कथामाचचक्ष।

आसीत् पुरा प्रतिष्ठाने नगरे विक्रमसिंह: नाम महीपति:। य: यथाविधानम् अन्वर्थनामा सिंह इव विक्रान्त:

समभवत्। तस्य सुभगा नदीनप्रभवा अलङ्कारतनुः शशि-लेखेति देवी समवर्त्तत। एकदा स्वनगरे समवस्थितं तं राजानं गोत्रजाः पञ्चाशत् गृहमागत्य पर्य्यवेष्टयन्। तेषां महाभटः, वीरबाहुः, सुबाहु, सुभटः, तथा प्रतापादित्य एते सर्वे राजानः महाबलाः। एतेषु सामादि प्रयुञ्जानं स्वमन्त्रिणं निराकृत्य राजासौ विक्रमसिंहः युद्धायैव नि-र्ययौ। अथ प्रवृत्ते शस्त्रसम्पाते उभयोः सैन्ययोः, स राजा शौर्य्यदर्पात् गजारूढ़ः स्वयम् आहवं प्रविवेश। धनुष्पाणिं द्विषतां चमूं दलयन्तं तं वीक्ष्य महाभटाद्याः पञ्चैव सम-मभ्यपतन्। तेषाञ्च बलेषु बहुषु अभिधावत्सु विक्रमसिंहस्य तद् बलमतुल्यमपि अभज्यत। ततोऽनन्तगुणो नाम मन्त्री पार्श्वस्थितस्तमभ्यधात् राजन्! भग्नमस्मद्बलं तत् साम्प्रतं नास्त्येवास्माकं जयः। अस्मांश्च अवधीर्य्य त्वया बलवद्वि-ग्रहः समाश्रितः। तदिदानीं शिवाय मद्वचनं कुरु, अस्मात् द्विपादवरुह्य तुरङ्गममारुह्य च एहि अन्यविषयं यावः, जीवन् पुनररीन् ज्येष्यसीति। इति मन्त्रिवचनात् स राजा स्वैरं वारणादवतीर्य्य हयारूढ़स्तेन मन्त्रिणा समं स्ववर्गान्निर्य्ययौ। निर्गत्य च छद्मवेशः सन् क्रमात् उज्ज-यिनीं पुरीमगमत्। तस्याञ्च कुमुदिकाख्यायाः कस्या-श्चित् विलासिन्याः प्रख्यातसम्पदः वसतिं मन्त्रिसहायः प्राविशत्। अकस्माच्च तं गृहमायातं दृष्ट्वा सा व्यचिन्तयत् अहो! कोऽयं पुरुषातिशयः मद्गृहमुपस्थितः। तैस्तै-र्लक्षणैरेष महान् राजेति सूच्यते, तद् यदि अयं स्वीकृतो भवेत् तदा मे अभीप्सितं सिद्धेत्। इत्यालोच्य समुत्थाय

स्वागतेन तं राजानमभिनन्द्य यथोचितमस्य कुमुदिका आतिथ्यमकरोत्, विश्रान्तञ्च तं क्षणान्तरे व्यगदत् धन्याऽहम् अद्य मे प्राक्तनं सुकृतं फलितं देवेन स्वयमागत्य यस्मे गृहं पवित्रितम्। अनेन प्रसादेन अस्मि ते क्रीता दासी, यस्मे हस्तिशतम् अस्ति, अश्वानाञ्च द्वे अयुते, तथा रत्नपूर्णं मन्दिरञ्च तदिदं सर्वं देवस्य अधीनम्। एवमुक्त्वा सा कुमुदिका तं नृपं समन्त्रिणं स्नानभोजनादिना उपचारेण पर्यचरत्। ततः स राजा विक्रमसिंहस्तत्र अर्पितस्वया तया साकं खिन्नोऽपि यथासुखं तस्थौ, तस्या धनं बुभुजे, अर्थिभ्यश्च यथाकामं प्रददौ। सा च तस्मै कमपि विकारं न दर्शयति स्म, प्रत्युतः तुष्यति स्म। ततो मय्यनुरक्ता इयमिति तुष्टं नृपं सः अनन्तगुणो मन्त्री रहसि अब्रवीत् प्रभो! वेश्यानां नास्त्येव सद्भावः, यच्चेयं ते भक्तिं कुरुते, तत्कारणन्तु न जाने। एतत्तस्य वचः श्रुत्वा स राजा तमवदत् मैवं कुमुदिका मदर्थं प्राणानपि त्यजेत्, न चेत् विश्वसिषि, ते प्रत्ययं जनयामि इत्युक्त्वा स्वं सचिवं राजा व्याजं व्यधात् शनैः मितपानभोजनः तनुं क्षमीकृत्य आत्मानं निश्चेष्टं लुठिताङ्गं चकार। ततः शिविकामधिरोप्य परिजनेन शोचता श्मशानं नीतः। सा च कुमुदिका शोकात् बान्धवैर्वार्य्यमाणापि आगत्य तेनैव समं चितायां समारोहत्। यावन्न दीप्यते वह्निस्तावदन्वागतां सतीं कुमुदिकां बुद्ध्वा राजा सद्यः समुत्तस्थौ। दिष्ट्या अयं प्रत्युज्जीवति इति वदन्तस्ते सर्वे प्रमुदिताः कुमुदिकायुक्तं राजानं स्वं सदनं निन्युः। अथ उत्सवे कृते स राजा

प्रकृतिं गतः रहसि कश्चिदनुरागोऽस्या दृष्ट इति मन्त्रिणं प्राह स्म । ततस्तं सोऽब्रवीत् राजन् ! एवमपि न प्रत्येमि, अस्त्यत्र नूनं किमपि कारणं, तदत्र निश्चयं पश्यामः प्रकाशयामश्चापि त्वां स्वरूपतः येन एतदर्पितं बलं मित्र-बलञ्च प्राप्य वयं रणे रिपून् हन्मः । इत्येवं वदति तस्मिन् मन्त्रिणि तत्र गुप्तः प्रेषितश्चारः समाययौ । स च पृष्टः प्रावदत् देव ! वैरिभिस्ते विषयो व्याप्तः, शशिलेखा तु राजमहिषी मृषा राजविपदं श्रुत्वा वह्निमाविशत् । एत-च्चारवचः श्रुत्वा स राजा शोकाशनिहतस्तदा हा हा देवि ! क्व गतासीत्यादि बहु विललाप । ततः क्रमेण विज्ञाततत्त्वा कुमुदिका समुपेत्य समाश्वास्य च तं विक्रम-सिंहमभाषत देव ! प्रागेव किं मम नादिष्टमिदं, तद् यावदधुनापि मदीयैर्बलैररिनिग्रहः क्रियताम् । इत्युक्तः स राजा तद्धनैरधिकं बलं संगृह्य प्रतिपक्षस्य बलवतो-ऽन्तिकं प्रययौ । गत्वा च तद्बलैः स्वबलैश्च युद्धे तान् पञ्चापि अरीन् विजित्य पुनः तत् राज्यं समासदत् । तत-स्तुष्टः कुमुदिकां राजा रहसि अब्रवीत् प्रिये ! प्रीतोऽस्मि ते, किन्ते प्रियं करणीयमुच्यताम् । सा प्रत्यवादीत् प्रभो ! सत्यं तुष्टोऽसि चेत् तदेकं मे हृदयशल्यं चिरस्थितं समुद्धर, उज्जयिन्यामस्यां श्रीधरं नाम मे प्रियं राज्ञा अल्पेन अपराधेन कारानिबद्धं विमोचय । भाविक-कल्याणं राजलक्षणैरलङ्कृतं त्वाम् एतत्कार्य्यक्षमं बुद्धा अहं सेवितवत्यस्मि, आरूढ़वत्यस्मि च अभीष्टसिद्धिसम्भा-वनाविरहात् विफलं जीवनं मन्यमाना त्वच्चिताम् । एव-

मुक्तावतीं तां कुमुदिकां राजा प्राह साधयिष्यामो वयन्ते सुवचनेन इत्युक्ता मन्त्रिवचनं संस्मृत्य अचिन्तयत् सत्यमेव मे अनन्तगुणेन मन्त्रिणा वेश्यासु असद्भावः प्रोक्तः, अतोऽस्याः कामना मया अवश्यमेव पूरणीया, इति सञ्चिन्त्य सबलः स राजा तामुज्जयिनीमगात्, तच्च श्रीधरं मोचयित्वा बहूनि द्रविणानि च दत्त्वा तां कुमुदिकां सुस्थामकरोत्। ततः स्वनगरमागत्य मन्त्रिमन्त्रबलेन स्वोत्साहेन च सर्वान् शत्रून् वशीकुर्वन् सर्वां महीं बुभुजे। एवं वेश्ययोषितां हृदयमगाधमविज्ञेयम्। एवमुक्त्वा तत्र गोमुखे विरते नरवाहनदत्तस्य पुरतस्तपन्तकः प्रत्यवदत् देव! नैव स्त्रीषु क्वापि प्रत्ययः विशेषतश्चपलासु, अत्र मया यद्दृष्टं तद् वच्मि श्रूयताम्।

आसीत् पुरास्यामेव पुरि बलवर्म्माख्यः कश्चिद् वणिक्। तस्य भार्य्या चन्द्रश्रीर्नाम। सा चैकदा वातायनस्थिता सुरूपं शूलहरं नाम कमपि वणिक्सुतमद्राक्षीत्, अरंस्त च तेन सखीगृहमानीतेन तेन यथाकामं मदनासक्ता अलक्षितम्। एवं प्रत्यहं सा यावत् तेन समं तथा रमते तावत् सर्वे तद्बन्धुबान्धवास्तद् विजानन्ति स्म, एकस्तु बलवर्म्मा एव पतिस्तामसतीं न ज्ञातवान्। प्रायेण स्नेहान्धा भार्य्याणां दौःशील्यं नेक्षन्ते।

एकदा तस्य बलवर्म्मणः दाहज्वरः समभवत् तेन च स वणिक् क्रमेण अन्त्यामवस्थां सम्प्राप्तः। तच्च दृष्ट्वा असौ जारः प्रतस्थे, सा तु तं कामुकमापृच्छ्य तेन पत्या सह शीलज्ञैः स्वजनैर्वार्य्यमाणापि शुचा तच्चितामारुरोह। इत्य-

अवितर्क्यं स्त्रीहृदयं, यदेताः अन्यासक्ताश्च कुर्वन्ति, पतिं विना म्रियन्ते च। एवं तपन्तकोक्तमाकर्ण्य हरिशिखः समभ्यधात् अत्र तावत् देवदासस्य वृत्तं किं न श्रुतं भवद्भिः ?

पुरासीत् कस्मिंश्चित् ग्रामे देवदासाख्यः कश्चित् गृहपतिः। दुःशीलेति च तस्यान्वर्थनामा गृहिणी समवर्त्तत। प्रतिवेशिनश्च तामन्यपुरुषासक्तां विविदुः। एकदासौ देवदासः कार्य्यवशात् राजकुलमगात्। सा च तद्भार्य्या तद्वधैषिणी गृहोपरितले तं परपुरुषमानीय अरक्षीत्। अथ निशीथे आगतं तं देवदासं पतिं भुक्तसुप्तं तेन जारेण अघातयत्। ततश्चोपपतिं विसृज्य तूष्णीं स्थित्वा निशाक्षये निर्गत्य हतोऽयं मे भर्त्ता तस्करैरिति उच्चैश्चक्रन्द। तदाकर्ण्य बन्धवस्तत्रागत्य अवोचन् यदायं चौरैर्हतः, तत् कथं तैः किञ्चिदपि न हृतम् ? इत्युक्ता ते तत्र स्थितं तदात्मजं बालमपृच्छन् केन ते तातो हत इति। स स्पष्टमवादीत् पृष्ठभूमौ कोऽपि पुरुषः दिवागत्य स्थितः, अथ तेन रात्रौ अवतीर्य्य पश्यतो मे तातः निहतः, अम्बा तु मां गृहीत्वा आदौ तातपार्श्वादुत्थिता। इत्युक्ते शिशुना भार्य्याजारेण तं हतं बुद्धा ते बान्धवा अन्विष्य तं जारं तदैव जघ्नुः, निर्वासयाञ्चक्रुश्च तां दुःशीलां स्वीकृतभर्त्तृवधां शिशुना सह तस्माद् देशात्। इत्थमन्यरता स्त्री भुजगीव निःसंशयं पतिं हन्ति। एवमुक्त्वा विरते हरिशिखे गोमुखः पुनरब्रवीत् देव ! किमन्येन, सम्प्रति इह बलेशसेवकस्य वज्रसारस्य यद् वृत्तं हास्यकरं तत् श्रूयताम्। शूरस्य

कान्तस्य तस्य वज्रसारस्य मालवदेशप्रभवा प्राणाधिकप्रियतमा भार्य्याभूत्। एकदा तस्य भार्य्यायाः पिता पुत्रान्वितः मालवात् निमन्त्रणाय सोत्कण्ठः स्वयं समाजगाम। वज्रसारश्च तं श्वशुरं सत्कृत्य राज्ञे निवेद्य च निमन्त्रितस्तेन समं भार्य्यया सह मालवमयासीत्, गत्वा च श्वशुरवेश्मनि मासमात्रं विश्रान्तः इह राजसेवार्थं प्रत्यागमत्, तद्भार्य्या तु तत्रैव आस्त।

ततो दिनेषु गच्छत्सु तं वज्रसारमुपेत्य अकस्मात् क्रोधनो नाम कश्चित् सुहृदभाषत सखे! भार्य्यां पितृगृहे त्यक्त्वा किं त्वया गृहं नाश्रितं, तत्र तया पापया अन्यपुरुषासङ्गः कृतः। ततः आगतेन आप्तेन केनचिदद्य मम कथितम्। मा एतद्वितथं मंस्थाः, तस्मादेतां निगृह्य अपरां वह। इत्युक्त्वा क्रोधने याते स तु वज्रसारः मूढ़ इव क्षणं स्थित्वा व्यचिन्तयत् शङ्के सत्यमेवैतत् अन्यथा कथम् आह्वायके विसृष्टेऽपि सा नागता? तदेतां स्वयमानेतुं यामि, पश्यामि किं भवेत्, इति संचिन्त्य मालवं गत्वैव श्वशुरमनुज्ञाप्य तां भार्य्यामादाय ततः प्रतस्थे, गत्वा च दूरमध्वानं युक्त्या अनुगान् विसृज्य तत्पथेन तामादाय गहनं वनं गत्वा तत्र तामुपवेश्य विजने वदति स्म त्वमन्यपुरुषासक्तेति आप्तान्मित्रात् मया श्रुतं, मया चात्र स्थितेन आह्वायकमुखेन त्वमाहूतापि नागतासि, तत्सत्यं ब्रूहि नो चेत् करिष्ये ते निग्रहम्। तदाकर्ण्य साब्रवीत् यदि ते अयं निश्चयः, तत् किं मां पृच्छसि, कुरुष्व यत्ते रोचते, इति सावज्ञं तस्या वचनं निशम्य कोपात् स वज्र-

सारः तरौ लताभिस्तां बद्धा समताड़यत्। यावच्च स तस्या वस्त्रं हरति तावत् तां नग्नां दृष्ट्वा तस्य मूढ़स्य रागिणः रिरंसा व्यजायत। ततो बद्धां यावत् रन्तुमाश्लिष्यति तावत् सा नेच्छति स्म, सुरतार्थं प्रार्थ्यमाना च जगाद यथाहं त्वया लताभिर्बद्धा ताड़िता, यद्यहं तथा त्वां ताड़येयं ततोऽहं त्वया सह रतमिच्छामि नान्यथा। स च काम-मोहितस्तथैव प्रत्यपद्यत। किमाश्चर्यं वज्रसारोऽपि स मनोभुवा तृणसारीकृतः। ततः सा तं सहस्तपादं तरौ बबन्ध। तस्य च शस्त्रेण हस्तात् गृहीतेन सा तस्य बद्धस्य कर्णनासं चकर्त्त च। तच्च शस्त्रं गृहीत्वा तस्य च वासांसि परिधाय सा पापा पुंवेशं कृत्वा यथाकामं ततः प्रतस्थे। स तु वज्रसारस्तत्र छिन्नश्रवणनासिकः गलता शोणितौ-घेन अवमानेन च नताननस्तस्थौ।

अथ कश्चिद् भिषक् औषध्यर्थं तत्रागात्। तञ्च तथाविधं दृष्ट्वा कृपया स साधुरमुच्य गृहं नीतवान्। तत्र च तेनाश्वासितः शनैः स्वगृहमागमत्, न च पापत् समन्विष्य तां कुतोऽपि कुगेहिनीम्। ततः स तत् सर्वं वृत्तान्तं क्रोधनाय अवर्णयत्। तेनापि क्रोधनेन वत्स-राजस्य पुरतः सर्वमेतत् कथितम्। अयं निष्पुरुषामर्षः स्त्री-भूत इति भार्य्यया अस्य पुंवेशो हृतः कृतश्चादितः महान् निग्रहः इति राजकुले सर्वजनोपहसितोऽपि स वज्रसारः वज्रसारेण चेतसा हृष्टैवास्ते। तदेवं देव! स्त्रीषु कस्य विश्वासः इति गोमुखे उक्तवति पुनर्मरुभूतिरवादीत्। देव! स्त्रीणां मनः अप्रतिष्ठं सततं तदत्र कथामिमां शृणु।

आसीत् पूर्वं दक्षिणापथे सिंहबलो नाम राजा। तस्य कल्याणवती नाम सर्वान्तःपुरयोषितां प्रिया मालवराजसुता भार्य्या समभूत्। एकदा तया सह राज्यं शासन् स महीपतिः बलिभिः गोत्रजैः सम्भूय देशात् प्रभ्रंशितः। स तु देवीद्वितीयः प्रच्छन्नं सायुधोऽल्पपरिच्छदः श्वशुरसदनं सम्प्रतस्थे। गच्छंश्च पथि अटव्यां स शूरः आधावन्तं पुरः सिंहमेकेन खड्गप्रहारेण अवहेलया द्विधा चकार। पातयामास च गर्ज्जन्तमायान्तं वनद्विपं खड्गच्छिन्नकरम्। तथा अरण्यविक्रान्तः करी कमलिनीरिव एकाकी तस्करचमूविदलितमार्गमतिक्रम्य मालवं प्राप्य स्वां देवीं प्रावदत् प्रिये! न मे मार्गवृत्तं त्वया पितृगृहे वाच्यम्। देवि! लज्जेऽहं, क्षत्रियस्य विक्रमे का श्लाघा इत्युक्ता तया साकं तत्पितुर्गृहं प्राप। संभ्रमात् तेन श्वशुरेण पृष्टश्च निजवृत्तान्तमुक्तवान्। सम्मान्य च तेन श्वशुरेण दत्तहस्त्यश्वबलः स गजानीकनाम्नः बलिनो राज्ञः समीपं प्रागात्। विपक्षविजयोद्यतश्च तां देवीं कल्याणवतीं तत्रैव पितृवेश्मनि स्थापयामास।

तस्मिंश्च प्रयाते यातेषु च कियत्सु दिनेषु सा देवी वातायनस्था कञ्चित् पुरुषमैक्षत। स तु दृष्ट एव रूपेण तस्या हृदयमपाहरत्। सा च कामाक्रान्ता तत्क्षणमचिन्तयत् जानेऽहम् आर्य्यपुत्रादन्यः सुरूपः शौर्य्यवांश्च पुरुषो नास्तीति, तथापि अस्मिन् पुरुषे मनो मे धावति, तद् यावदस्तु भजाम्येनम् इति संचिन्त्य सा तदा रहस्यधारिण्यै सख्यै स्वाभिप्रायं तं शशंस। न्यवेशयत् तमास च तथैव तं

वातायनपथेनानाय्य रज्जूत्क्षिप्तं पुरुषमन्तःपुरम्। स तु पुरुषः प्रविष्टोऽपि सहसा तस्याः पर्य्यङ्कमध्यासितुं न शशाक, निषसाद च पृथगासने। तदवलोक्य नीचोऽयमिति बुद्धा यावत् राज्ञी विषीदति तावत् उपरिष्टात् भ्रमन् अहिरत्रागात्। तं विलोक्य सभयमुत्थाय सहसा पुरुषोऽसौ धनुरादाय विशिखेन तं भुजगमवधीत्। अक्षिपच्च गवाक्षेण तं विपन्नपतितं वहिः। ननर्त्त च हर्षेण तद्भयादुत्तीर्णः स कातरः। नृत्यन्तं तमुद्वीक्ष्य सा कल्याणवती भृशमुद्विग्ना व्यचिन्तयत् धिक् धिक् किमेतेन निःसत्त्वेनाधमेन। ताञ्च विरक्तां दृष्ट्वा चित्तज्ञा तत्सखी निर्गत्य आशु प्रविश्य च ससम्भ्रमा निजगाद देवि! आगतोऽयं यदि ते अनभिमतः, तदायं युवा सम्प्रति प्रयातु यथागतेनैव पथा स्वगृहम्। एवं तयोक्तो स पुरुषः भयाकुलः. वातायनाद्वहिः रज्ज्वा सम्पतितः सत्वरं स्वगृहं पलायितः।

अथ तस्मिन् गते सा कल्याणवती तां सखीमवादीत् सखि! कृतं त्वया शोभनं, यदयं नीचः सत्वरं वहिष्कृतः, त्वया मे हृदयं ज्ञातं, चेतस्तु मम दूयत एव, मे भर्त्ता सिंहव्याघ्रादीन् निहत्यापि क्रिया अपह्नुते। अयन्तु भुजगं हत्वैव प्रनृत्यति। तत्तादृशं हित्वा कथमस्मिन् प्राकृते रतिः? तदव्यवस्थितमतिं मां धिक् अथवा सर्वा एव स्त्रियो धिक् या मक्षिका इव कर्पूरं हित्वा अशुचौ धावन्ति। इत्येवं जातानुशया सा कथमपि निशां नीत्वा भर्त्तारं प्रतीक्षमाणा पितुर्गृहे अतिष्ठत्। तावच्च स सिंह-बलः गजानीकेन भूभृता दत्ताधिकबलः गत्वा तान् गोत्र-

जान् पञ्च पापान् शत्रूनवधीत्। ततः स पुनः स्वराज्यं प्राप्य तां भार्य्यांञ्च पितुर्गृहात् आनीय तञ्च श्वशुरं प्रभूतै- र्धनैरापूर्य्य सुचिरं निष्कण्टकां क्ष्मां शशास। एवं प्रवीरे सुभगेऽपि सत्पतौ विवेकिनीनामपि योषितां चलं मनः यत्र कुत्रचित् धावति, अथवा विशुद्धसत्त्वा योषितः विरलाः खलु। इति मरुभूतिना निगदितां कथामाकर्ण्य स वत्स- राजसुतो नरवाहनदत्तः सुखसुप्तस्तां रजनीमनैषीत्।

---

## अथ दशमो लम्बकः।

## ऊनषष्टितमस्तरङ्गः।

अथ प्रातः कृतनित्यक्रियः स नरवाहनदत्तः सचिवैः सह स्वमुद्यानं विहरन् ययौ। तत्रस्थश्च आदौ व्योम्नः प्रभापुञ्जं ततः बह्वीर्विद्याधराङ्गनाः समापतन्तीरैक्षिष्ट। तासाञ्च मध्ये ताराणामिव शीतांशुरेखां लोचनानन्द- दायिनीं विकसत्पङ्कजनयनां नीललोचनषट्पदां सलील- हंसगामिनीं वहदुत्पलसौरभां तरङ्गहारित्रिवलीलताल- ङ्कृतमध्यां साक्षात् स्वरोद्यानवापीशोभाधिदेवतामिव एकां कन्यकामद्राक्षीत्। स्मरसञ्जीवनीं तां चान्द्रीं मूर्त्तिमम्भो- धिरिव दृष्ट्वा स नरवाहनदत्तः उत्कलिकाकुलश्चुक्षुभे। अशंसच्च अहो सुन्दरनिर्म्माणवैचित्री विधातुः इत्येवमालोच्य

सचिवैः सह तामुपाययौ । पप्रच्छ च तां तिर्य्यक् पश्यन्तीं प्रेमदृष्ट्या, का त्वं शुभे ! कथमिहागमनं वा । तदाकर्ण्य साऽब्रवीत् शृणुत, वदामि ।

अस्ति हिमाचले काञ्चनशृङ्गं नाम हैमं पुरम् । तत्रास्ति स्फटिकयशा नाम विद्याधरपतिः । स हि धार्मिकः कृपणानाथशरणागतवत्सलश्च । तस्य हेमप्रभा नाम महिषी । गौर्य्या वरेण अहं तयोः पञ्चभ्रातृभ्यः कनीयसी प्राणाधिकप्रिया कन्या शक्तियशा नाम । अहन्तु सखीभिः समं पित्रोरादेशात् व्रतैः स्तोत्रैश्च पर्य्यचरम् । एकदा सा तु भगवती तुष्टा समग्रा विद्या दत्त्वा मामादिशत् पुत्रि ! तव पितुर्दशगुणं विद्याबलं भविता, नरवाहनदत्तस्ते भर्त्ता भविष्यति । स च खेचराणां चक्रवर्त्ती भविष्यतीति उक्त्वा तिरोऽभूत् । अहञ्च तत्प्रसादात् लब्धविद्याबला क्रमेण यौवनमवाप्तवती अद्य च रात्रौ सा देवी दत्तदर्शना मामादिशत् पुत्रि ! त्वया प्रातरेव गत्वा स्वयं निजः पतिः द्रष्टव्यः । आगन्तव्यञ्च एतदुद्यानम् । तव च पिता चित्तस्थितैतत्सङ्कल्पः मासेन, ते विवाहं संविधास्यति । इत्यादिश्य सा देवी तिरोदधे, यामिनी च व्ययासीत् । तदहमार्य्यपुत्र ! अद्य त्वां द्रष्टुमागता, तत् साम्प्रतं व्रजामि इति गदित्वा सा सखीभिः सह खमुत्पत्य पितुरन्तिकमाजगाम । नरवाहनदत्तोऽपि तद्विवाहोत्सुकः समुद्विग्नः मासं युगोपमं विचिन्तयन् अन्तःपुरमविशत् । तत्र च तं विमनसं दृष्ट्वा गोमुखोऽब्रवीत् देव ! शृणु एकां कथां, येन त्वां विनोदयामि ।

पुराभवत् काञ्चनपुरीति कापि नगरी। आसीच्च तस्यां सुमना नाम कश्चिन्महीपतिः। चित्रं येन विराजमानेन आक्रान्तदुर्गकान्तारभूमिना शत्रवोऽपि तादृशाः कृताः। एकदा आस्थानमण्डपगतं तं प्रतीहारी व्यजिज्ञपत् देव! मुक्तालता नाम कापि निषादपतिकन्या पञ्जरस्थं शुकमादाय वहिर्द्वारि वीरप्रभेण भ्रात्रा सह देवं द्रष्टुकामा स्थिता इति। आनीयतामसाविति प्रभुणोक्ते सा भिल्लदुहिता प्रतीहारनिदेशात् नृपतेरास्थानमण्डपमविशत्। सर्वेऽपि सभासदस्तस्या अद्भुतं रूपं दृष्ट्वा न मानुषीयं कापि देवी नूनमसौ इति समचिन्तयन्। सा तु राजानं प्रणम्य व्यज्ञापयत् देव! अयं शास्त्रगङ्गाख्यश्चतुर्वेदधरः शुकः कविः समग्रासु विद्यासु कलासु च विचक्षणः। मया पुनर्देवयोग्योऽयमिति कृत्वा अद्य अयमिहानीतः गृह्यतामिति अर्पितस्तदा प्रतीहारेण कौतुकात् नृपतेरन्तिकं नीतोऽसौ शुकः श्लोकं पपाठ,

राजन्! युक्तमिदं सदैव यदयं देवस्य सन्धुक्षते
धूमश्याममुखोद्विषद्विरहिणीनिश्वासवातोद्गमैः।
एतत्त्वद्भुतमेव यत् परिभवाद् वाष्पाम्बुपूरप्लवे-
रासां प्रज्वलतीह दिक्षु, दशसु प्राज्यः प्रतापानलः॥

इमं श्लोकं पठित्वा शुकः पुनरब्रवीत् किं प्रमेयं कुतः शास्त्राद् ब्रवीमि तदादिशतु देव इति।

ततो विस्मिते राजनि मन्त्री अब्रवीत् प्रभो! मन्ये शापादयं शुकीभूतः कश्चन पूर्वर्षिः। इत्युक्ते मन्त्रिणा राजा तं शुकं पृच्छति स्म भद्र! कौतुकं मे, ब्रूहि स्ववृत्तान्तं,

क्व ते जन्म ? कुतस्ते शुकत्वेऽपि शास्त्रविज्ञानम् ? को वा भवान्? ततः स शुकः वाष्पमुत्सृज्य आह स्म देव ! अवाच्यमपि एतत् देवस्य आज्ञया कथयामि, राजन् ! हिमवदन्तिके कश्चित् आम्नाय इव दिग्व्यापिभूरिशाखाश्रितद्विजः रोहिणस्तरुरस्ति। तस्मिन् एकः शुकः कृतनिलयः भार्य्यया शुक्या सह तस्थौ। तस्मात् तस्यामेषोऽहं दुष्कृतयोगादुत्पन्नः। जातमात्र एव मयि माता मम सा शुकी पञ्चतामगात्। तातस्तु वृद्धः पक्षान्तः मां निवेश्य वर्द्धयति स्म। वार्द्धक्यात् विचरितुमशक्तुवंश्च निकटस्थशुकानां भुक्तशेषाणि फलानि अश्नन् ददन्न मह्यं कथञ्चित् आसाञ्चक्रे।

एतस्मिन्नन्तरे सहसा सम्भ्रमोद्वेलचमरी वित्रस्तश्वापदा विद्रुतव्याकुलेव सा महाटवी समभवत्। पुलिन्दवृन्दे विविधप्राणिनां संहाराय प्रवृत्ते आखेटभूमिषु कृतान्तक्रीड़ितं कृत्वा आत्तैः पिशितभारैरापतिते एकस्तु वृद्धशवरस्तस्मादनासादितमांसः क्षुत्परीतः सायं तं तरुमारुरोह। आरुह्य च स तत्र सत्वरं शुकान् अन्यांश्च पक्षिणः नीड़ेभ्य आकृष्य आकृष्य हत्वा भुवि व्यपातयत्। आयान्तञ्च तं यमकिङ्करसोदरं दृष्ट्वा यावदहं भयात् शनैः तातस्य पक्षान्तः लीनो व्यतिष्ठं तावत् स पातकी अस्मत्कुलायं प्राप्य तं तातम् आकृष्य पीड़ितग्रीवं निहत्य तरुमूले न्यक्षिपत्। अहञ्च तातेन समं तस्य पक्षतेः पतित्वा निर्गत्य सभयं पर्णान्तः शनैः प्राविशम्। अथावतीर्य्य असौ भिल्लः अग्नौ भ्रष्टान् तान् कियतः अभक्षयत्। अगाञ्च

अन्यान् कतिपयान् गृहीत्वा निजां पल्लीम्। अहन्तु शान्तभयो दुःखदीर्घां तां निशां कथञ्चित् नीत्वा प्रातर्भूयिष्ठमुदिते जगच्चक्षुषि भास्करे असमुदितपक्षसंरुद्धो वसुधायां मुहुः स्खलन् व्यचरं, प्रापञ्च तृष्णार्त्तः आसन्नवर्त्तिनः कस्यचित् पद्मसरसस्तीरम्। अपश्यञ्च तत्र कृतस्नानं सैकतस्थितं मरीचिनामानं मुनिमग्रतः स्वं पूर्वपुण्यमिव। स तु मां दृष्ट्वा मुखच्युतोदविन्दुभिः समाश्वास्य पत्रपुटेन कृत्वा कृपया आश्रममनैषीत्। तत्रानीतं मां दृष्ट्वा कुलपतिः पौलस्त्यः किलाहसत्। अन्यमुनिपरिपृष्टश्च स दिव्यदृष्टिरुवाच इमं शापग्रस्तं शुकं दुःखेन सहितं दृष्ट्वा एतत् संबद्धां कथां कृताह्निकः वः वक्ष्यामि। यस्याः श्रवणादयं स्वां जातिञ्च स्मरिष्यति। इत्युक्त्वा पुलस्त्यः आह्निकाय समुत्थितोऽभवत्।

अथ कृताह्निकः स महर्षिः तथैवाभ्यर्थितः मत्संबद्धामेतां कथामवर्णयत्। पुरासीत् रत्नाकरे पुरे ज्योतिष्प्रभो नाम राजा। यः समूर्ज्जितशासनः आरत्नाकरमुर्वीं शशास। तस्य हर्षवत्यां नाम देव्यां तीव्रतपसा सन्तुष्टस्य भगवतो गौरीपतेर्वरप्रभावात् पुत्र एकः समजनि। यदसौ देवी हर्षवती स्वप्ने मुखप्रविष्टं सोममद्राक्षीत् तेनासौ नृपः तं पुत्रं नाम्ना सोमप्रभमकार्षीत्। स च प्रजानां नयनोत्सवं वितन्वन् गुणैरमृतमयो राजपुत्रः क्रमात् सोम इव ववृधे। अथ राजा ज्योतिष्प्रभः पुत्रं शूरं भारक्षमं युवानं प्रकृतिप्रियं दृष्ट्वा यौवराज्येऽभ्यषिञ्चत्, अददाच्च प्रभाकराख्यस्य निजमन्त्रिणः पुत्रं प्रियङ्करनामानं सद्गुणसम्पन्नमस्य मन्त्रित्वे।

एतस्मिन्नन्तरे अम्बरादश्वं दिव्यमादाय देवराजसारथिर्मातलिः अवतीर्णस्तमभ्येत्य सोमप्रभमभाषत राजन्! भवान् विद्याधरः सखा शक्रस्य इहावतीर्णः तेन च पूर्वस्नेहेन आशुश्रवा नाम उच्चैःश्रवसः सुतः अयं तुरङ्गमस्ते प्रहितः। एतमधिरूढ़स्त्वं शत्रूणामजेयो भविष्यसीति उक्त्वा तस्मै सोमप्रभाय तं वाजिरत्नं दत्त्वा गृहीतसत्कारः खमुत्पपात। ततस्तमुत्सवमनोरमं दिवसं नीत्वा सोमप्रभः परेद्यवि पितरमवादीत् तात! क्षत्रियस्य नैष धर्मः यदजिगीषुता, तदाज्ञां मे देहि, अहं तावत् दिग्विजयाय व्रजामि। तदाकर्ण्य स पिता तुष्टस्तथेति प्रत्यपद्यत, अकरोच्च तस्य यात्रासंविदम्। ततः पितरं प्रणम्य स सोमप्रभः स्वबलैः सह दिग्विजयाय शुभे अहनि शक्रहयारूढ़ः प्रतस्थे। दुर्वारविक्रमः स तेन अश्वरत्नेन सर्वासां दिशां पतीन् महीभुजो जिगाय, आजहार च तेभ्यः प्रभूतानि रत्नानि। तेन तद्धनुः नमितञ्च विद्विषाञ्च शिरांसि नतानि च। तद्धनुरुन्नतिं पुनः प्राप न तु तद्विद्विषतां शिरांसि।

अथ कृतार्थः स हिमाद्रिनिकटे पथि आगच्छन् वनान्तरे सन्निविष्टबलः मृगयां चक्रे। दैवाच्च स तत्र रत्नखचितम् एकं किन्नरमपश्यत् अभ्यधावच्च तं प्राप्तुं तेन शक्रदत्तेन वाजिना। क्रमेण स किन्नरो गिरिगुहां प्राप्य अदर्शनमगात्। सोमप्रभस्तु तेनाश्वेन सुदूरमनीयत। तावच्च तीक्ष्णतेजसि सवितरि सन्ध्यासमागमाकाङ्क्षया पश्चिमाशामुपयाते राजपुत्रोऽसौ श्रान्तः कथमपि आवृत्य महदेकं सरो ददर्श। तस्य च तीरे तां निशां नेतुं तस्मादैन्द्रादश्वात्

अवततार। तस्मै च तृणोदकानि दत्त्वा आहृताम्बुफलः कियन्तं कालं विश्रान्तः अकस्मात् कुतश्चिदायान्तं गीतस्वनमशृणोत्। तदनुसारेण च गत्वा नातिदूरतः शिवलिङ्गाग्रतः समुपविष्टां गायन्तीं कामपि दिव्यकन्यकामद्राक्षीत्। केयमद्भुतरूपेयमिति जातविस्मयं तं सा अत्युदाराकृतिं राजपुत्रं दृष्ट्वा कृतातिथ्यमवोचत भद्र! कस्त्वं, कथमिमां भूमिमागतो भवान् दुर्गमाम्? एतदाकर्ण्य स्ववृत्तान्तमुक्त्वा स तां पप्रच्छ भद्रे! कथय का त्वं कथमत्र वने एकाकिनी, क्व च ते स्थितिः। इति पृष्टवन्तं तं, सा दिव्यकन्या प्रत्यवादीत् महाभाग! यदि कौतुकं, तत् कथयामि शृणु। इत्युक्त्वा सा वाष्पपूर्णमुखी वक्तुं प्राक्रमत।

अस्तीह हिमाद्रेः कटके काञ्चनाख्यं पुरम्। तत्रास्ति पद्मकूटो नाम विद्याधरराजः। तस्य राज्ञः हेमप्रभानाम्न्यां महादेव्यां जातां पुत्राधिकप्रियां मनोरथप्रभां नाम तनयां मां विद्धि। साहं विद्याप्रभावेण सखीभिः साकं नानाविधानाश्रमान् द्वीपानि कुलशैलान् वनानि उपवनानि च विहृत्य प्रत्यहं पितुराहारसमये त्रिभिर्वासरप्रहरैः स्वभवनमागच्छामि। एकदाहमिह प्राप्ता सरस्तीतटे विहरन्ती सवयस्यमेकं मुनिपुत्रमपश्यम्। तस्य च रूपशोभया दूत्येवाहमाकृष्टा तमभ्यधावम्। सोऽपि साकूतया दृष्ट्या मय्यभिलाषमकरोत्। ततो मम उपविष्टायाः सखी उभयाश्चित्तज्ञा तद्वयस्यमपृच्छत् महाभाग! कोऽयं महापुरुषः, ब्रूहि यदि न रहस्यमिति। स च तद्वयस्योऽब्रवीत् भद्रे! नातिदूरे इतो मुनिः दीधितिमानिति प्रसिद्धो निवसति

श्रमपदे । स ब्रह्मचारी कदाचित् अत्र सरसि स्नातुमागतो देव्या तत्कालागतया कमलया ददृशे । सा च शरीरेणाप्राप्यं प्रशान्तं तं मुनिं मत्वा मनसैव चकमे, अवाप च तेन मानसमेकं पुत्रम् । तव दर्शनात् मम अयं पुत्रः सञ्जातः परिगृह्यतामिति अभिधाय तस्मै सुतं दत्त्वा तिरोदधे । स तु मुनिः अनायासलब्धोऽयं पुत्र इति प्रहृष्टः परिजग्राह चकार च रश्मिमानिति नाम । क्रमेण च परिवर्द्धय उपनीय स्नेहात् सर्वा विद्याः शिक्षयाञ्चकार । तमेतं रश्मिमन्तं मुनिकुमारं मया सह विहरन्तमिहागतं विद्धि । तद्वयस्येन तेन इत्युक्ता पृष्टा च मत्सम्बद्धां कथां सा मत्सखी सर्वं मदुक्तं नामान्वयसहितं वृत्तान्तमवर्णयत् । ततः परस्परान्वयज्ञानात् स चाहञ्च परस्परानुरागिणौ तत्रावस्थितौ यावत्, तावत् द्वितीया मे सखी समेत्य अवदत् मुग्धे ! उत्तिष्ठ, आहाराय पिता त्वां प्रतीक्षते । तदाकर्ण्य शीघ्रमेष्यामीत्युक्त्वा भिया तं तत्रावस्थाप्य पितुरन्तिकमगमम् । तत्र यथालाभं कृताहारा यावदहं विनिर्गता तावत् प्रथमा मे सखी समागत्य स्वैरमब्रवीत् सखि ! तस्य मुनिपुत्रस्य स सखायमागतः । स तु प्राङ्गणद्वारि स्थितः सत्वरः समावदत् मनोरथप्रभापार्श्वमहं रश्मिमता अधुनैव व्योमगमनां विद्यां पैतृकीं दत्त्वा प्रेषितः । मन्मुखेनासौ एवं सन्दिदेश यथा तां प्राणेश्वरीं मनोरथप्रभां विना मदनेन इमां दशां नीतोऽस्मि यथा क्षणमपि प्राणान् धारयितुं न शक्नोमि । तदाकर्ण्यैव तेनाशयायिना मुनिपुत्रवयस्येन

समन्विता सख्या सह निर्गता इहैव आगता। आगत्य च तं मुनिपुत्रं मया विना चन्द्रोदयेनैव गतासुमपश्यम्। ततोऽहं यावत् तद्वियोगार्त्ता स्वां तनुं निन्दन्ती तत्कलेवरं गृहीत्वा अग्निं प्रवेष्टुमैच्छम् तावत् अम्बरोत्तादवतीर्य्य तेजःपुञ्जाकृतिः कोऽपि पुमान् तच्छरीरमादाय गगनमुत्पपात। अथाहम् एकाकिनी एव यावदग्नौ पतितुमुद्यता, तावत् गगनादुच्चचार भारती, मनोरथप्रभे! मा एवं कुरु, पुनरपि कालेन ते अनेन मुनिपुत्रेण सङ्गमो भविता। एतदाकर्ण्य मरणान्निवृत्ता तत्प्रतीक्षा इहैव शङ्करार्चनतत्परा सुचिरमतिष्ठम्। सोऽपि मुनिपुत्रसुहृत् क्वापि अदर्शनं गतः। इत्येवं वादिनीं तां सोमप्रभाऽब्रवीत् स्थितासि सम्प्रति एकाकिनी सा तव सखीदानीं क्व गता। तदाकर्ण्य सा विद्याधरकन्यका प्रत्यभाषत राजपुत्र! अस्ति सिंहविक्रमो नाम विद्याधरपतिः। तस्य अनन्यसाधारणी मकरन्दिका नाम तनया वर्त्तते। सा तु मे प्राणसमा सखी मे दुःखेन दुःखिता। तया मे वार्त्तां ज्ञातुमद्य सखी प्रेषिताभूत्। मयापि तस्या वार्त्तां विज्ञातुं मत्सखी तया सह प्रेषिता। तेनास्मि सम्प्रति एकाकिनी स्थिताहम्। एवं वदन्ती सा सोमप्रभा गगनादवतरन्तीं तदैव तां स्वसखीं दर्शयामास। अथ कथितसखीवार्त्तां तां सोमप्रभस्य पर्णशय्यामकारयत्, अदापयच्च तदश्वस्य घासम्। ततः सर्वे ते निशां नीत्वा प्रातरुत्थिता व्योम्नावतीर्णं विद्याधरमेकमपश्यन्। स च विद्याधरो देवजयो नाम कृतानतिः समुपविश्य मनोरथप्रभां तामगा-

दीत् मनोरथप्रभे! राजा सिंहविक्रमस्त्वामाह यावत् तत्र वरः न निष्पन्नः, तावत् मत्सुता मकरन्दिका त्वत्सखी तव स्नेहात् विवाहं नेच्छति। तदेताम् आगत्य तथा प्रबोधय यथा विवाहे प्रवर्त्तते। एतत् श्रुत्वा सखीस्नेहात् तां विद्याधरकन्यां सखीं मकरन्दिकां प्रबोधयितुं गन्तुकामां तां मनोरथप्रभामब्रवीचत् सोमप्रभः। अनघे! मानवोऽहं, वैद्याधरं लोकं द्रष्टुं मे महत् कौतूहलं, तत्तत्र यदि न दोषस्तदा मां नेतुमर्हसि, अश्वोऽयं दत्तघामोऽत्रैव तिष्ठतु। तत् श्रुत्वा सा सखीयुता तथेत्युक्त्वा देवजयोतमङ्गारोपितेन तेन सोमप्रभेण समं ययौ। तत्र गता सा तया मकरन्दिकया कृतातिथ्या सोमप्रभं दृष्ट्वा कोऽयमिति स्वैरमपृच्छत। तस्यां च मनोरथप्रभायाम् उक्ततदुदन्तायां सा मकरन्दिका तेन सोमप्रभेण सद्य एव अपहृतचेतना समभूत्। सोऽपि सोमप्रभः तां रूपिणीं लक्ष्मीमिव मनसा प्राप्य समचिन्तयत् कः स सुकृती, येनास्याः पाणिर्ग्रहीष्यतेति। ततः स्वैरालापे संवृत्ते तां मकरन्दिकामाह स्म मनोरथप्रभा, सखि! कस्मात् त्वं नोद्वाहमिच्छसि? तन्निशम्य सा प्रत्यवादीत् कथं त्वया अनङ्गीकृते वरे अहं विवाहमिच्छेयं, त्वं हि मे शरीरादपि अधिकप्रिया। एवं तया मकरन्दिकया सप्रणयमभिहिते मनोरथप्रभावादीत् मुग्धे! मया हि वृतो वरः, दौर्भाग्यात् लोकान्तरं नीतः, देववचनात् साम्प्रतं तत्समागमप्रतीक्षया तिष्ठामि। त्वमधुना कथं न वरमाप्तुमिच्छसीत्यभिहिते सा मकरन्दिका तर्हि त्वद्वाक्यं करिष्यामीत्याह। सा च मनोरथप्रभा त्वचि-

तन्ना तां जगाद सखि! सोमप्रभोऽयं पृथिवीं जित्वा तवातिथिः प्राप्तः। तत् सुन्दरि! त्वया अस्य आतिथ्यसत्कारः कर्त्तव्यः। इत्याकर्ण्य तया मकरन्दिकयोक्तं सखि! दृष्टमात्रस्यैवास्य आशरीरात् सर्वमिदं मे धनं साम्प्रतम् उपहारीकृतं यदीच्छति कामं स्वीकरोतु। एवं तयोक्ते क्रमात् तत्प्रणयं तत्पितुरावेद्य मनोरथप्रभा तयोरुद्वाहनिश्चयमकरोत्। ततः सोमप्रभो लब्धधृतिः परितुष्टस्तामवदत् साध्वि! तदाश्रमपदं साम्प्रतं मे गन्तव्यं जातु मत्पदवीं चिन्वानं समन्तिकं मे सैन्यमागच्छेत्, गच्छेच्च मामप्राप्य अहिताशङ्कि पराङ्मुखम्। तदिदानीं गत्वा सैन्यवृत्तान्तं परिज्ञाय ततः पुनरागत्य निश्चित्य च शुभेऽह्नि मकरन्दिकामिमामुद्वक्ष्यामि। तदाकर्ण्य सा तथेति तं स्वमाश्रममनयोत्। तावदेवास्य सोमप्रभस्य मन्त्री प्रियकरः अश्वपदवीं विचिन्वन् ससैनिकस्तत्रागात्। यावच्च मिलिताय तस्मै निजमन्त्रिणे सम्प्रहृष्टः स्वं वृत्तान्तं शंसति तावत्तस्यान्तिकं स्वपितुः शीघ्रमागम्यतामिति लेखमादाय कश्चित् दूतः समाययौ।

तेनादेशेन पितुः सचिवानुमतेन सैन्येन सह सत्वरं स्वं नगरं जगाम। व्रजश्च तात दृष्ट्वाहं न चिरादागमिष्यामीति मनोरथप्रभां तं देवजयञ्च प्रोवाच। अथ स देवजयः गत्वा तत् सर्वं मकरन्दिकामबोधयत, तेन सा विरहातुरा संजज्ञे सा उद्याने सखीजने सङ्गीते च न रतिमलभत, न च शुकानामपि विनोदनसुभगा गिरः शुश्राव। किमधिकेन आहारमपि सा अकरोत्, किमुत मण्डनादिकम्। प्रयत्नेन

पितृभ्यामनुरुध्यमानापि न धृतिमबध्नात्। क्रमेण सा विसिनीपत्रशयनमपि विसृज्य उन्मादिनीव पितुरुद्वेगकारिणी बभ्राम। यदा तु सा समाश्वासयतीस्तयोर्वचांसि न प्रतिपेदे तदा तौ परिकुपितौ तामशपतां त्वं निश्रीके निषाददेशे कञ्चित् कालम् अनेनैव शरीरेण स्वजातिस्मृतिवर्जिता निपतिष्यसि। इति पितृभ्यां शप्ता सा सद्य एव निषादसदनं गता निषादकन्या संवृत्ते। स च सिंहविक्रमः शोकादनुतप्य शुकः तद्भार्य्या चारण्यशूकरी समभवन्। सोऽयं शुकः पुराधीतं तपोबलात् वेत्ति। तदस्य चित्रां कर्म्मगतिं दृष्ट्वा मया हसितम्। एतां कथामसौ राजसदसि समुक्त्वा विमोक्ष्यते। सोमप्रभश्च अस्य सुतां निषादीत्वमाप्तां मकरन्दिकां शूकरजन्मनि प्राप्स्यति। मनोरथप्रभा च तं सम्प्रति जातं भूमिपं रश्मिमन्तं मुनिसुतं तदैव सम्प्राप्स्यति।

अथ सोमप्रभः पितरं दृष्ट्वा तदाश्रमे स्वप्रियावाप्तये साम्प्रतं शर्वमाराधयन् स्थितः। ततो येन अहं कृपया आश्रमं नीतः, स मरीचिमुनिस्तत्र मां गृहीत्वा अवर्णयत्, अहञ्च जातपक्षः पक्षित्वसुलभाच्चापलात् इतस्ततः परिभ्रमन् प्रदर्शयंश्च विद्याश्चर्य्यं क्रमात् निषादहस्ते पतितस्त्वदन्तिकं प्राप्तः। इदानीञ्च मे पक्षियोनिजं दुष्कृतं क्षीणम् इति तस्मिन्नृपसदसि कथामुक्त्वा विरते तस्मिन् विदुषि शुके सपदि स सुमनोमहीपतिः प्रमोदतरङ्गितविस्मृतान्तरात्मा समभवत्।

अत्रान्तरे भगवानुमापतिः परितुष्य स्वप्ने तं सोमप्रभ·

मादिशत् राजन्! उत्तिष्ठ, सुमनोमहीभृतः सकाशं व्रज, तत्र कन्यां प्राप्स्यसि। सा मकरन्दिका पितृशापतो निषादी- भूत्वा मुक्तालताख्या अभूत्। सा अधुना स्वं पितरं शुकतां गतमादाय अस्य राज्ञः सुमनोमहीपालस्य सकाशं गता। तत्र त्वां विलोक्य विनिवृत्तशापा स्वां वैद्याधरीं जातिं स्मरिष्यति। दृष्ट्वा चान्योन्यं युवयोरन्योन्यविज्ञानविवृद्ध- हर्षशोभी समागमः संभविष्यति। इति तं भूमिपतिं सोमप्रभं समादिश्य ताञ्च मनोरथप्रभां स्वभक्तां नक्तं कृपा- परः समादिशत् भद्रे! योऽयं रश्मिमान् नाम मुनिसुतस्त्वया वरोऽङ्गीकृतः, स सम्प्रति सुमनोऽभिधः नृपः सञ्जातः। तत्तत्र त्वं गच्छ, त्वां दृष्ट्वा स स्वजातिं स्मरिष्यति। एवं ते सोमप्रभमनोरथप्रभे प्रभुणा स्वप्नादिष्टे तस्य नृपस्य सुम- नसः सभामीयतुः। सा तु निषादी मकरन्दिका तत्र सोमप्रभमागतं दृष्ट्वा संस्मृतजातिर्दिव्यं स्वं कलेवरं प्रपद्य शापमुक्ता कण्ठे परिजग्राह। सोऽपि सोमप्रभः गिरिजा- पतेः प्रसादात् तां विद्याधरराजपुत्रीं स्वीकृतदिव्यभोगल- क्ष्मीमिवावाप्य समाश्लिष्य च कृतार्थोऽभवत्। स च सुमनो- नृपस्तां मनोरथप्रभां दृष्ट्वैव स्मृतस्वजातिः पूर्वां नभसश्च्युतां तनुं प्रविश्य सहसा मुनिपुत्रो रश्मिमान् समभूत्, अगमच्च चिरोत्सुकस्तया स्वकान्तया सङ्गम्य तामादाय च स्वां पु- रीम्। शुकोऽपि पक्षियोनिं मुक्त्वा स्वतपोभिरर्जितां वैद्या- धरीं जातिमगच्छत्। इत्येवं देहान्तरितेऽपि देहिनामवश्यं सम्भविता समागमः। इति निजसचिवात् गोमुखात् अ- द्भुतां विचित्रां कथां निशम्य नरवाहनदत्तः भृशं परितुतोष।

## षष्टितमस्तरङ्गः ।



अथ गोमुखः सचिवाग्रणीर्विद्याधरीयुग्मकथामाख्याय पुनस्तं नरवाहनदत्तमभ्यधात् देव ! सामान्या अपि लोकद्वयहितैषिणः कृतबुद्धयः कामादेरपि आवेगं सहन्ते । तथा च शृणु कथयामि । आसीत् पुरा शूरवर्म्मा नाम कश्चित् कुलपुत्रः कुलधराख्यस्य महीपतेः सेवकः विख्यातपौरुषः । स खलु कदाचित् संग्रामागतः अशङ्कितं गृहं प्रविष्टः स्वां भार्य्यां स्वेनैव मित्रेण स्वैरसङ्गतामद्राक्षीत् । स तु दृष्ट्वा धैर्य्यात् क्रोधं नियम्य चिन्तयामास किमनेन मित्रद्रोहिणा पशुना निहतेन अनया वा पापया दुश्चारिण्या निगृहीतया, अहं वा एतेन पापभागिनात्मना किं करोमि इत्यालोच्य तावुभौ परित्यज्य उवाच पश्यतं युवयोर्यं पश्येयं पुनः, तमेव हन्यां, तस्मात् मम दर्शनगोचरं मा गच्छतम् इत्युक्तौ युक्तौ तौ क्वापि दूरतः प्रययतुः । ततश्च स अन्यां परिणीय सुनिर्वृतः समभूत् । देव ! एवं जितक्रोधा• नेव दुःखास्पदीभवन्ति, कृतबुद्धयश्च न जातु विपदा बाध्यन्ते । तिरश्चामपि प्रज्ञा श्रेयसे न तु पराक्रमः, तदिमां सिंहवृषादिसंवद्धां कथामाकर्णय ।

आसीत् क्वचित् नगरे कोऽपि धनवान् वणिक्पुत्रः । एकदा वाणिज्यार्थं मथुरां पुरीं व्रजतस्तस्य भारवोढा धुरं कर्षन् भरेण युगभङ्गतः गिरिप्रस्रवणोद्भूतकर्दमे स्खलितः

सञ्जीवको नाम वृषः पथि विचूर्णितैरङ्गैः पपात। तत्रा-भिघातनिश्चेष्टं निराश्वासं दृष्ट्वा आश्वासनासमर्थः स वणिक्पुत्रस्तं त्यक्त्वा जगाम। स तु सञ्जीवकः दैवात् समाश्वस्तः शनैरुत्थाय मृदूनि शष्पाणि अश्नन् क्रमेण प्रकृतिमगमत्। गत्वा च यमुनातीरे हरितानि तृणानि समास्वाद्य स सच्छन्दचारी क्रमात् सम्पुष्टाङ्गो बलवांश्चा-भवत्, व्यचरच्च पीनककुत् माद्यन् वृषेन्द्रोपमः।

अत्रान्तरे पिङ्गलको नाम कश्चित् सिंहः विक्रमेण काननमाक्रामन् समध्युवास। तस्य मृगपतेः द्वौ मन्त्रिणौ जम्बूकावास्ताम्। एको दमनको नाम, अपरः करटकः। स चैकदा सिंहस्तोयार्थमागमत् यमुनातटम्, अश्रौषीच्च तस्यारात् सञ्जीवककुद्मतो नादम्। श्रुत्वा चाश्रुतपूर्वं दिक्षु मूर्च्छितं तं नादं सिंहोऽचिन्तयत् वत कस्यायमी-दृशो नादः। नूनमत्र महत् किञ्चित् सत्त्वं तिष्ठति, तन्नि दृष्ट्वैव मां हन्यात् वा वनादस्मात् प्रवासयेत्। इति सोऽपि अपीतपानीयस्तस्मात् प्रदेशात् वनं गच्छन् भीतः सिंहः निगूढाकारमनुगेषु व्यतिष्ठत।

अथ प्राज्ञः स्वमन्त्री दमनको नाम जम्बूकः द्वितीयं मन्त्रिणं करटकमवदत् सखे! अस्मत्स्वामी पानीयार्थी गतः अपीत्वैव पानीयं कथं त्वरितमागतः, भद्र! अत्र कारणं प्रष्टव्यम्। ततः करटकोऽब्रवीत् अस्माकं नैष व्यापारः, त्वया किं कीलोत्पाटनात् कपेर्वृत्तान्तः न श्रुतः? नगरे क्वापि केनापि वणिजा देवतागृहं कर्त्तुं बहूनि दारूणि सञ्चितानि। तत्र कर्मकराः क्रकचैः काष्ठं पाटितं

कृत्वा यावत् यन्त्रस्थं कीलं स्थापयित्वा गृहमगच्छन्, तावत् आगत्य कश्चिद्वानरश्चापलात् प्लुतः कीलव्यस्तविभागेऽपि काष्ठे समुपाविशत् । तत्रोपविश्य खण्डितयोः काष्ठांशयोरभ्यन्तरे निक्षिप्तलाङ्गूलः यावत् हस्ताभ्यां निरर्थकं कीलमुत्पाटयति तावत् कीलोत्पाटनसमकालमेव काष्ठखण्डनिबद्धलाङ्गूलमपाकर्त्तुमशक्नुवन् पञ्चतामवाप । एवं यस्य यत् कर्म्म न, स तत् कुर्वन् विनश्यति । तस्मात् मृगराजस्य आशयेन विज्ञातेन किं नः प्रयोजनम् । एतत् करटकादाकर्ण्य धीरो दमनकः प्रत्यवादीत् प्रभोरन्तः प्रविश्य सर्वथा बुधैः परिचरणीयं, कोऽहि नाम केवलं स्वोदरपूरणं न कुरुते ? एवं दमनकेनोक्तः साधुः करटकः प्राब्रवीत् स्वेच्छया प्रभोरन्तःप्रवेशः सेवकस्य धर्म्मः न इति करटकेनोक्तो दमनकः प्रत्यवोचत् मैवं सर्वो हि आत्मानुरूपं फलं वाञ्छति ? श्वा तुष्यति अस्थिमात्रेण, केशरी द्विपमभिधावति । एतत् श्रुत्वा करटकोऽवादीत् यद्येवं कृते स्वामी क्रुध्यति तर्हि विशेषफलं कुतः ? ईश्वरा हि अतिकर्कशाः स्तब्धाः हिंस्रजन्तुपरिवृताः पर्वता इव दुरासदा विषमाश्च । ततो दमनकोऽवादीत् सत्यमेतत् यस्तु बुधः, स स्वभावानुप्रवेशेन शनैः प्रभुं स्वीकरोति । ततः स करटकेन एवं कुर्विति अभिहितो दमनकः तस्य सिंहस्य अन्तिकमुपाययौ । उपेत्य च तं स्वामिनं पिङ्गलकं सिंहं प्रणिपत्य उपविष्टः सप्रश्रयं व्यज्ञापयत् प्रभो ! अहं क्रमागतस्तव हितकरो भृत्यः, हितः परोऽपि स्वीकार्य्यः, स्वोऽपि अहितः परं हेयः । अन्यतो मूल्येनापि क्रीत्वा हितः मार्जारः पोष्यते,

भक्षितो गृहजातोऽपि मूषकः हन्यत एव। भूतिमिच्छता हितैषिभ्यो भृत्येभ्यः श्रोतव्यं तैश्च अपृष्टैरपि काले प्रभोर्हितं कर्त्तव्यम्। तस्मात् देव! विश्वसिषि चेत् न च कुप्यसि, नापि निह्नुषे नोद्वेगं जनयसि च तदहं किञ्चित् पृच्छामि। एवं दमनकेनोक्तः सिंहः पिङ्गलकः प्रत्यभाषत भद्र! त्वं हि मे विश्वासार्हः भक्तश्च, तन्निःशङ्कमुच्यताम्। इति पिङ्गलकेनोक्तो दमनकः प्राब्रवीत् देव! पानीयपानार्थी तृषितस्त्वं गतवान्, तदपीतजलः किमसि विमना इव त्वमागतः? एतत् तस्य वचनमाकर्ण्य स मृगेन्द्रो व्यचिन्तयत् अये! लक्षितोऽस्म्यहममुना, तत् किं भक्तस्य निगूह्यते इत्यालोच्य अब्रवीत् शृणु गोप्यं मे नास्ति त्वदन्तिके, मया जलपानार्थं गतेन अश्रुतपूर्वः कश्चित् नादः श्रुतः, न चाहं जाने आत्मनोऽधिकस्य कस्यचित् सत्त्वस्य तादृक् नादः सम्भवतीति अथवा प्रजापतेर्विचित्रा सृष्टिः, तेन च देहप्रविष्टेन मे न शरीरं न च वनं प्रीतिकरमिदानीं, तस्मात् मया इतोऽन्यत्र गन्तव्यम् इति वादिनं सिंहं दमनकोऽब्रवीत् देव! शूरः सन् कथं वनमिदं त्यक्तुमिच्छसि? जलेन सेतुर्भज्यते, कर्णजपेन स्नेहः, अरक्षणेन मन्त्रः तथा शब्दमात्रेण कातरः। ते चापि यन्त्रादिशब्दाः एवं भयङ्करा भवन्ति, तस्मात् प्रभो! परमार्थमविज्ञाय न भेतव्यं तथा हि भेरीगोमायुकथामेतां कथयामि आकर्ण्यताम्।

आसीत् पुरा क्वापि वनोद्देशे कोऽपि गोमायुः। स एकदा भक्ष्यार्थी भ्रमन् प्रवृत्तयुद्धात् प्रदेशात् गम्भीरमेकं नादं श्रुत्वा भीतस्तस्मात् ययौ, ददर्श च पथि अदृष्टचरां

पतितस्थितां भेरीम्। तद् दृष्ट्वा किमीदृशोऽपि कश्चित् प्राणी स्यात् य एवं शब्दं करोतीति संचिन्त्य यावत् निकटतामुपागतः पश्यति तावत् स नायं प्राणीति वायुना चालितेन शरस्तम्बेनाहतात् चर्म्मपुटात् शब्दोऽयं निःसरतीति च बुद्ध्वा भयं जहौ। तदेवं देव! शब्दमात्रेण भवादृशाः किं बिभ्यति। यद्यादिशसि तदाहं तत्तत् विज्ञातुं व्रजामि। इत्युक्तेन पिङ्गलकेन गच्छ, शक्तोऽपि चेत् इति गदितः स दमनकः यमुनातटमगात्। तत्र शब्दानुसारेण गत्वा तृणानि खादन्तं तं वृषभं ददर्श। ततश्च तस्यान्तिकमुपेत्य तेन परिचयं कृत्वा सिंहान्तिकं प्रत्येत्य च यथावस्तु सिंहाय शशंस। अथ सिंहेनोक्तं यदि त्वया महोक्षो दृष्टः कृतश्च तेन संस्तवः, तदिह युक्त्या तमानय, अहं पश्यामि कीदृशोऽयमिति। इत्युक्त्वा पिङ्गलकः सम्प्रहृष्टः तं तदनकं तस्य वृषभस्य अन्तिकं प्राहिणोत्। स च गत्वा तत्पार्श्वं प्राब्रवीत् भद्र! एहि तुष्टोऽस्मत्स्वामी मृगाधिपस्त्वामाह्वयति। वृषभस्तु तदाकर्ण्य भयात् यदा न प्रतिपेदे तदासौ पुनर्वनं गत्वा स्वामिने तस्य अभयं निवेद्य पुनरागत्य तं वृषभं सञ्जीवकं सिंहान्तिकमनैषीत्। स च सिंहः आगतं तं प्रणतं दृष्ट्वा कृतादरः प्रोवाच भद्र सञ्जीवक! इहैव त्वं मत्पार्श्वे अकुतोभयस्तिष्ठ। तथेति प्रतिपद्य स्थितेन तेन वृषेण शनैः सः सिंहस्तथा उपचरितः यथा स सिंहः अन्यविमुखः तद्वश एवाभवत्। ततो दमनकः करटकं रहोऽवादीत् पश्य, स्वामी सञ्जीवकेन हृतः नास्मानवेक्षते। एक एवासौ आमिषं भुङ्क्ते, नावाभ्यां

भागं ददाति। मूढ़बुद्धिः प्रभुरद्य उक्ष्णा न्यायं शिक्ष्यते, मयैव दोषः कृतः अमुमत्रानयता। तत्तथाहं विधास्ये यथा-ऽमुष्णा अचिरात् विनश्यति, प्रभुश्च अस्थानव्यसनात् निव-र्त्तते। एतद्दमनकादाकर्ण्य करटकोऽब्रवीत् सखे! भवते-दाधुना अशक्यसाधनं कर्त्तुं शक्यते। ततो दमनकः प्रत्य-वादीत् प्रज्ञया ध्रुवं शक्ष्यामि, आपदि यस्य प्रज्ञा न हीयते, स किं कर्त्तुं न शक्नोति? तथाच वकहर्त्तुर्मकरस्य कथा-माकर्णय।

आसीत् पूर्वं मत्स्याढ्ये क्वचित् सरसि कोऽपि वकः। तस्य दृष्टिभयात् तत्रस्थाः मत्स्याः पलायन्ते। स च वकः मत्स्यानप्राप्य तान् मृषाब्रवीत् भद्राः! इह कश्चित् जालवान् मत्स्यादः आगतः, स जालेन युष्मान् गृहीत्वा अचिरात् हनिष्यति। तन्मम वचसि विश्वासश्चेत्, कुरुध्वं मद्वचनम्। अस्ति एकान्ते स्वच्छं सरः, यत्र ज्ञातं धीवरैः। युष्माकं तत्र निवासार्थम् अहं क्रमशः एकैकं नेतुं तत्र इच्छामि। तदा-कर्ण्य सभयैस्तैर्मत्स्यैर्जड़बुद्धिभिरुक्तम् एवं कुरुष्व, वयं सर्वे त्वयि विश्वस्ता इति। ततो वकस्तान् क्रमेण नीत्वा शिला-तले क्वचित् निक्षिप्य एकैकं भक्षयामास। अथ तान् मीनान् नयन्तं वकं दृष्ट्वा तत्सरोगतो मकरस्तं वत्स क्व नयसि मीनानिति पप्रच्छ। ततस्तं स तदेवाह यत् मत्स्या-नन्यान् पूर्वम्। ततश्च सत्वरा तेनोक्तं तर्हि मामपि तत्र नय। ततोऽसौ यावद् वकेन शिलातले न्यस्तः, तावत् स धीमान् मकरस्तस्य वञ्चकस्य वकस्य शिरश्चकर्त्त, शशंस चा-गत्य तद्वार्त्तां सर्वान् मत्स्यान्। ते चापि तं प्राणप्रदा-

यिनं तुष्टाः समभ्यनन्दयन्। तस्मात् प्रज्ञैव बलं निष्प्रज्ञस्य किं बलेन? अत्र च सिंहशशयोरपरां कथां शृणु।

आसीत् कस्मिंश्चिद् वने कोऽपि अपराजितः सिंहः। स च यं यं सत्त्वमग्रतोऽपश्यत् तं तमेव तत्क्षणात् न्यपातयत्। ततस्ते सर्वे सम्भूय जन्तवस्तं सिंहमभ्येत्य अभ्यभाषन्त प्रभो! तव आहारार्थं प्रत्यहमेकैकं मृगं प्रेषयामः, तत् कथं युगपत् सर्वान् विनाश्य स्वार्थहानिं करोषि। इति तेषां वचनमाकर्ण्य स सिंहस्तथेति प्रत्यपद्यत एकैकञ्च जन्तुं तैः प्रेषितमन्वहमभक्षयच्च।

कदाचित् शशकस्य वारः कस्यचिदायातः। स तु सर्वैः प्रेषितो गच्छन् व्यचिन्तयत् स खलु धीरः य आपद्यपि न मोहमापद्यते। तदत्र उपस्थिते मृत्यौ युक्तिं कामपि करोमि, इत्यालोच्य कृतविलम्बः स शशकस्तं सिंहमभ्यगात्। तमागतं दृष्ट्वा केशरी प्राब्रवीत् अरे! कथं त्वया ममाहारवेला व्यतिक्रान्ता, रे शठ! वधादपि किं ते अभ्यधिकं मया कर्तव्यम्? इत्युक्तवन्तं सिंहं स शशकः प्रणम्य प्रावोचत् देव! नात्रास्ति मे दोषः, अद्याहं सवयस्य आगच्छन् पथि द्वितीयेन सिंहेन विधृत्य चिरादुज्झितः, तदाकर्ण्य लाङ्गूलमास्फाल्य क्रोधारुणनयनः सिंहः समब्रवीत् कोऽयं द्वितीयः सिंहस्त्वया दर्श्यताम्। सोऽपि शशकः आगत्य प्रभो! दृश्यतामिति तं निनाय। ततोऽन्वागतं सिंहं शशः दूरं कूपान्तिकं नीत्वा इहान्तःस्थं रिपुं पश्येत्युक्तवान्। ततस्तत्र सिंहः कूपनिक्षिप्तदृष्टिर्यदा स्वं प्रतिबिम्बं पश्यति तावत् स गर्जन् स्वनादप्रतिनादमाकर्ण्य

सकोपः आत्मानं कूपे निक्षिप्य प्राणान् अत्याक्षीत्। शशस्तु स्वप्रज्ञया अखिलान् मृगान् तस्या आपदो मोचयित्वा तं वृत्तान्तं तेभ्यः समाख्याय तानभ्यनन्दयत्। तदेवं प्रज्ञैव परमं बलं न तु पराक्रमः यत्प्रभावेण शशकेनापि केशरी निहतः। तदहं प्रज्ञयैव स्वमीहितं साधयामि। एवं दमनकेनोक्तः करटकः तूष्णीमभवत्। ततो दमनकः तस्य स्वामिनः सिंहस्य अन्तिके एकदा विमना इव तस्थौ। पृष्टश्च तेन प्रभुणा वैमनस्यकारणं सः कृताञ्जलिर्जनान्तिकमब्रवीत् देव ! बुद्ध्वा तूष्णीं स्थातुं न युज्यते अतस्त्वां ब्रवीमि यदि स्वामिनो हितमिच्छेत् तदा अनियुक्तोऽपि ब्रूयात्, तदन्यथा बुद्धिं विहाय इमां मे विज्ञप्तिमाकर्णय। योऽयं वृषः सञ्जीवको नाम त्वया परिपाल्यते, अयं त्वां हत्वा राज्यं चिकीर्षति, अनेन मन्त्रिणा सता त्वं भीरुरिति निश्चितः। पश्य त्वां जिघांसुरसौ निजायुधं शृङ्गयुग्मं धूनोति, अयञ्च प्रत्यहं सर्वान् प्राणिनः प्रत्यहं निर्भया जीवथ यूयं तृणाशनोऽहं राजा युष्माकं भविष्यामि, तदेतं दुर्मदं मांसभोजिनं मृगेन्द्रं युक्त्या निहन्मि इत्यादिभिरन्यैश्च समाश्वासयति। तदेतं वृषभं चिन्तय अस्मिन् ते शुभमस्ति न वेति। एवं दमनकेनोक्तः पिङ्गलकस्तमभ्यधात् बलीवर्दो वराकोऽयं किं मे तृणभुक् कुर्य्यात्, दत्ताभयं शरणागतमेनं कथं वा हन्याम्। एतदाकर्ण्य दमनकः प्राह मा एवमादिशतु प्रभुः। राज्ञा कस्तुल्यः क्रियते तथा श्रीश्च यदा द्वयोर्दत्तपदा तुल्यबलयोः तदा चला एव चिरं न स्थातुं शक्नोति एकञ्च विमुञ्चति। यश्च प्रभुः हितं द्वेष्टि,

अहितञ्च सेवते, स वैद्यैर्दुष्टरोगीव वर्जनीयः। प्रथममप्रियस्य परिणामे हितस्य वक्ता श्रोता च यत्र स्यात् तत्रैव श्रीः पदमादधाति। यः सतां मन्त्रं न शृणोति प्रत्युत असतामेव शृणोति, स खलु अचिरादेव विपदं प्राप्य अनुतप्यते। तद् देव! अस्मिन् वृषे कस्तव स्नेहः? अस्य वा त्वयि कः? द्रुह्यतश्च अभयदानं किम्? शरणागतता वा का? किञ्च देव! नित्यं तव पार्श्वे सन्निहितस्य गोः मूत्रपुरीषयोः कीटाः प्रजायन्ते, ते च मत्तकरीन्द्रदन्ताघातव्रणाङ्कितं तव शरीरं नित्यं पीड़यन्ति, तदस्य युक्तितो बध एव श्रेयान्। विपश्चित् यदि दुर्जने स्वयं प्रतिक्रियां न करोति तदासौ क्रमशः सङ्गात् महान् समुत्पद्यते, तदत्र कथामेतामाकर्णय।

आसीत् कस्यापि राज्ञः शयने कुतश्चिदागता मन्दविसर्पिणी नाम अलक्षिता कापि यूका। अकस्माच्च कुतोऽपि पवनेरितः समुपेत्य टिट्टिभो नाम दंशस्तं शयनीयं विवेश। कथं त्वं मम निवासमागतः, तदहमन्यतो व्रजामि इति तया मन्दविसर्पिण्या स दृष्टो अभिहितः। भद्रे! अपीतपूर्वं राजासृक् पास्यामि, मे प्रसीद, देह्यत्र मे वस्तुमिति स टिट्टिभस्तामब्रवीत्। सा तु तदनुरोधात् सायं प्रत्यवादीत् सखे! यद्येवं तदास्व, किन्त्वस्य राज्ञो देहे त्वया अकाले न दंष्टव्यम्, अस्य तु सुप्तस्य रक्तासक्तस्य वा लघुदंशः दातव्यः। तदाकर्ण्य तथेति सोऽत्र टिट्टिभस्तस्थौ। ददंश चाशु नक्तं शय्यागतं तं राजानम्। ततश्च हा दष्टोऽस्मीति ब्रुवन्नुत्तस्थौ। ततस्तस्मिन् शठे दंशे

त्वरितं पलायिते विचित्य राजभृत्यैः सा यूका अलभ्यत न्यपात्यत च। एवं टिट्टिभसंसर्गात् वराकी यूका नष्टा तत् सञ्जीवकसङ्गस्ते नैव शिवाय भविष्यति। न मे विश्वसिषि चेत् स्वयं तं शूलपातयोः शृङ्गयोर्दर्पात् शिरो धुन्वानं द्रक्ष्यसि। इत्युक्त्वा तेन दमनकेन विकृतिं नीतोऽसौ सिंहः तं सञ्जीवकं हृदा वध्यममंस्त।

ततोऽसौ दमनकस्तस्य आशयं बुद्ध्वा तत्क्षणात् विषण्ण इव सञ्जीवकस्य अन्तिकमुपागात्। तदवलोक्य सञ्जीवकस्तमब्रवीत् मित्र! किमीदृगसि, अपि कुशलं ते शारीरम्? इत्येवं वृषेण पृष्टः स जगाद सखे! कथमेवम् अस्माकं सदा कुशलम्? को हि राज्ञां सदा प्रियः? कश्चार्थी न लघुतां गच्छति? कश्च कालस्य गोचरतां न प्राप्नोति? इत्युक्तवन्तं तं सञ्जीवकः पुनः पप्रच्छ। वयस्य! किमस्यद्य उद्विग्न इवाद्य कथ्यताम्। ततो दमनकोऽब्रवीत् शृणु यदहं त्वत्प्रीत्या वदामि। अद्य जडोऽसौ मृगराजस्ते विरुद्धः निरपेक्षः अस्थिरस्नेहः त्वां भित्त्वा भोक्तुमिच्छति। अस्य च हिंस्रं स्वभावं पश्यामि। एतद् दमनकवचः पूर्वप्रत्ययात् ऋजुमत्या सत्यं विचिन्त्य च विमनाः प्रत्यभाषत धिक् सेवाप्रतिपन्नं क्षुद्रं क्षुद्रपरिग्रहं प्रभुं, यः सहसा वैरित्वमेति, तद्विमामत्र कथां शृणु।

आसीत् मदोत्कटो नाम कश्चित् सिंहः। तस्य त्रयोऽनुचरा द्वीपिवायसजम्बूकाः। स कदाचित् वने सार्थभ्रष्टम् एकमुष्ट्रमद्राक्षीत्। कोऽयं प्राणीति सविस्मये मृगाधिपे ब्रुवति देशदर्शी वायसः उष्ट्रोऽयमिति प्राह स्म।

तैंतस्तेन सिंहेन कौतुकात् दत्ताभयस्तमानीय स्वान्तिके अनुचरीकृत्य स्थापयामास। एकदा वन्येन केनचित् गजेन युध्यमानस्य तस्य मदोत्कटस्य शरीरे गजदन्तप्रहारैर्महती व्यथा सञ्जाता, तेन गतसामर्थ्यः स बहून् क्लेशाननुभवन् तैः तैरनुचरैः सह उपवासमकरोत्। ततः क्लान्तोऽतितरां स सिंहः क्षुत्परीतः भ्रमन् न किञ्चिदपि सत्त्वमाससाद। उवाच च तान् भृत्यान् किं कार्य्यमिदानीं कर्त्तव्यमिति। ते प्रोचुः प्रभो! वाच्यमस्माभिर्युक्तम् उष्ट्रेण सार्कं भवतो मैत्री का? अयं तृणाशनः, वयन्तु मांसादाः, तदयं प्रभोर्भक्ष्य एव, बहूनामर्थे च एकस्य नाशनं नैवायुक्तमामनन्ति विद्वांसः। यदि दत्ताभयमेनं कथं हन्मि इति प्रभुर्णोच्यते, तथाप्ययं स्वयमेवात्मानं प्रभवे यथा दद्यात् तथा यतिष्यामः, तथात्वे स्वयं बधदोषो नैव स्यात्। इत्युक्ते तेनाभ्यनुज्ञातः स वायसस्तं दासेरकमुपेत्य अवादीत् एषोऽस्माकं स्वामी क्षुधाक्रान्तः, अस्माकन्तु नास्ति किमपि, तद्वयमस्य आत्मप्रदानेन प्रियमाचरामः। इत्युक्ते वायसेन स उष्ट्रोऽपि तथैव प्रत्यपद्यत। ततः काकोऽब्रवीत् स्वायत्तं मामधुना भुक्त्वा प्राणान् धारयतु देवः। ततः सिंहोऽब्रवीत् क्षुद्रस्त्वं किं त्वया भक्षितेन इति। ततो जम्बूकेनोक्तं देव! मां भक्षय। सिंहस्तमपि तथा निराचकार। ततो द्वीपी अवदत् भुङ्क्ष्व मां देव इति। तमप्यसौ नखायुध इति न स्वीचकार। अथोष्ट्रोऽवदत् प्रभो! मां भक्षयतु। ततः सर्वे तं तं खण्डशः कृत्वा यथासुखमभक्षयन्। तदेवं केनापि पिशुनेन विधिना 'एष पिङ्गलको मयि प्रेषितः,

अधुना विधिरेवात्र प्रमाणमिति गृध्रोऽपि राजा हंससहचरः सेव्यः, न तु गृध्रानुचरः राजा हंसः, किमपरैः। एतत् सञ्जीवकादाकर्ण्य कुटिलो दमनकः प्राब्रवीत् सखे! धैर्य्येण सर्वं साध्यते, शृणुत्र एकां कथां कथयामि।

अस्ति कोऽपि टिट्टिभः पक्षी सभार्य्यो वारिधेस्तटे। कदाचित् सगर्भा टिट्टिभी तं भर्त्तारमवदत् एहि नाथ! क्वापि गच्छावः, अत्र प्रसूताया मे अपत्यानि अम्भोधिरय मूर्म्मिणा कदाचित् हरेत्। एतत् प्रियावचः समाकर्ण्य टिट्टिभोऽब्रवीत् प्रिये! न शक्नोत्ययमम्बुधिर्मया सार्कं विरोधमाचरितुम्। तदाकर्ण्य टिट्टिभी अवदत् मैवं का तव तुला अम्बुधिना? हितोपदेशः अनुष्ठेयः, अन्यथा विनाशः स्यात्, अत्रैतां कथामाकर्णय।

आसीत् कोऽपि कम्बुग्रीवाख्यः कूर्म्मः क्वचित् सरसि। तस्यास्तां द्वौ सुहृदौ विकटसङ्कटौ नाम।

एकदा अवग्रहक्षीणजले सरसि तौ अन्यसरो गन्तुकामौ हंसौ कूर्मो जगाद मित्रे! युवां यत्र गन्तुमुद्यतौ तत्र मामपि नयतम्। तदाकर्ण्य तौ सुहृदौ मित्रं कूर्म्ममूचतुः यत्रावां गन्तुमुद्यतौ, तत् सरोऽतिदवीयः, तत्र चेत् तव गन्तुमिच्छा, तर्हि कथामस्माकं शृणु, दिवि व्रजन् आवाभ्यां धृतामेतां यष्टिं गृहीत्वा निरालापो अवतिष्ठेथाः अन्यथा भ्रष्टः व्यापत्स्यसे। तदाकर्ण्य तथेति दत्तास्तयष्टिना तेन कूर्मेण सह तौ गृहीतयष्टिकौ हंसौ नभ उत्पेततुः। क्रमात् तत्सरःसमीपं प्राप्तौ कूर्म्महारिणौ तौ तदधोवर्त्तिनगरनिलया जना अपश्यन्। किमेतत् नीयते

हंसाभ्यां चित्रमेतत् इति तैः कृतं कलरवं स चपलः कूर्मोऽशृणोत्। कुतोऽयं कलकलः अधस्तात् इति मुखात् तां यष्टिं विसृज्य तौ हंसौ पृच्छन् भ्रष्टः भुवि पतितः तैर्जनैर्निहतः। एवं बुद्धिच्युतो जनः यष्टिच्युतः कूर्म इव नश्येत्। इत्थं तयोक्तष्टिट्टिभः तां व्याजहार सत्यमेतत् प्रिये! किन्तु त्वमपि ममैतां कथां शृणु।

पुरासन् क्वापि ह्रदे त्रयो मत्स्याः। अनागतविधाता एकः, प्रत्युत्पन्नमतिर्द्वितीयः, यद्भविष्यस्तृतीयः, ते च त्रयः सहचारिणः। ते कदाचित् तेन मार्गेण गच्छतां दासानाम् अहो अस्मिन् ह्रदे बहवो मत्स्याः सन्तीति वचः अशृण्वन्। तेन च दासैरात्मवधमाशङ्क्य स अनागतविधाता नदीस्रोतः प्रविश्य अन्यत् सरो ययौ। प्रत्युत्पन्नमतिस्तु विशङ्कित एव तत्रासीत्। अहं ते भयं प्रतिविधास्यामि इति तं समाश्वास्य यद्भविष्यस्तत्र निर्भयो व्यतिष्ठत।

अथ ते धीवराः समागत्य तस्मिन् ह्रदे जालं न्यक्षिपन्। सद्यः तैर्जालोत्क्षिप्तः स प्रत्युत्पन्नमतिः सुबुद्धिः आत्मानं निष्पन्दं कृत्वा मृत इवातिष्ठत्। स्वयं मृतोऽयमिति तेषु तिमिघातिषु अघ्नत्सु स सहसा नदीस्रोतसि पतित्वा द्रुतमन्यतोऽगच्छत्। स तु यद्भविष्यः जालान्तः पतन् उद्वर्त्तननिवर्त्तनानि कुर्वन् मन्दबुद्धिर्गृहीतो निहतश्च। तस्मात् विपत्पातं प्रतिविधास्यामि,नाहमम्बुधेर्भयात् अन्यतो यास्यामि। इत्युक्त्वा टिट्टिभो भार्यां तां स्वस्मिन्नेव नीड़े अवात्सीत्। अम्बुधिश्च तस्य साहङ्कारं तत् वचनमशृणोत्। गच्छति च काले कदाचित् तस्य भार्या टिट्टिभी प्रसूतवती। समुद्रश्च

स्वेनोर्मिणा तानि पश्यामि किमयं मां प्रति टिट्टिभः समाचरिष्यतीति कौतुकात् जहार। अथ सा टिट्टिभी तदेतत् व्यसनं प्राप्तं यन्मया तव पुरतः प्रोक्तम् इति रुदती व्याहरत्। ततः स टिट्टिभः धीरस्तां प्रियामभाषत। पश्य प्रिये! किमहमस्य पापस्य जलधेः करोमीति। इत्यभिधाय सर्वान् पक्षिणः सम्भाय स्वं परिभवं वदन् तैः सह प्रभुं गरुड़ं शरणं ययौ। उवाच च प्रभो! सति नाथे त्वयि अब्धिना अनाथमिव मां पराभूय अण्डा ममापहृताः। ततः क्रुद्धेन पक्षिराजेन विज्ञप्तो हरिरम्बुधिम् आग्नेयास्त्रेण संशोष्य टिट्टिभाण्डानि अदापयत्। तस्मात् धीमता अत्यक्तधैर्य्येण आपदि भाव्यं, यद्‌ भवतु इदानीं ते उपस्थितं पिङ्गलकेन सह युद्धम्। तत्त्वम् उत्क्षिप्तलाङ्गूलः चतुर्भिः पादैः समं तदा त्वमुत्थास्यसि यदा स त्वां प्रति आक्रमिष्यते। एवं तं सञ्जीवकमुक्त्वा स दमनकः गत्वा करटकाय सिद्धं कार्य्यमभ्यधात्। ततः सञ्जीवकः शनैः स्वप्रभोश्चित्तमिङ्गितैर्जिज्ञासुः पिङ्गलकान्तिकमगात्। अद्राक्षीच्च उत्क्षिप्तलाङ्गूलं समाङ्कितं तं युयुत्सुं सिंहम्। सिंहोऽपि तं शङ्कया समुद्धृतमस्तकं सञ्जीवकम्। अथोत्पत्य स सिंहः नखैस्तस्मिन् वृषे प्राहरत्। वृषोऽपि तस्मिन् सिंहे शृङ्गाभ्याम्। इत्यमुभयोराहवः प्रावर्त्तत। तच्च दृष्ट्वा साधुः करटकः दमनकमब्रवीत् सखे! किमिदानीं स्वार्थसिद्धये प्रभोर्व्यसनं त्वयोत्पादितम्। प्रजासन्तापेन सम्पद्‌, शाठ्येन मैत्री, तथा पारुष्येण कामिनी न खलु चिरस्थायिनी भवेत्। अलं वा यः हितवाक्यावमा-

मिलो बहु ब्रूते, स तस्मात् कपिः सूचीमुख इव बहुदोषं लभते।

आसन् पूर्वमरण्ये बहवो वानरा यूथचारिणः। ते खलु शीते खद्योतं दृष्ट्वा अग्निरयमित्यमन्यन्त। ततस्ते तस्मिन् तृणपर्णानि विन्यस्य अङ्गान्यतापयन्। तेषान्त्वेकः मुखानिलैः खद्योतमधमत्। तदवलोक्य तत्रस्थः पक्षी सूचीमुखो नाम तं प्राह न एषः अग्निः, खद्योतोऽयं, मा क्लेशमनुभूरिति। तदाकर्ण्यापि अनिवृत्तं तं सः पक्षी वृक्षादभ्येत्य तथैव न्यवारयत्। तेन च पुनर्निर्बन्धेन स कपिश्चुकोप। चूर्णयामास च तं सूचीमुखं क्षिप्तया शिलया। तस्मात्तस्य न वक्तव्यं यः हितं न शृणुते। तदहं किं वदामि, अनयोर्भेदस्त्वया दुष्टया बुद्ध्या कृतः, परमेतन्न शुभमावहति। तदत्र कथामेतामाकर्णय।

पूर्वमास्तां द्वौ भ्रातरौ वणिक्सुतौ धर्म्मबुद्धिः दुष्टबुद्धिश्च। तौ धनोपार्जनार्थं पितुर्गेहात् देशान्तरं गत्वा स्वर्णदीनारसहस्रद्वयमुपार्जितवन्तौ। आगतवन्तौ च तदादाय समुत्सुकौ पुनः स्वं नगरम्। आगत्य च स्वनगरं तौ एकं दीनारशतं विभज्य वृक्षमूले तान् दीनारान् अवशिष्टान् निचख्नतुः। एकदासौ दुष्टबुद्धिरेकाकी गत्वा तस्मात् तरुतलात् स्वैरं तान् सर्वान् दीनारान् स्वयमग्रहीत्। अथ मासमात्रे गते स दुष्टबुद्धिस्तं धर्म्मबुद्धिमब्रवीत् एहि विभजावस्तान् दीनारान् अस्ति मे बहुव्ययः। तदाकर्ण्य धर्म्मबुद्धिस्तथेति तेन सह गत्वा तत् वृक्षमूलं यत्र तौ दीनारान् निहितवन्तौ निचखान। यदा च खनित्वापि

दीनारा न दृष्टाः तदा शठोऽसौ दुष्टबुद्धिः सविषादं धर्म्मबुद्धिमभ्यधात् दुरात्मन्! नीताः खलु त्वयैव ते दीनाराः, तद्देहि मे तदर्द्धमिति। न मया नीतास्ते, त्वयैव नीता इति स तमाह स्म। एवमन्योन्यं कलहे संप्रवृत्ते स दुष्टबुद्धिः शिरसि कराघातं कुर्वन् राजकुलं तं धर्म्मबुद्धिमनयत्। तत्र उभ स्वस्वपक्षौ तौ अनासादितप्रमाणौ राजपुरुषैर्विधृत्य स्थापितौ। अथ दुष्टबुद्धिस्तान् राजाधिकृतान् प्राब्रवीत् अत्र मम साक्षी वनदेवता विद्यते सा यद् वदिष्यति तदेव प्रमाणमवधार्य्यतां युष्माभिः। ते च राजपुरुषा विस्मिताः प्रातः स्वयमेव वयं प्रेक्षामहे इति समूचुः। ततस्तौ धर्म्मबुद्धिदुष्टबुद्धी उभौ दत्तप्रतिभुवौ विभिन्नौ विमुक्तौ स्वं स्वं गृहं जग्मतुः। दुष्टबुद्धिस्तु यथावत् वस्तु दत्तार्थं पितरं रहसि प्रोच्य अस्मिन्नेवाह्नि त्वं वृक्षकोटरं गत्वा तत्र स्थितः मम साक्षी भूया इत्यभाषत। बाढ़मित्युक्त्वा स तस्मिन्नेवाहनि तत्र गत्वा तस्य वृक्षस्य कोटरे तथैव स्थितः। अथ प्रातर्धर्म्माधिकरणिकैर्गत्वा यावत् पृच्छ्यते कस्तान् दीनारान् हृतवानिति तावत् स वृक्षकोटरगतः तयोः पिता दीनारा धर्म्मबुद्धिना हृता इति तान् स्फुटमवदत्। ततस्ते राजपुरुषाः तदसम्भाव्यं निश्चितं दुष्टबुद्धिना कोऽपि रात्रावत्र स्थापित इति निश्चित्य तत्कोटरे धूममददन्। तेन भयेनाघ्रातः स तस्मान्निर्गच्छन् अधोनिपत्य भुवि तयोः पिता पञ्चत्वमगात्। तदवलोक्य यथावस्तु विचार्य्य धर्म्मबुद्धये तान् सर्वान् दीनारान् दापयित्वा निकृत्तहस्तजिह्वस्तं दुष्-

बुद्धिं देशान्निरवासयन् । तदेवमन्याय्यया बुद्धया कृतं कार्य्यं नैव कदाचित् शुभमावहेत् । न्याय्यया तु बुद्धया वकेन अहेरिव प्रतीकारं कुर्य्यात् ।

पूर्वं कोऽपि भुजङ्गः वकस्य कस्यचित् जातं जातमपत्य मागत्य भक्षयामास, स तु वकः परं सन्तापमवाप । अथ कस्यचिदुपदेशात् तेन वकेन नकुलालयात् विल-मारभ्य मत्स्यमांसं व्यकीर्य्यत । नकुलश्च निर्गत्य तत्तत् मत्स्यमांसं खादन् विलप्रविष्टं तं भुजङ्गमवधीत् । एव-मन्यच्च कार्य्यं मे शृणु ।

आसीत् कश्चित् वणिक्सुतः पित्रर्थात् तुलाशेषः । स खलु लौहपलसहस्रेण घटितां तां तुलां कस्यापि वणिजो हस्ते निधाय देशान्तरमगात् । अथ तस्मादागतोऽसौ यावत् तं वणिजं तुलां न मार्गति तावत् स आखुभिर्भक्षितेति तमब्रवीत् । सोऽपि वणिक्पुत्रः सत्यं सुस्वादु तत् लौहं तेन तदाखुभिर्जग्धमिति हृदि हसन्नब्रवीत् अयाचत च तं वणिजं भोजनम् । सोऽपि सन्तुष्य तत् तस्मै दातुं प्रत्य-पद्यत । ततः स वणिक्सुतः अस्य वणिजः सुतं सहकृत्य स्नातुं प्रायात् । ततः स धीमान् वणिक्सुतः स्नात्वा अर्भकं तं कस्यचित् सुहृदो गेहे गुप्तं रचित्वा एक एव तस्य वणिजो गेहमाजगाम । क्वासौ मे अर्भक इति पृच्छन्तं तं वणिजं स वणिक्सुतः सविषादं श्येनेन केनचित् सन्निपत्य सोऽर्भको नीत इति प्रत्यवादीत् । त्वया मे पुत्रश्छादित इति क्रुद्धेन वणिजा राजकुलं नीतः स वणिक्तनयः । राजपुरुषेषु तेन तत्तथा भणितम् । सभ्यैश्च असम्भाव्यमिदं

श्येनो नयेदर्भकमिति अभिहितो वणिक्पुत्रः प्रत्यवादीत् यत्र देशे मूषकैर्महातुला भक्षिता तत्र श्येनो द्विपमपि न नयेत् किं पुनरर्भकम्। एतत् श्रुत्वा कौतुकात् पृष्टवन्तस्ते राजपुरुषा वणिजस्तस्मात् तां लोहतुलां वणिक्सुताय दापयित्वा च तमर्भकं प्रत्यर्पयन्तं वणिक्सुतमभ्यनन्दयन्। तदेवं चातुरी अवश्यमेव प्रकाशतां गता प्रयोक्तारं भृशमनुतापयतीति। एतत् करटकात् श्रुत्वा दमनको हसन् प्रत्यवादीत् मैवं किं वृषयुद्धे सिंहस्य पराजयोऽस्ति? क्वासौ मत्तेभरदनाघातघनव्रणाङ्कः केशरी, क्व वा प्रतोद-क्षतविग्रहो दान्तः वृषभः। यावत् तौ जम्बूकौ परस्परमित्थं जल्पतः, तावत् सिंहेनासौ सञ्जीवको युद्धे निहतः। तस्मिंश्च निहते स खलु दमनकः करटकेन समं तस्य मृगाधिपस्य पार्श्वे स्थितः सम्प्रहृष्टश्चिराय अप्रतिहतं मन्त्रित्वमवाप। एवं मन्त्रिवरात् गोमुखात् नीतिविदां बुद्धिविभवसम्पन्नां चित्रां कथामाकर्ण्य युवराजो भृशमनन्दत्।

---

## एकषष्टितमस्तरङ्गः।

ततः प्रियशशानिमित्तमुत्कण्ठितं तं नरवाहनदत्तं विनोदयन् गोमुखः पुनरभ्यभाषत। देव! त्वया प्राज्ञकथा श्रुता साम्प्रतं मुग्धकथामिमां शृणु।

पुरासीत् मुग्धबुद्धिर्नाम कस्यचिदाढ्यस्य वणिजः सुतः। स कदाचित् वणिज्यार्थे कटाहद्वीपमगात्। तस्य

भाण्डमध्ये महान् अगुरुसञ्चयः स्थितः। तत्र च विक्रेता कश्चित् परभाण्डस्य तस्य तत् अगुरु न जग्राह तत्र च यो जन आसीत् स तत्र तदस्तीति न विवेद। एकदा काष्ठिकेभ्यः अङ्गारान् विक्रीणती जनान् दृष्ट्वा स वणिक् जड़बुद्धिस्तदगुरु दग्ध्वा अङ्गारानकरोत्। तच्च अङ्गार-मूल्येन विक्रीय ततो गृहमागत्य च स तदात्मकौशलं शंसन् लोकेषु हास्यतामगमत्। तदेवमगुरुदाही कथितः, साम्प्रतं तिलकर्षकः श्रूयताम्।

अभूत् कश्चिद् ग्रामीणो भूतपूर्वकृषीबलः। स कदा-चित् तिलान् भृष्ट्वा भुक्त्वा च स्वादून् तानवेत्य भृष्टानेव तान् बहून् तादृशानेव प्राप्तुं भूमावपत्। अथ भृष्टेषु तेषु अजातेषु जना नष्टार्थं तमहसन्। तथा जले अग्नि-क्षेपकमधुना शृणु।

आसीत् कश्चित् मन्दबुद्धिः पुरुषः। स चैकदा निशायां प्रभाते देवतापूजां करिष्यामीति समचिन्तयत्। तदुपयुक्तौ मम स्नानधूपाद्यर्थौ जलानलौ एकत्र स्थापयामि, येन तौ शीघ्रं प्राप्नुयामिति। एवमालोच्य स जलकुम्भान्तः अग्निं क्षिप्त्वा सुष्वाप। प्रातश्च यावत् अग्निं नष्टम् अम्बु च शु-ष्कम् अङ्गारमलिनञ्च वीक्षते तावत् तस्य मुखं तादृगेवा-भवत्। तदवलोक्य जनः सहासोऽभूत्। तदेवम् अग्नि-कुम्भवार्त्ता श्रुता, साम्प्रतं नासिकारोपणमाकर्णय।

अभवत् कश्चित् मूढ़मतिः मूर्खः पुमान् क्वचिद् देशे। स कदाचित् भार्य्यां चिपिटघ्राणां गुरुञ्च उन्नतनासिकं दृष्ट्वा तस्य प्रसुप्तस्य गुरोर्नासिकां छित्त्वा अग्रहीत् अरोपयच्च

तां भार्य्याया नासिकां छित्त्वा तत्स्थानम्। सा च गुरु-नासा तस्या मुखे नैव आररोह। एवं तेन भार्य्यागुरू उभौ छिन्ननासौ कृतौ। अधुना वनवासी कश्चित् पशुपालः श्रूयताम्।

आसीत् कोऽपि पशुपालो वनी धनवान्। बहवो धूर्त्ताः समाश्रित्य तस्य मित्राणि अभवन्। ते च तं जगदुः सखे! कस्यचिदाढ्यस्य नगरवासिनः सुता त्वदर्थमस्माभिर्याचिता, सा च तत्पित्रा तुभ्यं दातुं प्रतिश्रुता। तदाकर्ण्य स तुष्टः तेभ्यः अर्थं ददौ। ततस्ते कतिपयैर्दिनैर्गतैस्तव विवाहः सम्पत्स्यते इत्यूचुः। तेन च स अतीव सन्तुष्टः तेभ्यः भूरीणि धनानि प्रादात्। अथ कियत्सु दिनेषु गच्छत्सु ते अभ्यभाषत सखे! पुत्रस्ते जात इति। स च तेन सर्वं तेभ्यः समर्प्य धनं भृशं ननन्द। अथापरेऽहनि पुत्रं प्रत्युत्सुकोऽहं सर्वं वित्तं दत्तवानिति प्रारोदीत्। तेन च सर्वो जनस्तं धूर्त्तवञ्चितं प्रति जहसुः। तदिदानीं देव! अलङ्कारलब्धकं शृणु।

कश्चिद् ग्राम्यः भूमिं खनन् रात्रौ राजकुलादपहृत्य चौरैस्तत्र रक्षितं महदलङ्करणजातं प्राप। स च तद्गृहीत्वा सहर्षः तेन स्वां भार्य्यामभूषयत्। मूर्ध्नि मेखलां जघने हारं करयोर्नूपुरौ कर्णयोश्च कङ्कणौ बबन्ध। अथ हसद्भिर्जनैः ख्यापितं तत् राजा बुद्ध्वा तस्मात् तत् सर्वमाभरणं जहार तञ्च पशुसमं मुमोच। तदेवं देव! अलङ्करणलब्धकः कथितः, साम्प्रतं तुलिकां वच्मि श्रूयताम्।

पुरा कश्चिन्मूर्खः पुमान् तूलविक्रयाय आपणमगात्।

तत्र तु कोऽपि जनः अशुद्धं तदिति न जग्राह । तावच्च स तत्र अग्नौ निक्षिप्तशोधितं हेम ददर्श । तद् दृष्ट्वासौ जडः तत् तूलं शोधयितुम् इच्छन् अग्नौ स्वर्णवच्चिक्षेप । ततश्च तस्मिन् दग्धे तत्रस्थो जनो जहास ।· श्रुतः अयं तूलिकः, साम्प्रतं खर्जूरीच्छेदकान् शृणु ।

कदाचित् कैश्चिदधिकारिभिः केचिद् ग्राम्या मूर्खाः राजकुलादिष्टखर्जूरानयनाय समाहूय न्ययुज्यन्त । ते च तत्र गत्वा सुखग्राह्यामेकां खर्जूरीं पतितां दृष्ट्वा स्वके ग्रामे अच्छिनन् अरोपयंश्च समाकृष्टफलानि सर्वाणि खर्जूराणि न चैषां परिश्रमः सिद्धिमवाप । ततश्चानीतखर्जूरास्ते कैरपि नादृताः, प्रत्युत राजा यथापराधं तानदण्डयत् । तदेवं खर्जूरवृक्षच्छेदका उक्ताः, साम्प्रतं निध्यालोकनमुच्यते शृणु ।

पुरा केनापि नृपतिना कोऽपि निधिदृष्टा समाहूतः । स तु क्वचिदपि पलाय्य न गच्छेदिति राज्ञः कुमन्त्रिणा तस्य निधिदर्शिनः नेत्रे समुत्पाटिते । इत्थं भूलक्षणानि द्रष्टुमक्षमं गतागतोः समं तं कुर्वन्नसौ मन्त्री जडो जनैः हसितः । तदेवं निधानालोकनं श्रुतं, साम्प्रतम् लवणाशी कथ्यते श्रूयताम् ।

अभवत् कश्चिद् गह्वरग्रामवासी जडः पुरुषः । स खलु नगरवासिना केनचिन्मित्रेण गृहं नीतः, भोजितश्च लवणस्वादूनि अन्नानि व्यञ्जनानि च । स च भुक्त्वा कथमेषा अन्नादेः स्वादुतेत्यपृच्छत् । स च सुहृत् लवणस्यैवं स्वादुतायां प्राधान्यमित्यवोचत् । तदेव तर्हि भोक्तव्यमिति प्रोच्य स पिष्टस्य लवणस्य मुष्टिमादाय मुखे प्रक्षिप्य अभ-

नयत्। तस्य च लवणस्य चूर्णं तस्य दुर्बुद्धेरोष्ठौ श्मश्रूणि च प्रक्षिपत्। तदवलोक्य हसतो जनस्य पुरतः लवणाग्निनो मुखं धावन्नयं ययौ। देव ! लवणाशी श्रुतः, अधुना गोदोहकं शृणु।

कश्चिदासीत् ग्राम्यः पुमान्। तस्यैका गौरभवत्। सा च धेनुस्तस्य पलशतं पयः प्रत्यहं प्रादात्। कदाचित् तत्प्रत्यासन्नः कश्चिन्महोत्सवः समवर्त्तत। एकवारमेव तस्याः प्राज्यं पय उत्सवे ग्रहीष्यामीति विचिन्त्य स मूर्खः माममात्रं तां न दुदोह। अथोत्सवे संप्रवृत्ते यावत् तां दोग्धि तावत्तस्या अखिलं पयो नष्टमैक्षत। तदवलोक्य लोका अहसन्। हे देव ! मूर्खो गोदोहकः श्रुतः सम्प्रति अपरौ श्रूयेताम्।

कश्चिदासीत् ताम्रकुम्भाभशिराः खलतिः पुरुषः। वृक्षमूलस्थितं तं कश्चित्तरुणः क्षुधापरीतस्तेन पथा कपित्थानि गृहीत्वा आगच्छन् समुदैक्षत। स तु क्रीडार्थम् एकेन कपित्थेन तस्य शिरोऽताड़यत्। स तु खलतिस्तस्य तत् सेहे नोवाच च तस्य किञ्चन। ततः स क्रमशः सर्वैः कपित्थैस्तस्य शिरस्तथैव ताड़यामास। सोऽपि प्रवहत्यपि शोणिते तूष्णीमतिष्ठत्। सोऽपि मूर्खयुवा निष्फलया क्रीड़या विचूर्णितैः कपित्थैर्विरहितः क्षुधाक्षीणः तस्मात् प्रययौ। अपरोऽपि मूर्खः खल्वाटः कपित्थैः स्वादुभिः किं न घातः सह्यते इति ब्रुवन् गलद्रक्तशिराः स्वगृहमगात्। एतौ दृष्ट्वा कोऽत्र जनो न हसति स्म। तदेवं देव ! अबुद्धयो लोके हास्यतां गच्छन्ति, न च संसिद्धिं लभन्ते, सुबुद्ध-

ग्रेम्णु पूज्यन्त एवं । इति गोमुखतः मुग्धहासकथाः श्रुत्वा नरवाहनदत्तः समुत्थाय आह्निकं कृत्यमन्वतिष्ठत् । अथ निशागमे समुत्सुकेन तेन पृष्टः स गोमुखः प्राज्ञनिष्ठामिमां कथां कथयामास ।

आसीत् कस्मिंश्चित् वनोद्देशे महान् शाल्मलीतरुः । तत्रैको लघुपातीति कृतनामधेयो वायसः कृतनिलयस्तस्थौ । स कदाचित् स्वनीड़स्थः तरोरधस्तात् जालहस्तं सलगुड़ं रौद्रमेकं पुरुषमैक्षत । ततस्तं यावत् स काको वीक्षते, तावत् स जालं वितत्य भुवि तण्डुलान् विकीर्य्य प्रच्छन्नोऽभवत् । अत्रान्तरे चित्रग्रीवनामा कपोतपतिः परिवारशतैर्वृतः भ्रमन् तत्र समाजगाम । स तु तान् तण्डुलान् पतितान् दृष्ट्वा भोजनलिप्सया सवर्गः पतितः जाले शाकुनिके बद्धोऽभवत् । तद् दृष्ट्वैव स कपोतराजः सर्वाननुचरान् जगाद भद्राः ! चञ्चुभिर्जालं गृहीत्वा सर्वे समकालमुत्पतत सवेगम् । ततस्ते भीताः कपोताः सर्वे तथेति जालमादाय वेगतः समुत्पत्य नभसा गन्तुं प्रचक्रमिरे । सोऽपि दृष्ट्वा ऊर्द्धदृष्टिः समुद्विग्नो लुब्धकः सन्न्यवर्त्तत । अथ निर्भयश्चित्रग्रीवस्तानमुयायिनः कपोतानब्रवीत् भोः मित्रस्य मे हिरण्यस्य मूषिकस्य सकाशं व्रजामः, स एवास्माकं पाशानेतान् समुच्छेत्स्यति । इत्युक्ता सः सानुगैः कपोतैर्जालकर्षिभिः समेतः सत्वरं तस्य मूषिकस्य विलद्वारं प्राप्य नभसः समवततार । भो मित्र हिरण्य ! निर्याहि, मित्रमहं ते चित्रग्रीवः समायातः । इत्थं स कपोतपतिस्तं मूषकम् आजुहाव । सोऽपि मूषको हिरण्यः

द्वारमार्गेण आगतं तं सुहृदं दृष्ट्वा ससम्भ्रमं तस्मात् शत-मुखाद् बिलात् निर्ययौ। सत्वरं समुपेत्य च तं वृत्तान्तं पृष्ट्वा तस्य सानुगस्य पारावताधीशस्य पाशानच्छिनत्। अथ छिन्नपाशः स कपोतराजः अनुगैः सह तं मूषकमामन्त्र्य स्वस्थानं ययौ। स तु लघुपाती वायसः अन्वागतः सर्वं तत् वृत्तं विलोक्य बिलप्रविष्टं तं मूषकमागत्य अवादीत् भद्र हिरण्य! अहं लघुपाती नाम काकः, त्वां मित्रवत्सलं विपन्नमित्रविपदुद्धरणक्षमं दृष्ट्वा मित्रं कर्त्तुमागतः। तदाकर्ण्य विवरात् वायसं दृष्ट्वासौ मूषकः प्रत्यभाषत गच्छ, का मैत्री भक्ष्यभक्षकयोरिति। ततो वायसोऽवादीत् शान्तं पापं त्वयि भुक्ते मम क्षणिका प्रीतिः, जीविते तु चिरं जीवनरक्षा मम इति। एवं बहु उक्त्वा शपथं समाश्वासञ्च कृत्वा व्याकुलः स वायसः निर्गतेन तेनाखुना मैत्रभावम् अधिरोपितः। स च आखुः मांसपेशीः शालिकणांश्च आनैषीत्। ततस्तौ एकत्र सहभुञ्जानौ परस्परं सुखमूषतुः।

एकदासौ काकस्तं मूषकमब्रवीत् मित्र! इतोऽतिदूरे वनमध्यवर्त्तिनी काप्यस्ति नदी। तस्यां मन्थरो नाम कोऽपि कूर्म्मो मे मित्रं प्रतिवसति। तदहं तत्र सुप्राप्यामिषदेशे यास्यामि, इह कष्टेन लभ्यते आहारः, नित्यं व्याधभयञ्च। इत्युक्तवन्तं तं काकं मूषकोऽवादीत् सखे! त्वयैव सहाहं वत्स्यामि, तन्मामपि तत्र नय। ममात्रापि स्थित्यां निर्वेदोऽस्ति, तं तत्र गत्वा ते निवेदयिष्यामि इति वादिनं तं हिरण्यं चञ्चा आदाय लघुपाती नभसा तत्

वननदीतटमगात्। तत्र च मन्थरकेण सुहृदा सह मि-
लित्वा कृतातिथ्यः मूषकेणानुगतः स सुखं तस्थौ ।

एकदा कथान्तरेषु स मन्थरः तं मूषकं देशनिर्वास-
कारणं वनागमनहेतुञ्च परिपप्रच्छ । ततो हिरण्यः तयो-
रुभयोः शृण्वतोः काककूर्म्मयोः स्वां वृत्तान्तकथामकथयत् ।
अहमासं क्वचित् महानगरीमहाविलवासी । तत्र च
वसन् एकदा राजकुलात् हारमानीय निशि विले अस्था-
पयम् । तेन च दृश्यमानेन हारेण सञ्जातौजसं माम्
अन्नाहारेण समर्थं ज्ञात्वा मूषकाः पर्य्यवारयन् ।

एतस्मिन्नन्तरे तत्र मदीयविलान्तिके कश्चित् परिव्राट्
मठिकां कृत्वा नानाविधानि भक्ष्याणि भिक्षया समानीय
भुक्त्वा च सुखेन स्वपिति स्म, स्थापयामास च भुक्तशेषं
भिक्षान्नं भिक्षाभाण्डस्थं कृत्वा प्रातर्जिघत्सया क्वचिद्देशे ।
अहञ्च प्रसुप्ते तस्मिन् प्रतिरात्रं विलेन अन्तः प्रविश्य तदन्नं
निःशेषमकरवम् । एवं गच्छति काले कदाचित् तस्य सुहृ-
दपरः परिव्राट् भोजनानन्तरं तेन सह विविधां कथा-
मकार्षीत्। तावच्च मयि तदन्नं संग्रहीतुं प्रवृत्ते स परि-
व्राट् जर्जरेण वंशखण्डेन मुहुस्तद् भाण्डकं सम-
वादयत्। कथं मे कथामाक्षिप्य अन्यत्र मनःसङ्गं करोषीति
पृष्टः स परिव्राट् तमागन्तुमभ्यधात् मित्र ! इह मे मूष-
कोऽयं शत्रुर्जातः, यो दूरस्थमपि मदन्नमुत्प्लुत्य प्रत्यहं
नयति । तदस्य त्रासार्थं जर्जरवंशखण्डेनाहमन्नभाण्डम-
ताड़यम्। इति वादिनं तमपरः परिव्राट् प्रत्यभाषत मित्र !
लोभ एवात्र प्राणिनां दोषाय, तदत्र कथामेतामाकर्णय ।

अहमेकदा तीर्थानि भ्रमन् एकं नगरं प्रापम्, प्राविशञ्च तत्रैकस्मिन् ब्राह्मणगृहे निवासाय। मामुपस्थितं वीक्ष्य स विप्रो गृहिणीमवादीत् प्रिये! अस्य ब्राह्मणस्य क्वते अद्य पर्वणि कृसरान् पच इति। सापि कुतस्ते निर्धनस्यैतदिति प्रत्युवाच। ततश्च विप्रस्तामब्रवीत् भद्रे! कर्त्तव्येऽपि सञ्चये नातिसञ्चयबुद्धिः कार्य्या, तदत्र कथामेतां शृणु।

एकदा कस्मिंश्चिद्वने कोऽपि मृगयुर्न्यस्तसायकः धनुषि मांसखण्डम् निक्षिप्य शूकरमेकं प्रति प्राधावत्। तेन च सह शरविक्षतपोत्रः स शूकरः सद्यो व्यपद्यत। तच्च दूरात् जम्बूकेनैकेन दृष्टम्। स च क्षुधार्त्तोऽपि आगत्य तत् वराह-शरीरं सञ्चयाय रक्षन् तस्माद् भूयसोऽपि आमिषात् किञ्चि-दपि न चखाद। यत्तु धनुषि स्थितम् आमिषं तदेव तदा भोक्तुं प्रववृते। ममार च तत्क्षणात् उच्छलता यन्त्रशरेण विक्षतः। तस्मान्नातिसञ्चयः कार्य्य इति तेन द्विजेन प्रोक्ता गृहिणी तथेति भर्त्तुर्वचः प्रतिपद्य तिलानातपे प्राक्षिपत्। तस्याञ्च तान् कर्त्तुं प्रवृत्तायां कुतोऽपि कश्चित् श्वा प्रविश्य तानदूषयत्। ततः कोऽपि तान् कृसरान् मूल्यादिना नाग्रहीत्। तदेवं लोभो नोपभोगाय, प्रत्युत क्लेशाय। इत्युक्त्वा पुनरपि स आगन्तुः प्रव्राट् अब्रवीत् मित्र! खनित्रमस्ति चेत् देहि, अद्यैव युक्त्या तव एतं मूष-कोत्पातमुपद्रवं नाशयामि। इत्यभिधाय तेन परिव्राजा दत्तं खनित्रमादाय तस्मै विलं खनितुमारेभे। क्रमाच्च तावदखनत्। ततः पलायनपरे मयि स शठः यावत् तं तत्रस्थं द्रारमन्यसञ्चयश्चाहरत्। ततश्च तेन द्वारतेजसा मे

तद्विलं विरहितमभूत्। ततः स दुरात्मा परिव्राट् मयि शृखति तं स्थायिनं प्रव्राजमाह स्म पश्यायं मूषिकः स्वजातिसमतां गत इति। अनन्तरं तं सर्वस्वं हारं मूर्ध्नि निधाय तावुभौ आगन्तुस्थायिनौ प्रव्राजौ सुखसुप्तौ दृष्टौ। अथ प्रसुप्तयोस्तयोः पुनस्तं हारं हर्त्तुमागतं मां वीक्ष्य स स्थायी परिव्राट् प्रबुद्धः यष्ट्या मां मूर्ध्नि अताड़यत्। अहञ्च तेन सञ्जातव्रणः अमृतो विलमविशम्। ततो मम तद्धाहरणे पुनः शक्तिर्नाभूत्, अर्थौ हि पुंसां यौवनं तदभावे वार्द्धकमेव। तेन च वार्द्धकेन ओजः, बलं रूपमुत्साहश्च परिहीयते। अथ आत्ममात्रभरणे यत्नवन्तं मां वीक्ष्य सर्वे ममानुचरा मां परित्यज्य गताः। अधनं प्रभुं भृत्याः, अपुष्पं तरुं भ्रमराः, अजलं सरोवरं हंसाश्च चिरोषिता अपि त्यजन्ति। हे कूर्म्मराज! इत्थं तत्र विपन्नः सुहृदं लघुपातिनं प्राप्य कथमपि सुखितः पश्चात् त्वदन्तिकमायात इति। एवं हिरण्योक्तमाकर्ण्य कूर्म्मराजः समभ्यधात् मित्र! स्वमेव स्थानमेतदाकलय्य मां मा अधृतिं कृथाः, गुणिनां न विदेशः सन्तुष्टस्य नासुखं, धीरस्य न विपत् न चासाध्यं व्यवसायिनः।

इति तस्मिन् वदति चित्राङ्गो नाम कश्चिन्मृगः दूरात् व्याधवित्रस्तस्तद्वनमाययौ। तञ्च तथागतं दृष्ट्वा पृष्ट्वा च वृत्तान्तं दृष्ट्वा च अनागतं व्याधं ते कूर्म्मादयः तेन आश्वासितेन मृगेण सह सख्यमकुर्वन् न्यवसंश्च सुखेन।

एकदा चित्राङ्गं चिरगतमीक्षितुं स लघुपाती तरुमारुह्य तद्वनमैक्षिष्ट, ददर्श च नदीतीरे कीलपाशेन

संयतं तं चित्राङ्गम्। अथ अवरुह्य तस्मात् पादपात् तद्वृत्तान्तमाखवे कूर्माय च न्यवेदयत्। ततः सम्मन्त्र स लघुपाती चञ्चा तं हिरण्यमादाय चित्राङ्गसमीपं निनाय। तञ्च तथागतं दृष्ट्वा हिरण्यः समाश्वास्य चणात् दशनच्छिन्नपाशं कृत्वा अमुञ्चत् तावच्च मन्थरकः कच्छपः नदीमध्ये न अभ्येत्य सुहृत्प्रियतया तेषां निकटं नदीतटमारुरोह। चणे च तस्मिन् कुतोऽपि आगतः स पाशहस्तः व्याधः विद्रुतान मृगादीन् वीक्ष्य तं कूर्म्मं लब्ध्वा सन्तुष्टोऽभवत्। ततश्च तं जालिकायां क्षिप्त्वा नष्टं मृगं प्रति समुत्सुको यावत् याति, तावत् दीर्घदर्शिनो हिरण्यस्य वचनात् मृगो दूरे गत्वा पतित्वा मृत इवातिष्ठत्। काकोऽसौ तन्मूर्द्धि चञ्चा चक्षुषी पाटयन्निव स्थितः। तदवलोक्य स व्याधः मृगं मृतं गृहीतमेव मत्वा नद्यास्तटे तं कूर्म्मं जालान्तःस्थं निधाय मृगं प्रति गन्तुं प्रवृत्तः। तं यान्तं वीक्ष्य मूषकस्तस्य कूर्म्मस्य जालिकां सद्यश्चिच्छेद, स च कूर्म्मो नद्यां पपात। मृगोऽपि आसन्नं तं व्याधं कच्छपरहितं वीक्ष्य उत्थाय पलाय्य अगात् काकोऽपि तरुमारूढः। ततश्च व्याधः प्रत्येत्य तं कूर्म्मं बन्धच्छेदपलायितम् अप्राप्य उभयविभ्रष्टः दैवं शोचन् गृहमगात्। ततस्ते कूर्म्मादयो हृष्टा एकत्र मिलित्वा अवतस्थिरे। ततो मृगोऽतिप्रीतस्तान् तोनुवाच पुण्यवानस्मि यदहं भवतः सुहृदः प्राप्तः, यैः प्राणानप्युपेक्ष्य अद्याहं मृत्योरुद्धृतः। एवं मृगेण प्रशस्यमानास्ते कूर्म्मादयः परस्परप्रीतियुजस्तत्र वसन्ति स्म। तदेवं प्रज्ञया तिर्य्यञ्चोऽपि समीहितं साधयन्ति, न मुह्यन्ति

च प्राणात्यये मित्रमापन्नम्। एवञ्च मित्रेषु आसक्तिः श्रेयसी न तु अङ्गनासु, ईर्ष्याश्रयत्वात्तासामिति समामनन्ति विपश्चितः। तथा चात्र कथामेतामाकर्णय। प्रभो! कस्मिंश्चिन्नगरे कोऽपि ईर्ष्यालुः पुमान् प्रतिवसति स्म। तस्य भार्य्या रूपशालिनी वल्लभा च आसीत्। स तु अविश्वस्तां तां जातु एकाकिनीं न मुमोच, शशङ्के च तस्याः शीलविभ्रंशं चित्रपुत्तलिकाभ्योऽपि।

एकदासौ पुमान् कार्य्यवशात् देशान्तरं व्रजन् तां भार्य्यामपि सह निनाय। पथि सभिल्लामटवीं वीक्ष्य भयात् क्वचित् ग्रामे कस्यचिद् वृद्धस्य गृहे भार्य्यां तां स्थापयित्वा ययौ। तत्र स्थिता च सा तेन पथागतान् भिल्लान् दृष्ट्वा तेषां मध्यात् एकेन यूना भिल्लेन सह तस्मात् वहिर्गता। ततश्च तेन युक्ता सा तत्पल्लीं यथाकामं भग्नसेतुरापगेव अपतिका चचार।

अत्रान्तरे तत्पतिः कार्य्यं साधयित्वा आगत्य च तं ग्राम्यं द्विजं स्वां भार्य्यां ययाचे। सोऽपि विप्रस्तं जगाद ब्रह्मन्! न जाने सा क्व गता, एतावन्मात्रं जानामि, भिल्ला अनेन पथा यान्ति, तैः साकं सा प्रगता, तेषाञ्च पल्ली समीपे वर्त्तते, तत्त्वरितं तत्र व्रज, ततस्तां भार्य्यां प्राप्स्यसि, मान्यथा बुद्धिं कृथाः। इति तेनाभिहितः स रुदन् आत्मबुद्धिं निन्दन् तां भिल्लपल्लीं जगाम, ददर्श च तत्र तां पत्नीम्। सा च पापा तं दृष्ट्वा भीता प्राब्रवीत् नाथ! न मे कश्चिद्दोषः, अहमेकेन भिल्लेन बलादिहानीतेति। तदेहि तावत् यावत् कश्चिन्न पश्यति पलाया-

वहे। इति वादिनं रागान्धं तं पतिं सोवाच तस्य भिल्लस्य आखेटगामिनः इयमागमनवेला, स खलु आगतः त्वत्वैव अनुधावन् त्वां मां च ध्रुवं निहनिष्यति, तदेतां गुहां प्रविश्य प्रच्छन्नः साम्प्रतं तिष्ठ। रात्रौ सुप्तं तं हत्वा निर्भयौ यास्यावः। एवं तया शठयाभिहितः स पुमान् प्रविश्य गुहामतिष्ठत्। कामान्धानां हृदि कोऽस्ति विवेकावसरः? सा पापीयसी दिनात्यये गुहान्तःस्थं तं पतिं तस्मै भिल्लाय समागताय दर्शयामास। स च दुरात्मा पराक्रान्तः भिल्लापसदस्तं प्रातर्देव्या उपहारार्थं तरौ सुदृढमबध्नात्। ततश्च भुक्त्वा रात्रौ तद्भार्य्यया सह पश्यतस्तस्य यथाकामं सुरतमासेव्य तया युतः सुखं सुष्वाप। तच्च तथा सुप्तं वीक्ष्य ईर्ष्यावान् स पुमान् तरुसंयतः तत्रस्थां देवीं चण्डां स्तुतिभिर्वशीकृत्य शरणं ययौ। सा देवी आविर्भूय तस्मै तं वरमदात्, येन स पुरुषः तस्याः खड्गेन स्रस्तबन्धनः तस्य भिल्लस्य शिरश्चिच्छेद। एहि इदानीं स पापो मया निहत इति तां भार्य्यां प्रबोध्य प्रोवाच च। सापि पापा दुःखिता समुत्तस्थौ, जगाम च तेन पत्या सह तस्य भिल्लस्य छिन्नं शिरः अलक्षितं गृहीत्वा निशि। प्रातश्च नगरं गत्वा तत्र तत् शिरो दर्शयन्ती अनेन मे भर्त्ता हतोऽयमिति, तं पतिमाक्रम्य चक्रन्द। ततः स पुररक्षिभिः राजान्तिकं नीतः, पृष्टश्च सदस्यैः ईर्ष्यालुः सर्वं यथावृत्तमाख्यत्। राजा च तत्त्वमन्विष्य तस्याः पापायाः कर्णौ नासाञ्च छेदयामास, तच्च तत्पतिं मुमोच। स मुक्तश्च कुभार्य्यानुरागग्रहोज्झितः स्वगृहं प्रायात्। देव! योषित एवमीर्ष्यानियन्त्रिताः

कुर्वते । ईर्ष्यैव स्त्रियाः अन्यपुरुषासङ्गं शिक्षयति । तस्मा-दीर्षामप्रकाश्यैव सुबुद्धिना स्त्रियो रक्ष्याः । वनितासु च कदापि रहस्यं न वक्तव्यं क्षेममिच्छता पुरुषेण, तदत्र कथामाकर्णय ।

पुरा किल कश्चिन्नागः वैनतेयभयात् मानुषं रूप-मास्थाय पलाय्य कुत्रचिद् गणिकावेश्मनि अवतस्थे। गणिका च सा हस्तिशतपञ्चकं भाटिं दातुं समर्थश्चेत् वसात इति तमब्रवीत्। स च नागः स्वप्रभावात् तदेव तस्यै प्रत्यहमदात्। सा तु विलासिनी कुतः प्रत्यहं ते इयन्तो हस्तिनः को वा भवानिति तं निर्बन्धतः पप्रच्छ। सोऽपि नागः काममोहितः मा वोचस्त्वं कस्यचित्, अहं नाग इह वैनतेय भयात् प्रच्छन्नं स्थित इति व्याजहार। सा गणिका रहसि कुट्टिन्यै तद्रहस्यमाचचक्षे। अत्र तार्क्ष्यः जगत् अन्विच्छन् पुरुषाकृतिस्तत्रागात्। अवादीच्च तां कुट्टिनीमुपेत्य आर्ये ! अहमद्य रजनीं त्वत्सुतागृहे वसामि, मे भाटिर्गृह्यतामिति। सा च कुट्टिनी इह कश्चिन्नागः प्रत्यहं करिपञ्चशतं ददत् स्थितः, तव एकाहभाट्या कि-मिति प्रत्यवादीत्। ततः स गरुड़ः तत्र स्थितं नागमवेत्य अतिथिरूपेण तद् वनितागृहमविशत्। ततस्तत्र प्रासाद-पृष्ठगतं तं नागमवलोक्य स आत्मानं प्रकाश्य उत्पत्य च तं जघान जहास च। तस्मात् स्त्रीषु अनर्गलं रहस्यं न कथयेत्। इत्येवं गोमुखो मुग्धकथां कथयित्वा पुनर-वर्णयत्।

अस्ति क्वचित् ताम्रकुम्भोपमशिराः खल्वाटः। स च

मूर्खोऽर्थवांश्च केवलं कचराहित्यात् लज्जते। अथैकदा कश्चित् धूर्त्तः समागत्य प्रोवाच भद्र! अस्ति कश्चिदेको वैद्यः, स एव केशोत्पादनौषधं वेत्ति। एतदाकर्ण्य स तमवदत् यदि त्वं तमानयसि तदाहं तुभ्यं तस्मै च धनं दास्यामि। एवमुक्तवतस्तस्य मुग्धस्य स धूर्त्तः चिरं धनं भुक्त्वा एकं मूर्खचिकित्सकमानिनाय। स च भिषक् तं खलतिं चिरमुपजीव्य युक्त्या वेष्टनमपास्य तस्मै मुग्धाय अदर्शयत्। तदवलोक्यापि अविमर्षः स खलतिः जड़धीः केशार्थं तमौषधं ययाचे, स च वैद्यस्तमब्रवीत् अहञ्च खल्वाटः कथमन्यस्य कचान् जनयेयं, हे मूर्ख! मया निर्लोभेन स्वशिरो दर्शितं तथापि त्वं न वेत्सि, धिक् त्वामित्युक्त्वा स भिषक् गृहमयासीत्। तदेवं देव! धूर्त्तैर्जड़मतय एवं विड़म्ब्यन्ते। तदिदानीं केशमुग्धः श्रुतः, तैलमुग्धो निशम्यताम्।

आसीत् कस्यचित् शिष्टस्य मुग्धः कश्चित् सेवकः। स कदाचित् प्रभुणा तैलमानेतुं तैलिकस्य वणिजोऽन्तिकं प्रेषितः पात्रे तैलमुपाददे। पथि तैलपात्रमादाय आगच्छन् असौ केनचित् मित्रेण उक्तः सखे! रक्षेदं तैलपात्रम् अधः स्रवति। तदाकर्ण्य अधो वीक्षितुं तत्पात्रं पर्य्यवर्त्तयत्। तेन च तस्य मूढ़स्य तत्सर्वं तैलं भुवि अपतत्। तदवलोक्य स जनैनोपहसितः, निरस्तश्च स्वामिना। तदेवं तैलमुग्धः श्रुतः, साम्प्रतमस्थिमुग्धो निशम्यताम्।

आसीत् कश्चित् मूर्खः पुमान् तस्य चासती भार्य्या। सा कदाचित् पत्यौ देशान्तरं कार्य्यवशात् प्रस्थिते स्वा-

स्वामाग्रां सखीं कर्त्तव्यमिश्रां कृत्वा गृहे संस्थाप्य एकाकिनी विर्गत्य निरर्गलसुखेच्छया उपपतेर्गृहं प्रायात्। अथ तत्पतिमागतं दृष्ट्वा तत्सखी शिक्षितपूर्वा अश्रुगद्गदमवादीत् स्वामिन्! भार्य्या सा तव मृता दग्धा च इत्युक्ता सा तं श्मशानं नीत्वा यान्यस्थीनि अदर्शयत् स तानि आदाय रुदन् कृतोदकः तीर्थेषु अस्थीनि तानि प्रक्षिप्य तस्याः भार्य्यायाः श्राद्धविधानाय प्रवर्त्तते। ततः स श्राद्धकर्त्ता सद्विप्र इति आनीतं भार्य्योपपतिं श्राद्धे विप्रमकरोत्। सा च तद्भार्य्या चारुवेशा तेन उपपतिना साकं तत्रागत्य मासि मासि श्राद्धं बुभुजे। अथ सा कर्म्मकरी तत्पतिमवादीत् प्रभो! सती ते पत्नी तव धर्म्मप्रभावेण परलोकादागत्य ब्राह्मणेन समं स्वयं भुङ्क्ते। सोऽपि मूर्खस्तथैव सर्वं प्रतिपेदे। तदेवं सरलाशयाः कुभार्य्याभिः प्रतार्य्यन्ते। एष तावदस्थिमुग्धः कथितः, साम्प्रतं चण्डालकन्यावार्त्तां निशम्यताम्।

आसीत् क्वचित् प्रदेशे कापि रूपवती चाण्डालदारिका। सा सार्वभौमस्य सुतप्राप्तौ मानसमकार्षीत्। सा कदाचित् नगरभ्रमार्थं निर्गतं राजानं सर्वोत्तमं दृष्ट्वा भर्त्तृबुद्धिरनुगन्तुं प्रचक्रमे। तावच्च तेन पथा कश्चिन्मुनिरायशौ। तमसौ दृष्ट्वा गजारूढो राजा तस्य पादौ प्रणम्य स्वभवनमगात्। ततस्तं मुनिं सा चण्डालकन्या राजतोऽपि अधिकं माननीयं दृष्ट्वा राजानं विहाय तं मुनिमन्वगात्। सोऽपि मुनिः पथि शून्यं शिवमन्दिरं दृष्ट्वा क्षितौ संन्यस्तजानुः शिवं नत्वा ततो ययौ। अथ तद्वीक्ष्य सा

अन्त्यजा मुनेरपि तं शिवं श्रेष्ठं मत्वा मुनिं त्यक्त्वा तमेव शिवं भर्तृबुद्ध्या समशिश्रियत्। अथ क्षणेन कश्चित् श्वा तत्र प्रविश्य देवस्य पीठिकामारुह्य जङ्घामुत्क्षिप्य च स्वजातिसदृशं कर्माकरोत्। तदवलोक्य सा अधमा देवादपि श्वानमुत्तमं मत्वा देवं विहाय तमेव श्वानं भर्तृबुद्ध्या अन्वगमत्। स च श्वा चाण्डालगृहमागत्य तत्र परिचितस्य कस्यचित् चाण्डालयुवकस्य प्रणयात् पादयोः लुलुण्ठ। ततः सा तं चाण्डालपुत्रं शुनोऽपि उत्तमं विलोक्य तमेव पतिं ववार। इत्थं उन्नतपदकाङ्क्षिणो जड़ाः स्वपद एव पतन्ति। अपरञ्च मूर्खनृपं शृणु कथयामि।

अभूत् कोऽपि मूर्खः कोशवानपि कृपणो महीपतिः। एकदा शुभाकाङ्क्षिणो मन्त्रिणस्तं जगदुः देव! दानं हि पारलौकिकीं दुर्गतिं नाशयति, तत् दानं दीयताम्, आयूंषि धनानि च भङ्गुराणि। तदाकर्ण्य स नृपोऽवादीत् ततो दानं दास्यामि, यदि मृतमात्मानं दुर्गतिमापन्नं पश्यामि। ततस्ते मन्त्रिणोऽन्तर्हसन्तः तूष्णीमतिष्ठन्। इत्थं मूढमतयः यावत् अर्थैः न परिहीयन्ते तावदर्थान् नोज्झन्ति। तदेवं राजमूर्खता श्रुता, साम्प्रतं मित्रद्वयं शृणु।

आसीत् कान्यकुब्जे जनपदे चन्द्रापीड़ो नाम भूपतिः। तस्य धवलमुखो नाम एकः सेवकस्तस्थौ। स तु वहिः भुक्त्वा पीत्वा च सततं गृहमायात्। एकदासौ भार्य्यया भुक्तपीतः कुतो नित्यमायासीति, पृष्टस्तामवादीत् सुन्दरि! सुहृत्पार्श्वादहं भुक्त्वा पीत्वा च प्रत्यहमायामि, मम हि

मित्रे स्तः। तयोरेकः कल्याणवर्म्मा नाम मम भोजना-द्युपकारं करोति। अपरः वीरबाहुः प्राणैरपि उपकार-परः। एतद्गाकर्ण्य भार्य्या तमब्रवीत् दर्शय मे तत् मित्र-द्वयमिति। ततोऽसौ तया सहितः मित्रस्य कल्याणवर्म्मणः सकाशमगात्। स च महार्हैरुपचारैस्तं सभार्य्यमुपाचरत्। ततोऽपरेद्युः स तथैव भार्य्यायुतः वीरबाहोः सकाशमियाय। स च तदा द्यूतस्थितस्तं स्वागतेनाभिनन्द्य व्यसर्जयत्। ततः सा भार्य्या तं धवलमुखं सकौतुकमभाषत कल्याण-वर्म्मा महतीं ते सत्क्रियामकरोत्। वीरबाहुना तु केव-लेन स्वागतेन ते सत्कृतम्। तदार्य्यपुत्र! तत् मित्रम् अभ्यधिकं मन्यसे? तदाकर्ण्य सोऽब्रवीत् गच्छ तौ ब्रूहि च क्रमात् मिथ्या राजा अकस्मात् नः कुपित इति, ततः स्वयं ज्ञास्यसीति। इत्युक्ता सा तदैव कल्याणवर्म्मणः स-काशं गत्वा अवोचत् राजा नः कुपित इति, अथ स तां जगाद भवति! अहं वणिक्पुत्रः, ब्रूहि राज्ञः किं करो-मीति। इत्युक्ता तेन सा वीरबाहोरन्तिकं गता तस्मै तथैव भर्त्तरि राजकोपमशंसत्। स श्रुत्वैव खड्गचर्म्मधरः धावन् राजसकाशमाययौ। राजा मन्त्रिभिः कोपात् वारितः, अतस्त्वं व्रज वीरबाहो! इति स धवलमुखस्तं स्वगृहं प्राहिणोत्। अथ तेन धवलमुखेन सुन्दरि! एवं मे मित्रयोरन्तरम् इति अभिहिता सा तद्भार्य्या तुतोष। इत्थमुपचारमित्रमन्यत्, सत्वतो मित्रञ्चान्यत् स्निग्धतायोगे तुल्येऽपि तैलं तैलं घृतं घृतम्। इत्येवं मुग्धकथामाख्याय गोमुखो नरवाहनदत्ताय पुनः कथामकथयत्।

कश्चित् मुग्धोऽध्वगः कृच्छ्रात् अटवीं तीर्त्वा नदीं प्राप्यापि जलं न पपौ परं वीक्षाञ्चक्रे। तृषितोऽपि कथमम्भः न पिबसीत्युक्तः केनचित् स इयत् कथं पिबामीति मन्दबुद्धिरुवाच। अथ तेन किं त्वां राजा दण्डयिष्यति यदि त्वया सर्वं जलं न पास्यते इति उपहसितोऽपि भीतः तदम्बु नापिबत्। एवमबुधयः यत् यत् कार्य्यमशेषतः कर्तुं न शक्नुवन्ति, तस्यांशमपि यथाशक्ति न कुर्वन्ति। तदिदानीं जलभीतः श्रुतः, पुत्रघाती श्रूयताम्।

कश्चिदासीत् दरिद्रो मूर्खो बहुपुत्रश्च पुरुषः। स एकस्मिन् सुते मृते सति कथमयं बाल एकाकी पथि व्रजेदिति द्वितीयमपि पुत्रं स्वयमवधीत्। ततः स जनैर्निन्द्यः हास्यः देशान्निर्वासितश्च। एवं पशुश्च मूर्खश्च उभौ समौ निर्विवेकौ। तदेवं पुत्रघाती त्वया श्रुतः, साम्प्रतं भ्रातृभीतमिमं शृणु।

क्वचित् देशे कोऽपि मुग्धधीर्जनमध्ये कथायां प्रवृत्तायां मध्यमेकं पुरुषं दृष्ट्वा इदमब्रवीत् एष मे भ्राता, अहमस्य रिक्थं हरामि, अहन्तु न कश्चिदस्य, तेन च मे एतत् ऋणं न इत्युक्तवान् स मूर्खः पाषाणानपि तत्र स्थितान् हासयामास। एवं स्वार्थान्धस्य मूढस्य मूढत्वमिति वैचित्र्यम्, इदानीं देव! ब्रह्मचारिसुतं शृणु।

कश्चित् पुमान् मित्रमध्यवर्त्ती पितृगुणाख्यानेषु प्रवृत्तः पितुरुत्कर्षं वर्णयन्नभ्यधात् पिता मम आशैशवात् ब्रह्मचारी, तेन समः कोऽस्ति? तदाकर्ण्य सुहृदस्तमब्रुवन् तर्हि त्वं कुतो जातः? इत्येवं तैः स जड़ः विशेषेण उप-

हँसितः। तद्देवं जड़ाशया यथेच्छमसत्यं प्रवदन्ति। अधुना गणकोऽयं श्रूयतां देव!

आसीत् कश्चिद् विज्ञानवर्जितः गणकः। स खलु कापट्येन अर्थान् पूजाश्चोपार्जयितुमयतिष्ट। एकदासौ सर्वजनाग्रतः वालं पुत्रं परिष्वज्य भृशं रुरोद। पृष्टश्च तैः कथं रोदिषीति स तानवादीत् अहं तावत् भूतं भव्यं भविष्यञ्च जाने, तदयं मे शिशुः सप्तमे दिवसे विपत्स्यस इति रोदिमि। इति तान् विज्ञाप्य प्राप्ते सप्तमे दिवसे प्रत्यूष एव स सुप्तं सुतं व्यापादितवान्। अथ दृष्टा तं बालं मृतं तैः सर्वैः सञ्जातप्रत्ययैः पूजितो धनमानाभ्यां स्वदेशं स्वैरमगमत्। इत्थमर्थलोभात् मुग्धविज्ञानज्ञापनार्थिनः मूर्खाः पुत्रमपि घ्नन्ति, तस्मात् तेषु सुबुद्धयो न विश्वसेयुः। इदानीं प्रभो! कोपनः पुरुषः श्रूयताम्।

कुत्रापि नगरे वहिःस्थितस्य शृण्वतः कस्यापि गुणान् कश्चिदभ्यन्तरवर्त्ती स्वजनाग्रतः शशंस। स तु स्वजनस्तमब्रवीत् सखे! सत्यं किन्तु तस्य दोषौ द्वौ स्तः, यदसौ साहसो क्रोधनश्च। इति वादिनमेव तं वहिःस्थितः पुरुषः निशम्य सहसा प्रविश्य गले वाससा श्ववेष्टयत् रे जाल्म! किं मे साहसं क्रोधश्च त्वया दृश्यते? इत्येवं क्रोधाग्निना ज्वलन्नसौ पुरुषस्तं साक्षेपमभ्यधात्। ततो हसन्तः सर्वे तमूचुः किं ब्रवीष्यदः, त्वमिदानीमेव प्रत्यक्षतः क्रोधं साहसञ्च दर्शयसीति। इत्थं प्रकटोऽपि स्वदोषो अज्ञैर्न बुध्यते। इदानीं मुग्धकन्यावर्द्धयिता नृपः श्रूयताम्।

आसीत् कश्चिन्नृपतिः। तस्यैका सुरूपा कन्या अजनि।

स तां स्नेहेन वर्द्धयितुकामः सत्वरं वैद्यानानीय प्रीत्याभ्यभाषत वैद्यसत्तमाः! सदैव मे कश्चित् औषधप्रयोगं कुरुत, येन मे सुतैषा शीघ्रं वर्द्धते, सद्भर्त्रे च प्रदीयते। तदाकर्ण्य ते वैद्यास्तं जड़मतिं नृपमुपजीवयितुमब्रुवन् देव! अस्त्यौषधमितो दूरात्, तत्तु कृच्छ्रादवाप्यते, यावत् तदौषधं वयमानयामः, तावदेषा ते सुता अदृश्या स्थापनीया, तत्र हीदृशी अनुष्ठानपद्धतिः। इत्युक्त्वा ते कन्यां नृपात्मजां स्थापयामासुः। ततश्च बहून् संवत्सरान् औषधानुष्ठानं कथयन्तस्ते यौवनेन प्रवर्द्धितां तामौषधेन इति ब्रुवाणास्तस्मै महीभृते तां दर्शयामासुः। स च राजा तुष्टः तान् वैद्यान् प्रार्थनाधिकैः धनैः पूरयामास। इत्येवं जड़मतयो व्याजेन धूर्त्तैः प्रभुज्यन्ते धनिनः। तदिदानीं अर्द्धपणोपार्जनपण्डितः पुमान् श्रूयताम्।

आसीत् क्वचिन्नगरे कोऽपि प्रज्ञाभिमानी पुमान्। तस्यैको ग्राम्यः पुमान् भृतकः संवत्सरात् परं वृत्तसन्तोषः प्रभुमापृच्छ्य स्वगृहमगात्। तस्मिंश्च गते स स्वभार्य्यामपृच्छत् तन्वि! स भृत्यः त्वत्तः किञ्चिद् गृहीत्वा गतः? इति। सा तु अर्द्धपणमित्यब्रवीत्। ततः स सत्वरं नदीतटपर्य्यन्तगतात् तस्मात् भृत्यात् तदर्द्धपणमादाय गृहमायात्। इत्यमर्थकौशलं शंसन् स लोकेषु हास्यतामगमत्। इत्थं धनान्धधियः स्वल्पस्यार्थे बहून् क्षपयन्ति। साम्प्रतमभिज्ञानकर्त्ता श्रूयताम्।

एकदा कस्यचित् मूर्खस्य यानपात्रेण अम्बुधौ व्रजतः हस्तात् राजतं भाजनम् अम्बुधौ पपात। स तु मूर्खः तत्र

आवर्त्तान्तिके आगच्छन्नहमम्बितलादुद्धरिष्यामीति अभिज्ञानबुद्धिमग्रहीत्। अथ अम्बुधेः पारं प्राप्तः स्वमभिज्ञानं मुहुः प्रख्यापयन् तत्रत्यैरुपहसितो धिक्कृतश्च। इदानीं प्रतिमांसप्रदं नृपं शृणु।

पूर्वं कश्चित् मूर्खो नृपः प्रासादात् अधो द्वौ नरौ अपश्यत्। तयोरेकेन महानसे सुहुतं मांसं दृष्ट्वा तस्य अपरस्य श्रोतुरङ्गात् पञ्च मांसपलानि व्यकर्त्यन्त। ततः उत्कृत्तमांसं क्रन्दन्तं तं भुवि पतितं दृष्ट्वा राजासौ जातानुकम्पः प्रतीहारमादिशत् छिन्नमांसतया अस्य व्यथा वर्त्तते, तदस्मै अतोऽप्यधिकं मांसं दीयतामिति। देव! शिरश्छिन्नः किं जीवति शिरःशतैः प्रदत्तैः? तद्वदस्यापि कथमेषा व्यथा निवर्त्तेत इत्युक्त्वा तत्क्षणाद् वहिर्गत्वा अहसत्। एवं मूढमतिर्नृपः निग्रहानुग्रहौ न वेत्ति। साम्प्रतं पुत्रान्तरकारिणी मन्दा स्त्री निशम्यताम्।

कापि पाषण्डी क्षुद्रतापसी पृच्छन्तीं कामपि योषितमब्रवीत् भद्रे! योऽयं ते पुत्रोऽस्ति, तं हत्वा देवताबलिः क्रियताञ्चेत् ततस्ते निश्चितमपरः श्रेष्ठः सुतो जायते। एवं तयोक्ता सा यावत् तथा कर्तुं व्यवस्यति, तावदन्या स्त्री वृद्धाभ्येत्य तां रहोऽवदत् पापे! जातं हंसि, अजातं प्राप्तुमिच्छसि, यदि स न जनिष्यते, ततः किं करिष्यसि? इत्थं तया आर्य्यया सा तस्मात् पापादवार्य्यत। इत्थं शाकिनीसङ्गताः स्त्रियः अकार्य्येषु प्रवर्त्तन्ते, वृद्धोपदेशेन च प्रायशो रक्ष्यन्ते। देव! साम्प्रतमयमामलकानेता निग्रस्यताम्।

आसीत् कश्चिद् गृहस्थस्य कस्यचित् मुग्धो भृत्यः। स तु गृहस्थः आमलकप्रियस्तं भृत्यमादिशत् भद्र! गच्छ आरामात् सुमधुराणि आमलकानि मदर्थमानय। स च जड़ः एकैकमामलकं दशनच्छेदेनास्वाद्य आनीतवान्, उक्तवांश्च प्रभो! स्वयमास्वाद्य मधुराण्येतानि मयानीतानि, प्रेक्षस्वामिति। स तु गृहपतिस्तानि उच्छिष्टानि आलोक्य तेन निर्बुद्धिना भृत्येन समं तत्याज। तदेवं निष्प्रज्ञो नाशयति प्रभोरात्मनश्चार्थम्। अधुना भ्रातृद्वयकथामिमामाकर्णय।

आस्तां तावत् पुरा पाटलिपुत्रे नगरे द्वौ विप्रौ। ज्येष्ठो यज्ञसोमो नाम द्वितीयः कीर्त्तिसोमः। तयोश्च पैतृकं भूरि धनमासीत्। कीर्त्तिसोमः निजं भागं व्ययात् रक्षन् अवर्द्धयत्। यज्ञसोमस्तु भुञ्जानो ददच्च क्षयमनयत्। ततः स क्रमेण निर्धनीभूतः स्वां भार्य्यामवादीत् प्रिये! तथाहं सधनो भूत्वा इदानीं कथं निर्धनो बन्धूनां मध्ये वसामि, तद्देशान्तरं व्रजावः। अथ तया पाथेयेन विना कुत्र यावः इत्युक्ते च यदा निर्बन्धमकरोत् तदा भार्य्या तमाह स्म अवश्यं यदि गन्तव्यं, तदा भ्रातुस्ते कीर्त्तिसोमात् अनुजात् पाथेयं किञ्चित् याचस्व इति। ततो यावत् सः अनुजं गत्वा पाथेयं याचते, तावत् सोऽनुजः स्वया भार्य्यया जगाद क्षपितस्वधनाय अस्मै कथं वयं धनं दद्मः, य एव दरिद्रः स्यात् स एव अस्मानेवं याचिष्यते इति। श्रुत्वेतत्, कीर्त्तिसोमो भ्रातृस्नेहार्द्रोऽपि किमप्यस्मै दातुं नाशकत् कष्टं हि स्त्रैणम्। ततो यज्ञसोमो गत्वा पत्न्यै-

तेत् सर्वं विज्ञाप्य तथैव सह दैवशरणः प्रातिष्ठत। गच्छ न्तश्च अटवीम् अजगरेण निगीर्णं तमवलोक्य तद्भार्य्या भुवि पतिता भृशं चक्रन्द। कथमाक्रन्दसीति तेनाजगरेण मनुष्यभाषया निगदिता सा प्राब्रवीत् हे महासत्त्व! कथं न क्रन्दामि, त्वया मे दुःखितायाः विदेशे भिक्षाभाजनं हन्यते। तदाकर्ण्य कृपालुरजगरो वक्त्रादुद्गीर्य्य महत् स्वर्णपात्रमस्यै गृहाणेदं भिक्षाभाजनमिति वदन् प्रादात्। तथा च ब्राह्मणी महाभाग! को मे अस्मिन् भिक्षां मे प्रदास्यतीति निगदितोऽसौ अजगरस्तदा प्रत्यभाषत भद्रे! यस्ते अस्मिन् भिक्षाभाजने भिक्षां न दास्यति तस्य शिरः शतधा यास्यति एतन्मे वचनं सत्यम्। तदाकर्ण्य सा सती द्विजपत्नी तमजगरमुवाच तर्हि प्रथमं त्वमेव मे अत्र भर्त्तृभिक्षां प्रयच्छ इत्युक्त एवासौ अजगरस्तत्क्षणात् मुखात् अक्षतं जीवितमेव तं ब्राह्मणम् उज्जगार। तमुद्गीर्य्य च सोऽजगरः सपदि दिव्यः पुमान् परितुष्टश्चाभवत्, अवोचच्च तौ दम्पती प्रहृष्टौ। अहं काञ्चनवेगो नाम विद्याधरराजः गौतमशापेन इमामाजगरीं योनिमापन्नः, स च मे शापः सतीसंवादावधिः। इत्युक्त्वा तत्क्षणं तत् हेमपात्रं रत्नैः आपूर्य्य हृष्टः खमुत्पत्य यथास्थानमगात्। तौ च दम्पती तत् रत्नजातमादाय गृहमीयतुः। सत्वानुरूपमेव धाता सर्वस्य विदधाति हि। अपरञ्च श्रूयताम्। कश्चित् कर्णाटीयः स्वार्थमुग्धः नापितः रणे शौर्य्यात् स्वं प्रभुमतोषयत्। स तु प्रसन्नः प्रभुः तस्मै अभीष्टं वरमदात्। स तु नापितस्तस्मात् नपुंसकनिभं भटमयाचत। सर्वे

हि स्वचित्तप्रमाणेन सदसद्वा अभिवाञ्छन्ति।

शृणु देव! न किञ्चिन्मार्गमाणं कञ्चिन्मुग्धम्। कश्चित् पथि व्रजन् मूर्खः केनचित् शकटस्थेन जचे भद्र! शकटमिदं मे मनाक् समं कुरु इति। यद्यहं समं करोमि तदा मे किं दास्यसीति निगदितः शकटस्वामी प्रावोचत् न किञ्चिद् दास्यामीति। ततः स मूर्खः तत् समं कृत्वैव मे किञ्चिद् देहीति तमाह स्म। स चाहसत्। तदेवं देव! मूर्खाः इत्थं उपहसिता निन्दिताश्च सदैव भवन्ति। सन्तस्तु पूज्यन्त एव। एवं स राजपुत्रो नरवाहनदत्तः गोमुखात् इमां विनोदकथामाकर्ण्य रजन्यां विश्रामाय निद्रा-मियाय।

---

## अथ द्विषष्टितमस्तरङ्गः।

अथ प्रातः वत्सेश्वरसुतः समुत्थाय वत्सलस्य पितु-रुदयनस्य अन्तिकमगात्, तत्र च पद्मावतीदेव्या भ्रातरि मगधेशसुते स्वगृहादागते सिंहवर्मणि तस्य स्वागत-प्रश्नादिकथाभिरहनि व्यतिक्रान्ते च राजपुत्रो नरवाहन-दत्तः कृतभोजनः स्वं मन्दिरमाययौ। तत्र शक्तियशसि समुत्सुकं तं विनोदयितुं निशि स धीमान् गोमुखः कथामिमामकथयत्।

आसीत् क्वचित् छायाप्रधानः सुमहान् न्यग्रोधपादपः

प्रकुन्तनादैः पथिकान् विश्रामाय आह्वयन्निव । तत्र मेघवर्णो नाम वायसः कृतनीडः समतिष्ठत । तस्य अपमर्दनामा उलूकाधिपतिः रिपुरास । स च तस्य काकराजस्य बहून् काकान् रात्रावभ्येत्य हत्वा परिभूय याति स्म । ततश्च प्रातरसौ काकराजः समाहूय उड्डीवी आडीवी सण्डीवी प्रडीवी चिरजीवीति प्रसिद्धनाम्नः मन्त्रिणः प्राह स्म भद्राः ! स शत्रुः बली अस्मान् परिभूय लब्धस्पर्द्धः पुनर्यदि आपतेत् तदत्र प्रतीकारश्चिन्त्यतामिति । तदाकर्ण्य उड्डीवी अभाषत प्रभो ! अन्यदेशाश्रयः वा तदनुनयः कार्य्यः । तदाकर्ण्य आडीवी प्रोवाच स्वामिन् ! सद्यो न भेतव्यं रिपोराशयं स्वशक्तिञ्च वीक्ष्य यथातथं करवाम । ततः सण्डीवी प्राब्रवीत् देव ! मरणमपि वरं न तु शत्रोः प्रणतिः, न वा विदेशे जीवनम् । तेन साकं योद्धव्यमस्माभिः, यदि स शत्रुः साम्प्रतमबध्यः तदपि प्राप्तेऽवसरे हन्तव्य एव । ततश्चिरजीवी प्रावोचत् कथं सन्धिः, कश्चात्र दूतः ? आसृष्टिवैरं काकानामुलूकैः ? तत्र को व्रजेत् । मन्त्रसाध्यमिदं मन्त्र एव राज्यस्य मूलमुच्यते । एतदाकर्ण्य स काकराजस्तं चिरजीविनमवादीत् सहायवान् शूरः सोत्साहो नृपः शत्रून् जयति । अथ प्रडीवी समभ्यधात् देव ! स बली रणे न जेतव्यः । ततः काकराजः प्राह भद्र ! वृद्धस्त्वं, ब्रूहि कथं काकोलूकस्य वैरित्वं, कश्चात्र मन्त्र इति । तदाकर्ण्य चिरजीवी तं काकराजमब्रवीत् देव ! वाक्यदोष एवायं त्वया गर्द्दभाख्यानं किं न श्रुतम् ? पुरा केनापि रजकेन कश्च

एको गर्दभः द्वीपिचर्मणाच्छाद्य पुष्ट्यै परशस्येषु समासक्तः कृतः। स तु तानि खादन् द्वीपीति जनैस्त्रासान्न वारितः। कदाचित् केनचित् कर्षकेण धनुर्धारिणा स दृष्टः। ततः स तं द्वीपीति कुब्जीभूय भयार्त्तः कम्बलावेष्टितशरीरस्ततो गन्तुं प्रवृत्ते। तञ्च तथा यान्तमवलोक्य असौ खरः खरोऽयमिति चिन्तयन् शस्यपोषिताङ्गः समुच्चैर्व्याजहार। तदाकर्ण्य तं गर्दभं मत्वा समुपेत्य स कर्षकः शरप्रहारेण कृतवैरमवधीत्। एवं वाग्दोषेणैवास्माकम् उलूकैः सह वैरम्।

आसन् पूर्वमराजका एव पक्षिणः। ततस्ते सम्भूय सर्वे पक्षिणः गगनादायाताः उलूकस्य पक्षिराजाभिषेचनं कर्तुं प्रारभन्त। तदवलोक्य वायसोऽब्रवीत् रे मूढाः! हंसकोकिलाः पक्षिसत्तमाः किं न सन्ति? येन क्रूरदृशम् अप्रियदर्शनम् अमङ्गलम् उलूकमिममभिषिञ्चथ? धिक् युष्मान् राजा प्रभाववान् कार्य्यः, यस्य नाम्ना एव कार्य्यं सिद्ध्येत्। तदत्र कथामिमां शृणुत कथयामि वः।

अस्ति चन्द्रसरो नाम महत् सरः। तस्य च तीरे शिलीमुखो नाम शशकः प्रतिवसति स्म। तत्रैकदा अनावृष्टिपातनिपीड़ितो गजयूथपतिश्चतुर्दन्तो नाम समाजगाम। तत्र तेन गजयूथेन अवगाहमानेन तस्य शिलीमुखस्य शशकराजस्य बहवः शशकाः विचूर्णिताः। ततस्तेन सुदुःखितोऽसौ शिलीमुखः दुःखितं विजयं नाम शशं सर्वसन्निधौ प्राह स्म भद्र! लब्धास्वादोऽयं गजपतिः पुनःपुनरत्र समेष्यति निःशेषयिष्यति चास्मान् तदत्र उपाय-

चिन्त्यतां, गच्छ तस्यान्तिकं क्वापि युक्तिरस्ति चेत् प्रदर्श्य-ताम्। त्वमेव कार्य्यमुपायञ्च वेत्सि, वक्तुञ्च सुयुक्त्या शक्नोषि, यत्र यत्र त्वं गतः, तत्र तत्रैव शुभमभूत्। इत्येवं प्रोषितस्तेन स विजयस्तत्र शनैरगमत्, अद्राक्षीच्च वार-णेन्द्रमागच्छन्तम्। यथातथं न बलिना सङ्गमः कार्य्य इति विविच्य सः अद्रिशिखरारूढ़स्तमब्रवीत् अहमस्मि दूतो भगवतः शशाङ्कस्य, स मद्वचनादिदमाह यदेतत् शीतं चन्द्रसरोऽस्ति तत्र मम निवासः, तत्रासन् शशकाः, अहं तेषां राजा, ते च मम प्रियाः, अत एवाहं शीतांशुः शशाङ्केति प्रसिद्धिं गतः, तदेतत् सरस्त्वया नाशितं शश-काश्च बहवो हताः, भूयश्चेदेवं कर्त्तासि, ततस्त्वमनुरूप-मस्य फलमवाप्स्यसि। एतदाकर्ण्य स गजेन्द्रः सभयमब्रवीत् नैवमहं पुनः करिष्ये, मान्यः स मे भगवान् शशीति। एवं वादिनं विजयः सखे! एहि दर्शयामि त्वां भगवन्त-मिति उक्त्वा तं नागेन्द्रं सरसोऽन्तिकमानीय तस्मै चान्द्रं प्रतिबिम्बं जलपतितमदर्शयत्। तद् दृष्ट्वा दूरतो नत्वा भयाकुलः सपदि सयूथः वनमगात् पुनस्तत्र नाययौ। प्रत्यक्षं तत् सर्वं दृष्ट्वा स शशराजः शिलीमुखः तं दूतं शशं सम्मान्य निर्भयः स्वस्थानमध्यवसत्। इत्युक्त्वा वायसस्तान् पक्षिणः पुनरुवाच एवं स एव प्रभुः, यं कश्चिन्न बाधते, न तु अयमुलूको दिवान्धः, क्षुद्रोऽयं कुतो राज्यमर्हति? क्षुद्रो हि अविश्वास्यः, तदत्र कथामिमामाकर्णय।

कदाचित् क्वापि तरौ अहमवसम्। तत्र चाधः पक्षी कपिञ्जलो नाम कृतनिलयः प्रतिवसति। स कदाचित्

क्वापि गतः। यावदसौ बहून् दिवसान् न आयाति तावत् तन्नीड़मेत्य कोऽपि शशको वसति स्म। अथ गच्छति काले स कपिञ्जलः समायातः शशकं तं कृतनीड़ाधिकारं दृष्ट्वा प्राब्रवीत् गच्छ दूरं मन्नीड़ात् दुराचार! इति। ततस्तयोभयोरन्योन्यं तन्नीड़मुपलक्ष्य विवादः प्रावर्त्तत। ततस्तोभौ निर्णेतारमन्वेष्टुं प्रस्थितौ। अहञ्च तत् कौतुकं द्रष्टुं तावन्वगमम्। अथ तौ सरस्तीरे स्तोकं गत्वा हिंसाधृतमृषाव्रतं ध्यानार्द्धमीलितदृशं मार्जारमपश्यताम्, अवोचताञ्च तं धार्मिकं मत्वा विड़ालं किमत्र न्याय्यं, त्वं हि भगवन्! धार्मिकस्तपस्वीति। श्रुत्वा तत् विड़ालः अल्पया वाचा जगाद नाहं तपःक्षामः शृणोमि दूरात्, आयात मत्सकाशं, धर्म्मो हि असम्यक् निर्णीतः उभौ लोकौ निहन्ति, इत्थमाश्वास्य समीपमानीय स विड़ालः उभावप्यखादत्। तदेवं क्षुद्रे दुर्जने न विश्वासः कार्य्यः। तस्मादुलूकोऽयं दुर्जनो राजा भवद्भिर्न कर्त्तव्य इति अभिधाय तेन वायसेन उलूकाभिषेचनात् वारिताः पक्षिणस्तथेति प्रतिपद्य स्वं स्वं धाम ययुः। अद्यप्रभृति यूयं वयञ्चान्योन्यशत्रव इति काकमुक्त्वा स उलूकः क्रुधा ज्वलन् प्रययौ। काकोऽपि युक्तमुक्तं मत्वा निर्भयोऽभवत्, वाङ्मात्रोत्पादितात् वैरात् को हि अनुतप्यते? एवं वाग्दोषादेव कौशिकैः सह नौ वैरं इत्युक्त्वा चिरजीवी तं काकराजं पुनरवदत् देव! बहवोऽपि बलिनो जेतुं शक्याः, न तु कौशिकाः, बहवोऽपि जयन्तीत्यत्र निदर्शनं शृणु।

कश्चिद् द्विजः छागं क्रीतं स्कन्धे गृहीत्वा व्रजन् पथि

बहुभिर्धूर्त्तैर्दृष्टश्छागहरणार्थिभिः। तेषाञ्चैकः समेत्य ससम्भ्रमं तं द्विजमवादीत् ब्रह्मन्! कथमयं श्वा स्कन्धे धृतः? सत्वरममुं मुञ्च। असौ द्विजः तद्वचनमनादृत्य यदा गच्छति तदापरौ द्वौ धूर्त्तौ समेत्य तमूचतुः भगवन्! त्यज्यतामयं श्वा, जातु कोऽपि पश्येत्। ततोऽपि यावत् किञ्चिदुपजातसंशयः प्रयाति तावत् अपरे त्रयो धूर्त्ताः समेत्य अवदन् ब्रह्मन्! कथं यज्ञोपवीतञ्च श्वानञ्च समं वहसि? नूनं त्वं व्याधः, नैव विप्रः, अनेन शुना मृगान् हंसि। इति श्रुत्वा स ब्राह्मणः क्षणं दध्यौ नूनमहं केनचिद् भूतेन मे दृग्रं हृत्वा भ्रामितः, सर्वेऽपि किं मृषा पश्यन्ति। इत्यमालोच्य स विप्रस्तं श्वानमेव मत्वा स्नात्वा च गृहमगात् धूर्त्ताश्च सर्वे तमजं नीत्वा यथेच्छमभक्षयन्। इत्युक्त्वा स चिरजीवी पुनस्तं वायसेश्वरमवदत् देव! एवं हि दुर्ज्जना बहवो बलवन्तश्च, तदस्मिन् बलिविग्रहे यदहं वच्मि तत् कुरु, मां किञ्चित् लुञ्चितपक्षं कृत्वा अस्यैव तरोरधः संरक्ष्य यूयमिमं गिरिं यात, यावदहं कृतार्थः आगच्छामि। तदाकर्ण्य तं क्रुधेव उल्लुञ्चितपक्षं कृत्वा अधस्तात् प्रक्षिप्य काकराजः सपरिजनः तं गिरिं प्रायात्। चिरजीवी तु तरोरधः पतित्वा तत्रैवासीत्। ततस्तत्र स उलूकराट् सानुगः रात्रौ तत्राययौ, न च ददर्श तत्र एकमपि वायसम्। तावत् स चिरजीवी तं क्वणेवाल्पस्वरोऽवदत् अहं तस्य काकराजस्य चिरजीवीति मन्त्री, स च अन्यैर्मन्त्रिभिः सम्मन्त्र्य तामाक्रमितुमयतिष्ट, अहन्तु तान् मन्त्रिणस्तञ्च नृपं निर्भर्त्स्य अब्रुवन् यदि मां मन्त्रं परि-

पृच्छसि, यदि चाहं ते सम्मत', तदा बलवता कौशिक-राजेन विग्रहो न कार्य्यः, यदि नीतिरनुस्रियते तदा तस्यानुनयः कार्य्यः। एतत् श्रुत्वा शत्रुपक्षोऽयमिति क्रोधात् स मूर्खः काकः मन्त्रिभिः सार्द्धं मम इमामवस्थामकरोत्, माञ्च तरुतले क्षिप्ता क्वापि सानुचरोऽगमत्। इत्युक्ता स चिरजीवी श्वसन्नधोमुखस्तस्थौ। ततश्च उलूकपतिः स्वान् सचिवानप्राक्षीत् भद्राः! किमस्य मया विधातव्यं चिर-जीविनः? तदाकर्ण्य दीप्तनयनो नाम मन्त्री तमवोचत्, अरक्षोऽपि चौरः उपकारीति सज्जनैः रक्ष्यते। तदत्र कथां शृणु।

आसीत् पूर्वं कश्चिद् वणिक्। स वृद्धोऽपि अर्थप्रभा-वेण कामपि वणिक्सुतां पर्य्यनैषीत्। सा तु जरतस्तस्य शयने नित्यं व्यतीतपुष्पकाला भ्रमरीव पराङ्मुखी अभूत्। एकदा निशि शय्यास्थयोस्तयोः सदने चौरः प्रावि-शत्। तं दृष्ट्वा सा परावृत्त्य भयात् पतिमाश्लिष्टा। वणिक् तमभ्युदयमाश्चर्य्यं मत्वा यावत् दिशो निरीक्षते तावत् कोणे चौरम् अद्राक्षीत्। ततस्त्वम् उपकारी असि, नाहं त्वां भृत्यैर्घातयामि इत्युक्त्वा तं रक्षित्वा गृहं प्राहिणोत्। तदेवमुपकारकोऽयमस्माकं चिरजीवी रक्ष्यः। इत्युक्त्वा तस्मिन् विरते कौशिकेश्वरः वक्रनासाख्यं मन्त्रिणमपृच्छत् भद्र! किमत्र कार्य्यं सम्यक् वदतु भवानिति। वक्रनासो-ऽब्रवीत् अयं परमर्म्मविद् रक्षणीयः। अत्र तावदिमां कथां शृणोतु देवः।

कश्चित् द्विजः पुरा प्रतिग्रहेण द्वे गावौ प्राप। ततश्च

चौरस्तस्य गावौ दृष्ट्वा हर्त्तुमचिन्तयत्। तस्मिन्नेव क्षणे कश्चिद्राक्षसः तं द्विजं खादितुमैच्छत्। एतदर्थञ्च निशि गच्छन्तौ तौ चौरराक्षसौ दैवात् मिलितौ अन्योन्यमुक्तार्थौ तत्र समं प्रययतुः। अहमादौ धेनुं हरामि, यतस्त्वद्गृहीतोऽयं सुप्तः द्विजः यदि प्रबुद्धः स्यात् तदा कथमहं धेनुं हरेयमिति। नैवम्, अहमेव पूर्वं विप्रं खादामि नो चेत् ह्रियमाणाया गोः खुरशब्देन अस्मिन् द्विजे प्रबुद्धे मम परिश्रमो वृथा स्यादिति। यावत् तौ विप्रभवनं प्रविश्य कलहायेते तावत् स द्विजः प्राबुध्यत। प्रबुध्य च गृहीतकृपाणे रक्षोघ्नमन्त्रजापिनि तस्मिन् द्विजे तौ चौरराक्षसौ द्वावेव पलायाञ्चक्राते। इत्थं तयोर्भेदो यथा द्विजस्यास्य हितायाभूत्, तथा काकेन्द्रचिरजीविनोर्भेदः अस्माकं हिताय। इत्येवं वक्रनासेन मन्त्रिणाभिहिते स कौशिकराजः प्राकारकर्णं नाम अपरं मन्त्रिणं पृच्छति स्म। सोऽब्रवीत् प्रभो! चिरजीवी अयं शरणागतत्वादनुकम्प्यः। पूर्वं शरणागतरक्षणाय स्वमांसं शिविरदात्। एवं तस्य वचनं निशम्य कौशिकपतिः क्रूरलोचनं नाम सचिवं पप्रच्छ। सोऽपि तथैवाभ्यधात्। ततो रक्ताक्षनामा मन्त्री राज्ञा परिपृष्टः प्राब्रवीत् राजन्! अपनयेन एतैर्मन्त्रिभिर्भवान् नाश्यते। मूर्खो दृष्टव्यलीकोऽपि जातु सान्त्वेन तुष्यति। तदत्र कथामेतामाकर्णय।

आसीत् कश्चित्तक्षा। तस्य भार्य्या प्रियातीवाभूत्। तामेकदा अन्यपुरुषासक्ताम् अन्यलोकतः श्रुत्वा तत्त्वं जिज्ञासमानस्तामवदत् प्रिये! राजाज्ञयाहं सुदूरं प्रयामि,

तत्त्वया मम किञ्चित् पाथेयं सक्तु प्रदीयताम्। तथेति तया दत्तपाथेयः स गृहात् निर्गत्य सानुगः सुगुप्तं गृहमेत्य अलक्षितः खट्टायास्तलमध्यतिष्ठत्। सापि तद्भार्य्या पर-पुरुषमानीय तेन साकं खट्टायां रममाणा यदा पदा पतिं स्पृष्ट्वा तत्रस्थमेव तं पतिममन्यत। क्षणे च तस्मिन् तदु-पपतिर्व्याकुलस्तां पप्रच्छ प्रिये! ब्रूहि किन्ते प्रियोऽह-मधिकः, अथवा पतिस्ते? तदाकर्ण्य चतुरा सा तं जारं निजगाद प्रियो मम पतिस्तस्य कृते प्राणानपि परित्यजेयं इदञ्च स्त्रीणां सहजं चापलं, किमर्थमिदं क्रियते? आसां यदि नासिका न स्युः तदा अमेध्यमपि भक्ष्यं स्यात्। एवं तस्या वचः कुलटायाः कृत्रिमं श्रुत्वा तुष्टः पतिरसौ तस्याः सानुगः शय्यातलान्निर्गतः अनुगं प्राब्रवीत् भद्र! दृष्टं त्वया, त्वमेव मे साक्षी, इयमीदृशी मम भक्ता, अमूमेव कान्तामहमाश्रितः, तदेनां मूर्द्ध्नि वहामि। इत्युक्त्वा सहसा खट्टास्थौ तावुत्क्षिप्य सानुगः स जड़ः शिरसा अवहत्। इत्थं प्रत्यक्षदृष्टेऽपि दोषे मूर्खः कपटसान्त्वेन तुष्यति हास्यत्वं गच्छति च। तदेष चिरजीवी चिररिपुत्वान्न रक्ष्यः। उपेक्षितोऽयं मेघो द्रुममिव रक्षितारं हनिष्यति। इति रक्ताक्षवचनमाकर्ण्य कौशिकेन्द्रस्तमब्रवीत् भद्र! अस्मद्धितं कुर्वन्नसौ साधुरिमामवस्थां गतः, तत् कथमेषः न संरक्ष्यः, किंवा अयमेकाकी कुर्य्यात्। इत्युक्त्वा स उलूक-राट् मन्त्रिवाक्यं निराचकार, आश्वासयामास च तं वायसं चिरजीविनम्। ततः स चिरजीवी तमुलूकेश्व-व्यजिज्ञपत् देव! किं मे एतदवस्थस्य जीवनेन। तस्मै चिता

रचयित्वा अग्निं दापय, अहमग्निं प्रविशामि। वरमहमुलूकयोनिं हुताशनात् वरं याचे तस्य वायसराजस्य प्रतिक्रियामाचरितुम्। इत्युक्तवन्तं तं रक्ताक्षो विहसन् जगाद अस्मत्प्रभोः प्रसादात् त्वं स्वस्थ एव किं ते अग्निना, यावत् ते काकत्वमस्ति तावत् ते कौशिकत्वं न भविता, विधात्रा यो यादृशः कृतः, स तादृश एव स्यात्। तदत्र कथामेकामाकर्णय।

पूर्वं कश्चिन्मुनिः कस्यापि हस्तच्युतां मूषिकां शिशुं प्राप्य कृपया तपोबलात् कन्यामकरोत्। कालेन प्राप्तयौवनामाश्रमवर्द्धितां तां दृष्ट्वा स मुनिः बलवते दातुमादित्यमाह्वयत्, अवोचच्च च विभावसो! बलवते दित्सितामेतां कन्यां परिणयस्व इति। तदाकर्ण्य रविरब्रवीत् ब्रह्मन्! मत्तोऽपि मेघो बलवान्, स हि क्षणेन मां स्थगयति। तदाकर्ण्य स मुनिस्तं विसृज्य तथैव मेघमाह्वयदवदच्च। ततः सोऽब्रवीत् भगवन्! मत्तोऽपि वायुर्बलवान्, स क्षणात् मां दिक्षु क्षिपति। इत्युक्तः स मुनिर्वायुमाह्वय तथैवावदत्। वायुरुवाच मत्तोऽपि शैलाः बलवन्तः, तदेकं तेषामाह्वयेति श्रुत्वैतदृषिर्यावत् तमद्रिमाह्व तावत् सोऽपि तं जगाद ब्रह्मन्! मूषका मत्तो बलवन्तः ते मम छिद्राणि कुर्वते। एवं क्रमेण दैवतैर्ज्ञानिभिश्च प्रत्युक्तो महर्षिर्वनसम्भवमेकं मूषकमाजुहाव, उवाच च कन्यामेतां परिणयस्वेति। सोऽवदत् ब्रह्मन्! कथमेषा विलं प्रवेक्ष्यतीति समादिश्यतामिति। ततः स पूर्ववत् मूषिकैवास्तु इति तां मूषिकां कृत्वा तस्मै आखवे प्रायच्छत्। एवं सुदूरं गत्वापि यो

यादृशस्तादृश एव सः। तत् त्वं कदापि उलूको न भवि-
ष्यसि। इत्युक्तो रक्ताक्षेण स चिरजीवी अचिन्तयत् नीतिज्ञ-
स्यास्य वचनं राज्ञानेन न कृतं यदेषा इमे सर्वे मूर्खाः, तस्मे
कार्यं सिद्धमेव। इति सञ्चिन्तयन्तं तं चिरजीविनमा-
दाय रक्ताक्षवाक्यमविगणय्यैव तद्बलगर्वितः कौशिक-
राजः स्वं निलयं प्रतस्थे। चिरजीवी च तद्दत्तेन मांसा-
दिना परिपोषितः तत्राचिरेण बली सुपक्षश्च सम-
भवत्।

एकदासौ तमुलूकेन्द्रमवदत् देव! यामि अहम्,
आश्वास्य तं काकराजम् स्वमास्पदमानयामि येनाद्य
रात्रौ निपत्य युष्माभिः स निहन्यते। अहमस्य त्वत्-
प्रसादस्य निष्कृतिं कृत्वा कृतकार्यो भविष्यामि, यूय
तृणाद्यैर्द्वारमाच्छाद्य नीड़ाभ्यन्तरे तदागतभयात् रक्षिता-
स्तिष्ठन्तु। इत्युक्त्वा तृणपर्णादिच्छन्नद्वारगुहान्तरान् उलू-
कान् कृत्वा चिरजीवी स्वप्रभोरन्तिकमाययौ। ततो
वायसैः स सम्भूय चञ्चग्रलम्बितेन वह्निदीप्तचितोल्मुकेन
वह्निना तेषां कृत्स्नं तृणादिभिर्गुहाद्वारं ज्वालयामास,
ददाह च क्रमेण सर्वांस्तान् कौशिकान् समिद्धाग्निना।
इत्थं शत्रून् विनाश्य चिरजीवी तं मेघवर्णं काकराजमवा-
दीत् देव! रक्ताक्ष एव तस्य रिपोः सुमहान् नीतिनिपुणो
मन्त्री आसीत्, तस्य वाक्यमकुर्वता मदान्धेन तेन अहं
सुरक्षितः। यच्चासौ तद्वचनं न चकार, तेनैवासौ मूर्खः
मया विश्वास्य व्याजानुवृत्त्या अहिना मण्डूका इव
घातितः।

पूर्वं कश्चिद् वृद्धो भुजङ्गः सुखेन भोज्यमलभमानः कस्मिंश्चित् सरस्तीरे विनिश्चलस्तस्थौ । तथा स्थितं तं सुदूरात् भेकाः पप्रच्छुः, ब्रूहि कथमस्मान् पूर्ववन्न भक्षयसि ? एवं पृष्टः स पन्नगस्तान् भेकानवादीत् मया मण्डूकाननुधावता कस्यचिद् ब्राह्मणस्य पुत्रो भ्रान्त्या अङ्गुष्ठे दष्टः पञ्चत्वमगात् । तच्च दृष्ट्वा तत्पिता अभिशापेन अहं भेकानां वाहनीकृतोऽस्मि, तत्कथं युष्मान् भक्षयामि प्रत्युत वहामि । तदाकर्ण्य तेषां राजा वाहसमुत्सुकः जलात् उत्तीर्य्य गतभीर्मुदा तत्पृष्ठमारुरोह । ततस्तं वाहनसुखैर्वशीकृत्य एकदा आत्मानमवसन्नमिव कृत्वा सकपटमुवाच देव ! आहारेण विना नाहम् एकमपि पदं गन्तुमुत्सहे, तन्मे अशनं देहि, भृत्यो हि अवृत्तिर्न वर्त्तते । तदाकर्ण्य भेकराजस्तमभ्यधात् भद्र ! कांश्चित् परिमितान् ममानुचरान् भुङ्क्ष्व । ततः सोऽहिः क्रमात् यथेच्छमहीनभक्षयत् । स च मण्डूकराजस्तद्वाहनाभिमानान्धस्तत् भेकाभिभवनं सेहे । एवं स मूर्खः वृद्धेनाहिना यथा वञ्चितः तथा मयापि अनुप्रविश्य ते रिपवो हताः । तस्मात् राज्ञा कृतात्मना नीतिविदा भवितव्यम् । जड़ो हि प्रभुर्यथेष्टं भुज्यते हन्यते च । देव ! इयञ्च श्रीः सदा द्यूतलीलेव सकपटा वारिवीचिव चपला तथा मदिरेव विमोहिनी । सा तु धीरस्य सुमन्त्रस्य निर्व्यसनस्य विशेषज्ञस्य सोत्साहस्य राज्ञः सकाशे पाशबद्धेव तिष्ठति । तदिदानीं त्वमवहितः विद्वद्वचनस्थितः सन् अरीन् निहत्य सुखेन अकण्टकं राज्यं शाधि । इत्युक्तो मन्त्रिराजेन चिरजीविना स मेघ-

वर्षः काकराट् तं सम्मान्य तथैव राज्यमकार्षीत्। इत्युक्त्वा गोमुखो भूयो वत्सराजसुतमभ्यधात् देव ! प्रज्ञया तिर्यग्भिरपि राज्यं भुज्यते, निष्प्रज्ञाश्च अवसीदन्ति, उपहास्यन्ते च लोकैः। तथात्र कथामपरां निबोधतु देवः।

आसीत् कस्यचिद् धनिनः जड़मतिरेको भृत्यः। स अजानन्नपि जानामीत्यभिमानात् तस्य प्रभोरङ्गे करमदात्। ततस्तेन स्वामिना अवमतः परित्यक्तश्च स भृश-मवससाद। अपरौ मालवभ्रातरौ निशम्येताम्। द्वौ विप्रौ अभूताम्। तयोः पैतृकमद्वैधं वसु आसीत्। कालेन विभज्यमाने पित्रर्थे न्यूनाधिकविवादिनौ उपाध्यायं मध्यस्थमकार्ष्टाम्। स च तावभाषत प्रतिवस्तु समीकृत्य विभज्यतां, येन युवयोर्न्यूनाधिकविभागतः कलिर्न भवेत्। तदाकर्ण्य वेश्मशय्यादिभाण्डं सर्वं पशूंश्च प्रत्येकं द्विधा कृत्वा तौ मूढ़ौ विभजतः स्म। एकासीद्दासी सापि ताभ्यां द्विधा कृता। तत् सर्वं ज्ञात्वा राज्ञा तौ सर्वस्वञ्च दण्डितौ। एवं हि मूर्खा मूर्खोपदेशात् द्वौ लोकौ नाशयन्ति, तस्मात् प्राज्ञः मूर्खान् न आश्रयेत्, पण्डितानेव सेवेत। असन्तोषश्च दोषाय भवतीत्यत्र कथा निशम्यताम्।

आसन् क्वचित् केचित् भिक्षासन्तोषशालिनः प्रव्राजकाः। तानवलोक्य कतिचित् सुहृदोऽन्योन्यमब्रुवन् अहो भिक्षाशिनोऽपि एते प्रव्राजकाः पीनाः। तेषाञ्चैकः आब्रवीत् कौतुकमत्र वो दर्शयामि। अहमेतान् पूर्ववत् भुञ्जानानपि कृशीकरोमि। इत्युक्त्वासौ एतान् क्रमेण गृहे एकैकशः एकाहम् उत्तमं षड्विधरससमाहारं भोजया-

मास। अथ ते मूर्खाः परिव्राजः तथास्वादं स्मरन्तः पूर्ववत् भैक्ष्यभोजनं न अभिलषन्ति स्म, दुर्बलाश्चाभवन्। ततः स आहारदाता तेषां सुहृदां मध्ये तान् तादृशान् प्रदर्श्य सहासमब्रवीत् तदा भैक्ष्यसंन्तुष्टा हृष्टाः पुष्टाश्च अमी आसन्, इदानीमसन्तोषदुःखात् दुर्बलतामगमन्, तस्मात् प्राज्ञः सुखमिच्छन् सन्तोषमवलम्बेत। लोकयोरुभयोरपि असन्तोषः दुःसहदुःखहेतुरिति तेन सुहृदा अनुशिष्टा अपरे सुहृदः दुःखास्पदमसन्तोषमत्यजन्। कस्य वा तादृशसङ्गो न शुभाय? अयञ्च देव! सुवर्णमुग्धो निशम्यताम्।

कश्चित् युवा जलं पातुं तड़ागमगात्। स तु जड़ः स्वर्णचूलस्य पक्षिणः सुवर्णवर्णं लोम पश्यन् सुवर्णं मत्वा ग्रहीतुमुपचक्रमे। क्रमशस्तस्य स पक्षी धावत एव प्रनष्टो दूरमगात्, तड़ागजलञ्च पश्चात् पतितं विस्मृतमार्गेण तेन नासादितम्। इत्थमवसादं गच्छन् स स्वेन पित्रा दृष्टः गृहं नीतश्च। एवमबुद्धयो निर्विवेका मृषाज्ञानैर्विमुह्यन्ति, व्रजन्ति च परेषामुपहास्यतां शोच्यताञ्च बन्धूनामिति। अयञ्चापरो महामूर्खवृत्तान्तः श्रूयताम्।

कस्यापि वणिजः पथि भारवाही उष्ट्रः अवससाद। स वणिक् भृत्यं कञ्चिदब्रवीत् अहमितो गत्वा अन्यमेकमुष्ट्रं क्रीत्वा आनये, यो हि अस्य करभस्य भारार्द्धमाहरेत्। युष्माभिरत्र स्थितैः मेघागमे यथा एतासु वस्त्रपेड़ासु जलं चर्म्माणि न स्पृशेत् तथा कार्य्यमित्यभिधाय तान् सर्वान् अनुगान् उष्ट्रस्य पार्श्वे अवस्थाप्य स वणिक् प्रस्थितः।

चनश्च वर्णितुं प्रारभत। तथास्माभिः कार्थ्यं यथा नाम्भः पेड़ाचर्माणि स्पृशेत् इति स्वामिनोक्तं इत्यालोक्य ते जड़मतयः पेड़ाभ्यः वस्त्राणि कृष्ट्वा तैस्तैर्वस्त्रैस्तानि चर्माख्यभ्यवेष्टयन्, तेन च वस्त्राणि तानि विनष्टानि सर्वाणि। पापाः! कथमज्ञैः सर्वाणि मे वसनानि नाशितानि? इत्यागत्य स वणिक् तान् सकोपमवादीत्। ते च जड़ाः प्रभुणैवादिष्टमम्भसः पेड़ाचर्माणि रक्षितुं, तत् कोऽस्माकं दोष इति प्रत्यवदन्। चर्मसु आर्द्रेषु वस्त्राणि न नश्येयुरिति चर्मरक्षणं वस्त्ररक्षणार्थमेव मयोक्तम्। इति तान् प्रत्यभिधाय अन्यकरभन्यस्तभारः स वणिक् गृहं गत्वा भृत्यान् तान् सर्वस्वमदण्डयत्। एवमज्ञाताशया मूर्खा विपरीतमारचय्य स्वार्थं परार्थञ्च घ्नन्ति। अयञ्च अपूपिकामुग्धः संक्षेपेण निशम्यताम्।

अध्वगः कश्चित् पणेन अष्टौ अपूपान् क्रीणाति स्म। तेषाञ्च षट् भुक्त्वासौ न तृप्तिमाप परं सप्तमे भक्षित एव तस्य तृप्तिरुदपद्यत। ततः स जड़ः मुषितोऽस्मि कथं मयादित एव अयमपूपो न भक्षितः येनास्मि तर्पित इति चक्रन्द। इत्येवं शोचन् क्रमात् तृप्तिमजानन् स जड़ उपहसितो जनैः। कश्चित् मूर्खो दासः केनापि वणिजा अभिहितः भद्र! रक्ष द्वारं विपण्याः, यावदहं गृहं प्रविशामि। इत्युक्त्वा तस्मिन् वणिजि गते स दासः द्वारपट्टकं विपण्या अंसे आदाय नटं द्रष्टुमगात्। अथागच्छन् स वणिक् तं तत आगच्छन्तं दृष्ट्वा निरभर्त्सयत्। त्वयोक्तं द्वारं मया रक्षितम् इति सोऽवादीत्। इत्येवं शब्दमात्रपरोऽतात्पर्य्य-

विद् जड़: केवलमनर्थाय भवति। साम्प्रतं महिषमुग्धा-ऽपूर्वः निशम्यताम्।

आसीत् कश्चित् महिषपालः। तेन चैकदा गत्वा राजा विज्ञप्तः, महिषो मे भक्षितो ग्राम्यैरिति। अथ राजा ग्राम्यान् तान् महिषभक्षकानानाययामास। स महिष-स्वामी तेषां सन्निधौ राजानमभ्यधात् देव! तड़ागसन्निधौ वटतरोरधः एभिर्मे महिषो हत्वा भक्षित इति। तदाकर्ण्य तेषामेकः वृद्धमूर्खः प्रावदत् देव! तड़ाग एवास्मिन् ग्रामे नास्ति, न च वटतरुः क्वचित्। मिथ्यैषः ब्रवीति, क्वास्य महिषो हतो भक्षितो वा? श्रुत्वैतत् महिषस्वामी प्रत्य-वादीत् नास्ति किं स वटः तड़ागश्च स पूर्वस्यां दिशि ग्रामस्य। तत्रासौ मे महिषो अष्टम्यां युष्माभिर्भक्षितः। इत्युक्तः स वृद्धमूर्खः पुनरब्रवीत् देव! पूर्वा दिगप्यत्र ग्रामे नास्ति, नापि अष्टमी तिथिः। एतत् श्रुत्वा राजा तं जड़-मुत्साहयन्नब्रवीत् त्वं सत्यवादी, नासत्यं किञ्चिद्वदसि, साम्प्रतं सत्यं वद स महिषो युष्माभिः भुक्तो न वा। एतदाकर्ण्य जड़ोऽवादीत् मृते पितरि त्रिभिर्वत्सरैर्जातोऽस्मि तेन च उक्तिपाटवं शिक्षितोऽहम्। तन्महाराज! कदापि नाहम-सत्यं वदामि, भुक्तोऽस्माभिरस्य महिषः, असौ अन्यत् मृषा वदति। श्रुत्वैतत् सानुगो राजा हासं रोद्धुं नाशक्नोत्। ततश्च तस्य महिषमन्यं प्रदाप्य तान् ग्राम्यान् अदण्डयत्। इत्थमगुह्यं निगूहन्ति गुह्यं प्रकटयन्ति च मूर्खाः। शृणु देवापरं मूर्खवृत्तम्।

क्वापि गृहिणी कोपना कश्चित् दरिद्रं मूर्खमभाषत

अहं प्रतिवेशिगृहे निमन्त्रिता उत्सवे यास्यामि, तत्त्वया कुतोऽपि एका उत्पलमाला नानीयते चेत् तदाहं ते भार्य्या नास्मि, नापि त्वं मे भर्त्तेति। ततः स तदर्थं रजन्यां राजकीयं सरो ययौ। तत्प्रविष्टस्य रक्षिभिर्दृष्टा कोऽसीति सोऽपृच्छ्यत। स च चक्रवाकोऽस्मीति वदन् प्रातः बद्धा राजान्तिकं नीतः। तत्र च पृच्छ्यमानो नृपसन्निधौ चक्रवाकरुतमकार्षीत्। ततः स स्वयं राज्ञा सनिर्बन्धं पृष्टः कथितवृत्तान्तो मूर्खः दयालुना मुक्तः स्वस्थानमगात्।

आसीत् कश्चित् मूढ़धीर्वैद्यः। तमेकदा कश्चिद् ब्राह्मणः प्रावदत् कविराज! मम पुत्रस्य कुब्जस्य ककुदम् अभ्यन्तरं नयतु भवान्। एतदाकर्ण्य भिषगब्रवीत् दश पणान् मे देहि, यदि ते कार्य्यं न साधयामि तदाहं दश गुणान् ते दास्यामि। इत्थं कृतपणः स भिषक् तस्माद् द्विजात् तान् पणान् गृहीत्वा तं कुब्जं केवलं स्वेदादिभि-ररुजत्, न चाशकत् समीकर्त्तुं ददौ च पणीकृतान् दश-गुणान् पणान्। कोऽपि मानुषः कुब्जम् ऋजूकर्त्तुं शक्नु-यात्? इत्थमशक्यार्थप्रतिज्ञानविकत्थना मूढ़ाः केवलं हासाय लोकानां, तदीदृशैः मूढ़मतिभिः न संवसेत् बुद्धि-मान्। इत्येवं भद्रमुखात् गोमुखात् सचिवात् मुग्धकथां निशम्य नरदेवसूनुर्नरवाहनदत्तः रजन्यां सुमतिनीति-मतेन तस्मै भृशं तुतोष। तत्कथाविनोदाच्च शक्तियशः-समुत्सुकोऽपि शयनीयतले स्ववयस्यैरुपेतो निद्रामभजत्।

# अथ त्रिषष्टितमस्तरङ्गः ।



अथ प्रातः समुत्थाय असौ नरवाहनदत्तः प्रियां शक्तियशसमनुध्याय भृशं व्याकुलतामगात्। तस्या विवाहविधेः शेषं मासं युगसन्निभं मन्यमानः समुत्सुकेन चेतसा न च धृतिमलभत। गोमुखमुखात् तद्वार्त्तां विदित्वा अस्य पिता वत्सराजः स्नेहात् स्वसचिवान् वसन्तकादीन् तत्सकाशं प्राहिणोत्। तेषाञ्च गौरवेण गृहीतधैर्य्ये तस्मिन् नरवाहनदत्ते विदग्धो गोमुखो मन्त्री तं वसन्तकमभाषत आर्य्य वसन्तक! युवराजस्य मनस्तुष्टिकरीं कामपि अभिनवां विचित्रां कथामाख्याहि। ततो धीमान् वसन्तकः कथामाख्यातुं प्रावर्त्तत।

अभूत् पुरा मालवे श्रीधरो नाम कश्चिद् द्विजातिः। तस्य द्वौ यमजौ सुतावभूताम्। ज्येष्ठो यशोधरो नाम द्वितीयो लक्ष्मीधरः। तौ च यौवनस्थौ पित्रादेशेन विद्याप्राप्तये देशान्तरं गतौ। क्रमात् पथि गच्छन्तौ कामपि निर्जलां छायारहितां सन्तप्ताभिः सिकताभिश्चितां महाटवीं प्रापतुः। तृषा आतपेन च क्लान्तौ तौ सायमेकं सफलं छायाशून्यं तरुं प्राप्तवन्तौ। तस्य च तरोरन्तिके एका शीतस्वच्छतोया कमलशोभिनी वापी आसीत्। तां दृष्ट्वा प्रहृष्टौ तौ तस्यां स्नात्वा कृतफलाहारौ तत्पानीयं पीत्वा तत्र शिलातले उपविश्य क्षणं विश्रामसुखमलभेताम्।

अथास्तं गते सवितरि तौ सन्ध्यामुपास्य श्वापदभयात् निशां नेतुं तरुमारुरुहतुः। प्रदोषे च तस्या वाप्या जलान्तरात् पश्यतोस्तयोः बहवः पुरुषाः समुत्पेतुः। तेषाञ्च कश्चित् भूमिं तामशोधयत्, कश्चन अलिपत्, कोऽपि तत्र पञ्च-वर्णानि पुष्पाणि अवाकिरत्। अपरस्तत्र काञ्चनपर्य्यङ्क-मानीय समस्थापयत्। अन्यश्च तत्र प्रच्छदोत्तरां तूलिका-मस्तरत्। कश्चन तत्र तरोरधः पुष्पाङ्गरागादि उत्तमं पानमाहारञ्च आनीय संस्थापयामास।

अत्रान्तरे तस्माद् वापीतलात् रूपजितमन्मथः खड्गी दिव्याभरणभूषितः कश्चित् पुरुषः उदतिष्ठत्। तस्मिंश्च तत्र आसनासीने सर्वे परिजनास्तस्यामेव वाप्यां न्यमज्जन्। अथ स पुमान् मुखात् एकां सुभव्यां विनीतवेशां माङ्गल्या-भरणालङ्कृतां कामिनीं द्वितीयाञ्च अतिरूपवतीं सद्रत्ना-भरणैरुज्ज्वलाम्। ते हि तस्य उभे भार्य्ये। पश्चिमा तु वल्लभा सुधीः तानि उपयोगद्रव्याणि पात्रद्वये निधाय भर्त्तुः सपत्न्याश्चाहारं पानञ्च उपानयत्। ततश्च भुक्तवतो-स्तयोः सापि बुभुजे। अथ तत्पतिः तथा द्वितीयया साकं तत्पर्य्यङ्कशयनमभजत अगच्छत् सुखनिद्राम् अनुभूय सुरत-सुखम्। प्रथमा तु कृतभोजना तस्य पादसंवाहनमका-र्षीत्। सापि द्वितीया निर्निद्रैव तत्र शयने तस्थौ। एतदवलोक्य तौ तरुस्थौ भ्रातरौ मिथः प्रोचतुः केयम्? आवामवतीर्य्य इमां पादसंवाहिनीं पृच्छावः सर्वे हि अमी अविज्ञाता एव दृश्यन्ते। अथ तौ यावत् अवतीर्य्य तामा-यामुपसर्पतः, तावत् सा द्वितीया तयोराद्यं यशोधर-

मद्राक्षीत्। उत्थाय च सा पत्युः सुप्तस्य शयनात् अति-चपला तं यशोधरमुपेत्य सुखाश्रया मां भजस्वेत्यभाषत। स तु पापे! त्वं हि परनारी, अहञ्च ते परपुरुषः, तत् कथमेवं वदसीति सरोषमवादीत्। सा पुनरब्रवीत् त्वादृशानां शतेनाहं सङ्गता, तत् किं ते परनारीसङ्गात् भयेन। न चेत् प्रत्येषि, पश्य एतानि मे अङ्गुलीयकानि। एकैकमङ्गुलीयम् एकैकस्मात् मया गृहीतम्। इत्युक्त्वा सा स्वाद्वस्त्रलात् अङ्गुलीयानि दर्शयामास। ततो यशोधरः प्रत्यवादीत् त्वं शतेन सहस्रेण लक्षेण वा सङ्गच्छस्व, मम तु त्वं माता, नाहं तथाविधोऽस्मीति तेन निराकृता सा क्रुधा पतिं प्रबोध्य तं यशोधरं सन्दर्श्य रुदती समभ्यधात् नाथ! सुप्ते त्वयि अनेन पापेनाहं बलात् ध्वंसिता। तदाकर्ण्यैव स तत्पतिः खड्गमाकृष्य सरोषमुत्तस्थौ। अथ सा प्रथमा सती तं पादयोर्गृहीत्वा अब्रवीत् मैवं मिथ्या पापं कृथाः, शृणु मे वचनम्। अनया पापया इमं दृष्ट्वा सहसा त्वत्पार्श्वात् उत्थितया अयमर्थितः, न च साधुरय-मस्याः अभ्यर्थनां प्रत्यपद्यत। यदा चानेन माता मम त्वमिति निराकृता असौ, तदा अमर्षात् सकोपा अस्य वधाय त्वां प्राबोधयत्, प्रभो! अनया पापया मत्समक्षं रात्रौ रात्रौ इह तरौ स्थिताः शतशोऽध्वगाः भुक्त्वाङ्गुरीयकं तेभ्यः भुक्ताः, द्वेषसम्भावनभिया कदापि ते मया नोक्तं, अद्य तु तव पापभीत्या एव अवाच्यमपि एतत् अहमब्रुवम्। न चेत् प्रत्ययः, वस्त्राञ्चले अस्या अङ्गुरीयकाणि पश्य। शापश्च मे सतीधर्म्मः यत् भर्त्तरि अनृतं वचनम्। इतीत्व-

प्रत्ययोऽयं मम, प्रभो! पश्य मे प्रभावम्। इत्युक्ता सा तं तरुं क्रोधाग्निना सहसा भस्मसादकरोत्। पुनश्च प्रसाददृष्ट्या तत्क्षणात् पूर्ववत् समजीवयत्। तदवलोक्य तद्भर्त्ता सम्भ्रष्टश्चिरात् तामुपजुगूह निराचकार च तां द्वितीयां छिन्नकर्णनासिकाम्। अथ तस्या वस्त्रान्तात् अङ्गुलीयकानि संप्राप्य तमध्ययनार्थिनं यशोधरं सानुजं दृष्ट्वा सनिर्वेदः क्षमयामास, जगाद च ब्रह्मन्! भार्य्यामिमां परपुरुषेर्ष्यावशात् सदा हृदि निधाय रक्षामि, तथापीयं पापा न मया रक्षितुं शकिता। कोऽहि विद्युतं स्थिरीकुर्य्यात्, को वा चपलां स्त्रियं रक्षेत् यदि साध्वी परमधनेन एकेन शीलेन रक्ष्यते तत् सा रक्षिता भर्त्तारमात्मानञ्च उभयलोकतः रक्षति अद्यानया सत्या अहं महतः पापात् रक्षितोऽस्मि, अद्य मे कुलटासङ्गमो विनष्टः, ब्रह्महत्या च नाद्य मामुपगता। इत्युक्ता स पुरुषः तं यशोधरमुपवेश्य अप्राक्षीत् भवन्तौ कुत आगतौ, कुत्र वा व्रजथः? ततो यशोधरस्तस्मै स्वं वृत्तान्तं निवेद्य विश्वासं प्राप्य च कुतूहलात् तमपि अपृच्छत् महाभाग! न चेद्रहस्यं तदद मे साम्प्रतं कस्त्वम्? कथं वा ते जलवासित्वम्? तदाकर्ण्य स श्रूयतां कथयामीति प्रोच्य जलवासी स्ववृत्तान्तं वक्तुं प्रावर्त्तत।

अस्ति हिमवतो दक्षिणे कश्मीराख्यः देशः। यं हि मर्त्यानां स्वर्गकौतूहलं हर्त्तुमिव विधिर्विनिर्ममे। यत्र हरिहरौ श्वेतद्वीपकैलासस्थितिसुखं विस्मृत्य स्वयं स्थानमतानि अध्यासेते। यत्र वितस्ताजलैरनिशं पूयते, शूरै-

विंद्भिश्च सदा सेव्यते, न जीयते च द्विषद्भिर्बलिभिरपि छलदोषेण। एतस्मिन् जनपदे अहं भवशर्म्मा नाम ग्रामवासी द्विजः द्विभार्य्यश्च पूर्वस्मिन् जन्मनि आसम्। कदाचिदहं भिक्षुभिः सञ्जातसंस्तवः तेषां शास्त्रोक्तमुपोषणाख्यं नियममाश्रितः। तस्मिंश्च नियमे अनुष्ठितप्राये एकदा शयने मम पापैका भार्य्या हठादुपेत्य सुष्वाप। अथ तुर्य्ये यामे तद्व्रते स्त्रीनिषेवणमकार्य्यं विस्मृत्य निद्रामोहात् तया साकं सुरतमहं सेवितवान्। तन्मात्रेण च खण्डिते तस्मिन् व्रते अहं सहसा जलपुरुष इह जातः, ते च द्वे भार्य्ये मम इहापि जन्मनि सञ्जाते, तयोरेका सा पापा यया मे व्रतं खण्डितं, द्वितीयेयं पतिव्रता। खण्डितस्यापि व्रतस्यायं प्रभावः येनाहं जातिं स्मरामि, रात्रौ च मम ईदृशा भोगाः, यदि तन्मे व्रतं नाखण्डयिष्यत् तदितोऽपि मे समधिकं फलमभविष्यत्। इति स्ववृत्तान्तमाख्याय तावतिथी भ्रातरौ सुमिष्टभोजनैर्दिव्यैर्वस्त्रैश्च अपुपूजत्। ततोऽस्य सा सती भार्य्या तत् पूर्वं वृत्तमवेत्य भूमौ जानुनी विन्यस्य इन्दुं पश्यन्ती अभ्यधात् भो लोकपालाः! सत्यश्चेदहं साध्वी, तदायं मे पतिरम्बुवासनिर्मुक्तः सद्य एव स्वर्गं यातु। इत्युक्तवत्यामेव तस्यां खात् विमानमवातरत्। तदारूढौ च तौ दम्पती स्वर्गं जग्मतुः। साध्वीनामिह जगति किमसाध्यम्? तौ च ब्राह्मणसुतौ तदालोक्य परं विस्मयमापतुः।

अथ तां रात्रिं तत्र नीत्वा तौ विप्रसुतौ यशोधरलक्ष्मीधरौ ततः प्रतस्थाते। क्रमेण सायं निर्जलारण्यवर्त्मनो

वृक्षस्य कस्यचित् तलमवाप्य जलप्रार्थिनौ तस्मात् वृक्षात् वाणीमिमां शुश्रुवतुः। विप्रदारकौ! तिष्ठतम् अहमद्य युवयोः स्नानपानभोजनादिभिरातिथ्यं करवाणि, अद्य हि युवां मद्गृहे अतिथी समागतौ। इत्युक्त्वा सा वाक् व्यरमत् जज्ञे च तत्र सहसा कापि वापी, तस्याश्च तीरे समुपतस्थे विचित्रं पानभोजनम्। किमेतदिति सविस्मयं तौ द्विजसुतौ वाप्यां स्नात्वा यथाकाममाहारादिकं चक्रतुः। ततश्च सन्ध्यामुपास्य यावत् तौ तरुतले तिष्ठतः, तावत् तस्मात् तरोः कश्चित् कान्तवपुः पुरुषः समवातरत्। स च दृष्ट्वा ताभ्यामभिवादितः स्वागतप्रश्नादिना तावभिनन्दयन् क्रमेण उपविष्टः ताभ्यां को भवानिति अपृच्छ्यत।

सोऽवदत् अहमासं पुरा अतिदुर्गतो द्विजातिः। दैवाच्च मे श्रमणसङ्गोऽभवत्। तैश्च उपदिष्टम् उपवासव्रतमहमन्वतिष्ठम्। केनापि शठेन बलात् अहं सायं भोजितः, तेनाहं खण्डितात् व्रतात् गुह्यकोऽस्मि जातः। यदि व्रतं पूर्णमकरिष्यं तदाहं दिवि देवत्वमलप्स्यम्। एवमहं स्वं वृत्तान्तमकथयं, साम्प्रतं कौ युवां कथमिमां भूमिमनुप्रविष्टौ वदथः। तदाकर्ण्य स यशोधरः स्वं वृत्तान्तमस्मै समाचचक्षे। ततस्तौ विप्रसुतौ यक्षः पुनरवादीत् यद्येवं तदहं स्वप्रभावात् वां विद्यां ददामि, कृतविद्यौ च गृहं यातं, किं विदेशभ्रमणेन? इत्युक्त्वा स ताभ्यां विद्यामदात्, तौ च तदैव तत्प्रभावात् सहसा लब्धविद्यावभूताम्। ततस्तौ यक्षः प्रावदत् एकान्तु गुरुदक्षिणां भवद्भ्यां याचे, एकरात्रं भिक्षुवेलायां भोजनं मनःसंयमं क्षमाञ्च

विधाय एतत् फलं मयि अर्पणीयं, येनाहं पूर्णव्रतफलो दिव्यत्वमवाप्स्यामि। इत्यूचिवान् स यक्षः विनम्राभ्यां ताभ्यां तथेति प्रतिपन्नार्थस्तत्रैव तरावन्तर्दधे। तौ भ्रातरौ अनायाससिद्धार्थौ प्रहृष्टौ कथञ्चित् तां रात्रिं नीत्वा परावृत्य स्वमेव गृहमाजग्मतुः। तत्र च स्ववृत्तान्तेन पितरावभिनन्द्य यक्षपुण्याय उपोषणव्रतं चक्रतुः। अथागत्य स गुरुर्यक्षो विमानस्थस्तौ जगाद वत्सौ! युवयोः प्रसादात् यक्षतामुत्तीर्य्य देवत्वमवाप्तवानस्मि, तद् युवाभ्यामात्मार्थमपि एतद् व्रतं कार्य्यं येन देहान्ते युवयोरपि देवत्वं भविता, मम च वरात् इदानीमुभौ अक्षीणार्थौ भविष्यथः। इत्युक्त्वा स कामचारी विमानेन स्वं धाम प्रायात। ततो यशोधरो लक्ष्मीधरश्च भ्रातरावुभौ व्रतं कृत्वा तत्प्रभावात् प्राप्तविद्यार्थौ सुखेन अवतस्थाते। तदेवं धर्म्मप्रवृत्तानां कृच्छ्रेऽपि शीलं रक्षतां देवता अपि रक्षन्ति, कुर्वन्ति च इष्टार्थसंसाधनम्। इत्थं वसन्तकमुखात् अद्भुतकथाश्रवणविनोदितः वत्सेश्वरसुतः प्रियां शक्तियशसं प्रेप्सुरपि आहारसमये पित्रा समाहूतः सचिवैः सह तदन्तिकं प्रायात्। ततश्च तत्र यथानुरूपं भुक्त्वा वयस्यैर्निजैः सायं स्वमन्दिरमागते युवराजे भूयोऽपि गोमुखस्तं विनोदयितुं कथामिमामाख्यातुमुपचक्रमे देव!

आसीद् बलीमुखो नाम स्वयूथात् परिभ्रष्टः वारिधितीरोपान्तवर्त्तिनि उदुम्बरवने वानरराजः। तस्य कदाचित् भक्षयतो हस्तात् च्युतमेकमुदुम्बरं जलराशिस्थः शिशुमारश्चखाद। ततश्चास्वादेन तुष्टः उत्थाय कलरवं

चकार। तद्दर्शनात् स कपिरस्मै बहूनि फलानि अक्षिपत्। इत्थं नित्यं स शिशुमारो व्रतं चक्रे, स च कपिः फलानि जले तदर्थं प्राक्षिपत् तेन च तयोर्मिथः सख्यमवर्धत। स च शिशुमारो नित्यं तस्य कपेः सकाशे दिनं नीत्वा सायं स्वगृहं जलराशिमगात्। तस्य तु भार्या शिशुमारस्य ज्ञातार्थं दिवा विरहदुःखदं कपिसख्यमनभिलषन्ती व्याजेन पीड़ामशिश्रियत्। शिशुमारस्तु ब्रूहि प्रिये! किं ते अस्वास्थ्यं, केन वा शाम्यति? इत्येवमार्त्तः प्रियां मुहुः परिपप्रच्छ। यदा तु सा निर्बन्धपृष्टापि न प्रत्युक्तवती, तदास्यां रहस्यज्ञा सखी तं प्रत्यभाषत यद्यपि त्वमस्या मनोरथं न कुरुषे इत्येषा वक्तुं नेच्छति,तथापि अहं ते ब्रवीमि, कथं हि जानन् प्राज्ञः परेषां खेदं निह्नुते? तवास्या भार्यायास्तथाविधो महान् गदः सञ्जातः, यो हि वानरहृत्पद्मयूषं विना न शाम्यतीति। इत्थं प्रियाया सख्याभिहितः शिशुमारो व्यचिन्तयत् हा कष्टं कुतोऽहं वानरहृत्पद्मं लभेय? यदि च सख्युर्द्रोहमाचरेयं तदपि न मादृशामुचितम्। अथवा किं सख्या? भार्या मे प्राणेभ्योऽपि प्रियतमा इत्यालोच्य स शिशुमारस्तां भार्यामवादीत् प्रिये! अद्यैवाहं कपिं त्वदर्थमानयामि, किमर्थं दूयसे? इत्युक्त्वा स तस्य मित्रस्य कपेरन्तिकमयासीत्। गत्वा च तत्र कथाप्रसङ्गेन तं कपिमवदत् सखे! अद्यापि त्वया मम गृहं भार्या च प्रेयसी न दृष्टा, तदागच्छ तत्र गच्छावः एकमहर्विश्रामसुखमासादयितुम्। यत्र गृहं गत्वा अन्योन्यं न भुज्यते, नापि प्रदर्श्यन्ते दाराः, तत्

सौहृदं कौतुकमेव। इत्येवं वानरं प्रतार्य्य स शिशुमारः जलमवतार्य्य जलधौ तेन सह गन्तुं प्रवृत्ते। गच्छंस्तञ्च तं दृष्ट्वा वानरः सचकितः परिपप्रच्छ सखे! त्वामद्य अन्यादृशमिव पश्यामीति। अथ निर्बन्धेन पृच्छन्तं तं शिशुमारो हस्तस्थितमेव मत्वा जड़बुद्धिरेवं जगाद सखे! अस्वस्था मे प्रिया भार्य्या, पश्य, सा मां रोगोपशमनार्थं कपिहृत्पद्मं याचते, तेनाद्य अहं विमना इति। श्रुत्वैतत् वचनं स प्राज्ञः कपिरचिन्तयत् हन्त एतदर्थमेवामुना पापेनाहमिहानीतः, अहो स्त्रैणेन मोहेनायं मित्रद्रोहेऽपि समुद्यतः, अथवा भूतग्रस्तो दन्तैः स्वमांसानि किं न खादति? इत्थं संचिन्त्य स कपिस्तं शिशुमारमब्रवीत् सखे! यद्येवं त्वया प्रथमं मे किं नोक्तम्, अहं स्वं हृदयं त्वत्प्रियाकृते समादाय आगमिष्यम्, उदुम्बरवृक्षे हि मम वासः, तत्र हृदयं तत्रैव स्थितम्। तदाकर्ण्य शिशुमारो जड़धीरार्त्त इदमब्रवीत् सखे! तर्हि तत् शीघ्रं तस्मादुदुम्बरवनात् समानय इत्युक्त्वा स शिशुमारः पुनस्तमम्बुधेस्तीरे समानयत्। तत्र तेनात्मकेन मुक्तः स कपिस्तटमारुह्य उत्प्लुत्य वृक्षाग्रस्थितस्तं शिशुमारमवादीत् गच्छ रे मूर्ख! हृदयं देहात् पृथक् न खलु कदापि स्थितं श्रूयते, मयाद्य त्वत्तो मोचित आत्मा, नाहं पुनस्तत्र यास्यामीति। अपरञ्च मूर्खगर्दभाख्यानं भवता न श्रुतं तत् कथयामि निःशम्यताम्।

आसीत् कोऽपि गोमायुसचिवः सिंहः क्वचिदरण्ये। स च कदाचित् व्याधस्य हेतिभिः क्षतो जीवन् गिरिगुहा-

माससाद। तत्र स्थिते तस्मिन् स गोमायुर्वृत्तिच्छामस्तम-भ्यधात् प्रभो! निर्गत्य यथाशक्ति आहारं किं न चिनुषे? शरीरस्ते परिजनेन समं सीदतीति। तदाकर्ण्य सिंहो-ऽब्रवीत् सखे! नाहं रणात् क्लान्तः, भ्रमितुञ्च शक्नोमि, यद्यहं खरस्य कर्णहृदयं भक्ष्यं प्राप्नोमि, तस्मै व्रणानि रोहन्ति अहञ्च प्रकृतिस्थो भवामि, तदाशु त्वं कुतोऽपि गर्दभमेकमानय इति। एवमुक्तस्तेन स गोमायुस्तथेति प्रतिज्ञाय प्रययौ। भ्रमंश्च कस्यचिद्रजकस्यान्तिके गर्दभं दृष्ट्वा प्रीत्या तमभ्युपेत्य प्राह स्म भोः किं भवानीदृक् दुर्बल इति। कृशीभूतोऽस्मि, रजकोऽतिनिर्दयो मह्य-मतिभारं वहतेऽपि घासमुष्टिमपि न प्रयच्छति इत्युक्त-वन्तं तं खरं स प्रोवाच जम्बूकः भद्र! इह किं खेदमनु-भवसि? एहि मया सह, तद्वनं त्वां नयामि यत्र खरीभिः समं त्वं स्वर्गसुखमाप्स्यसीति। तच्छ्रुत्वा स गर्दभस्तथेत्युक्त्वा भोगलोलुपः तेन गोमायुना सह सिंहसकाशमगात्। तत्रागतञ्च तं वीक्ष्यैव स सिंहस्तस्य पृष्ठे करप्रहारमदात्। स तु तेन विक्षतस्त्रस्तः खरः सत्वरं पलाय्य अगच्छत्। सिंहस्तु विह्वलाकुलं तं न पुनराक्रमत्। ततश्चासिद्धकार्यः सत्वरं गुहामविशत्। ततः स मन्त्री जम्बूकः सोपालम्भ-मब्रवीत् प्रभो! एष वराकः गर्दभश्चेत् त्वया न हतः, तदा हरिणादिबधे तव का वार्त्ता भविष्यति? तदाकर्ण्य स सिंहः सलज्जमवदत् यथा वदसि तत्तथा, साम्प्रतं पुनस्तं खरमत्रानय, अहं तावत् सज्जो भूत्वा तिष्ठामि तद्वधाय। इति सम्प्रेषितस्तेन स जम्बूकः पुनर्गर्दभमुपेत्य अभ्यभाषत

हास्यान् जड़मतीन्। तत्रादौ गन्धर्वपरितोषकृतो जड़ः निशम्यताम्।

कश्चिदाढ्यो जड़ः गान्धर्वेतियथा तौर्य्यत्रिकरूपया तोषितः भाण्डारिकमाहूय तत्समक्षमभाषत, देहि अस्मै गान्धर्विकाय द्वे सहस्रे पणान् इति। स तु भाण्डारिकः तथेति उक्त्वा स्वस्थानमयासीत्। अथ गान्धर्विको भाण्डारिकेण विहताशः तदा आढ्यसमीपं गत्वा तस्मात् तान् पणान् अयाचत। तस्मिंश्च वीणावादनेन त्वया मे शीघ्रं श्रुतिसुखं विहितं मयापि पणदानादेशेन तव श्रुति सुखं विहितं किन्तु दानकाले तथा चिप्रं न क्रियते इति वादिनि स वैणिकः विहताशोऽपि हसन् ययौ। देव! अथ मूर्खशिष्यद्वयं श्रूयताम्। आस्तां कस्यापि गुरोर्द्वौ शिष्यौ अन्योन्यमत्सरौ। तयोरेकः गुरोर्दक्षिण पादमन्वहम् अभ्यञ्जन् संवाहयामास, अपरो वाम पादम्। कदाचित् गुरुः दक्षिणाभ्यञ्जके ग्रामं संप्रेषिते तेनाभ्यक्त-वामपादः द्वितीयं शिष्यमभ्यधात् त्वमद्य दक्षिणं पाद-मभ्यज्य चालय। श्रुत्वैतत्, स मूर्खस्तं गुरुं खैरमभाषत, गुरो! प्रतिपक्षस्य सम्बन्धी अयं पादो न मया अभ्यञ्जाः। एवमुक्तवतश्चास्य स गुरुर्निर्बन्धमकरोत्। ततो विपक्ष-स्तच्छिष्यो रोषात् तं गुरोः पादमादाय बलात् ग्रावणा भग्नवान्। अथ तस्मिन् गुरौ उच्चैराक्रन्दति असौ कुशिष्यः अन्यैः प्रविश्य ताद्यमानः तेन गुरुणा खेदात् मोचितः। अथान्येद्युः अपरः शिष्यः ग्रामान्तरादागत्य गुरोस्तामङ्घ्रि-पीड़ामवलोक्य विदितवृत्तान्तः क्रुधा ज्वलन् नाहं किं

तस्य द्विषः सम्बन्धिनं पादं भनज्मि इति द्वितीयं पादं गुरोराक्रम्य तत्क्षणात् बभञ्ज। ततः सोऽपि अन्यैस्ताड्यमानः भग्नोभयाङ्घ्रिणा तेन गुरुणा क्षमया मोचितः। ततः सर्वेर्ग्रोपहास्यौ तौ द्वौ शिष्यौ गृहं जग्मतुः। गुरुरसौ क्षमया तया सर्वैः श्लाघनीयः क्रमेण स्वस्थतामगात्। इत्थमन्योन्यविद्वेषपरः मूर्खः परिजनः स्वामिनो हितं निहन्त्येव, नापि आत्महिताय कल्पते। साम्प्रतं देव! द्विशिरःसर्पवृत्तान्तः निशम्यताम्।

आस्तां कस्याप्यहेर्द्वे शिरसी अग्रपुच्छयोः। पौच्छमस्य शिरः अन्धमभूत्, प्रकृतं पुनश्चक्षुष्मत्। अहं मुख्यमहं मुख्यमिति तयोरन्योन्यस्पर्द्धितायामपि सर्पः प्रकृतेनैव मुखेन विचचार। कदाचिदस्य पौच्छ शिरः मार्गे ज्वलन्तं काष्ठमजाप। तेनैव चान्धेन मुखेन असावहिः भ्रमन् अग्नौ पपात ममार च।

साम्प्रतं मूर्खं तण्डुलभक्षकं शृणु। कश्चित् मूर्खः पुमान् प्रथमं श्वशुरगृहमगात्। स तत्र श्वश्वा पाकार्थं स्थापितान् सितान् तण्डुलान् दृष्ट्वा भक्षयितुं तेषां मुष्टिमेकामानने प्राक्षिपत्। तस्मिन्नेव च क्षणे श्वश्र्वां आगतायां स मूर्खः लज्जया तान् तण्डुलान् निगिरितुं वा उद्गिरितुं न शशाक। श्वश्रूश्च तम् उत्पीनगण्डं निरालापमवेत्य रोगशङ्कया पतिं तत्राहूय आनिनाय। सोऽप्यालोक्य तथैव वैद्यमेकमानयत्। वैद्योऽपि शोफशङ्की तस्य मूढस्य मस्तकमाक्रम्य गल्लमपाटयत्। ततश्च लोकानां हास्येन समं तस्य

गृह्णात् तण्डुला निर्ययुः। इत्थमकार्य्यमज्ञाः समाचरन्ति न च गूहितुं शक्नुवन्ति।

केचित् मूर्खा बालका गवादिषु दोहं दृष्टवन्तः एकदा गर्द्दभं प्राप्य संबध्य च दोग्धुमारेभिरे। कश्चिद् दुदोह, कश्चित् अधः क्षीरभाण्डमधारयत्, अन्यः अहमेव प्रथमं क्षीरं पास्यामीति ब्रुवन् ननर्त्त। परन्तु ते परिश्रमं कुर्वन्तोऽपि न क्षीरं लेभिरे। इत्थमवस्तुनिर्बन्धपरो मूर्खः केवलं पराभवमेव प्राप्नोति। देव! कश्चिद् द्विजतनयः मूर्ख आसीत्। एकदास्य पिता तं सायमवादीत्, पुत्र! त्वया श्वः प्रगे ग्रामो गन्तव्यः। श्रुत्वैतत् कार्य्यमपृष्ट्वा प्रातरेवासौ ग्रामं गत्वा वृथैव सायं कृतश्रमः प्रत्यागात्, अवोचच्च पितरम्, अहं ग्रामं गत्वा समागत इति। गते त्वयि किं कार्य्यं नः सिद्धमिति तत्पिता तमाह स्म। तत् देव! निष्कारणचेष्टितो मूर्खो लोकहास्यतां व्रजति क्लेशमनुभवति न च कार्य्यं साधयति। इत्येवं गोमुखात् सचिवप्रधानात् शिचावतीं कथामाकर्ण्य आत्मानञ्च शक्तियशसः प्राप्तिबद्धस्पृहं निवेद्य भूयिष्ठाञ्च गतां रजनीम् अवेत्य वत्सेश्वरसुतो निद्रामुद्रितनयनः स्ववयस्यैरन्वितः शयनमभजत।

---

## अथ चतुःषष्टितमस्तरङ्गः।

अथान्येद्युः स गोमुखः नक्तं निजवासस्थहस्थितं शक्तियशःप्राप्तिसमुत्सुकं वत्सेश्वरसुतं तन्नियोगतः विनोदनीं कथामिमां वक्तुं प्रारभत।

आसीत् कस्मिंश्चिन्नगरे देवशर्म्मा नाम ब्राह्मण:। तस्य यज्ञदत्ता नाम्नी भार्य्या सद्यशार्म्मयंसम्भूताभवत्। सा च धृतगर्भा यथाकालमेकं सुतमसूत। स च द्विज: दरिद्रो-ऽपि तं पुत्रं निधिमिवामन्यत। सा कदाचित् तस्य भार्य्या स्नातुं नदीमगात्। देवशर्म्मा तु सुतं रक्षन् गृहे तस्थौ। तस्मिंश्च क्षणे राजान्त:पुरात् कापि चेटी द्रुतं स्वस्तिवाचन-जीविनो ब्राह्मणस्य पुरत: समाययौ। तत: स विप्र: दक्षिणालोभात् गेहे चिरमावाल्यवर्द्धितं नकुलं शिशो: रक्षणार्थं स्थापयित्वा नृपतिगृहमयासीत्। तस्मिन् गते च अकस्मात् तस्य शिशोरन्तिकमागतं कृष्णसर्पमेकं दृष्ट्वासौ स्वामिभक्तो नकुल: संजहार। अथ तं देवशर्म्माणमागतं दूरतो विलोक्य सर्पशोणिताक्तो नकुलो हृष्ट: अस्य पुरतो निरगात्। स देवशर्म्मा दृष्ट्वैव तथाभूतं तं ध्रुवं स शिशु-रनेन निहत इति सम्भ्रान्त: शिलाप्रहारेण व्यवधीत्। तत: प्रविश्यान्त: तं भुजङ्गं नकुलहतं बालकञ्च जीवितं स्थितं वीक्ष्य भृशमन्वतप्यत। तदैवागता अस्य भार्य्यापि तदवेत्य अविचार्य्य उपकारी स नकुल: किं हत इति स द्विज: भृशमुपालभ्यत। देव! तस्मात् बुद्धिमान्नर: सहसा किमपि न कुर्य्यात्, सहसा कुर्वन् हि लोकयोरुभयो-र्हन्यते। अविधिना च कर्म्म कुर्वाण: विपरीतं फलमश्नुते। तदत्र कथामेकामाकर्णय। पुरा कश्चित् वायुनाक्रान्तदेह: समभवत्। कदाचित् कश्चिद् भिषक् तं वस्त्यर्थमौषधं दत्त्वा अवादीत्, त्वमेतत् गृहाण यावदहं गृहं गत्वा आगच्छामीति। उक्त्वा स वैद्य: क्षणं चिरयति स्म। स तु

मूर्खस्तावत् तत् पिष्टमौषधं वारिणा सह पपौ। ततोऽसौ भिषक् उत्पन्नापदं तमेत्य आचमनं दत्वा कृच्छ्रात् मृतकल्पमजीवयत्। ततस्तेन स नितरामुपालभ्यत, रे मूर्ख! वस्त्यौषधं गुदे दीयते, न तु पीयते, कथमहं न प्रतीक्षितः इति। अभीष्टमपि अविधिना कृतमनिष्टाय भवति, तस्मात् विधिमतिक्रम्य प्राज्ञो न किञ्चन कुर्वीत। अप्रेक्षाकारी बधकृत् निन्द्यते, तदत्र कथामेतां निशामय।

अभवत् क्वचित् कोऽपि जड़मतिः पुरुषः। कदाचित् तत्सुतः सार्थैरन्वितः अटवीमगमत्। तत्र स सार्थभ्रष्टः कस्यचित्तरोर्विवरं प्राविशत्। तत्र मर्कटैः क्लेशितः कृच्छ्रात् जीवन् स पितरमेत्य वानरानभिज्ञः पृच्छन्तमवदत्, पितः! वनेऽस्मिन् कैश्चित् लोमशैः फलभक्षिभिरस्मि पाटितोऽहम्। तदाकर्ण्य कोपाकृष्टासिस्तत्पिता तद्वनमागत्य फलानि आददानान् जटिलान् तापसान् दृष्ट्वा अमीभिः सुतो मे क्षतो रोमशैरिति अभ्यधावत्। ततश्च केनचित् पान्थेन स ऋचैः तव पुत्रः पाटितो मया दृष्टः, मुनीनेतान् माबधीरिति बधादवार्य्यत। ततः स दैवात् तस्मात् पातकादुत्तीर्णः सार्थमगमत्। तत्र कदाचित् प्राज्ञः अप्रेक्षाकारी भवेत्, किमन्यत् सर्वैरेव सर्वथा कृतबुद्धिभिर्भाव्यम्। अबुद्धयः सदा लोकोपहसिता इत्थं सीदन्ति। इयञ्चात्र कथा निशम्यताम्।

कश्चिन्निर्धनः पथिकः अध्वनि व्रजन् कस्यापि सार्थवाहस्य च्युतां हेमपूर्णां दृतिं प्राप। स मूढ़स्तां गृहीत्वैव अग्रेन पथा न जगाम, प्रत्युत तत्रैव स्थित्वा तत्र स्थितानां

हेम्नां संख्यां कर्त्तुमारेभे। एतस्मिन्नन्तरे धनस्वामी सार्थवाहः स्मृत्वा हयमारुह्य सत्वरं तेनैव पथा प्रत्यावृत्य तस्य हेम-भस्त्रां पान्थहस्तस्थितामवलोक्य जहार। ततः स दरिद्रः प्राप्तनष्टार्थः शोचन् अधोवदनः प्रायात्। तदेवं प्राप्तो-ऽप्यर्थः क्षणादेव मन्दबुद्धिर्हीयते। कश्चित् पार्वणं चन्द्रं दिदृक्षु जड़ं कोऽपि दृष्टनवेन्दुः अङ्गुल्यभिमुखं पश्येत्युवाच। स तु गगनं हित्वा तस्य तामङ्गुलिं विलोकयन् तस्थौ, न चन्द्रं ददर्श, ददर्श च हसतो जनान्। प्रज्ञया असाध्य-मपि साध्यते, साम्प्रतं तदाकर्ण्यताम्।

काचित् महिला एकाकिनी ग्रामान्तरं गन्तुं प्रारेभे। सा च पथि जिघृक्षन्तं वानरं वञ्चयितुकामा वृक्षसंश्रिता अवर्त्तत। स च मूढ़ः कपिः तस्याः संश्रितं तं तरुं भुजा-भ्यामवारुणत्। सापि बाहुभ्याम् अस्य हस्तौ भृशमपीड़यत्। ततश्च तस्मिन् निष्पन्दे जातक्रोधे वानरे तेन पथा आगतं कञ्चिदाभीरयुवकं सा स्त्री जगाद, महाभाग! क्षणमिमं प्लवङ्गमं बाह्वोर्गृहाण, यावदहं वस्त्रं वेणीञ्च विस्रस्तामा-वृणोमीति। यदि च मां भजसे तदाहमेवं करोमीति तेनोक्ता सा तथैव प्रतिपेदे। ततः स तं कपिमग्रहीत्। ततः सा स्त्री तस्य हस्तात् छुरिकामादाय तं कपिं हत्वा एकान्तमेहीति तमाभीरं दूरमानयत्। अथ पान्थेषु मिलितेषु तैः सह तमाभीरं विहाय सा ईप्सितग्राममगमत् प्रज्ञया रक्षितचारित्रा। तदेवं प्रज्ञैव प्रधानं लोकस्थिति-हेतुः। अर्थदरिद्रोऽपि जीवेत् बुद्धिदरिद्रस्तु नैव जीवति। अत्राद्भुतामेकां कथामाकर्णय।

क्वचित् पुरे घटकर्परनामानौ द्वौ तस्करावास्ताम्। तयोस्तु कर्परः कदाचित् नक्तं वहिर्घटं न्यस्य सन्धिं छित्वा राजकन्या वासगृहमविशत्। तत्र कोणस्थितमर्थं गृहीत्वा स कर्परः प्रत्याहृत्य घटं प्रपूर्य्य च पुनस्तदेवान्तःपुरं स्वयं प्राविशत्। प्रविश्य च कामार्त्तः तत्रस्थया राजकन्यया समं विहरन् पुनः पुनः सुरतश्रान्तः पानमत्तश्च तया भीतया राजपुत्र्या सह सुप्तः गतां निशां नाज्ञासीत्। प्रातश्च तं प्रविष्टैः रक्षिभिर्वद्धा गृहीतं राजान्तिकं नीतञ्च दृष्ट्वा राजा तस्य बधमादिशत्। यावत् स बध्यभूमिं नीयते, तावदस्य सखा घटः रात्रावनागतस्यास्य पदवीमन्वेष्टुमगात्। तथागतम् घटं वीक्ष्य स कर्परः राजसुतां हृत्वा रक्षेरिति संज्ञया निजगाद। अथ घटेनापि संज्ञया तथेति प्रतिज्ञातार्थः स कर्परः सत्वरं नीत्वा तरौ उल्लम्ब्य घातकैर्निहतः। ततो घटो गेहं गत्वा कर्परमनुशोच्य निशागमे सुरङ्गां भित्त्वा राजसुतागृहं प्राविक्षत्। तत्रैकाकिनीं संयमितां तां वीक्ष्य जगाद, सुन्दरि! त्वत्कृते हतस्य कर्परस्याहं सखा घटो नाम। त्वामितोऽपनेतुं स्नेहादिहागतः। तदागच्छ यावत्ते पिता तवान्यत् किमपि नानिष्टं कुर्य्यात्। इत्युक्ता तेन सा राजपुत्री हृष्टा तथेति प्रत्यपद्यत। स च तत्क्षणात् तस्याः बन्धनानि अच्छिनत्। ततस्तया समर्पितदेहया समं स घटः सद्यस्तेन सुरङ्गापथेन निर्गत्य स्वमावासमयासीत्। प्रातश्च स राजा, सुरङ्गया स्वसुतामपहृतामवेत्य समचिन्तयत्, ध्रुवं तस्य निगृहीतस्य पापस्य कश्चिद्

बान्धवः साहसिकोऽस्ति, येन मे सुता हृता। इति सञ्चिन्त्य नृपतिः कर्परकलेवरं रक्षितुं स्वान् भृत्यानादिश्यदब्रवीच्च—यः शोचन् एतं शवं दाहाय नेतुमागच्छेत् स युष्माभिरवष्टभ्यः, ततश्च पापां तां कुलदूषितां लप्स्ये। इति समादिष्टा रक्षिणस्तथेति प्रतिज्ञाय तत् कर्परकलेवरं रक्षन्तस्तस्थुः। स च घटः अन्विष्य तद् बुद्धा तां राजपुत्रीमब्रवीत्, प्रिये! यो मे परमो बन्धुः कर्पर आसीत् तत्प्रसादात् मया त्वं रत्ननिचयैः सार्द्धं प्राप्ता, अकृत्वा च तस्य स्नेहानृण्यं मम निर्वृतिर्नैव विद्यते। तत् स्वयुक्तिबलात् गत्वा तं प्रेक्ष्य अनुशोचामि, अग्नौ च संस्करोमि, तीर्थे चास्य अस्थीनि निक्षिपामि, भयं ते माभूत् अहं नाबुद्धिः कर्पर इव। इत्युक्त्वा तां तदैव स महाव्रतवेशभृत् सहसाभवत्। स दध्योदनं कर्परेणादाय कर्परो येन मार्गेण गतः, तेन पथा गच्छन् स्खलद्गतिर्हस्तात् कर्परं दध्यन्नसहितं निपात्य भङ्क्त्वा च हा कर्पर! अमृतभृत इत्यादि वदन् तं कर्परं शुशोच। ते च रक्षिणो भिक्षाभाण्डानुशोचिनं तं मेनिरे। ततश्च क्षणात् गृहमागत्य तत् राजपुत्र्यै शशंस।

अथान्येद्युः एकं भृत्यं बधूवेशम् अग्रतः कृत्वा स्वयं ग्रामीणवेशो सधत्तूरभक्ष्यञ्च नीत्वा दिनात्यये प्रस्खलन् पदे पदे तेषां कर्परकलेवररक्षिणामन्तिकमगात्। रक्षिणस्तमपृच्छन्, कस्त्वं, केयञ्च ते भ्रातः! क्व यासीति च? स तु धूर्त्तस्तानेवं स्खलिताक्षरमवादीत्, अहं कश्चित् ग्रामीणः, एषा मम भार्य्या, श्वाशुरं गृहं व्रजामि, तदर्थञ्च मया

भक्ष्यकौशलिका नीयते, सम्भाषणेन यूयमधुना मे सुहृदो जाताः, तदहं भक्ष्यं तव नयामि, अर्द्धं युष्माकमस्तु इत्युक्त्वा स तेभ्यो रक्षिभ्यः एकैकं भक्ष्यं ददौ। ते च तं धूर्त्तं सन्तोष्य गृहीत्वा अस्य समग्राणि भक्ष्याणि भुञ्जन्ते स्म। ततश्च तेषु रक्षिषु धत्तूरमोहितेषु स घटः निशि काष्ठान्याहृत्य तत् कर्परकलेवरमग्निसाच्चकार। अथ तस्मिन् गते प्रातः राजा बुद्धा तान् रक्षिणो निवार्य्य निगूढ़ानन्यान् स्थापयामास, उवाच च रक्ष्याणीमान्यस्थीनि अपि इदानीं, यस्तु एतानि आदातुमिच्छति, स युष्माभिर्ग्रहीतव्यः, न च किञ्चित् भक्ष्यं तस्मात् ग्रहीतव्यम्। इति राज्ञा समादिष्टास्ते दिवानिशं सावधानास्तत्रासन्, बुबुधे च तं वृत्तान्तं घटः। ततः स कश्चित् प्रव्राजकं चण्डिकादत्तमोहमन्त्रप्रभावशालिनं मित्रमकरोत्, अग्रहीच्च तेन समं तत्र गत्वा तन्मन्त्रेण रक्षिणो मोहयित्वा तानि कर्परास्थीनि। तानि च गङ्गायां निक्षिप्य यथाकृतं सर्वं राजपुत्र्यै समाख्याय तेन प्रव्राजकेन सहितः सुखं तस्थौ। राजापि तदस्थिहरणं रक्षिमोहनं विदित्वा आ सुताहरणात् सर्वं योगिनः कस्यचित् चेष्टितममन्यत, घोषयामास च नगरे, येन योगिना मे तनयाहरणादिकमद्भुतं कार्य्यं कृतं तस्मै राज्यार्द्धं ददामि, स साम्प्रतमभिव्यक्तिं व्रजतु इति। तदाकर्ण्य घटस्तदा आत्मानं दर्शयितुमिच्छन्नपि मैवं कृथाः, न कार्य्यः अस्मिन् छिद्रघातिनि राज्ञि विश्वास इति तया राजपुत्र्या न्यवार्य्यत। ततश्च उद्भेदभयात् स घटः तेन प्रव्राजकेन मित्रेण साकं

राजपुत्रीसहितो देशान्तरं प्रायात्। पथि सा राजपुत्री रहसि तं प्रव्राजमब्रवीत्, एकेनाहं ध्वंसिता, अन्येना-मुना पदात् भ्रंशिता च, स चौरः मृतः, अयं न मृतः, त्वन्तु मे बहुमतः। इत्युक्त्वा तेन सङ्गम्य निशीथे तं घट-मवधीत्। ततस्तेन प्रव्राजा समं यान्ती पथि सा पापा धनदेवनमकेन केनाचित् वणिजा संजग्मे। कोऽयं भिक्षुः, त्वं मे प्रेयान् इत्युक्त्वा तं प्रव्राजं विहाय तेन वणिजा समं निशि प्रायात्। स च प्रव्राजकः प्रातः प्रबुद्धः सम-चिन्तयत्, अहो स्त्रीषु चापलादृते न स्नेहः, नापि आनृण्यं यदियं पापा मां विश्वास्य हृतार्था पलायिता; एष एव मे लाभः यद् घट इव न हतोऽस्मीति आलोच्य निजं देशमायात्। सा च राजसुता तेन वणिजा समं तद्देशं प्राप। सहसा इमां बन्धकीं किं गृहं प्रवेशयामीति स स्वदेशं प्राप्तो वणिक् व्यचिन्तयत्। विचिन्त्य च स वणिक् दिनात्यये तया राजपुत्र्या सह तत्रस्थाया एकस्या वृद्धाया योषितः सदनं विवेश। तत्र तां वृद्धां नक्तं गत्वा पर्य्यपृच्छत्, अम्ब! अपि जानासि धनदेवस्य वणिजो गृहवार्त्ताम्? तदाकर्ण्य साब्रवीत् का तत्र वार्त्ता वक्तव्या, यत्र सा तद्भार्य्या सदा नवेन नवेन पुंसा रमते। तत्र हि गवाक्षेण रज्ज्वा चर्मपेड़ा लम्ब्यते, यस्तस्यां नक्तं विशति, स एवान्तः प्रवेश्यते, ततः पश्चिमायां निशि तथैव तस्मात् निष्कास्यते, सा च पानमत्ता नैव किञ्चन विचारयति, एषा तस्य गृहस्थितिर्नगरे सर्वत्र ख्याति-मागता। स च तत्पतिर्बहुकालं विदेशं गतो नाद्यापि

आयाति। एतद् हृद्यावचः श्रुत्वा धनदेवस्तत्क्षणात् युक्त्या निर्गत्य सान्तर्दुःखः ससंशयश्च तत्रागात्। तत्र दासीभिः रज्ज्वा लम्बितां पेड़ां दृष्ट्वा तां विवेश। ततस्ताभिरुत्-क्षिप्य अन्तरनीयत। प्रविष्टश्च तया मदान्धया समा-लिङ्ग्य स्वगेहिन्या अविज्ञात एव शय्यातलं नीतः। याव-दस्य तद्दोषदर्शनात् रिरंसा नास्ति तावदसौ पानमत्ता तद्‌गेहिनी निद्रां ययौ। अथ निशान्ते सत्वरं रज्जुपेड़या दासीभिः गवाक्षेण वहिः क्षिप्तः स खिन्नो बणिगचिन्त-यत्, अलं मम गृहमोहेन, गृहे नार्य्य एव निबन्धनं तासाञ्च ईदृशी वार्त्ता, तस्मात् वनमेव परं श्रेयः। इति सञ्चिन्त्य स तां राजसुतामपि सन्त्यज्य स धनदेवः सुदूरं वनं गन्तुं प्रावर्त्तत। गच्छतस्तस्य मार्गे कश्चित् रुद्र-सोमो नाम ब्राह्मणः प्रवासादागतः मित्रतामाजगाम। स द्विजः तेन बणिजा उक्तस्ववृत्तान्तः सभयं स्वदाराशङ्की तेनैव बणिजा साकं स्वं ग्रामं समासदत्। आगत्य च स्वभवनान्तिकनदीतटे आयान्तं माद्यन्तमेकं गोपं दृष्ट्वा नर्म्मणा पृच्छति स्म, गोप! अस्ति ते तरुणी काचित् त्वय्य-नुरागिणी? येन एवं मदात् जगत् तृणं मन्यमानो नृत्यन् गायसि? तच्छ्रुत्वा स गोपः हसन्नब्रवीत्, मम किमपि गोप्यं वस्तु अस्ति, चिरविप्रोषितस्य रुद्रसोमाख्यस्य द्विजस्य ग्रामाधिपस्य तरुणीं भार्य्यां सदाहं भजे, तद्दासी च स्त्रीवेशं मां तद्गेहं प्रवेशयति। एतद् गोपात् निशम्य मन्युमन्तर्निगृह्य च तत्त्वं जिज्ञासमानस्तं स रुद्रसोमः पुनरवादीत्, यदि ते मयि स्नेहः स्यात् तदा त्वं स्ववेशममुं

मह्यं देहि, यावत्त्वमिवाहं तत्राद्य यास्यामि, महत् हि मे कौतुकम्। स च एवं कुरु, गृहाणेदं मदीयं कम्बलं लगुडञ्च, यावदिह तद्दासी आयाति तावदिह प्रतीक्ष्यतां, नक्तं तत्र गत्वा तयोः रन्तव्यमहमेकां रजनीं विश्रमामि इत्युक्त्वा प्रादात्। स च रुद्रशर्मा तत्र तथैव तस्थौ, दासी च सा ततः समायाता। सा तूष्णीकं स्त्रीवस्त्रगुण्ठितं तम् एहि एहि इत्युक्त्वा गोपधिया रुद्रसोमगृहमनयत्। गोपश्च स तेन धनदेवेन सार्द्धं दूरतस्तस्थौ। स च नीतः तां स्वभार्य्यां गोपालबुद्ध्या उत्थाय कृताश्लेषां दृष्ट्वा रुद्रसोमो व्यचिन्तयत्, हा! कष्टं सन्निकृष्टे निकृष्टे च कुर्याषितो रज्यन्ति यदियं पापा आसन्नवर्त्तिनि गोपे रक्ता इति चिन्तयन् मिषं कृत्वा अस्फुटया गिरा निर्गत्यैव विरक्तचित्तः धनदेवसकाशमाययौ, उवाच च कथित-गृहवृत्तान्तः, भद्र! त्वया सह अहमपि वनं गच्छामि, गृहं चयं यातु इत्युक्त्वा तेन वणिजा साकं तदैव वनं प्रतस्थे। तयोश्च गच्छतोः मार्गे सुहृत् शशी अमिलत्। कथाप्रसङ्गात् तौ तस्मै शशिने स्वं स्वं वृत्तान्तमाचख्यतुः। स तदाकर्ण्य चिरात् देशान्तरागतः स्वगेहिन्यां भूगृहे न्यस्तायामपि साशङ्कोऽभूत्। गच्छंश्च ताभ्यां सह सायं स्वगृहान्तिकमेत्य शशी गृहातिथ्यं कर्त्तुं ताववृणुत। तावच्च स तत्र दुर्गन्धवहं कुष्ठशीर्णकरचरणं गायन्तं शृङ्गारं पुरुषमेकं स्थितमपश्यत्, अपृच्छच्च सविस्मयं कोऽसि त्वमीदृश इति? सोऽब्रवीत्, कुष्ठी कामदेवोऽहमस्मीति। का ते भ्रान्तिः? कामदेवत्वं मे रूप-

शोभैव वक्ति, इति शशिना तेनोक्तः स पुनरवादीत्, शृणु कथयामि, इह कश्चित् शशी नाम एकया परिचारिकया सह भार्य्यां तरुणीं भूगृहे निक्षिप्य सेर्षो देशान्तरमगात्। विधिवशादिह तद्भार्य्यया मदनाकृष्टचित्तया दृष्टोऽस्मि, अर्पितश्च सद्य एव मद्यमात्मा, तया सह सदैवाहं प्रतिनक्तं रमे, तस्या दासी मां पृष्ठे गृहीत्वा तत्र प्रवेशयति, तद् ब्रूहि कथमहं न कामः, यत् तादृश्या मनोहारिण्या शशिनः प्रिययापि अहं मनोहरत्वेन गृहीतः। इति कुष्ठिवचः निर्घातदुःसहं श्रुत्वा दुःखं निगृह्य तत्त्वं जिज्ञासुस्तमुवाच, सत्यं त्वं काम एव, अहन्तु त्वां तदेवार्थये, त्वत्तः श्रुतायां तस्यां मे महत् कौतूहलं जातं, तदद्य इमामेकां निशामहं त्वद्देशेन तत्र व्रजामि, प्रसीद, अन्यफले हि अत्र तव का क्षतिः? इत्युक्तः शशिना स कुष्ठी तमभाषत, तथास्तु, गृहाण मे वेशं, त्वमपि स्वं वेशं मे देहि, अहमिव अत्र पाणिपादं संवेष्ट्य तिष्ठ, यावदस्याः सा दासी जृम्भिते तमसि आयाति, मद्बुद्ध्या च तया पृष्ठे गृहीतोऽहमिव तत्र व्रज, अहं हि पादवैकल्यात् सदा तथा तत्र गच्छामि। इति कुष्ठिनोक्तः शशी तद्वेशमास्थितः तत्र तस्थौ। स कुष्ठी तौ च पार्श्वौ नातिदूरतः स्थिताः। अथ तया शशिभार्य्यायाः दास्या आगत्य कुष्ठिवेशः स शशी कुष्ठिबुद्ध्या एहीति स्वपृष्ठे अधिरोपितः, नीतश्च नक्तं स्वभार्य्यायाः सकाशम्। तत्र तां स्वभार्य्यामनुशोचन् स वैराग्यमगमत्। ततस्तस्यां प्रसुप्तायाम् अदृष्ट एव निर्गत्य

स धनदेवरुद्रसोमयोरन्तिकमाजगाम । तौ च स्ववृत्तान्त-माख्याय खिन्नः प्राब्रवीत, हा ! धिक् निम्नाभिगामिन्यः लोला दूरात् मनोरमाः श्वभ्रापगा इव स्त्रियः पातुं न शक्याः, यदेषा मे भार्य्या भूगृहरक्षितापि कुत्सितं गता । तन्ममापि वनं श्रेयः, धिक् गृहाणि इति ब्रुवन् समदुःखाभ्यां ताभ्यां विप्रवणिग्भ्यां युतस्तां निशामनयत ।

अथ प्रातस्त्रयोऽपि ते वनं प्रस्थिताः । क्रमेण पथि व्रजन्तः दिनान्ते सवापीकमलं पादपमेकं प्रापुः । तत्र च यथायथं भुक्तपीताश्च ते रात्रौ तं तरुमारुह्य तत्र स्थिताः एकं पान्थमागत तरोरधः सुप्तं क्षणे च तस्मिन् सहसा वापीमध्यादपरमुत्थितं वदनोद्गीर्णसस्त्रीकशयनं पुरुषञ्च ददृशुः । स च उत्थितः पुरुषः तस्मिन् शयनतले तां स्त्रियमुपभुज्य सुखं सुष्वाप । सा तु स्त्री उत्थाय तं पान्थं तरोरधःस्थितम् उत्थाप्य स्वाभिलाषमपूरयत् । रतान्ते च कौ युवामिति तेन पान्थेन पृष्टा साब्रवीत्, एष मे पति-र्नागः, अहमस्य भर्थ्या नागकन्या, मा भूत् ते भयं, मया पान्थानां नवाधिका नवतिर्भुक्ता, त्वयेदानीं शतं पूरितम् । एवं वदन्तीं तां तञ्च पान्थं दैवात् प्रबुद्धः स नागः दृष्ट्वा मुखात् ज्वालां मुक्त्वा भस्मीचकार । याः देहान्तःस्थापिता अपि रक्षितुं न शक्याः, तासां गृहे का वार्त्ता ? ता धिक् धिक् इति ते नागे गते ब्रुवन्तः शशिप्रमुखा नीत्वा तां रात्रिं निर्वृताः वनमेव गताः । वनाश्रयिणश्च सततसंयताः कृच्छ्रं तपः समाचर्य्य निरुपमपरानन्दभूमौ समाधौ मनः समाधाय प्राप्तसिद्धयः क्षपिततमसस्त्रयोऽपि

क्रमेण मुक्तिमलभन्त। तदेवं मोहप्रभावो रागो न स्त्रीषु-कस्य दुःखाय? तास्वेव विवेकभृतां विरागस्तु मोक्षायालमिति गोमुखात् सचिवात् विनोदिनीं कथामाकर्ण्य पुनर्वत्सराजसुतो निशि विश्रामकरीं निद्रामवाप।



## अथ पञ्चषष्टितमस्तरङ्गः।

अथान्येद्युः प्राग्वत् निशायां नरवाहनदत्तं विनोदयन् गोमुखः पुनः कथामारेभे। कस्मिंश्चिन्नगरे बोधिसत्त्वांशसम्भवः कस्यापि आढ्यस्य वणिजस्तनयः सञ्जातः। जातमात्र एव तस्मिन् तन्माता ममार। तत्पिता च जायान्तरं गृहीतवान्। शिशुश्च क्रमशो वर्द्धमानः शैशवमतिचक्राम, परिणिनाय च कामपि कान्तां पितुरनुरोधात्। एवं गच्छति काले कदाचित् अन्यजायाप्रसक्तेन तत्प्रेरितेन पित्रा परित्यक्तः स सभार्य्यो वनवासाय गृहात् निरगात्। क्रमेण व्रजंश्च पाथेयहीनः चण्डांशुतप्तान्तरमहारण्यं प्रापः तत्र सप्ताहं क्षुधा तृषा च क्लान्तां कान्तां स्वमांसास्रैरजीवयत्। सा च तानि आहरत्। अथाष्टमे अहनि सरिद्वीचिमालावाचालं छायातरुभिराकीर्णं समास्तृतशाद्वलं शैलकाननं प्राप। तत्र तां भार्य्यां मूलफलाम्बुभिः संजीवयन् स्वयं स्नातुं कल्लोलशालिनीं गिरिनदीमवातरत्, अपश्यच्च तत्र

छिन्नहस्तपादं जलौघेन नीयमानं त्राणकाङ्क्षिणं पुरुष-मेकम्। दृष्ट्वैव स महासत्त्वः बहुभिरुपवासैः क्लान्तोऽपि कृपालुः तां नदीं विगाह्य तं पुरुषमुज्जहार, पप्रच्छ च, भ्रातः! केनेदं ते कृतम् इति कारुणिकेन पृष्टः स स्थल-मारोपितः पुमान् समभ्यधात्, महाभाग! निकृत्तहस्त-पादोऽहं शत्रुभिर्जले निक्षिप्तो दित्सुभिः क्लेशमरणं, त्वया पुनः कृच्छ्रादेतस्मात् मोचितः। एवमुक्तवतस्तस्य स भयात् व्रणपट्टिकां दत्त्वा आहारमकारयत्। ततश्च स्वयं भार्य्यया सह मूलफलाहारः तत्र कानने तपश्चरन् तस्थौ।

अथैकदा तस्मिन् फलमूलार्थं गते मदनातुरा तद्-भार्य्या तेन रुण्डेन पुंसा पतिरच्छितेन रेमे। ततश्च सा दुश्चारिणी तेन सम्मन्त्र्य तत्र भर्त्तृबधैषिणी युक्त्या अप-रेद्युः मृषा मायां कृत्वा पतिमब्रवीत्, पश्य, या अस्यां दुस्त-रायां निम्नगायां महौषधिर्दृश्यते, यदि त्वयैषा आनीयते तदाहं जीवामि। तथाहि स्वप्ने कापि देवता मह्यं इहस्थामेतां वक्ति स्म। स च ऋजुमतिस्तां तथेति प्रति-पद्यमानः यावत् महानद्यां तस्यां निपपात। पतितश्च महौघया तया सुदूरं नीतः स्वेनैव सुकृतेन रक्षितः कस्यापि नगरस्य आसन्नवर्त्तिनि तटे अर्पितः। ततः स स्थलमारुह्य स्त्रीचेष्टितं चिन्तयन् जलावगाहेन नितरां क्लान्तस्तरुतले विशश्राम। तस्मिंश्च काले तत्र नगरे राजा ममार। मृते राजनि तत्र देशे ईदृशी स्थितिः, यत् मङ्गलगजः पौरैः भ्राम्यमाणः करेण यं स्वे पृष्ठे आरो-पयति स राज्ये अभिषिच्यते। स गजः अस्य धैर्य्येण तुष्टः

विधातेव अन्तिकमागात्, आरोपयञ्च समुत्क्षिप्य तं वणिक्सुतं स्वपृष्ठे ।* ततश्च बोधिसत्त्वांशसम्भवः स राज्ये प्रकृतिभिः यथाविधि अभ्यषिच्यत । स खलु राज्यं प्राप्य सततं क्षमादयादिभिः परमरंस्त, न तु पापाभिरफलवृत्तिभिर्योषिद्भिः । सा च तद्भार्या निःशङ्का पतिं नदीहृतं मन्वाना जारं पृष्ठे कृत्वा इतस्ततो बभ्राम । क्रमेण च अयं मे भर्ता शत्रुभिः कृत्तहस्तपादः, अहं पतिव्रता, भिक्षित्वा एवं जीवयामि, तस्मै भिक्षां प्रयच्छत इत्येवं भिक्षमाणा ग्रामे ग्रामे नगरे नगरे भ्रमन्ती राज्यस्थस्य स्वभर्त्तुर्नगरं प्राप । तत्र च तथैव भिक्षमाणा पौरैश्च पतिव्रतेत्युच्यमाना क्रमेण तस्य राज्ञः श्रुतिपथमाययौ । स च राजा तां पृष्ठारूढरुण्डां पतिव्रतां समीपमानाययत् । त्वं सा पतिव्रतेति ध्यानात् परिज्ञाय तेन पृष्टा सा पापा देव ! साहं पतिव्रता इति भर्तारं राजश्रिया तेजसा च परिवृतमपरिज्ञाय प्रत्यवादीत् । ततः स बोधिसत्त्वांशो नृपतिः हसन् तां जगाद, दृष्टं ते पातिव्रत्यं फलेन मया, या त्वं स्वरक्तमांसं दत्त्वापि स्वीकर्त्तुं न शकिता । सा त्वं मानुषराक्षसी स्वेन हस्तेन तदा भर्त्तुः मांसरक्ताहरा, साम्प्रतं विकलेन रुण्डेनापि स्वीकृत्य वाहनीकृता । कश्चित् ते भर्ता त्वया निष्कार्यो नद्यां क्षिप्तः ? तेनैव कर्मणा रुण्डमेतं वहसि बिभर्षि च । इत्येवं सर्वं वृत्तान्तम् उद्घाटितवन्तं तं पतिं परिज्ञाय सा तदा मूर्च्छितेव लिखितेव मृतेव चाभवत् । किमेतत् ब्रवीतु देव इति स राजा सकौ-

तुकैरमात्यैः पृष्टः यथावृत्तान्तं तेभ्यः सर्वमवर्णयत् । ततस्ते भर्तृद्रुहं बुद्ध्वा कृत्वा च छिन्नकर्णनासां देशात्तस्मात् सरण्डां निरवासयत् । तदा च विधिश्छिन्नकर्णनासया युक्तं रण्डं बोधिसत्त्वांशञ्च नृपश्रिया युक्तं कृत्वा सदृशयोगमदर्शयत् । तदेवं दुरवधार्य्यैव मतिर्योषितां कोऽपि ताः सुरक्षितुं न शक्नोति । तथा अत्यक्तशीलानां ससत्त्वानां जितात्मनां तुष्यैव स्वयमायान्ति सम्पदः । इति कथामाख्याय मन्त्री गोमुखः पुनरपि युवराजाय अपरां कथामवर्णयत् ।

आसीत् अपरः कोऽपि बोधिसत्त्वांशः । स केवलं वने क्वापि कृतोटजः करुणार्द्रहृदयः तपश्चरन् तत्रस्थान् जन्तन् पिशाचांश्च समुद्धरन् विचचार । एकदासौ परोपकारार्थम् अटवीं भ्रमन् महात्मैकं कूपं दृष्ट्वा यावत् तत्र दृशं ददाति, तावत् तदन्तःस्था कापि नारी तं दृष्ट्वैव उच्चैरभाषत, महासत्त्व ! अहं स्त्री, सिंहः स्वर्णशिखः खगः भुजङ्गश्चैक इति चत्वारोऽत्र कूपे रजन्यां पतिताः, तत् कृपया महतः क्लेशादस्मात् अस्मान् कृपया समुद्धर । तदाकर्ण्य स तां स्त्रियं जगाद, यूयं त्रयो यदि तमसा अत्रान्तर्निपतिताः, तदा खगोऽत्र कथं पतितः ? ततः सा नारी खगोऽयं व्याधजालेन संयतः पतित इति तं महासत्त्वं प्रत्यवादीत् । ततः स तपःप्रभावात् तान् समुद्धर्त्तुमिच्छन्नपि उद्धर्त्तुं नाशकत्, तस्य तपःसिद्धिस्तु अक्षीयत । अथ पापा इयं स्त्री, ध्रुवमेतस्याः सम्भाषणात् मे तपःसिद्धिर्नष्टा, तदत्र तावदन्यां युक्तिं करोमीति

सञ्चिन्त्य स तृणवेष्टितया रज्ज्वा तान् सर्वान् सुवतः कूपात् समुज्जहार, पप्रच्छ च सविस्मयं सिंहपक्षिभुजङ्गमान् स्वं स्वं वृत्तान्तम्। ततः सिंहोऽब्रवीत् व्यक्तया वाचा, वयं जातिस्मराः, अन्योन्यावाधकाश्च क्रमेणास्माकं वृत्तान्तान् शृणु।

अस्ति तावत् तुषाराद्रौ वैदूर्य्यशृङ्गस्थं नगरवरम्। तत्र पद्मवेगो नाम विद्याधरपतिः प्रतिवसति स्म। तस्य वज्रवेगाख्यः पुत्रोऽजनि। स वज्रवेगः तस्मिन् वैद्याधरे लोके वसन् शौर्य्यमदात् अहङ्कारी येन केनचित् साकं विरोधमकार्षीत्। पितुर्निषेधेऽपि यदासौ तद्वचः नामन्यत तदास्य पिता तं मर्त्त्यलोके पतेति शशाप। ततोऽसौ नष्टमदः भ्रष्टविद्यः शापहतः रुदन् पितरं शापान्तमयाचत। ततः स तत्पिता क्षणं ध्यात्वा तमब्रवीत्, त्वं भुवि विप्रसुतो भूत्वा तत्रापि एवं मदगर्वकरणात् पित्राभिशप्तः सिंहो भूत्वा कूपे पतिष्यति, कश्चिच्च महासत्त्वः तस्मात् त्वामुद्धरिष्यति, तस्य च प्रत्युपकारं कृत्वा मुक्तिमाप्स्यसि शापादस्मादिति। अथ स वज्रवेगः मानवे हरिघोषनामकस्य विप्रस्य देवघोषनामा सुतः सञ्जज्ञे। तत्रापि स शौर्य्यदर्पितः बहुभिः वैरमकरोत्। पिता च तस्य तथा कुर्वन्तं त न्यवारयत्। यदासौ तद्वचः न अमन्यत तदास्य पिता क्रुधा तमशपत्, यतस्त्वं शौर्य्याभिमानी, दुर्बुद्धे! तस्मात् साम्प्रतमेव सिंहो भवेति। एवं स विद्याधरः सिंहः सन् अत्र कानने स्थितः। तमेव मां सिंहं विद्धि, अहं दैवात् काननेऽत्र निशि भ्रमन् अत्र कूपे पतितः, त्वया च महा-

सत्त्वेन समुद्धृतः, तदिदानीं यामि, यावत् ते कापि विपदापतति तावत् मां स्मरेः, अहं ते उपकारं कृत्वा शापतो मुक्तिमाप्स्यामीति अभिधाय स्थिते गते स स्वर्णशिखः पक्षी स्वमुदन्तमाख्यातुमुपचक्रमे।

अस्ति हिमवति वज्रदंष्ट्राभिधः विद्याधरराजः। तस्य देव्यां क्रमशः पञ्च कन्याः अजायन्त। ततः स तपसा हरमाराध्य एकं सुतमवाप। स च रजतदंष्ट्रो नाम पितुः जीवितादपि प्रियतरः। स शिशुरपि पित्रा नितरां वात्सल्येन विद्यां लम्भितः बन्धूनां नेत्रानन्देन सह वृद्धिमवाप। एकदासौ ज्येष्ठां भगिनीं सोमप्रभां मौर्य्याः पुरे पिञ्जरिकं वादयन्तीमवेक्ष्य देहि मे पिञ्जरिकम् अहमदो वादयामि इति सनिर्बन्धं पुनःपुनस्ताम् अयाचत। यदा तु सा तत् तस्मै न ददाति, तदासौ स्वयं तदादाय पक्षीव नभ उदपतत्। अथ सा कुपिता स्वसा तमशपत्, यत् मे पिञ्जरिकं हृत्वा हठादुड्डीनोऽसि, तत् त्वं स्वर्णचूड़ः पक्षी भविष्यसीति। तदाकर्ण्य पादपतितेन तेन सा शापान्तं याचिता। सा स्वसा तमब्रवीत्, रे मूढ़! यदा पक्षी भूत्वा अन्धकूपे पतिष्यसि, कश्चित्र महापुरुषः त्वामुद्धरिष्यति करुणया, तदा तस्य प्रत्युपकारं कृत्वा त्वं मुक्तिमवाप्स्यसीति। इत्युक्तः स भ्राता रजतदंष्ट्रः स्वर्णचूड़ः पक्षी संवृत्तः। स एव स्वर्णचूड़ः पक्षी अहं निशि अस्मिन् कूपे प्रभ्रंशितः समुद्धृतश्च कृपयाऽत्र भवता, तदिदानीं गच्छामि, सति कार्य्ये मां स्मरेः, तव प्रत्युपक्रियाकरणात् मे मुक्तिरिति अभिधाय सोऽपि पक्षी प्रतस्थे। ततः स

भुजङ्गः तेन महासत्त्वेन पृष्टः स्ववृत्तान्तमाख्यत्।

पुराहं काश्यपाश्रमे कश्चित् मुनिकुमारोऽभवम्। तत्र चासीत् मे कोऽपि मुनिसुतो वयस्यः। एकदाहं तत्र वयस्ये तटस्थिते सरः स्नातुमवातरम्, अद्राक्षञ्च तदा त्रिफणमेकं सर्पमागच्छन्तम्। मया तु तं वयस्यं नर्म्मणा तेन सर्पेण भीषयितुं तटान्ते मन्त्रबलात् ततसम्मुखं स सर्पः संनिरुद्धः। क्षणाच्च, स मद्वयस्यः स्नात्वा तटं प्राप्तो महाहिं तमतर्कितं विलोक्य त्रस्तो मोहमुपागमत्। अथ चिरेणाश्वासितः स मत्सखा ध्यानात् तत् मत्कृतमवेत्य कोपात् मामशपत्, गच्छ त्वम् ईदृश एव त्रिफणः सर्पो भव इति। अथ मया अनुनीतेन तेन शापान्तो मे कृतः, यदा त्वं कूपे पतिष्यति उद्धरिष्यति च त्वां कश्चित् महात्मा, तदा त्वं तस्य प्रत्युपकृतिं कृत्वा मोक्षमाप्स्यसीति। तदिदानीं त्वयाहमुद्धृतोऽस्मि कूपात्, यामि साम्प्रतं, काले स्मर्त्तव्योऽहं, तवोपकारमकृत्वा न मे मोक्ष इति प्रोच्य स भुजगो यथास्थानं प्रस्थितः। अथ सा स्त्री स्वं वृत्तमवर्णयत्। अहं कस्यचित् क्षत्रियसुतस्य राजोपजीविनः शूरस्य त्यागशीलस्य यूनश्चारुरूपस्य मानिनः पत्नी तथापि पापया मया अन्यपुरुषासङ्गः कृतः, तद् विदित्वा स मे भर्त्ता मन्निग्रहाय मतिमकरोत्। अहंञ्च सखीमुखात् तद्विदित्वा तदैव पलायिता रात्रौ वनमिदं प्रविष्टा एव कूपेऽस्मिन् पतिता त्वया च समुद्धृता, तदिदानीं गत्वा कुत्रचित् कथञ्चित् जीवामि। तस्मै हिमं भूयात् यत्र तेऽहं प्रत्युपक्रियां कुर्य्यात्। इत्युक्त्वा सा कुलटा गोत्रवर्द्धनाख्यस्य नृपतेर्नगरं प्रतस्थे। तत्र सा

समागत्य राजमहादेव्या दास्यमुपेत्य तत्परिजनैः सह सङ्गतिमुत्पाद्य च तस्थौ । तस्यापि बोधिसत्त्वस्य तस्याः कुलटायाः सम्भाषणात् वने नष्टसिद्धेः मूलफलादिकं नाविरासीत् । ततः स क्षुधापदा क्रान्तः प्राक् तं सिंहमस्मरत् । अथ स्मृतागतः स सिंहः मृगामिषैः किञ्चित् कालं तं प्रकृतिस्थं विधाय प्राब्रवीत्, महात्मन् ! क्षीणशापोऽहमिदानीं स्वपदं व्रजामि इत्युक्त्वा सैंहीं तनुं मुक्त्वा सहसा विद्याधरो भूत्वा तमामन्त्र्य निजं पदमगात् । ततः स बोधिसत्त्वः पुनर्वृत्तिम्लानः खगं तं सस्मार । सोऽपि स्मृत एव तस्यान्तिकमागात् । आगत्य तेनावेदितार्त्तिः क्षणात् गत्वा रत्नाभरणसम्पूर्णामेकां करण्डिकामानीय तस्मै ददौ, उवाच च एतेनार्थेन तव चिरन्तनी वृत्तिः स्यात्, मम च शापान्तः संवृत्तः, तदिदानीं साधयाम्यहम् इत्युक्त्वा सोऽपि विद्याधरकुमारो भूत्वा नभसा स्वं लोकं गत्वा निजात् पितुः राज्यमवाप । सोऽपि बोधिसत्त्वः तानि रत्नानि विक्रेतुं परिभ्रमन् तत् नगरं प्राप, यत्र सा स्त्री कूपोद्धृता अतिष्ठत् । तत्र कस्याश्चित् वृद्धाया ब्राह्मण्या गृहे विजने तानि आभरणानि निधाय स यावदापणम् एति, तावत् तां कूपसमुद्धृतां योषितमद्राक्षीत् । सापि तं पश्यति स्म । ततश्चान्योन्यसम्भाषणादिके कृते सा स्त्री यथाक्रमम् आत्मनः राजमहिषीपार्श्वस्थितिं तस्मै न्यवेदयत् । सोऽपि स्वोदन्तं पृष्टस्तया सरलमतिः तस्मात् खगात् रत्नालङ्करणप्राप्तिवृत्तान्तं तस्यै शशंस, दर्शयामास च वृद्धावेश्मनि तां नीत्वा तत्सर्वम् । सा च गत्वा सत्वरं

स्वस्वामिन्यै राज्ञ्यै तत् जगाद। तस्या एव राज्ञ्या गेहान्तः-प्रविष्टेन स्वर्णचूलेन मन्त्रिणा छलेन पश्यन्त्याः तस्याः सर्वाभरणभाण्डकं हृतम्। तच्चेदानीं स्वपुरप्रान्तं तस्याः स्त्रियः प्रमुखात् निशम्य राज्ञी तं राजानं व्यजिज्ञपत्। राजा च तया कुयोषिता दर्शितं तं बोधिसत्त्वं साभरणभाण्डं भृत्यैर्बद्धा तस्मात् वृद्धागृहात् स्वभवनमानाययत्। ततश्च तद्वृत्तान्तं परिपृच्छ्य सत्यं मत्वा च तद्वचः, तस्य आभरणादिकं गृहीत्वा तं बन्धनागारे स्थापयामास। स च बोधिसत्त्वः बन्धनक्लिष्टः तं भुजङ्गमं सस्मार। सोऽपि स्मरणादेव तमुपतस्थे। दृष्ट्वा च तं विदितवृत्तान्तः सर्पोऽसौ तं साधुमभाषत, अहं गत्वा आ शिरसः तं महीपतिं वेष्टयामि, न च तावदहं तं मुञ्चामि यावत् त्वयागत्य रक्षाम्यहं सर्पात् भूपतिमिति न वाच्योऽस्मि। त्वयि आगते तेन त्वद्वचसा तं नृपमहं मोक्ष्यामि। मया मुक्तश्च स राजा तुभ्यमर्द्धराज्यं प्रदास्यति इत्युक्त्वा स सर्पः सहसागत्यैव फणत्रयमस्य शिरसि कृत्वा राजानं तं वेष्टितवान्। अथ हा हा! दृष्टो! राजा भुजगेनेति जने समाक्रन्दति स बोधिसत्त्वोऽब्रवीत्, अहं तावत् भुजङ्गादस्मात् राजानं रक्षामि। इति तद्वाक्यं श्रुत्वा अनुजीविभिर्विज्ञप्तः स राजा तं बद्धं बोधिसत्त्वं आनाय्य सर्पाक्रान्तः समब्रवीत्, यदि मां सर्पादस्मात् त्वं मोचयिष्यसि तदाहं तुभ्यं राज्यार्द्धं दास्यामीति। मन्त्रिणश्च तथेति समन्वमोदन्त। ततोऽसौ बाढमित्युक्त्वा तं भुजगमब्रवीत्, मुञ्चैनं राजानमाशु इति। ततः स राजा तेनाहिना मुक्तः तस्मै राज्यार्द्धं ददौ। सोऽपि बोधिसत्त्वः तत्क्षणात् राजा

भवत्। सर्पोऽपि क्षीणशापः सद्यो मुनिकुमारो भूत्वा मद्दसि आख्यातस्ववृत्तान्तो निजमाश्रममागत्। एवं शुभात्मनां शुभं निश्चितमेवायाति, पूज्यातिक्रमश्च महतामेवं शापक्लेशाय भवति, अविश्वासास्पदं स्त्रीणामाशयं प्राणदानोपकारोऽपि न स्पृशति किमन्यत्तासामुच्यते? इति कथामाख्याय स गोमुखः पुनर्वत्सराजसुतायाब्रवीत्, देव! पुनर्मुग्धकथां शृणु।

आसीत् क्वचिद्विहारे कश्चित् मूढमतिः श्रमणः। स कदाचित् रथ्यायां भ्रमन् शुना जानुनि अदश्यत। ततश्च स स्वमावासं विहारमागम्य व्यचिन्तयत्, किं ते जानुनि वृत्तमिति प्रत्येकं मां प्रेक्षते, एवमहं कियच्चिरं कियतः प्रत्याययिष्यामि, तदेतमुपायं करोमि, युगपत् सर्वान् बोधयितुमित्यालोच्य विहारोपरि समारुह्य ग्रन्थिमुषलं गृहीत्वा अवादयत्। अथ सर्वे भिक्षवः अकारणमकाले किं ग्रन्थिं वादयसीति सर्वे आश्चर्यबुद्ध्या सम्मिलिताः पप्रच्छुः। सोऽब्रवीत्, शुना मे जानु भक्षितं, तदेकैकस्य पृच्छतः वो युष्माकं ब्रूयादिति सर्वे यूयं सङ्घटिताः। तत् सर्वे समं मे जानु पश्यत इति स्वदष्टं जानु दर्शयन्नब्रवीत्। ते च सर्वे अन्योऽन्यं हसन्तः प्रोचुः, कियन्मात्रे अनेन कियान् संरम्भः कृत इति। तदेवं मूर्खः श्रमण आख्यातः, साम्प्रतं मूर्खमूकः श्रूयताम्।

आसीत् कस्मिंश्चिज्जनपदे कोऽपि वाद्यः महाधनः मूर्खमूकः। स च सभार्यः सदा सक्तून् लवणवर्जितान् भुङ्क्ते स्म। कदाचित् स अन्यान्नस्य स्वादं न बुबुधे।

एकदासौ भार्य्यामब्रवीत् क्षीरिणीं, प्रति मे श्रद्धा वर्त्तते, त्वं तामद्य मदर्थं पच। सा च तद्भार्य्या तथेति तस्य गृहे क्षीरिणीं पपाच। स च सतर्कः गृहे अभ्यन्तरे शयने कश्चित् प्राघुणिको दृष्ट्वा मा गच्छेत् इति तस्थौ, प्रोवाच च, त्वामिहोपविश्य रुदती तिष्ठ, यदि कश्चित् सुहृदागत्य मद्वार्त्तां पृच्छेत् तदा स त्वया एवं वाच्यः, यथा मे भर्त्ता मृत इति। ततस्तस्मिन् गते आवाभ्यां सुखेन क्षीरिणी भोक्तव्या। इत्युक्ता यावत् रोदितुं प्रवृत्ता, तावदस्य सुहृत् प्रविश्य किमेतदिति तामपृच्छत्। तया भर्त्तायं मे मृतः, पश्य इत्युक्तः स व्यचिन्तयत्, क्वेयं सुखिता क्षीरिणीं पचन्ती दृष्टा ? क्व चाधुनैव अस्याः पतिर्विना रुजं विपन्नः ? नूनं मां प्राघुणिकं दृष्ट्वा आभ्यां मृषा एतत् कल्पितं, तन्मया नैव गन्तव्यमित्यालोच्य उपविश्य च स धूर्त्तः हा मित्र। हा मित्रेति क्रोशन् तत्रावतस्थे। ततश्चान्ये बान्धवाः तमाक्रन्दं श्रुत्वा प्रविश्य दृष्ट्वा च तं मृतवत् स्थितं श्मशानं नेतुमुद्यता अभूवन्। ततश्च सा तस्य भार्य्या उत्तिष्ठ स्वामिन्। यावदेतैर्नीत्वा त्वं न दह्यसे इति पार्श्वस्थिता कर्णमूले तमवदत्। नैवं, शठोऽयं मे क्षीरिणीं भोक्तुमिच्छति, नाहमुत्तिष्ठामि, एतस्मिन्नागते यद्यहं न मृतः, तदायं क्षीरिणीं भक्त्वा पूर्वमेवागमिष्यत्, मादृशां प्राणेभ्योऽपि अर्थसिद्धिर्गरीयसीति तां भार्य्यामनुच्चैः प्रत्यब्रवीत्। ततस्तेन मित्रेण स्वजनैश्च स नीत्वा श्मशानं दह्यमानोऽपि निश्चेष्टः वचनं न ददौ। एवं स मूढो विजहौ प्राणान्, न तु

कौरिणीम् । तथान्यैस्तस्य क्लेशार्जितं हेलया बुभुजे । अतोऽयं कदर्थो जड़ः, साम्प्रतं शृयन्तामम मार्जार-भीतकाः ।

आसीत् पुरोज्जयिन्यां कोऽपि मुग्ध उपाध्यायः । तस्य निशि मूषकाणामुपद्रवात् निद्रा नाभवत् । स च खिन्नः कस्मैचित् सुहृदे तदसुखवार्त्तामाख्यत् । स सुहृद् तमुपाध्यायमब्रवीत्, मार्जारं गृहे स्थापय, स तान् मूषकान् खादिष्यतीति । उपाध्यायोऽप्यभाषत, मित्र ! मार्जारः कीदृक्, क्व चास्ति, न मयासौ दृष्टपूर्वः । इत्युपाध्यायेनोक्तः सुहृत् पुनरब्रवीत्, यस्य काचरे लोचने, वर्णः कपिलधूसरः, पृष्ठे च रोमशं चर्म, यश्च रथ्यासु सदा, चरति स मार्जारः, त्वमेभिरभिज्ञानैस्तमन्विष्य आशु आनय मित्र ! मार्जारम् । इत्युपदिश्य स सुहृत् स्वं वासमगात् । ततः स जड़ः उपाध्यायः निजान् शिष्यान् जगाद, मार्जारानयनाय । ते च एकं रथ्यामुखात् निर्गतं काचरनेत्रयुगलं धूसरपिङ्गलं पृष्ठोपरि रोमशं सत्त्वमवलोक्य असौ मार्जारः अस्माभिर्यथाश्रुतः प्राप्त इति अवष्टभ्य गुरोरन्तिकं निन्युः । उपाध्यायोऽपि मित्रोक्तैर्मार्जारलक्षणैर्युक्तं तं दृष्ट्वा रात्रौ तत्र मठान्तरे स्थापयामास । सोऽपि गृहानीतो जड़ः मार्जारोऽहमस्मीति आत्मानममन्यत । प्रातश्च स सुहृद् आगतः वटुं तथास्थितं व्यलोकयत्, अपृच्छच्च, कोऽयमिहानीत इति ? उपाध्यायः सशिष्यः प्रत्यवादीत्, कथं त्वत्त एव श्रुतलक्षणोऽयं मार्जारोऽस्माभिरेव इहानीत इति । ततः स हसन्नवादीत्, क्व मूढ़ो मानुषः, क्व चातिदुष्टो मार्जार-

स्वतुष्यात् पुच्छवान् इति। तदाकर्ण्य ते वटुं मुक्ता मूढ़ा अब्रुवन्, तर्हि पुनस्तादृशं मार्जारमन्विष्य आनयाम:। एवमुक्तवतस्तान् सर्वे तत्र हसन्ति स्म। अज्ञातं हि न कस्योपहासाय? मार्जारभीत: कथित:, श्रूयन्तामधुना अपरे।

आसीत् बहूनां मुग्धानां मध्ये कश्चित् क्वचित् मठे। स कदाचित् केनचित् पठ्यमानात् धर्मशास्त्रात् तड़ागकर्त्तु: सुमहत् फलमश्रौषीत्। तत: स धनाढ्य: तस्मात् मठात् नातिदूरे महान्तं वारिपूरितं तड़ागमेकं कारयामास। एकदा स मुग्धवर: तड़ागान्तं गत: केनापि उत्पाटितानि अस्य पुलिनानि व्यलोकयत्। अपरेद्युश्च तथैव स अन्यतस्तस्य तड़ागस्य तटमुत्खातं दृष्ट्वा सोद्वेगमचिन्तयत्, अद्यप्रभृति प्रातरारभ्य इहैव वासरं स्थास्यामि, द्रक्ष्यामि च क: करोत्येतदिति पर्य्यालोच्य स मठं ययौ। अन्येद्युर्यावदेत्य स तत्रास्ते तावत् दिवोऽवतीर्य्य शृङ्गाभ्यां तटं खनन्तं वृषभमद्राक्षीत्। तच्च दिव्यं वृषभं दृष्ट्वा किं दिवं यामि अनेन सहेति विविच्य उपेत्य स तत्पुच्छं हस्ताभ्यामग्रहीत्। तत: पुच्छावलग्नं तं भौतमुत्क्षिप्य वेगात् स भगवान् वृष: क्षणेन कैलासं स्वं धाम निनाय। तत्र स भौतो जड़: दिव्यानि भक्ष्याणि मोदकानि अवाप्य भुञ्जान: कतिचित् दिनानि सुखं न्यवसत्। ततश्च स भौतमूर्खतम: गतागतानि कुर्वन्तं तं महावृषं दृष्ट्वा दैवमोहित: वृषस्यास्य पुच्छलग्न: पुन: स्वं मठं गत्वा तत्र बान्धवान् पश्यामि, तेभ्यश्च एतदद्भुत-

मिदं कथयित्वा पुनरेष्यामीत्यालोच्य तस्य गच्छतो वृषस्य पुच्छमालम्ब्य भूतलमगात्। ततः प्राप्तमठः स भौतः अन्यैस्तत्रस्थैराश्लिष्य क्व गतोऽसीति पृष्टः तं वृत्तान्तं सर्वं तेभ्यः शशंस। ततः सर्वे ते तं प्रार्थयन्ते स्म, भ्रातः! प्रसीद, अस्मान् तत्र नीत्वा तानि मोदकानि भोजय इति तटाकर्ण्य स तथेत्युक्त्वा युक्तिमुक्त्वा च अपरेऽहनि तान् तड़ागोपान्तमनयत्, स च वृषस्तत्रायथौ। तेषां मुख्यः स पाणिद्वयेन तस्य लाङ्गूलं जग्राह। कश्चित् तस्य मुख्यजनस्य चरणौ, ततोऽपरस्तस्य धृतचरणस्य चरणौ अग्रहीत्। इत्यन्योऽन्यविलग्नैस्तैर्भौतैर्यावत् शृङ्खला रचिता, तावत् स वृषः जवात् नभ उत्पपात। तस्मिंश्च लाङ्गूलालम्बिभौते वृषभे गते मुख्यभौतं तम् अपरो भौतः पर्य्यपृच्छत्, भद्र। परिमाणन्तावदाख्याहि, दिवि यथेष्टसुलभानि यानि मोदकानि भक्षितानि त्वया, तानि किम्प्रमाणानि? ततो दैवमोहात् स तं वृषपुच्छं विमुच्य पद्मकोषाकारौ करौ संश्लिष्टौ कृत्वा यावत् इयत्प्रमाणानीति वक्ति, तावत् सः अन्ये च सर्वे खात् निपत्य पञ्चत्वमापुः। वृषश्च कैलासं प्रायात्। एतदवलोक्य सर्वे हसन्ति स्म। निर्विमर्षा प्रश्नोत्तरक्रिया दोषायैव। श्रुता व्योमगामिनो भौताः, अपरोऽपि श्रूयताम्।

कश्चित् भौतः ग्रामान्तरं व्रजन् मार्गं विसस्मार। ततश्च पन्थानं परिपृच्छन् स जनैः नदीतटस्थस्य तरोरुपरि वर्त्मना गच्छ इत्युच्यते स्म। ततः स तस्य तरोः पृष्ठं गत्वा आरूढ़ः स मुग्धधीः एतत् पृष्ठेन मे पन्था

जनेनूपदिष्ट इति आलोच्य तस्य पृष्ठेन यावत् गच्छति तावत् तस्य भरालिशयात् पर्य्यन्तवर्त्तिनी शाखा ननाम, स च पतन् तामुपालम्ब्य यावत् तस्थौ तावत् तेन पथा आरोहेणोपरिस्थेन नद्यां पीतजलः करी आययौ। तमारोहमवलोक्य तच्छाखाग्रलम्बी स भीतः दीनया वाचा महात्मन्! मां गृहाणेति अभाषत। स हस्त्या-रोहः तं भीतं तरोरवतारयितुं उज्झिताङ्कुशः द्वाभ्यां पाणिभ्यां यावत् पादयोर्गृह्णाति, तावत् स वारणः तं हस्त्यारोहं त्यक्त्वा निरगात्। स च हस्तिपकः निराश्रयः तस्य ग्रामभीतस्य वृक्षाग्रलम्बिनः पादौ गृहीत्वा ललम्बे। ततः स भीतः तं हस्त्यारोहं त्वरितमभ्यधात्, यदि जानासि तदा त्वया यत्किञ्चित् गीयतां येन तत् श्रुत्वा जना इतः समागत्य नौ अवतारयेयुः। अन्यथा पतितावावां नदीयमधस्तात् नयेत्। एवमुक्तः स गजपालः तथा मञ्जु जगौ यथा स एव भीतः अत्र परितोषमगात्। तथा स्वामवस्थां विस्मृत्य साधुवादं दत्त्वा त्यक्तपादपशाखः द्वाभ्यां हस्ताभ्यां छोटिकां दातुं प्रावर्त्तत, व्यपद्यत च तत्-क्षणात् हस्त्यारोहसहितः पतन् नद्याम्। मौर्ख्यः सङ्गो हि कस्य शर्मणे? इति कथामाख्याय स गोमुखः वत्सेश्वरसुताय हिरण्याक्षकथामिमामाचख्यौ।

अस्ति हिमवतः कुक्षौ काश्मीर इति पृथ्वीशिरोमणिः विद्याधर्मैकनिलयो महान् जनपदः। तत्रासीत् हिरण्यपुरं नाम नगरम्। तस्मिंश्च कनकाक्ष इति राजा बभूव। तस्य भूपतेः रत्नप्रभाख्यायां महिष्यां शङ्करानु-

यशेण हिरण्याक्ष इति पुत्रो जज्ञे। स कदाचित् राजसुतः पथि गुलिकया क्रीड़न् कयाचित् गुलिकया तेन मार्गेण आयातां तापसीमेकामताड़यत्। सा तापसी जितक्रोधा विहस्य तं राजपुत्रं हिरण्याक्षमब्रवीत्, राजपुत्र! स्वयौवनमात्रेण ते ईदृक् दर्पः, यदि तां मृगाङ्कलेखामाप्नोषि, तदा कीदृशो भवेत्। तदाकर्ण्य तां तापसीं प्रसाद्य स राजसुतः पर्य्यपृच्छत्, भगवति! कैषा मृगाङ्कलेखा? त्वया कथ्यतामिति। ततस्तं सा प्रत्यवादीत्, अस्ति शशितेजा इति विश्रुतः महायशा विद्याधरपतिर्हिमाचले। तस्यैव मृगाङ्कलेखानाम्नी कन्यकास्ति। सा रूपेण खेचराणां निशासु उन्निद्रकौमुदी। सैव ते अनुरूपा भार्य्या, त्वञ्च तस्याः सदृशः पतिः। एवमुक्तस्तापस्या स हिरण्याक्षः पुनरब्रवीत्, भगवति! कथं सा मया प्राप्या, तदपि कथयित्वा अनुगृह्यताम्। तन्निशम्य सा योगेश्वरी हिरण्याक्षं प्रत्यभाषत, वत्स! गत्वाहमितः तत्र त्वत्कथाप्रसङ्गात् तदाशयम् उपलप्स्ये, ततश्चागत्य अहमेव तत्र त्वां नेष्यामि। इह यः अमरेशाख्यः देवोऽस्ति, तत्केतने त्वया प्रातरागन्तव्यम्, अहं तमर्च्चयितुं नित्यमागच्छामि। इत्युक्त्वा सा तापसी सपदि स्वां सिद्धिमाश्रित्य तस्या मृगाङ्कलेखायाः समीपं प्रायात्। तत्र च तस्यै हिरण्याक्षस्य गुणान् तथा शशंस, यथा सा दिव्यकन्या श्रुत्वैव तामुवाच, भगवति! यद्यहं तादृशं भर्त्तारं न लभेय तदा निष्फलेन जीवितेन किं मे कार्य्यमित्युक्त्वा सञ्जातमदनावेशां तत्कथाभिरेव दिवसं नीत्वा

सा मृगाङ्कलेखा तयैव तापस्या सह निशामुवास। तावच्च स हिरण्याक्षोऽपि तत्रैव नीतदिवसः सुप्तः कथञ्चित् स्वप्ने गौर्या निशाक्षये अभिदधे, वत्स ! त्वं विद्याधरः मुनिशापेन मर्त्यतां नीतः, अस्याश्च तापस्याः करसंसर्गात् ततः शापात् मोक्ष्यसे, ततश्च तां मृगाङ्कलेखामाशु परिणेष्यसि, नात्र चिन्ता कार्य्या, सा हि ते पूर्वभार्य्या, इत्याख्याय सा देवी तिरोदधे। सोऽपि च प्रबुध्य प्रातरुत्थाय स्नानादिकं मङ्गलं चकार। ततः सः अमरेशस्य देवस्य निकेतनं गत्वा तं प्रणम्य तापस्या आदेशेन तस्थौ।

अत्रान्तरे च कथमप्याप्तनिद्रां मृगाङ्कलेखां गौरी तथैव स्वप्ने समादिशत्, वत्से ! साम्प्रतं तापस्याः करस्पर्शेन क्षीणशापं पुनर्विद्याधरत्वमाप्तं हिरण्याक्षं पतिमाप्स्यसि, अलमुद्वेगेन, इत्युक्त्वान्तर्दधे। सा च मृगाङ्कलेखा प्रातः प्रबुध्य तस्यै तापस्यै तं स्वप्नवृत्तान्तं सर्वमशंसत्। सा सिद्धयोगिनी श्रुत्वैव तत् भूलोकमागत्य अमरेशस्य क्षेत्रे स्थितं हिरण्याक्षं तमभ्यभाषत, एहि पुत्र ! विद्याधरलोकम् इति उक्त्वा करेण तं प्रणमन्तं समादाय नभः समुत्पपात। ततश्च स हिरण्याक्षः, विद्याधरेश्वरो भूत्वा पापक्षयात् स्वां जातिं स्मृत्वा तां तापसीमवादीत्, भगवति ! हिमाद्रौ वज्रकूटाख्ये पुरे मां विद्याधराणामधिपतिम् अमृततेजसं नाम विद्याधरं जानीहि। सोऽहं पुरा मुनेः कस्यापि उल्लङ्घनात् शापं प्राप्य मर्त्ययोनिं तत्करस्पर्शान्तमभ्यगच्छम्। गतस्य च मे तदा भार्य्या

दुःखात् तनुमजहात्। सैषा, मृगाङ्कलेखा मे पूर्वप्रिया अद्य जाता, इदानीञ्च त्वत्साहाय्येन गत्वा तां प्राप्स्यामि, त्वत्करस्पर्शेन च सोऽद्य मे शापो विगतः, इति ब्रुवन् तया साकं गगनेन सः अमृततेजास्तं हिमाद्रिं जगाम, ददर्श च तत्र उद्यानस्थितां मृगाङ्कलेखाम्। सापि तथा तापस्या यथोदितं तथायातमपश्यत्। चिरं प्रथमं तौ श्रुतिपथेन अन्योऽन्यमानसं प्रविष्टौ, ततोऽनिर्गत्यापि दृष्टिमार्गेण पुनः प्राविशताम्। विवाहसिद्धये त्वयैव त्वत्पित्रे इद-मावेद्यतामिति सा मृगाङ्कलेखा तया प्रौढ़या तापस्या जगाद। ततः सा लज्जावनतमुखी निजं पितरं गत्वा सखीमुखेन तत् सर्वं तत्क्षणं ज्ञापयामास। सोऽपि स्वप्ने गौर्य्यादिष्टः तं खेचरेश्वरमानीय स्वभवनं सम्मान्य च तस्मै अमृततेजसे मृगाङ्कलेखां यथाविधि ददौ। स च कृतोद्वाहः वज्रकूटाख्यं स्वं नगरं प्रायात्। तत्र चामृत-तेजाः पुनः सभार्य्यकं राज्यं प्राप्य सिद्धतापस्या तया आनीतं तं मर्त्यं पितरं कनकाद्यैः भोगैरभ्यर्च्य पुनर्भूतलं प्राप्य च तया मृगाङ्कलेखया सुचिरं स्वां समृद्धिं बुभुजे। तदेवं जगति यस्य जन्तोर्यत् पूर्वकृतं तदवश्यमेव भवि-तव्यम्। एवं गोमुखमुखादाकर्ण्य कथां शक्तियशसि समुत्-सुकोऽपि युवराजः कथमपि मनसो धैर्य्यमधात्, अभजत शयनम्, अगमच्च निद्राम्।

---

## अथ षट्षष्टितमस्तरङ्गः ।



अथान्येद्युः पुनर्निशि स गोमुखः नरवाहनदत्ताय विनोदयन् कथामेतामवर्णयत् । पुरा कश्चित् धनेश्वराख्ये शैवे चैत्ये बहुशिष्यपरिवृतः कोऽपि महर्षिः प्रतिवसति स्म । स कदाचित् शिष्यानब्रवीत्, वत्साः ! यदि युष्मासु केनचित् किञ्चिदपूर्वमीक्षितं श्रुतं वा तन्निवेद्यतामिति । तेष्वेकः शिष्यस्तमभ्यधात्, गुरो ! मया यदपूर्वं श्रुतं तन्निशम्यताम् ।

अस्ति काश्मीरेषु विजयाख्यं शाम्भवं महाक्षेत्रम् । तत्र कश्चित् विद्याभिमानी प्रव्राजकः प्रतिवसति स्म । स सर्वत्र जयी भूयासमित्याशंसन् शम्भुं प्रणम्य वादाय समन्तात् प्रतस्थे, पथि क्रमेण वनानि नदीगिरींश्चातिक्रामन् कामपि अरण्यानीं प्राप्य परिश्रान्तः तरोस्तले विशश्राम । एतस्मिन्नन्तरे तत्र कश्चित् धार्मिकः समाययौ । तमागतं दृष्ट्वा तेन प्रव्राजकेन वृत्तान्तं परिपृष्टः स धार्मिकः तमवादीत्, ब्रह्मन् ! अहं विद्याक्षेत्रात् पाटलिपुत्रादागतः साम्प्रतं काश्मीरेषु तत्रत्यान् पण्डितान् वादेन जेतुं व्रजामि । तच्छ्रुत्वा स परिव्राड़चिन्तयत्, यदीह अयमेको मया न जीयते तदाहं पाटलिपुत्रे गत्वा तत्रत्यानन्यान् बहून् कथं जयेयम् ? इत्यालोच्य स प्रव्राट्

तं धार्मिकमाश्लिष्य आह स्म, धार्मिक! कथमिदं ते विपरीतं चेष्टितं, त्वं दृश्यसे धार्मिको मुमुक्षुः, वादव्यसनेन ते किम्? वादाभिमानेन संसारबन्धात् मोक्षमिच्छसि? अग्निना उष्णां शमयसि? हिमेन च शीतं निवारयसि? पाषाणेन च महोदधिं तितरिषसि? वातेन च ज्वलन्तमनलं निर्वापयितुं काङ्क्षसि? क्षमा नाम ब्राह्मं शीलं, मुमुक्षूणां शम एव शीलं, कलहन्तु राक्षसं शीलमित्याहुर्मनीषिणः। तस्मात् मुमुक्षुणा निरस्तद्वन्द्वदुःखेन संसारक्लेशभीरुणा शान्तेन दान्तेन च भवितव्यं, शमकुठारेण इमं भवतरुं छिन्धि, इमं हेतुवादाभिमानसलिलैर्मा सिञ्च। इत्युक्तस्तेनासौ धार्मिकः परितुष्टस्तं प्रणम्य त्वं मे गुरुरिति वदन् यथागतमगमत्।

ततश्चासौ प्रव्राट् तत्रैव तरुतले स्थितः तरोरभ्यन्तरात् भार्य्यया सह क्रीड़तः कस्यचित् यक्षस्य आलापमशृणोत्। स प्रव्राट् यावत् तयोर्वचसि कर्णं ददाति तावत् स यक्षः पुष्पदाम्ना तां भार्य्यां नर्म्मणा अताड़यत्। सापि शठा तावतैव आत्मानं मृतकल्पं कृत्वा मृषा तस्थौ। तत्परिजनश्च तदवलोक्य महान्तमाक्रन्दमकरोत्। चिरादागतसंज्ञा च सा दृशौ अमीलयत्। ततः स पतिर्यक्षः किं त्वया दृष्टं दृशौ मुकुलयन्त्या इति तामप्राक्षीत्। अथ सा मिथ्यैवाब्रवीत्, त्वयाहं यदा मालया ताड़िता, तदाहमेकमागतं कृष्णं पाशहस्तं ज्वलन्नेत्रं प्रांशुशिरोरुहं भयङ्करं पुरुषमैक्षम्। तेन च दुष्टेनाहं यमसदनं नीता, त्याजिता च तत्रत्यैरधिकारिभिस्तं निवार्य्य। इमं तया

यक्षिण्या कथितोऽसौ यक्षः हसन् तामवादीत्, अहो! किमिन्द्रजालं स्त्रीणां चेष्टितं नैव विद्यते, क्व कुसुमाघातात् मृत्युः, क्व वा यमालयात् प्रत्यावृत्तिः? मूढे! पाटलिपुत्रस्त्रीणां वृत्तान्तस्त्वया अनुश्रूयते। तस्मिन् नगरे यः सिंहाक्षो नाम राजास्ति, एकदा तद्भार्या मन्त्रिपुरोहितभिषजां वधूभिः सह शुक्लपक्षे त्रयोदश्यां सरस्वतीं द्रष्टुमगात्। तत्र मार्गवशात् मिलितैरन्धकुब्जपङ्गुभिर्व्याधितैस्ताः सर्वाः राजमहिषीप्रमुखा अङ्गना अयाच्यन्त, भो! रोगातुराणामस्माकम् औषधं प्रयच्छत, येन वयं रोगात् मुच्यामहे, आर्त्तानां नः अनुकम्पां कुरुध्वम्, अयं हि जीवलोकः समुद्रलहरीलोलः विद्युदिव चञ्चलः, अस्मिंश्च याचायुत्सवः क्षणभङ्गुरः। तदसारेऽत्र संसारे हीनेषु दया, दरिद्रेषु च दानं सारम्। गुणवान् क्व न जीवति। आढ्यस्य सुखितस्य च दानेन किम्? शीतार्त्तोः शशाङ्केन किम्? हिमागमे च घनेन किम्? तदेतान् नः महापदः समुद्धरत। इत्युक्तास्ताः, अन्योऽन्यं समब्रुवन् सुहृदुपपन्नास्तामी व्याधिता जल्पन्ति, तदेषां चिकित्सितं सर्वस्वेनापि कर्त्तव्यम्। एवं ताः समालोच्य ता योषितः देवीमवलोक्य तान् व्याधितान् स्वं स्वं भवनं निन्युः। कारयामासुश्च स्वेन स्वेन भर्त्रा तेषां यथोपयुक्तैरौषधैश्चिकित्साम्। यावच्च ते चिकित्स्यन्ते स्म तावत् तास्तदन्तिकात् नोत्तस्थुश्च। इत्थं तेषां सहवासात् उद्भूतमन्मथास्ताः तैस्तथा सङ्गं ययुः, यथा संसारं तन्मयमेव ददृशुः। क्व रागिणस्ते कृपणाः, क्व च तादृशा महान्यो

नृपप्रभृतयो भर्त्तारः, इति तासां मन्मथान्धं मनः न व्यमृषत्। ततश्च क्रमेण तासां पतयः ता असभ्याश्च-रोगिसम्भोगसम्भवैर्नखदन्तक्षतैः युक्ताः पश्यन्ति स्म। अथ ते भूपालमन्त्रिसेनापतिप्रभृतयः परस्परं ससन्देहास्तदा-चख्युः। राजाब्रवीत्, यूयं साम्प्रतं तिष्ठत, अहमद्य स्वां महिषीं युक्त्या पृच्छामि। इत्युक्त्वा स नृपतिस्तान् विसृज्य गृहं प्रविश्य च स्नेहं भयञ्च प्रदर्शयन् भार्य्यामपृच्छत्, प्रिये! केनायं ते अधरो दष्टः? केन वा स्तनौ क्षतौ? सत्यमा-ख्यासि चेत् श्रेयस्ते भविता, नान्यथा। इत्युक्ता तेन राज्ञी सा देवी कृतकमभ्यधात्, देव! अवाच्यमपि अधन्याहं यदाश्चर्य्यं प्रब्रवीमि तदाकर्णय।

नाथ! चित्रभित्तेरितः रजन्यां कश्चित् चक्रगदाधरः पुमान् निर्गत्य मामुपभुङ्क्ते, प्रातश्चात्रैव लीयते। यदङ्गं मे सूर्य्यचन्द्राभ्यामपि न दृष्टं कदाचित्, तदिदम् एताव-दवस्थं क्रियते तेन त्वयि स्थितेऽपि। एतत् तस्याः सदुः-खाया इव वचः समाकर्ण्य नृपो मूढ़ः वैष्णवीं मायामा-शङ्क्य तथैव प्रतीयाय, शशंस च तेभ्यः स्वमन्त्रिप्रभृतिभ्यः तं वृत्तान्तम्। तेऽपि जड़ास्तथा अच्युतोपभुक्तां स्वां स्वां भार्य्यां मत्वा श्रद्दधानास्तूष्णीमभवन्। इत्येवम् असाध्य-साधनक्षमा एकवचनाश्रितस्त्रः कुस्त्रियः जड़मतीन् वञ्चयन्ति स्म, नाहं तादृशो मूर्खः। इति तां भार्य्यां ब्रुवन् यक्षस्तां विलक्षीचकार। एतत् सर्वं स तरुतलस्थितः प्रव्राट् श्रुत्वा कृताञ्जलिः तं यक्षं व्यजिज्ञपत्, भगवन्! तवाश्र-माश्रमप्राप्तोऽहं शरणं त्वां प्रपन्नः। यदहं त्वद्वचः श्रुत-

वान् तं मे अपराधं क्षमस्व इति। अथ स यक्षस्तं सत्यवादिनं प्रति तुतोष, उवाच च अहं सर्वस्थानगवातो नाम यक्षः तुष्टोऽस्मि ते, तद्वृणु वरं मत्त इति। प्रब्राड़ब्रवीत्, भगवन्! अस्यां स्वभार्य्यायां त्वया मन्युर्न कार्य्य इत्येष मे वरोऽस्तु इति। ततः पुनर्यक्षोऽवादीत्, वत्स! तुष्टोऽस्मि ते नितरां, तदेष ते वरो मया दत्तः, अपरो ब्रियतामिति। ततः परिव्राजकः प्राह स्म, भगवन्! अद्य प्रभृति युवां दम्पती पुत्रं मां जानीतम् इत्यपरो मे वरः। एतत् श्रुत्वा स यक्षः सभार्य्यः तत्क्षणं प्रत्यक्षीभूय तमब्रवीत्, वाढ़ं त्वमावयोः पुत्रः, आवयोः प्रसादात् च तव क्वचिदपि विपत् न भविता, विवादे कलहोद्युक्तो विजयी च भविष्यसि। इत्युक्त्वा अन्तर्हितं यक्षं स प्रणम्य तां रात्रिमतिवाह्य तत् पाटलिपुत्रं नगरम् आययौ, आगत्य च द्वास्थमुखेन सिंहाक्षनृपतेः सकाशे काश्मीरादागतमात्मानं न्यवेदयत्। ततश्चानुज्ञातप्रवेशः स नृपतिना सभां प्रविश्य तत्रस्थितान् पण्डितान् वादाय आचिक्षेप। जित्वा च तान् सर्वान् वादेन, राजाग्रे तेषामीदृशमाक्षेपमकार्षीत्, भवन्तः शृण्वन्तु मे पूर्वपक्षम्। चित्रभित्तिं भित्त्वा कश्चित् चक्रगदाधरः पुरुषः मां दृष्टाधरौष्ठीं नखक्षतस्तनाञ्च कृत्वा रात्रौ उपभुङ्क्ते, प्रातश्च तत्रैव लीयते। इत्येष मे प्रश्नः, किमत्र तात्पर्य्यमुच्यताम्। एतदाकर्ण्य सर्व एव बुधाः प्रतिवचो न ददुः परमार्थमजानन्तः, केवलमधोमुखा एव तस्थुः। ततो राजासौ सिंहाक्षः स्वयमेव तमभ्यधात्, ब्रह्मन्! यदेतदुक्तं भवता, तत् स्वयमेव व्याख्याहि। एतदाकर्ण्य स प्रव्राट्

तस्मै राज्ञे स्वैरमशंसत् तत्, यत्तेन यक्षमुखात् तद्भार्य्यायाः चरितं श्रुतम् । तत् कदाचन पापाभिः स्त्रीभिः सङ्गं न कुर्य्यात् । स तु राजा बुद्ध्वा तदा तस्य तत्त्वं सन्तुष्य च तस्मै परिव्राजकाय निजं राज्यं दातुमियेष । स तु प्रव्राट् स्वदेशैकरतः यदा तत् ग्रहीतुं नैच्छत् तदा राजा त रत्नसञ्चयेन सम्मानयामास । ततश्च स प्रव्राट् गृहीतरत्नचयः सत्वरं स्वान् देशान् कश्मीरान् प्रत्याजगाम । तत्र च यक्षप्रसादेन दैन्यरहितः सुखितश्च तस्थौ । इति स शिष्यस्तं महामुनिमाख्याय पुनरभाषत, अहं तस्मात् प्रव्राजकादेतत् सर्वमश्रौषमिति । ततः स मुनिरन्येन शिष्येण सहितः चिरं सुविस्मितोऽभवत् । इत्याख्याय गोमुखो मन्त्री पुनर्वत्सेश्वरसुतं नरवाहनदत्तमब्रवीत्, देव ! एवं हि स्त्रीणां वेधसश्च विचित्राणि चरितानि कोऽवगन्तुमीष्टे ? साम्प्रतमियम् एकादशमारिका कापि नारी श्रूयताम् ।

कश्चित् पुमान् मालवे ग्रामवासी आसीत् । तस्य द्वित्रिपुत्रकनीयसी एका दुहिता उदपद्यत । तस्यां जातायामेव तस्य भार्य्या ममार । ततोऽन्यैः कतिपयैर्दिवसैस्तस्यैकश्च पुत्रः व्यपद्यत । ततश्च तस्य भ्राता वृषशृङ्गेणाहतो ममार । इत्थं स गृही तां कन्यां त्रयोऽनया जातमात्रया मारिता इति त्रिमारिकां नामाकरोत् । कालेन तां यौवनस्थां तद्ग्रामवासी कश्चित् धनिकुमारः भार्य्यार्थं तत्पितरमयाचत । पिता च तां तस्मै यथाविधि प्रादात् । तत्र सा तेन भर्त्रा सह कमपि कालम् अरंस्त । अचिराच्च तस्याः स भर्त्ता पञ्चतामगात् । ततः अल्पीयसैव

कालेन सा चपला कमपि यतिमग्रहीत्। सोऽपि न चिरादेव तत्संसर्गात् व्यपद्यत। ततः सा यौवनोन्मत्ता तृतीयं पतिमकार्षीत्। सोऽपि तस्याः पतिघ्नग्राः पतिरल्पेनैव कालेन मृतः। इत्थं क्रमेण तस्या दश पतयो विपेदिरे। ततो लोकैर्हसद्भिः सा दशमारिकेति ख्यता स्म। केचन तां डाकिनीं भर्तृभक्षकामाह्वयन्ति स्म। अथ सा पित्रा क्रोधेन अन्यभर्तृवरणात् न्यवार्य्यत। सा जनैवर्ज्यमाना केवलं पितृगृहे एव तस्थौ। कदाचित् कोऽपि रम्याकृतिः पान्थस्तत्रागतः। एकरात्रनिवासार्थञ्च तत्पित्रा सः अनुमतः। सा दशमारिणी तं दृष्ट्वा तद्गतमना: समभवत्। स च पान्थस्तां तरुणीं दृष्ट्वा तदभिलाषुकः संवृत्तः। ततः सा कामार्त्ता पितरमभ्यधात्, तात ! इममेकं पान्थं पतिमहं वृणोमि, एष चेत् विपत्स्यते ततो निवर्त्स्याम्यस्मात् व्यापारात् व्रतं ग्रहीष्ये। एवं सा शृण्वति पान्थे तां ब्रुवतीं पितावदत्, मा तावत् पुत्रि ! महती लज्जा मम जाता, दश ते पतयो मृताः। तदेतस्मिन्नपि विपन्ने सर्वे हसिष्यन्ति जड़मतयः। तदाकर्ण्य स पथिकस्त्रपां त्यक्त्वा निजगाद, नाहं म्रिये, ममापि दश भार्य्याः क्रमात् मृताः। सत्यं शपामि धूर्जटेः पादस्पर्शेन। इति तेन पान्थेन कथिते कस्तत्र नाविस्मीयत ? ततः सर्वैर्ग्राम्यैर्मिलितैरनुमतया तया दशमारिकया स पान्थः पतिर्जगृहे। यावत् तेन सह सा कमपि कालं तिष्ठति तावत् सोऽपि शीतज्वराक्रान्तः क्षयमगात्। ततः सा एकादशमारिका ग्राम्याणामपि हासमजनयत्।

उद्विग्ना च गङ्गातटमेत्य प्रव्रज्यां सा शिश्रिये। इति स गोमुखः वत्सराजसुतमाख्याय भूयः कथामन्यामब्रवीत्, शृणु देव! इमां दाम्नजीविनः कथाम्।

अभवत् कस्मिंश्चिद् ग्रामे कश्चिद् दरिद्रः पुमान्। तस्य एक एव बलीवर्दो धनमासीत्। स कदाचित् संस्तरे पतितो धनकाम्यया निराहारस्तपश्चचार। अथ तपसा प्रीता देवी स्वप्ने तमादिदेश,‘उत्तिष्ठ वत्स! एको बलीवर्दस्ते गृहे धनमस्ति, तमेव विक्रीय त्वं सदा सुखं जीविष्यसीति। ततः प्रातः स प्रबुध्य समुत्थाय पारणं किञ्चित् कृत्वा गृहमाययौ। आगत्यापि स अस्मिन् विक्रीते निःस्वोऽहं नैव कदाचन वर्त्तेय इति विविच्य तमुक्षाणं विक्रेतुं नैव शशाक। अथ कश्चित् सुहृत् श्रुतदेवीस्वप्नवृत्तान्तः तमुपवासकृशमब्रवीत्, मूढ! एक एव ते दाम्नोऽस्ति, तं विक्रीय सर्वदा जीविष्यसीति देव्योक्तं तत्त्वया न कृतं, तदेनं विक्रीय कुटुम्बकं परिपालय। ततस्ते अन्यः बलीवर्दः भविता, ततश्चान्य इति तेन मित्रेण हितैषिणा कथितः स ग्रामीणस्तथैवाकरोत्। इत्थमेकैकमुक्षाणं विक्रीय स सततं सुखेन जीवति स्म। इत्थं सर्वस्य विधिस्तत्त्वानुसारतः फलेत्, तत् सुसत्त्वेन भवितव्यं, सत्त्वहीनं हि नैव श्रियो वृणते। देव! शृणु साम्प्रतम् अलीकमन्त्रिणः कस्यचित् धूर्त्तस्य अन्यां कथाम्।

आसीत् कोऽपि नृपतिर्दक्षिणापथे नगरे। तस्य राष्ट्रे कोऽपि परवञ्चनजीवी धूर्त्तः प्रतिवसति स्म। स

चैकदा महेच्छत्वात् असन्तुष्टो व्यचिन्तयत्, ईदृशेन धूर्त्तत्वेन किं मे, केवलमाहारादिकमनेन सम्पद्यते, तद्यथा महती श्रीः प्राप्येत तथा कथं न क्रियते ? इत्यालोच्य स उदारं वणिग्वेशं कृत्वा महीपतेर्द्वारं गत्वा प्रतीहारमुपासर्पत्, तन्मुखेन च विज्ञाप्य राज्ञानुमतः प्रविश्याभ्यन्तरं प्राभृतं दत्त्वा, अस्ति कापि विज्ञप्तिरेकान्ते, इति राजानं व्यजिज्ञपत्। राज्ञा च प्राभृतेन वेशेन चावर्जितेन तथेति स अनुज्ञातः स एकान्तं गत्वा तं नृपं न्यवेदयत्, प्रभो ! दिने दिने सभां हित्वा मया सह एकान्ते क्षणमेकं कथालापं करोतु देवः। अहं प्रतिदिनं दीनारशतपञ्चकम् उपायनं देवाय दास्यामि, न च किञ्चन अर्थये। तदाकर्ण्य राजाचिन्तयत्, को दोषः, किं वायं मे गृहीत्वा यास्यति, यदि दीनारान् एतान् प्रत्यहं दास्यति, तदा महता अनेन वणिजा भवितव्यं, कात्र मम त्रपा इति समालोच्य तथैव प्रतिपेदे। सोऽपि धूर्त्तस्तस्मै राज्ञे तान् यथोदितान् दीनारान् प्रत्यहं ददाति स्म। लोकाश्च तं महामन्त्रिपदे अधिष्ठितममन्यत।

कदाचित् स धूर्त्तः मुहुर्नियोगिनः कस्यापि मुखं साकूतं पश्यन् राज्ञा समं कथां चक्रे। अथ वहिर्निर्गतः सः तेन अधिकारिणा समेत्य मुखालोकनकारणं पृष्टः तं मृषा खेदमभाषत, अनेन मे देशो लुण्ठितः, अतस्त्वयि नृपः कुपितः, तेन चाहं तव मुखं व्यलोकयम्, अहन्तु तं तस्य कोपं शमयिष्यामि। इति तेनालीकमन्त्रिणा कथितः स गृहमगात्, आगत्य च गृहात् सत्वरं तस्मै धूर्त्ताय

स्वर्णसहस्रमदात्। अन्येद्युश्च स धूर्त्तः राज्ञा समं कथां कामपि कृत्वा बहिर्निर्गतः समीपमागतं तम् अधिकृतमब्रवीत्, युक्तियुक्तैर्वाक्यैर्मया राजा ते प्रसन्नीकृतः, त्वमिदानीं धीरो भव, अहं ते सर्वच्छिद्रेषु रक्षकः। इति युक्त्या स्वीकृत्य तं गृहं व्यसर्जयत्। इत्थं स अधिकारी भिस्तैरुपचारैस्तं धूर्त्तमुपाचरत्। एवं स धूर्त्तः सुबुद्धिः क्रमेण सर्वेभ्यो नियोगिभ्यः सामन्तेभ्यः राजपुत्रेभ्यः अन्येभ्यश्च सेवकेभ्यः सुयुक्तिभिर्बह्वीभिस्तथा अर्थानाजहार यथा अचिरेणास्य पञ्चकोटिः सुवर्णानां धनमभवत्।

अथैकदा स धूर्त्तमन्त्री रहसि राजानमब्रवीत्, देव! नित्यं ते दीनारशतपञ्चकं दत्त्वापि त्वत्प्रसादात् मया पञ्च काञ्चनकोटयः प्राप्ताः। तत् प्रसीद, गृहाणैतत् स्वं स्वर्णं, अहमत्र कः? इत्युक्त्वा स्वकृतं कपटं तस्मै राज्ञे न्यवेदयत्। राजापि सन्तुष्टः कृच्छ्रात् तस्य धनार्द्धं जग्राह स्थापयामास च तं महामन्त्रिपदे। सोऽपि धूर्त्तः श्रियं प्राप्य जनान् भोगैरमानयत्। एवं प्राज्ञो महतोऽपि अर्थान् नातिपापतः प्राप्नुवन्ति, प्राप्ते च फले कूपखानकवत् दोषं जहाति च। इत्युक्त्वा गोमुखः पुनर्वत्सराजसुतमब्रवीत्, देव! इदानीमपरां कथां निशामय।

आसीत् पुरातिदुर्मदः अरातिकरीन्द्रकुलकेशरी बुद्धिप्रभो नाम नृपतिः। तस्य रत्नाकराख्यं नगरम्। कदाचित् रत्नरेखाख्यां राजमहिष्यां तस्य कन्यैका हेमप्रभा नाम सर्वलोकसुन्दरी उदपद्यत। सा तु विद्याधरी शापादवतीर्णा मर्त्यलोकम्। तां नभोविहारसंस्कारमदात् दोलयर

क्रीडन्तीं माता न्यवारयत्, परं सा तद्वचनं न शुश्राव। ततस्तस्याः पिता कुपितस्तस्यै चपेटं ददौ। अथ सा अवमानिता राजपुत्री वरार्थिनी विहारव्यपदेशेन बहिरुपवनमगात्। तत्र सा पानमत्तेषु भृत्येषु इतस्ततः सञ्चरन्ती वृक्षगहनं प्रविश्य तेषां दृष्टिपथात् ययौ। गत्वा च एकाकिनी दूरं वनं विरचितोटजा फलमूलाशिनी हराराधनतत्परा तपश्चचार। तत्पितापि स राजा क्वापि गतां विदित्वा समन्तात् अन्विष्येष, न च प्राप, प्राप च महत् दुःखम्। अचिराच्च स दुःखं विनोदयन् मृगयार्थं वनमगमत्। तत्र च मृगमन्विच्छन् भ्रमंश्च सहसा सुन्दरं वनान्तरमाससाद, यत्र सा हेमप्रभा तपस्यन्ती व्यतिष्ठत। राजा तत्रोटजं दृष्ट्वा तदन्तरमभ्येत्य अशङ्कितस्तां तपस्यन्तीं निजां सुतामद्राक्षीत्। सापि दृष्ट्वा तस्य पादयोरपतत्। पिता तामालिङ्ग्य साश्रुरङ्के न्यवेशयत्। तौ चान्योऽन्यं दृष्ट्वा तथा रुरुदतुः, यथा तत्रत्या मृगा अपि उदश्रवोऽभवन्। ततः क्रमेण समाश्वास्य राजा तां सुतामवदत्, मातः! त्यक्त्वा राजश्रियं त्वया किमिदं कृतम्? तदेहि जननीपार्श्वं, वनवासमिमं त्यज। इतिवादिनं पितरं सा हेमप्रभावदत्, तात! दैवेनात्र नियुक्तास्मि, कात्र मम शक्तिः? नाहमधुना भोक्तुं गृहं गमिष्यामि, नापि तपःसुखं त्यक्ष्यामि। इत्येवं सा यदा तस्मात् निश्चयात् न चचाल, तदा राजा तत्रैव वने तस्याः स्नेहात् मन्दिरमकारयत्। ततश्च राजधानीं गत्वा प्रत्यहं तस्या अतिथिमपूजार्थं पक्वान्नानि धनानि च प्रेषयामास। सा तु हेमप्रभा तत्र धनैरन्नैश्चा-

तिथीन् पूजयन्ती स्वयं मूलफलाशना एव तथैवासीत् ।

एकदा कापि कौमारब्रह्मचारिणी प्रव्राजिका भ्राम्यन्ती तस्या राजपुत्र्यास्तमाश्रममाययौ । सा हेमप्रभया तया ब्रह्मचारिण्या अभ्यर्थिता प्रव्रज्याकारणञ्च पृष्टा बालब्रह्मचारिणी समभ्यधात्, अहं पितुश्चरणौ संवाहयन्ती निद्राकुला सीदत्करयुगा आसम् । किं निद्रासीति पादेन पित्राहताहं तन्मन्युना गृहात् निर्गत्य प्रव्रजितास्मि । इतिवादिनीं तां प्रव्राजिकां हेमप्रभा समानशीलसम्प्रीतां वनवाससखीमकरोत् ।

एकदा सा तां सखीं प्रव्राजिकां प्रातरवोचत्, सखि ! अद्य स्वप्नेऽहमद्राक्षमात्मानं विपुलां नदीमुत्तीर्णम् । ततः श्वेतं गजं तदनु पर्वतमारूढास्मि, तत्र चाश्रमे भगवान् भवानीपतिर्मया दृष्टः, तदग्रतश्च संप्राप्य गायन्ती वीणामवादयम् । ततश्च दिव्याकारमुपागतं पुरुषमेकमपश्यम् । तं दृष्ट्वा च तेनैव साकमहं नभ उत्पतितास्मि । एतावद् दृष्ट्वा प्रबुद्धास्मि, यामिनी च व्ययासीत् । एतदाकर्ण्यैव सा सखी तां हेमप्रभामवादीत्, कल्याणि ! कापि त्वं दिव्या भुवं शापावतीर्णा, स्वप्नश्चायं ते प्रत्यासन्नं शापान्तं वदति । एतत् श्रुत्वा सा राजपुत्री सखीवचः समभ्यनन्दत् । ततो जगद्दीपे भूयिष्ठमुदिते सहस्रभानौ कोऽपि राजसुतः सहसा तुरगारूढस्तत्रागात् । स तां तापसीवेशां हेमप्रभां दृष्ट्वा सञ्जातप्रीतिर्वाहनं मुक्त्वा समुपेत्य ववन्दे । सापि तम् आतिथ्येनाभ्यर्च्य समुपजातप्रणया पप्रच्छ, महात्मन् ! को भवान् इति । सोऽपि राजपुत्रः प्रत्यभाषत ।

अस्ति प्रतापसेन इति प्रख्यातनामा महाभागः पुण्य-कीर्त्तिः कोऽपि महीपतिः। स तपस्तप्यमानः पुत्रार्थं हरमाराधयामास। तेन च देवेन प्रसन्नेन प्रादुर्भूय स समादिश्यत, राजन्! विद्याधरावतारस्ते पुत्रो जनिता। स च शापक्षये निजं लोकं प्रतिपत्स्यते। द्वितीयस्तु ते सुतः वंशराज्ययोः प्रतिष्ठाता भविष्यति। एवमुक्तः स प्रभुना प्रातः समुत्थाय पारणं चकार। कालेन तस्य लक्ष्मीसेननामा पुत्रः उदपादि। ततश्च शूरसेनो नाम द्वितीयः पुत्रः समजायत। सुन्दरि! तं मां लक्ष्मीसेनं विद्धि, इह वाताश्वैरवाकृत्य मृगयानिर्गतमानीतम्। इत्युक्त्वा स्वोदन्तं परिपृच्छन्तं तं हेमप्रभा सद्यो जातिं स्मृत्वा सहर्षा जगाद, नाथ! त्वयि मया विद्याभिः सह जातिः संस्मृता। अनया सख्या सह शापच्युता विद्या-धरी जातास्मि, त्वञ्च साम्प्रतं शापच्युतो विद्याधरः मम चिव: संवृत्तः। त्वं मे भर्त्ता, स च सचिवः अस्या मत्-सख्याः, साम्प्रतं ससखीकाया मम स शापः क्षीणः। अधुना वैद्याधरे लोके सर्वेषामस्माकं समागमः। इत्युक्त्वा सा सख्या सह दिव्यरूपतां प्राप्य नभ उत्पत्य च हेमप्रभा स्वं लोकमगमत्। लक्ष्मीसेनश्च यावत् विस्मि-तस्तत्र स्थितः तावत् तस्य स सचिवः तस्य मार्गं चिन्वन् समाययौ। स च राजपुत्रस्तस्मै तं वृत्तान्तं यावत् अशंसत् तावत् स राजा बुद्धिप्रभः स्वसुतोत्सुकस्तत्रागात्। स च सुतामदृष्ट्वैव लक्ष्मीसेनं दृष्ट्वैव वृत्तान्तं पप्रच्छ। सोऽपि राजपुत्रः यथावृत्तं तस्मै सर्वमशंसत्। तदाकर्ण्य

बुद्धिप्रभे समुद्दिश्ये लक्ष्मीसेनः सामात्यः शापक्षयात् जातिं स्मृत्वा तं बुद्धिप्रभमामन्त्र्य निजं पुरं विसृज्य च नभसा स्वं लोकमगमत्, प्रापच्च तां हेमप्रभां भार्य्याम् । तत्सचिवश्च स्वां भार्य्यामाससाद । अथैतं वृत्तान्तं पित्रे प्रतापसेनाय गत्वा ससचिवः सर्वं न्यवेदयत् । ततस्तेन दत्तं क्रमप्राप्तं राज्यम् अनुजाय शूरसेनाय दत्त्वा पितरमामन्त्र्य निजं पुरं वैद्याधरं ययौ । तत्र तेन सख्या अन्वितः तया भार्य्यया युतः चिरेण विद्याधरैश्वर्य्यं बुभुजे । इत्थं गोमुखेन सचिवेन निगदितां कथां शृण्वन् कुमारो नरवाहनदत्तः आसन्नं शक्तियशोविवाहं प्रति समुत्सुकः क्षणमिव तां क्षणदां निनाय । एवं कतिचिद् दिनानि विनोद्य स राजपुत्रः प्राप्ते विवाहदिवसे पितुरन्तिकस्थः सहसा नभसोऽवतीर्णं तपनकान्ति वैद्याधरबलं ददर्श । तन्मध्ये च स्वां दुहितरं तां दित्सितां समादाय प्रीत्या प्राप्तं विद्याधरेन्द्रं स्फटिकयशसं पिता वत्सेश्वरेण प्रथमम् अर्घ्यादिना विहितातिथ्यं श्वशुरं प्रत्युद्गम्य हर्षात् पूजयामास । सोऽपि खेचराधिराजः स्वप्रभावात् क्षणेन कल्पिताशेषदिव्यवैभवविधिः यथार्हमावेद्य सरत्नां तां कन्यां शक्तियशसं पूर्वोद्दिष्टां तस्मै वत्सेशसुताय यथाविधि प्रादात् । स च राजपुत्रस्तां भार्य्यामवाप्य पद्म इवार्कद्युतिं नितरां व्यरुचत् । अथ स्फटिकयशसि सानुचरे प्रयाते कौशाम्ब्यां नगर्य्यां स वत्सराजसुतः सततं शक्तियशसो वदनाम्बुजसक्तनयनषट्पद एव तस्थौ ।

---

## अथ एकादशो लम्बकः।

---

## अथ सप्तषष्टितमस्तरङ्गः।

---

इत्थं स वत्सराजसुतः शक्तियशसम् अन्याश्च प्रथमोद्दिष्टाः रत्नप्रभाद्याः तथा मदनमञ्चुकां मुख्यां देवीं प्राप्य सुहृद्वृतः परमं सुखमनुभवन्नतिष्ठत्। अथैकदा कौशाम्ब्यां उद्यानवर्त्तिनं तं देशान्तरागतौ द्वौ राजपुत्रौ अकस्मादभ्युपेयतुः। आगत्य प्रणतयोस्तयोः कृतातिथ्ययोरेकः तमब्रवीत्, देव! वैशाखाख्ये पुरे आवां राज्ञः सुतौ द्विमातृकौ। अहं नाम्ना रुचिरदेवः, द्वितीय एष पोतकः। मम जवना हस्तिन्येकास्ति, अस्य द्वौ तुरगौ। एतदर्थञ्चावयोर्मिथो विवादः सञ्जातः, अहं हस्तिनीं जवाधिकां ब्रवीमि, अयन्तु तुरगौ। यदि अहं जीयेय तदा मे इयमेव हस्तिनी पणः, अयं यदि जीयेत तदास्य तुरगौ पणः। तेषाञ्च जवान्तरं त्वया विना न कोऽपि ज्ञातुं शक्तः, तत्, प्रभो! अस्मद्गृहमेत्य तेषां परीक्षा श्रीमता कार्य्या, प्रसीद, अर्थिसर्वार्थसाधने कल्पपादपोऽसि, आवाञ्च दूरात् एतदर्थमागत्य त्वदन्तिके अर्थिनौ संमुपस्थितौ। एवं तेन रुचिरदेवेनाभ्यर्थितः वत्सेश्वरात्मजः अश्वेषु हस्तिषु च अनुरागात् अनुरोधाच्च तथेति प्रत्यपद्यत। ततश्च ताभ्यामानीतवाताश्वरथमारूढ़ः ताभ्यां भ्रातृभ्यां सह वैशाखं पुरं प्रययौ। पुरं प्रविशंस्तत्र

तमवलोक्य पौरयोषित: कोऽयमागतः? किमसौ अप्राप्तरतिः कामः? उत द्वितीयः निष्कलङ्कः दिवाचरः शशी? आहोस्वित् धात्रा पुरुषाकारः कोऽपि कामस्य तदर्थोऽद्‌याकाण्डसमुल्लोचनमसूनः शरैः निर्मितः? इत्यमुक्षदना वितर्कयाम्बभूवुः। प्रविश्य युवराजः तत् पुरं शृङ्गारैकमयं मूर्त्तैः क्वतप्रतिष्ठस्य कामदेवस्य मन्दिरं ददर्श। तस्मिंश्च प्रविश्य कामदेवं प्रणम्य क्षणं विश्रम्य च तद्देवागाराभ्यन्तरवर्त्ति रुचिरदेवस्य मन्दिरं तेन पुरस्कृत: प्रीत्या समाविवेश। ददर्श च तत्राद्भुताकृतिं तद्भगिनीम्। तां पश्यंश्च स प्रवासं वा स्वजनेन विरहं वा न गणयामास। सापि दृष्ट्वैव तं नीलाब्जमालयेव प्रफुल्लया प्रेमदृष्ट्या स्वयम्बरस्रजेव समग्रहीत्। ततः स जयेन्द्रसेनाख्यां तां यथा दध्यौ तथा निद्रा तं न जहार।

अथान्येद्युः वाहविद्यारहस्यवित् राजपुत्रः नरवाहनदत्तः पोषकेण आनीतं जवे वातसमं तत् अश्वरत्नयुगलं तथा रुचिरदेवेनानीतां तां करेणुकामारुह्य क्रमेण परीक्षाञ्चक्रे। जितञ्च जवेन रुचिरदेवस्य करेणुकया तत् अश्वयुगलम्। ततो यावत् स वत्सेश्वरसुतोऽभ्यन्तरं प्रविशति तावत् तस्य पितुरन्तिकात् दूतः समाययौ। स दूतस्तं पादयोः प्रणम्य इदमब्रवीत् युवराज! इह प्रयातं त्वां परिवारमुखादाकर्ण्य तव पिता नृपतिः मां त्वत्सकाशं प्राहिणोत् आदिशच्च यथं मामनावेद्य उद्यानात् इयत् दूरं प्रयातोऽसि, महती अधृतिरस्माकं सञ्जाता तत् शीघ्रमायाहि। इति दूतवचः शृण्वन् प्रियावाप्तिञ्च चिन्त-

थन् स दोलाचलचित्तवृत्तिरभवत्। अत्रान्तरे च कश्चित् सार्थवाहः अतिसम्प्रीतः दूरादेव समेत्य नमन् तं युवराजं तुष्टाव। जय वीर! जय अपुष्पकोदण्ड! काम! जय प्रभो! भाविविद्याधरेन्द्र! बालस्त्वं किं मनोहारी न दृष्टः? वर्द्धमानश्च किं प्रबुद्धमनो न दृष्टः? हे देव! अच्युतगुणं त्वां अचिरादेव देवताः पश्यन्ति एव। क्रमेण त्वं श्यामाक्रान्तासि बलिनश्च निर्जेतासि इत्येवं स्तुवन् युवराजेन सत्कृतः पृष्टश्च स्ववृत्तान्तं स महावणिक् प्रत्यवादीत्।

अस्ति लम्पेति प्रसिद्धा पृथिव्या मौलिमालिका महानगरी। तस्यां कुसुमसारो नाम आढ्यो वणिगध्युवास। युवराज! तस्याहं धर्मरतेः शङ्कराराधनात् चन्द्रसाराख्यः पुत्रोऽभवम्। एकदाहं मित्रैः समं देवयात्रामवेक्षितुं गतः, तत्र अपरानाढ्यान् अर्थिभ्यः बहूनि धनानि ददतोऽद्राक्षम्। तदवलोक्य मम धनार्जने श्रद्धा, अतिमहती समजायत। बहुत्रापि पितृपार्जितया श्रिया न सन्तोषमलभे। तेन चाहं द्वीपान्तरमगमम्। तत्रासंख्यधनसञ्चयं मां बुद्ध्वा राजा तत्रत्योऽर्थलोभेन बद्ध्वा कारायां न्यक्षिपत्। तस्मिन् गृहे दुष्कृतिभिः क्षुधातृषया वर्जितैः प्रेतैरिव निरये अहं यावत् स्थितः, तावत् अस्मत् कुलाभिज्ञस्तन्निवासी कश्चित् महावणिक् महीधरो नाम राजानं तं मदर्थं व्यजिज्ञपत् देव! लम्पानिवासिनः कस्यचित् वणिक्पतेरयमात्मजः, निर्दोषस्तस्य बन्धनादि अयथार्थं [illegible]त्यावेदितः स राजा मां बन्धनात् उन्मुच्य

अन्तिकमानाय्य च सादरं सममानयत्। ततो राजप्रसादेन तस्य च मित्रस्य आश्रयेण तत्राहं महतो व्यवहारान् कुर्वन् परं सुखमवापम्।

कदाचिदहं मधूद्यानयात्रायां तत्र दृष्टवान् शिखराख्यस्य वणिजः सुन्दरीमेकां कन्यकाम्। तयाचं कन्दर्पदर्पाब्धिलहर्य्येवाहृतः अहं तत् पितुः सकाशं गत्वा तामयाचिषम्। स च तत्पिता क्षणं विचिन्त्य मामभाषत एषा साक्षात् दातुं न युज्यते, अस्त्यत्र कारणम्। तदेतां सिंहलद्वीपे अस्या मातामहान्तिकं प्राहिणोमि। त्वं तत्र गत्वा तस्मादर्थितामेतामुपयच्छस्व इत्युक्का मां सम्भाष्य स शिखरः स्वमालयम् आगन्तुं व्यसृजत्।

अथान्येद्युः स तां कन्यां सपरिच्छदां यानपात्रमारोप्य अब्धिमार्गेण सिंहलान् प्रति प्राहिणोत्। अथ यावदहं तत्र गन्तुमिच्छामि, तावत् कुलिशपातोपमा वार्त्ता इयमभूत्। शिखरस्य सुता येन प्रवहणेन याता, तदब्धौ भग्नं नचैकोऽपि तत्रस्थः समुत्तीर्णवानिति। अहं तद्वार्त्तावात्यया भग्नधैर्य्यः प्रवहणाकुलः सद्यो निरालम्बे शोकसागरे न्यपतम्। अथ कथञ्चित् वृद्धैः आश्वास्यमानः आशामिश्चित्तमधारयम्। अथ राजप्रियोऽपि तैस्तैरर्थैरुपचितोऽपि निश्चयं ज्ञातुं अम्बुधौ पोतमारुह्य गन्तुं प्रारब्धवानस्मि। अथ गच्छतो मे धाराशरावलीर्मुञ्चन् अकस्मात् घोरो महाशब्दो वारिदतस्करः समुत्तस्थौ। तदाशुना विकटेन वलीयसा दैवेनेव मम तत्प्रवहनम् उत्क्षिप्य मुहुर्भग्नम्। इत्थं विधिवशात् परिजने धने च अम्बुधौ निमग्ने केवलं पतितेन मया

एकं महत् काष्ठं प्राप्तम्। यदहं तेन प्रसारितेन दैववाहु-
मेव शनैर्वातवशात् मह्ममब्धेः कूलं सम्प्राप्तवानस्मि। तत्रा-
गत्य दुःखार्त्तो दैवं निन्दन् तत्रोपान्तस्थितं किञ्चित् स्वर्णं
निकटग्रामे विक्रीय अशनादिकं विधाय च क्रीतवस्त्रयुग-
लस्तं ग्रामं त्यजन् दिशमजानन्नपि भ्रमंश्च अकस्मात् सिक-
ताग्निवलिङ्गभूतां महीं दृष्टवानस्मि। तस्याञ्च विचरन् नि-
कन्यायामेकतः कन्यामेकां लिङ्गार्चनव्यग्रां वनवेशेऽपि
शोभिनीमद्राक्षम्। अहो प्रियायाः सुसदृशी कापि एषा ?
अथवा सैव भवेत् ? कुतो वा एतत्, नेदृशानि भागधेयानि
मम। इत्येवं चिन्तयन्तं मां सैवेयमिति दक्षिणं लोचनं
साह्लादं मुहुः स्फुरत् वदति स्म। अहमपृच्छम्, सुन्दरि !
प्रासादवासार्हे ! त्वमरण्ये का ? वद इति सा तु किञ्चन
नाह स्म। अहन्तु मुनिशापभयेन लतागुल्मान्तरस्थितस्ता-
मेव कन्यामनिमिषेण अवितृप्तेन चक्षुषा व्यलोकयन् स्थितः।
अथ कृतार्चना मुहुः सस्नेहं मां परिवृत्त्य पश्यन्ती किञ्चन
विमृशन्तीव ततः शनैः प्रायात्। तस्याञ्च दृक्पथाति-
क्रान्तायां तमोऽन्धाः दिशः पश्यतो मे निशाचक्राह्व सदृशी
कापि अवस्था समभवत्। ततश्च क्षणात् अतर्कितायातां
तेजसा अर्कप्रभासदृशीम् आबाल्यब्रह्मचारिणीं यमुनाख्यां
तपःक्षमां दिव्यचक्षुषं साक्षात् धृतिमिव कन्यादर्शनां
मतङ्गस्य मुनेः कन्यामपश्यम्। सा सहसा मामवदत्, वत्स !
शिखरो नाम यो वणिक् द्वीपान्तरे श्रूयते, स रूपवत्यां
कन्यायां जातायां जिनरक्षितनाम्ना केनचित् ज्ञानिना
भिक्षुणा सुहृदा अयाचि त्वया सममेषा कन्यका अन्य-

मौद्रिका न कस्मैचिद्देया, स्वयं दाने ते दोषः स्यात्। इति भिक्षुणा तेनाभिहितः स तन्मातामहहस्तेन त्वदर्थितां दातुमैच्छत्। अतः सा तेन पित्रा मातामहान्तिके सिंहलद्वीपे विसृष्टा, दैवाच्च यानभङ्गेनाम्बुधौ न्यमज्जत्। आयुर्बलेन च दैवेनेव महोर्मिणा वेलातटे समुत्क्षिप्य सा वणिक्सुता क्षिप्ता। तावच्च मत्पिता मतङ्गमुनिः सशिष्यः अम्बुधौ स्नातुमागतस्तां मृतकल्पां कन्यामद्राक्षीत्। आनयच्च दयया तां समाश्वास्य ममाश्रमम्। अर्पयामास च मयि तां यमुने! तवेयं पाल्येति। वेलातटादियं प्राप्तेति स महामुनिर्नाम्ना तां मुनिजनप्रियां वेलां चकार। तस्याश्च स्नेहेन ब्रह्मचर्यनिरस्तसंसाराया मे चित्तमिदानीं बाधते। चन्द्रसार! आपाणिग्रहणां नवयौवनशोभिनीमिमां दृष्ट्वा दृष्ट्वा मे इदं मनः दूयते। सा च ते पूर्वजन्मभार्येति, इहागतञ्च त्वां प्रणिधानेन बुद्ध्वा तवान्तिकमहमायाता। तदागच्छ गृहाण तस्याः पाणिं मदादेशेनेति। अनुभूतः क्लेशः युवयोरद्य साफल्यं व्रजतु इति गिरा समभिनन्द्य अनभ्रवृष्ट्येव, सा मां मतङ्गस्याश्रमं निनाय। नीत्वा च तया विश्रान्तो मुनिर्मतङ्गः तां मनोराज्यसमृद्धिमिव रूपिणीं तां वेलां मह्यमदात्। ततस्तया वेलया समं तत्राहं कियन्तं कालं सुखेनाध्यवात्सम्।

एकदाहं तया सह सरसि जलकेलिं कुर्वन् स्नानप्रवृत्तं मुनिं मतङ्गमपश्यन् क्षिप्तेन जलेन असिञ्चम्। तेन कुपितः स मुनिः सभार्ये मयि शापमदात्। पापौ! युवयोर्दम्पत्योरचिरेण वियोगो भवितेति। ततस्तया दीनगिरा

पादपतितया अनुनीतः स मुनिः कृपया ध्यात्वा आवयोः शापान्तं व्यधात्। यः करेणुवा वेगेन अम्बरत्नयुगं जेष्यति, तं भाविविद्याधरचक्रवर्त्तिनं वत्सेश्वरात्मजं यदा द्रक्ष्यसि तदा अस्य शापस्य प्रशमात् अनया भार्य्यया पुनः सङ्गमेष्यसि। इत्युक्त्वा स मुनिः स्नानादिकं कृत्वा हरिदर्शनाय व्योम्ना श्वेतद्वीपमगात्। यमुनापि धूर्जटिसकाशात् विद्याधरेण, पश्चात् तत् सकाशात् स्वयं प्राप्तं च्युतपादपं सद्भिः रत्ननिचयैरन्वितम् आवाभ्यां दत्त्वा तत्रैव पित्रा सह प्रायात्।

अथ अहं प्राप्तदयितः वनवासात् निर्विण्ण वियोगभयात् स्वं देशं प्रति सोत्सुकः समभवम्। ततश्चागन्तुं प्रवृत्तोऽहम् अम्बुधेस्तटं प्राप्य पुनः कस्यचित् वणिजः प्रवहणे तां भार्य्यामारोपयम्। अहञ्च यावत् आरोढुमिच्छामि तावत् प्रबलः समीरणः मुनिशापसुहृदिव तं प्रवहणं दूरमनयत्। तथाभूते च तस्मिन् क्षणे पोतेन हृतभार्य्यस्य मम मोहः लब्धच्छिद्र इव विकलात्मनो मम चेतनां जहार। ततश्च तत्रागतः कश्चित् तापसः मूर्च्छितं मां वीक्ष्य कृपया समाश्वास्य स्वमाश्रममनयत्। प्राबोधयच्च यथावृत्तं पृष्ट्वा मुनिशापप्रभावञ्च विदित्वा शापावधिकथनेन माम्। ततश्चाहं कदाचित् लब्धवहनेनाम्बुधिं तीर्णः प्रियामितस्ततोऽन्विष्यन् कमपि वणिग्वरं सहायं प्रापम्। ततश्च शापक्षयाशया दत्त हस्तालम्बः तान् तान् दुर्गमान् देशान् अतिक्रामन् बहूंश्च दिवसान् नयन् क्रमात् वैशाखपुरमिदमासाद्य अस्मिन् त्वां वत्सेश्वरवंशमुक्तामणिमिहा-

गतम्। अथ दूरात् त्वयि हस्तिन्या विजिताश्वयुगे दृष्टे स शापभारो मया उज्झितः। क्षणे चास्मिन् सम्मुखोपस्थितां तां प्रियां वेलां वणिग्भिः साधुभिस्तेन पोतेन इहानीतामपश्यम्। ततस्तया यमुनादत्तसत्रस्तया प्रियया त्वत्प्रसादात् तीर्णशापमहार्णवः सम्मिलितः। अतस्त्वां प्रणन्तुम् आगतोऽहमस्मि, देव! इदानीं निर्वृतोऽहं स्वदेशं प्रियया सह व्रजामि इत्यभिधाय तस्मिन् वणिजि गतवति चरितार्थे चन्द्रसारे, स रुचिर देवः दृष्टमाहात्म्यहृष्टः तस्मिन् वत्सेश्वरसुते समधिकनम्रोऽभवत्। प्रादाच्च तां भगिनीं जयेन्द्रसेनां सुसदृशीं सानुरागाय तस्मै करेणुतुरगयुगलसमेताम्। स च राजसुतः तां वधूं सकरेणुकाश्वयुगां समादाय रुचिर देवमामन्त्र्य च स्वां कौशाम्बीं नगरीं समाययौ। तस्याञ्चागत्य समानन्दितपितृकः तया नवमध्वा अन्याभिश्च मदनमञ्चुकाद्याभिः समेतः सुखमुवास।

## अथ द्वादशो लम्बकः।



## अथ अष्टषष्टितमस्तरङ्गः।



इत्थं स वत्सेश्वरसुतस्तां भार्य्यामवाप्य कौशाम्ब्यां परमं सुखमनुभवन्नतिष्ठत्। बहुभार्य्योऽपि स तां देवीं

मदनमञ्चुकां रुक्मिणीमिव माधवः सर्वाभ्योऽधिका ममन्यत। एकदा स स्वप्ने कयापि दिव्यकन्यया नभसागत्य आत्मानं क्रियमाणमद्राक्षीत्। प्रबुद्धश्च सच्छायमादपि महाशैलस्य कस्यचित् सानौ गाङ्ग-रत्नशिलातले स्थितमात्मानं ताश्च कन्यां स्वपार्श्वस्थां निशि द्योतितकाननां कामस्य विश्वमोहनमहौषधिमिव ददर्श। अनयाहमिहानीत इति मत्वा अलीकसुप्तिकां कृत्वा प्रलपन् एवमब्रवीत् प्रिये! मदनमञ्चुके! क्व त्वम् आगच्छ मामालिङ्गस्व। तदाकर्ण्य सा सद्य एव तस्या दयिताया रूपं कृत्वा तं निर्व्रीडयन्त्वरं भृशमालिलिङ्ग। ततः स नरवाहनदत्तः नेत्रे प्रोन्मील्य तां स्वप्रियाकृतिं दृष्ट्वा अहो विज्ञानमित्युक्त्वा सस्मितं कण्ठे जग्राह। अथ सा त्रपां हित्वा स्वं रूपं प्रकाश्य गान्धर्वविधानेन आत्मानं तस्मै युवराजाय समर्पयत्। स च तया सह तत्र तां रात्रिं नीत्वा प्रातः तां दयितां युक्त्या कुलजिज्ञासया अभ्यधात् प्रिये! शृणु एकां कथामपूर्वां त्वां ब्रवीमि।

आसीत् कोऽपि मुनिः ब्रह्मसिद्धिर्नाम क्वचित् तपो-वने। तस्य योगसिद्धस्य महर्षेराश्रमसमीपे कापि जरती गुहानिलया शृगाली आस्ते। कदाचित् दुर्दिने निरा-हारां भक्ष्यार्थं निर्गतां तां कश्चित् वनद्विपः करेणुविश्ले-षोन्मादः हन्तुमागात्। तदवलोक्य स मुनिः कृपालुस्तां शृगालीम् उभयोरनुग्रहाय वरेण करेणुमकार्षीत्। ततः स हस्ती तां करेणुं दृष्ट्वा शान्तविक्रियः तस्यामन्वरज्यत। सापि तस्योरमुच्यत। ततः स गजस्तया सार्द्धं रममाणः

कदाचित् तत् क्षते पद्ममानेतुं शरत्पङ्काकुलं सरः प्राविशत्। न्यमज्जच्च तत्र पङ्कान्तः, न च चेष्टितुं शशाक। कुलिशाच्छिन्नपक्षः शैल इव तस्थौ। सा च शृगाली करेणुका तथा अवशं तं दृष्ट्वा अन्यं वारणं समाश्रित्य क्वाप्यगात्। अत्रान्तरे तस्य सा पूर्वविश्लिष्टा निजा करेणुस्तमन्विष्यन्ती विधिवशात् तं प्रदेशमाययौ। सा भद्रजातिः दृष्ट्वैव पङ्कपतितं स्वं भर्त्तारम् अनुसर्त्तुं तत् सरोऽविशत्। तस्मिंश्च क्षणे तेन पथाऽसौ ब्रह्मसिद्धिरागतः सशिष्यः तदालोक्य करुणार्द्रचित्तः समभवत्। उदधीधरश्च तौ वसानागौ महापङ्कात् वरोद्धृतवलैः शिष्यैः। ततस्तस्मिन् मुनौ सशिष्ये प्रयाते तौ गजदम्पती वियोगादुत्तीर्णौ यथाकामं विजह्रतुः। प्रिये! तिर्य्यञ्चोऽपि आपदि पतिं वृजिनादुद्धरन्ति भद्रजातयः। हीनजातीयानान्तु मनः कदाचिदपि सदाशयं न स्पृशति स्नेहं नाश्रयति दयाञ्च नावलम्बते इति। सा दिव्यकन्या वत्सेश्वरसुतादेतां कथां निशम्य प्रत्यवादीत् नाथ! एवमेवैतत्, नात्र संशयः, मया च एवं वादिनस्तवाभिप्रायो विदितः। तदिदानीं मत्तोऽपि कथामेकां शृणु।

अभूत् पुरा कान्यकुब्जे शूरदत्तो नाम कश्चित् द्विजोत्तमः। स च महीपतेः बाहुशक्तिनाम्नः मान्यः शतग्रामपतिश्च। तस्य वसुमती नाम पतिप्राणा भार्य्यासीत्। तस्यां स द्विजः वामदत्तं नाम पुत्रं जनयामास। स खलु वामदत्तः अचिरात् सर्वासु विद्यासु सुशिक्षितः पितुरतिप्रियः शशिप्रभां नाम भार्य्यामविन्दत। कालेन

पितरि सभार्य्ये स्वर्गं गते स वामदत्तस्तया भार्य्यया सह गार्हस्थ्यधर्मे प्रावर्त्तत। सा तु भार्य्या अजानतस्तस्य दैवात् कुतश्चित् शाकिनीसिद्धिमवाप्य स्वेच्छाविहारिणी अभवत्।

एकदा राजाज्ञया तत् कटके स्थितं तं गृहादागत्य तस्य पितृव्यः रहसि प्राब्रवीत् पुत्र। नष्टमस्मत्कुलम् अद्य मया तव भार्य्या त्वदीयेन महिषपालेन सङ्गता दृष्टा इति एतदाकर्ण्य पितृव्यात् कटके तं निवेश्य च स वामदत्तः खड्गपाणिः स्वमावासमाययौ। तत्र पुष्पोद्यानं प्रविश्य स यावत् गुप्तमतिष्ठत्। तावत् नक्तं स महिषपालस्तत्रा-गात्। क्षणे च तस्मिन् जारसमुत्सुका सा वामदत्तपत्नी विविधाहारहस्ता तं महिषपालमुपागात्। ततो भुक्त-वता तेन सार्कं सा शयनं ययौ। तद्दृष्ट्वा स वामदत्तः खड्गमादाय तावभ्यधावत् पापौ! क्व गच्छथ इति। तदव-लोक्य सा तद् गृहिणी उत्थाय धिक् आत्म! इत्युक्त्वा तस्य मुखे धूलिं न्यक्षिपत् तदेव स मानुषो वामदत्तः महिषः समपद्यत। स्मृतिस्तु तस्य वामदत्तस्य तद्भावेऽपि न व्यलुप्यत। ततः शठा तं लगुडैः महिषमध्ये निक्षिप्य तेन महिषपालेन ताड़यामास। अथ सा क्रूरा तं तिर्य्य-क्तया विवशीकृतं कस्मैचित् महिषार्थिने वणिजे विक्री-णीते स्म। ततश्च तेनारोपितभारः स महिषभारपीड़ितः कमपि गङ्गासमीपवर्त्तिनं ग्रामं नीतः। विश्वस्तस्य गृहे कस्य दुष्टा भार्य्या कक्ष्यान्तरप्रविष्टा भुजगीव शर्मणे? इति चिन्तयन्तं तं तत्र उद्धान्तं सुदुःखितं भारक्लेशेन

अस्थिचर्मशेषं क्वापि योगिनी अपश्यत्। सा ज्ञानतः सर्वं तद्वृत्तान्तं बुद्धा कृपया मन्त्रबलेन तं माहिषाद्मोचयत्। सैव प्राक्षमालुञ्चकाय तस्मै निजं गृहं नीत्वा कान्तिमतीं नाम स्वां कन्यामदात्। एभिः सर्षपैराहत्य दुष्टां तां भार्य्यां वड़वां कुरु इत्युक्त्वा तस्मै मन्त्रपठितान् सर्षपान् प्रददौ च। ततः स तामभिनवां कान्तां समादाय सर्षपपाणिः स्वं गृहं वामदत्तः समागात्। आगत्य च तं महिषपालं हत्वा सर्षपैस्तां भार्य्यां दुष्टचारिणीं वड़वां कृत्वा शालाबद्धां व्यधत्त। प्रत्यहञ्च तस्यै लगुड़सप्तकं दत्त्वा भोजनं चक्रे प्रतिजज्ञे च वैरशुद्धये। एवं कान्तिमत्या सह भार्य्यया स्थितस्य तस्य गृहे अकस्मात् कोऽपि अतिथिः समाययौ। तस्मिंश्च भोक्तुं प्रवृत्ते स वामदत्तः कुभार्य्यायै लगुड़ाहतिं देयां स्मृत्वा द्रुतं तस्यै सप्तलगुड़ाहतीर्दत्त्वा च जातनिर्वृतिः प्रविश्याभ्यन्तरं बुभुजे। ततोऽतिथिः स दृष्ट्वैतत् सञ्जातकौतूहलस्तं वृत्तान्तमपृच्छत्। भवान् आहारं त्यक्त्वा ससम्भ्रमं क्व यात इति। ततः स वामदेवस्तस्मै अतिथये स्वं वृत्तान्तं यथायथमाख्यत्। अथ सोऽपि अतिथिस्तमभ्यधात्। किमेतेन दुर्ग्रहेण यया ते प्रयत्नं कृतं, तामेव श्वश्रूमाराध्य कञ्चित् प्रकर्षमाहर इति तेनातिथिनाभिहितः वामदत्तस्तथेति तं श्रद्धाय प्रातश्च सत्कृत्य विससर्ज।

अथ कदाचित् गृहागतां तां योगिनीं श्वश्रूम् अनुग्रहार्थी स वामदत्तः कृतप्रणामः यत्नेन अभ्यर्थया-

मास। सा च योगिनी तस्मै सभार्य्याय यथाविधि-कालसङ्कर्षिणीं विद्यां दीक्षापूर्वमादिशत्। ततः स श्रीपर्वतं गत्वा तां विद्यामसाधयत्। सा च विद्या सिद्धा सती तस्मै उत्तमं खड्गं ददौ। प्राप्तखड्गश्च स तया भार्य्यया कान्तिमत्या समेतः विद्याधरोत्तमो भूत्वा मलया-चलस्य रजतकूटाख्ये शृङ्गे सिद्धिप्रभावात् पुरवरं निर्माय अध्यवसत्। तत्र तस्य वसतः कालेन कापि कन्यका तस्यां कान्तिमत्यां ललितलोचना नाम समुत्पन्ना। तस्याश्च जातमात्रायां एषा भाविविद्याधरचक्रवर्त्तिनः भार्य्या भविष्यतीति दैवी वागाविरासीत्। आर्य्यपुत्र। तां मां विद्धि, अहं स्वविद्यया विदितार्था त्वय्यनुरागिणी अस्मिन् मलयाचले त्वामानीतवत्यस्मि। इत्याख्यातकुलां तां विद्याधरीं स नरवाहनदत्तः प्रीतमना बहु सम्मानित-वान्। अध्यवात्सीच्च तया तत्र कियन्ति दिनानि। वत्सराजश्च रत्नप्रभादिविद्याविभवात् तं वृत्तान्तं पुत्रस्य विदित्वा निरुद्वेगचित्तस्तस्थौ।

---

## अथ जनसप्ततितमस्तरङ्गः।



ततः स नरवाहनदत्तस्तां ललितलोचनां कान्तां नवीनामधिगम्य तस्मिन् मलयशैले मधुप्रवृत्तिसुभगे तया सह तेषु तेषु पुष्पितद्रुमशोभिषु वनेषु विजहार। एकदा

तस्मिन् वने क्रीडाकुसुमसञ्चयक्रमेण तस्यां प्रियायां दृष्टिपथातिक्रान्तायां स युवराजस्तामन्विष्यन् एकं मृदूच्छजलं सरः तीरतरुच्युतैः पुष्पैः सतारमाकाशमिव व्यलोकयत्। पुष्पाणि चयन्ती सा मे प्रिया यावन्नायाति तावदस्मिन् सरसि स्नात्वा सरस्तटे तिष्ठामीति सञ्चिन्त्य कृतस्नानदेवार्च्चनः चन्दनतरुच्छायमेकं शिलातलमध्यास्त। ततः स राजहंसानां तत्सदृशीं गतिं दृष्ट्वा, पिकानां चूतयष्टिषु तत्सदृशमालापं श्रुत्वा, हरिणीनां तन्नेत्राभे नयने विलोक्य च उत्तस्थौ। क्षणे च तस्मिन् दूरस्थां मदनमञ्जुकां स्मृत्वा समुद्गतकामाग्निसन्तापश्च मुमूर्च्छ।

अत्रान्तरे तत्र कश्चित् मुनिवरः स्नातुमभ्याययौ। स तु पिशङ्गजटो नाम तापसस्तं तदवस्थं निरीक्ष्य प्रियास्पर्शतुल्यैश्चन्दनवारिभिरसिञ्चत्। ततः प्रबुद्धं प्रणतं तं मुनिर्दिव्यदृष्टिरुवाच, पुत्र! प्राप्तोऽसि अभिलषितं साम्प्रतं धैर्य्यमवलम्बस्व। धैर्य्येण सर्व्वमवाप्यते, इदानीं मदाश्रममेत्य मृगाङ्कदत्तीयां नवां कथामाकर्णय। इत्युक्त्वा स मुनिः स्नात्वा तं स्वमाश्रममनैषीत्। तत्र तमातिथ्येन सत्कृत्य स्वयञ्च भुक्तफलमूलः कथां वक्तुमुपचक्रमे।

अस्ति अयोध्या नाम नगरी त्रिभुवनविश्रुता। तस्यां पुरा मदनदत्तो नाम भूपाल आसीत्। तस्य नित्यानुरागिणी वह्नेः स्वाहेव सुरतप्रभा नाम भार्य्याभवत्। तस्यां मृगाङ्कदत्तो नाम सुत उदपद्यत। यः कोदण्ड इव कोटिप्राप्तगुणानतः समवर्त्तत। तस्य राजसूनोर्दश

सचिवा आसन्। तेषामेकः प्रचण्डशक्तिः, द्वितीयः स्थूलबाहुः, तृतीयः विक्रमकेशरी, चतुर्थो दृढमुष्टिः, पञ्चमो मेघबलः, षष्ठो भीमपराक्रमः, सप्तमो विमलबुद्धिः, अष्टमो व्याघ्रसेनः, नवमो गुणाकरः, दशमो विचित्रकथो नाम। सर्वे एव ते सत्कुलसम्भवाः युवानः शूराः प्राज्ञाः प्रभुहितैषिणश्च। स राजसुतः तैः सह सुखं विहरन् पितृगृहे, सदृशीं भार्य्यां नापाव। एकदा रहसि भीमपराक्रमो नाम मन्त्री तमाह स्म, देव! श्रूयतां मे रात्रिवृत्तान्तः। अहं प्रासादसुप्तः शङ्कितं निशि वज्राग्रनखरं धावन्तं सिंहमद्राक्षम्। ततश्च मयि छुरिकापाणौ समुत्थिते स सिंहः पलायितुं प्रावर्त्तत, अहञ्च जवात् तमन्वपतम्। स च नदीपारं गत्वा रसनां प्रसार्य्य यावदतिष्ठत्, तावदहं तस्य दीर्घां तां रसनां छुरिकया तया अच्छिनम्। अथ यावत् सेतुपृष्ठेनाहं नदीमुत्तरामि, तावत् स सिंहः सुमहान् विकृतः पुमान् समवर्त्तत। ततः को भवानिति संपृष्टो मया स पुरुषः प्रत्यवोचत, भद्र! अहं वेतालः, तव अनेन सत्त्वेन तोषितोऽस्मि। तदाकर्ण्य अहं तमपृच्छं, यद्येवं तत्त्वया कथ्यतां कुतास्माकं प्रभोर्मृगाङ्कदत्तस्य भार्य्या सदृशी अस्तीति। एतद् मद्वचनं श्रुत्वा स वेतालोऽब्रवीत्।

अस्ति उज्जयिन्यां कर्म्मसेन इति नरपतिः। तस्यैका कन्यका लावण्येन अप्सरसो न्यकृतवती प्रजापतेः सौन्दर्य्यसर्गस्य विश्रामभूमिरिव शशाङ्कवती नाम अस्य भार्य्या भविता। इत्युक्त्वा स वेतालोऽन्तर्दधे। अहञ्च गृहमा-

गच्छम्। एतत् निशावृत्तमद्य सञ्जातमिति। मृगाङ्क-दत्तस्तदाकर्ण्य तान् सर्वान् सचिवानाहूय श्रावयामास, जगाद च, सर्वे भवन्तः शृण्वन्तु मया च स्वप्ने यत् दृष्टम्। सर्वे वयं काञ्चित् महाटवीं प्रविष्टाः स्मः। तत्र चाध्वश्रम-तृषिताः कृच्छ्रेण तोयं प्राप्यापि सायुधैः पञ्चभिः पुम्भि-स्तत उत्थाय वयं रुद्धा आस्म। ततश्च तान् हत्वा पुन-र्यावत् पिपासवः तज्जलं पातुमिच्छामः, तावत्तत्र तान् पुंसस्तच्च जलं नापश्याम। ततः कष्टां दशामापन्नाः चन्द्रोज्ज्वलमशङ्कितं वृषारूढमायातं महेश्वरमैक्षामहि। स देवः अस्मासु प्रणतेषु दक्षिणादक्ष्णः अश्रुकणं भूमाव-पातयत्, स च कणः पतन्नेव समुद्रः समपद्यत। तस्माच्च प्राप्तां शुभां मुक्तावलीं मया गले बद्धा रक्तानुलिप्तेन नृकपालेन सः पयोधिः पीतः। एवं पश्यन् क्षणादेव प्रबुद्धोऽस्मि, विभावरी च व्यरंसीत्। एवं मृगाङ्कदत्ते अद्भुते स्वप्ने निवेदिते विमलबुद्धिर्नाम मन्त्री अन्येषु शृण्व-त्सु तमभाषत, देव! त्वं धन्यः, यस्य देवो भव इत्थं कृतानुग्रहः। स्वप्ने मुक्तावलीं लब्ध्वा यदम्बुधिः पीतो भवता, तत् शशाङ्कवतीं प्राप्य भुवं पृथिवीं भोक्तासि। इत्येवं विमलबुद्धिनाभिहिते मृगाङ्कदत्तस्तान् सर्वान् सचि-वान् पुनरब्रवीत्, यदि च मम स्वप्नफलं भीमपराक्रमस्य च स्वप्नफलमवश्यं भावि, तथापि बलदुर्गाभिमानिनः कर्म-सेनस्य राज्ञः सुता शशाङ्कवती प्रज्ञाबलात् मया प्राप्या। प्रज्ञाबलमेव सर्वेषु कार्य्येषु मुख्यं साधनम्। तथाच कथामेकां शृणुत, कथयामि वः।

आसीत् पुरा मगधेषु भद्रबाहुर्नाम महीपतिः। तस्य मन्त्रगुप्तो नाम बुद्धिमतां वरः मन्त्री आस्ते। एकदा स राजा तं मन्त्रिणं खैरमभ्यधात्, वाराणसीपतेर्धर्मगोपस्य अनङ्गलीला नाम जगत्त्रयसुन्दरी कन्यास्ति। अर्थितोऽपि स राजा तां द्वेषात् मह्यं न प्रयच्छति। भद्रदन्तस्य दन्तिनः प्रभावात् स तु दुर्जयः। तथा तु तत्सुतया विना नाहं जीवितुमुत्सहे। तदत्र नास्ति कश्चिदुपायः, यद्यस्ति, सखे! त्वयोच्यताम्। इति तेनोक्तः स मन्त्री तं राजानं प्रत्यभाषत, देव! किं विक्रमादेव सिद्धिः, न बुद्धितः? तदलं चिन्तया, अहं स्वबुद्ध्या ते मनोरथं साधयामि। इति नृपमुक्त्वा अन्येद्युः स पञ्चसप्तभिरनुचरैरन्वितः महाव्रतिकवेशः वाराणसीं प्रतस्थे। तत्र ते अनुगाः शिष्यवेशाः सिद्धोऽयमिति सर्वतः प्रख्यापयामासुः।

एकदा स सानुगः निशि कार्य्ययुक्त्युपलब्धये भ्राम्यन् अतिदूरात् गृहविनिर्गतां शङ्कया त्वरितगामिनीं चिचतुरैः सायुधैः पुरुषैः क्वापि नीयमानां हस्तिपालस्य गृहिणीं ददर्श। ध्रुवमियं स्वेच्छाचारिणी याति, तत् पश्यामि क्व गच्छतीति सञ्चिन्त्य स सानुगस्तामनुससार। अथ गत्वा सा यत्र प्रविष्टा, तन्निवासस्थानं दूरतो दृष्ट्वा तदैव पुनः प्रत्याजगाम। प्रातश्च स सिद्ध इति ख्यातः मन्त्री भ्रमतोऽनुगान् हस्तिपालस्य अन्तिकं कृतार्थी तस्य तां प्रियां विद्वन् युक्त्या प्राहिणोत्। ते चानुगा तं हस्तिपालं प्रियाहरणदुःखेन तदा जन्मविषं दृष्ट्वा कृपया

स्वविद्ययेव निर्विषश्चक्रुः, आनिन्युश्च एहि अस्मद्गुरोः सकाशं, स हि ज्ञानी सर्वं वेत्ति इत्युक्त्वा तस्य मन्त्रिणः सकाशम्। स च हस्तिपको दृष्ट्वैव तं प्रणम्य पादयोः पतित्वा भार्य्याप्रवृत्तिमपृच्छत्। सोऽपि मन्त्री मृषा ध्यात्वा साभिज्ञानं तं शशंस। ततः स हस्तिपालः तं मन्त्रिणं प्रणम्य नगररक्षिभिः सह गत्वा तत् स्थानं प्राप्य पर्य्यवेष्टयत्, अबधीच्च तान् पापान् दारापहारिणः पुरुषान्, प्राप च साभरणां सधनां तां निजां भार्य्याम्। अथ द्वितीयेऽह्नि स प्रातरेत्य तं नत्वा स्तुत्वा च व्याजसुप्तम् आहाराय न्यमन्त्रयत्, ज्ञात्वा च तं गृहप्रवेशे अनिच्छं दत्तभोजित्ववादिनं, प्रदोषे हस्तिशालायाम् आहारं व्यवस्थापयत्। सोऽपि मन्त्री मन्त्रबलात् दर्पं वंशनाडिनिवेशितं गुप्तं गृहीत्वा गत्वा च सानुगः तत्र बुभुजे। ततश्च हस्तिपाले अन्येषु च सुप्तेषु स मन्त्री तत्र अलक्षितं स्थित्वा सुप्तस्य भद्रदन्तस्य हस्तिनः कर्णे भुजगं निवेश्य तत्र तां रात्रिं नीत्वा च स्वान् देशान् मगधान् ययौ। अथ तस्मिन् मन्त्रिवरे हस्ती भद्रदन्तः एवं मया व्यापादित इत्यभिहितवति स राजा भद्रबाहुः सानन्दं ननर्द, विससर्ज च दूत वाराणसीपतये धर्मगोपाय अनङ्गलीलां तत्कन्यां याचितुम्। सोऽपि तेन गजेन विहीनोऽतिदुर्बलः तस्मै कन्यामदात्। कालवेदिनो राजानः वैतसीं वृत्तिमाश्रयन्ति। तदेवं तस्य मन्त्रिणः मन्त्रगुप्तस्य प्रज्ञया स भद्रबाहुर्नृपः अनङ्गलीलां प्राप। तस्मात् मयापि बुद्धिबलेन सा कन्या प्राप्येतिवादिनं मृगाङ्कदत्तं स सचिवो

विचित्रकथः समभ्यधात्, देव ! सर्वं ते स्वप्रदृष्टशङ्कर-प्रसादात्, सेत्स्यति, तदत्र मया वर्ण्यमानां कथामिकां शृणु । *

आसीत् पुरा तक्षशिलाख्यायां नगर्यां भद्राक्षो नाम महीपतिः । स पुत्रकामः प्रत्यहं श्वेतपद्मशतेन साम्बुना खड्गे लक्ष्मीं पूजयामास । एकदा अर्चयतस्तस्य मौनिनः राज्ञः गणयतो दैवात् एकं पद्मं न्यूनमभूत् । स राजा तदैव स्वयं हृत्पद्मं विपाट्य तस्यै देव्यै प्रादात् । ततः सा देवी तुष्टा तस्मै सार्वभौमपुत्रप्रदं वरं दत्त्वा तस्य नृपस्य क्षत-शरीरं क्षत्वा तत्क्षणं तिरोऽभूत् । अथ तस्य महादेव्यां पुत्रोऽजायत । तस्य पिता हृत्पुष्करप्रदानेन जातोऽयमिति पुष्कराक्षमेव नाम्ना कृतवान् । क्रमेण च यौवनप्राप्तं गुणान्वितं तं तनयं राज्येऽभिषिच्य स राजा भद्राक्षो वनमाश्रयत् । पुष्कराक्षोऽपि राज्यं प्राप्य प्रतिदिनं शङ्करमाराधयन् स्थितः । एकदा स देवमभ्यर्च्य तस्मात् सुसदृशीं भार्यामयाचत, अशृणोच्च तदा, सर्वं ते सम्पत्स्यते पुत्र ! अभिलषितमिति गगनादुच्चरन्तीं वाचम् । ततः प्रहृष्टः स तद्वचसि जातास्थः कियन्तं कालं तस्थौ । एकदासौ मृगयार्थं काननमगात्, तत्र कञ्चित् करभं सम्भोगसंसक्तभुजगाग्रने प्रवृत्तं दृष्ट्वा सशोकः समपातयत् । स विजमालः सन् करभः तां कारभीं तनुं मुक्त्वा विद्याधरः सन् प्रीतस्तं पुष्कराक्षमब्रवीत्, अमोघो देवप्रसादः किं न साधयेत् ? भवान् मे कृतोपकारः, यदहं वच्मि तदाकर्णय ।

अस्ति रङ्कुमालीति विश्रुतः विद्याधरराजः। तं कदाचित् रूपलुब्धा तरुणी तारावली नाम विद्याधरबाला दृष्ट्वैव अनुरागिणी स्वयं वव्रे। तस्यायं पिता स्वेच्छया कृतविवाहौ तौ, कोपात् कियन्तं कालं शापेन व्ययोजयत्। ततस्तौ दम्पती तारावलीरङ्कुमालिनौ प्रसरत्प्रीती तासु तासु प्रमोदभूमिषु स्वेच्छया विजह्रतुः। कदाचित् तेन शापेन मिथो दृष्टिपथात् च्युतौ तौ अन्योऽन्यं वियुक्तौ क्वापि वनान्तरे यातौ। ततस्तारावली तं पतिमन्विष्यन्ती क्रमेण पश्चिमाम्बुधेः पारे सिद्धर्षिसेवितं वनमगात्। तत्र सा एकमुत्फुल्लं जम्बुमहातरुं प्रीत्येव मधुरैर्भ्रमररवैराश्वासयन्तमद्राक्षीत्। सा च भृङ्गीरूपं विधाय विश्रान्त्यै तत्र एकस्मिन् कुसुमे मधुपायिनी उपाविशत्। क्षणाच्च तत्रैव प्राप्तं पतिं चिरादवलोक्य हर्षच्युतेन वीर्य्येण सिक्तं तत् कुसुमं तथाशुभं तत् भृङ्गीवपुस्त्यक्ता शशिनेव ज्योत्स्ना तेन पत्या रङ्कुमालिना सङ्गताभूत्। ततस्तेन भर्त्रा समं तस्यां स्वं निकेतनं गतायां तद्वीर्य्यसिक्तात् तस्मात् जम्बुपुष्पात् फलमेकमभूत्। तस्य च फलस्यान्तः कालयोगेन कन्यकैका समजायत। न हि दिव्यानां वीर्य्यं विफलतां व्रजति।

कदाचित् फलमूलार्थी विजितासुर्नाम मुनिः तत्रागात्। अपतच्च तत्क्षणमेव तस्मात् तरोः तत् जम्बुफलम्। तस्माच्च पतितभग्नात् निर्गत्य सा दिव्या कन्या समुपेत्य मुनेस्तस्य चरणौ सविनयमवन्दत। स दिव्यदृष्टिः तां दृष्ट्वा बुद्धा च सविस्मयः स्वाश्रमं निनाय, चकार च नाम्ना

विनयवतीम्। ततोऽहं रूपगर्वेण मदनेन च मोहितः समुपेत्य तामनिच्छन्तीं कन्यां बलात् हर्त्तुं प्रावर्त्तिषि। ततः क्रन्दन्त्या तया श्रावितः स मुनिः क्रुद्धः समुपागम्य शापं मयि प्रादात्। यस्मात् त्वं रूपगर्वेण एवमकार्य्यं कर्त्तुमुद्यतः, तस्मात्त्वं सर्वाङ्गनिन्दितः करभो भव। पुष्कराक्षात् वनप्राप्तात् वधे शापादस्मात् विमोक्ष्यसे। स एवास्या विनयवत्या भर्त्ता भविष्यतीति मुनिना शप्तोऽहं भुवि करभो जातः, अद्य च मे स शापः क्षयमगात्। तत्त्वं साम्प्रतं पश्चिमाम्बुधेः पारस्थं सुरभिमारुतं नाम तद्वनं गत्वा तां दिव्यां श्रियो रूपदर्पहरां कन्यां विनयवतीमाप्नुहि। इति पुष्कराक्षमुक्त्वा स विद्याधरो दिवमयासीत्। पुष्कराक्षोऽपि स्वां पुरीं गत्वा मन्त्रिषु राज्यं निवेश्य नक्तमश्वमेकमारुह्य प्रायात्, क्रमेण गच्छन् पश्चिमपयोधेः तटं प्राप्य कथमिममम्भोधिं तरेयमिति व्यचिन्तयत्। ततः स तत्र एकं शून्यं चण्डिकागृहं दृष्ट्वा प्रविश्य कृतस्नानविधिस्तां देवीं प्रणनाम। अथ केनापि तत्र निहितां वीणामादाय सादरः स्वगीतकैस्तां देवीम् उपवीणयति स्म। सा च देवी उपवीणिततुष्टा तत्र निशि सुप्तं तं निजेन भूतग्रामेण अब्धिपारमनाययत्। ततः स राजा प्रातः प्रबुद्धः आत्मानं वनान्तःस्थितमपश्यत् न तस्मिन् चण्डिकागृहे। तेन च विस्मितस्तत्र भ्रमन् एकमाश्रममैक्षिष्ट। तत्र च प्रविश्य शिष्यैर्वृतमेकं मुनिं तपस्यन्तमद्राक्षीत्। ततश्च उपेत्य स राजा तं पादयोः पतित्वा ववन्दे। सोऽपि मुनिः विहितातिथ्यं तं दिव्येन चक्षुषा विदित्वा अवादीत्,

पुष्कराक्ष! अद्यैव त्वमिहागतः, सा प्रियैव ते वधे विनय-वती इध्माद्याहरणाय गता, सत्वरमेष्यति, तदत्र क्षणं तिष्ठ। राजन्! सा ते पूर्वभार्य्या, तामद्य उपयच्छस्व। इति तेन मुनिनाभिहिते स राजा पुष्कराक्षो व्यचिन्तयत् दिष्ट्या स एवासौ मुनिर्विजितासुः, तदेव चेदं वनं, तत् भुवं देव्या चण्डिकयैवाहम् अम्बुधिं तारित इति चित्रं कथ-मेषा मम पूर्वभार्य्या इति तेन पृष्टः स मुनिरवादीत्, यदि ते कौतुकं श्रूयताम्।

पुरासीत् ताम्रलिप्त्यां नगर्य्यां धर्मसेनो नाम वणिक्। तस्य विद्युल्लेखा नाम भार्य्याभवत्। दैवात् स वणिक् चौरैः प्रविश्य मुषितः शस्त्रेणाहतश्च। ततोऽसौ मुमूर्षुः भार्य्यया सह अग्निं प्रवेष्टुं गृहात् निरगात्। गच्छन्तौ च तौ दम्पती अकस्मात् आकाशेन आगतं रुचिराकृति हंसमिथुनमपश्यताम्। तद्दर्शनोद्भूतचित्तौ तौ ज्वलनं प्रविश्य मृतौ राजहंसदम्पती अभूताम्। कदाचित् तौ वर्षासु रात्रौ खर्जूरपादपे कृतनीडौ स्थितौ वात्या तं तरुमुन्मूल्य व्ययोजयत्। अथ प्रातः शान्ते समीरणे स हंसस्तां हंसीं चिन्वन् सरःसु दिगन्तेषु च न कथञ्चिदवाप्तवान्। ततः स तत्कालसेव्यं हंसानां मानसं सरः अगात्। पथि अन्यया हंस्या जनिताशः प्रतस्थे। तत्र तां भार्य्याहंसीं लुब्धकेन हतां दृष्ट्वा स अथशोकार्त्तः सहसा ततः प्राद्रवत्। स च लुब्धकः तां मृतां हंसीं वीक्ष्य आदाय च स्वावासं प्रस्थितः। ततः स हंसः तां स्वां हंसीमपश्यन् उन्मनाः एकस्मिन् सर-स्तटे हंसयूथेन मिलितः। क्षणे च तस्मिन् कोऽपि धीवरः

जालं क्षिप्त्वा तान् सर्वान् हंसान् निबध्य आहारार्थं उपाविशत्।

अत्रान्तरे सा हंसी पतिं चिन्वती आगत्य तं जालबद्धं दृष्ट्वा आर्त्ता दिशो व्यलोकयत्। ततः ज्ञातु प्रवृत्तेन केनचित् पुंसा तस्मिन् सरस्तटे वस्त्रोपरिन्यस्तां रत्नकण्ठिकामपश्यत्। ताञ्च दृष्ट्वैव सा अपश्यतस्तस्य तां हृत्वा तस्मै धीवराय दर्शयन्ती व्योम्ना शनैर्गच्छति स्म। सोऽपि धीवरः चञ्च्वा गृहीतरत्नकण्ठीं तां गृहीतलगुडः तत् पक्षिजालं विहाय अन्वधावत्। सा च हंसी शैलाग्रं गत्वा दूरे तां कण्ठिकां न्यधात्। स च दाशः तल्लोभात् तत्रारोढुं प्रचक्रमे। तदवलोक्य सा हंसी पत्युः बद्धस्य समीपस्थे वृक्षे संसुप्तमेकं कपिं चञ्च्वा अभ्यताड़यत्। स च कपिस्ताड़ितस्तत्र जाले पतित्वा तदपाटयत्। तेन सर्वे हंसा निर्मुक्तास्ततो द्रुतं जग्मुः। अथ तौ हंसदम्पती उत्तस्त्रस्तान्तौ परस्परं मिलितौ हृष्टौ यथाकामं विजह्रतुः। यस्य कण्ठिका हृता सोऽपि पुमान् दाशं तं पक्षिलोभतः प्राप्तकण्ठिकं लब्ध्वा भीतिं प्रदर्शयन् तस्य हस्तात् कण्ठिकामादाय छुरिकया तस्य दक्षिणं पाणिमच्छिनत्। तौ च हंसदम्पती कदाचित् एकमम्बुजम् आतपत्रं कृत्वा मध्याह्नकाले सरसः समुत्थाय व्योम्नि विचेरतुः। विहरन्तौ च तौ क्षणात् कस्याश्चित् नद्यास्तीरमापतुः। तत्र कोऽपि मुनिः शिवमर्चयन् अध्युवास। तत्र केनापि व्याधेन सह यान्तौ तौ हंसदम्पती एकेन शरेण निहतौ युगपत् भुवि निपेततुः। तच्चाम्बुजमातपत्रं तयोः, तस्य शिवलिङ्गमर्चयतो

मुनेः शिवलिङ्गस्य मूर्द्धनि न्यपतत् । ततः स व्याधः तौ हंसौ दृष्ट्वा हंसं स्वीकृत्य तां हंसीं तस्मै मुनये ददौ । सोऽपि मुनिः शिवमभ्यर्च्य ययौ । तस्य लिङ्गस्य मूर्द्धि स्रस्तस्य तस्याम्बुजस्य प्रसादात् स हंसः त्वं पुष्कराक्षः राजकुले संजातः, सा च हंसीयं विनयवती विद्याधरान्वयसम्भूता, विशेषतश्चास्य मांसैर्हरोऽभ्यर्चितः । इत्थं सा तव पूर्व-भार्य्येति मुनिनोक्तः स पुष्कराक्षस्तं मुनिं पुनरब्रवीत्, भगवन् ! तस्याग्निप्रवेशस्य फलं पक्षियोनौ जन्म कथ-मावयोरभूत् ? । इत्युक्तवन्तं राजानं स मुनिः पुनरवादीत्, जन्तुर्यत् भावयन् म्रियते तद्रूपमेव प्राप्नोति । तदत्र कथा-मेकां शृणु ।

आसीत् पुरा उज्जयिन्यां नैष्ठिकब्रह्मचारिणी लावण्य-मञ्जरी नाम कापि ब्राह्मणकुमारी । सा कदाचित् कमला-दयनामानं युवानं ब्राह्मणं दृष्ट्वा सहसा हृतान्तःकरणा स्मराग्निना अदह्यत । परं स्वं नियममत्यजन्ती तद्भोगमेव चिन्तयन्ती गन्धवतीतीरे जीवितं तत्याज । तया च भाव-नया सा एकलव्यायां नगर्य्यां रूपवतीति प्रसिद्धा वेश्या-भवत्, व्रतप्रभावात्तु जातिं स्मृतवती । एकदा सा प्रसङ्गात् पौष्कराय जापकाय द्विजाय रहसि स्वपूर्वजन्मवृत्तान्त-मवर्णयत् । ततश्च तस्य जापकस्य अनुशासनेन शुद्धसङ्कल्पा सती अन्ते वयसि सा वेश्यापि सद्गतिमवाप । राजन् ! तदेवं यो यच्चित्तः पञ्चतामेति स तन्मयत्वमश्नुते । स मुनिः तं राजानमेवमुक्त्वा स्नानाय विससर्ज । मुनिश्च स्वयं मध्याह्न-स्नानादिकं निरवर्त्तयत् । स च राजा पुष्कराक्षः वनन दी-

तटं गतस्तां तत्र पुष्पाणि चिन्वतीं स्ववपुषा भासमानां त्रिवस्वतः प्रभामिव विनयवतीं ददर्श। अदृष्टपूर्वा केयं कौतुकात् गहनं वनं प्रविष्टा इति यावत् स समुत्सुक- श्चिन्तयति, तावत् विश्रम्भसखीं सा विनयवती अवदत्, सखि! यो विद्याधरः पुरा मां हर्त्तुमैच्छत्, स शापमुक्तो- ऽद्य आगत्य मम भर्त्तृप्राप्तिमिव न्यवेदयत्। तदाकर्ण्य सखी मुनिकन्या तां प्रत्यवादीत्, सखि! अस्त्येतत् अद्य प्रगे मुनिना विजितासुना मयि शृण्वत्यां मुञ्जकेशो नाम निजः शिष्यः इदमुक्तः, गच्छ तारावलीरङ्कुमालिनौ द्रुत- मिहानय, अद्य तयोर्दुहितुर्विनयवत्याः राज्ञा पुष्कराक्षेण विवाहो भवितेति मुनिनाभिहितो मञ्जुकेशस्तथेति प्रयातः। तत् सखि! शीघ्रमिदानीम् आश्रमपदं व्रजावः। एवमुक्ता विनयवती तया सह आश्रममगात्। पुष्कराक्षश्च दूरादलक्षितस्तत् सर्वं श्रुत्वा कामाग्निना ज्वलन् विजिता- सोराश्रमपदं पुनर्जगाम। तत्र तारावलीरङ्कुमालिनौ समा- गतौ तं मुनिमानमतुः। तावप्रसाद्य प्रणतौ तौ परिवव्रुः। ततो महर्षिणा स्वतेजोभिर्मेयां राजितायां स रङ्कुमाली राज्ञे पुष्कराय तां विनयवतीं दिव्यं नभश्चरं रथञ्च सम्प्र- ददौ। महामुनिश्च विजितासुः चतुःसमुद्रां महीमेतया सह याहि इति वरमस्मै पुष्कराय राज्ञे प्रादात्। अथ स राजा तदनुज्ञया तां विनयवतीमादाय दिव्यं खेचरं तं रथमधिरुह्य पयोनिधिं विलङ्घ्य च निजां नगरीमागात्। तत्र चागत्य तस्य दिव्यरथस्य प्रभावात् सर्वां महीं विजित्य अवाप्तसाम्राज्यः विनयवत्या सह भोगान् विविधान् चिरं

बुभुजे । इत्थं सुदुष्करमपि दैवतानुग्रहात् बुद्धिबलेन सिध्यति । तस्मात् स्वप्नदृष्टगिरिजाप्रसादात् तवापि अभीष्टमचिरात् सेत्स्यति । एतां विचित्रकथां निशम्य सोत्सुकः स मृगाङ्कदत्तः शशाङ्कवत्या अधिगमं प्रति निश्चितां बुद्धिमाधाय अवतस्थे ।

---

## अथ सप्ततितमस्तरङ्गः ।

इत्यमसौ मृगाङ्कदत्तः कर्मसेननृपनन्दिनीं शशाङ्कवतीं प्राप्तुकामो वेतालकथिताम् उज्जयिनीं गन्तुं स्वमन्त्रिभिर्महाव्रतिकवेशेन स्वनगर्य्या विनिर्गमं मन्त्रयामास । स राजपुत्रः भीमपराक्रमं सचिवं रहसि खट्टाङ्गकपालादिसमाहरणाय आदिदेश । तेन च तत् सर्वमाहृतं चारात् मृगाङ्कदत्तस्य पितुर्मुख्यो मन्त्री अबुध्यत । तस्मिंश्च क्षणे मृगाङ्कदत्तः हर्म्यपृष्ठतः सञ्चरन् अकस्मात् ताम्बूलनिष्ठीवनरसं तत्याज । स च रसः दैवात् अधोमार्गेण गच्छतस्तस्य पितृमन्त्रिणः अदृष्टस्य मूर्द्धनि न्यपतत् । स च मृगाङ्कदत्तेन मुक्तं तं निष्ठीवनरसं बुद्धा कृतस्नानः परिभवदुःखं हृदि न्यधात् ।

अन्येद्युः तस्य महीपतेः अमरदत्तस्य दैवात् विसूचिका उदपद्यत । स मन्त्री तच्चावसरं लब्ध्वा विजने तथा रोगार्त्तं नृपम् अभयं याचमानः प्राब्रवीत्, प्रभो !

भीमपराक्रमसद्मनि मृगाङ्कदत्तेन तव अभिचारः कर्त्तुं प्रारब्धः, तेन पीड़ितोऽसि, मया चारमुखात् ज्ञातं तच्च प्रत्यक्षं दृश्यते। तत् त्वं देहात् व्याधिमिव तमात्मजं देशात् निःसारय। तदाकर्ण्य राजा सहसा समुद्भ्रान्तः तदन्वेषणाय निजं सेनापतिं भीमपराक्रमसदने प्राहिणोत्। स च सेनापतिस्ततः केशकपालादि लब्ध्वा आनीय तत्क्षणं तस्मै राज्ञे प्रदर्शयत्। तच्च दृष्ट्वा राजा अतिक्रुद्धः, राज्यलुब्धो मे द्रोही पुत्रः अद्यैव देशादस्मात् स्वमन्त्रिसहितो निर्वास्यतामिति तं सेनापतिं समादिदेश। स च सेनापतिः गत्वा राजादेशं निवेद्य तं मृगाङ्कदत्तं सामात्यं नगरात् निरवासयत्। सोऽपि राजपुत्रः उपेक्षितसम्पत्तिः हर्षेणार्च्चितविनायकः मनसा पितरौ प्रणम्य ततः अयोध्याया विनिर्गम्य तान् सहयायिनः प्रचण्डशक्तिप्रमुखान् दशामात्यानब्रवीत्, शक्तिरक्षितो नाम किराताधिपः मे सब्रह्मचारी विद्यासु बालसुहृच्च। प्राक् युद्धे वन्दीकृतेन तत्पित्रा आत्ममुक्तये पिता मे शरणं गतः। तातश्च मे तं तत्सपत्नेभ्यः मोचयित्वा स्वं पदमधिरोपितवान्। ततश्च तत् पितरि मृते सोऽपि तातेन मे तद्वेव पितृराज्यमधिरोपितः। तत्तस्य मे सुहृदः सकाशमद्य वयं गच्छामः। ततः क्रमेण तां शशाङ्कवतीमुद्दिश्य उज्जयिनीं गमिष्यामः। इत्युक्तवान् स राजतनयस्तथेति वादिभिस्तैर्मन्त्रिभिः स क्रमेण गच्छन् सायमेकां महाटवीं प्राप। अगाधपसलिलायां तस्यां स राजपुत्रः कच्छात् एकं तटोपान्तस्थितशुष्कपादपं सरः प्राप्तवान्। तत्रैव

सान्ध्यं विधिमुपास्य जलानि च पीत्वा श्रान्तः अमात्यैः सह तस्य शुष्कतरोरधः सुष्वाप।

अथ रजन्यां चन्द्रोदयालङ्कृतायां सः प्रबुद्धः तं शुष्कवृक्षं क्रमात् दलैः पुष्पैः फलैश्चापूरितं ददर्श, दर्शयामास च सचिवान् प्रबोध्य अस्य पक्वानि फलानि तत्क्षण पतन्ति अवलोक्य अद्भुतम्। ततस्तैः प्रबुद्धैर्विस्मयान्वितैः क्षुधितैः सह तानि सुस्वादुरसानि फलानि बुभुजे। अथ तेषु भुक्तवत्सु तिष्ठत्सु स शुष्कवृक्षः सहसा विप्रकुमारः समजायत। अथ विस्मितेन राजपुत्रेण मृगाङ्कदत्तेन पृष्टः सः कुमारः प्राब्रवीत्, राजनन्दन! दामधिर्नाम अयोध्यायां कोऽपि द्विजोऽभवत्। तस्याहं श्रुतधिर्नाम पुत्रः। पिता मम दुर्भिक्षे प्राप्ते मृतजानिर्मामादाय भ्रमन् इमां भूमिमवाप। अथ मत्पिता इह केनापि दत्तानि पञ्च फलानि प्राप्य क्षुत्पीड़ितस्त्रीणि मह्यमदात्, द्वे च आत्मने अस्थापयत्। ततस्तस्मिन् स्नातुं सरोवरमिदमवतीर्णे अहं तानि सर्वाणि फलानि भुक्त्वा निःशेषाणि कृत्वा व्याजेन निद्रामभजे। अथ स स्नात्वागतः बुद्धा छलितः काष्ठवत् स्थितं मां शशाप, इह सरस्तटे शुष्कवृक्षो भव, चन्द्रवत्यास्च रात्रौ ते पुष्पफलानि भविष्यन्ति। यदा ते फलानि अतिथिभिर्भोक्ष्यते, तदा त्वं शापादस्मात् मोक्ष्यसे इति पित्राभिशप्तोऽहं तत्क्षणादेव शुष्कतरुरभवम्। अद्य भवद्भिर्भुक्तेषु मदीयेषु फलेषु सुचिरात् शापनिर्मुक्तोऽस्मि। इति कथितस्ववृत्तान्तं श्रुतधिं पृच्छन्तं राजपुत्रोऽपि मृगाङ्कदत्तः स्वं वृत्तान्तमवर्णयत्।

ततः स श्रुतधिर्नीतिज्ञः अबान्धवस्तमेव मृगाङ्कदत्तं बन्धुं मत्वा अन्वगमत्। ततस्तत्र तां निशां नीत्वा सर्वे प्रातः तस्मात् प्रतस्थिरे। गच्छन्तश्च ते करिभञ्जिताख्यं वनं प्राप्य बहुक्लेशातुराकृतीन् पञ्च पुरुषान् ददृशुः। ते च पुरुषाः समुपेत्य तं राजपुत्रं सप्रश्रयम् अब्रुवन्, महाभाग! वयं काशीपुर्य्यां विप्राः धेनूरुपजीव्य अतिष्ठाम।

अथ कदाचित् दुर्भिक्षे अवग्रहदग्धतृणात् देशात् इतरं बहुतृणं देशं ताभिर्धेनुभिरागताः स्म। ततश्चास्माभि-रिहैव वापीवारि रसायनं प्राप्तम्। ततश्च तद् वारि पिब-तामस्माकं क्षीरपायिनां पञ्चवर्षशतानि अस्मिन् विजने वने समतीतानि। देव! तेन वयं मोहशाः, यूयञ्चास्माक-मद्य अतिथयः दैवात् प्राप्ताः, तदागच्छत अस्माकमा-श्रमम्। इति तैरर्थितो राजसुतस्तुरगैः सह तदाश्रमं गत्वा क्षीरादिकं तत्र भुक्त्वा तद्दिनमनयत्। ततः प्रातः-प्रस्थितस्तानि तानि कौतुकावहानि पश्यन् क्रमात् किरातविषयं प्राप, प्राहिणोच्च तं श्रुतधिं किरातराजाय स्वागमावेदनाय। सोऽपि किरातपतिः शक्तिरक्षितस्तमा-गतं मृगाङ्कदत्तं बुद्ध्वा निर्गत्य दृष्ट्वा प्रणम्य च सामात्यं पुरं स्वं प्रावेशयत्। तत्र स मृगाङ्कदत्तः तेन किरातराजेन सम्मानितः तस्मै कथितस्ववृत्तान्तः कांश्चित् दिवसान-तिष्ठत्। अथ स्वकार्य्ये प्राप्तकाले शक्तिरक्षितं साहाय्यार्थ-मनुबध्य तं तथेति प्रतिज्ञातमामन्त्र्य पुण्ये दिवसे उज्ज-यिनीं प्रति सामात्यः प्रतस्थे। गच्छंश्च शशाङ्कवतीलालसः शून्यामेकामटवीमासाद्य तत्र तरुतलस्थितम् अजिन-

जटाभृतमेकं तापसं ददर्श, पप्रच्छ च तं, भगवन्! कथमेकाकी निराश्रमपदे अस्मिन् अरण्ये तिष्ठसीति। तापसोऽब्रवीत्, महाभाग! अहं महागुरोः शुद्धकीर्त्तिनामकस्य शिष्यः नानामन्त्रसिद्धिं जानामि। सोऽहं कदाचित् शुभलक्षणमेकं क्षत्रकुमारमासादयम्। स कुमारः मदन्तिकमुपविष्टः पृष्टश्च मे नानाविधानि सिद्धौषधरसचेत्राणि कथयित्वा इदमब्रवीत्।

अस्ति अस्मिन् उत्तरे दिग्भागे महान् शिंशपातरुः विन्ध्याटव्याम्। तस्य अधस्तलं महत् नागेन्द्रभवनम्। तत्र पारावतो नाम बली नागवरः प्रतिवसति। तस्य च देववरप्रसादात् अनुत्तमः खड्ग एकोऽस्ति। तं वैदूर्य्यकान्तिं नाम खड्गं यः प्राप्नोति, स सिद्धाधिपतिर्भूत्वा जगति अपराजितो विचरति। स चासिः वीरैः सहायैर्विना न प्राप्यते इति कथयित्वा तस्मिन् क्षत्रकुमारे प्रस्थिते अहम् अनन्यमनाः तं खड्गं प्रेप्सुः पृथिवीं भ्राम्यन्नपि सहायानप्राप्य खिद्यमान इह मर्तुमागत इति। मृगाङ्कदत्तस्तस्य तापसस्य एवं वचनं निशम्य अहं सामात्यस्ते सहाय इति तमभाषत। स च तापसस्तद्वचनमभिनन्द्य सानुगेन तेन तत्क्षणं तस्य नागस्य भवनं प्रति प्रायात्। तत्र च गत्वा अभिज्ञानेन प्राप्ते मन्त्रैर्बद्धासु दिक्षु तान् मृगाङ्कदत्तादीन् स्थापयित्वा अभिमन्त्रितैः सर्षपैः प्रकटीकृत्य क्षिप्तैः सर्वतः संरक्ष्य तस्मिन् नागभवनोपरि शिंशपातले होमं कर्त्तुं प्रचक्रमे। मन्त्रप्रभया च विघ्नान् उत्पातानन्यांश्च निराचकार। ततः सहसा तस्मात् शिंशपातरोः कापि दिव्या स्त्री रत्ना-

भरणानां शिञ्जितैः मोहमन्त्रं पठन्तीव विनिर्ययौ, चकार चोपेत्य तं कटाक्षक्षतमानसम्। ततश्च सा अधीरा हृतधैर्य्यं तं समालिङ्ग्य घनस्तनी विस्मृतमन्त्रस्य तस्य हस्तात् होमभाण्डमपातयत्। लब्धावकाशश्च तस्मिन् क्षणे स पारावताख्यो नागराजस्तस्मात् भवनात् कल्पान्तघनाघन इवोदतिष्ठत्। तं नयनज्वालाघोरगर्जितदारुणं दृष्ट्वा स तापसः सहसा स्फुटितहृदयः समवर्त्तत, सा च दिव्या योषित् अन्तर्दधे। तस्मिंश्च तापसे तथाभूते तस्यार्थे समागतान् मृगाङ्कदत्तादीन् स नागः शशाप, यतो युष्माभिरेतत् साहाय्यं कर्तुं निष्कारणमागतं तस्मात् यूयं कञ्चित् कालं परस्परं विप्रयुक्ता भविष्यथ इत्युक्त्वा नागे अन्तर्हिते ते राजपुत्रप्रभृतयस्तत्क्षणं ध्वान्तरुद्धदृशः ध्वस्तशब्दश्रवणशक्तयः परस्परं विप्रयुक्ताः शापप्रभावात् क्रोशन्तः चिन्तयन्तश्च यथायथं जग्मुः। मृगाङ्कदत्तस्तस्मिन् रात्रिविभ्रमे गते इतस्ततोऽटव्यां भ्राम्यन् सचिवैर्विना नितरां क्लेशमापद्यत।

इत्थं द्वित्रेषु मासेषु गतेषु स श्रुतधिरकस्मात् तस्य मृगाङ्कदत्तस्य पदवीं चिन्वन् सहसा तत्समीपमवाप। स श्रुतधिः साश्रुस्तं कृतादरं स्वमन्त्रिवार्त्तां पृच्छन्तं मृगाङ्कदत्तं समाश्वास्य इदमभ्यधात्, प्रभो! न मया ते दृष्टाः, परन्तु जाने ते उज्जयिनीं प्रति यास्यन्तीति। इत्युक्तवता तेन समन्वितः मृगाङ्कदत्तः शनकैरुज्जयिनीं प्रति प्रायात्। गच्छंश्च अल्पैरेव दिवसैर्मार्गेण अतर्कितागतं विमलबुद्धिं नाम निजं मन्त्रिणं प्राप्य सहर्षमन्येषां वृत्तान्तमपृच्छत्।

स चावदत्, देव! न जानेऽहं तेषु कः कुत्र नागशापात् गतः, परं तान् शीघ्रमाप्स्यसीति मया ज्ञातं, शृणु तत्। अहं तदा नागशापेन दूराक्षिप्तः परिभ्रमन् क्लान्तः अटव्याः पूर्वस्यां दिशि केनापि साधुना महर्षिणा ब्रह्मदण्डिनः आश्रमं नीतोऽस्मि। तत्र तेन मुनिना दत्तैः फलजलैर्हृतक्लमः पर्य्यटन् आश्रमादनतिदूरे बृहतीमेकां गुहामद्राक्षम्। गुहाञ्च प्रविश्य कौतुकात् तस्याम् उत्तमं मन्दिरं दृष्ट्वा जालगवाक्षैस्तदभ्यन्तरमवलोकयितुं प्रावर्त्तिषि। अपश्यञ्च तत्र कापि योषित् सभृङ्गकं चक्रं भ्रामयन्ती तिष्ठति, ततस्ते भृङ्गा तत्रस्थौ वृषमेकं गर्द्दभञ्च समाश्रिताः। ताभ्याञ्च वृषगर्द्दभाभ्यां मुक्तौ क्षीरासृक्फेनौ पीत्वा ते भृङ्गाः सिता असिताश्च भूत्वा जालकारका जाताः स्वविष्ठाभिः। ततस्तैर्द्विविधैर्विविधाः सुपुष्पैर्विषपुष्पैश्च संयुता जालपाशाः कृताः। ते च जालकारकास्तेषु पुष्पेषु यथासुखं स्थिताः, अथ ते श्वेतकृष्णोभयमुखेन अहिना एत्य दष्टाः, पुनस्तथैव तानेव पाशान् छित्त्वा यथायथं स्थिताः। अथ विषज्वालया तत्पुष्पजालस्थेषु आरटत्सु अन्येऽपि अजालस्थाः क्रन्दितुं प्रवृत्ताः। तेन तेषां रोदनशब्देन भग्नसमाधिः तत्रस्थः कोऽपि कृपालुस्तापसः तान् जालादमोचयत्। ततो निर्दग्धपाशास्ते कस्यापि द्रुमस्य विवरं प्रविष्टाः सूर्य्यतेजसि विलीना अभवन्। तावच्च सा स्त्री सचक्रवृषगर्द्दभा क्वापि गता। तदवलोक्य विस्मितो यावत्तत्र पर्य्यटामि तावत् कामपि रम्याम् इहागच्छ वीक्षस्व इति आह्वयन्तीमिव भृङ्गनादितैरम्बुजैः, पुष्करिणीमपश्यम्।

तस्यास्तीरे उपविष्टश्च महत् धनं वीचे, तस्मिंश्च वनान्तरे एको लुब्धकस्तिष्ठति, तेन दग्धबाहुरेकः सिंहपोतो विदर्भेश्च अनायत्त इति क्रोधात् तस्माद्वनादपवाहितः। सोऽपि सिंहः वनान्तरे सिंह्याः शब्दं श्रुत्वा तत्र गच्छन् महावातेन अवकीर्णभुजः कृतः। ततो लम्बोदरेण केनचित् पुंसा कृपयेत्य पुनरारोपितदग्धबाहुः स तस्या एव सिंह्याः कृते पुनस्तद्वनमेव यातः। तत्र तां कृच्छ्रेण प्राप्य तया सहितः पुनर्निजं वनं प्रययात्। तञ्च सभार्य्यमागतं दृष्ट्वा तस्मै कुलमन्दिरं वनं समर्प्य लुब्धकः स अन्यत् वनं गतः। एतदालोक्य अहम् आश्रमपदं गत्वा तदुभयं महाश्चर्य्यं तस्मै महर्षये अकथयम् सोऽब्रवीत्, सौम्य! या त्वया तत्र स्त्री दृष्टा, सा माया, तया च भ्रामितं यच्चक्रं, तत् संसारचक्रं, ये च भृङ्गास्ते तत्र जन्तवः। यौ च वृषगर्दभौ दृष्टौ तौ धर्माधर्मौ विद्धि। ताभ्याञ्च यत् वान्तं दुग्धमसृक् च ते उभे सुकृतदुष्कृते। ये च जालपाशा निर्मितास्ते सुतादयः। सुपुष्पाणि विषपुष्पाणि च यानि, तानि सुखदुःखानि। कालेन यथास्वं तेषु तेषु ते संसक्ताः। पुत्र! इत्थं शुभाशुभाभ्यां हृताः प्राणिनः तया स्त्रीरूपया मायया नानायोनिषु क्षिप्ताः। ते च तुल्यासु पतिताः श्वेताः अतुल्यासु कृष्णाः इत्थं द्विविधाः पुत्रादिजालपाशेषु सुखदुःखानुबन्धिषु संसक्ता जायन्ते। ततः निजैर्जालैः कृष्टा बद्धाश्च दुःखविषार्दिताः परमुद्विग्नाः क्रन्दितुं प्रवृत्ताः शरण्यं परमेश्वरं आह्वयन्ति। ततः प्रबुध्य तेन तापसरूपिणा देवेन ज्ञानाग्निज्वालया सर्वे दग्धपाशाः कृताः। ततश्च ते विद्रुमदृष्ट-

रूपमादित्यमण्डलं प्रविश्य परमं धाम ययुः। सा च माया चक्राकारेण संसारेण ब्रमखराकारधर्माधर्मसहिता क्वापि प्रनष्टा। एवं स्वकर्मभिः शुक्लाः कृष्णाश्च जन्तवः संसारे भ्रमन्ति। ईश्वराराधनाच्च मुच्यन्ते संसारसङ्कटात्। तव मोहशान्तये ईश्वरेण इति प्रदर्शितम्। यच्च भवता वापी-जले दृष्टं तदपि श्रूयताम्, एतत् सर्वं मृगाङ्कदत्तस्य भाव्यर्थप्रदर्शनं प्रतिबिम्बमिव भगवता तव दर्शितम्। स हि मृगाङ्कदत्तः बालमृगेन्द्रपोतसदृशः, भुजाश्चास्य दश मन्त्रिणः। वर्द्धितोऽपि वनतुल्यात् देशात् लुब्धकरूपेण पित्रा कोपात् प्रशासितः। स च अवन्तिदेशाद्दूरां शशाङ्कवतीं सिंहीमिव श्रुत्वा प्रचलितः। क्रमेण च गच्छतो नागशापरूपेण वातेन भ्रष्टा मन्त्रिण एवास्य भुजा दश। ततो विनायकेन लम्बोदररूपिणा समेत्य सम्पादितास्ते दश मन्त्रिणः। ततश्च पुनः प्रकृतिस्थोऽभवत्। ततो गत्वा बहून् क्लेशान् प्राप्य तां शशाङ्कवतीं सिंहीमादाय अत्रागतः। ततः स्वनिकटं प्राप्तं मृगाङ्कदत्तं सिंहं सभार्य्यं दृष्ट्वा तस्मै स्वं राज्यरूपवनं समर्प्य स पिता लुब्धकः तपोवनं प्रस्थित इति सम्भवत् भाति, एतच्च विभुना ते प्रदर्शितम्। तत् स वः प्रभुः युष्मान् मन्त्रिणो भार्य्याञ्च तां शशाङ्कवतीमचिरादाप्स्यति। इत्यहं तेन मुनिना बोधितस्तदाश्रमात् निर्गतः बहुना क्लेशेन भवदन्तिकं प्राप्तः। तस्मात् अविलम्बम् अभिमतं प्रचण्डशक्तिप्रमुखान् मन्त्रिणश्च प्राप्स्यसि। प्रस्थानकाले या त्वया पूजा कृता, नियतं विघ्नेश्वरस्तया प्रसन्नोऽभवत्। इति सचिवात् विमलबुद्धेः श्रोत्रसुखं निशम्य

मृगाङ्कदत्तः पुनर्विचार्य्य तेन सह अपरेषां मन्त्रिणाम-
न्वेषणाय स्वकार्य्यसिद्धये च अवन्तीं प्रति प्रतस्थे।

---

## अथ एकसप्ततितमस्तरङ्गः।

अथ मृगाङ्कदत्तः शशाङ्कवतीं प्रेप्सुः श्रुतधिविमल-
बुद्धिभ्यां सह उज्जयिनीं गच्छन् अन्तरा वीचिवेल्लद्भुज-
लतां विलसत्फेनपाण्डुरां [illegible] लित
इति हर्षादिव नृत्यन्तीं हसन्तीञ्च नर्मदां नदीमाससाद।
तस्यां स्नानावतीर्णे तस्मिन् कश्चित् मायावटुर्नाम शबर-
भूपतिस्तत्र समाययौ। तत्र स्नातं सहसोत्थाय त्रयो जल-
मानुषा भीतं भीतिनश्यत्परिच्छदं तं युगपद् जगृहुः।
तदवलोक्य मृगाङ्कदत्तः सहसाकृष्टासिः तान् जलमानु-
षान् अन्तः प्रविश्य हत्वा तं शबरपतिममोचयत्। स च
भिल्लपतिस्तेषां जलजन्तूनां हस्तात् मुक्तः जलोत्थितः तं
राजपुत्रं पादयोः पतित्वा पप्रच्छ, महाभाग! विधात्रा
मत्प्राणत्राणाय कस्त्वमिहानीत इति तदाकर्ण्य श्रुत-
धिस्तस्मै भिल्लराजाय तद्वृत्तान्तमशेषं वर्णयामास।
तच्छ्रुत्वा शबरराजः तं प्रणम्य पुनरब्रवीत्, तर्हि तवा-
त्राभिलषिते अहं यथादिष्टं साहायकं विधास्यामि,
तन्मे प्रसादं कुरुष्व, प्रभो! मदीयं गृहमेत्य मां कृतार्थय,
इत्युक्त्वा शबरेन्द्रो मृगाङ्कदत्तं तं स्वां पल्लीं निनाय, उप-

चचार च तं यथार्हैः स्वविभूतिभिः। ततस्तस्य मायावटो-
र्भिल्लराजस्यानुरोधेन राजपुत्रस्तत्रैव कियन्तं कालं तस्थौ

एकदा तस्मिन् तथास्थिते स शबरेश्वरः निजप्रती-
हारेण चण्डकेतुनामकेन समं द्यूतमारेभे। तावच्च नभसि
मेघेषु गर्जत्सु स मायावटुः गृहमयूरान् नर्त्तितुमारब्धान्
द्रष्टुमुत्तस्थौ। ततः स द्यूतरसिकः प्रतीहारस्तमब्रवीत्,
राजन्! किमेभिरग्रिचततावृत्तैर्दृष्टैः। मम गृहे स मयू-
रोऽस्ति योऽन्यत्र भूतले नास्ति, प्रातस्तं दर्शयिष्यामि
यदि ते कौतुकमिति तदाकर्ण्य स मे त्वया सर्वथा दर्श-
नीय इति तं प्रतीहारमुक्त्वा दैनिकं कृत्यं व्यधात्।
मृगाङ्कदत्तश्च सानुगस्तत्र स्थितस्तत् सर्वं समाकर्ण्य तथैव
समुत्सुकः स्नानाहारादिकं विदधे। ततो रजन्यामुपे-
तायां जृम्भिते च तिमिरे स राजपुत्रः कस्तूरिकानुलिप्ताङ्गः
नीलाम्बरश्च एककः विचरणार्थं सुप्तानुगात् वासगृहात्
खड्गपाणिर्निरगात्। भ्रमंश्च तत्र मार्गगतेन केनापि पुंसा
ध्वान्तवशाददृष्टेन अंसेन अंसे अभ्यहन्यत। ततः सः राज-
पुत्रः परिभवेण सञ्जातकोपस्तं पुमांसं युद्धाय आजुहाव।
स चाहूतः पुमान् तत्कालोचितमभ्यधात्, भद्र! अवि-
चार्य्यैव किं ताम्यसि, विचारयसि चेत् अत्र निशापति-
र्वाच्यः, येनेयं निशा न प्रकाशिता, अथवा धाता येनास्य
निशापतेः पूर्णोऽधिकारः न व्यवस्थापितः। येन ईदृशे
तमसि वैराणि जायन्ते। तदाकर्ण्य सत्यमित्युक्त्वा नाग-
रिकस्य तस्य वचसि तुष्टो मृगाङ्कदत्तः कोऽसीति तं पुरुषं
पप्रच्छ। सोऽपि पुमान् चौरोऽहमिति मृषा तमवदत्।

तर्हि इहसमानय, त्वं मे स ब्रह्मचारी भवतीति तेन सख्यं कृत्वा जिज्ञासुः तेनैव सह व्रजन् राजसुतः तिमिराच्छन्नया अलक्षितं गृहमेकमवाप। प्रविश्य च बुबुधे तदेव माया-वटोर्भिल्लराजस्य निकेतनं, स च पुरुषश्चण्डकेतुः प्रतीहारः, न तस्कर इति। प्रतीहारस्तु मन्दालोकेन कोणगं वेशच्छन्नं तं मृगाङ्कदत्तं प्रच्छन्नकामुको न परिजज्ञे। ततः सः अनुरक्तया राजयोषिता मञ्जुमतीसमाख्यया प्राप्त एव उत्थाय कण्ठे जगृहे, पप्रच्छे च पर्य्यङ्के उपवेश्य, सुभग! अद्य त्वया कोऽयं पुमान् इहानीतः? प्रतीहारस्ताम-ब्रवीत्, प्रिये! सुहृत् ममायं, विश्वस्ता भव इति। सा तु सोद्वेगा तमवदत्, नाथ! कुतो मे मन्दभाग्याया विश्वासः, यदसौ मम भर्त्ता शबरराजः सुखं प्राप्तादपि मृत्युमुखात् मृगाङ्कदत्तेन रक्षित इति। तदाकर्ण्य स प्रतीहारस्तामवादीत्, अलमुद्वेगेन, प्रिये! अचिरादहं तं भिल्लपतिं मृगाङ्कदत्तञ्च हनिष्यामि। इत्युक्तवन्तं तं सा प्रत्यवादीत्, किमेवं विकत्थसे? यदासौ नृपो नर्मदाम्भसि ग्राहैराक्रान्तः, तदासौ मृगाङ्कदत्त एक एव तद्रक्षणाय उद्यत आसीत्। त्वया तत्र किं न हतः, प्रत्युत भयात् पलायितोऽसि, तत् तूष्णीं भव, येन कश्चिदपि नेदं ते वचः शृणोतु। शूरात् तस्मात् मृगाङ्कदत्तात् त्वमेव अशिवमाप्स्यसीति मन्ये। एवमुक्तवतीं तां स जारस्तां न चक्षमे। पापे! त्वं मृगाङ्कदत्ते साम्प्रतं बद्धभावा, न मयि, तदस्य मदधिक्षेपस्य फलमाप्नुहि इत्युक्त्वा तां हन्तुं सासिधेनुकः समुत्तस्थौ। ततो रहस्यवेदिन्या

ततस्तया एकया चेट्या धाविता करेण तस्य छुरिका यावदवष्टब्धा, तावत् सा मञ्जुमती तस्मान्निर्गत्य अन्यतः पलाय्य प्राणानरक्षीत्। प्रतीहारश्च तस्याश्चेट्या निकृत्ताङ्गुलितः करात् तां छुरिकामाक्षिप्य तेन मृगाङ्कदत्तेन विस्मिताकुलेन सह यथागतं स्वगृहं प्रायात्। ततो मृगाङ्कदत्तः गच्छाम्यहं, भवान् गृहं प्राप्त इति अलक्षित एव तं प्राब्रवीत्। सोऽपि प्रतीहारः, त्वमिहैव निद्रां भज, भृशं परिश्रान्तोऽसीति तं राजपुत्रमभ्यधात्। ततस्तथेति तेन तद्गृहालोकनेच्छयाभिहिते असौ प्रतीहारस्तत्र एकं भृत्यमाहूय जगाद, स मयूरः यत्र स्थितः, तत्र वासगृहे इमं पुरुषं विश्रामाय नय, प्रयच्छ चास्मै शयनीयमिति। स च भृत्यस्तथेति तं मृगाङ्कदत्तं तस्मिन् मयूरोपेते गृहे नीत्वा शय्याञ्च प्रदर्श्य शृङ्खलया वहिर्द्वारं रुद्ध्वा च यथास्थानं गतः। मृगाङ्कदत्तस्तत्र पञ्जरस्थितं मयूरं दृष्ट्वा सोऽयं मयूरः, यस्य कथा प्रतीहारेण अद्य द्यूतकाले कथितेति समालोच्य कौतुकात् तस्य मयूरस्य पञ्जरम् उद्घाटयामास। स तु मयूरः पञ्जरान्निर्गत्य निपुणं वीक्ष्य च मृगाङ्कदत्तस्य पादयोर्मुहुर्निपपात, लुलोठ च। लुठतश्च तस्य कण्ठबद्धसूत्रकं दृष्ट्वा तेन तं पीड़ितं मत्वा अमोचयत्। स च मुक्तकण्ठसूत्र एव तस्य पश्यतः भीमपराक्रमो नाम मन्त्री समपद्यत। ततो मृगाङ्कदत्तस्तमुत्सुकमानतं समाश्लिष्य सखे! कथय किमेतदिति विस्मितस्तद्वार्त्तां पप्रच्छ। स च भीमपराक्रमः संहृष्टस्तदा तमवोचत् देव! शृणु मे वृत्तान्तमामूलात् कथयामि।

अहं तावत् शापेन भवदन्तिकात् प्रभ्रष्टः अटवीं भ्रमन् एकं महाशिखिपादपं प्राप। तत्र निखातरूपां गणेशप्रतिमां दृष्ट्वा प्रणम्य परिश्रान्तस्तन्मूले उपाविशम्। समालोचयञ्च धिक् मां पापकृतं यदहमविचार्य्य स्वामिने तत् रात्रि-वेतालवृत्तान्तमावेदितं, तदिहैव आत्मानमपराधिनं त्यजा-मीति तत्रैव देवसमीपे अनशन एवातिष्ठम्। कतिपये चाहनि गते तेन पथा समागतः कश्चित् वृद्धपान्थस्तस्यैव तरोरधश्छायायां समुपाविशत्। स च साधुर्मां म्लान-मुखं दृष्ट्वापृच्छत्, पुत्र! किमिह निर्जने एवं क्लेशमनु-भवन् तिष्ठसीति। ततो मया स्ववृत्तान्ते यथावदावेदिते स वृद्धपथिकः प्रीतात्मा धीरवत् मामभाषत, वीर! कथ-मात्मानं स्त्रीव हंसि, स्त्रियोऽपि आपदि धैर्य्यं नोज्झन्ति, तदत्र कथामेकां शृणु।

आसीत् कोशलायां नगर्य्यां विमलाकारो नाम नृपतिः। तस्य कमलाकरो नाम पुत्रोऽभूत्। स हि ओजोरूपौदार्य्यगुणैः स्कन्दकन्दर्पकल्पद्रुमजिगीषुणेव धात्रा विनिर्मितः सर्वेषां श्लाघ्यतामगात्। एकदा वन्दि-गणस्तुतस्य तस्य कुमारस्य पुरः कोऽपि परिचितो वन्दी एकां गाथां पपाठ। हंसावली पद्मासादनार्थं सोत्सुक-विविधमुखरद्विजावलीपरिगीतं कमलाकरमप्राप्य क्व रतिं लभताम्? एवं मुहुः पठन् तेन पृष्टो मनोरथसिद्धिर्नाम वन्दी तं कुमारं कमलाकरमब्रवीत्, देव! अहं भुवं पर्य्य-टन् मेघमालिनो नाम राज्ञः नगरीं विदिशां श्रियः लीलोद्यानभुवमिव गतोऽस्मि। तत्र च दर्दुरिकाख्यस्य

सङ्गीताचार्य्यस्य वेश्मनि कियन्तं दिवसमासम्। एकदा स मां प्रसङ्गेनेदमब्रवीत्, इह हंसावली नाम राजदुहिता राज्ञः पुरतः नवीनं शिक्षितं स्वनृत्यं प्रातर्दर्शयिष्यति। तदाकर्ण्य कौतुकात् युष्मया अपरेऽहनि तेन समं राजकुलं गत्वा रङ्गमण्डपं प्राविशम्, अपश्यञ्च तत्र सुमध्यमां तां पितुरग्रतो नृत्यन्तीम् आलोलपुष्पाभरणां मणिप्रेङ्खितपल्लवां स्मरतरोर्वल्लीमिव यौवनानिलघूर्णितां राजबालाम्। ततश्चाचिन्तयम् अस्या मृगाक्ष्याः सुसदृशः पतिः कोऽपि नास्ति भूतले कुमारात् कमलाकरादृते। तादृशेन चेदियं न युज्यते, ततः कामस्य किं कृतैः पुष्पकार्मुकारोपणग्रहैः। तदत्र उपायं कमपि करिष्यामीत्यनुचिन्त्य नृत्यप्रेक्षणादनन्तरं राजकुलद्वारमगाम्। उद्लम्बयञ्च तत्र पत्रिकां यथा यदि कश्चित् मया सदृशश्चित्रकृदस्ति, स चित्रे लिखतु इति। अथ राजा केनापि तथा प्रणेतुमशक्यं बुद्ध्वा मामाहूय स्वसुतावासे चित्रकर्मणि न्ययुङ्क्त। ततस्तस्या हंसावल्या वासगृहे स्थित्वा मया भित्तौ सभृत्यः देवः कमलाकरस्त्वमभिलिखितः। स्पष्टं बोधयामि चेत् तदा सा मां लघुत्वं वेत्ति, तदेतां राजसुतां युक्त्या बोधयामि इति संचिन्त्य एकं विश्वस्तं सुहृदं कृतप्रतिज्ञं रथ्यसुभ्रलक्ष्यमकारयम्। स उन्मत्तो भ्रमन् दूरात् राजपुत्र्या दृष्टमालोक्य क्रीडनक इति तथा राजपुत्र्या निजान्तिकमानायि। ततः क्रीडावशात् स मया हंसावल्या वासगृहं प्रवेशितः अचिरं यत्नम् देवस्य स्तुतिमकरोत्। दिष्ट्या अद्य पञ्चशराङ्कितपाणिर्लक्ष्मी-

निवासः सोऽयं हरिरिव अनन्तगुणः कमलाकरो दृष्टः। इत्यादिकं वृत्यतस्तस्य मुखात् सा राजपुत्री निशम्य मामपृच्छत्, किमयमुन्मत्तः प्राह, कश्च त्वयाभिलिखित इति। इत्येवं तामनुबन्धेन पृच्छन्तीमहमब्रुवं, सुन्दरि! नूनमनेन दृष्टपूर्वोऽसौ, योऽयं राजपुत्रो मयात्राभिलिखितो रूपगौरवात्। इत्युक्त्वा मयापि तस्यै त्वं गुणैर्नाम्ना च निवेदितः। ततस्तस्याः सहसा समुद्भूतप्रेमरसाकुले हृदि अभिनवः स्मरतरुरुदपद्यत। अथागतेन तस्याः पित्रा राज्ञा स विलोक्य उन्मत्तः, अहञ्च क्रोधात् तस्मात् गृहात् निष्कासितः। ततः प्रभृति सा राजबाला उन्मना दिने दिने क्षीयमाणा कृष्णपक्षे शशिकलेव लावण्यशेषतामगात्। सा इदानीं व्याजात् पापघ्नं हरेरायतनम् आश्रित्य पितुरनुज्ञया युक्त्या विजनसेविनी भवच्चित्ता विनिद्रा चन्द्रातपमपि सोढुमशक्ता निशावासरयोरजानन्ती तस्थौ। एकदा तत्र कार्य्यवशात् प्रविष्टं मां विलोक्य सा समाहूय वस्त्राभरणैः सगौरवमपूजयत्। निर्गतश्चाहं तद्दत्तवसनाञ्चले त्वत्कृते गाथां लिखितामपश्यं, शृणु देव! तां पुनः। हंसावली पद्मासादनार्थं समुत्सुकविविधमुखरद्विजावलिगीतं कमलाकरमप्राप्य क्व रतिं लभताम्? ततश्चाहं तस्याः सुनिश्चयमवेत्य देवं बोधयितुम् एतां गाथां पुरत एवापठम्। इदञ्च तद्वस्त्रं यत्रैषा गाथा तया लिखिता। इति वन्दिनो वचनं श्रुत्वा ताञ्च गाथां प्रविलोक्य श्रोत्रेण च नेत्रेण च हृदयं प्रविष्टामिव तां ध्यायन् स राजपुत्रो जहर्ष। यावच्च तत्प्राप्तये उपायं समुत्सुक-

श्चिन्तयति, तावत् तस्य पिता नृपतिस्तमाहूय अभाषत, पुत्र! अलसा राजानो मन्त्रंहता इव उरगाः, न कथमपि उदयं लभन्ते। त्वया चाद्यापि सुखासक्तेन जिगीषा न दृष्टा, तस्मात् यदि तिष्ठति आलस्यं छित्वा उद्युक्तो भव, विजयस्व च त्वमग्रतो गत्वा रिपुमङ्गराजम्। स कमलाकरः हृष्टः प्रियां हंसावलीं प्रति यियासुः तत् पितृवचः तथेति प्रत्यपद्यत। ततः पित्रा समादिष्टः प्राज्ञैः सचिवैः सह स राजपुत्रः महीं द्विषां हृदयानि चाकम्पयन् प्रथममङ्गदेशं प्रययौ। तत्र च गत्वा तस्याङ्गाधिपस्य चमूमवस्कन्द्य भङ्गेन तेन सह अयुध्यत। तेजस्वी स राजसुतः अब्धेर्जलमिव रविस्तस्य विद्विषो बलं पपौ, जग्राह च तं जीवग्राहं जवेन। प्रजिघाय च संयम्य पितुरन्तिकं तं रिपुम्। ततश्च प्रतीहारस्य धुर्यस्य हस्ते आनुयात्रिकान् निक्षिप्य तात! अहमन्यान् रिपून् जेतुमितोऽधुना गच्छामीति तन्मुखेन पितुः सन्दिदेश। ततः क्रमेण अन्यान् रिपून् जयन् बलैरुपचितो विदिशां पुरीमुपाजगाम। तस्याश्चान्तिके स्थितश्च मेघमालिने तदधिपतये तां हंसावलीं तदात्मजां याचितुं दूतं व्यसृजत्। सोऽपि मेघमाली तमदृष्टं कन्यार्थमागतं राजसुतं बुद्ध्वा प्रीत्या तत्पार्श्वं स्वयमाययौ, अब्रवीच्च कृतादरः कृतातिथ्यं तं राजसुतम्। वत्स! दूतसाध्ये अर्थे किं त्वया परिश्रमः कृतः? ममाभीष्टमेतत्, अत्र च कारणं निशम्यताम्, एतां हंसावलीं बाल्ये नारायणार्चनरतां शिरोमुकुन्दाराङ्गीं दृष्ट्वा अहमचिन्तयम्, ईदृग्गुणायां तस्याः को वरो

भवितेति। ततश्च सदृशं वरमपश्यतो मे तच्चिन्तया विनिद्रस्य महान् ज्वरः समुदपादि। एवं विनिद्रं सततं चिन्तयन्तं रात्रौ ईषत् सुप्तं मामेकदा हरिः स्वप्ने समादिशत्, पुत्र ! यस्याः कृते तव एष ज्वरो जातः, सैव हंसावली पाणिना त्वां स्पृशतु, ततस्ते ज्वरः शाम्यति। यश्चैषा मत्पूजापावनेन पाणिना स्पृशेत् तस्य असाध्योऽपि ज्वरः निःसंशयं प्रणश्येत्। अस्याश्च वैवाहिकी चिन्ता त्वया न कार्य्या। यतः राजपुत्रः कमलाकरोऽस्याः पतिर्भविता, कश्चित् कालमेतस्या मनाक् क्लेशः सम्भविष्यति। इति भगवतादिष्टः प्रातः प्रबुद्धः हंसावल्याः करस्पर्शात् विगतज्वरोऽस्मि। एवमुक्त्वा स राजा यथागतं ययौ। एतदाकर्ण्य तेन राजपुत्रेण कमलाकरेण हंसावलीकमलाकरयोरेष संयोगो देवनिरूपित इति निरधारि। ततो मेघमालिनि हंसावली मया कमलाकराय देयेति निश्चित्य लग्नं निरूप्य च स्थिते सा हंसावली रहस्यज्ञां *कनकमञ्जरीं नाम सखीं रहसि आह स्म, कनकमञ्जरि ! त्वया गत्वा असौ राजपुत्रः दृश्यतां स एव, येन चित्रलिखितेन मे मनो हृतम्। कदाचित् तातः अन्यस्मै सबलाय आगताय तन्नामधेयाय मां दद्यात्। इत्युक्त्वा स्वैरं प्रेषिता सा कनकमञ्जरी साक्षसूत्राजिनजटं तापसीवेशं विधाय राजपुत्रस्य कटकं गत्वा परिजनैरावेदिता प्रविश्यैव तदन्तिकं, तं कामस्य जगज्जैत्रमोहनास्त्राधिदैवतमिव विलोक्य तत्क्षणं तदायत्तचित्ताभूत्। उत्कण्ठिता चाचिन्तयत् यद्यनेन मे सङ्गमो न स्यात् तदा जन्म मे धिक्, तदयुक्तमत्र करिष्यामि यद्भवतु तद्भवतु इति।

अथ उपसृत्य कृतप्रणामस्तस्मै मणिमेकमुपानयत्, उवाच च उपविष्टम् भास्वरमकृतादरम्। मया अयम् असकृत् दृष्टगुणो मणिश्रेष्ठः, अनेन धारितेन अन्नोत्तमं अन्नं लभ्यते। गुणारागाच्च एषः तुभ्यं समर्पितः। हे राजपुत्र! एष मणिर्यथा तव उपयुज्यते तथा न मम। एवमुक्तवती सा तेन राजपुत्रेण आतिथ्याय अन्वरुध्यत। सा तु एकभिक्षाव्रतव्यपदेशेन अनुरुद्धाऽपि तत्क्षणमपययौ। ततः सा तापसीवेशं विमुच्य सुखमुद्विग्नमिव कृत्वा हंसावलीमुपागात्, अब्रवीच्च तया पृष्टा वृत्तान्तमनृतवचसा। भर्तृदारिके! अवाच्यमपि राजरहस्यं तव भक्तितो ब्रवीमि, इतो मां तापसीवेशं विधाय तत्कटकमध्ये गतां दृष्ट्वा एकः स्वैरं मां शनैरभ्यधात्, भगवति! भूततन्त्रविधिक्रमम् अभिजानासि? तदाकर्ण्य तं प्रतीहारमिव दृष्ट्वाहमब्रुवं, सम्यक् जानामि, अकिञ्चिदेतत् वस्तु इति। ततस्तेन तत्क्षणम् अहं राजपुत्रस्य कमलाकरस्यान्तिकं प्रवेशिता। स च मया राजपुत्रः अरण्यभूताविष्ट इव पार्श्वस्थैराप्तैरधिष्ठितः। अहम् अलोकरक्षाविधिमास्थाय तत्क्षणात् प्रातरेत्य दोषमिमममपनेष्यामीति वादिनी ततो निरगाम्। एवं दृष्ट्वा दुःखिता तवाख्यातुमागतास्मि, अतः परं ते यथारुचि तथा विधीयतामिति। एतदाकर्ण्य दारुणं वज्रपातसदृशं वचः, सरला हंसावली तत्क्षणं मोहिता कियन्तं कालं तस्थौ, उवाच च प्राप्तचेतना तां, सखि! अहो धिक्? गुणवत्यां स्वसृष्टावपि धातुर्मत्सर? इन्दोः कलङ्कः तस्य च दोषः येन निर्मितः। स एव मे भर्ता वृतः, न शक्यमत्रा-

न्यथा कर्त्तुं तस्मान्मे मरणं वा वनगमनं श्रेयः, तत् किं कार्य्यं वद इति मुग्धया तया उक्ता सा सखी पुनरवादीत्, राजपुत्रि अस्त्यत्रैकोऽभ्युपायः यदेकां सखीं त्वद्वेशां तत्र तादृशव्याकुले जने निधाय क्वापि आवां निर्गत्य यास्याव इति। तदाकर्ण्य राजपुत्री अब्रवीत्, तर्हि त्वमेव आप्ता सखी, मदीयं वेशं कृत्वा तेन राजसुतेन आत्मानं विवाहय इति। सापि पापा एवमभिहिता तया राजदुहित्रा कनकमञ्जरी तां सरलामवादीत्, एवं करिष्ये, त्वमाश्वस्ता भव, यदस्तु तदस्तु, अहन्तु तत्कालं यथा वक्ष्ये, तथैव त्वं कुर्वीथाः। एवं कार्य्यसंविदं कृत्वा सा कुचेटी तां हंसावलीं विमनसं कृत्वा तयेव सह तानि अहानि अतिष्ठत्।

अथ शुभे लग्ने प्राप्ते वरे च सायमुपागते गजाश्वपादातसहिते कमलाकरे सर्वस्मिंश्च जने उत्सवव्यग्रे युक्त्या अन्यचेटिका वासगृहात् निवार्य्य कमपि गुप्तदेशं हंसावलीं प्रवेश्य आत्मानञ्च तद्वेशेनालङ्कृत्य तां राजनन्दिनीम् अशोककरीवेशां विधाय च सा कुसखी कनकमञ्जरी निशागमे तां हंसावलीमुवाच, सखि! पश्चिमेन द्वारेण निर्गत्य अस्मात् पुरात् वहिः क्रोशमात्रे अतिपुराणः सुषिराः यः शाल्मलितरुरस्ति तस्याभ्यन्तरे गत्वा मदागमनं प्रतीक्षस्व। कार्य्ये चानुष्ठिते अहं निश्चितं त्वदन्तिकं यास्यामि। इत्युक्ता तया व्याजसख्या सा हंसावली तत्सखीवेशा तस्यामेव निशि अन्तःपुरात् निरगात्। प्रापच्च तेन जनाकीर्णेन पुरद्वारेण अलक्षिता निर्गम्य तस्यैव शाल्मलिद्रुमस्य मूलम्। अथ सा तद्गर्भमन्धकारगहनं

दृष्ट्वा नाविशत् परं बिभ्यती तत्समीपस्थं वटतरुमारोह्य, अतिष्ठच्च तत्पल्लवच्छन्ना कुसख्यास्तस्यामार्गमवेक्षमाणा। न च तां तस्याः कुसख्याः कुप्रवृत्तिं सरलाशया बुबुधे।

एतस्मिन्नन्तरे राजकुले सुलग्ने उपस्थिते राज्ञा आनाय्य हंसावलीवेशां कनकमञ्जरीं विवाहवेदिकामारोपितां केनाप्यलक्षितां निशि कमलाकरः पर्य्यणैषीत्। ततश्च कृतोद्वाहः तां व्याजहंसावलीं गृहीत्वा अशोककर्य्या सहितां सद्य एव शुभनक्षत्रवशात् तेनैव पुरद्वारमार्गेण स्वकटकं प्रति प्रययौ। गच्छंश्च तस्यैव शाल्मलितरोर्मूलं प्राप, यस्य समीपे विप्रलब्धा सा हंसावली वटतरुमाश्रित्य स्थिता। तत्र प्राप्तञ्च तं कमलाकरं सा कूटहंसावली हस्तिपृष्ठगामिनी तस्यैव अलिम्पत्। ततः सम्भ्रमात् तेन राजपुत्रेण पृष्टा सा कैतवात् साश्रुमुखी प्राब्रवीत्, आर्य्यपुत्र! अद्य अहं स्वप्ने ज्ञातवती, यदत्र अस्मात् शाल्मलितरोर्निर्गत्य कापि राक्षसी सहसा मां भक्षयितुमग्रहीत्। ततश्च केनापि ब्राह्मणेन कृपालुना प्रधाव्य अहं मोचितास्मि। तेन चाश्वास्य अहमुक्ता, पुत्रि! अमुं तरुं दाहयेः, एतस्माच्च यदि कापि स्त्री निर्गच्छेत् सापि तत्र हुताशने क्षेप्तव्या, एवं कृते शिवं स्यादित्युक्त्वा तस्मिन् तिरोहिते अहं प्रबुद्धास्मि, इमञ्च तरुं दृष्ट्वा अद्य तत् स्मृतं तेनाहमस्मि भीतेत्यभिहितस्तया कमलाकरः स्वान् भृत्यान् तयोस्तरुस्त्रियोर्दाहार्थमादिदेश। ते च तं शाल्मलिमदहन्। सा तु कूटहंसावली हंसावली अनिर्गच्छन्ती एव दग्धेति मत्वा महान्तं हर्षमवाप। स च कमलाकरः सत्व-

मेव हंसावली मया लब्धेति मत्वा सहर्षं कटकं ययौ। ततश्च प्रातरतित्वरया स्वां पुरीं कोसलां गत्वा पित्रा कृत-कार्य्यतया तुष्टेन राज्ये अभ्यषिच्यत।

अथ पितरि वनं याते स कमलाकरः तां व्याजहंसा-वलीं बिभ्रत् मेदिनीं शशास। सापि हंसावली तस्यां रात्रौ तत्र वटे स्थिता श्रुत्वा दृष्ट्वा च सर्वं वृत्तान्तं वञ्चिता-स्मीति बुबुधे। चिन्तयामास च अहो मग्नाहमन्धकूपे तया कुसख्या मे पतिश्छद्मना हृतः। हा मां दग्धुमपि अवतिष्ट निर्वृतिलाभाय। दुर्जने जने विश्वासः कस्य नाश्रेयसे? तदस्य मदर्थं दग्धस्य शाल्मलेरङ्गारार्च्चिषि अभव्यमात्मानं क्षिपामि इत्यालोच्य वटादवरुह्य प्राणत्यागोन्मुखी अपि विधियोगात् सञ्जातबुद्धिरित्थं व्यमृशत्, कथमहं वृथा आत्मानं त्यजामि, जीविता अविलम्बितमेव तस्याः कुसख्याः प्रतिक्रियां कर्त्तुं पारयामि, तातस्तु तदा स्वप्ने ज्वराक्रान्तं यत्कारणमर्मांसे रोगशान्तिर्भवितेति समादिश्य देवेनोक्तमिदं यथा हंसावली कमलाकरं पतिमाप्स्यति, परमस्याः सम्प्रति मनाक् क्लेशो भविष्यतीति। तद् गत्वा क्वापि तिष्ठामीत्यवधार्य्य सा निर्जनामरण्यानीं प्रति प्रातिष्ठत। दूरं गतायाः क्लान्तायाः स्खलद्गतेस्तस्याः कृपयेव सा निशा मार्गप्रकटनाय व्यपगमत्। तद्दर्शनेन च सञ्जात-कृपावेशेव चौर्य्यावदाश्रववारीषि ससुव्रत्। तदश्रुमार्ज-नार्थमिव रविः प्रसारितकरः समुदगात्। ततः सा प्रच्छन्न-वेशा निरस्तजनदर्शना उत्पथैः यान्ती कुशकण्टकविक्षताङ्गी अनकैश्चिरात् एकमरण्यमाससाद। तत्र चागत्य समुद्विग्ना

अचिन्तयत् यद्यपि पुष्परेणुपिशङ्गोऽयं मलयानिलः मां दहति, तदभ्यत इमे कुसुमोत्करा निपतन्तः मदतनु अलिषु कामशरसङ्घा इव मां भिन्दन्ति, तथापि एभिः कुसुमैः रमापतिमाराधयन्ती इहैव स्वदुष्कृतं क्षपयितुं तिष्ठामि। इति सञ्चिन्त्य सा राजपुत्री तत्र स्नातस्नाना देवमर्चयन्ती फलमूलाशना तस्थौ।

अत्रान्तरे कोसलायां दैवयोगात् चातुर्थकः महान् ज्वरः कमलाकरमग्रहीत्। तदवलोक्य सा पापा कनकमञ्जरी भीता अचिन्तयत्, एकं तावत् भयं मे अत्रान्तःपुरे अशोककर्य्याः सख्याः। पूर्वमस्मत्प्रभोः सकाशे हंसावलीपिता ज्वरनाशनं तत्करस्पर्शमाचचक्षे, यदि स तत् स्मरेत् वा इयं मे सखी स्मारयेत् तदा सर्वोऽयं मन्त्रः भेदं गमिष्यति, मम च सर्वनाशो भविता, तदहं कयापि योगिन्या पूर्वं दत्तं ज्वरघ्नं मन्त्रं साधयामि, नाशयामि च युक्त्या इमामशोककरीम् एवं राज्ञो ज्वरे नाशिते तस्याश्च अशोककर्य्यां नाशितायां मे उभे भये शाम्येताम् अन्यथा न शिवं पश्यामीति आलोच्य तस्यै अशोककर्य्यै अविवदं स्वमनीषितं शशंस। ततः सा तया अशोककर्य्या समं युक्त्या निशि परिच्छदं कृत्वा वह्निर्द्वारेण निर्गत्य नगराद् वहिः क्वचित् शिवालये शून्यैकलिङ्गे खड्गपाणिः समेत्य तेन खड्गेन एकं छागं हत्वा तदीयेन हृत्पद्मेन तस्यां निशि शिवलिङ्गं तदानर्च। ततः तदक्षिभ्यां धूपं दत्त्वा तदीयं शिरः बलिमदात्। ततश्च तदग्रवेद्यां रक्तचन्दनलिप्तायां गोरोचनया अष्टदलं कमलं लिलेख। विदधे च तत् कर्णिकायां पिष्टेन

रचितं त्रिपादं त्रिमुखं भस्ममुष्टिप्रहरणं ज्वरम्। अथ पत्रेषु अष्टसु ज्वरस्य सर्वान् परिवारान् यथाविधि विलिख्य मन्त्रेण ज्वरमावाहयामास। ततः सा तस्य पूर्ववत् अर्घ्यादिकं विधाय मानुषाङ्गैरस्योपहारिकं कर्तुं तामशोककरीमब्रवीत्, सखि! साम्प्रतं देवस्य सर्वाङ्गं भूतले न्यस्तं नत् प्रणम भगवन्तं, श्रेयस्ते भूयादिति। ततः सा दुराशया तथेति प्रणताया अशोकमञ्जर्य्या उपरि खड्गप्रहारमदात्। सा भृशं प्रहृता त्रायध्वमिति मुहुः यावत् रोदिति तावत् नगररक्षिणस्तामभ्यधावन्, चक्रुश्च तामाकृष्टखड्गां भीमां कनकमञ्जरीं दृष्ट्वा राक्षसीबुद्ध्या मृतकल्पाम्। ततश्च ते अशोककरीमुखात् सर्वमामूलात् वृत्तान्तमाकर्ण्य तां पापां राजकुलं निन्युः। तत्र तैर्विज्ञप्तः राजा कमलाकरः सम्भ्रान्तः तां भार्य्यां ताञ्च अशोककरीं स्वसमीपमानाययत्। तयोश्चानीतयोः कनकमञ्जरी तीव्रया प्रहारव्यथया भीत्या च मध्य एव समुत्क्रान्तजीवितासीत्। ततो राजा तां व्रणितां तत् सखीमशोककरीं किमिदं निर्भया ब्रूहीति अतिदुर्मनाः पर्य्यपृच्छत्। सा च तस्मै सर्वमामूलात् वृत्तान्तमवर्णयत्। श्रुत्वा च सर्वं वृत्तान्तं राजा कमलाकरः अधिगततत्त्वार्थः तत्कालमतिदुःखितः आत्मानं शुशोच। अहो कूटहंसावल्या अनयाहं विप्रलब्धोऽस्मि मूढेन मया स्वहस्तेन प्रिया मे हंसावली दग्धा, अनया पापया स्वदुष्कृतफलं लब्धं, कथं रूपमात्रेणाहं शिशुरिव संमोह्य काचेन कुवेधसा हृतरत्नेन मुषितः? ज्वरशान्तये च मया तदादेशः विष्णुना दत्तः न स्मृतः।

एवं विलपन् स कमलाकरः पुनर्व्यमृषत् हंसावली पतिं मां प्राप्स्यति, मनाक् च तस्याः क्लेशो भवितेति मेघमाली विष्णोरादेशं कथयामास। तत् पित्रा च मे एतत् सर्वं सर्वसमक्षं कथितं तच्च कदापि नैव मृषा भविष्यति तत् सा हंसावली क्वापि स्थिता अवश्यं जीवति, स्वौचित्त्यस्य व देवस्य विचित्रां गतिं को वेत्ति? तस्मात् मनोरथसिद्धि-र्नाम स वन्दी मे मतिरित्यालोच्य तं वन्दिनमानाययत्। अब्रवीच्च भद्र! भवान् यथा मम हितकरः, तथा मान्यो दृश्यते, ये धूर्त्तैर्वञ्चिताः तेषां क्व मनोरथसिद्धिः? तदा-कर्ण्य सोऽब्रवीत् देव! एषा अशोकरी एव मन्त्रभेदभया-सह्ना ममोत्तरं न च हंसावलीकृते त्वया विषादः कार्य्यः, हरिणैवास्या आदिष्टं किञ्चित् कालं दुःखम्। स एव भगवान् नित्याराधनतुष्टस्तां सततं रचति, धर्मो हि नैव कदाचित् वैफल्यमियात्। देव! अहं तावत् तस्या उपलब्धये यास्यामि। एवं तेन वन्दिनाभिहितः चितिपः समभ्यधात् अहमात्मना त्वया सह तामन्वेष्टुः यास्यामि, अन्यथा मे चेतः क्षणमपि न स्थिरतामापद्यते। एवमुक्त्वा अन्येद्युः प्रज्ञाढ्यस्य मन्त्रिणो हस्ते राज्यं निक्षिप्य वार्य्य-माणोऽपि तेन नगर्य्याः प्रययौ। निर्गत्य च तेन मनोरथ-सिद्धिना सह वनानि क्षेत्राणि आश्रमांश्च विचिन्वन् बभ्राम।

क्रमेण च पर्य्यटन् यत्र सा हंसावली स्थिता तदेव वनमाससाद ददर्श च कस्यचिदशोकपादपस्य मूले तप-स्यन्तीम् अन्यामिव शशिकलां क्षामां पाण्डुमनोरमां

हंसावलीम्। उवाच च तं वन्दिनं भद्र! केयं निःशब्द-निश्चला देवता किं स्यात्? अमानुषमस्या रूपं दृश्यते, तदाकर्ण्य दृष्ट्वा च स वन्दी सहर्षमब्रवीत् देव! दिष्ट्या वर्द्धसे, प्राप्ता हंसावली इति एतदाकर्ण्य हंसावली तौ प्रेक्ष्य तं वन्दिनं प्रत्यभिज्ञाय नवीभूतदुःखा चक्रन्द। हा हा! हा हतास्मि! आर्य्यपुत्र कमलाकर! हा मनोरथ-सिद्धे! हा विपरीतविधे! इत्येवं विलपन्ती सा तत्क्षणं मुमोह। स च कमलाकरः तां तथाभूतां दृष्ट्वा श्रुत्वा च दुःखार्त्तः सद्यो भूमौ पपात। ततस्तेन मनोरथसिद्धिना आश्वासितौ तौ हंसावलीकमलाकरौ निश्चितं परस्परं विज्ञाय सुनिर्वृत्तौ वियोगार्णवोत्तीर्णौ कामपि मुद-मवापतुः। ऊचतुश्चान्योऽन्यं स्वं स्वं वृत्तान्तम्। ततः स कमलाकरस्तां हंसावलीं गृहीत्वा तेन वन्दिना सहितः स्वां पुरीं कोशलां ययौ। आगत्य च तत् पितरं मेघ-मालिनं सबन्धुमानीय निवेदितवृत्तान्तः यथाविधि तस्याः हंसावल्याः पाणिमग्रहीत् अरंस्त च तया साध्व्या साकं सिद्धमनोरथश्च मनोरथसिद्धिना सहितः पृथिवीमशासत्। इत्थमापदि अत्यक्तधैर्य्यः सर्वमापद्यते। तस्मात् वत्स! तनुं मात्याक्षीः, जीवन् तं पतिं प्राप्स्यसि देव! स वृद्ध-पथिकः मामित्यमाख्याय मरणान्निवार्य्य यथाकामं प्रययौ। इत्युक्त्वा तत्र चण्डकेतुगृहे स भीमपराक्रमः पुन-र्मृगाङ्कदत्तमवादीत्। अथ त्वदाशये लब्धोपदेशस्तस्या अटव्याः जिगमिषितामुज्जयिनीं प्रत्येव यात्रामकरवम्। ततो भवन्तमप्राप्य श्रान्तः कस्याश्चित् स्त्रिया गृहे भोजन-

मूल्यं दत्त्वा वासाय प्राविशम्। तत्र तया दत्तमशनं भुक्त्वा श्रमात् सुप्तः। अथ प्रबुध्य कौतुकात् निभृतं स्थितः तस्याः व्यापारं यावत् पश्यामि तावत् सा गृहान्तरे यवमुष्टिं गृहीत्वा मन्त्रेण समन्तात् अवपत्। तैश्च यवैस्तत् क्षणात् जातैः फलितैः पक्वैः लूनैः भृष्टैः पिष्टैश्च तया सक्तवो विहिताः, तांश्च सक्तून् कांस्यपात्रे निधाय अद्भिकञ्चितान् कृत्वा सा स्नानाय द्रुत निरगात्। ततोऽहं तां शाकिनीं मत्वा स्वैरमुत्थाय सत्वरम् अन्यत्र सक्तुभाण्डे तान् आर्द्रान् सक्तून् न्यधाम्। ततो मयि भूयस्तथैव शयनमाश्रिते सा योषित् प्रविश्य मामुत्थाप्य तान् सक्तून् मे भोजनाय पात्रशः प्रादात् अभुनक् च स्वयं तस्मात् भाण्डतः सक्तून् गृहीत्वा अल्पशः। ततः सा तान् सिद्धसक्तून् अविदित्वा भुक्तैस्तैः सहसा छागी समपद्यत। ततो मया सा नीत्वा शौनिकस्य विक्रीता। ततः शौनिकभार्य्या मामुपेत्य क्रुधा अवोचत् दुरात्मन् मत्सखी त्वया विप्रलब्धा, तदवश्यं त्वया अस्य फलं प्राप्तव्यम्। इत्थं तया तर्जितोऽहं तस्मात् वहिर्गत्वा श्रान्तः कस्यचित् न्यग्रोधपादपस्य मूले शयितोऽस्मि। तथा स्थितस्य मे तत्र तया शौनिकभार्य्यया समेत्य गले सूत्रकं बद्धम्। अथ तस्यां पापायां गतायाम् अहं प्रबुद्धस्तत् क्षणं मयूरः स्थितस्मृतिः समभवम्। ततः कतिचिद् दिनानि समुद्विग्नः समन्तात् भ्रमन् एकदा एकदा शाकुनिकेन केनचित् धृतो गृहं नीतश्च। स चानीय मामस्मै चण्डकेतवे ददाति स्म। भिल्लराजोऽपि तं मां प्रतीहारमुख्याय अस्मै प्राभृतीचकार। प्रती-

हारोऽपि मां तदैव स्वभार्य्यायै समर्पयत्। तयाहं मण्डपे क्रीड़नार्थं रचितः, अद्य तु दैवात् त्वयात्रागतेन कण्ठ-सूत्रके मोचित एव तां मानुषीं तनुं प्राप्तोऽस्मि देव! तदितोऽधुना यथा कामं गच्छावः असौ हि प्रतीहारो प्रायशो रात्रिचर्य्यासखीन् रहस्यभेदभयात् निहन्ति, तत्सानीतोऽनेन, रात्रिचर्य्या चास्य त्वया दृष्टा, तदधुना प्रभो! इदं योगिनीनिर्मितं कण्ठसूत्रं बद्धा गवाक्षे-णामूना बहिर्गच्छतु भवान्, ततोऽहं प्रसारितभुजस्तव कण्ठात् उन्मुच्य उच्छ्रितं तत् सूत्रं कण्ठे बद्धा निर्गमि-ष्यामि। अथ त्वया मे कण्ठात् तस्मिन् सूत्रे मुक्ते उभौ प्रकृतिस्थौ भविष्यावः। बहिरर्गलबद्धतया द्वारेणावयो-र्निर्गमो नास्ति। एवमुक्तवति तस्मिन् प्राज्ञे भीमपराक्रमे मृगाङ्कदत्तस्तथेति तस्मात् निरगात्। ततश्चोभौ मृगाङ्क-दत्तभीमपराक्रमौ स्थितान्य सचिवद्वयं स्वनिलयमगाताम्। तत्र सर्वे ते तत्तद्वृत्तान्तवर्णनैः प्रहृष्टास्तां निशां निन्युः। प्रातश्च मृगाङ्कदत्तस्तस्य मायावटोर्भिल्लराजस्यान्तिक-माजगाम। मायावटुश्च रात्रिसौख्यवृत्तान्तं पृष्ट्वा तं राज-पुत्रं विनोदयन् अक्षैः क्रीड़ामः एहीति अभाषत। ततस्तं स प्रतीहारः तं भिल्लमागतं दृष्ट्वा मृगाङ्कदत्तस्य सखा स श्रुतधिरब्रवीत् किं विस्मृतं भवद्भिः अद्य प्रती-हारमयूरस्य नर्त्तनं भावि, उक्तं हि, तेन तदिति। श्रुत्वे-तद् शबरेश्वरः स्मृत्वा कौतुकात् तं प्रतीहारं मयूरानयनाय प्राहिणोत्। कथं मया प्रमादात् विस्मृतं स चौरो मया न हतः, स खलु रात्रिरहस्यसाक्षी मयूरवेशश्चि

निर्विघ्नः। तद् यामि शोघ्नमुभयं करोमीति चिन्तयन् सत्वरं गृहमगात्। तत्र प्रविश्य च यावत् शिखिवेश्म वीक्षते, तावत् तत्र तं चौरं तञ्च मयूरं न ददर्श। अथ भीतिविषण्णो नृपं गत्वाब्रवीत् प्रभो! निशि स मयूरश्चौरेण मे हृत इति। स च महाचौरः प्रसिद्ध एव येन ते मयूरोऽहारि इति तत्र स्मितमुखेन श्रुतधिनोक्तम्। तदाकर्ण्य अन्योऽन्यमुखदर्शिनो मृगाङ्कादीन् दृष्ट्वा मायावटुस्तान् निर्बन्धात् किमेतदिति परिपृष्टवान्। ततः प्रतीहारेण तेन यथा रात्रौ सङ्गमः, यथा च स रात्रौ राजपत्न्या गृहं गत्वा प्रच्छन्नकामुकः शल्लकलिमकरोत्, यथा तस्य गृहप्राप्तिर्यथा च भीमपराक्रमः मोचितो मयूरभावात्, यथा च तस्मात् गृहात् निर्गमः इत्येतत् सर्वं प्रतीहारसम्बद्धं वृत्तं मृगाङ्कदत्तः शबरेन्द्राय यथावत् शशंस। तदाकर्ण्य स मायावटुः तत्क्षणं तां चेटिकां छुरिकापरिक्षतकरां कृत्वा भीमपराक्रमञ्च तया कण्ठसूत्रिकया भूयो मयूरं कृत्वा तस्मात् मयूरभावात् मोचयित्वा च शुद्धान्तविध्वंसिनं तं प्रतीहारं सपदि न्यवधीत्। तान्तु अविनीतां राज्ञीं मृगाङ्कदत्तेन बन्धनात् मोचितां मञ्जुमतीं निरवासयत्। अथ मृगाङ्कदत्तस्तत् पूजितः तस्यामेव शबरपल्ल्यां दिनानि कतिचित् शशाङ्कवत्या अधिगमाय कृतोद्योगः समस्तसुहृदागमनापेक्षी पर्य्यनैषीत्।

## अथ द्विसप्ततितमस्तरङ्गः ।



इत्थं विमलबुद्ध्यादिसहितस्तत्र यावत् मृगाङ्कदत्तस्तस्य भिल्लपतेः सद्मनि तिष्ठति तावत् तत् सन्निधावेत्य कश्चित् सेनापतिस्तं शबराधीशं ससंरम्भो व्यजिज्ञपत् प्रभो ! तवादेशात् भगवत्या उपहारार्थं विचिन्वन् कश्चित् पुरुषः अस्माभिः प्राप्तः । तेन चास्मद् वीराणां शतपञ्चक नाशितं, परं बहुभिरस्माभिर्विवशीकृतः आनीतः । तदाकर्ण्य स पुलिन्दराजस्तं सेनापतिमभाषत भद्र ! आशु सः अत्र प्रवेश्यतां दृश्यतां च । ततश्च यावत् प्रवेशितः स सर्वैः शस्त्रक्षताङ्गः रुधिराक्तकलेवरो दृश्यते, तावत् मृगाङ्कदत्तस्तं मन्त्रिणं स्वं गुणाकरं प्रत्यभिज्ञाय सत्वरं धावित्वा सहर्षं वाष्पपूर्णनयनः कण्ठे समग्रहीत् । स च भिल्लेन्द्रस्तं तस्य सखिभ्यः तं गुणाकरं बुद्ध्वा विनम्रः स्वप्रभोर्मृगाङ्कदत्तस्य पादपतितं समाश्वासयत् । गृहं प्रवेश्य स्नापयित्वा व्रणपट्टिकां बद्ध्वा च भिषगुपदिष्टैः पानभोजनैरुपाचरत् । ततो मृगाङ्कदत्तस्तं समाश्वस्तं स्वमन्त्रिणं सखे ! कथय ते वृत्तान्तमिति पप्रच्छ । अथ सर्वेषु शृण्वत्सु स गुणाकरः प्राब्रवीत् देव ! श्रूयतां वृत्तान्तं कथयामि, तदा नागशापेनाहं भवच्चरणारविन्द-

वियोजितः दुरन्तामटवीं भ्रमन् न किञ्चिदविदम्। चिराच्च प्राप्तबुद्धिर्दुःखितोऽहमचिन्तयम् अहो दुर्ललितस्य विधातुर्विचेष्टितम्। यः हर्म्यतले नियतमभ्यस्तस्थितिः, स अस्यां सन्तप्तसिकतायामटव्यां कथं खिद्येत। कथं वा ते वयस्या विचरेयुरिति विमृशन् दैवात् विन्ध्याटवीं पर्य्यटन् विन्ध्यवासिनीं प्राप्तवानस्मि। तस्या देव्या अहर्निश-मुपहृतानेकजीवं कृतान्तसदनमिव सदनं प्राविशम्। तत्र तां देवीं प्रणम्य कण्ठान्तर्गतनिस्त्रिंशपाणिमात्मोपहारिणं पुरुषमेकमपश्यम्। तदवलोक्य मे त्वद्वियोगिनः दुःखार्त्तस्य तथैवात्मोपहारेण देवीं तोषयितुं मतिरभवत्। ततश्च धावित्वा यावत् तत् खड्गमग्रहीषं तावत् कापि सकृपा तापसी दूरादभ्येत्य मां निवारयन्ती पृष्टवृत्तान्ता मां निजगाद, वत्स! मा साहसं कार्षीः मृतानामपि सङ्गमः पुनर्दृश्यते, किं पुनर्जीवतां, तदत्रैकां कथां शृणु।

अस्ति अहिच्छत्रेति विख्याता नगरी। पुरा तस्या-मुदयतुङ्गो नाम भूपतिरासीत्। तस्य कमलमतिर्नाम महान् प्रतीहारोऽवर्त्तत। तस्य विनीतमतिर्नाम असदृशः सुतोऽभूत्। समाहृत गुणेनापि सच्छिद्रेण मृणालेन कुटिलेन चापेन च तस्य तुल्यता नासीत्। कदाचित् सुधाधौत-प्रासादोपरिस्थिते मञ्चके स्थितः स विनीतमतिः निशामुखे उद्यन्तं शीतांशुमैक्षत। क्रमेण तन्मयूखनिकरैर्जगत् विराजितं दृष्ट्वा स विनीतमतिर्जातोल्लासो व्यचिन्तयत् अहो! चन्द्रिकया मार्गाः सुधयेव अवभासिताः दृश्यन्ते तदमीषु अहमेको गत्वा किं न विहरामि। इत्यालोच्यैव स धनु-

सौधगवाक्षैर्निर्गत्य पर्य्यटन् क्रोशमात्रं गत्वा अकस्मात् रोदनध्वनिमशृणोत्। रोदनशब्दानुसारेण च गत्वा कियद्-दूरे एकां दिव्यरूपां तरुमूलमाश्रित्य रुदतीं व्यलोकयत्। दृष्ट्वैव का त्वं कुत आयाता, कथं वा रोदिषि, शुभे! किमर्थं त्वया मुखेन्दुरश्रुमलिनीक्रियते, इत्युक्ता तेन सावोचत् अहं नागपतेः सुता विजयवती नाम, मम पिता गुणमाली नाम रणात् भ्रष्टः वासुकिना अधिराजेन, पाप! त्वं यस्मात् जितः, तस्मात् दासतां यास्यसीति। तच्छापात् कालजिह्वेन वैरिणा यक्षेण जित्वा आत्मनः पुष्पभारहारी दासः कृतः। तस्य पितुर्दुःखेनाहं तपसा गौरीमताषयम्। सा च भगवती प्रत्यक्षीभूय मामब्रवीत्, शृणु वत्से! अस्ति मानसस्य सरसोऽन्तरे महत् सहस्रदलस्फाटिकं दिव्यमम्बुजम्। यदर्ककरस्पर्शात् प्रकीर्णकान्ति सततं शेषस्य सहस्रफणारत्नपिञ्जरमिव शिरो विराजते।

एकदा वैश्रवणोऽत्र मानसे स्नात्वा तस्मिन्नम्बुजे सञ्जातश्रद्धः हरस्य आराधनम् आरब्धवान्। तस्मिंश्च काले तदनुगा यक्षास्तत्र सरसि चक्रहंसादिरूपैर्विजह्रुः। तत्र युष्मद्रिपोस्तस्य कालजिह्वस्य ज्येष्ठः विद्युज्जिह्व इति यक्षः प्रियया सह क्रीड़न् चक्राह्वरूपेण कुबेरस्य कराग्रस्थं अर्घ्यपात्रमपातयत्। ततः स धनपतिः क्रुद्धः शापेन तं सभार्य्यं चक्राह्वमेव चकार वियुयोज च रात्रौ प्रियया। ततश्च तदनुजः कालजिह्वः तत्प्रेयसीरूपं कृत्वा तं ज्येष्ठं विनोदयन् तत्रैव दासीकृतेन त्वत्पित्रा गन्धमालिना सह आस्ते, तद् पुत्रि! तत्र त्वया प्रतीहारसुतः अहिच्छत्रानिवासी

महावीरो विनीतमतिः साहसी प्रेष्यताम्। इममश्वं खड्गञ्च मया दत्तं गृहाण, आभ्यां तं यक्षं विजित्य स प्रवीरस्ते जनकं मोचयिष्यति, अश्व एतस्य खड्गोत्तमस्य स्वामी भविता स निखिलान् शत्रून् जित्वा महीतले राजा भविष्यति। एवमुक्त्वा अश्वं खड्गञ्च मह्यं दत्त्वा देवी सा तिरोदधे। अथाहं त्वत्प्रेरणार्थं क्रमेणाद्य देवीप्रसादात् निशि निर्गतं त्वां वीक्ष्य इहागता। आनीतवत्यस्मि च युक्त्या रुदितं संश्राव्य। हे सुभग! एतत् मे इष्टं संसाधय इति तया अभ्यर्थितः स विनीतमतिः तस्यास्तथेति प्रत्यपद्यत। सा च नागकन्या तत्क्षणं गत्वा तं जवनमश्वं तच्च खड्गरत्नमानीय तस्मै विनीतमतये समर्पितवती। सोऽपि गृहीत खड्गस्तमश्वमारुह्य तया सह प्रस्थितः क्षणादेव मानसं प्राप। दृष्ट्वा च तत्र तं यक्षं तच्च सेवकं गन्धमालिनं तस्य मुक्तये तान् क्षुद्रान् यक्षानुचरान् असिप्रहारेण व्यद्रावयत्। तद्दृष्ट्वा स कालजिह्वः तस्मात् सरसः मुक्तचक्राङ्कनाशरीरः कालमेघ इवोन्नदन् उत्तस्थौ।

अथ प्रवृत्ते सम्प्रहारे व्योम्नि उत्प्लुतं कालजिह्वं स विनीतमतिरुत्प्लुत्य सास्त्रः केशेषु अग्रहीत्। यावच्च तस्य शिरः खड्गेन छेत्तुमिच्छति तावत् स यक्षः कृपणं जल्पन् तं शरणमयासीत्। अदाच्च नीतिज्ञस्तस्मै स्वमङ्गुरीयकम्। मुमोच च प्रभुः दास्यात् तं गन्धमालिनम्। स च गन्धमाली मुदितस्तदा तस्मै तां विजयवतीं कन्यां दत्त्वा गृहमगात्। ततश्च प्रातः स विनीतमतिः खड्गमङ्गुरीयकमश्वं कन्याञ्चादाय गृहमाययौ। तत्र विदितवृत्तान्त-

तोषिणा पित्रा राज्ञा च अभिनन्दितः तां नागकन्यां परिणीतवान् ।

अथ कदाचित् पिता कमलमतिः तैश्चतुर्भिः रत्नैः स्वैगुणैश्च भूषितं तं रहसि समभ्यधात्, पुत्र ! इह उदय-तुङ्गस्य भूपते र्या कन्यास्ति उदयवती नाम सर्वविद्यासु शिक्षिता, अनेन राज्ञा तस्याः पणः कृतः, विप्रो वा चत्रियो वा यो वादेन एतां पराजयेत, तस्मै इमां दद्यामिति । अनया च वादेन अखिला वादिनः पराजिताः इयञ्च जग-दाश्चर्य्यरूपेण रूपेण अमराङ्गना अपि विजयते । त्वञ्च एक-वीरः चत्रियोवादी कथं तुष्णीं स्थितोऽसि ? इमां वादेन विजयस्व परिणयस्व च । इत्युक्तः तेन पित्रा स विनीतमतिः प्रत्यवादीत् तात ! पेशलाभिः स्त्रीभिः कथं मादृशां वादः ? तथापि त्वदादेशं करीष्यामीत्युदीरिते तेन, तत्पिता सहर्ष-स्तत्चणं राजसन्निधिमगमत् । अवदञ्च देव ! प्रातरद्य विनी-तमतिना राजपुत्रया समं वादः करिष्यते । अथ राज्ञि तथेति प्रतिपन्नार्थे स कमलमतिर्गृहमेत्य तस्मै विनीतमतये तथा-शंसत् । ततः प्रातस्तेन राजहंसेन स्वयमधिष्ठितां विद्वत्-सभाजिनीं स भास्वान् विनीतमतिर्लोकलोचनषट्पदैरभि-मुखैर्गुणिवृन्दैराश्रितैर्विलोक्यमानः भासयामास । चणा-न्तरे च सा उदयवती राजपुत्री आकृष्टा कामस्य धनुर्लतेव तत्राययौ । यदि इन्दुलेखा अम्बरे निर्दोषा निर्मला च स्यात् तदा मरकतासने निषण्णायास्तस्याः साम्यं भजेत् । अथ सा श्लक्ष्णया वाचा पूर्वपचानकरोत् । विनीतमतिश्च चणेन तान् अवद्यार्थसिद्धान्तान् कृत्वा तां सुमुखीं कन्यां

निरुत्तरीचकार। ततः सभ्यैः स्तुते तस्मिन् विनीतमतौ सा राजनन्दिनी आत्मनः पराजयेऽपि सद्भर्त्तृलाभात् पराजयं बह्वमन्यत। स चापि उदयतुङ्गो नृपतिः प्रहृष्टः तस्मै विनीतमतये वादपणनिर्जितां दुहितरं प्रददौ ततः विनीतमतिः राजदत्तरत्नपूर्णः ताभ्यां नागराजकन्याभ्यां सह सुखेनावतस्थौ।

एकदा द्यूतकरैरन्यैर्जितः स व्याकुलाशयः केनचिद् ब्राह्मणेनेत्य निर्बन्धात् भोजनमयाचत। ततः क्रुद्धः सः भृत्यस्य कर्णे कथयित्वा तेन भृत्येन वस्त्राच्छादितं सिकतापात्रमस्मै प्रादापयत्। स च विप्रः तद् गृहीत्वा गुरुत्वात् सहिरण्यं मत्वा प्रहृष्टः एकान्तं गत्वा तदुद्घाटयत्। ततो वालुकापूर्णं तत् दृष्ट्वैव धरणीतले निक्षिप्य विप्रलब्धोऽस्मीति विषण्णः स्वगृहमगात्। विनीतमतिरपि अविविच्य एतत् विमुच्य स्वगृहेषु प्रियासखः यथाकामं द्यूतमसेवत।

अथ गच्छति काले जरसा विश्लिष्टसन्धिबन्धः स राजा उदयतुङ्गः राज्यभारमुद्वोढुमक्षमोऽभवत्। ततः स जामातरं विनीतमतिं राज्ये अभिषिच्य अपुत्रः देहत्यागाय गङ्गां ययौ। स च विनीतमतिः प्राप्तराज्यः नचिरादेव तेनाश्वखड्गप्रभावेण दश दिशो जिगाय। तस्य च ईतिघ्नस्य अङ्गुरीयकस्य प्रभावात् तस्य राज्यं रघुपतेरिव नीरोगदुर्भिक्षमभूत्।

एकदा कश्चिद् भिक्षुर्देशान्तरात् तमभ्याययौ। आगत्य च कृतातिथ्यस्तं गुणिप्रियं राजानं वादार्थं प्रार्थयामास असौ च पणम्। राजेन्द्र! त्वया जितेन सुगतस्य शासनं

मासं ...ता तु जितेन चीवरं संत्यज्य विप्राः सेव्या इति एतदर्थं स राजा विनीतमतिस्तथेति प्रतिज्ञाय तेन सह वादमकरोत्। इत्थं सप्तसु दिनेषु वादेनातिक्रान्तेषु अष्टमेऽहनि स भिक्षुस्तं महीपतिं वादेन जिगाय येन उदयवती राजकुमारी वादिमुण्डमुद्गरिका जिता। ततस्तेन भिक्षुणा सौगतेन उपदिष्टं सत्त्वोपकारपुण्याढ्यं शासनं जातश्रद्धो जग्राह। चकार च जिनपूजापरश्च भिक्षूणां ब्राह्मणादीनां सर्वेषां विहारसत्रवसतीः। ययाचे च शान्तमतिस्तं भिक्षुं बोधिसत्त्वचर्य्यामाशां सर्वोपकारिणीम्। भिक्षुरब्रवीत्, राजन्! विगतकल्मषैर्बोधिसत्त्वचरितैर्व्यवहर्त्तव्यं नेतरैः, तान्येवास्मादृशां लक्ष्याणि, नास्ति तेषु किमपि किल्बिषं, किन्तु त्वं सुयुक्त्या अन्विष्य शममवलम्बस्व। इत्युक्त्वा स भिक्षुः तस्मै स्वप्नं प्रमाणमुपादिशत् सोऽपि नृपः रात्रौ स्वप्नं दृष्ट्वा प्रातस्तं भिक्षुमभ्यधात्, आचार्य्य! अद्याहं परलोकं गतः, तत्र क्षुधार्त्तं मां दण्डिनः पुरुषा अब्रुवन्, राजन्! एताभूयसीरर्जिताः स्वप्नवालुका भुङ्क्ष्व यास्त्वया प्राक् क्षुधिताय अर्थिने ब्राह्मणाय दत्ताः। दश स्वर्णकोटीर्दत्त्वा अस्मात् पापात् विमोक्ष्यसे। इति दण्डपाणिनारुणा उक्तं निशम्य एव प्रबुद्धः प्रातराचार्य्याय तं स्वप्नवृत्तमाख्याय दश स्वर्णकोटीरर्थिभ्यः प्रादात्। पुनश्च स्वप्नमनुभूय उत्थाय आचार्य्याय भिक्षवे अवर्णयत् अद्यापि परत्र क्षुधितस्य मे तैः पुम्भिः वालुकाभोजनं दत्तम्। कथमहं दत्तेऽपि दाने इमाः सिकता भोक्ष्यामीति मयोक्ते ते मां वदन्ति स्म तत्ते दानं निष्फलं, यतस्तत्रैकं ब्राह्मणस्य सुवर्णमासीत्।

एतत् श्रुत्वा प्रबुद्धोऽहमिति स स्वप्नमुद्दीर्य्य राजा पुनरर्थिभ्यः दश स्वर्णकोटीः प्रायच्छत् पुनरपि रात्रौ स्वप्नं दृष्ट्वा च प्रबुध्य पुनरवर्णयत्। यथापि तैः मे सिकताशनं प्रदत्तं पृष्टैर्वं मया तैरुक्तम्, राजन्! तदपि ते दानं विफलं जातं यतः दस्युभिरटव्यां तव देशे मुषित्वा अहोता स ब्राह्मणो निहतः, न च त्वया तस्य रक्षार्थं यत्नः कृतः, तत्त्वया अद्य द्विगुणं देयमिति श्रुत्वा प्रबुद्धोऽहमिति स तस्मै भिक्षवे कथयित्वा पुनरपि तद्द्विगुणं दानं ददौ। ततस्तं भिक्षुं जगाद आचार्य्य! कथमीदृशो बहुच्छिद्रो धर्मो मादृशैरनुपाल्यः स्यात्। भिक्षुरब्रवीत्, देव! एतावता धर्मरक्षणविधौ अनुत्साहिनीमतिर्न कार्य्या। धीरान् उत्साहसम्पन्नान् धर्मादविचालिनो जनान् देवता अभिरक्षन्ति पुष्णन्ति च एषां वाञ्छितम्। राजन्! त्वया भगवतो बोधिसत्त्वस्य वाराहं न श्रुतं तदिदानीं श्रूयताम्।

पुरासीत् विन्ध्याद्रेर्गुहायां कश्चित् बुद्धांशसम्भवो वराहः सुहृदा मर्कटेन समम्। स सर्वसत्त्वहितकृत् तेन सख्या युतः सदा अतिथीन् पूजयन् स्वोचितैर्नियमैः कालमनयत्। एकदा तत्र पञ्च वासरान् दुर्द्दिनमभवत्। तत्र अविच्छिन्नजलधारया प्राणिनां यावत् दुःखमभूत् तत् केनापि वर्णयितुं शक्यते। पञ्चमेऽहनि निशि कपिना बन्धुना सहितस्य सुप्तस्य वराहस्य गुहाद्वारि कश्चित् भार्य्यासुतयुतः सिंहः समाययौ। स सिंहस्तत्र दुर्द्दिने तां सिंहीमवादीत्, प्रिये! अद्य प्राणिनो यदि न प्राप्नोमि तदा क्षुधा मरिष्यामि। तदाकर्ण्य सिंही अवोचत्, नाथ!

सर्वत्र एव वयं क्षुधा न जीवामः, तदेकां मां भुक्त्वा युवां जीवतम्। त्वं हि मे प्रभुः अयञ्च पुत्रः प्राणभूतः आवयोः सर्वस्वं मदीयेन कायेन युवयोर्वृत्तिरस्तु। एवं तयोर्जम्पत्योरन्योन्यसन्लापं दैवात् प्रबुद्धः स महाशयो वराहः शुश्राव। अचिन्तयच्च संहृष्टः, दिष्ट्या क्वेयं निशा, क्व च दुर्दिनं क्व वा ईदृशातिथिलाभ अहो मे भाग्यं किमनेन क्षण विनाशिना कुदेहेन अहं अतिथीन् तर्पयामि इत्यालोच्य स वराहः निर्गत्य स्निग्धया गिरा तं सिंहं जगाद, भद्र! मा विषादस्त्वया कार्य्यः ससुतस्य सदारस्य ते अहं भक्ष्यः प्राप्तः, तन्मां भुङ्क्ष्व। इति शूकरेणोक्तः केशरी हृष्टस्तां भार्य्यामवादीत्, प्रिये! पूर्वमयं शिशुः भुङ्क्ताम्। ततोऽहं भोक्ष्ये, अनन्तरं त्वं भोक्ष्यसे। तया तथेत्युक्ते पूर्वं सिंहशावकेन भक्षिते ततः सिंहस्तस्य क्रोड़स्य मांसानि भोक्तुमुपचक्रमे। भुञ्जानञ्च तं स महासत्त्वः शूकर प्रोवाच, भद्र! शीघ्रं मे रक्तं पिब, यावत् भूमौ न लीयते पश्चात् मांसैश्च तृप्यस्व, शेषं ते प्रिया अश्नातु। इति वदन् स सिंहेन क्रमात् भुक्त्वा अस्थिशेषतां नीतोऽपि शूकरः प्राणैः तस्याश्चर्य्यधैर्य्यमवेक्षितुमिव स्थितैः न व्ययुज्यत। तावच्च सा सिंही क्षुधार्त्ता तत्र व्यपद्यत। स च सिंहः ससुत. क्वाप्यगात् रजनी च क्षयमयासीत्।

अत्रान्तरे प्रबुद्धः स सखा मर्कटः तं वराहं तथाभूतं दृष्ट्वा ससम्भ्रममप्राक्षीत् सखे! केन ते इयमवस्था कृता, ब्रूहि यदि ते शक्तिरस्ति। तदाकर्ण्य धीरः स शूकरः अतिकृच्छ्रेण तद् यथा वृत्तमभ्यधात्। ततो रुदन् स

कपिस्तं पादयोः प्रणिपत्याब्रवीत् सखे! त्वं देवांशः, येनात्मा तिर्य्यक्त्वात् मोचितः, किञ्चिदभिलषितं मे ब्रूहि तदहं ते संसाधयामि। इति तेन कपिनोक्तः स वराहः प्रत्यब्रवीत् वयस्य! यो मे अभिलाषः, स विधिनापि दुःसाध्यः येन पश्यतो मे इयं तपस्विनी सिंही मृता, इयं पुनः पूर्वाङ्गं सम्प्राप्य प्राप्तजीविता भुक्ता तृप्यतु इति मे चेतो वाञ्छति। इति वादिनं तं क्रोडं धर्मः स्वयं प्रत्यक्षीभूय पाणिना परामृश्य दिव्यदेहं मुनीन्द्रं व्यधात्। उवाच भद्र! मयैव इयं सिंहादिरूपिणी माया कृता, त्वया तु अखण्डसत्त्वेन परार्थप्राणदायिना मामपि विजित्य धर्मस्य परा काष्ठा दर्शिता इति तदाकर्ण्य स मुनीन्द्रः पुरः स्थितं धर्ममालोक्य अब्रवीत् देव! अस्मिन् सख्यौ मर्कटे असन्त्यक्ततिर्य्यक्त्वे इयं प्राप्तापि मुनीन्द्रता न मां प्रीणाति। एतदाकर्ण्य धर्मस्तमपि मर्कटं मुनिमकार्षीत् महद्भिः सह सङ्गतिः ध्रुवं महते फलाय। अथ स धर्मस्तिरोऽभूत् सा च सिंही मृतान्तर्दधे। तदेवं राजन्! सत्त्वबलात् अत्यक्तधर्मोत्साहैर्देवता—कृतसाहाय्यैर्जनैर्वाञ्छितसिद्धयो न सुदुर्लभाः। इति भिक्षुवचनमाकर्ण्य स विनीतमतिर्दानशूरः पुनः ध्यात्वी स्वप्नसमागममकरोत्। दृष्ट्वा च स्वप्नं प्रातः प्रबुध्य तस्मै आचार्य्याय भिक्षवे शशंस गुरो! अद्य स्वप्ने दिव्यः कोऽपि मुनिर्मामवदत् पुत्र! इदानीं निष्पापोऽसि, चर इदानीं बोधिसत्त्वचर्य्याम्। तद्वाक्यं श्रुत्वैवाहं प्रबुद्धः अद्य निर्वृतोऽस्मि। एवं स विनीतमतिर्गुरवे भिक्षवे निवेद्य शुभेऽ-

ऽहनि गुरोरनुज्ञया तां महाचर्य्यामग्रहीत् प्रतिदिनञ्च अह-र्निशम् अर्थिभ्यः कामं वर्षन् ।

अथैकदा कश्चिद् ब्राह्मणोऽर्थी तमभ्येत्य अब्रवीत् देव । अहं द्विजातिः, पाटलिपुत्रनिवासी । तत्र नगरे केनचित् ब्रह्मरक्षसा अग्निशालामाहृत्य मे पुत्रः आक्रान्तः, नास्ति तत्र मे कश्चिदुपायः, तस्मादर्थिकल्पतरुं त्वां याचितु-मागतोऽस्मि । देहि मे अरिष्टशान्तये तव हस्तस्थं सर्व-दोषघ्नम् अङ्गुरीयकम् । इति तेन विप्रेणार्थितः स मही-पतिः कालजिह्वादधिगतं तदङ्गुलीयम् अविषण्णस्तस्मै विप्राय प्रादात् । तदङ्गुलीयकमादाय तस्मिन् द्विजे प्रयाते तस्य भूपतेः बोधिसत्त्वव्रतयशो दिगन्तेषु विशु-श्रुवे ।

अथ कदाचित् उत्तरापथादागतः कोऽपि इन्दुकलशो नाम राजपुत्रः तस्य विनीतमतेः नृपस्य गृहे अतिथि-रगात् । स कृतविनयस्तेन राज्ञा ज्ञातान्ववायः दृष्टकाम-स्तं नृपमभाषत प्रभो ! त्वं तावत् साम्प्रतं भुवि अर्थि-चिन्तामणिः ख्यायसे, तव प्राणानामपि अर्थी न पराङ्-मुखो भवति । अहं भ्रात्रा कनककलशेन पैतृकात् राज्यात् निर्वासितः साम्प्रतमर्थिभावेन त्वामुपस्थितः, हे वीर ! ते यत् अश्वखड्गरत्नद्वयं वर्त्तते तन्मे देहि येन तं दायादं जित्वा राज्यमवाप्नुयाम् । तदाकर्ण्य स विनीतमतिर्नृपतिः राज्यरत्नचिन्तामणी अपि तौ अश्व-खड्गौ तस्मै राजसुताय प्रादात् । न च तस्य तौ ददतः कापि चित्तविक्रिया लक्षिता मन्त्रिषु अधोमुखेषु विप्रा-

सान् मुञ्चत्स्वपि। स च राजसुतः अश्वं खड्गञ्च प्राप्य राजानं प्रणम्य गत्वा च तत्प्रभावेण भ्रातरं निर्जित्य राज्यमवाप।

अथ तद् भ्राता कनककलशोऽपि राज्यच्युतः तस्य विनीतमतेः नृपस्य नगरीम् आससाद। आरेभे च तत्रा-गत्य दुःखादग्निप्रवेशं कर्त्तुम्। तद् विदित्वा स नृपः स्वान् अमात्यानब्रवीत् एष साधुर्ममापराधात् दशामिमां प्राप्तः, तदहं स्वराज्यप्रदानेनास्मै अनृणो भवितुमिच्छामि, परमार्थानुपयोगिना अमुना राज्येन मे किम्? एष एव अनपत्यस्य मम पुत्रः राज्यभृदस्तु। इत्युक्त्वा कनककलस-माहूय सचिवेषु अनिच्छत्स्वपि तस्मै स्वं राज्यमदात्। दत्तराज्यश्च स भूपतिस्तत्क्षणं भार्याभ्यां सहितः निर्वि-कल्पेन चेतसा नगर्य्या निरगात्। हा हा धिक्! जगदा-प्यायी सम्पूर्णमण्डलोऽमृतांशुः अकाण्डपातिना मेघेनागत्य अन्तरितः। एष सर्वदेहिनां सर्वाशापूरणे प्रवृत्तः प्रजा-कल्पद्रुमो नृपः विधिना क्वापि नीतः? इत्येवं विलपन्तः पौरा विह्वलास्तदा वाष्पाम्बुसिक्तवसुधास्तमनुजग्मुः। स च राजा विनीतमतिः कथञ्चित् तान् निवर्त्य सभार्य्यः पदा व्रजन् अरण्यं प्रापत्। क्रमेण च अर्ककरसन्तप्तसिकतां निर्जलद्रुमां मरुभूमिं विधिना स्रष्टं धैर्य्यमवेक्षितुमिव नीतः स राजा तदेकदेशे तृष्णार्त्तः दूराध्वश्रमेण च विक्लवः निषण्णः क्षणं निद्रया जग्हे। यावच्च प्रबुध्य वीक्षते स्म तावत् स स्वसत्त्वोत्कर्षनिष्पन्नं महदद्भुत मुद्यानमद्राक्षीत् तत्र प्रफुल्लाम्बुजशीतलस्वच्छतोया वापी,

नीलशाद्वलसंछन्नः प्रदेशः, फलभरलताश्च प्रच्छाया स्तरवः सन्ति। अस्य राज्ञः दानप्रभावेण त्रिदिवादागतं नन्दनमिव स राजा क्षणं व्यतर्कयत्। किमयं स्वप्नः, भ्रमो वा, उत देवानुग्रहो मे इति तद्दीक्ष्य वीक्ष्य यावदसौ चिन्तयते स्म तावत् खेचरेण केनचिचित् सिद्धेनोदीरितां वाचमशृणोत् राजन्! एष ते सत्त्वमाहात्म्यविलासः, कोऽत्र विस्मयः? तदस्मिन् सदा पुष्पफले कानने स्वेच्छया वस। इति सिद्धवचनमाकर्ण्य निर्वृतस्तत्र कानने पत्नीभ्यां सह तपश्चरन् विनीतमतिरध्युवास। एकदा शिलातलगतः स आरात् ददर्श उद्बन्धनेन कमपि पुरुषमात्मवधोद्यतम्। ततः स राजा द्रुतं गत्वा प्रियैर्वाक्यै रनुनीय निवार्य च तं मरणे कारणं पर्यपृच्छत्। ततः स पुरुषोऽब्रवीत् शृणु वच्मि आमूलात्।

अहं नागशूरस्य सुतः सोमशूरो नाम। सोऽहं जातकशास्त्रवेदिभिश्चौर इति निर्दिष्टः। पिता तु मम तद्भयेन प्रयत्नेन मां धर्मशास्त्रमध्यापितवान्। तदधीत्यापि मम चौर्ये प्रवृत्तिरासीत्। कस्य प्राक्तनं कर्म केनान्यथा कर्त्तुं शक्यते? एकदाहं चौरो मध्याह्ने रक्षिभिर्गृहीतः शूलाधिरोपणाय वध्यभुवं नीतः। तस्मिंश्च क्षणे भग्नालानो राजहस्ती मत्तः जन्तून् व्यापादयन् तदेव स्थानमगमत्। तदालोक्य ते घातका मां परित्यज्य भयात् क्वापि गताः। अहञ्च तस्मिन् तुमुले पलाय्य ततो निरगाम्। अश्रौषञ्च बधाय नीयमानं मां श्रुत्वा पिता मे सह मात्रा प्राणान् विजह्वाविति। अथाहं पितरौ

शीचन् भ्राम्यन् देहत्यागाय इदं विजनं महत् काननं प्राप्तः। इह च प्रविष्टमात्रं माम् अकस्मात् दत्तदर्शना कापि दिव्या योषित् कृताश्वासा मामभ्यभाषत, पुत्र! त्वं विनीतमतेः राजर्षेराश्रमं प्राप्तः, गतं ते पापं ज्ञानञ्च लप्स्यसे इत्युक्त्वा सा तिरोऽभूत्। अहञ्च भ्राम्यन् तं राजर्षिमनासाद्य देहं त्यक्तुमिच्छन् त्वया समासादितः। इत्युक्तवन्तं तं सोमशूरं निजाश्रमं नीत्वा स राजर्षिरात्मानमावेद्य अतिथिमपूजयत्। अथ कृताहारं विनीतं तं कथाप्रसङ्गं श्रावयन् अज्ञानान्निवारयितुं धर्मशासनमब्रवीत्, वत्स! अज्ञानं ह्यातव्यं तद्धि विपर्य्यस्तधियाम्। लोकद्वयेऽपि अशुभाय, तदत्र कथामेकां मया वर्ण्यमानां शृणु।

पुरासीत् पाञ्चालेषु देवभूतिर्नाम द्विजः। तस्य वेदविदः भोगदत्ताख्या सती भार्य्याभवत्। तस्मिंश्च भर्त्तरि स्नातुं गते सा शाकचयनार्थं शाकवाटिकां प्रविष्टा शाकं खादन्तं रजकखरमेकमद्राक्षीत् अधावीच्च गृहीत लगुड़ा तं खरं प्रति। सोऽपि खरः पलायमानः श्वभ्रे पतितो भग्नखुरो भवत्, तदवलोक्य तत्स्वामी रजकः क्रोधादागत्य लगुड़ैः पादप्रहारैश्च तां ब्राह्मणीमताड़यत् तेन सा गर्भिणी सती विप्रपत्नी अकाण्डविभ्रष्टगर्भाभवत्। स च रजकः खरमादाय स्वं गृहमगमत्।

अथ स्नातागतो विप्रः तां पत्नीं तथागतां दृष्ट्वा पृष्ट्वा च वृत्तान्तं रोषात् गत्वा पुराध्यक्षं व्यजिज्ञपत्। स चाध्यक्षः मूर्खः बल्लासुरनामानं तं रजकमानीय तयो-

र्द्वयोर्वादं श्रुत्वा इदमवदधार खुरभङ्गात् अद्य खरस्य अयं द्विजः तावत् खरभारं वहतु यावत् खरः प्रकृतिमापद्यते। रजकोऽपि एतस्य ब्राह्मणस्य भार्य्यायां तद्गर्भपातनात् अन्यं गर्भं प्रजनयतु। एष तावदनयोर्दण्ड इति तेनोक्ते स द्विजः सन्तापभक्षितविषः सभार्य्यः प्राणान् विजह्रौ। तदाकर्ण्य तत्रस्थेन राज्ञा निहतः स ब्रह्महा पुराध्यक्षः चिरं तिर्य्यक्त्वं गतः। इत्थमज्ञानतमश्छन्ना अपुरस्कृतसच्छास्त्रदीपाः स्वदोषात् उन्मार्गगामिनः भुवं भ्रमयन्ति। एवमुक्त्वा स राजर्षिः पुनरुपदेशार्थिनं सोमशूरं विनीतं विनेतुमभ्यधात्, वत्स! तदिदानीं दानपरमिकां ते वच्मि शृणु।

पूर्वं कुरुक्षेत्रे मलयप्रभो नाम भूपतिरभूत्। तस्य इन्द्रप्रभो नाम सुतः। स कदाचित् दुर्भिक्षे प्रजाभ्योऽर्थान् ददौ मन्त्रिभिर्वारितोऽपि, अगादीत् च तातं, तात! दुर्मन्त्रिणां गिरा कथं प्रजा उपेक्षसे? त्वं हि तासां कल्पद्रुमः, ताश्च ते कामधेनवः, इति निर्बन्धेन जल्पन्तं पुत्रम् मन्त्रिवशो नृपः खेदार्त्तः प्रत्यवादीत्, वत्स! किं मे धनमक्षयमस्ति, तेन विना चेदहं प्रजाकल्पपादपो भवामि, तदा त्वमेव कथं तासां कल्पवृक्षतां न धत्से? एतत् पितृवचः श्रुत्वा स नृपात्मजः प्रतिजज्ञे मया तपसा मर्त्तव्यं वा कल्पवृक्षत्वं साध्यम् इति निश्चित्य स महासत्त्वः तपसे तपोवनं प्रायात्। तस्मिंश्च तपस्यति तद् दुर्भिक्षं व्यवर्त्तत। ततः स तीव्रतपस्तुष्टमहेश्वरवरप्रभावात् स्वस्मिन्नेव नगरे कल्पपादपो जज्ञे। स च कल्पतरुः प्रसारिताभिः

शाखाभिः पक्षिणां शब्दैश्च दूरस्थानर्थिनः आकर्षन्निव आह्वयन्निव स्थितः अर्थिभ्यः प्रत्यहं कामान् दुष्प्रापानपि ददौ। चकार ताः प्रजा निराकाङ्क्षाः स्वर्गस्था इव। कालेन गच्छता महेन्द्रः समुपेत्य तं लोभयन्नुवाच, भद्र! पूर्णस्ते परोपकारः साम्प्रतं स्वर्गाय आगम्यतामिति ततः कल्पद्रुमीभूतः स राजपुत्रस्तमभ्यधात्, देवराज! यत्र अन्यतरु योऽपि फलैः पुष्पै रङ्गैश्च सततं पारार्थ्यमेव कुर्वन्ति स्वार्थनिस्पृहाः, तत्र कल्पतरुर्भूत्वा स्वदुःखाय इयतो जनस्य आशाच्छेदं कृत्वा कथं दिवं व्रजामि। इति तस्य उदारां गां निशम्य शक्रः पुनरब्रवीत् तर्हि ते सर्वापि प्रजा स्वर्गमागच्छतु इति। ततः स राजतनयः कल्पद्रुमोऽपि तमवदत्, भगवन्! तुष्टोऽसि चेत् प्रजा इमाः स्वर्गं नयतु भवान्, तेन कृतार्थोऽस्मि। अहं परोपकारसिद्ध्यर्थमेव महत् तपस्तप्ये। इति वादिनं तं सुगतांशं स्तुत्वा प्रजास्ताः समादाय तुष्टः सुरेशः स्वर्गमगात्। सोऽपि राजसूनुः तरुतां त्यक्त्वा स्वरूपमास्थाय च इन्दुप्रभः वनस्थो बोधिसत्त्वतां प्राप। एवं हि दानसत्त्वानां स्थितिर्मया उदीरिता। तदिदानीं शीलपारमितां शृणु।

पुरा विन्ध्याद्रौ कश्चित् शुकराजः सुगतांशसम्भवः हेमप्रभो नाम वशी प्राक्तनाभ्यस्तशीलवान् स्थितः। तस्य जातिस्मरस्य धर्मोपदेष्टुश्च रागी मूर्खः चारुमतिर्नाम शुकः प्रतीहार आसीत्। कदाचित् स पाशिना व्याधेन निहतां भार्यां शुकीं शोचन् तद्विरहातुरः करुणामवस्थां ययौ। ततः स शुकराजः युक्त्या शोकान्निवारयन् उवाच,

भद्र ! तव सा भार्य्या शाकुनिकपाशात् न मृता पलाय्य गतैव जीवतीति मया दृष्टम्। दर्शयामि त्वां एहि इत्युक्त्वा स शुकराजो हेमप्रभस्तं चारुमतिं व्योममार्गेण एकं जलाशयं निनाय। तत्र तस्यैव प्रतिबिम्बं जलान्तरे पतितं संदर्श्य तमब्रवीत् सा ते भार्य्या पश्य इहैव तिष्ठति। तदाकर्ण्य स मूढधीरात्मप्रतिबिम्बं वीक्ष्य च हृष्टः प्रविश्य च तं जलाशयं तामालिलिङ्ग चुचुम्ब च। प्रियास्पर्शमनाप्नुवन् तद्वचश्च अशृखन् कथं प्रिया मे सम्भाषणं न करोति इति चिन्तयन् क्वापि गत्वा तस्मादामलकम् आनीय चाङ्गं दयितातुष्टये स्वे प्रतिबिम्बे न्यधात्। ततश्च तत् तोयमग्नं ततोऽपि उत्थितं दृष्ट्वा कथं प्रियया प्रतिक्षिप्तमिति राजानं तं हेमप्रभमभ्यधात् राजन्! सा मम भार्य्या मह्यं सम्भाषणञ्च न ददाति, किञ्च मया प्रदत्तमामलकं प्रतिक्षिप्तमनया? एतदाकर्ण्य स राजा तं शनैः कृच्छ्रादिवाब्रवीत् भद्र! न युक्तमेतत् मम वक्तुं तथापि ते स्नेहात् ब्रवीमि। सा खलु इदानीमन्यानुरक्ताभवत् कथं त्वयि प्रीतिं दर्शयेत्। साक्षात् त्वां दर्शयामि तत्रैव जलाशये। इत्युक्त्वा तं तत्र जलाशयेषु नीत्वा तेन प्रतीहारे संश्लिष्य तस्मै उभे श्लिष्टे प्रतिबिम्बे अदर्शयत्। स च मूर्खः तां भार्य्यामन्यसक्तां दृष्ट्वा सन्निहत्य विरक्तस्तं राजानं व्यजिज्ञपत् देव! मूढेन मया त्वदुपदेशा यत्र श्रुताः तस्यैव पाकः तदधुना कर्त्तव्यमादिशतु देव इति। अथ राजा हेमप्रभः उपदेशावसरं लब्ध्वा तं प्रतीहारमभाषत भद्र! वरं हालाहलं पीतम् अथवा अहिर्गले बद्धः,

न पुनः स्त्रीषु विश्वासः मणिमन्त्रादीनामपि असाध्यः। एता हि साधून् कलङ्कयन्ति परिभवन्ति च। तदेतासु धीरसत्त्वैः सुधीभिर्न प्रसक्तव्यम्। वीतरागपदाप्तये केवलं शीलमभ्यस्तव्यम्। इति तेनानुशिष्टः स चारुमतिः स्त्रियः परिहृत्य ऊर्द्धरेताः क्रमात् बुद्धसमः समभवत्। इत्थं शीलाढ्या अन्यानपि तारयन्ति, तन्मयोक्तम् अधुना क्षमापारमिकामाकर्णय।

आसीत् केदाराद्रौ शुभनयो नाम महामुनिः। स च सदा मन्दाकिनीतीरे तपश्चरन् दान्तः क्षशतनुरस्थात्। एकदा निशि तत्र भुवि निखातं काञ्चनमन्वेष्टुं कतिचित् चौराः समाययुः न च तैः कुतोऽपि तत् प्राप्तम्। ततस्ते अत्र विजने अनेन मुनिना तत् हृतं मत्वा तस्य मठिकां प्रविश्य तमब्रुवन् अरे दम्भमुने! मुञ्च अस्माकं नीतं त्वया काञ्चनं भूनिखातम्। अहो चौराणामपि नस्त्वं चौरः संवृत्तः। इति तैः पापैराक्षिप्तः स मुनिः न मया नीतं दृष्टञ्च किञ्चिदपीत्यभाषत। ततो यदा स मुनिस्तैः पापैर्लगुडैस्ताड़ितोऽपि सत्यवाक् तदेव वक्तिस्म तदा ते क्रूरास्तस्कराः चौरोऽयमिति निश्चित्य तस्य हस्तौ पादौ च चिच्छिदुः उत्पाटयामासुश्च नयने। तथापि अनन्यवचनं निर्विकारं तमवेक्ष्य ते दस्यवः अन्यहृतं स्वर्णं मत्वा यथागतं जग्मुः।

अथ प्रातः शूरवर्मज्योतिर्नाम राजा शिष्यस्तं मुनिं तथाभूतं दृष्ट्वा गुरुशोकार्त्तस्तं पृष्ट्वा अवेत्य च वृत्तान्तं तान् चौरानन्विष्य तत्रैवानाययामास। ततः तं नृपं तेषां

वधप्रहत्तं स मुनिरब्रवीत्। राजन्! यदि एतान् निहंसि तदाहमात्मानं निहन्मि, यस्मेव इदं मे कृतं तदेतेषां कोऽत्रापराधः? एते च तस्य प्रहारस्य प्रेरकाः नहि, एतेषां क्रोधा अपि न, स्वर्णनाशस्य तेषां क्रोधानां न प्रेरकः, तस्य च स्वर्णनाशस्य मत्पूर्वदुष्कृतमेव प्रेरकं तस्यापि च दुष्कृतस्य स्वमेव अज्ञानं प्रेरकं तस्मात् तदेव मे अपकारि तस्मात् तदेव अज्ञानं ते वध्यम् किञ्च यदि अपकारतः अमी वध्याः, तदा उपकारतः कथं न रक्ष्याः, एते यदि मे इदं न कुर्य्युः तदा मोक्षफलां क्षमां कस्य कुर्य्याम् तस्मादेतैर्मे महती उपकृतिरेव कृता। इत्यादिभिर्बहुभिर्वचनैः स क्षान्तिपरो मुनिस्तं नृपं संबोध्य तान् चौरान् वधदण्डात् अमोचयत्। तस्माच्च तपसः प्रभावात् तस्य शरीरं क्षणेन अव्रणं प्राग्वत् स्वस्थमभूत् सिद्धिश्च महती। इत्थं क्षमिणस्तरन्ति। तदिदानीं धैर्य्यपारमिकां निशामय।

आसीत् पूर्वं मालाधरो नाम ब्राह्मणपुत्रः। स एकदा व्योमगामिनमेकं सिद्धकुमारमपश्यत्। ततस्तत् स्पर्द्धया बद्धमयान् पक्षान् पार्श्वयोराबध्य उत्प्लुत्य उत्प्लुत्य गगनगमनाभ्यासमभ्यस्यत। इत्थं प्रत्यहं तथा विफलं प्रयासं कुर्वन् स कदाचित् व्योमचारिणा कुमारेण दृष्टः। धैर्य्ययुक्तं दुष्प्रापेऽपि अर्थे कृतोद्यमं परिश्राम्यन्तं तं बालं दृष्ट्वा स कुमारः अनुकम्प्योऽयं मे इति सञ्चिन्त्य तुष्टः गगनं नीत्वा आत्मनः अनुचरं चकार। इत्थं धैर्य्येण देवता अपि तुष्यन्ति। तदित्थं धैर्य्यपारमिका ते प्रोक्ता, इदानीं ध्यानपारमिकामाकर्णय।

आसीत् पुरा कर्णाटेषु विजयमाली नाम कश्चित् वणिक्। तस्य महार्घः मलयमाली नाम पुत्रः। स एकदा पित्रा सह राजकुलमगमत्। आगत्य च तत्र स युवा मलयमाली तत्र इन्दुकेशरिणो नृपस्य सुतामद्राक्षीत्। सा च इन्दुयशा नाम मोहिनी मारवल्लीव दृष्टैव तस्य वणिक्सुतस्य हृदयं विवेश। ततः स गृहमागत्य निशि विनिद्रः पाण्डुकान्तिः दिवा च सङ्कुचितः सततं तामेव ध्यायन् आहारादिपराङ्मुखः तस्थौ। स्वजनैः पृष्टोऽपि मूक इव न किञ्चिद् वदति स्म।

अथैकदा एकान्तस्थं तथाभूतं विरहातुरकान्तिं तं निरीक्ष्य मन्थरको नाम बाल्यसुहृत् राजचित्रकरः समभ्यधात्, सखे। किं त्वं भित्तिसंसक्त आलिखित इव रूपैकसारस्तिष्ठसि? नाश्नासि न पिबसि न शृणोषि न च पश्यसि। इत्येवं निर्बन्धतः पृच्छन्तं तं सुहृदं स वणिक्सुतः स्वमभिप्रायं शशंस। सखे। नैषा ते राजपुत्रीं प्रति स्पृहा युक्ता, इति ब्रुवन् स सुहृद् यदा तं प्रतिषेद्धुं नाशकत् तदा तस्मै ताम् उत्कण्ठाविनोदिनीम् आलिख्य कालातिपाताय चित्रपटं ददौ। स च वणिगात्मजः मलयमाली चित्रपटस्थितां तां प्राप्य पश्यन् अनुनयन् स्पृशन् भूषयंश्च कथञ्चित् सुस्थोऽभवत्, सा एवेयम् इन्दुयशा राजपुत्री इत्येवं भावयन् क्रमात् तन्मयतां प्राप, चकार च तया कृत्वा तामालपन्तीं चुम्बनादिकं कुर्वतीं भावयन् चित्रगतयापि तया सर्वाः क्रियाः। ततः स स्वभावनासिद्धकान्तासम्भोगसुखितः चित्रपटस्थं सर्वं संसारममन्यत।

एकदा चन्द्रोदये स चित्रपटमादाय निर्गत्य तया कान्तया विहर्तुमुद्यानमगात्। तत्र एकस्य तरोर्मूले तं चित्रपटं निवेश्य प्रियाकृते पुष्पाण्याहर्तुं विप्रकृष्टं ययौ। तस्मिंश्च क्षणे विनयज्योतिर्नाम मुनिरम्बरतलात् दृष्ट्वा तं कृपया मोहादुद्दरिष्यन् अवततार। स मुनिस्तत्र चित्र-पटस्य एकदेशे सजीवं कृष्णसर्पमालिख्य अलक्षितस्तस्थौ। तावच्च मलयमाली पुष्पाण्याहृत्य तत्रागत्य तं कृष्णसर्पं पटे दृष्ट्वा व्यचिन्तयत्, सर्पोऽयं कुतोऽधुना आयातः, किं विधिनात्र रूपनिधानभूतामिमां सुन्दरीं रक्षितुं प्रेषितः? इति संचिन्त्य तां प्रियां पुष्पैरलङ्कृत्य पटस्थां भावनोपनीतां यावदालिङ्ग्य एतत् पृच्छति तावदसौ कृष्णसर्पः मुनेर्मायाप्रभावात् तां ददंश। ततः स तेन कृष्णसर्पेण दृष्टां विगतचेतनां तां दृष्ट्वा स विस्मृतपटो हाहा इत्युक्त्वैव मोहितः पपात। क्षणाच्च संज्ञां सम्प्राप्य विलपन् मरणोन्मुखः उत्थाय वृक्षमारुह्य तस्मात् आत्मानं भूमौ अक्षिपत्। तञ्च पतन्तमेव स मुनिः पाणि-भ्यामग्रहीत्, जगाद च तं समाश्वासयन्, मूढ! न वेत्सि त्वं सा राजबाला राजमन्दिरे स्थिता, एषा चित्रस्था निर्जीवा, तत् कामालिङ्गसि, का च ते महाहिना अवस्था कृता? रागिणश्चित्ते स्वसङ्कल्पभावनया जनित एष भ्रम एव, तादृ-शेन ध्यानेन तत्त्वं किं जिज्ञाससे? येन ईदृशानां दुःखानां आत्मतां न पुनराप्नोषि। इति तेन मुनिना निराकृतभ्रमः स वणिक्पुत्रः प्रबुद्धः तं मुनिं प्रणिपत्य जगाद, भगवन्! त्वत्प्रसादादिदानीम् अहमेतामापदं तीर्णः, यथाहं

संसारं तरेयं तथा प्रसादं मे करोतु भवानिति। इत्थं मलय-
मालिना वणिक्सुतेनार्थितोऽसौ मुनिस्तस्मै स्वविज्ञानमुप-
दिश्य तिरोदधे। ततो मलयमाली वनं गत्वा तपोबलात्
सहेतुकस्य हेयोपादेयस्य तत्त्वज्ञः आर्हतं भावमवाप। ततो
गृहमागत्य कृपालुर्ज्ञानोपदेशेन इन्दुकेशरिणं तं नृपं सपौरं
मुक्तिभागिनं कृतवान्। इत्थमसत्यमपि ध्यानबलसम्पन्नानां
सत्यतामेति। तदिदानीं ध्यानपारमिकता त्वया श्रुता,
साम्प्रतं प्रज्ञापारमिकतां शृणु।

प्राक् सिंहविक्रम इति तस्करः सिंहलद्वीपेऽभवत्।
स खलु सर्वतो हृतैः परस्वैराजन्मपूरिततनुः वृद्धः सन्
कालेन विरज्य एवमचिन्तयत्, परत्र मे कोऽभ्युपायः, तत्र
कं शरणमाश्रयामि। यदि शम्भुं वा शौरिं शरणं व्रजामि,
तदपि न सम्भाव्यते, कस्तयोरहं ययोर्देवा मुनयस्तथान्ये
च सेवकाः। तस्मात् यः सर्वेषां जन्तूनां सुकृतदुष्कृतं
लिखति तमेव चित्रगुप्तम् आश्रयामि, स हि स्वयु-
क्तितः मां रक्षिष्यति, कायस्थो हि एकः ब्रह्मरुद्रयोर्व्यापारं
करोति, यतः स्वपात् लिखनकौशलेन विश्वं करस्थितं
कर्तुं शक्नोति। इति संचिन्त्य स चौरः तस्य वै भक्तिं
करोति स्म। तमेवार्चयित्वा तत्प्रीत्यै नित्यं ब्राह्मणान्-
भोजयत्। एवमाचरतस्तस्य चित्तमीक्षितुम् एकदा चित्र-
गुप्तः अतिथिर्भूत्वा गृहमायात्। स च चौरस्तमभ्यर्च्य भोज-
यित्वा दक्षिणाञ्च दत्त्वा उवाच, भद्र! चित्रगुप्तः प्रीयतां
मे इति उच्यताम्। ततः स चित्रगुप्तः ब्राह्मणरूपधर-
स्तमवोचत्, भो! हरिहरादीन् त्यक्त्वा त्वं चित्रगुप्ते कथमी-

दयीं भक्तिं करोषि ? इत्युक्तो पुनरब्रवीत् यदि त्वं स्वां भार्य्यां मह्यमर्पयसि, तदाहं तत् वदामि। एतदाकर्ण्य संहृष्टः स सिंहविक्रमस्तमवादीत्, ब्रह्मन्! अभीष्टदेवताप्रीतये मया ते भार्य्या दत्तैव। तदाकर्ण्य चित्रगुप्तः सम्प्रीतः आत्मानं प्रदर्श्य तमब्रवीत्, अहमेव चित्रगुप्तः ते प्रीतोऽस्मि, किन्ते प्रियं करवाणि ? ततः स सिंहविक्रमः सहर्षं तमभ्यधात्, भगवन्! यथा मे मृत्युर्न भवेत् त्वं तथा कुरु। चित्रगुप्तोऽब्रवीत्, भद्र! मृत्युः वारयितुमशक्यः, तथापि कामपि त्वदर्थं युक्तिं करिष्ये, तत् श्रूयताम्। यतः प्रभृति श्वेतेन मुनिना निर्दग्धः कालः पुनः कुपितेन ईश्वरेण कार्य्यवशात् निर्मितः, ततः प्रभृति यत्रैव श्वेतो वसति तत्र स कालः तेन प्रभुणा यन्त्रितः पुरुषान् अन्यांश्च जन्तून् न बाधते। स च श्वेतो मुनिः अधुना पूर्वाम्बुधेः पारे तरङ्गिणीं नाम नदीमुत्तीर्य्य तपोवने स्थितः। तत्र मृत्योरनाक्रम्ये त्वां नीत्वा अहं स्थापयामि, त्वया पुनस्तरङ्गिण्याः पारं कदाचन नागन्तव्यम्। यदि प्रमादागतं त्वां मृत्युर्ग्रहीष्यति, तदा परलोकागतस्य ते उपायं करिष्यामीति उक्त्वा चित्रगुप्तः तं प्रहृष्टं सिंहविक्रमं श्वेताश्रमं नीत्वा तिरोदधे।

अथ कालेन तत्रस्थं सिंहविक्रमं नेतुं कालस्तरङ्गिण्यास्तस्याः परं पारमाययौ। तत्र स्थितः स कालः यदा अन्यमुपायं तदानयने न पश्यति स्म, तदा मायया दिव्यां स्त्रियं निर्माय तस्मै प्राहिणोत्। सा विलासिनी तमभ्येत्य युवत्या स्वैरवाक्योभिर्वशीचकार।

अथ गच्छति काले सा सुन्दरी केनापि व्यपदेशेन तां तरङ्गिणीं तरीतुमवततार। तस्मिंश्च तीरस्थे सिंहविक्रमे वीक्षमाणे सा नदीमध्ये परिस्खलनमकरोत्, अरोदीच्च ओघेन ह्रियमाणेव तारस्वरं हा नाथ! म्रियमाणां मां किं वीक्षसे, न च रक्षसि? त्वं शृगालविक्रमः, न खलु सिंहविक्रमः। तदाकर्ण्यैव स सिंहविक्रमः नद्यां तस्यामवातरत्। सा च नारी वेगेन नीयमानेति तां त्रातुमागच्छन्तं तं सिंहविक्रमं क्षणात् नदीपारमनयत्। तत्र प्राप्तमेव तं कालः पाशक्षिप्तगलं सद्य एवाग्रहीत्। विषयग्रस्तचेतसामपायो हि शिरस्थित एव। ततः तं यमसदनं नीत प्रमादिनं दृष्ट्वा प्राक् प्रसन्नश्चित्रगुप्तो जनान्तिकमब्रवीत्, यदा त्वं पूर्वं नरकं भोक्ष्यसे वा स्वर्गमिति पृष्टः स्याः तदा स्वर्गवासं प्राक् प्रार्थयिष्यसि। स्वर्गे वसंश्च तद्दार्ढ्यसिद्धये पुण्यं करिष्यसि, पापापनोदनाय च कृच्छ्रं तपः। इति चित्रगुप्तेन स्वैरमुक्तः स सिंहविक्रमः विलक्षस्तथेति प्रतिपेदे।

अत्रान्तरे धर्मराजस्तं चित्रगुप्तमभाषत, कश्चिदस्य चौरस्य कोऽपि पुण्यांशोऽस्ति न वा? चित्रगुप्तोऽब्रवीत्। अस्ति, असौ हि अतिथिप्रियः, इष्टदेवताप्रीतये दारानपि अर्थिने प्रादात्, प्रभो! तस्मादस्य दिव्यं दिवसं यावत् स्वर्गगतिरस्ति। ततः स सिंहविक्रमः धर्मराजस्य आज्ञया उपस्थितं विमानमारुह्य अग्रतः प्रार्थितं स्वर्गवासं भोक्तुं चित्रगुप्तवचः स्मरन् त्रिदिवं प्रायात्। तत्रागत्य च मन्दाकिनीस्नानजपव्रतपरायणः भोगनिस्पृह-

तस्थौ। एवं क्रमेण तीव्रतपोबलात् स्वर्गवासं प्राप्य तत्र गुरुमाराध्य निर्दग्धकल्मषः ज्ञानमवाप। ततो नारका दूतास्तस्य मुखमीक्षितुमपि न शेकुः। इत्थं चौरोऽपि सत्प्रज्ञाबलात् सिद्धिमवाप। इत्येषा प्रज्ञापारमिका प्रोक्ता, वत्स। बुधाः नौतुल्यामीदृशीं बुद्धोक्तदानादिषट्कपारमिकामारुह्य भवाम्बुधिं तरन्ति। एवं तस्मिन् वने सोमशूरमनुशासतस्तस्य बोधिसत्त्वपदस्थस्य विनीतमतेर्नृपस्य वचनं निशम्येव भास्करः सन्ध्यारागात्तकाषायः अस्ताचलदरीमाससाद। ततः सन्ध्यां यथावदुपस्थाय स विनीतमतिः सोमशूरश्च तत्र तां निशां निनाय।

अन्येद्युश्च स राजा विनीतमतिः तस्मै सोमशूराय पुनश्च बौद्धधर्मरहस्यमुपादिशत्। ततः स सोमशूरस्तं गुरुमुपासीनो वने तस्मिन् समाधिनिष्ठः वृक्षमूले कृतनिकेतस्तस्थौ। क्रमेण च तौ गुरुशिष्यौ उभावपि लब्धयोगमहासिद्धी परां बोधिसत्त्वतामवापतुः।

अत्रान्तरे स कनककलसो नृपः तेन इन्दुकलसेन भ्रात्रा मत्सरादेत्य तयोः खड्गाश्वयोः प्रभावात् तस्मादहिच्छत्राद् विनीतमतिदत्तात् राज्यात् निर्वासितः द्वित्रसचिवैरन्वितः भ्राम्यन् तत् विनीतमतेस्तपोवनं प्रापत्। तत्रेत्य यावत् स दुर्वारक्षुधातृष्णयान्वितः फलानि मूलानि अम्बूनि च अभिवाञ्छति तावत् इन्द्रेण तं वञ्चयितुमिच्छता तत् काननं दग्धसारीकृतम्। विनीतमतिरकस्मात् तं मरुभूतमाश्रममवेक्ष्य अतिथिसेवाविलोपात् उद्भ्रान्तः इतस्ततः परिबभ्राम, ददर्श च तं भ्राम्यन्तं कनककलसं

क्षुधा कण्ठगतप्राणमतिथिं सानुगमागतम्। तादृशं तमुपेत्य पृष्टवृत्तान्तः आतिथ्यश्रद्धया तं जगाद, राजन्! अस्मिन् मरुभूमौ अरण्ये क्षुधितानामेतं जीवितोपायं युष्माकं वदामि, इतोऽर्द्धक्रोशमात्रके एकस्मिन् खाते पतित्वा मृतः एकः मृगस्तिष्ठति, अद्य तन्मांसैः प्राणान् रक्षत। ततस्तथेति आर्त्तेषु तेषु तत्र गन्तुमुद्यतेषु स विनीतमतिर्बोधिसत्त्वः पूर्वं त्वरितं तत्र गत्वा तत् खातं प्राप्य योगेन मृगरूपं कृत्वा तत्र आत्मानं निक्षिप्य तेषामतिथीनां सेवार्थं प्राणान् विजहौ। ततस्ते कनककलशाद्याः शनैस्तत्र गत्वा खाते तत्र विपन्नं पतितं मृगञ्च ददृशुः। ततस्ते तमुद्धृत्य तृणादिभिर्ज्वलनं प्रज्वाल्य तस्य मांसानि भृष्ट्वा च निःशेषाण्यभक्षयन्।

अत्रान्तरे तस्य विनीतमतेर्द्वे भार्य्ये विद्भवे नागसुताराजसुते ते यतिं पतिमपश्यन्त्यौ तस्मै सोमशूराय समाधिबन्धात् निवृत्तये ऊचतुः। सोऽपि प्रणिधानेन विज्ञातगुरुचेष्टितः ताभ्यां गुरुपत्नीभ्यां दुःखप्रदमपि तत् यथावत् कथयामास, ययौ च तत्क्षणं ताभ्यामेव सह तत् खातान्तिकम्। तत्र गत्वा ते राजपत्न्यौ मृगाकृतिं शृङ्गास्थिमात्रशेषं तं पतिं दृष्ट्वा अन्वशोचतां, तानि च शृङ्गास्थीनि समादाय स्वाश्रमात् दारुसञ्चयमानीय अग्निं ज्वलन्तं प्राविशताञ्च। ततस्तत्र स्थितः सोऽपि कनककलशः तं वृत्तान्तं ज्ञात्वा सुदुःखितः सानुचरः अग्निं प्राविशत्। एवं गते सोमशूरोऽपि गुरुशोकासह्यः प्राणत्यागार्थं दर्भसंस्तरमध्यास्त।

इतस्मिन्नन्तरे देवराजः साक्षादागत्य तमभ्यभाषत, ब्रह्मन्! मैवं कृथाः, मयैव तव गुरुः परीक्षितः। स हि अस्थिचर्मावशेषोऽपि सह भार्याभ्यामतिथिभिश्च अमृतवर्षेण जीवयित्वा समुत्थापितः। इति इन्द्रवाक्यमाकर्ण्य तं प्रणम्य मुदा समुत्थितः गत्वा यावत् वीक्षते स तावत् स गुरुर्विनीतमतिर्भार्यातिथिभिश्च समं समुत्तस्थौ। ततः स सोमशूरः तं सपत्नीकं परलोकागतं गुरुं मूर्ध्ना वाक्पुष्पैश्च ववन्दे, पपौ च चक्षुषा।

अथ भक्तिप्रह्वेषु कनककलसादिषु तेषु ब्रह्मविष्णुमुखा देवाः सर्वे तत्राययुः। ते च सत्त्वतुष्टास्तस्मै विनीतमतये दिव्यानुभावात् पारार्थभूतान् वरान् दत्त्वा तिरोऽभवन्। सोऽपि विनीतमतिरुक्तवृत्तान्तैस्तैः सोमशूरादिभिः सह दिव्यमन्यत् तपोवनमाययौ। इत्थं भस्मीभूता अपि पुनर्मिलन्ति, किं पुनर्जीवन्तः स्वच्छन्दगतयो नराः, तदलं देहोत्सर्गेण, वत्स! वीरोऽसि, व्रज, मृगाङ्कदत्तेन तव समागमो भविष्यतीति वृद्धतापस्या मुखात् कथामिमां श्रुत्वा जातास्थः खड्गमादाय तां नत्वा ततः प्रस्थितवानस्मि। ततश्च क्रमेण अटवीं प्राप्तः एभिर्दैवादहं चण्डिकाकृते उपहारमन्विच्छद्भिः शबरैर्लब्धः। बद्धश्चैतैः ब्रणाङ्कितः अस्य शबराधिपतेर्मायावटोः पार्श्वमानीतः छिन्नमन्त्रियुतस्य भवतश्चरणारविन्दमद्राक्षम्। साम्प्रतं त्वत्प्रसादात् मे स्वगृहे इवात्र परा निर्वृतिर्जाता। इति तस्य गुणाकरस्य वृत्तान्तं निशम्य शबरपतेर्गृहस्थितः स मृगाङ्कदत्तः परं परितोषमभजत, दृष्ट्वा च तस्य सम्प्रहारव्रणितं

अङ्कम् उचितपथ्यदेहचर्यां विधाय अहनि गलति अपरै-र्वयस्यैः सह उत्थाय आह्निकं स त्वं व्यधात्। तश्च गुणाकरम् उल्लासयन् शशाङ्कवत्यासये उज्जयिनीं .यियासुरपि शेषान् सखीन् रुत्याप्तुं तत्रैव शबरेन्द्रपल्ले कतिपयान्यहानि तस्थौ।

---

## अथ त्रिसप्ततितमस्तरङ्गः।

अथ रूढ़व्रणे स्वस्थे जाते तस्मिन् गुणाकरे शुभेऽहनि तं सुहृदं शबराधिपं कार्य्याय क्रतसविदम् अदूरमन्वागतं सख्या दुर्गपिशाचेन मातङ्गपतिना समन्वितमापृच्छ्य शशाङ्कवतीलाभार्थम् उज्जयिनीं प्रति प्रतस्थे मृगाङ्कदत्तः सानुगः गच्छंश्च अन्यान् सखीन् चिन्वन् सामात्यः पथि विन्ध्याटवीमासाद्य श्रान्तः शर्वर्य्यां कस्मिंश्चित् तरोस्तले सुष्वाप, ददर्श च सहसा प्रबुद्धः तस्यामेवाटव्यामपर-मेकं मानुषं प्रसुप्तम्। यावत् स मुखं विव्रणोति तावत् स्वमन्त्रिणं तं विचित्रकथं प्रत्यभिज्ञाय मृगाङ्कदत्तः तमु-त्थापयामास। सोऽपि प्रबुध्य दृष्ट्वैव तं प्रभुं मृगाङ्कदत्तं सानन्दं पादयोः जग्राह। ततस्तेन राजपुत्रेण अकाण्ड-दर्शनोत्फुल्लचक्षुषा आलिङ्गितः तैश्च सर्वैस्तन्मन्त्रिभि-रभ्यनन्द्यत। अथ यथोक्तस्वस्व वृत्तान्तैस्तैः सर्वैः क्रमात् परिपृष्टोऽसौ विचित्रकथः स्वं वृत्तान्तं वक्तुं प्रचक्रमे।

तदा नागशापात् युष्माभिरितस्ततः प्रभ्रष्टेषु अह-

मेकाकी मोहात् सुचिरं तत्र पर्य्यटम्। गत्वा च बहु-दूरं नष्टसंज्ञः परेद्युरकस्मात् घटव्याः प्रान्तस्थितं दिव्यं महत् पुरमेकं प्राप्तवान्। तत्र दिव्यः कश्चित् पुमान् दिव्य-नारीभ्यामन्वितः मां दृष्ट्वा समाश्वास्य अन्तःपुरं प्रवेश्य च यत्नेन दिव्यं भोजनं प्रादात्। अहञ्च तत् भुक्त्वा विश्रा-न्तस्तं पुरुषं व्यजिज्ञपं, को भवान्, कथं वा मुमूर्षुं मामेवं भुक्तवानसि, मया हि त्वं प्रभुं विना अवश्यमेव प्राणा मोक्तव्याः इत्युक्त्वा मया वृत्तान्तः सर्वस्तस्मै निवेदितः। ततश्च स महात्मा प्रीतः मामवादीत्, अहं यक्षः, एते च मम भार्य्ये, त्वं हि मेऽद्य अतिथिः प्राप्तः। यथाशक्ति अतिथिपूजा गृहमेधिनां धर्मो हि, तस्मात्त्वं मयार्चितः। त्व कथं प्राणान् मुमुक्षसि? नागशापेनायं वियोगो युष्माकं किञ्चित् कालम्। क्षीणशापानां युष्माकं अवश्यं समागमो भावी, भद्र! अस्मिन् संसारे को हि निर्दुःखो जायते? यक्षेणापि मया यद् दुःखं भुक्तं तत् कथयामि शृणु।

अस्ति वसुधादेव्या मौलिमण्डलमालिका त्रिगर्त्ता नाम सुमनोगुणगुम्फिता नगरी। तस्यां पवित्रधर इति कोऽपि द्विजयुवकः प्रतिवसति स्म। स खलु धनदरिद्रः परं परिजनैः कुलैश्चादरिद्रः। स खलु समृद्धिशालिनां मध्ये वसन् एकदा मानी व्यचिन्तयत्, एतेषां धनिनां मध्ये अहं वृत्तस्थोऽपि न विभामि मनस्वी अहं सेवां वा प्रति-ग्रहं कर्तुं शक्नोमि, तद् गत्वा क्वचिदेकान्ते यक्षिणीं साध-यामि। ततः स पवित्रधरो द्विजः भार्य्याभावेन यक्षिणीं साधयन् सिद्धया सौदामन्यभिधानया तया समन्वितस्तस्थौ।

एकदा सुतोत्पत्तिं विना दुःखितचेतसं तं पतिं दृष्ट्वा भार्य्या यक्षिणी समब्रवीत्, आर्य्यपुत्र! मा अत्र चिन्तां कृथाः, आवयोः सूनुरुत्पत्स्यते। इमञ्च वृत्तान्तं शृणु कथयामि ते। अस्ति दक्षिणस्यां दिशि प्रावृषो जन्मभूमिरिव पिहितार्का घनश्यामा तमालवनवीथिः। तस्यां पृथूदरो नाम यक्षः प्रतिवसति। तस्य अहमेवैका सौदामनी नाम सुता। कदाचित् स्नेहाक्रान्तेन पित्रा अहं कुलाद्रिषु नीता तेषु दिव्योपवनभूमिषु सदा अक्रीड़म्।

एकदा कपिशभ्रुवा नाम सख्या सह क्रीड़न्ती कैलासे अट्टहासनामकं यक्षपुत्रमेकमद्राक्षम्। सोऽपि सखीमध्यगतां मां दृष्टवान्। आवाञ्च तत्क्षणं अन्योन्यकृपाकृष्टविलोचनौ जातौ। तद् दृष्ट्वा सदृशसंयोगमवेत्य सद्य एव अट्टहासपित्रा तातमाहूय मे तेन सह विवाहो निर्णीतः। ततः स्थिते लग्नदिवसे तातो मां गृहमनयत्। अट्टहासोऽपि मुदितः पितुरालयमगात्।

अथान्येद्युः सा मम सखी कपिशभ्रूः विषस्सेव मत्समीपमागात्। पृष्टा च सनिर्बन्धं कृच्छ्रादभाषत, सखि! अनाख्येयमपीदं ते अप्रियं कथयामि। अद्य गच्छन्त्या मया स तव वरः अट्टहासः चित्रस्थलाभिधे हिमवत्सानुनि उद्याने त्वदुत्सुकः दृष्टः। तञ्च विनोदयन्तः सखायः क्रीड़या यक्षाधिपं तस्य च भ्रातरं दीप्तशिखं राजपुत्रं नलकूवरम् अकल्पयन्। स्वयं ते तस्य साचिव्यमाश्रयन्। एवं वयस्यैः कृतविनोदं तव प्रियं व्योम्ना यदृच्छया गच्छन् धनाधिपसुतो नलकूवरः अद्राक्षीत्, अप्रपच्च संक्रुद्धः तं

समाहूय। त्वं मर्त्यो भूत्वा भवतः प्रभुमनुकर्तुमिच्छसि ? दुर्मते ! मर्त्यो भव अट्टमिच्छन् अधो व्रज। इत्युक्तः स वित्रस्तः तं व्यजिज्ञपत्, देव ! श्रौत्सुक्यं गुदता मूर्खेण मया एतत् कृतं नाधिकाराभिमानेन, तस्मात् प्रभो ! मां क्षमस्व। इत्यार्त्तं तद्वचः श्रुत्वा प्रणिधानात् तथैव तत् विदित्वा तस्य शापान्तं व्यधात्। यस्यां त्वमुत्सुकः, त्वं मानुषो भूत्वा तस्यां यक्षिण्याम् अनुजं दीप्तशिखमेव आत्मजं जनयित्वा शापात् विमुक्तः पुनः तया पत्न्या सह स्वपदं प्राप्स्यसि। भ्राता च ते सुतो भूत्वा भुवि राज्य कृत्वा शापात् मोक्ष्यते इत्युक्त्वासौ तिरोऽभवत्। इति सख्या मुखात् श्रुत्वा तदा दुःखात् कामपि दशामगमम्। अथात्मानमनुशोच्य गत्वा पित्रोर्निवेद्य च पुनः समागमकाङ्क्षया कथमपि तं कालमनैषम्। सः अट्टहासस्त्वमुत्पन्नः, सा चाहं सौदामिनी उभौ मिलितौ। अचिरादेव आवयोः सुतो जनिता। एवं तया ज्ञानवत्याभिहितः सौदामन्या स प्रहर्षवान् पुत्रोत्पत्तौ सविश्वासस्तस्थौ।

कालेन तस्य तस्यां यक्षिण्यां पुत्र उदपद्यत। स च अविलधरः तस्य पुत्रस्य मुखं दृष्ट्वा सपदि दिव्याकृतिः अट्टहास समवर्त्तत। अब्रवीच्च तां यक्षिणीं, प्रिये ! अद्य मम स शापो गतः, स एवाट्टहासोऽहमभवं, साम्प्रत निजां गतिं गच्छावः। इति वादिनं तं सा यक्षिण्यवदत्, नाथ ! त्रिभुवयं ते भ्राता आवयोः सुतोऽभूत्। अस्य उपायश्चिन्त्यतामिति। तदाकर्ण्य सोऽट्टहासो ध्यानेन वीक्ष्य

तां जगाद, प्रिये! अस्यां पुरि देवदर्शनो नाम ब्राह्मणोऽस्ति। पञ्चाग्निस्तस्य सभार्य्यस्य क्षुधया ज्वलतः पुत्रधनरहितस्य अन्यौ द्वौ जठराग्नी अभूताम्। एकदा धनपुत्रार्थिनं तपसि स्थितम् अग्निमाराधयन्तं तं भगवानग्निः स्वप्ने समादिशत् ब्रह्मन्! औरसस्ते पुत्रो नास्ति कृत्रिमः पुत्रो भविता, तत् प्रभावाच्च ते दारिद्र्यं प्रनङ्क्ष्यति। इत्यग्नेरादेशात् स विप्रः तं पुत्रं प्रतीक्षमाणो व्यतिष्ठत। तस्मै अयं शिशुर्देयः, इति तां प्रियामुक्त्वा सः अट्टहासः रात्रौ प्रसुप्तस्य तस्य द्विजस्य सदने तं शिशुं स्वर्णकुम्भोपरि वर्त्तमानं गलावद्धदिव्यरत्नहारं स्थापयित्वा सभार्य्यः स्वं धाम प्रययौ। सोऽपि देवदर्शनः सभार्य्यः प्रबुध्य प्रस्फुरद्रत्नतारकं तं बालचन्द्रं दृष्ट्वा गृहागत विसिस्मिये जगाम च कृतार्थताम्। ततश्च तं हेमकुम्भं विलोक्य तमाग्नेयं स्वप्नादेशं स्मरन् ननर्त्त। जग्राह च उत्सङ्गे तं विधिसमर्पितं पुत्रं धनञ्च। विदधे च प्रातर्महोत्सवं स्वजनैः।

अथैकादशेऽहनि स द्विजः तस्य पुत्रस्य स्वोचितं श्रीदर्शन इति नामाकरोत्। ततः सः विप्रः तत्पुत्रप्रभावेण महाधनो भूत्वा नानाविधान् यज्ञादीन् कुर्वन् भोगांश्च भुञ्जानः कालमनैषीत्। ततस्तीर्थयात्राप्रसङ्गेन निर्गतः प्रयागे पञ्चत्वमवाप। तदाकर्ण्य तस्य पत्नी अपि अग्निं प्रविवेश। ततः स श्रीदर्शनः पितरौ शोचन् तयोः शास्त्रविहिताः क्रियाः यथाविधि व्यधत्त। क्रमेण च स शोकं तनूकृत्य दैवात् प्राज्ञोऽपि अनभिभावकतया

द्यूतक्रीडायां प्रसक्तोऽभवत्। क्रमाच्च तेन दुर्व्यसनेन क्षीणसम्पदस्तस्य भोजने क्लेशोऽजायत।

एकदा द्यूतशालायां त्र्यहं निराहारस्थितं मलिनवसनं लज्जया निर्गन्तुमशक्नुवन्तम्, अन्यैर्दत्तमभुञ्जानं सुदुःखितं कश्चित् सखा कितवः मुखरको नाम तं श्रीदर्शनमब्रवीत् सखे! किं मुह्यसि? इदं द्यूतव्यसनपातकम् ईदृगेव। अश्रीकटाक्षपाता अक्षाः किं तव न विदिताः? अत्रासक्तानां बाहू उपाधानं शय्या पांशवः, चत्वरं गृहं विध्वस्तता भार्या विधिना निर्मिताः। तत् कथं विद्वानपि न भुङ्क्षे, कथं वा आत्मानमुपेक्षसे? जीवन् हि धीरः किं नाम अभीप्सितं पदं नासादयेत्? तदत्र चित्रां भूनन्दनकथां शृणु।

अस्तीह भूमण्डले काश्मीर इति सुकृतिनां कृते द्वितीयः स्वर्ग इव सर्वसुखभोगास्पदं देशः। अहमत्राधिका न त्वमित्यन्योऽन्यमीर्ष्ययेव लक्ष्मीसरस्वत्यौ यं सततं समाश्रिते। धर्मद्रुहः कलेरत्र प्रवेशो माभूदितीव स्वदेहपरिवेशेन यं हिमाद्रिः सततं रक्षति देवतीर्थमयम् त्वमितो दूरं गच्छ इतीव तरङ्गहस्तैः कल्मषं निराकुर्वत्या वितस्तया यः परिविश्यते। यस्मिंश्च सितसुधया धौताङ्गाः प्रासादाः आसन्नहिमवत् पादावलिभ्रमं जनयन्ति। तस्यां भूनन्दनो नाम वर्णाश्रमाणां गुरुः प्रजानां नयनचन्द्रः विद्यागमेषु नितरां निष्णातो नृपतिरासीत्। यस्य विक्रमः नखराजिनियुक्तेषु कामिनीनां कुचकलशेषु विद्विषां मण्डलेषु विरराज। यस्य च नीतिज्ञस्यापि प्रजाः शश्वत्

अनीतय: कृष्णैकासक्तचित्तस्यापि अकृष्णरतमानसा: अभूवन्।

कदाचित् स राजा द्वादश्यां विधिवत् अच्युतं देवमर्चयित्वा सुप्त: स्वप्ने उपयातां कामपि दैत्यकन्यामपश्यत्। तया संयोगमवाप्यापि प्रबुद्धो न तां ददर्श, परमङ्गे सम्भोगचिह्नं दृष्ट्वा विसिस्मिये। तर्कयामास च नायं स्वप्न:, व्यक्त एवायं सम्भोग:, नून कयाचित् दिव्यनार्य्या अहं विप्रलब्ध:। इत्यालोच्य तदेकायत्तचित्त: तथा विरहातुरश्च बभूव यथा क्रमेण सर्वाण्यपि राजकार्य्याणि विजहौ। तत: स तस्या: प्राप्त्युपायमपश्यन्नचिन्तयत् हरे: प्रसादादेव तया मे स सङ्गमोऽभूत्। तत् तमेव एकान्तमनास्तत् प्राप्तये आराधयामि, साम्प्रत तद्विरहेण नीरसं राज्यं विमुञ्चामि। इति सञ्चिन्त्य सचिवान् सम्बोध्य अनुजाय सुनन्दनाय राज्यं ददौ। अथ सत्यक्तराज्य: स भूनन्दन: हरिमन्दिरं गत्वा तत्र तप: कुर्वन् अन्यरसनिस्पृहस्तस्थौ। इत्थं व्यतीतद्वादशाब्दे तस्मिन् तपस्यति तेन पथा कोऽपि मनस्वी ज्ञानिप्रवर: पिङ्गलाग्रजट: चीरवासा: शिष्यगणान्वित: तत्तीर्थशिखरादवतीर्य्य ईश्वर इव तत्रागात्। स तं राजानं तथा तपस्यन्तं दृष्ट्वैव जातप्रीतिरुपेत्य पृष्ट्वा च वृत्तान्तं क्षणमिव ध्यात्वाब्रवीत्, राजन्! सा दैत्यकन्या तव प्रिया, पातालवासिनी त्वैमाश्वसिहि, अहं त्वां तदन्तिकं नयामि, अहं हि दाक्षिणात्यस्य यजु:संज्ञस्य यज्वन: पुत्रो भूरिवसुर्नाम योगिनां गुरुरस्मि। सोऽहं पित्रा पातालशास्त्रत: संक्रामितज्ञान: हाटकेशानमन्त्रतन्त्रविधिं शिक्षित्वा श्रीप-

र्वते गत्वा चत्सङ्काराधनं तपः अकार्षम्। तेन तुष्टश्च स हरः स्वयं मामादिशत्, वत्स! गच्छ दैत्याङ्गनाभिः समन्वितो रसातले भोगान् भुङ्क्ष्व, ततश्च मामुपैष्यसि, तदुपायञ्च शृणु कथयामि। अत्र भूतले भूयांसि पातालविवराणि सन्ति, एकन्तु कश्मीरे मयदानवकृतं महत् विवरं प्रस्फुटमस्ति। येन प्रविश्य गुहासु दानवोद्यानभूमिषु बाणसुता उषा कान्तम् अनिरुद्धं व्यनोदयत्। प्रद्युम्नश्च तदा पुत्रं रक्षितुं गिरिशृङ्गेण यदेकतः एकं द्वारं प्रकल्पयामास निवेशयामास च यस्य रक्षाहेतोः दुर्गाणि तदपि प्रकटं शारिकाकूटमभिधीयते, गच्छ तेन विलेन अनुचरैः सह पातालं मम प्रसादात् तत्र ते अभिलषितं सेत्स्यति। इत्युक्त्वा देवे अन्तर्हिते तत्प्रसादात् समुत्पन्नसर्वविज्ञानः कश्मीरानागतोऽस्मि, राजन्! त्वमस्माभिः सह तत् शारिकापीठमेहि त्वां मनोरथप्रियालाभाय पातालं प्रवेशयामि। एवमुक्ते तेन मुनिना समं स भूनन्दनो नृपः तत् शारिकाक्षेत्रं ययौ। तत्र गत्वा प्रथमं वितस्तायां स्नात्वा विनायकमर्चयित्वा दिग्बन्धादिपूर्वकं शारिकादेवीं संपूज्य यथाविधि सर्षपक्षेपात् महानुग्रहशालिना तेन महातपस्विना विवरे प्रकटीकृते प्रविश्य तेन सशिष्येण समं स राजा पञ्चाहानि दिवानिशं गच्छन् पातालमवाप। षष्ठेऽहनि सर्वेऽपि पातालवाहिनीं गङ्गामुत्तीर्य्य रजतमय्यां भूमौ दिव्यमेकं काननमैक्षन्त। तन्मध्ये च सुमहाभोगं रत्नसोपानसुन्दरं सौवर्णभित्ति माणिक्यस्तम्भसम्भारभास्वरं चन्द्रकान्तशिलाबद्धं समुन्नतं महत् शैवमन्दिरं सहर्षं

ददृशुः । ततः स तपस्वी तान् शिष्यान् तञ्च भूपतिं भूनन्दनं सञ्जातास्थः प्रोवाच यस्त्रिभुवने हाटकेश्वरो गीयते अयं स देवः, युष्माभिः पूज्यताम् । ततः सर्वे ते कृतगङ्गास्नानाः पातालसम्भवैः पुष्पैः शम्भुं पूजयामासुः । ततश्च चणं विश्रान्ता गत्वा पतत्पक्वफलं दिव्यमेकं जम्बूद्रुमं प्रापुः । तं प्रेक्ष्य स तपस्वी तानवोचत् एतस्य फलानि नः न भक्ष्याणि, एतानि भुक्तानि विघ्नं कुर्वते । तच्छ्रुत्वापि एकः शिष्यः क्षुधा तत्फलं चखाद । खादित्वा च सद्य एव निश्चेष्टः स्थावरः समजायत । ततस्तद्दर्शनेन त्रासात् परित्यक्तफलस्पृहैरन्यैः शिष्यैः राज्ञा भूनन्दनेन च समन्वितः स तपस्वी क्रोशमात्रमतिक्रम्य उच्छ्रितं हेमप्राकारं सद्रत्नखचितद्वारं गृहमैक्षत । तस्य च द्वारस्य उभयोः पार्श्वयोः लौहमयाङ्गौ प्रवेशावाधिनौ शृङ्गप्रहारिणौ मेषौ दृष्ट्वा सपदि समुपेत्य मूर्द्धनि न्यस्तमन्त्रेण दण्डेन वज्राहताविव क्वापि विद्रावयामास । ततश्च ते शिष्या राजा मुनिश्च सर्वे तेन द्वारेण प्रविश्य दिव्यान् हेमरत्नमयान् गृहान् तेषाञ्च प्रतिद्वारं दन्तदष्टाधरोत्कटान् गृहीतलौहमूषलान् द्वाररक्षिणश्च ददृशुः । ततः सर्वे तत्रैकस्य तरोस्तले उपाविशन् । स च तपस्वी दुष्टघ्नीं योगधारणामबध्नात् । तत्प्रभावेण च ते दुष्टा द्वाररक्षिणः सर्वेऽपि सर्वद्वारेभ्यः भयात् पलाय्य अदर्शनं जग्मुः । ततश्च चणेन दिव्याभरणवाससः दैत्यकन्यापरिवारवारनार्य्यः तेभ्यः द्वारेभ्यः विनिर्ययुः । ताश्च सर्वाः पृथक् पृथक् अभ्येत्य तान् सर्वान् स्वस्वस्वामिनोनिकेतं प्रावेशयन् स तु तन्त्री

तान् अन्तः प्रविष्टेषु आभिः स्वस्वप्रियावचः नोल्लङ्घनीयमिति व्यादिश्यताभिः नारीभिः समं वरमन्दिरं प्रविश्य एकाम् उत्तमां दैत्यकन्यां वाञ्छितान् भोगांश्च प्राप। अन्ये च एकैकशः अन्याभिस्ताभिरन्यवेश्मसु प्रवेशिता दैत्यसुतासम्भोगमवापुः। सोऽपि राजा भूनन्दनः एकया विनीतया मणिमयं परिवारवरनारीणां प्रतिबिम्बैः समन्ततः सजीवरत्नविन्यासमिव विमानविजिगीषया दिवः पृष्ठमिवारूढं गृहमेकं नीतः तत्र दिव्यसङ्गीतशालिनीं प्राक् स्वप्नदृष्टां तां कान्तामसुरकन्यामद्राक्षीत् यया अर्कादिवर्जितं पातालं कान्त्या प्रकाशितं तां कन्यां पश्यन् अनिर्वचनीयरूपां नृपः हर्षाश्रुणा चक्षुषोरन्यावलोकनमलं धौतवानिव। सापि तं राजेन्दुं वीक्ष्य बाला कुमुदिनीव कमपि प्रमोदमवाप। स्वप्नसन्दर्शनेन मया खेदितोऽसीति ब्रुवाणा सादरं तम् आसने समुपावेशयत्। ततश्च सा विश्रान्तं स्नातं वस्त्रादिना अलङ्कृतम् आपानाय उद्यानं निनाय। तत्र सा वापीतटे तेन साकमुपाविश्य सुरापूर्णपात्रं तस्मै नृपाय प्रादात्। स तु राजा तत् जुगुप्सितं न जग्राह। एतन्मम पानानुरोधवचनम् अकुर्वतस्ते न क्षेमं भवेत् इति निबन्धेन ब्रुवाणां तां स राजाब्रवीत् प्रिये! अपेयं निश्चितमहं न पास्यामि यदस्तु मे तदस्तु। तदाकर्ण्य सा तस्य मूर्ध्नि पात्रं क्षिप्त्वा अन्यतो ययौ। स च राजा विषादमापन्नः तस्याश्चेटिकाभिस्तस्या एव वाप्या जले धृत्वा निचिक्षिपे। क्षिप्तश्च तस्मिन् तपोवने प्राप्तमात्मानमपश्यत्। अचि-

अथच सविषादविस्मयं अहो क्व तत् दैत्यकन्योपवनं क्व इदञ्च तपोवनं, किमिदमाश्चर्य्यं किमसौ माया, उत मतिभ्रमो मे। आहोस्वित् अन्यत् किमपि? ध्रुवमेतत् तस्या वचनीलङ्घनफलं तपस्विवाक्यं श्रुत्वा मया विवेचितम्। मत्परीक्षार्थमेव सा तथा कृतवती, न च तन्निन्दितं येन मूर्ध्नि च्युतेन अतिसौरभं दिव्यं प्रकटीकृतम्। तत् सर्वथा अभाग्यानां महानपि कृतः क्लेशः न फलाय, विधिरेव तेषु वामो वर्त्तते इत्येवं चिन्तयन् स भूनन्दनो नृपः असुरसुतापानसिक्ताङ्गगन्धलुब्धैर्भृङ्गैरवेष्ट्यत। हा कष्टं क्लेशो मम इष्टफललाभाय न, प्रत्युत अनिष्टफलाय वेतालोत्थापनमिव जातः इति भृङ्गैर्दश्यमानाङ्गो विमृशन् सञ्जातवैराग्यः देहत्यागाय मतिमकरोत्।

तस्मिंश्च क्षणे तेन पथा गच्छन् कोऽपि मुनिकुमारस्तं तथाविधं क्षितिपतिं दृष्ट्वा समुपेत्य करुणार्द्रधीर्मरणव्यवसायात् निवार्य्य पृष्ट्वा च वृत्तान्तम् इदमभाषत राजन्! यावदयं देहः, तावत् दुःखक्षयः कुतः? तस्मात् निरुद्वेगैर्बुधैः पुरुषार्थः संसाध्यः। यावच्च अच्युतेशानविरिञ्चिषु एकतामतिर्न स्यात् तावत् भेदोपासनजाः सिद्धयो भङ्गुरा एव, तद् अभेदधिया ब्रह्मविष्णुमहेश्वरान् ध्यायन् धैर्य्येण द्वादश अन्यानि वर्षाणि इह तपः कुरु, ततस्त्वं शाश्वतीं सिद्धिं प्राप्स्यसि। इदञ्च मम समन्त्रं कृष्णमृगाजिनं गृहाण, येन कृतावगुण्ठनो भ्रमरैर्न बाध्यसे। इत्युक्त्वा स मुनिरजिनं समन्त्रं दत्त्वा तस्मै स्वं निलयमयात्। सोऽपि राजा तथेति गृहीतधैर्य्यः तत्रैव

तीर्थे अवसत्। ततः द्वादशाब्दं तपसा समाराधितदेवं तं राजानं सा कुमुदिनी नाम्नी दैत्यकन्या स्वयमुपातिष्ठत्। ततः स तया सह पातालं गत्वा चिरं भोगान् भुञ्जानः परां सिद्धिमवाप। इत्थमनुद्वेगेन ये धैर्यावलम्बिनो भव्याः, ते दूरं भ्रष्टा अपि पुनः सिद्धिं लभन्ते। तस्मात् त्वं सुदर्शन! आहारं विना कथमात्मानमुद्वेगादुपेक्षसे? इति द्यूतशालान्तः सभिकेन सख्या मुखरकेण उक्तः सः सुदर्शनः रात्रौ निराहारस्तं जगाद यथात्थ त्वं कुलीनः, सन् अस्यां पुरि लज्जया बहिर्निर्गन्तुं न शक्नोसि, तदस्यामेव रात्रौ यदि मे विदेशगमनं न निषेधयसि, तदाहं आहारं करोमीति। तदाकर्ण्य स मुखरकस्तथेत्युक्त्वा भोजनमानीय तस्मै प्रादात्। सोऽपि बुभुजे। भुक्त्वा च तेनैव स्निग्धेन मित्रेण सह श्रीदर्शनः देशान्तरं प्रति प्रायात्। मार्गे गच्छन्तञ्च तं दैवात् तौ जननीजनकौ निशि यदृच्छयागतौ यक्षौ अपश्यताम्। दृष्ट्वा च तौ सौदामन्यट्टहासौ यो देवदर्शनस्यात्मजो जातमात्र एव न्यधीयत स एवायमिति प्रत्यभिज्ञाय ज्ञात्वा च धनव्यसनकर्शितं विदेशप्रस्थितं स्नेहादहश्याविदमूचतुः, वत्स! श्रीदर्शन! तव मात्रा देवदर्शनभार्यया स्वनिधानभूमौ आभरणानि अन्तः स्थापितानि, तानि गत्वा गृहीत्वा अवश्यं त्वया मालवो गन्तव्यः। तत्र श्रीसमूर्जितश्रीः श्रीसेन इति भूपतिरस्ति। स च कुमारत्वे यतः भृशं द्यूतविपदा क्लिष्टः, तस्मात् तेन कितवानां स्फीतो महामठः कृतः, तत्र कितवा वसन्तः अभीष्टभोजनं लभन्ते

तंस्तत्र गच्छ, तत्र तव अभीष्टं भवितेति अन्तरीक्षात् अशरीरिणीं वाचं श्रुत्वा श्रीदर्शनो गृहं गत्वा तेन मित्रेण सह स्वनिवासभूमेरभ्यन्तरात् तानि आभरणानि आदत्त। ततः स प्रहृष्टः तेन मित्रेण सह दैवानुग्रहं मन्यमानः मालवं प्रतस्थे दूरमध्वानं गत्वा सायं बहुशस्याख्यं ग्राममेकमाससाद। अथ श्रान्तः स तेन सुहृदा तस्य ग्रामस्य नातिदूरे विमलतोयस्य कस्यचित् सरसस्तीरे उपाविशत्। तस्मिंश्च तत्र धौतपादे पीतसलिले स्थिते रतिरिव रूपिणी कापि कन्या तोयार्थमाययौ। सा तं श्रीदर्शनं प्रेमनिर्भरया दृशावलोक्य उपेत्य दर्शनप्रीतं सवयस्यमुवाच, महाभागौ! कुत आगतौ इह विपत्तये अज्ञानात् ज्वलति अग्नौ पतङ्गवत् पतितौ? एतदाकर्ण्य सम्भ्रान्तः स मुखरकः कन्यामप्राक्षीत् सुन्दरि? का भवती कथं वा इदमुच्यते?। ततः साब्रवीत् शृणुतं युवां, संक्षेपेण वच्मि।

अस्त्यत्र सुघोषो नाम सुमहान् सुविश्रुतः कश्चिदग्रहारः। तत्र पद्मगर्भो नाम वेदवित् ब्राह्मणः समजायत। तस्य सत्कुलजा शशिकला नाम भार्य्याभूत्। तस्यां तस्य द्वे अपत्ये अजायेताम्। मुखरको नाम सुतः, पद्मिष्ठा नाम सुताहम्। स मे भ्राता मुखरको द्यूतासक्तः बाल एव निर्गत्य गृहात् कमपि देशं गतः। तेन शोकेन च मम मातरि पञ्चत्वमितायां मत्पिता उभयशोकार्त्तः गृहस्थितिं त्यक्त्वा एकाकी मां गृहीत्वा तं सुतं गवेषयितुमितस्ततो भ्राम्यन् विधिवशादिमं ग्रामं प्राप। इह च ग्रामे महान् चौरचमूपतिर्वसुभूमिरिति ख्यातः नाम-

मावती ब्राह्मणः प्रतिवसति। तेन दृष्टोपस्थितस्य मे पितुः प्राणाः सुवर्णादीनि च द्रव्याणि हृतानि। अहन्तु गृहं नीता वन्दीकृता सुखति नाम्ने पुत्राय दातुं परिकल्पिता। स चास्य पुत्रः मोषणार्थं सुसार्थः क्वापि गतः स्थितः। मत्पुण्ये रद्यापि नायाति, विधिरत्रैवाधुना प्रमाणम्। तदेष चौरो वां दृष्ट्वा अवश्यमत्याहितं कुर्य्यात् तद्यथा अस्मात् विमुच्येथास्तथोपायं कर्त्तुमर्हथः। एवं वादिनीं तां जातप्रत्यभिज्ञः स मुखरकः कन्यां कण्ठे समालिङ्ग्य रुदन्नभ्यधात्, हा पद्मिष्ठे! स एवाहं ते भ्राता मुखरकः बन्धुद्रोही, भगिनि! मन्दभाग्योऽहं हतोऽस्मि। तदाकर्ण्य सापि पद्मिष्ठा हृष्टा भ्रातरि अग्रजे दृष्टे अखिलैः पूर्वदुःखैः कृपयेव समावृता कियन्तं कालं पितरौ शोचन्तौ तस्थौ। ततः श्रीदर्शनः तौ भ्रातरौ तथादुःखितौ समाश्वास्य कालोचितमभाषत, नायं शोकस्य अवसरः साम्प्रतमात्मा एव रक्ष्यः अर्थं त्यक्त्वापि, ततश्चास्य चौरस्य प्रतिक्रिया कार्य्या। एवं श्रीदर्शनोक्तमाकर्ण्य धैर्य्येण दुःखं संहृत्य ते त्रयः परस्परं कार्य्यनिर्णयमकार्षुः। श्रीदर्शनः पीड़ाव्याजेन कृशीभूय तस्य तड़ागस्य तीरे मलिनकान्तिः निपत्य स्थितः। मुखरकश्च तस्य पादौ गृहीत्वा रुदन्नतिष्ठत्। पद्मिष्ठा च द्रुतं तस्य चौरपतेः पार्श्वमगात् अब्रवीच्च गत्वा तड़ागान्ते कोऽपि मन्दः आगत्य पान्थः स्थितः, तस्य च द्वितीयस्तत्र परिचारको वर्त्तते। तदाकर्ण्यैव स चौरस्तान् भृत्यान् निसृष्टवान्। अथ ते गत्वा तथारूपौ तौ दृष्ट्वा तयोर्मुखरकं पप्रच्छुः, भद्र! अस्य

कस्त्वं किमर्थं वा रोदिषि? एतदाकर्ण्य ज्वलितामिर्मुख- रकस्तान् चौरान् प्रत्यवादीत् अयं मे अग्रजो ब्राह्मणस्तीर्थ-यात्रया प्रवासतः रोगाक्रान्तः शनैर्भ्राम्यन् अद्य मया सह इहागतः, आगत एवायं निश्चेष्टीभूतो मामुक्तवान्, वत्स! उत्तिष्ठ। शीघ्रं मे दर्भसंस्तरं कुरु, अस्माच्च ग्रामात् कञ्चित् गुणवन्तं ब्राह्मणमानय, तस्मै अहं सर्वस्वं दास्यामि, नाद्य निशि अहं जीवामि। इत्युक्तोऽहमनेन इह विदेशे रवौ अस्तमिते कर्त्तव्यमूढ़ः दुःखार्त्तो रोदनमेव मश्रि-श्रियम्। तद्यूयं कृपया अस्य जीवतः कञ्चिद् ब्राह्मण-मानयत। अयं जीवन्नेव स्वहस्तेन यदावयोरस्ति तत् सर्वं तस्मै दास्यति। एष च निश्चितमेव अस्यां रात्रौ प्राणान् हास्यति, अहञ्च एतद्वियोगं सोढुमशक्नुवन् श्वः पावकं प्रवेक्ष्यामि। तदस्मदर्थं यूयं कृपालवो भूत्वा साम्प्रतिकं कुरुध्वं दैवेनैव यूयम् अकारणबान्धवाः अस्मदनु-ग्रहाय प्रेषिता इति मन्ये इति।

तदाकर्ण्य सञ्जातकृपास्ते चौरास्तथैव प्रतिपद्य गत्वा स्वामिनं वसुभूतिमब्रुवन्, प्रभो! आगच्छ तस्मात् प्रय-च्छतः पथिकात् सर्वस्वं गृहाण प्रतिग्रहेण, यत् निपात्य ग्राह्यम्। इत्युक्तो वसुभूतिरवादीत् कोऽयं क्रमः, अनि-पात्य धनादानमस्माकं परोक्षनयः। अनिपातितः हृतस्वो निश्चितम् अमङ्गलं कुर्वीत। इत्युक्तवन्तं तं पापं भृत्याः प्रत्यूचुः देव! नात्र ते शङ्का, क्व हरणं क्व च मुमूर्षोः प्रति-ग्रहः? यदि जीविष्यतः तदा प्रातरपि तौ हनिष्यामः अन्यथा तु ब्रह्महत्यापापेन किं फलम्? श्रुत्वैतत् वसुभूति-

स्तथेति प्रतिग्रहार्थं तं श्रीदर्शनं प्रतिपेदे। श्रीदर्शनोऽपि अवच्छाद्य अस्मै किञ्चित् किञ्चित् तदाभरणं स्वस्वाचरया गिरा ग्रसन् ददौ। स च चौरपतिः कृतार्थः सानुगः गृहान् प्रत्यागात्। अथ सर्वेषु चौरेषु सुप्तेषु रात्रौ सा पल्लिष्ठा तस्य श्रीदर्शनस्य मुखरकस्य च भ्रातुः पार्श्वमाययौ। ततस्त्रयोऽपि ते मन्त्रयित्वा तस्यामेव रात्रौ चौरविहीनेन पथा मालवं प्रति प्रस्थिताः कियन्तमध्वानं कामपि गृहकबहुलां भ्राम्यत्कृष्णसारमुखेक्षणां शुष्यत्तनुलतांकतारचोरचीत्कारवतीं उन्नदत्व्याघ्रसिंहादिश्वापदेभ्यो विभ्यतीमिव महाटवीमासेदुः। तस्याञ्च गच्छतां तेषां सर्वं दिनं क्लेशं दृष्ट्वा कृपयेव रविरस्तमगात्। ततस्ते श्रान्ताः क्षुधार्त्ता वृक्षमूलमुपाश्रिताः दूरतः अग्नेरिव ज्वालां ददृशुः। अथ श्रीदर्शनः अत्रायं ग्रामः स्यात्, यावत् गत्वा आलोकयामि, इत्युक्त्वा तां ज्वालामनुसरन् यावत् ययौ तावत् तत्र रत्नमयं गृहं निरीचाञ्चक्रे। ततः स तस्यैव ज्वालामिव महतीं प्रभां विवेद। तत्र स वीरः दिव्यरूपां कामपि स्थितां यक्षिणीं बहुभिर्विपरीताङ्घ्रिभिराकेकरविलोचनैर्यक्षैरावृतां दृष्ट्वा तैश्चाहूतं विविधमन्नपानञ्च तां यक्षिणीमतिथिलभ्यमयाचत। सा च सत्त्वतुष्टा तस्मै यथार्थितमन्नपानमदापयत्। स च तद् गृहीत्वा यक्षिण्यादिष्टस्य यक्षस्य स्कन्धमधिरुह्य तस्य पल्लिष्ठया सह स्थितस्य वयस्यस्यान्तिकमाययौ। आगत्य च तं यक्षं विसृज्य ताभ्यां सह तत् दिव्यमन्नं सुशीतलनिर्मलं तोयञ्च यथाकाममुपयुयोज। ततः स मुखरकः तं सत्त्वप्रभावाच्यं

देवांशमवेत्य तुष्टः आत्मानं तत्सख्यात् धन्यं मत्वा सम-भ्यधात्, सखे! त्वं तावत् कोऽपि देवांशः पश्चिता चेयं मद्भगिनी लोकसुन्दरी, तदद्य मया तुभ्यमेषा दत्ता। ततः श्रीदर्शनः तं सुहृदं वितातं मत्वा तद्वचनमभि-नन्दन् प्रत्यभाषत, सखे! मया इदं त्वद्वाक्यं पूर्वकाङ्क्षित-मभिनन्दितं परं स्थानं प्राप्य एनां यथाविधि परिणेष्यामि। इत्यूचिवान् स तौ च भगिनीभ्रातरौ हृष्टाः तां निशा-मनयन्। ततश्च प्रातस्ते तस्य श्रीसेनस्य भूपतेः नगरं मालवं क्रमेण गत्वा समासेदुः। अध्वश्रान्ताश्च ते सहसा नगरमप्रविश्य विश्रामार्थं कस्याश्चित् वृद्धायाः ब्राह्मण्या गृह-मुपतस्थुः। तत्र तैः प्रसङ्गोत्तनिजवृत्तान्तनामभिर्दृष्टा पृष्टा च सा ब्राह्मणी उद्विग्नेव तानब्रवीत् अहं यशस्वती नाम राजसेवैकजीविनः सत्यव्रताख्यस्य विप्रस्य गृहिणी। कालेन भर्त्तरि मृते अपुत्राया मे अमुनैव राज्ञा कृपालुना तज्जीवनचतुर्भागा वृत्तिर्दत्ता। अद्य स एव विख्यात्यायि-करोऽपि राजयशी वैद्यासाध्येन यक्ष्मणा गृहीतः। मन्त्राश्च औषधानि च क्रमेणावसन्नानि। एकस्तु भिषजां मन्त्र-वादिनां प्रतिज्ञातवान् राज्ञः सकाशे यदि कश्चित् तादृशो वीरो मे सहायो भवेत् तदा वेतालसाधनेन इमामस्य राज्ञः रुजां ध्रुवं निहन्याम्। ततश्चाहृतेष्वपि पटहेषु यदा तादृशो न लब्धः, तदा राजा सचिवानिदमादिशत् मया कितवानां कृते योऽयं महामठः स्थापितः, अत्र यदि कोऽपि आगन्तुको वीरो आयाति स भवद्भिरन्वेष्टव्यः। कितवा हि दारबन्धुजनत्यक्ता निरपेक्षाः निर्भया योगिन

इव वृक्षमूलादिशायिन इति ।, तथा दिष्टाश्च ते सचिवा-स्तन्मन्त्रिय: तथोक्तं वीरमागन्तुकं विचिन्वन्ति । तत् त्वं श्रीदर्शन ! यदि कितवः, कर्मणि च तस्मिन् क्षमः, तदाह-मेव त्वां तं मठमधुनैव नयामि, एवं कृते त्वं राजतो महच्च सत्कारं प्राप्स्यसि, मम प्राणान्तकृतो दुःखस्य शान्तिश्च भविता। इति वादिनीं तां वृद्धां श्रीदर्शनोऽब्रवीत् वाढं शक्तोऽहं तत् कर्म कर्त्तुं नय मां तं मठम् । एतदा-कर्ण्य सा वृद्धा पश्चिष्ठया मुखरकेण च समन्वितं तं मठं नीत्वा तदधिकृतानभ्यधात् ब्राह्मणोऽयं द्यूतकर: राजार्थं मन्त्रवादिनस्तस्य साहायके शक्त: देशान्तरागत इति । तदाकर्ण्य स मठाधिप: पृष्ट्वा तं तथेति वादिनं श्रीदर्शनं सत्कृत्य सपदि नृपान्तिकमनयत्। तत्र चागत्य तेना-वेदितं स श्रीदर्शन: पाण्डुकृशं पार्वणं शशाङ्कमिव तं राजानमद्राक्षीत् । राजापि प्रणतम् उपविष्टं तं भव्या-कृतिं दृष्ट्वा आकारतुष्टः जाताश्वासः समभ्यधात्, भद्र ! त्वत्कृतात् मे रोग: शीघ्रं निश्चितं शान्तिमेष्यति, तव दर्शनेनैव ध्वस्तपीड़ा मे तनुरेतत् वक्ति, तदत्र मे साहाय्यं कुरुष्व इति श्रीसेनेनोक्त: स श्रीदर्शन: प्रत्यवादीत्, देव! लघ्वी मात्रेयमिति ।

अथ राजा तं मन्त्रवादिनमामन्त्र्य अवादीत् अयं वीरस्ते सहायः, तदेतेन सहायेन तत् कार्यं कुरुष्व इति । तदाकर्ण्य स मन्त्रवादी तं श्रीदर्शनमभाषत, भद्र ! यदि वेतालाह्वानसाहाय्ये समर्थोऽसि, तत्त्वमस्यां कृष्णचतु-र्दश्यां निशागमे अमुष्मिन् श्मशाने सिद्धये मदन्तिकं-

मागच्छ। इत्युक्ता स तपस्वी मन्त्रसाधकः प्रययौ। श्रीदर्शनोऽपि तं भूपतिमामन्त्र्य तत्रैव मठमगात्। तत्र तया पत्निकया मुखरकेण च सह भुक्त्वा एकाकी कृपाणपाणिः निशायां तत् श्मशानमयासीत्। अन्विष्यंश्च तत्र मध्यभागस्थितं प्रेतवस्त्रकृतोष्णीषं तं मन्त्रसाधकम्। श्रीदर्शनश्च तमुपेत्य आत्मानं निवेद्य च पप्रच्छ, साधक! ब्रूहि किन्ते साधयामि तान्त्रिकोऽब्रवीत् गच्छ इतः अर्द्धक्रोशमात्रे पथि पश्चिमायां दिशि चिताग्नितापनिर्दग्धपल्लवः कश्चिदस्ति शिंशपातरुः। तस्य मूले शवः स्थितः, तमस्तमिहानय। ततस्तथेति प्रतिज्ञाय स श्रीदर्शनः द्रुतं तत्र गतः अन्येन केनापि नीयमानं तं शवं दृष्ट्वा धावित्वा तस्य अमुष्यतः स्कन्धात् चकर्ष। सोऽपि पुरुषः मुञ्च, दाक्ष्य मे मित्रं क्व नयसि इति ब्रुवन् तं श्रीदर्शनमवोचत् नाहमिदं मोच्यामि मित्रं को भवान्? इत्येवमुभयोः स्कन्धतः कर्षतोः स शवः वेतालानुप्रविष्टः भैरवं रवममुञ्चत। तेन रवेण त्रस्तो द्वितीयः स पुरुषः सहसा स्फुटितहृदयो व्यपद्यत। श्रीदर्शनश्च तं शवं गृहीत्वा प्रस्थितः। तावच्च स द्वितीयो मृतोऽपि वेतालाधिष्ठितः सहसा समुत्थाय अवरुन्धन् तं श्रीदर्शनमवोचत् तिष्ठरे, स्कन्धार्पितं मम मित्रं हृत्वा मत्सकाशात् क्व यासीति। ततः स श्रीदर्शनः तं भूताविष्टं मत्वा प्रत्यभाषत तव एतस्य मित्रत्वे किं प्रमाणं, एष ममैव मित्रम्। तदाकर्ण्य सोऽवादीत् अयमेव मे प्रमाणम्। श्रीदर्शनश्चावादीत् तर्हि, अयमेव वदतु। ततः स्कन्धवर्त्ती स शवाधिष्ठितो वेतालः

समब्रवीत् अहमेवं ब्रुवे, यो मह्यमाहारं प्रयच्छति क्षुधिताय, स एव मे मित्रं, स एव च मां यथेच्छं नयतु। तदाकर्ण्य स द्वितीयः शवारूढो वेतालः प्राब्रवीत् मम आहारो नास्ति, अस्य चेदस्ति तदायमेव ते आहारं ददातु। तदाकर्ण्य अहं ते आहारं ददामि इति वदन् श्रीदर्शनः यावत् निजांसस्थवेतालाहारसिद्धये तमेव द्वितीयं शवं खड्गेन हन्ति, तावत् हन्यमानः स द्वितीयो वेतालः सशवोऽन्तर्दधे। अथ स वेतालः स्कन्धाधिरूढस्तं श्रीदर्शनमभ्यधात्, इदानीं त्वया मे भोजनं दीयतामिति। ततः श्रीदर्शनः यदान्यत् भोजनं न लेभे, तदासिना स्वगात्रमुत्कृत्य तस्मै ददौ। तेन च तुष्टः स वेतालस्तदावदत् प्रीतोऽस्मि तवानेन साहसेन, त्वमिदानीमक्षत एव मां नय, कार्य्यं ते सेत्स्यति, स तु साधकः स्वल्पसत्त्वो विनङ्क्ष्यति। इत्युक्तस्तेन भूतेन स श्रीदर्शनः स्वस्थशरीरस्तं शवं नीत्वा तस्मै साधकाय समर्पयत्। स च साधकस्तं श्रीदर्शनमभिनन्द्य रक्तमाल्यानुलेपनैः नरास्थिचूर्णलिखिते कोणन्यस्तास्रकुम्भके महातैलज्वलद्दीपे प्रशस्ते मण्डले तं वेतालं सज्जितं निधाय तदुरसि उपविष्टः तस्य मुखकुहरे नरास्थिभिः स्रुक्स्रुवौ निधाय होमं कर्त्तुं प्रचक्रमे। क्षणेन च तस्य वेतालस्य मुखात् तथा ज्वाला उद्भूत, यथा स साधकः सहसा ततः उत्थाय अपासरत्। स च वेतालः सस्रुच्युतं स्रस्तस्रुवं तं परिधाव्य व्यात्तवदनः साङ्गोपाङ्गं निगीर्णवान्। तदवलोक्य खड्गमाकृष्य श्रीदर्शनः यावत् तमभिधावति तावत् वेतालस्तमभाषत श्रीद-

सेन! ते अनेन धैर्य्येण सन्तुष्टोऽस्मि तदिमान् मत्प्रभवान् सर्षपान् गृहाण, एभिः शिरोनिबद्धैः पाणिस्थैश्च एष भूपतिः सद्य एव निवृत्तयक्ष्मरोगः शान्तिमेष्यति, त्वञ्चाचिरेण सर्वस्याः पृथिव्याः अधिपतिर्भविष्यसीति तद्वचनं श्रुत्वा स श्रीदर्शनस्तमवोचत् देवयोने! साधकेन एतेन विना कथमहं यामि, अनेन स्वार्थलोभात् स निहत इति अवश्यमेव राजा वक्ष्यतीति। तथाभिहितः श्रीदर्शनेन स वेतालस्तमब्रवीत् वदामि ते प्रत्ययं येन तव शुद्धिर्भविता, अस्यैव शवस्य मदधिष्ठितस्य अभ्यन्तरं पाटयित्वा अमुं निगीर्णमन्तस्थं दर्शयिष्यसि इत्युक्त्वा सर्षपान् अर्पयित्वा स वेतालः स्वस्थानमगात्। स च शवस्तदैव भुवि अपतत्। सोऽपि श्रीदर्शनस्तान् गृहीत्वा पद्मिष्ठया मुखरकेण च सह तां निशामनयत्।

अथ प्रातः राजान्तिकं गत्वा रात्रिवृत्तान्तं निवेद्य तन्मन्त्रिभिः नीत्वा शवोदरे तं साधकं निगीर्णं दर्शयित्वा पुनरेत्य च तस्य राज्ञः पाणौ शिरसि च तान् सर्षपान् बबन्ध। स च राजा सद्य एव निःशेषव्याधिरभवत्। अथ तुष्टः स राजा श्रीसेनः, निरपत्यः प्राणदायिनं तं श्रीदर्शनं पुत्रत्वेन पर्य्यग्रहीत्। अभ्यषिञ्चच्च तदैव तं वीरं यौवराज्ये। उप्तं हि सुकृतबीजं सुक्षेत्रेषु महाफलं जनयति। ततः श्रीदर्शनस्तां पद्मिष्ठां लक्ष्मीमिव सेवार्थं पूर्वमागतां विधिवदुपयेमे। पालयामास च लक्ष्मीं तया सह भोगान् भुञ्जानो मुखरकद्वितीयः।

एकदा उपेन्द्रशक्तिनामा महावणिक् जलधेस्तीरा-

दागत्य रत्नविनायकमानीय तस्मै युवराजाय ददौ। स च युवराजस्तमनर्घमालोक्य तत्र नगर्यां प्रतिष्ठाप्य नित्यशस्तत् सेवार्थं ग्रामसहस्रं व्यवस्थापितवान्।

अथ सेवया नितरां परितुष्टो गणेश्वरः स्वगणानेव-मादिशत् अयं तावत् श्रीदर्शनः पृथिव्याः सम्राट् भविष्यति मत्प्रसादात्, तदपराम्भोधौ हंसद्वीपमिति श्रुतं द्वीपं यदस्ति, तत्रानङ्गोदयो नाम राजा प्रतिवसति, तस्यात्मजा अनङ्गमञ्जरी नाम मद्भक्ता, सा कन्या मामर्च-यित्वा सदा याचते भगवन्! सर्वपृथ्वीश्वरं पतिं मे ददातु, तस्मात् श्रीदर्शनेन पत्या तां संयोजयामि, तथा सति उभयोरेवानयोर्भक्तिफलं दत्तं भवेत्। तस्मात् श्रीदर्शनं तत्र नीत्वा युष्माभिरचिरात् मन्नियोगः साध्यतां तदेव हि भवितव्यम्। किञ्च वणिजोऽस्य मत्प्रतिमा-प्रापकस्य उपेन्द्रशक्तेः कापि उपक्रिया विधातव्या इति एवं गणेशेनादिष्टा गणास्तदैव सुप्तं श्रीदर्शनं स्वसिद्धि-बलेन हंसद्वीपमनयन् संन्यवेशयंश्च तत्र वासके सुप्ताया अनङ्गमञ्जर्याः शयने। प्रबुद्धश्च सहसा श्रीदर्शनः तत्र दुग्धफेननिभायां शय्यायां शयानां शशभृतो मूर्त्तिमिवा-भिरामामनङ्गमञ्जरीमद्राक्षीत्। सापि तस्य करस्पर्शात् शशीरिव कुमुदिनी व्यालोलनेत्रभ्रमरा तत्क्षणात् प्रबोध-मवाप। दृष्ट्वा च क्षणं दध्यौ कोऽयं दिव्यपुरुषः दुष्प्रवेशेऽत्र मदावासे प्रविष्टः? नूनमसौ कोऽपि देवो भवेत् इति। ततश्चोत्थाय सम्भ्रमाकुला पप्रच्छ कस्त्वं? कस्मात् कथं वा इह प्रविष्टोऽसि उच्यतामिति तत्र श्रीदर्शनेन स-

वृत्तान्ते अभिहिते सावोचत् अहमनङ्गमञ्जरी नाम अनङ्गोदयस्य हंसद्वीपपतेः कन्येति। ततस्तौ अन्योऽन्य-दर्शनेन समुत्सुकौ भूषणविनिमयं कृत्वा यदा गान्धर्व-विवाहार्थमुद्यतौ, तदा तं गणास्तौ मोहयित्वा निद्रावशं निन्युः। ततश्च जातनिद्रं तं श्रीदर्शनं स्वं गृहं प्रापया-मासुः। तत्रासौ सहसा प्रबुद्धः निजे गृहे स्थितमात्मानं दृष्ट्वा विस्मितो व्यचिन्तयत् अहो किमेतत् क्वाहं क्व नु सा द्वीपेश्वरसुता, क्व वा तद्वासगृहं दिव्यं, नचायं स्वप्नः, तदीयानि आभरणानि तया स्वयं परिधापितानि मे अङ्गेषु एतानि तिष्ठन्ति, तदेषः नूनं कोऽपि विधेर्विलासः। इत्येवं चिन्तयन् स सुप्तप्रबुद्धया पत्न्या धैर्यमापादितः कथञ्चित्तस्थौ।

अथ प्रातस्तं वृत्तान्तं विदित्वा राजा श्रीसेनः पुत्रार्थम् अनङ्गमञ्जरी कन्या कस्य द्वीपपतेरस्तीति पटहैर्घोषयन् समन्तात् किङ्करानचोदयत्। श्रीदर्शनस्तु तामनङ्ग-मञ्जरीं विना नितरां स्मरज्वराक्रान्तः सर्वभोगनिरुत्सुक एवासीत्। तदलङ्कृतीः पश्यन् न आहारेषु तन्मुखपङ्कजं स्मृत्वा शयने अन्यस्मिंश्च कुत्रापि रतिं नालभत।

अत्रान्तरे सा हंसद्वीपपतेः कन्या अनङ्गमञ्जरी प्रातः तूर्यशब्देन बुबुधे। उत्थाय च सा तं रात्रिवृत्तान्तं स्मृत्वा दृष्ट्वा चात्मानम् अलंकृतं, श्रीदर्शनालङ्कारैः समुत्सुका चिन्तामापेदे, अहो स्वप्नभ्रान्तिहराणि एतानि अलङ्क-रणानि, किमेतत् कथं जीवामि इत्यादि चिन्तयन्तीं पुरुषा-भरणैर्युतां तां पिता अनङ्गोदयः सहसा गृहं प्रविश्य

वाससा आच्छादिताङ्गीं लज्जावनतवदनां व्यलोकयत् अपृच्छच्च उत्सङ्गमानीयातिवत्सलः। पुत्रि ! कथमयं पुंवेशः, किञ्च ते त्रपा ईदृशी, वद, मयि अविश्वासं मा कृथाः, त्वयि प्राणा बद्धाः, इत्यादिभिर्वचनैः सा मन्दीकृतत्रपा पितरं सर्वं तं वृत्तान्तं शशंस। ततः स राजा तदमानुषगोचरमिन्द्रजालमिव विदित्वा कर्त्तव्यसंशयमगमत्। गत्वा च तत् सर्वं कमपि महाव्रतधरं सिद्धयोगिनं ब्रह्मसोमं नाम तपस्विनं पप्रच्छ। स तापसः प्रणिधानेन सर्वं विदित्वा तं नृपमभ्यधात् राजन् ! मालवात् गणैः श्रीदर्शनो नाम राजसुतस्त्वत्कन्यागारमानीतः गणपतिस्त्वत्पुत्र्यास्तस्य च उभयोः प्रीतः। तस्य च देवस्य प्रसादात् स श्रीदर्शनः सार्वभौमत्वमाप्स्यति। तस्मात् तव दुहितुः स वाञ्छनीयो भर्त्ता इत्युक्तो ज्ञानिना तेन स राजा सविनयमवादीत्, भगवन् ! क्व मालवः, क्व च हंसद्वीपं महांश्च दुर्गमः पन्थाः, कालान्तरासहमिदं यथा शीघ्रं सेत्स्यति तथा भगवता प्रसादः कार्य्यः, त्वमेव मे गतिर्नान्योऽस्ति कश्चिदुपाय इति राज्ञा विज्ञप्तः स तापसो भक्तवत्सलस्तथेति प्रतिज्ञाय कार्य्यसिद्धये सद्य एवान्तर्दधे। क्षणेन च मालवं प्राप्य प्रविश्य च श्रीदर्शनविनिर्मिते गणेशमन्दिरे गणेश्वरमभिवन्द्य उपविवेश। ततश्च स भगवन् ! नक्षत्रमालामण्डितमूर्द्ध्ने सुमेरुशिखराभाय कल्याणमयमूर्त्तये तुभ्यम् नमः इत्यादिभिर्यावत् गणेशं स्तौति स्म तावत् तत्प्रतिमानेतुर्वणिक्पते रूपेन्द्रशक्तेः पुत्रो महेन्द्रशक्तिर्नाम उन्मादविह्वलः भ्राम्यन्

दैवात् तत्र प्राविशत् । अभ्यधावञ्च तमेव तापसं ग्रहीतुम् । स च तापसः व्यस्तमन्त्रेण पाणिना तं तथाताड़यत् । तेन च ताड़ित एव स वणिक्सुतः भ्रान्तोन्मादस्तदैव स्वच्छन्दशरीरः समभवत् । ततश्च जाततज्जोऽसौ तत्क्षणा-त्ततो निर्गत्य दिगम्बरो हस्ताच्छादितकौपीनः स्वगृहं ययौ । तञ्च वृत्तान्तं लोकमुखात् श्रुत्वा स उपेन्द्रशक्ति-रानन्दनिर्भरः समुपेत्य तं पुत्रं निजं गृहमनयत् । आनीय च स्नापयित्वा वस्त्राद्यलङ्कृतं कृत्वा तेन सह तं तापसं ब्रह्मसोममुपाययौ । उपनिनाय च तस्मै पुत्रारोग्यविधा-यिने बहूनि धनानि, स तु तापसस्तानि सर्वाणि प्रत्यग्रहीत् ।

अथान्तरे श्रीसेननृपति तं वृत्तान्तं श्रुत्वा पुत्रेण श्रीदर्शनेन समन्वितः तं तपस्विनमुपागात् । उपगम्य च भक्त्या स्वयं प्रणिपत्य स्तुत्वा च व्यजिज्ञपत् सम्पन्ना ताव-दस्य वणिजः पुत्रस्वास्थ्यविधानेन महती उपक्रिया, युष्मदागमनात् तन्ममापि, कस्मिंश्चित् कार्य्ये कामपि उप-कृतिं कर्त्तुमर्हति भगवान् यथास्य मत्पुत्रस्य श्रीदर्शनस्य कुशलं भवेदिति । इति संप्रार्थितोऽसौ राज्ञा तपस्वी हसन् प्राब्रवीत्, राजन् ! किमस्य चौरस्य भद्रमुपकृतिं करोमि, योऽयं राजपुत्र्या अनङ्गमञ्जर्य्या हृदयं आभरणानि च मुषित्वा रात्रौ हंसद्वीपादिहागतः । तथापि मया त्वद्वचः कार्य्यमित्यभिधाय प्रकोष्ठतः श्रीदर्शनं तमा-दाय स तापसोऽन्तर्दधे । प्रापय्य च हंसद्वीपं राज्ञः अनङ्गो-दयस्य राजधानीं तत्सुताभरणान्वितं तं प्रावेशयत् ।

सोऽपि राजा तत्प्रसादात् प्राप्तं श्रीदर्शनं दृष्ट्वा हृष्टः तं तापसमभ्यर्च्य पादनतः तां सुतां पुण्याहे तस्मै श्रीदर्शनाय स्वीयमालिनीं वसुधामिव प्रादात्। प्रापयच्च तस्य तपस्विनः प्रभावात् तया कन्यया समेतं तं जामातरं पुनर्मालवम्। तत्रायतश्च श्रीदर्शनः पित्राभिनन्दितः कान्ताभ्यां द्वाभ्यां सेव्यमानः सम्प्रहृष्टः सुखमध्युवास।

कालेन तस्मिन् राज्ञि श्रीसेने लोकान्तरं गते श्रीदर्शनस्तद्राज्यं प्राप्य समग्रां पृथिवीं जित्वा समासादितसाम्राज्यः द्वयोरेव तयोर्भार्य्ययोर्द्वौ सुतावजीजनत्। गच्छति च काले राजा श्रीदर्शनः पत्नीभ्यां सहितोऽभ्यन्तरे तिष्ठन् वहिः कस्यचिद् विप्रस्य क्रन्दितं शुश्राव। प्रविश्य च तं क्रन्दनकारणं पप्रच्छ। ततः स विप्रः दुर्गतोद्वेगस्तं नृपमवादीत्, राजन्! यो मे दीप्तशिखोऽग्निः स ज्योतिर्धूमलेखः स्थितः स सहसा कालमेघेन समुत्थितेनाद्य विध्वंसित इत्युक्त्वा नष्टसंज्ञः स ब्राह्मणः भूमौ पपात। किमेतदिति विस्मितो राजा यावत् पृच्छति स्म तावत् चनाश्रहितं रुदन्तौ राजमहिष्यौ तस्य सहसा पतितौ पञ्चत्वमापतुः। तद्वज्रनिपातोपमं दृष्ट्वा स महीपतिः सहसा हा हा किमिदमुपनतमिति विलपन्नार्त्तो भुवि अपतत्। पतितश्च समादाय पार्श्वचरा अन्यतः निन्युः। सुखरकश्च देव्यौ नीत्वा अग्निसंस्कारमकरोत्। अथ राजा लब्धसंज्ञः ते भार्य्ये सुचिरं शोचन् खेदात् तयोः यथाविधि और्द्ध्वदेहिकं निरवर्त्तयत्। ततः बाष्पदुर्दिनान्धकारं वत्सरं कथञ्चित् नीत्वा द्वाभ्यां पुत्राभ्यां राज्यं द्विधा विभज्य

ददर्शं। ततो नगरात् निर्गत्य अनुगामिनीः प्रकृतीः निवर्त्त्य जातवैराग्यः तपसे वनमाश्रित्य फलमूलाशनस्तत्र तस्थौ।

कदाचित् भ्रमन्तं तं न्यग्रोधतरोरधः प्राप्तं दिव्यरूपे फलमूलकरे द्वे स्त्रियौ ऊचतुः, राजन्! आगच्छ गृहाण एतानि फलमूलानीति। तदाकर्ण्य सोऽब्रवीत्, भद्रे! के युवामिति ततस्ते दिव्यनार्य्यौ तमूचतुः एहि तावदस्मद्-गृहं प्रविशात्र ततो यथायथमावां वक्ष्याव इति तन्निशम्य स श्रीदर्शनस्ताभ्यां नारीभ्यां सह प्रविश्य दिव्यं हैममयं पुरं विश्रान्तश्च तत्र दिव्यानि फलानि बुभुजे। ततस्ताभ्यां स जगदे, राजन्! शृणु आवयोर्वचनम्।

आसीत् पुरा प्रतिष्ठाने कमलगर्भो नाम द्विजः। तस्य द्वे भार्य्ये एका पथ्या नाम, अपरा बला नाम। कालेन ते सर्वे भार्य्यापतयः जराक्रान्ताः परस्परानुरागिणः कालमनयन्। तस्मिंश्च काले तैः भार्य्यापतित्वम-स्माकं जन्मनि जन्मनि भूयादिति वरः अनलादयाच्यत। ततः स कमलगर्भः यक्षयोनौ प्रदीप्ताक्षस्य यक्षस्य पुत्रः दीप्तशिखो नाम अजायत। तस्य ज्येष्ठो भ्राता अट्टहासः। तस्य कमलगर्भस्य द्वे अपि भार्य्ये पथ्याबले यक्षपतेर्धूम-केतुनाम्नः सुते ज्योतिर्लेखाधूमलेखाख्ये अजायेताम्। ततः कालेन यौवनं प्राप्ते ते भगिन्यौ तपसे अरण्यं गत्वा हरमतोषयताम्। स च देवः सन्तुष्टः प्रत्यक्षीभूय ते समा-दिशत्, भद्रे! युवाभ्यां पूर्व्वजन्मनि समभेव अग्निं प्रविश्य येन सह भार्य्यापतित्वं जन्मनि जन्मनि वृतं स यक्षः अट्टहासस्य भ्राता दीप्तशिखः स्वामिशापेन पुन-

र्मर्त्यत्वमागतः श्रीदर्शनो नाम द्विजकुले समुत्पन्नः, तद्‌ युवामपि गच्छतं मर्त्यलोकं, ततश्च शापनिवृत्तौ यूयं पुनर्यक्षपदवीमाप्स्यथ इति गौरीपतेरादेशात् उभे ते यक्षकन्यके पश्चिमानक्रमजन्यौ श्रीदर्शनं पतिमलभेताम् कालेन ते राजमहिष्यौ महत्प्रसादेन एत्य युष्मत्पितामहपिता शिष्टवाक्यैः जातिनामानि उद्दीर्य स्मारिते एव तां तां तनुं त्यक्त्वा यक्षिणीत्वमुपागते। ते आवां त्वं विद्धि, भवांश्च स दीप्तशिखः। इति ताभ्यामुक्त एव स श्रीदर्शनः सपदि जातिं स्मृत्वा दीप्तशिखो नाम यक्षः समभूत्। प्रापञ्च ताभ्यां भार्याभ्यां यथाविधि संयोगम्। हे विचित्रकथ! तदिमं मां यक्षं ते च उभे ज्योतिर्लेखाधूमलेखे मम भार्ये विद्धि। तदित्थं मादृशामपि देववंशभवानां ईदृशं सुखं दुःखञ्च जायते का कथा मनुष्याणाम्। वत्स! युष्माकमचिरात् समागमो भविष्यति भर्त्रा मृगाङ्कदत्तेन, मा अत्र विषादं कृथाः। अहञ्च इह तवातिथ्यहेतोस्तिष्ठामि, अधुनाहं स्वं धाम कैलासं यास्यामि इत्युक्त्वा स यक्षः तत्क्षणात् गगनमुदपतत्। मयापि भ्रमता अद्य भवत् पादमूलमासादितं इत्येवं मे युष्मद्विरहे वृत्तान्तो, देव! इत्येवं निजसचिवात् विचित्रकथाद्‌ यथार्थनाम्नः सकाशात् विचित्रां कथां निशम्य मृगाङ्कदत्तः अपरैः सचिवैः सह परां मुदमभजत। अथ चाटव्यां निशां नीत्वा नागशापविश्लेषितान् मिलितशेषान् सखीन् विचिन्वन् शशाङ्कवतीसमुत्सुकः सह वयस्यैः उज्जयिनीमभिप्रतस्थे।

---

## अथ चतुःसप्ततितमस्तरङ्गः ।



ततः स मृगाङ्कदत्तः तैः सचिवैः श्रुतधिया च सह तस्यां विन्ध्याटव्यां विचरन् सफलस्निग्धच्छायतरुमनोहरम् अच्छाच्छस्वादुशीतलजलं काननं प्राप्य कृतस्नानः भुक्त्वा च विविधानि फलानि तदेकदेशे लताच्छन्ने संलापमिवाशृणोत् । ततश्च किञ्चिदुपगम्य यावत् तस्मिन् लतान्तरे दृष्टिं ददाति, तावत् महान्तमेकं वारणेन्द्रं पथिश्रान्तमचक्षुषं पुरुषं कराहृतैस्तोयैः फलैः कर्णानिलैश्च समाश्वासयन्तं कच्चित् किञ्चित् समाश्वस्तो भवानिति साधुमानुषवत् प्रीत्या व्यक्तया गिरा वदन्तं ददर्श । तं तथाविधं दृष्ट्वासौ राजपुत्रः सविस्मयः सखीन् प्राह स्म पश्यत, क्व अयं वन्यो गजः, क्व वा मानुषोचिताचारः, अवश्यं कोऽपि अयं कुतोऽपि हेतोरिह एवमवस्थितः, अयञ्च पुमान् प्रचण्डशक्तेर्मम सचिवस्य सुसदृशः, किन्तु अन्ध एषः, तत् क्षिप्रं पश्याम इति उक्त्वा अलक्षितः शृण्वन् तयोरालापं तस्थौ । तावच्च स द्विपेन्द्रस्तमन्धं समाश्वास्य पप्रच्छ, भद्र ! कस्त्वम् ? कुत आयातः ? कथं वा अन्धत्वं ते ? कथ्यतामिति । सोऽपि अन्धो गजराजं तं प्रत्यवादीत् ।

अस्ति अयोध्यायाम् अमरदत्तो नाम पृथ्वीपतिः । तस्य मृगाङ्कदत्तो नाम गुणाकरस्तनयः । तस्याहं प्रचण्डशक्ति-

नाम भृत्यः। स राजपुत्रः केनापि कारणेन अस्माभिः दशभिः सचिवैः पित्रा नृपतिना नगरात् निर्वासितः, वयञ्च सर्वे शशाङ्कवतीलाभार्थम् उज्जयिनीं प्रस्थिताः पथि नागशापेन परस्परं विश्लेषिताः। अहन्तु तेन शापेन परिभ्रमन् यथालब्धफलपर्णादिभोजितया अन्धत्वमापन्नः। ततश्च श्वभ्रादिपतनैरनशनैश्च क्लेशितस्य मम मृत्युरिष्टतमोऽपि समधिकं क्लेशं प्रापयिष्यता विधिना न दत्तः। अद्य तु दैवात् त्वत्प्रसादात् मे क्षुद्व्याधिरपगतः, तन्मन्ये त्वं कोऽपि देवांश इति तेनोक्ते जातनिश्चयः तत्क्षणात् मृगाङ्कदत्तः समं हर्षशोकावनुभवन् तान् सखीनभाषत, सुहृदः! प्रचण्डशक्तिरेवायं परमस्मान् दृष्ट्वा असौ वारणः नश्येत् तदसौ विशेषेण द्रष्टव्य इति समालोच्य सानुगः स राजसुतः तयोरालापं शृण्वन् अलक्षित एव तत्रैवातिष्ठत्। ततश्च प्रचण्डशक्तिस्तं वारणेन्द्रमब्रवीत्, महात्मन्! स्वं वृत्तान्तमाख्याय मामाप्याययस्व, को भवान्? कथं वा ते गजता? क्व च ते समदस्यापि निर्मदत्वम्? तदाकर्ण्य स गजपतिः निश्वस्य तमभाषत, साधो! शृणु मे वृत्तान्तमामूलात् कथयामि।

आसीत् पुरा एकलव्यायां नगर्य्यां श्रुतधरो नाम नृपतिः। तस्य द्वयोर्भार्य्ययोर्द्वौ सुतावभूताम्। तयोर्ज्येष्ठः शीलधरो नाम कनीयान् सत्यधरः। अथ पितरि दिवं गते स कनीयान् ज्येष्ठं शीलधरं राज्यात् निरवासयत्। ततश्च स शीलधरः वनं गत्वा तेनामर्षेण शङ्करं तपसाराध्य तस्मात् तुष्टात् वरं ययाचे, देव! अहं गन्धर्वो भूयास येन खचरो

भवन् तं सम्भ्रमं अवहेलया निहन्याम् । तदाकर्ण्य भगवान् हरः समादिशत्, वत्स ! एतत्ते भावि, किन्तु अद्य स ते शत्रुः स्वयं मृतः पुनश्चासौ राढ़ायां पुर्य्याम् उग्रभटाख्यस्य नृपतेः पुत्रः समरभटो नाम जनिष्यते । त्वञ्च भीमभटो नाम तस्य द्वैमातुरोऽग्रजः भ्राता जनिष्यसे, ततस्त्वं तं हत्वा राज्यं करिष्यसि, यतस्त्वया सामर्षेण तपस्तप्तं ततो मुनिशापात् ततः पदाद् भ्रष्टः अरण्यहस्ती भविष्यसि, जातिस्मरश्च व्यक्तया वाचा यमाश्वासयिष्यसि तस्यापि अतिथेस्तदा महानुपकारो भवितेति आदिश्य तस्मिन् तिरोभूते स शीलधरो भ्रमन् गङ्गायां तनुमत्यजत् ।

अत्रान्तरे तस्य राढ़ायां नगर्य्यां सहस्रा मनोरमाख्यया देव्या समं सुखं निवसतः उग्रभटस्य नृपतेः पार्श्वं देशान्तरात् लासको नाम नर्त्तकः समागात् । स च रात्रौ तस्मै राज्ञे नाट्यप्रयोगं यत्र हरिणा स्त्रीरूपिणा दैत्येभ्योऽमृतं हृतं तदुदर्शयत् । तत्र स राजा अमृतिकाभूमौ नृत्यन्तीं नर्त्तकस्य तनयां लास्यवतीं नाम ददर्श । ययौ च तस्यां विक्षोभितदानवं रूपं दृष्ट्वा कामवशम् । ततश्च नृत्यान्ते तत्पित्रे बहूनि धनानि दत्त्वा च तां कन्यामन्तःपुरं प्रावेशयत् । ततस्तया नर्त्तक्या विहितोद्वाहया लास्यवत्या सह निरन्तरमन्तःपुर एव तन्मुखासक्तलोचन एवातिष्ठत् एकदा स यज्ञःस्वामिनामनं पुरोहितमब्रवीत्, ब्रह्मन् ! पुत्रो मे नास्ति, तस्य पुत्रार्थं मे पुत्रेष्टिं कुरु । ततस्तथेति प्रतिपद्य स पुरोहितः बहुभिः

सदस्यैः सह तस्य भूपतेर्विधिवत् पुत्रेष्टिं व्यदधात्। प्राशयच्च मन्त्रपूतं चरुं मनोरमां देवीम्। ततश्च राजा शेषं चरोरंशं तस्यै लास्यवत्यै प्रादात्। ततस्तयोरुभयोरुदरयोः तौ शीलधरसत्यधरौ पूर्वोक्तौ तनयौ बभूवतुः।

अथ प्राप्ते प्रसूतिकाले देवी मनोरमा कल्याणलक्षणं पुत्रमेकं भीमभटं नाम प्रासोष्ट। यस्मिंश्च जातमात्रे एष ख्यातयशा नृपो भवितेति अन्तरीक्षात् वागुदचरत्। ततोऽन्येद्युः सा लास्यवती सुतमेकं प्रसुसुवे। पिता तं समरभटं नामाकरोत्। ततस्तौ कृतसंस्कारौ शिशू यथाक्रमं दिने दिने अवर्धेताम्। ज्येष्ठस्तु भीमभटस्तं कनिष्ठं गुणैरजयत्। तत् सङ्घर्षेण च तयोः क्रमेण वैरमवर्द्धत।

एकदासौ समरभटः बाहुयुद्धकेलौ समत्सरः पाणिना कण्ठे भीमभटं भृशमताड़यत्। ततो भीमभटः क्रोधात् भुजाभ्यां तं परिवेष्ट्य समरभटं उत्क्षिप्य भूमौ न्यपातयत्। स तु गाढ़मभिहतः सर्वद्वारैरसृक् वमन् समुत्थाप्य स्वसेवकैः मातुरन्तिकं नीतोऽभूत्। सा च माता लास्यवती तं तथाविधं दृष्ट्वा बुद्ध्वा च वृत्तान्तं स्नेहकातरा तस्य मूर्द्धनि मूर्द्धानमासज्य यावत् भृशं प्रारोदीत् तावत् राज्ञा प्रविष्टेन किमेतदिति आकुलचेतसा पृष्टा सा तमब्रवीत्, नाथ! इयं भीमभटेनास्य मे सुतस्य अवस्था कृता सदा चैनमभिभवति, न चाहं तत् तव वच्मि, देव! न जाने इदं दृष्ट्वा तवैव कथं शिवं स्यात्? तत् तादृशपुत्रे इदानीं भवान् यथोचितं विचारयतु। इत्थं तया प्रिययाभिहितः स नृपः क्रुद्धः भीमभटं स्वसन्निकर्षात् कृतवृत्तिं कृत्वा

निरवासयत् राजपुत्रशतं सुपरिच्छदेश्च समरभटस्य रक्षार्थे नियुज्य तस्य भाण्डागारं सर्वं स्वाधीनमकरोच्च। ततो मनोरमा तं भीमभटमाहूय प्राह स्म, वत्स! नर्त्तकीरागिणा तव पित्रा त्वं निराकृतः, तत्त्वं पाटलिपुत्रके मातामहावासं गच्छ। स च मातामहः निरपत्यः स्वं राज्यं ते दास्यति। इह स्थितञ्च त्वां स्वयं समरभटो रिपुर्बलवान् हन्यादेव। इति मातृवचः श्रुत्वा भीमभटोऽब्रवीत्, मातः! क्षत्रियः सन् स्वं देशं क्लीव इव न त्यक्ष्यामि, त्वं धीरा भव, कः शक्तो वीरो मां प्रबाधितुम्? इत्युक्तवन्तं तं माताब्रवीत्, वत्स! तर्हि भूयसः सहायान् रक्षार्थं मदीयै[illegible]: संगृहाण। ततो भीमभटोऽवादीत् मातः! एतन्न शोभते, एवं कृते सत्यमेव तातस्य वैरसाधनं कृतं स्यात् तस्मात् त्वदाशिषैव मे कल्याणं भविता, त्वमिदानीं निर्वृता भव। इति तां मातरमाश्वास्य स भीमभटः तस्मान्नगरात् निरगात्। तावच्च तत् पौरास्तद्विदित्वा अचिन्तयन् राज्ञा भीमभटस्य अनौचित्यं कृतं नैवैष समरभटः राज्यं कर्त्तुं प्रगल्भते, तदेष नः भीमभटस्य पूर्वसेवायाः अवसरः इति निश्चित्य ते पौराः सुगुप्तं धनैस्तथा अपूरयन् यथा स भृत्यैः समं तैर्धनैः सुखमध्युवास। स तु कनिष्ठस्तस्य भीमभटस्य वधमेव निरूपयन् पितुः परिच्छदकृतं कमपि सेवकं यावदाश्रयत् तावत् शङ्खदत्तो नाम कश्चित् शूरो युवा धनी द्वयोरेव भ्रात्रोर्वयस्यो विप्रस्तं समरभटं समेत्य प्रोब्रवीत्, राजपुत्र! भ्रात्रा ते वैरं न युक्तम् एषः न धर्मः, न च त्वया स ज्यायान् व्यथितुं

भक्ष्यः स्यात्, केवलं ते अकीर्त्तिरेव भवेत् इति ब्रुवन् स तेन समरभटेन अधिक्षिप्य निरभर्त्स्यत। मूर्खस्य हितोपदेशः केवलं कोपाय, न शान्तये। ततस्तत् कोपात् वीरः स अङ्गदत्तः जिगीषया भीमभटेन केवलं सख्यं व्यधात्।

अथान्तरे देशान्तरागतः कोऽपि मणिदत्तो नाम वणिक् एकमुत्तममश्वमानीतवान्। अङ्गदत्तेन च तं सुलक्षणं अश्वं दृष्ट्वा भीमभटं तत्क्रयाय अनुरुरोध। सोऽपि भीमभटस्तत्क्षणात् तस्माद् वणिग्वरात् तं बहुभि-र्धनैरक्रीणात्। तद्विदित्वा समरभटो द्विगुणेन मूल्येन तं वणिजं अश्वं मार्गति स्म। परं यदासौ वणिक् भीम-भटाय दातुं स्थिरीकृतं तं तस्मै समरभटाय न अददात् तदासौ समरभटः समत्सरः बलात् तं नेतुं प्रावर्त्तत। तेन च उभयोरेव तयोः राजपुत्रयोः समुपासिषु भृत्येषु प्रधावितेषु महांस्तत्र तुमुलः संप्रहारः प्रावर्त्तत। तत्र भीमभटेन प्रचण्डदोर्दण्डशालिना निहतानुगः स समर-भटः भयात् बलं त्यक्त्वा अभज्यत। भज्यमानश्च तं धावित्वा केशेष्वाकृष्य यावत् अङ्गदत्तस्तं पृष्ठतस्ताड़यति तावत् भीमभटः पश्चादुपेत्य तं न्यवारयत् अब्रवीच्च आस्तां ताव-दयं दुरात्मा अस्मिन् निहते तातस्य मे दुःखं भवेदिति। ततः अङ्गदत्तेन त्यक्तः व्रणैः रक्तं त्यजन् त्रस्तः पलायमानः समरभटः पितुरन्तिकमगात्। ततः स्वीकृताश्वं वीरं भीमभटं कश्चिद् ब्राह्मणः समुपेत्य विजनं नीत्वाब्रवीत्, वत्स! माता ते मनोरमा देवी, पुरोहितो यज्ञःस्वामी

पितृमन्त्री ते सुमतिश्च त्वामिदानीं ब्रुवते, वत्स ! विदित-स्त्वया राजा त्वयि यादृशः स्नेहवान् विशेषतश्चास्मिन् व्यति-करे प्रभुतामेव मतः। तत् यदि आत्मानं धर्मं यशश्च रक्षितु-मिच्छसि, यदि आयतिं जानासि, यदि चास्मान् हितान् मन्यसे, तदा यावदर्कोऽस्तं गतः तावदलक्षितः इतो निर्गत्य सिद्धये मातामहावासमाश्रय इति सन्दिश्य तैः सद्रत्न-काञ्चनपूर्णं भाण्डमिदं मम हस्तेन प्रेषितं गृह्यतामिति। स च भीमभटस्तस्मात् द्विजादेतत् श्रुत्वा सुधीस्तं ब्राह्मण-मभिनन्द्य अभ्यर्च्य च तत् भाण्डं प्रत्यग्रहीत् अथानुरूपं प्रति-सन्देशं दत्त्वा तं द्विजं विसृज्य च कृपाणपाणिस्तमुत्तमं तुरगमारुह्य गृहीतहेमरत्नभाण्डेन द्वितीयाश्वगामिना शङ्खदत्तेन सुहृदा सहितः प्रतस्थे। कियन्तमध्वानमतीत्य निशीथे स नृपात्मजः पथि महदेकमरण्यं प्राप्नत्। तत्रा-नवरतं गच्छतः तस्य सवयस्यस्य अश्वखुरशब्दैः बोधितं पोतकैः सह सिंहमिथुनम् उत्थाय उद्गर्ज्जत् नखैः तौ अश्वौ उदरयोरपाटयत्। स च वीरो राजपुत्रः सवयस्यः तान् सिंहान् खड्गप्रहारविध्वस्ताङ्गान् झटिति गतजीविता-नकार्षीत्। ततः समित्रस्तौ तुरगौ यावत् आरोढुमीचते, तावत् तौ क्लिन्नस्तांसौ सहसा भूमावपतताम् तद् दृष्ट्वा विषण्णं शङ्खदत्तं स राजपुत्रः प्रावोचत्, सखे ! क्रि-ष्टात् स्वजनात् वयं यत्नेन पलायिताः, ब्रूहि, यत्नशते-नापि विधेः क्व पलायामहे येन इहापि नः वाहौ निहतौ, यत्कृते च देशत्यागोऽपि स्वीकृतः सोऽपि अयं हयः मृतः, तदस्माभिः कथमस्यां निशि पद्भ्यां गन्तव्य-

मित्युक्तः स सुहृत् शङ्खदत्तस्तमब्रवीत् सखे! विधुरो विधिर्नैव तं जयति यस्यास्ति पौरुषं प्रत्युत स एव निसर्गतः तस्य पुरुषस्य धैर्य्येण जीयते, वायुरद्रे रिव वीरस्य अकम्पितस्य विधिः किं कुर्य्यात्, तदेहि आवां धैर्य्याश्वमारुह्य व्रजाव इति वादिना शङ्खदत्तेन सह स भीमभटस्तस्मात् प्रायात्। इत्थं क्रान्तस्य अनकैः कान्तारेषु व्रजतः शरपाटितपादस्य ससुहृदस्तस्य सर्वरी व्ययासीत्।

अथोदिते भगवति जगदालोके तमोमुषि भानौ सरोजेषु मधुरक्वणितालिषु दिष्ट्या सिंहादिसंकीर्णेयमटवी तीर्णेति जल्पन् अन्योऽन्यमुखमवलोक्य क्रमेण गच्छन् तपस्विभिः समाकीर्णं जह्नुकन्याया पुलिनं प्राप। विश्राम च तत्र तज्जलं पीत्वा विगततृष्णः क्षणम्। विदधे च शङ्खदत्तोपनीतैः क्रीतैर्भृष्टैर्हरिणमांसैर्देहवृत्तिम्, ततस्तां जाह्नवीं पूर्णामुत्तरीतुमशक्यां उच्छ्रितैस्तरङ्गहस्तैरसकृत् वारयन्तीमिव दृष्ट्वा तस्याः कूलेन किञ्चिद् गत्वा कञ्चिद् ब्राह्मणपुत्रं उटजाङ्गने स्वाध्यायमभ्यस्यन्तमद्राचीत्। अप्राचीच्च तमुपेत्य कस्त्वं किमिह निर्जने एकाकी करोषीति। सोऽब्रवीत् अहं वाराणसीवासिनः श्रीकण्ठाभिधस्य द्विजस्य पुत्रो नीलकण्ठो नाम सोऽहं पित्रा कृतसंस्कारपद्धतिः निज एव गृहे कुलविद्यामधीयानो यावत् तिष्ठामि तावत् मे सर्व एव बान्धवाः विनष्टाः, तेनानाथोऽर्थहीनश्च बालतया किमपि कर्त्तुमक्षमः निजेच्छाया असिद्धे दुःखितः निर्विषण्ण इहागत्य

तीव्रं तपः समाश्रयम्। ततः स्वप्ने गङ्गादेवी फलानि मे दत्त्वा समादिशत् वत्स! एतानि खादन् इह यावत् त्वं सिद्धिमाप्स्यसि, एतदाकर्ण्य प्रबुध्यैव निश्चये गत्वा स्नातः, गङ्गायां स्रोतसागतानि फलानि प्रापम्। आनीय च तानि अमृतस्वादूनि उटजे भक्षितवानस्मि। इत्थमन्वहं प्राप्नोमि, भक्षयंश्च तानि इह निर्वृतस्तिष्ठामि इति। एतदाकर्ण्य भीमभटः शङ्खदत्तमवादीत् सखे! अस्मै गार्हस्थ्यपथ्यार्थं द्विगुणं देहि। तदाकर्ण्य तेन अविदितवचाः स राजसुतः मात्रा निसृष्टं तद् द्रव्यं तस्मै द्विजन्मने प्रादात्। आकर्णितां परस्यार्त्तिं ये तत्क्षणं न छिन्दन्ति तेषां सत्त्ववतां महत्त्वं किं? इत्थं तं विप्रं कृतार्थीकृत्य ततो गत्वा यावत् स राजपुत्रः गङ्गाया उत्तरणोपायं नापश्यत् तदा मूर्ध्नि निबद्धाभिविभूषणः शङ्खदत्तयुतो दोर्भ्यां तरीतुमवातरत्। क्रमेण तरन् मध्यभागे वारिप्रवाहवेगेन दूरीकृतवयस्यः कथञ्चित् वीचिभिः क्रियमाणः पारमवाप। उत्तीर्णस्य तं मित्रमपश्यतः अनुतटमन्विष्यतश्च तस्य रविरस्तमगात्। ततो निराशो हा मित्र इति दुःखेनाक्रन्दन् निशागमे गङ्गायामात्मानं क्षेप्तुमुद्यतोऽभूत्। जाह्नवि! जीवितं मे सखायं देहि, त्वयैवासौ अपहृतः, नोचेत् तेन शून्यमिमं देहमपि मम अधुना त्वं गृहाण इत्युक्त्वा यावत् आत्मानं क्षेप्तुमिच्छति तावत् तस्याम्भसो मध्यात् साक्षात् गङ्गा आविरासीत् तुष्टा चाब्रवीत् पुत्र! मा साहसं कार्षीः, स ते सखा जीवन् स्थितः, अचिराच्च ते तेन समागमो भविता,

मित्युक्त्व विद्यां परितुष्टाहं तुभ्यं ददामि त्वं एतां प्रति-
विधानुलोमाख्यां गृहाण, अनुलोमामिमां पठन् परस्य
गतः(?)ः स्यात् प्रतिलोमान्तु पठन् दृष्टरूपप्रकाशनं कुर्य्यात्।
अव्यस! एतत् प्रभावा विद्येयम् इत्युक्ता विद्यां दत्त्वा सा
जाह्नवी तिरोऽभूत्। सोऽपि राजसुतः सुहृदो लाभं प्रति
जाताशः मरणव्यवसायादुपारमत्। कथञ्चित् पद्म इव
मित्रप्राप्त्युन्मुखो निशां क्षपयित्वा प्रातः तं मित्रं चिन्वन्
ततः प्रस्थितवान्। अथ क्रमेण शङ्खदत्तमन्विष्यन् परि-
भ्रमन् कदाचित् एकाकी लाटविषयाख्यं देशं प्राप।
यत्र असङ्कीर्णवर्णोऽपि चित्रम् उज्ज्वलस्थितिः, यत्र कलानां
निलयोऽपि नदोषाकरशब्दभाक्। तत्र प्रविशन् इतस्ततो
भ्रान्त्वा द्यूतकाराणामेकां शालामवाप। तत्र च प्रविश्य
तान् कितवानक्षदेविनो दृष्ट्वा तैः साभरणोऽयमस्माकं
भक्ष्य इति गृहीतबुद्धिभिः सह द्यूतमारभत ततस्तेन
अक्षैस्तेषामन्यान् वञ्चयित्वा यदनमाहृतं तैः तत् सर्वं
धनं जितम्। ततो हारितार्थान् स्वगृहं गन्तुमुद्यतान्
द्वारार्पितभुजः स भीमभटो रुद्वाब्रवीत् क्व गच्छथ रे,
गृह्णीथ धनं मे, भवद्भिः सदृशानि मित्राणि इष्टानि कुतः
प्राप्नोमि इति तस्मिन् वदति तेषु क्रिया अप्रतिभेषु
अक्षक्षपणको नाम कश्चित् कितवोऽब्रवीत् सखे! एषा
तावत् द्यूतपरिभाषा, यत् हारितं न दीयते, तथापि
एष सुहृद् भूत्वा यदि सत्यं प्रयच्छति, तदा स्वेच्छया
निजमर्थं वयं किं न गृह्णीमः, तदाकर्ण्य ते सर्वेऽब्रुवन्
सख्यं चेत् तादृशमेषः अस्माभिः कुरुते, तदा एतदुपपद्यते,

एवमुक्तवतस्तान् वीरान् मत्वा भीमभटस्तैः सह जग्राह तेभ्यस्तद्वनम्। ततश्च तैरभ्यर्थितः सः (...) गत्वा तदुपनीतैर्भोजनपानाद्यैर्व्यहरत्। ततोऽन्ये (...) गाद्यैस्तैः कितवैः निजनामवंशवृत्तान्तं परिपृष्टः त (...) अभाषत। अथाचच्चपणकस्तं स्वोदन्तं न्यवेदयत्।

आसीत् हस्तिनापुरे शिवदत्तो नाम ब्राह्मणः। अहं तस्य महाधनसमृद्धस्य वसुदत्तो नाम सुतः। मया बाल्ये वेदविद्या शस्त्रविद्याश्च शिक्षिताः। विवाहश्च शैशवमतिक्रान्तस्य मे पित्रा सदृशात् कुलात् विहितः। माता तु मम महारौद्रा दुराराध्या अतिकोपना। तया चात्यर्थमुद्वेजितः पिता मम गृहं त्यक्त्वा अलक्षितः क्वापि गतः। तद्दृष्ट्वाहं सभयः मातुश्चित्तग्रहविधौ यत्नात् भार्य्यां नियुक्तवान् सापि भीता तथैवाकरोत्। अम्बा तु तस्या नातुष्यत् केवलं कलहे रता तस्या अवज्ञानं कैतवं तूष्णीमवस्थानञ्च मन्यमाना दुराशया तामपि मे भार्य्यां भृशमुत्पीड़यामास। को हि वह्नेः स्वां दाहात्मिकां शक्तिं त्याजयितुं शक्नोति? ततस्तस्यास्तादृशैश्चेष्टितैः सा मद्भार्य्यापि नितरां खिन्ना गृहात् निर्गत्य न जाने क्वापि गता। अथाहमुद्विग्नमनाः गृहं त्यक्तुमुद्यतोऽपि वशात् बन्धुभिः पापैर्मिलित्वा पुनर्विवाहं कारितः। सापि भार्य्या तया मात्रा परं सन्तापिता उद्बध्य पाशेनात्मानं व्यापादयत्। ततोऽहं नितरां खिन्नः विदेशं गन्तुमुद्यच्छन् निवारयद्भ्यो बन्धुभ्यो मातृदुष्कृतं वर्णयन् यदा तान् तथा तस्या अत्याचारान् न प्रत्यायितवान् तदा युक्त्या

मित्युक्त्वा विवाहं कारयित्वा स्वयं परिणीतां पुनरानीय विधिनानुलोमं अन्तर्गृहे स्थापितवानस्मि। कृता च तस्याः गेहः तत्सदृशी। माता तु मे मां प्रोवाच पुत्र! न अवक्तव्यं त्वयाच, न च तथाविधागन्तव्यमिति मया तु तथेति ज्ञातपथ बहिर्गृह एव स्थितम्। ततो दिनेषु गच्छत्सु यदा सा तां कपटस्नुषां न कथञ्चिदपि प्राप, तदा खिन्नमना: स्वयं मूर्द्धानमाहत्य। स्वयमेकदा रत्ना गृहाङ्गणे तारस्वरेणाक्रन्दति स्म। तच्चाक्रन्दं श्रुत्वा प्रविष्टेन मया तैः बान्धवैः सार्द्धं किमेतदिति पृष्टा माता सासूयमभ्यधात्, वत्साः! स्नुषया मम विना हेतुं ईदृशी अवस्था कृता, तदिदानीं मम मरणेनैव निष्कृतिः नान्यथा इति श्रुत्वा ते बान्धवा मया सह यत्र दारुपुत्रिका रचिता तत्रागच्छन्। यावच्च द्वारमपास्य अर्गलमुद्घाट्य च तत्र ते विशन्ति, तावत्तत्र काष्ठमयीमेव नारीमपश्यन् नान्याम्। ततस्ते विडम्बितमात्मानं विदित्वा हसन्तः विलज्जिताः सञ्जातप्रत्ययाः स्वं स्वं स्थानमगमन्। अहञ्च तं देशं त्यक्त्वा भ्राम्यन् इमं प्रदेशमवाप्य दैवात् इह द्यूतशालाया-मविशम्। अपश्यं पश्यैतान् जनान् दीव्यतः। दृष्ट्वा च तत् ममापि देवितुं प्रवृत्तिरासीत्। ततश्च कतिपयैस्तैः सह देवितुमारेभ। एकदा विजितो जेतुर्दासः स्यादिति पणं कृत्वा ते मया सह द्यूतमकुर्वन्। मया च द्यूतेन सर्वे विजिता दासीकृताः। अहन्तु एषां गुणै र्बद्धः स्वयं दासतां गतः। ततश्च समं वसन्तः वयं समधना जाताः। तदिदानीं त्वमस्माकं प्रभुः, प्रागेव एतया बुद्ध्या अस्माभि गुणा-

मुसमिभिस्तव धनं गृहीतम्। इत्थम् भ्रमत्पथकैन कौ-
तुकसे निवेदिते सर्वे ते कितवाः तं स्वसुदन्तमवर्णयन्।

ततः स भीमभटः तान् प्रवीरान् कितवान् सखीन्
मत्वा विविधाश्च कथाः कथयित्वा विहारेण च दिवसं
नीत्वा पौरन्दरीं दिशम् उद्भासमान-शीतांशु-तिलका-
लङ्कृतां दृष्ट्वा च तस्मादुद्यानात् तैरचलपथकाद्यैः
बहुभिः सहचरैः सह द्यूतशालामागत्य तस्थौ। इत्थं विह-
रतस्तस्य प्रावृट् घनगर्जितैः सुहृदामिं प्रसर्जेव समा-
ययौ। क्रमेण सर्वा दिशो मेघैश्छन्नाः पथिकानां हृदयानि
व्यदारयन्। समन्तात् सर्वे जलाशया जलप्रवाहैः प्रपू-
रिताः कृषकाणामानन्दमवर्धयन्। एतस्मिंश्च काले महता
ओघवारिणा क्षिप्तः कश्चिन्महामत्स्यः नदीतटे व्यासक्तो-
ऽभूत्। दृष्ट्वा च तं तत्रत्या जना विविधायुधैस्तं तिमिं
हत्वा तस्योदरं पाटयामासुः। पाटिताच्च तस्मात् जीवन्
युवा कश्चित् द्विजः सहसा निरगात्। तच्च दृष्ट्वा सर्वे ते
तत्रस्थाः साश्चर्याः कोलाहलमकुर्वन्। तदाकर्ण्य तैर्मित्रैः
सह तत्र गतो भीमभटः तं शङ्खदत्तं मित्रं मत्स्याद्
विनिर्गतमपश्यत्। समाश्लिष्यञ्च धावित्वा धाराश्रूणि
मुञ्चन् मीनोदरदरीवासजं विषं क्षालयितुमिव। सोऽपि
विपदुत्तीर्णः तं राजपुत्रं सुहृदं चिरादवाप्य परिरभ्य चक्रमा-
दुत्सवमवाप। अथ तेन भीमभटेन कौतुकात् पृष्टः स
शङ्खदत्तः स्ववृत्तान्तं संक्षेपेणावर्णयत् सखे! अहं भवतो-
ऽविवेगेन त्वद्दृष्टिगोचरादपहृतः सहसातिमहता मत्स्येन
निगीर्णोऽस्मि, प्रविश्य तदुदरं महावेश्म चिरं दृष्टास्थितवान्

क्षुरिकया उत्कृत्तं तदुदरमांसं क्षुधया भक्षयन्नतिष्ठम्। अद्य च धात्रा सोऽयमिहानीय कथञ्चित् छिन्नः हतश्च एभिर्जनैः। भाग्यादृष्टवास्योदरादहमुत्थितः। अधुना मया त्वमकस्माद् दृष्टः, दुःखञ्च मे प्रकाशं गताः। एष मे वृत्तान्तः, नाहमतः परं वेद्मि। इति शङ्खदत्तेनोक्तः स भीमभटः अन्ये च सर्वे तत्रस्थाः सविस्मया अब्रुवन्, अहो! क्व गङ्गायां मत्स्येन निगरणं क्व अब्धौ तस्य गतिः, क्व च तद्वर्त्मना तेन विपाशायामस्यां निवेशनं, क्व तद्वधः, क्व च जीवतोऽस्य तस्माद् विनिर्गमः, अहो! विधेर्गतिरचिन्त्यैव इत्यादि वदद्भिस्तैरपक्षपणकादिभिः सह स भीमभटस्तं शङ्खदत्तं स्वं निवासमनयत्। आनीय च तं कृतस्नानं वस्त्रालङ्कारादिभिः पुनर्जातमिव उपाचरत्। ततः सुखेन तेन मित्रेण सह तस्मिन् राजपुत्रे भीमभटे स्थिते तत्र एकदा नागराजस्य वासुकेर्यात्रोत्सवः समागात्। तद्दर्शनार्थञ्च असौ राजपुत्रः सुहृद्वृतः तस्य नागराजस्य मित्रम्भाजनं निकेतनं प्रायात्। तत्र च तन्मूर्त्तिं प्रासादे भोगिगणाकारैर्माल्यदामभिर्वृते पातालोदरसन्निभे स्थितां प्रणम्य तस्य दक्षिणस्यां दिशि गत्वा महान्तं फणारत्नप्रभापुञ्जैरिव रक्ताम्बुजैश्चितं विषाग्निधूमपटलैरिव नीलोत्पलैर्वृतं वातपतत्पुष्पैः पादपैस्तीररूढैर्वेष्टितं ह्रदं दृष्ट्वा विस्मितो यावत् चिन्तयति तावत् स्नानार्थमागतां राज्ञो लाटेश्वरस्य चन्द्रादित्यस्य कन्यकां कुवलयावलीगर्भजां हंसावलीं नामाद्राक्षीत्। यस्या दिव्यानुकारिभिरङ्गैः रूपं नैसर्गिकं निर्जितः, परं चपलेन सवि-

मेषेण नयनेनैव मन्मथभावो निवेदितः। सा पुष्पपेलव-वपुः कोटिप्राप्तस्फुरद्गुणमुष्टिग्राह्येण मध्येन मान्मथी-धनुर्लतेव तिर्य्यग् वलितैरपाङ्गदर्शनैर्भीमभटं हृदि निर्भिद्य अमोहयत्। सोऽपि जगत्सौन्दर्य्यतस्करः तस्या हृदयं प्रविश्येव धैर्य्यमहरत्। ततः सा गुप्तविसृष्टहृदयज्ञ-चेटी-मुखेन समित्रस्य तस्य भीमभटस्य नाम धामादिक-मन्विष्यति स्म। गच्छति स्म च माता विवर्त्तितमुखी तद्गतयैव दृशा, परिजनानुरोधात् कथञ्चित् स्वम-न्दिरम्। सोऽपि भीमभटः सखिभिः सह ज्ञात्वा तस्याः प्रेमपाशेन बन्धनात् स्खलद्गतिः स्वं निलयं प्रत्यागात्।

एतस्मिन्नन्तरे सा राजबाला ईप्सितं सन्देशं दत्त्वा तस्मै दूतीं व्यसृजत्। सा च दूती अभ्युपेत्य तमवादीत् सुभग! हंसावली राजनन्दिनी त्वामनु स्मरेषेण क्रिय-माणा त्वां याचते। द्रुतं इमामनुवृत्य न ते तटस्थता युक्ता, इति दूतीमुखात् दयितावचनामृतं निशम्य लब्धजीवित इव हृष्टस्तामवादीत् भद्रे! अहम् ओचस्थः, न तटस्थः प्रिया मे भावं न किं वेत्ति? तत्तद्वचः कामं करिष्यामि, अद्य अन्तःपुरमेत्य तां सम्भावयामि, विद्याप्रभावं मां न हि कोऽपि तत्रस्थो द्रक्ष्यति, इत्युक्ता सा चेटी तुष्टा गत्वा च तत् सर्वं राजकन्यायै शशंस। सापि तत्सङ्गमोत्सुका तस्थौ। स च राजसुतः प्रथमे प्रदोषे दिव्याभरणमण्डितः गङ्गावितीर्णविद्यामानुलो-म्येन पठन् अदृश्यो भूत्वा तदन्तःपुरमगात्। प्रविश्य च तत्र प्राक्विविक्तीकृततया रतिप्रीतिकरे कालागुरुसुग-

न्विनि पुष्पप्रकरसुशोभिते तां महादिव्यसौरभां कान्तां वीक्ष्य पुनस्तां विद्यां प्रातिलोम्येन पाठात् सुदृश्यतां गतः राजपुत्र्याः प्रीतिकरोऽभवत्। सा राजपुत्री दृष्ट्वैव तं भीमभटं सर्वावयवानवद्यं सानन्दपुलकोत्कम्पसाध्वसा रणत्स्वाभरणा तत्क्षणमनृत्यदिव। तदानीं कन्यका-भावेन लज्जावनतानना तत्प्रवृत्तिज्ञात् हृदयमिव कर्त्तव्यं पृच्छन्ती समुत्सुका अभवच्च। अथ भीमभटः मुग्धे! अधुना प्रकाशितस्यापि हृदयस्य किं क्रिया, अलमावेगेन भयेन वा, सुमुखि! आगच्छ सिञ्च माममृतनिभैर्वचोभिः कामा-नलसन्तप्तम् इत्यादिभिः प्रणयवचनैस्तामपगतलज्जां विधाय गान्धर्वविधिना हंसावलीं भार्य्यामकरोत् नीत्वा तया समं सुखेन शर्वरीं पुनर्नागमिष्यामीति तामामन्त्र्य कष्टेन स्वमास्पदमगात्।

अथ प्रातः राजान्तःपुरचारिणः तां हंसावलीं सम्भोग-लक्षणैर्युतां लुलितालकान्ताम् आर्द्रदशनक्षतां साक्षात् स्मरशरप्रहारव्रणाङ्कितामिव ददृशुः। अशंसुश्च तत्-क्षणं राजान्तिकं गत्वा तत् सर्वम्। राजापि गुप्तं नक्त-ञ्चरानवेक्षितुं तत्र तानादिशत्। सोऽपि भीमभटः मित्रैः सह तत्रचेष्टया दिनं नीत्वा प्रदोषे तथैव प्रियान्तःपुर-मागमत्। ते च रक्षकाः तं विद्याप्रभावादलक्षितप्रविष्टं दृष्ट्वा सिद्धं सम्भाव्य ततो निर्गत्य राज्ञे न्यवेदयन्। राजापि तानेवमवादीत् यद्यत्र सुगुप्तमप्यस्मः प्रविशति नासौ मानुषः, तत्तमिहैवानयत यावत् तं पश्यामि, यूयञ्च तं मद्वचनेन अपवर्ज्य ब्रूत, त्वया प्रकटं सम्भाव्या

किं न प्रार्थ्यते ? रहस्यं किं कृतं ? त्वादृक् गुणवान् वरः क्व प्राप्यते ? इत्युक्ता राज्ञा प्रेषितास्ते चराः द्वारस्था-स्तथैव तद्वाक्यं भीमभटाय प्राब्रुवन् । सोऽपि विदितो-ऽस्मीति बुद्धा अभ्यन्तरस्थितः सुधीरः तान् प्रसह्य प्रत्यभाषत भद्राः ! महाप्याल् गत्वा राजानं ब्रूत, प्रातरहं आस्थान-मण्डपं गत्वा तत्त्वमावेदयिष्यामीति । तदाकर्ण्य तैर्गत्वा निवेदितो राजा तूष्णीमभूत् । प्रातश्च भीमभटस्तथैव सखीन् प्रति प्रायात् । ततश्च तैः सप्तभिर्वीरैर्मित्रैः कृतो-द्दामवेशैः साकं तस्य भूपतेरास्थानगृहमागात् । तत्र ओजोधैर्य्यसौन्दर्य्यदर्शिना तेन चन्द्रादित्येन राज्ञा सत्-कृते निजोचितासनासीने तस्मिन् भीमभटे स द्विजः शङ्ख-दत्तस्तं राजानमभाषत राजन् ! अयं उग्रभटस्य राढ़ापतेः राज्ञः सुतो अतर्कणीयमाहात्म्यदुरतिक्रमविक्रमो भीमं-भटो नाम युष्मत्-सुताहेतो रिहागतः । तदाकर्ण्य रात्रि-वृत्तान्तं स्मृत्वा तं योग्यं वरमवेक्ष्य कृतकृत्योऽस्मि इत्युक्ता यथाविधि तां हंसावलीं विभवसमन्वितां तस्मै प्रादात् । ततो भीमभटः भूरिहस्त्यश्वादिसम्पद्विमान् हंसावल्या च लक्ष्म्या च सह तत्र सुनिर्वृत आसीत् । गच्छति च काले चन्द्रादित्यो वृद्धः निरपत्यः तस्मै समग्रं लाटराज्यं समर्प्य वनमाश्रयत् । भीमभटोऽपि तद्राज्यं प्राप्य सम्प-न्नैस्तैः सप्तभिः शङ्खदत्तादिभिः सखिभिः सह सुखेन शशास ।

अथ गतेषु कियत्सु दिनेषु स कदाचित् प्रयागमेत्य चारमुखात् पितरम् उग्रभटं मृतम्, मुमूर्षता च तेन

राढ़ाराज्ये पुत्रं कनीयसं नर्त्तकीसुतं समरभटमभिषिक्तमशृणोत्। ततः पितरमनुशोच्य तस्यौर्द्धदेहिकं कृत्वा च तस्मै समरभटाय मूर्ख! तातसिंहासने नर्त्तकीपुत्रस्य ते काधिकारिता? सत्यपि लाटराज्ये तदधिकारिता ममैव। तस्मात् त्वया तत्र नाधिरोढव्यं इति लेखमर्पयित्वा दूतं प्राहिणोत्। स च दूतो द्रुतं गत्वा तस्मै लेखं प्रदत्तवान्। सोऽपि तादृशं भीमभटनामाङ्कितं तं लेखं वाचयित्वा क्रुद्धः प्रत्यभाषत अयोग्य इति यः पित्रा देशान्निर्वासितः, तस्य दुर्विनीतस्य एषा मिथ्याभिमानिता किं युक्ता? स्वगुहागह्वरसंस्थितः शृगालोऽपि सिंहायते, परं सिंहं दृष्ट्वैव स शृगाल एव जायते। इत्युद्गर्ज्य लेखेन च तथैव सन्दिश्य तस्मै भीमभटाय प्रतिदूतं व्यसर्जयत्। सोऽपि प्रतिदूतः सत्वरं गत्वा लाटेश्वराय तस्मै भीमभटाय तं प्रतिलेखं समर्पयत्। स च भीमभटस्तं लेखं वाचयित्वा मुक्ताट्टहासः तं प्रतिदूतमभ्यधात्। गच्छ दूत! मद्वाक्यात् तं नर्त्तकसुतं ब्रूहि; अस्वपहे त्वं यच्छन्दनात् पिता बालप्रिय इति मया रक्षितः, नाधुना क्षमिष्ये, निश्चितं त्वां वत्सलस्य पितुरन्तिकं प्रेषयिष्यामि, सज्जो भव कतिपयैरेव दिनैः प्राप्तं मां जानीहि। इति तं दूतमुक्त्वा विसृज्य च भीमभटः यात्रामादिशत्।

अथ तस्मिन् राजेन्द्रे उदयोन्मुखे गजाद्रिमारूढे क्षुभ्यदुदन्वल्लहरीविनिभम् ससैन्यं बलं समापूर्य्यत। प्रस्थितैश्च सबलैः सामन्तराजपुत्रैः समाच्छादितदिगन्तरा सकम्पा इव भयात् विदलनकम्पेव च मेदिनी विरौति

स्म। इत्थं राजा भीमभटः तेषां सैनिकरजसां समुच्चयैः मुषितार्कप्रभं नभः कुर्वन् राढाराज्याऽन्तिकं प्रापत्। तावच्च सोऽपि समरभटो नृपोऽधमो सेनया सन्नह्य योद्धुं निरगात्। ततस्तौ सैन्यजलधी पूर्वपश्चिमौ मिलतः स्म। महांश्च शूराणामाहवप्रलयः प्रावर्त्तत। तत्र समभ्यद्खड्गसम्पातजन्मा अनलः कुप्यत्कृतान्तदन्ताग्रदलनोत्थ इव नभः प्रावृणोत्। तस्मिंश्च तीक्ष्णाग्रायतपक्ष्मला वीरावलोकिदिव्याङ्गनालोचनापातविलासा नाराचा वहन्ति स्म। ततः सा संग्रामरङ्गभूमिः रेणुवितानां सैन्यनिर्घोषिणी नृत्यत्कबन्धा व्यरचत्। क्षणेन च स धनुर्धरो भीमभटः शक्तिदत्तेन अच्चपणकेन तैश्च चण्डभुजङ्गाद्यैर्बाहुयुद्धविशारदैर्महाबलैः शूरैर्दुर्मदैर्द्विरदैरिव सप्तभिः सुहृद्भिः परसैन्यमभाङ्क्षीत्। अथ भग्ने सैन्ये रथस्थः समरभटः क्रुद्धः प्रधाव्य योद्धुमाययौ। स च वारणस्थो भीमभटः अभिपत्य तस्य समरभटस्य धनुश्छित्त्वा बाणैश्चतुरोऽपि हयानवधीत्। अथ समरभटो विरथो धावित्वा तोमरेण भीमभटस्य तं वारणेन्द्रं कुम्भे जघान। स च गजस्तोमरहतः सहसा भुव्यपतत्। ततस्तौ उभौ भग्नयानौ पादचारिणौ बभूवतुः। ततश्च गृहीतखड्गौ तौ पदाती अमर्षणौ द्वन्द्वयुद्धेन प्रयुद्धेऽताम्। अथ भीमभटः विद्याबलेन आत्मानमदृश्यं कृत्वा तद्वधे शक्तोऽपि धर्मापेक्षी तथा तं शत्रुं नावधीत् परं प्रसह्य युध्यमानः खड्गेन तस्य नर्त्तकीतनयस्य मूर्द्धानमच्छिनत्।

ततश्च हते तस्मिन् ससैन्ये समरभटे, सिद्धचारणैर्गगनात्

साधुवादे प्रदत्ते च संग्रामे च समाप्तिं गते स भीमभटः व-न्दिभिः स्तूयमानस्तां राढापुरीं तैः सखिभिः सह प्राविशत्। अनन्दयच्च कौशल्यामिव रघुपतिश्चिरप्रवासादागतः हतारि-स्तत्र समुत्सुकां मातरं मनोरमाम्। ततश्च पौरैरभि-नन्द्यमानः अलङ्कृते पितुरासने गुणप्रियैस्तत्सचिवैः पूज्यमानः समुपाविशत्। ततः सर्वाः विततोत्सवाः प्रकृतीः सम्मान्य शुभेऽह्नि शङ्खदत्ताय तत् लाटराज्यं प्रददौ। तञ्च लाटविषयं तद्गजबलैरन्वितं प्रेष्य तेभ्यः क्षपणकादिभ्यो बहून् ग्रामान् धनानि च प्रादात्।

अथ सर्वान् यथायथं सम्मानितान् विसृज्य तया लाटेन्द्रसुतया हंसावल्या सह वसन् पैतृकं पदमशासत्। क्रमेण च सर्वां पृथिवीं जित्वा राजकन्यकाः समाहृत्य मन्त्रिषु न्यस्तभारः केवलं ताभिः सह सम्भोगैकरतः अन्तःपुरेषु व्यहरत्।

अथैकदा कश्चिन्मुनिस्तं तथा व्यसनिनं द्रष्टुं यदृ-च्छया पूर्वशर्वसमादेशपाककाल इवागमत्। मुनौ द्वार-प्राप्ते तस्मिन् द्वास्थैरावेदितोऽपि स राजा भीमभटः राग-मदैश्वर्यदर्पान्धो न किलाशृणोत्। ततः क्रुद्धो मुनिस्तस्मै राज्ञे इमं शापमदात्, रे मदान्ध! त्वमचिरात् राज्यात् भ्रष्टः हस्ती भव, तच्छ्रुत्वा स भयात् भ्रष्टमदो निर्गत्य राजा चरणनिपतितः दीनैर्वचोभिस्तं मुनिं प्रासादयत्। स तु मुनिस्तथा प्रसाद्यमानः शान्तकोपः प्रत्यवादीत्, राजन्! त्वं तावत् हस्ती भूत्वा स्थास्यसि यावत् प्रचण्डशक्तिं नाम नागशापावसादितं मृगाङ्कदत्तसचिवं चतुर्वैकत्वमागतम्

अतिथीभूतं समाश्वास्य तस्मै स्ववृत्तान्तमाख्यास्यसि, ततः एतस्मात् शापात् मोक्षमाप्स्यसि; तदा च गिरिशादिष्टं गन्धर्वत्वमाप्स्यसि च, अतिथिश्चासौ तत्क्षणात् चक्षुष्मान् सम्पत्स्यते। तन्मां गजीभूतं भीमभटं विद्धि। त्वाञ्च प्रचण्डशक्तिं जाने, तदेष मे शापान्तकालः इत्युक्त्वा स भीमभटो गजाकारं विहाय तत्क्षणात् दिव्यविभवो गन्धर्वः समपद्यत। प्रचण्डशक्तिश्चोत्पन्नलोचनालोकनोत्सवः समजायत।

इत्थं तयोः सर्वं वृत्तान्तं श्रुत्वा दृष्ट्वा च सविस्मयं वल्लिजालान्तःस्थितो मृगाङ्कदत्तः अन्यैः सचिवैः सह कालज्ञः प्रधाव्य रभसात् द्रुतं तं प्रचण्डशक्तिं कण्ठे जग्राह। सोऽपि प्रचण्डशक्तिः अकाण्डसुधावर्षसिक्ताङ्ग इव तं वीक्ष्य सहसा पादयोरपतत्। ततः स भीमभटो गन्धर्वस्तौ चिरविश्लिष्टसमाश्लिष्टौ भृशदुःखितौ रुदन्तौ पर्य्यसान्त्वयत्। मृगाङ्कदत्तः तं गन्धर्वं प्रणम्याब्रवीत्, प्रभो! यदस्माभिरयं सखा मया लब्धः, अमुना च पुनश्चक्षुरात्त्वं यदवाप्तं त्वन्माहात्म्यस्यैवायं प्रसादः, तत्ते नमोऽस्तु। एतदाकर्ण्य सोऽपि गन्धर्वस्तं राजपुत्रमवादीत्, राजपुत्र! अचिरात् सर्वान् सखीन् तां शशाङ्कवतीं महीतलसाम्राज्यञ्च अवाप्स्यसि। तदधैर्य्यं मा कुरु, कल्याणिन्! अहं तावत् साधयामि, यदा च त्वं मां स्मरिष्यसि तदाहं ते सन्निधास्ये। इति तं राजपुत्रमुक्त्वा विगतशापः प्राप्तकल्याणतोषः स गन्धर्वः तेन मृगाङ्कदत्तेन सख्यं विधाय दिव्यभूषणभूषिताङ्गः सहसा समुदपतत्। सोऽपि मृगाङ्कदत्तः प्रचण्ड

प्रज्ञप्तिं मित्रं समासाद्य तैर्मन्त्रिभिः सह आनन्दनिर्भरः तं दिवसमनयत्।

---

## पञ्चसप्ततितमस्तरङ्गः।

ततो मृगाङ्कदत्तः तां रात्रिं नीत्वा प्रभाते प्रचण्डशक्तिप्रमुखैस्तैः सचिवैः सह शशाङ्कवतीमुद्दिश्य तस्मात् काननात् उज्जयिनीमभिप्रतस्थे। गच्छता च तेनाध्वनि अतिविकृतेन केनापि नभस्तले उह्यमानो विक्रमकेशरी नाम स्वमन्त्री अदृश्यत। यावच्च तेन सः अन्यमन्त्रिभ्यो दर्श्यते स्म तावत् स ससम्भ्रमं गगनात् तत्समीपमवततार। अवतीर्य च तस्य पुंसः स्कन्धात् तं मृगाङ्कदत्तमुपेत्य साश्रुलोचनः पादयोरग्रहीत्। तेन च राजपुत्रेण हर्षाश्रुक्लिन्नेन कण्ठेन मन्त्रिभिराश्लिष्टः स तं पुमांसं स्मृतोऽभ्यागमिष्यसीत्युक्त्वा विससर्ज। ततो मृगाङ्कदत्तेन कौतुकादुपविश्य पृष्टः स विक्रमकेशरी स्वोदन्तमाचचक्षे। तदाहं नागशापात् भवच्चरणात् परिभ्रष्टः समन्तात् परिभ्रमन् बहूनि वनानि युष्मान् विन्वन् गच्छामि उज्जयिनीं यतस्तैरपि तत्र गन्तव्यमिति निश्चित्य ब्राह्मणः कामपि नगरीमवापम्। तत्र च ब्रह्मस्थलाभिधम् एकं ग्रामं प्राप्य तदन्तर्वापीतटे वृक्षमूलमुपाविशम्। तत्र कश्चिद् सर्पदष्टः समुपेत्याब्रवीत्, पुत्र! इत उत्तिष्ठ, मा मदीयां गतिमाप्नुहि।

इहास्ति महान् सर्पः तेनाहं दष्टो व्यालयाहितः अस्यां महावाप्यां देहमुज्झितुं उद्यतोऽस्मि। इत्युक्तवन्तं तं कृपया देहत्यागात् निवार्य तत्र विषविद्यया तं विप्रं निर्विषमकरवम्। ततः स विप्रः प्राप्तजीवनः मां प्रति सातिशयं प्रीतिमान् आदरात् मदीयां वार्त्तां कृत्स्नां पृष्ट्वा विदितवृत्तान्तः समभ्यधात्, पुत्र! त्वया मे प्राणाः प्रदत्ताः, तस्मात् इमं वेतालसाधनमन्त्रं पितुः सकाशात् मया प्राप्तं त्वं गृहाण। त्वादृशां सत्त्वशालिनामयमुपयुक्तः सिद्धिकृत्। मादृशाः क्लीवा अनेन किं नाम कुर्वते? इत्युक्तस्तेनाहं तं द्विजोत्तममवादिषम्, ब्रह्मन्! मृगाङ्कवियुतोऽहं वेतालैः किं करोमि। तदाकर्ण्य स विप्रो हसन् पुनर्मामभ्यधात्, वत्स! किं जानासि? वेतालात् सर्वं सेत्स्यति, वेतालस्य प्रसादात् विद्याधरैश्वर्य्यमपि प्राप्यते, पुरा त्रिविक्रमसेनेन भूभुजा किं न प्राप्तं, तदत्र तदीयां कथां कथयामि श्रूयताम्।

अस्ति गोदावरीतटे प्रतिष्ठानाख्यो जनपदः। तत्र विक्रमसेनस्य भूपतेः पुत्रः शक्रपराक्रमः त्रिविक्रमसेनो नाम विख्यातकीर्त्तिरभून् नृपतिः। तस्य सभासीनस्य नृपस्य सेवार्थं प्रत्यहं चान्तिशीलो नाम भिक्षुः एकैकं फलमुपानयत्। सोऽपि तदादाय आसन्नचरस्य कोषाधिकारिणो हस्ते प्रतिदिनं न्यक्षिपत्। इत्थं द्वादशसु वर्षेषु गतेषु एकदा सभागतोऽसौ भिक्षुः राज्ञे यथायथं फलं दत्त्वा सभागृहात् निरगात्। राजा तु तस्मिन्नहनि दैवात् प्रविष्टाय रक्षिणां हस्तच्युताय क्रीडामर्कटपोताय

तत् फलं प्रादात्। स मर्कटः यावत् तत् फलमश्नाति तावत् तस्मात् फलात् विदलितात् अनर्घम् उत्तमं रत्नं निरगात्। तद् दृष्ट्वा राजा तदादाय तं भाण्डागारिकं अपृच्छत् भिक्षुणा उपनीतानि यानि फलानि मया तव हस्ते दत्तानि, तानि त्वया सदा क्व स्थापितानि? तदाकर्ण्य कोषाध्यक्षः सभयस्तं व्यजिज्ञपत्, देव! मया तानि अखण्डानि च गवाक्षतः क्षिप्तानि, यदि आदिशति देवः, तदा तानि साम्प्रतं गवेषये इत्यूचिवान् स राज्ञानुमतो गत्वा क्षणादेव प्रत्यावृत्य पुनः व्यज्ञापयत्, देव! तानि कोषे शीर्णानि फलानि तेषु च रश्मिज्वालाकुलान् रत्नराशीन् पश्यामि, तदाकर्ण्य सन्तुष्टः तान् मणीन् कोषरक्षिणे दत्त्वा अन्येद्युरागतं तं भिक्षुं पर्यपृच्छत्, भिक्षो! कथमेवं धनव्ययेन नित्यं मां सेवसे? यावत् कारणं न वक्ष्यसि, तावत् ते फलं न ग्रहीष्ये, इत्युक्तवन्तं तं नृपं स भिक्षुः विजनं नीत्वाब्रवीत्, वीर! किमपि साधनं साचिव्यसापेक्षमस्ति, तच्च वीरेन्द्रेण त्वया क्रियमाणं साहाय्यमर्थये। इति श्रुत्वा राजा तथेति तस्य साहाय्याय प्रत्यपद्यत। ततः स श्रमणस्तुष्टः पुनस्तं नृपमवादीत्, प्रभो! अस्याम् आगामिन्यां कृष्णचतुर्दश्यां निशागमे इतो महाश्मशानं गत्वा वटतरोरधः स्थितस्य मे सकाशं त्वया गन्तव्यमिति। ततस्तेन राज्ञा बाढमेवं करिष्यामीति तेनाभिहिते स क्षान्तिशीलो भिक्षुः प्रहृष्टः स्वं निलयं ययौ।

अथागतायां कृष्णचतुर्दश्यां स महासत्त्वो नरपतिः भिक्षोस्तां प्रार्थनां प्रतिपन्नां स्मरन् प्रदोषे नीलवसनेन

समलङ्कृतशिराः खड्गपाणिरलक्षितः, तत् महाश्मशान-
मगात्। गत्वा इतस्ततोऽन्विष्यन् वटतरोरधः स्थितं तं
मन्त्रन्यासं कुर्वाणं भिक्षुं दृष्ट्वा समुपेत्य च जगाद, भिक्षो!
एषोऽस्मि आगतः, किन्ते करवाणि वद। तदाकर्ण्य स
भिक्षुर्नृपं दृष्ट्वा हृष्टः प्रोवाच, राजन्! यदि प्रसादस्ते
कर्त्तव्यः, तदा इतो दक्षिणामुखं गत्वा एकाकी विदूरे
यं शिंशपातरुं द्रक्ष्यसि, तस्मिन् प्रलम्बितो मृतः कोऽपि
तिष्ठति, तमिहानीय मे साहाय्यं कुरु। तदाकर्ण्य स
वीरो नृपतिस्तथेत्युक्त्वा सत्यसङ्गरः दक्षिणादिशमालम्ब्य
तत्र प्रययौ। कथञ्चिच्च तेन श्मशानमार्गेण गच्छन् विदूरे
तं शिंशपातरुं प्राप्य तदुपरि लम्बमानं शवमेकमद्रा-
क्षीत्। दृष्ट्वा तं तरुमारुह्य छिन्नरज्जुं तं भूमौ अपातयत्।
पातितश्च सः अकस्मात् जीवित इव भृशं चक्रन्द। ततो-
ऽसौ राजा अवरुह्य कृपया तज्जीविताकाङ्क्षी यावत् तस्य
अङ्गानि परामृशत् तावत् स शवः अट्टहासमकरोत्। ततः
स राजा तं वेतालाधिष्ठितं मत्वा कथं हससि, एहि:
गच्छाव इति निर्भयं यावत् ब्रवीति, तावत् तं वेतालं न
भूमौ समवैक्षत। ऐक्षत च तस्यैव तरोरुपरि यथापूर्वं
लम्बमानं ततो भूयोऽपि तरुमारुह्य स राजा यत्नतः तं
शवमवारोहयत् वीराणां चित्तं वज्रादपि अखण्डितम्
अकम्प्यम्। ततः तं वेतालाधिष्ठितं शवं स्कन्धमारोप्य
मौनेन गन्तुमुपचक्रमे। यान्तञ्च तं शवाधिष्ठितो वेतालस्तं
राजानमब्रवीत्, राजन्! अध्वविनोदाय कथामाख्यामि
शृणु।

अस्ति वाराणसी नाम शङ्करवसतिः पुरी। या कैलासस्य स्थलीव पुण्यजनसेविता। हारयष्टिरिव यस्याः स्वर्गतरङ्गिणी विभाति। तस्यां प्रतापानलनिर्दग्ध विपक्षकुलकाननः प्रतापमुकुटो नाम नृपतिः प्रतिवसति स्म। तस्य च वज्रमुकुटो नाम तनयः स्मरस्य च जनस्य च रूपशौर्य्ययोर्दर्पदलन आसीत्। तस्य राजपुत्रस्य सखा महामतिः मन्त्रिपुत्रः कश्चिदास्त। कदाचित् स नृपात्मजः तेन सख्या सह क्रीड़न् मृगयाप्रसङ्गेन अतिदूरमध्वानं जगाम। स तत्र सिंहानां मस्तकानां सटालानि शौर्य्यश्रीचामराणीव शरैश्छिन्दन् महावनमेकमाससाद। तत्र सरोवरमेकं दृष्ट्वा श्रान्तः स तेन सुहृदा मन्त्रिपुत्रेण तज्जलं पीत्वा प्रक्षालितकरचरणः कस्यापि तीरतरोर्मूले समुपाविशत्।

अत्रान्तरे कापि स्नानार्थमागता दिव्याकृतिः सपरिच्छदा पूरयन्तीव लावण्यनिर्झरेण सरोवरं दृष्टिपातैः सृजन्तीव तत्रोत्पलवनानि, प्रत्यादिशन्तीव मुखेन जितेन्दुना अम्बुजानि कन्यका तेन ददृशे। दृष्टैव सा तस्य राजपुत्रस्य मनो जहार तत्क्षणम्। सोऽपि राजसूनुस्तस्या विलोचने अहार्षीत्। सा तु कन्या तद्दर्शनेन संजातविकारा लज्जया किमपि वक्तुमशक्नुवाना हृद्गतमाकूतं सङ्केतेन बोधयन्ती एकमुत्पलं कर्णे गृहीत्वा दन्तरचनां विधाय पद्मं शिरसि कृत्वा हृदये करमदात्। राजपुत्रस्तु तस्यास्तां संज्ञां न विवेद, मन्त्रिपुत्र एव केवलं बुद्धिमान् सर्वं बुबुधे। क्षणेन च सा कन्या अनुगेर्नीय-

माना प्रययौ। गत्वा च स्वं गृहं पर्य्यङ्कनिषण्णा तस्थौ।
चित्तन्तु तस्यास्तस्मिन् नृपात्मजे एव स्थितम्। सोऽपि
राजसुतः कष्टेन स्वनगरीं गत्वा तया विना नितरां
व्यथितो दिने दिने कृशतामवाप। सख्या च मन्त्रिपुत्रेण
तेन रहसि तामदृष्ट्वापां शंसता पृष्टस्त्यक्तधैर्य्यः प्रोवाच
सखे! यस्या नाम न, ग्रामो न, अन्वयश्च नावबुध्यते, सा
कथं प्राप्यते, तन्मृषा मां किमाश्वासयसि? इति राजपुत्रे-
णोक्तो मन्त्रिपुत्रस्तमभ्यधात्, देव! किं न दृष्टं त्वया,
यत् यत् तया संज्ञया सूचितम्। यत्तया कर्णे उत्पलं न्यस्तं
तेन एतत् सूचितं कर्णोत्पलस्य राज्ञः राष्ट्रे अहं निवसा-
मीति। कृता च या दन्तरचना, तया एतत् सूचितं यथाहं
तत्र दन्तघाटकस्य कन्येति। शिरसि पद्मं धृत्वा एतत्
सङ्केतितं यथाहं नाम्ना पद्मावतीति। हृदयार्पित-हस्तया
च तया त्वयि मे प्राणाः स्थिता इति सङ्केतितम्। अस्ति
च कलिङ्गदेशे कर्णोत्पलो नाम नृपः। तस्य चित्तप्रसादकः
महासमृद्धिमान् दन्तघाटकः संग्रामवर्द्धनो नाम प्रति-
वसति। तस्य कन्यारत्नमियं पद्मावती नाम प्राणा-
धिकप्रियम्। एतत् लोकमुखात् मया विदितम्। तस्मात्
मया तस्याः देशादिसङ्गिनी संज्ञा ज्ञाता। इति तेन
मन्त्रिपुत्रेणोक्तो राजपुत्रस्तस्मै सुधिये तुतोष जहर्ष च
लब्धोपायः।

अथ स तेन मन्त्रिपुत्रेण समम् प्रियार्थी पुनर्मृगया-
व्याजेन तत् प्रदेशमगमत्। अर्द्धमार्गे च वाताश्ववेगात्
सैनिकान् पार्श्वचरानतीत्य तेनैव मन्त्रिपुत्रेण युतः

कलिङ्गाभिमुखं ययौ। प्राप्य तन्नगरं कर्णोत्पलनृपतेः
मन्त्रिणश्च दन्तघाटकस्य भवनं दृष्ट्वा च तद्दूरे वासार्थं
कस्याश्चित् वृद्धाया योषितो गृहं तौ राजपुत्रमन्त्रिपुत्रौ
प्राविशताम्। तत्र च वाहौ यवससलिलैः पूरयित्वा
सुखमवस्थाप्य मन्त्रिपुत्रः तां वृद्धामपृच्छत् वृद्धे! कच्चित्
अस्मिन् नगरे कमपि दन्तघाटकनामानं वेत्सि? तदा-
कर्ण्य सा जरती सादरं तमभाषत वत्स! सुष्ठु वेद्मि,
तस्याहं धात्री अस्मि, तेनैवाहं पद्मावत्याः स्वदुहितुः पार्श्वे
स्थापिता, किन्तु अहं तत्राधुना अपहृताम्बरा न गच्छामि,
यातु कुपुत्रः कितवो मे वस्त्रं दृष्ट्वैव सद्यः हरेदिति।
एवमुक्तवतीं तां हृष्टः मन्त्रिपुत्रः स्वोत्तरीयादिदानेन
सन्तोष्य पुनरब्रवीत् मातस्त्वम् आवाभ्याम् यद् यद् कथ्यते
तत्तत् सुगुप्तं कुरुष्व। त्वं दन्तघाटसुतां पद्मावतीं गत्वा
वद यस्त्वया सरसीतटे राजपुत्रो दृष्टः, सोऽत्र आगतः,
तेनार्थिताहं त्वदन्तिकं प्रणयादायाता। तदाकर्ण्य सा
वृद्धा दानवशीकृता तदैव पद्मावतीपार्श्वं गत्वा अवसरं
प्राप्य तां जगाद वत्से! तौ राजसुतमन्त्रिसुतौ त्वत्-
प्राप्तये अत्र समागतौ, साम्प्रतं करणीयमादिश। इत्य-
भिहिता सा तां निर्भर्त्स्य पाणिभ्यां द्वाभ्यां कर्पूर-
लिप्ताभ्यां द्वयोः कपोलयोराहत। ततः सा परिभवार्त्ता
रुदती गृहमागम्य तावभाषत पुत्रौ! पश्यतं मुखे मे
तया एता अङ्गुलिमुद्रा दत्ताः, एवं तयोर्हि नैराश्यविषम
र्तं तावद्युतं स महाबुद्धिर्मन्त्रिसुतः जनान्तिकमवादीत्
सखे! मा विषादं व्रजः, मर्म रचना तया निर्भर्त्स्य

यत् कर्पूरयुक्ता अस्या मुखे दश ताम्बूलवो निहिताः एतैरेतत् सूचितं यथा अस्मिन् शुक्ले पक्षे चन्द्रवतीरिमा दश रात्रीः सङ्गमानर्हाः प्रतीक्षस्व इति। इत्येवं राजपुत्रं समाख्याय स मन्त्रिसुतः गुप्तं हस्तस्थं काञ्चनं किञ्चिद् आपणे विक्रीय तया वृद्धया महार्हं भोजनं साधयामास। ततस्तौ द्वौ सह तया वृद्धया बुभुजाते। इत्थं दशाहानि नीत्वा पुनर्जिज्ञासार्थं स मन्त्रिपुत्रस्तां वृद्धां पद्मावतीपार्श्वं प्रेषितवान्। सापि मिष्टान्नपानादिलुब्धा तदनुरोधात् तस्या वासगृहं गत्वा प्रतिनिवृत्य च तौ जगाद वत्सौ! इतो गत्वाहं तत्पार्श्वे कियन्तं कालं तूष्णीं स्थिता तया तु युष्मत् कथापराधं स्वयमुद्गिरन्त्या पुनः सालक्तकाभिस्तिसृभिः कराङ्गुलिभिः उरसि हता तदन्तिकात् अपमानिता पुनरायाता। तदाकर्ण्य स मन्त्रिपुत्रः तं राजपुत्रं स्वैरमब्रवीत् सखे! मान्यथा शङ्कां कार्षीः, अस्या हृदये तया यदलक्तकाक्तम् अङ्गुलिमुद्रात्रयं विन्यस्तं कौशलेन तेन रजस्वला स्त्रियो तिस्रः स्थिताः इति सूचितम्। एवं राजसुतमाश्वास्य स मन्त्रिसुतः त्र्यहे गते पुनरपि तां वृद्धां पद्मावतीसकाशं प्राहिणोत्। सा तस्मिन् दिने गता तया समादृत्य भोजिता। पानादिभिश्च दिनं सर्वं विनोदिता। यावत् सा सायं गृहमागन्तुमिच्छति तावत् तत्र बहिः भयङ्करः कोलाहलः समुद्भूत्। हा हा अयं मत्तहस्ती स्वावासात् भ्रष्टः जनान् मथ्नन् प्रधावतीति जना आक्रन्दन्तः पलायमानाः शुश्रुविरे। ततः सा पद्मावती तां वृद्धामभाषत अम्ब! साम्प्रतं

इच्छितदेशे पथि त्वया न गन्तव्यं तत्त्वां पीठिकां समारोप्य आलम्बकरज्जुभिर्बद्धां अनेन दृढना गवाक्षेण अत्र गृहोद्याने प्रक्षिपामि, ततो वृक्षमारुह्य विलङ्घ्य च प्राकारम् अन्येन वृक्षेण स्वगृहं व्रज इति। एवमुक्त्वा सा चेटिभिस्तां बद्धां रज्जुपीठिकया गवाक्षात् उद्याने प्रक्षेपयामास। सा च गृहं गत्वा तत् सर्वं ताभ्यां राजपुत्रमन्त्रिपुत्राभ्यां शशंस। तदा स मन्त्रिपुत्रस्तं राजपुत्रमभाषत सखे! सिद्धं ते अभिलषितं युक्त्या तया मार्गो दर्शितः, तदद्यैव प्रदोषे त्वम् एतेनैव पथा तत् प्रियामन्दिरं गच्छ। इत्युक्तस्तेनैव मन्त्रिपुत्रेण युतः स राजपुत्रः तेनैव पथा दूतया दर्शितेन तदुद्यानं ययौ। ददर्श च तत्र तां लम्बमानां सपीठिकां मार्गोन्मुखाभिश्चेटीभिरुपरिष्टादधिष्ठितां रज्जुम्। स च तां दृष्ट्वैव यावदारोहति स्म तावत् ताभिः सखीभिः तया रज्ज्वा गवाक्षेणाकृष्टः प्रियान्तिकं प्राविशत्। तस्मिंश्च प्रविष्टे स मन्त्रिपुत्रस्तमेव स्वावासं प्रायात्। राजपुत्रस्तु तां पद्मावतीं पूर्णेन्दुवदनां प्रसरत्कान्तिचन्द्रिकां क्षणापचात् गुप्तं स्थितां राकाविभावरीमिव अद्राक्षीत्। सापि तं दृष्ट्वा तत्कालोचितैः कण्ठग्रहादिभिस्तैस्तैः क्रीडाचारै रमयामास। ततस्तत्र गान्धर्वविधिना समूढ्वा तया सह कान्तया गुप्तं विहरन् कतिचित् दिनानि स्थित्वा कदाचित् तां प्रियामवदत् प्रिये! मम सखा मन्त्रिपुत्रः सदैव सहायतः अद्य स्वागृहे एकाकी तिष्ठति, तद् गत्वा तं सम्भाष्य पुनरेष्यामि इति तदाकर्ण्य सा धूर्त्ता

पद्मावती तं प्रियमाह स्म नाथ ! त्वामहं पृच्छामि, मत्-कृतास्तास्ताः संज्ञास्त्वया ज्ञाताः ? उत ते तेन मन्त्रि-पुत्रेण ? तथाभिदधतीं तां राजपुत्रोऽब्रवीत्, प्रिये ! न ज्ञातं मया तत् सर्वं तेनैव मे मित्रेण दिव्यज्ञानवता सर्वं विदित्वा मे समाख्यातम् । एतदाकर्ण्य सा भामिनी विचिन्त्य तं प्रत्यभाषत नाथ ! तर्हि अयुक्तं कृतं त्वया चिरात् तद्वार्त्तां कथयता, यस्ते सखा, स मे भ्राता; तस्य प्रथममेव मया ताम्बूलादिसमाचारेण सम्माननां कर्त्तव्यासीत् । इत्युक्तवत्या तयानुमतः राजपुत्रस्तेनैव पथा तस्यां निशि सख्युरन्तिकमागात् । अकथयच्च तत् सर्वं प्रियया कथितम् । मन्त्रिपुत्रस्तु तद्युक्तमिति न तत् सादरमभ्यमन्यत । इत्थं परस्परमालपतोस्तयोः सा विभा-वरी पर्य्यगात् ।

अथ तयोः सान्ध्ये विधौ निर्वृत्ते पक्वान्नताम्बूल-हस्ता पद्मावतीसखी तत्रागात् । सा समागत्य तं मन्त्रिपुत्रं कुशलं पृष्ट्वा दत्तोपचारा युक्तितः राजपुत्रस्य भोजनं निषेद्धुं सा तव प्रिया भोजनादौ तदागमं प्रतीक्षमाणा आस्ते इति आवेद्य क्षणात् ततः प्रायात् । ततः स मन्त्रिपुत्रस्तं राजपुत्रमभाषत देव ! कौतुकमेकं पश्य त्वां दर्शयामि । इत्युक्त्वा स तस्मादेकं पक्वान्नमादाय सारमेयाय तत्र स्थि-ताय प्रादात् । स भुक्त्वैव तत्क्षणात् व्यपद्यत । तदव-लोक्य किमिदं चित्रमिति तं मन्त्रिपुत्रं राजपुत्रः पर्य्य-पृच्छत् । स चैनं प्रत्यभाषत देव ! स संज्ञाप्रकटनेन मां धूर्त्तं विदित्वा हन्तुकामया त्वदनुरक्तया तया अस्मिन् सति

राजपुत्रो मदेकायत्तचित्तो न भवेत् एतदर्थश्च मां विहाय स्वां नगरीं व्रजेदिति विचारयन्त्या मम भक्षणार्थं विषान्नं प्रहितम्। तस्मात् त्वमेतस्यां मन्थ, मुञ्च। अहं कामप्यत्र युक्तिं पर्य्यालोचयामि। इत्युक्तवन्तं मन्त्रिसुतं स राजपुत्रः सत्यं त्वं बुद्धिशरीर इति यावत् स्तौति तावत् सहसा दुःखाकुलजनैरुदीरितो हा धिक् राज्ञो बालः सुतो विपन्न इति रवः श्रूयते स्म। तदाकर्णनेन हृष्टः स मन्त्रिपुत्रस्तं नृपात्मजं जगाद, देव। अद्य पद्मावतीगेहं निशि व्रज, तत्र गत्वा तां तथा पाययेः, यावत् पानमदेन सा निःसंज्ञा नष्टचेष्टा गतजीवितेव स्यात्। ततस्तस्याः सनिद्रायाः कटितटे शूलेन अग्नितप्तेन अङ्कं दत्त्वा आभरणानि गृहीत्वा गवाक्षेण तेनैव प्रकारेण आगच्छेः, ततःपरं यथा भद्रं भवेत् तथा करिष्यामीत्युक्त्वा कारयित्वा च त्रिशूलं तस्मै राजसूनवे प्रादात्। सोऽपि राजपुत्रस्तत् कुटिलकर्कशं कालायसदृढं कान्तावयस्ययोश्चित्तमिव हस्ते गृहीत्वा पूर्ववत् रात्रौ पद्मावतीगृहमेत्य शुचेः स्वमन्त्रिणो वाक्यं प्रभूणामविचार्य्यमिति मत्वा तत्र मद्यपाननिश्चेष्टां तां जघने शूलेनाङ्कितां कृतालङ्करणाच्च कृत्वा सख्युरन्तिकमागात्। अशंसच्च आभरणानि दर्शयित्वा तत् सर्वम्। ततः स मन्त्रिपुत्रः स्वं समीहितं सिद्धं मत्वा प्रातः श्मशानं गत्वा स्वयं तापसरूपभृदभवत् अकरोच्च राजपुत्रं शिष्यरूपिणम्। अब्रवीच्च त्वं इतोऽलङ्करणात् इमां मुक्तावलीं नीत्वा विक्रेतुम् आपणं व्रज, यदि त्वां पुररक्षिणो गृह्णीयुः तदा इत्थं ब्रूयाः, यदियं

मे गुरुणा विक्रयार्थं दत्तेति, इति सन्दिष्टः स राजसुतः आपणं गत्वा तथैव मुक्तावलीं विक्रेतुमतिष्ठत्, अन्वष्यत च तथाभूतः पुररक्षिभिः। ते च दन्तघाटसुताया अलङ्कारमोषान्वेषणार्थिनः तं राजसुतं तत्क्षणं नगराध्यक्षान्तिकं निन्युः। स च नगराध्यक्षस्तं तापसाकारं दृष्ट्वा सान्त्वेन पप्रच्छ, भगवन्! कुत इयं मुक्तावली आसादिता, दन्तघाटकन्याया इदमाभरणं हृतम्। तदाकर्ण्य राजपुत्रस्तानवादीत् भद्राः! गुरुणा ममैषा विक्रेतुं दत्ता, तद्गुरुमाभिरेत्य स पृच्छ्यतामिति। ततस्तं समुपेत्य नगराधिपः पप्रच्छ, भगवन्! इयं मुक्तावली कुतस्तव हस्तगता? एतदाकर्ण्य स धूर्त्तो मन्त्रिसुतः तं रहसि अवादीत्, भद्र! अहं तपस्वी सदा अस्मिन् इतस्ततो भ्राम्यामि, सोऽहं दैवात् अत्र श्मशाने स्थितो निशि समस्तं योगिनीचक्रं समागतमपश्यम्। तासु चैकया योगिन्या राजपुत्र एकः उद्घाटितहृदम्भोजो भैरवाय निवेदितः। पानमत्ता च सा जपतो मे मोक्षमालिकां हर्त्तुं महामाया विविधविकारपूर्णमुखी यावत् प्रावर्त्तत तावत् अतिदर्पिता सा क्रुद्धेन मया जघनस्थले त्रिशूलेन मन्त्रप्रज्वलिताग्निना अङ्किता, हृता च तस्या इयं मुक्तावली कण्ठात्। तदेषा तापसानर्हा विक्रयार्थं प्रेषिता। तदाकर्ण्य स नगराध्यक्षो गत्वा राजानं तत् सर्वं व्यजिज्ञपत्। भूपोऽपि आकर्ण्य तत् दृष्ट्वा च तां मुक्तावलीं प्रेक्षणप्रहिताया इष्टाया आप्तवनितायाः मुखात् दृष्टत्रिशूलाङ्कां जघने तां पद्मावतीं श्रुत्वा सत्यमेव अस्याः सुतो मेऽनया डाकिन्या इति समुत्

पत्रनिश्चय: स्वयं तस्य मन्त्रिपुत्रस्य तापसवेशिनोऽन्तिकं गत्वा तस्याः पद्मावत्या निग्रहं दृष्ट्वा च तस्य वचसा प्रिहस्यां शोच्यमानायाः तस्याः पुरान्निर्वासनं दण्डं व्यधात्। सापि निर्वासिता अटवीस्था नन्नापि तत् सर्वं मन्त्रिपुत्रकृतं सम्भाव्य तनु' न जहौ। दिनान्ते तौ राजपुत्रमन्त्रिपुत्रौ तापसवेशं त्यक्त्वा अश्वारूढौ शोचन्तीं तां प्रापतुः। निन्यतुश्च अश्वमारोप्य स्वराष्ट्रम्। तत्र चागत्य स राजपुत्रस्तया साकं सुनिर्वृतस्तस्थौ। दन्तघाटस्तु अरण्ये क्रव्याद्भिर्भक्षितां सुतां मत्वा शोकेन पञ्चत्वमगात्। भार्य्या च तस्य तमनुजगाम। इति कथामाख्याय वेतालस्तं नृपमपृच्छत्, राजन्! एतयोर्दम्पत्योर्वधात् राजपुत्रस्य मन्त्रिपुत्रस्य वा पद्मावत्याः पातकं भवेत्, त्वं हि बुद्धिमतां वरो दृश्यसे, तदत्र मे संशयं छिन्धि, यदि जानन्नपि मे तत्त्वं न वदिष्यसि, तदा ते मूर्द्धा निश्चितं शतधा स्फुटिष्यति (यदि च सदुत्तरं दास्यसि तदाहं पुनस्तव स्कन्धात् तमेव शिंशपातरुमाश्रयिष्ये इति।) इत्युक्तवन्तं वेतालं राजा त्रिविक्रमसेनस्तं प्रत्यवादीत्, योगेश्वर! किन्ते अज्ञातम्? तथापि वच्मि, एतेषां त्वयोक्तानां त्रयाणामपि नैव पातकं केवलं कर्णोत्पलस्य राज्ञ एव तत् पातकं भवति। वेतालः प्राह स्म राज्ञः को दोषः, ते त्रयः तत्कारकाः हंसैः शालिषु जग्धेषु काकाः किमपराध्यन्ति। ततो राजाब्रवीत् ते त्रयोऽपि न दूषन्ति, मन्त्रिसुतस्य प्रभुकार्य्यमेव चिन्तं, तदत्र सोऽपातकी, पद्मावती राजपुत्रौ हि कामशराग्निना निर्दग्धौ अविचारकौ तस्मात् स्वार्थसम्पा-

दनादद्दोषौ, राजातु नीतिशास्त्रेषु सुशिक्षितोऽपि चारैः प्रजासु तत्त्वमनन्विष्यन् धूर्त्तचरितानि च जानन् अविचारं कृतवानिति, स एवात्र पातकीति निशम्य स वेतालः तस्य राज्ञः दार्ढ्यं परीक्षितुं मायाबलात् तत्क्षणं तमेव शिंशपातरुमभिसिश्रियत्। राजापि निःशङ्कः पुनरमुमानेतुं तत्रागात्।

---

## अथ षट्सप्ततितमस्तरङ्गः ।

अथ स राजा विक्रमसेनः पुनस्तं वेतालमानेतुं तं शिंशपातरुमूलमगमत्। यावत्तत्र प्राप्तः समन्तात् वीक्षते स्म तावत् तं वेतालं भूमौ कूजन्तं पतितं ददर्श। ततश्च तस्मिन् नृपे तं मृतदेहस्थं वेतालं स्कन्धमारोप्य जवात् तूष्णीमानेतुं प्रवृत्ते स्कन्धस्थितः स वेतालस्तमब्रवीत्, राजन्! महति अनुचिते क्लेशे पतितोऽसि, तस्मात् तव विनोदाय पुनः कथामिकां कथयामि श्रूयताम्।

अस्ति कालिन्दीतटे ब्रह्मस्थलाभिधः कश्चिदग्रहारः। तत्र अग्निस्वामीति समभवत् कश्चित् वेदपारगो विप्रः। तस्य अतिरूपवती मन्दारवती नाम कन्यका अजनि। यां नवानर्घलावण्यां निर्माय विधिर्नियतं निजं स्वर्गनारीपूर्वनिर्माणकौशलं जुगुप्सते। तस्यां शैशवातिक्रान्तायां कान्यकुब्जात् समसर्वगुणोपेतास्त्रयो ब्राह्मणदारकाः

समाययुः। तेषामेकैकः भार्यार्थं तत्पितरं तामयाचत तत्पिता प्राणव्ययेऽपि तामन्यस्मै दातुमनिच्छन् तन्मध्यादेकस्मै दातुं मतिमकरोत्। सा तु कन्या अन्ययोर्बाधात् भीता कियन्तं कालं न पाणिमग्राहयत्। ते च त्रयोऽपि तस्या मुखेन्दुनिबद्धदृष्टयः चकोरव्रतमालम्ब्य दिवानिशं तत्रैव तस्थुः।

अथाकस्मात् समुत्पन्नेन ज्वरदाहेन आर्त्ता सा मन्दारवती पञ्चतामवाप। ततस्ते विप्रकुमारास्तां परासुं दृष्ट्वा शोकार्त्ताः कृतप्रसाधनां श्मशानं नीत्वा अग्निसाद्कुर्वन्। ततश्च तेषामेकः तत्र मठं निर्माय तद्भस्मशय्यायां भैक्ष्येण जीवन्नतिष्ठत्। द्वितीयोऽस्थीनि तस्या उपादाय भागीरथ्यां निक्षेप्तुं जगाम। तृतीयस्तु तापसो भूत्वा देशान्तराणि भ्रमितुमगात्। स तु भ्राम्यन् तापसः वज्रलोकाभिधं ग्रामं प्राप्य कस्यापि विप्रस्य गृहे अतिथिरभूत्। तेन च गृहपतिना पूजितो यावत् तत्र भोक्तुं प्रावर्त्तत, तावत्तस्य एकः शिशुः रोदितुं प्रवृत्तोऽभवत्। स च शिशुः सान्त्व्यमानोऽपि यदा न व्यरंसीत् तदास्य गृहिणी तं बाहावादाय ज्वलत्यग्नौ क्रुधा प्राक्षिपत्। क्षिप्त एव स कोमलाङ्गस्तत्क्षणात् भस्मसादभूत्। तदवलोक्य स तापसः सञ्जातरोमाञ्चः प्राब्रवीत्, हा धिक्! कष्टं प्रविष्टोऽहं ब्रह्मराक्षसवेश्मनि अज्ञानात् मूर्त्तं किल्बिषमिदमन्नं नाधुना भक्षयामि। एवं वादिनं तमतिथिं स गृहस्थः प्रत्यवादीत्, ब्रह्मन्! पश्य मे पठितसिद्धस्य मृतसञ्जीवनीं शक्तिम्। इत्युक्त्वा पुस्तकमुद्घाट्य तां विद्यां

बहिस्तत्र मन्त्रमनुवाच्य च तस्मिन् भस्मनि जलमक्षिपत्। क्षिप्तमात्रे च जले स पुत्रस्तथैव जीवन्नुदतिष्ठत्। ततः स तापसः सुनिर्वृतस्तत्र सहर्षं बुभुजे। गृहस्थोऽपि स मागदत्तके पुस्तकमवस्थाप्य भुक्त्वैव तेन तापसेन सह रात्रौ शयनमभजत। अथ सुप्ते गृहपतौ स तापसः स्वैरमुत्थाय शङ्कितः स्वप्रियायाः मन्दारवत्याः जीवनार्थं तां पुस्तिकामग्रहीत्। गृहीत्वैव तस्माद्विनिर्गत्य रात्रिन्दिवं व्रजन् शनैस्तत् श्मशानमासदत्। अद्राक्षीच्च सहसा तं द्वितीयम् उपस्थितं यो हि गङ्गाम्भसि तदस्थि क्षेप्तुमगात्। प्राप्य च ततस्तं तस्या भस्मनि शायिनं तृतीयं निबद्धमठम्। अथ स तापसः प्रोवाच मठिका त्यज्यतां भ्रातः, प्रियां तामहमुत्थापयामीति। ततस्ताभ्यां निर्बन्धतः परिपृष्टः पुस्तिकामुद्घाट्य मन्त्रमनुवाच्य मन्त्रपूतानि जलानि तस्मिन् भस्मनि प्राक्षिपत्। क्षिप्तमात्रेषु जलेषु सा मन्दारवती जीवन्ती सहसा समुत्तस्थौ। तदा सा कन्या वह्निं प्रणम्य निष्क्रान्तं पूर्वाधिकद्युति काञ्चनेनेव निर्मितं वपुर्बभार। तादृशीं तां पुनर्जीवितां निशम्य त्रयोऽपि ते स्मरातुराः तत् प्राप्तुमन्योऽन्यं कलहं चक्रुः। एकेनोक्तम् इयं मन्त्रबलात् जीविता ममैव भार्या। अपरोऽब्रवीत् मदीयेन तीर्थभ्रमणपुण्येन इयं जीविता, तदेषा ममैव भार्या। तृतीयेनाभिहितं मया भस्मानि रक्षितानि, तत एवेयं जीविता, तस्मात् ममैवेयं प्रणयिनीति। हे महीपते! तेषां विवादनिर्णये त्वमेव शक्तः, तत् ब्रूहि कन्यासौ कस्य एतेषां भार्या भवितुमर्हति? यदि जानन् कथा वहि-

असि तदा ते मूर्डा विदलिष्यति। इति वेतालादाकर्ण्य स राजा एवमभ्यधात् यः क्लेशेन मन्त्रमानीय एनमजीवयत् स खलु पितृकार्य्यकरणात् न पतिः। यश्च तस्या यस्थीनि गङ्गायां नेतुं गतः स पुत्रकार्य्यकरणात् न पतिः। यस्तु तद्भस्मशय्यां समाश्रित्य तपश्चचार श्मशान एव, स एवास्याः प्रणयिकार्य्यकरणात् पतिर्भवितुमर्हतीति। इत्थं नृपात् त्रिविक्रमसेनादाकर्ण्य स वेतालस्तस्य स्कन्धादतर्कितः स्वपदं प्रायात्। राजा च भिक्षुकार्य्यार्थं पुनस्तं प्राप्तुं मनो बबन्ध। प्राणात्ययेऽपि महासत्त्वाः प्रतिपन्नमर्थम् असाधयित्वा न निवर्त्तन्ते।

---

## अथ सप्तमतितमस्तरङ्गः।

अथ राजा पुनरपि तं वेतालमानेतुं तं शिंशपातरुमभ्यगच्छत्। प्राप्य च तत्रस्थं मृतदेहगतं तं स्कन्धे गृहीत्वैव तूष्णीं गन्तुं प्रावर्त्तत। अथ प्रयान्तं तं स वेतालः पुनरवोचत्, राजन्! निशि गमागमं कुर्वन् नितरां खिद्यसे, अतस्त्वां विनोदयन् पुनः कथां वर्णयामि शृणु।

अस्ति पाटलिपुत्रं नाम भूमण्डलख्यातं नगरम्। पुरासीत् तत्र नृपतिः विक्रमकेशरी नाम। यं गुणानामिव रत्नानामाश्रयं विधिर्व्यधात्। तस्य विदग्धचूड़ामणिर्नाम

दिव्यविज्ञानवान् सर्वशास्त्रवित् शापावतीर्णः एकः शुक आसीत्। तस्य नृपस्य आत्मजः शशी नाम शुकोपदेशेन मगधदेशनृपतिकन्यां चन्द्रप्रभां नाम उपयेमे। तस्या अपि राजपुत्र्याः तथाभूता ज्ञानविज्ञानशालिनी सोमिका नाम शारिकाभूत्। अथ तौ शारिकाशुकौ एकपञ्जरस्थौ राजवेश्मनि आस्ताम्।

एकदा साभिलाषः स शुकस्तां शारिकामब्रवीत्, सुभगे! एकशय्यासनाहारविहारेषु मां भजेति। शारिकाब्रवीत् नाहं पुरुषसंसर्गं कर्त्तुमिच्छामि, यतः पुरुषा दुष्टाः कृतघ्नाश्च इति। ततः शुकेन न पुमांसो दुष्टाः, स्त्रिय एव दुष्टा नृशंसहृदयाश्चेति कथिते तयोर्विवादः समजनि। ततस्तौ पक्षिणौ क्रीतदासत्व-क्रीतदासीत्वपणं कृत्वा परस्परं विवादनिष्पत्तये राजपुत्रमुपेयतुः। स राजपुत्रः पितुरास्थानगतः विवादपदं श्रुत्वा कथं पुरुषाः कृतघ्नाः, ब्रूहि तत्त्वमिति शारिकामपृच्छत्। ततः सा शृणोतु राजपुत्र इति समाख्याय स्वपक्षसमर्थनाय पुंदोषाख्यायिनीं कथां कथयितुमुपचक्रमे।

अस्ति कामन्दकी नाम विख्याता नगरी। तस्याम् अर्थदत्तो नाम महाधनो वणिक् प्रतिवसति स्म। कालेन तस्य धनदत्तो नाम तनयः समुदपद्यत। अथ पितरि स्वर्गते स युवा द्यूतादिसङ्गेन भृशमुच्छृङ्खलोऽभवत्। धूर्त्ताश्च मिलिताः, तं सर्वथा प्राभ्रंशयन्। दुर्जनसङ्गतिरेव व्यसनवृक्षस्य मूलम्। अचिरेण च व्यसनासक्ततया क्षीणसर्वस्वः दारिद्र्येण च लज्जितः स्वदेशं त्यक्त्वा भ्रमितुं

देशान्तराणि समाश्रयत्। गच्छंश्च चन्दनपुरं नाम नगरमाससाद। विवेश च भोजनार्थी कस्यापि वणिजः सदनम्। स च वणिक् कुमारं दृष्ट्वा पृष्ट्वा च कुलं ज्ञात्वा च कुलीनं सत्कृत्य च दैवयोगात् प्रासममन्यत अददाच्च तस्मै सधनां रत्नवतीं नाम सुताम्। ततः स धनदत्तः कृतविवाहस्तस्मिन्नेव श्वशुरवेश्मनि तस्थौ।

गच्छत्सु च दिनेषु सुखेन विस्मृतदुर्गतिः पुनर्व्यसनोत्सुकः स्वदेशं गन्तुकामोऽभवत्। ततः स शठः कथमपि श्वशुरं तं तस्मात्रापत्यम् अनुनीय तामलङ्कृतां भार्य्यां रत्नवतीमेकया वृद्धया स्त्रिया सहितां गृहीत्वा स्वदेशाय प्रतस्थे। क्रमेण अटवीं प्राप्य दूरात् तस्करभयमुक्त्वा तस्या भार्य्यायाः सर्वाणि अलङ्करणानि स्वीचकार। पश्यतु युवराजः, द्यूतवेश्यादिव्यसनिनां कृतघ्नानां हृदयं निस्त्रिंशकर्कशम्। स च पापात्मा अर्थार्थी तां गुणवतीमपि भार्य्यां हन्तुं तया वृद्धया युतां क्वापि श्वभ्रे न्यक्षिपत्। क्षिप्त्वैव तस्मिन् प्रस्थिते दुरात्मनि सा वृद्धा तस्मिन्नेव व्यपद्यत। सा तु रत्नवती कथञ्चित् तत्र तृणगुल्मादिकमालम्ब्य करुणं क्रोशन्ती सशेषत्वादायुषः समुत्थिता विक्षताङ्गी पदे पदे मार्गं पृष्ट्वा यथागतेनैव पथा कृच्छ्रात् पितुः सदनमागमत्। कथमकस्मात् त्वमीदृशी प्रत्यागतेति ससम्भ्रमं माता पित्रा च पृष्टा सा साध्वी एवमभाषत मुषिताः स्म पथि तस्करैः, नीतश्च बलात् स मे पतिः। वृद्धा सा श्वभ्रे निपत्य मृता, अहं पुनर्दैवात् प्राणिमि। केनचित् कृपालुना पथिकेनाहं मुद्धृता श्वभ्रात्। एवमुक्तवती माता

पित्रा च प्रोचता समाश्वासिता सा भर्तृप्राणा रत्नवती तस्थौ।

अथ कालेनासौ धनदत्तः द्यूतेन क्षपितसर्वधनः पुनरचिन्तयत् गच्छामि, पुनः श्वशुरगृहात् धनमानयामि, तत्र गत्वा तं श्वशुरं गृहे स्थिता कुशलिनी तव दुहितेति वक्ष्यामि। इति स मनसि सङ्कल्प्य श्वशुरसदनं पुनरवाप। आगतञ्च तं दूरात् सा पतिप्राणा भार्य्या अद्राक्षीत्। दृष्ट्वैव धावित्वा च सा तस्य पापस्य पादयोर्निपत्य तत् सर्वं पितृभ्यां मृषा निवेदितं व्यजिज्ञपत् दुष्टेऽपि पत्यौ साध्वीनां मानसं नान्यथावृत्ति भवति। ततः स दुरात्मा निर्भयः श्वाशुरं गृहं प्रविश्य तं पादयोः प्रणनाम। स च तं जामातरं दृष्ट्वा अभ्यनन्दत अकरोच्च दिष्ट्यायं मे जामाता जीवन् चौरैर्मुक्त इति बन्धुभिः सह महोत्सवम्। ततः स धनदत्तः सुखेन श्वाशुरीं समृद्धिं भुञ्जानः तया रत्नवत्या पत्न्या सह रेमे।

एकदा स पापीयान् रात्रौ यच्चकार तत् अवाच्यमपि कथाभङ्गभयात् कथ्यते। शृणु, राजपुत्र! असौ पापमतिः विश्वस्तसुप्तां तां रत्नवतीं निशि हत्वा तदाभरणसञ्चयं अपहृत्य अलक्षितः स्वदेशं प्रायात्। ईदृशाः पुरुषाः पापाः कृतघ्ना इति शारिकया कथिते राजपुत्रः हसन् त्वमिदानीं वदेति शुकमभाषत। ततः स शुकः प्राब्रवीत्, देव! स्त्रियः विषमसाहसा दुश्चरिताः पापास्तथाचात्र कथामेकां वर्णयामि शृणोतु कुमारः।

अस्ति हर्षवती नाम नगरी। तत्राभूत् धर्मदत्तो नाम

बहुकोटीश्वरो वणिजामग्रणीः। तस्य वसुदत्ता नाम्नी रूपेण असामान्या प्राणेभ्योऽपि प्रियतमा कन्याभवत्। सा तु तेन समानधनयौवनकुलशालिने ताम्रलिप्तिनगरे समुद्रदत्ताख्याय वणिक्पुत्राय ताम्रलिप्तिनिवासिने प्रदत्ता। कदाचित् सा स्वदेशस्थे पत्यौ, पितृगृहे स्थिता दूरात् कमपि पुरुषं युवानं कान्तिविग्रहं ददर्श। दृष्ट्वैव सा चपला स्मरमोहिता गुप्तं सखीमुखेनानीत प्रच्छन्नकामुकं तं भेजे। प्रत्यहं प्रतिरात्रं सा तदेकासक्तमानसा तेन सह रममाणा सुखं बुभुजे।

अथैकदा स तस्याः पतिः स्वदेशात् आगतः श्वशुरयोः परां प्रीतिमवर्द्धयत्। दिने च उत्सवेनातिक्रान्ते सा वसुदत्ता मात्रा कृतभूषणा निशि वासगृहं प्रेषिता शय्याश्रायिनं पतिं भेजे। तेन च रतिं प्रार्थिता सा अन्यमानसा अलीकसुप्तिकामकरोत्। क्रमेण सोऽपि पतिः पानमत्तः अध्वश्रान्तश्च निद्रया जह्रे। ततः सर्वस्मिन् भुक्तपीतजने क्रमेण सुप्ते कश्चित् चौरः सन्धिं भित्त्वा तस्मिन् वासगृहे प्राविशत्। सा च वणिक्‌नन्दिनी तत्कालं तमपश्यन्ती समुत्थाय स्वजारकृतसङ्केता निभृतं निरगात्। तदालोक्य स चौरः विघ्निताभिलाषो व्यचिन्तयत् येषामाभरणानामर्थे अहं प्रविष्टः, तैरेवाभरणैर्वृता एषा निशीथे निर्गता, तत् क्व गच्छतीति द्रष्टव्यमिति पर्य्यालोच्य निर्गत्य च स चौरः तां वणिक्सुतामनुययौ। सापि पुष्पादिसंभारहस्तया तया सख्या संयुता गत्वा बाह्यमुद्यानं नातिदूरगं प्रविवेश। ददर्श च तत्र सङ्केतस्थान-

मागतं नगररक्षिभिश्चोरबुद्ध्या पाशं कण्ठे दत्त्वा निहत्य वृक्षे लम्ब्यमानं तं प्रच्छन्नकामुकम्। सा तु तदवलोक्य विह्वला, हा! हतास्मीति वादिनी क्षपणं विलपन्ती भूमौ पपात रुरोद च। अथ तं निजकामुकं वृक्षादवतार्य्य उपवेश्य च गतासुम् अङ्गरागैरलङ्कारैः पुष्पैश्चालञ्चकार। यावच्च सा तस्य मुखमुन्नमय्य कामार्त्ता परिचुम्बति, तावत् स निर्जीवः कामुकः वेतालानुप्रविष्टः सन् दन्तैस्तस्या नासिकां चिच्छेद। तेन सा विह्वला तस्मात् प्रदेशात् सव्यथा अपसृतापि अहो किं स्वित् जीवत्यसाविति पुनरेत्य यावत् पश्यति स्म तावत् तं वीतवेतालं निश्चेष्टं पतितं मृतं निश्चित्य सा भीता परिभूता च रुदती शनैः गृहं प्रत्याजगाम। स चालक्षितः प्रच्छन्नस्थितश्चौरः सर्वमेतत् व्यलोकयदचिन्तयच्च अहो किमिदं पापया अनया कृतम्? हा स्त्रीणामाशयः कथमीदृक् भीषणः? तदिदानीमपि एषा किं नु कुर्य्यादिति विचिन्त्य कौतुकात् स चौरः भूयोऽपि दूरात् तामनुससार। सा च पापिनी गृहं प्रविश्यैव उच्चकैः प्ररुदती एवमब्रवीत् परित्रायध्वं मां एतेन दुष्टेन भर्त्तृरूपेण शत्रुणा मम निरपराधाया नासिका छिन्ना इति। तत् रोदनमाकर्ण्य सहसा तत्परिजनाः सर्वे ससम्भ्रममुदतिष्ठन्। पतिश्च प्रबुबुधे। अथ तत्पिता समेत्य तां छिन्ननासिकां दृष्ट्वा क्रुद्धस्तं जामातरं बन्धयामास। स च इतिकर्त्तव्यविमूढ़स्तदानीं बध्यमानोऽपि मूकवदतिष्ठत् न किमपि प्राब्रवीत्। अथ क्रमेण सर्वेषु विबुद्धेषु शृण्वत्

तस्मिंश्च चौरे सर्वंवृत्तान्तज्ञे तस्मादपसृते, गतायां शनैः शर्वय्यां स वणिक्सुतः तेन श्वशुरेण राजान्तिकं नीतः। सा च छिन्ननासा वसुदत्ता तत्रागता, राजा च सर्वं वृत्तान्तं श्रुत्वा अयं स्वदारद्रोहीति निर्णीय तस्य वणिक्-सूनोर्वधं समादिशत्। ततस्तस्मिन् निरपराधे न किमपि विजानति वणिक्सुते सडिण्डिमं वध्यभूमिं नीयमाने स चौरः समुपगम्य राजपुरुषानभाषत अकारणमयं कथं वध्यभूमौ नीयते ? यथावृत्तमहं सर्वं वेद्मि, मां राजान्तिकं नयत सर्वमहं वदिष्यामि। इत्युक्तवन्तं तं ते सर्वे राज-पुरुषा राजान्तिकमनयन्। स च चौरः आमूलात् सर्वं रात्रिवृत्तान्तं राज्ञे न्यवेदयत् अब्रवीच्च देव। न चेत् मद्वचसि तव प्रत्ययः, तत् सा नासा तस्य शवस्य मुखे अद्यैव निरीक्ष्यताम्। तत् श्रुत्वा वीक्षितुं भृत्यान् प्रेष्य तेषाञ्च मुखात् सत्यमवेत्य च स राजा तं वणिक्पुत्रं वधदण्डात् विमुच्य तां दुष्टां वसुदत्तां कर्णावपि छित्वा देशात् निरवासयत्। तञ्च तत्पितरं वणिजं सर्वस्व-मदण्डयत्। तुष्टश्च तं चौरं पुराध्यक्षमकरोच्च। राजपुत्र। इत्थं निसर्गविषमाः शठा योषित इति वदन्नेव शुकः चित्ररथो नाम गन्धर्वराजो भूत्वा इन्द्रशापक्षयात् दिव्यरूप-मास्थाय दिवमगात्। सा च शारिका सपदि सुराङ्गना तिलोत्तमा भूत्वा तथैव क्षीणशापा दिवमुदपतत्। तयोस्तु तस्यां सभायां विवादो न निर्णीतः। इत्याख्याय स वेतालस्तं नृपमपृच्छत्। राजन्। वदतु भवान् पापाः पुरुषाः उत योषितः ? जानतस्ते अवाचयतः शिरो

खण्डशः पतिष्यतीति। एतत् स्कन्धवर्त्तिनो वेतालस्य वचनमाकर्ण्य स भूपतिस्तं योगीश्वरं वेतालमवादीत् वेताल! कोऽपि न तादृक् पुरुषः क्वचित् कदाचित् दुराचारः। स्त्रियस्तु प्रायशः पापा दृश्यन्ते श्रूयन्तेव च। इत्युक्तवतो नृपस्य स्कन्धात् प्राग्वत् स वेतालः क्वापि प्रनष्टोऽभूत्। राजा च पुनस्तदानयने यत्नमकरोत्।

---

## अष्टसप्ततितमस्तरङ्गः।

ततः स त्रिविक्रमसेनो नृपतिः पुनस्तस्य शिंशपातरोमूलं गत्वा निशि तं मुक्ताट्टहासं शवाधिष्ठितं वेतालं प्राप्य निष्कम्पः तथैव स्कन्धमारोप्य तस्य भिक्षोः सकाशमुदचलत्। तच्च चलन्तम् अंसस्थः स वेतालः पुनरब्रवीत् राजन्! दुराचारस्य अस्य भिक्षोः कृते कोऽयं ते प्रयासः? निष्फले अमुष्मिन् प्रयत्ने तव विवेको न दृश्यते? यद्भवतु, त्वद्भक्त्या तवाध्वश्रमविनोदिनीमपरामेकां कथां कथयामि श्रूयताम्।

अस्ति शोभावती नाम यथार्थनाम्नी कापि नगरी। तस्यामभूत् शूद्रको नाम प्रभूतपराक्रमो महाप्रतापो नृपतिः। यस्य जयिनः प्रतापानलोऽनवरतं वन्दीकृतारिवनिताधृतैश्चामरमारुतैः ज्वलति स्म। येन च अनुक्षधर्मचरणा स्फीता वसुन्धरा रामादीनपि भूपतीन् विस्म-

चार। कदाचित् तं महीपालं प्रियशूद्रं सेवितुं मालवात् कश्चित् वीरवरो नाम द्विजः समागात्। तस्य धर्मवती नाम भार्य्या, सत्यवरो नाम सुतः, वीरवती नाम्नी कन्या चासीत्। सेवापरिच्छदस्तस्य तयमेव कव्यां कृपाणिका, करे तरवारि, अपरे च करे चर्म, एतावन्मात्रपरिच्छदपरीवारः स प्रत्यहं तं राजानं दीनारशतपञ्चकं वेतनं प्रार्थयाञ्च। राजा च तम् आकारसूचितोदारपौरुषं मत्वा तस्मै यथेप्सितां वृत्तिं ददाति स्म। स्थापयति स्म च कौतुकात् प्रच्छन्नं चारान् तत् पृष्ठतः, किमेभिः प्रभूतैर्वेतनैरेष किं करोतीत्यन्वेष्टुम्। स च वीरवरः प्रातः राजदर्शनं कृत्वा मध्याह्ने धृतायुधः तस्य सिंहद्वारे स्थित्वा च स्ववृत्तिलब्धानां दीनाराणां शतं गार्हस्थ्यनिर्वाहाय भार्य्याया हस्ते भोजनार्थं प्रादात्। अपरेण च शतेन वस्त्रम् अङ्गरागं ताम्बूलादीनि च क्रीणाति स्म। अपरञ्च शतं स्नात्वा विष्णोः शिवस्य च पूजार्थं विनियुयोज। अन्यच्च शतद्वयं विप्रेभ्यः कृपणेभ्यश्च दरिद्रेभ्यः प्रादात्। एवं विभज्य प्रत्यहं तानि पञ्चशतानि स व्ययीचकार। ततश्च अग्निकार्य्याद्विकं विधाय भुक्त्वा च निशि एकाकी तदेव सिंहद्वारं धृतकृपाणचर्मा प्रत्यहं तस्थौ। एतत् सर्वं चारमुखात् श्रुत्वा राजा शूद्रकः भृशं तुतोष, निवारयामास च तान् चारान् पुनस्तस्य मार्गणे। मेने च विशेषपूजार्हं तं पुरुषातिशयम्।

अथ गच्छत्सु दिनेषु एकदा धारावर्षिणि दिवानिशं अम्बुदपटले गगनमाहृण्वति जनरहिते च समन्तात् राज-

मार्गे एकाकी स वीरवरस्तस्मिन् सिंहद्वारे एवातिष्ठत्। स च राजा दिनपतावस्तं गते तादृशे भीषणे तमसि विजृम्भिते स्कन्धावारवर्षे तस्य वीरवरस्य भावं जिज्ञासुः निशि प्रासादाग्रमारुह्य जगाद कोऽत्र सिंहद्वारि स्थित इति, तदाकर्ण्य अहमेव स्थित इति वीरवरः प्रत्यवादीत्। अहो महासत्त्वोऽयं वीरवरः मद्भक्तः तदेष मया अवश्यमेव महत् पदं प्रापणीयः। इति संचिन्त्य राजा प्रासादादवतीर्य्य अन्तःपुरं प्रविश्य शयनमगात्। अन्येद्युश्च तथैव मेघेषु धारासारान् वर्षत्सु निशायां भुवने कालतमसि विजृम्भिते राजा पुनश्च तद्भावं जिज्ञासुः प्रासादमधिरुह्य सिंहद्वारमभि कोऽत्र स्थित इति व्याजहार। वीरवरेण च अहं स्थितो देव इति प्रोक्ते स राजा भृशं विसिस्मिये। शुश्राव च तावदतिदूरे सहसा रुदतीं कामपि स्त्रियं वामस्वरेण। अचिन्तयच्च केयं विषादविकलेव सप्रलापकरुणं विरौति, राष्ट्रे च मम पराभवः नास्ति, न दरिद्रः नापि कश्चित् दुःखितः, तदेषा का इति। आदिदेश च करुणार्द्रचेताः तं वीरवरमधःस्थितं, भो वीरवर! शृणु, एषा दूरे क्वापि रोदिति, किमर्थमसौ रोदिति, काचेयं त्वया गत्वा एतत् निरूप्यतामिति। तदाकर्ण्य स वीरवरस्तथेत्युक्त्वा निबद्धासिधेनुः करतलधृतकरवालश्च गन्तुं प्रावर्त्तत। नागणयत् तत् स्थूलधारा-शिलावर्षि ज्वलद्विद्युद्विलोचनं नवमेघान्धकारम्। तञ्च तादृश्यां निशायां प्रस्थितमेकाकिनं दृष्ट्वा करुणाकौतुकाविष्टो राजा प्रासादादवतीर्य्य गृहीतासि रेकाकी अनुपलक्षितः तमनुजगाम।

स च वीरवरः रुदितमनुसरन् नगर्य्या बहिः सरोवरमेकं प्राप, ददर्श च तत्र हा शूर! हा कृपालो! हा वदान्य! त्वया शून्या कथमहं वत्स्यामीत्येवं रुदतीं वारिमध्यवर्त्तिनीं काममपि स्त्रियम्। स च वीरवरः का त्वं कथं वा रोदिषि, इति विस्मितः सचकितमपृच्छत्। सा अभ्यधात् भो वीरवर! मां पृथिवीं जानीहि अस्याश्च मम इदानीं धार्म्मिकः शूद्रको नाम राजा भर्त्ता इतश्च तृतीये दिने तस्य राज्ञो मृत्युर्भविष्यति, तादृशमन्यं पतिं कथमवाप्स्यामीति शोकेन विधुराहं शोचामि इति एतदाकर्ण्य स वीरवरस्त्रस्त इव तामब्रवीत्, देवि! अस्ति कश्चिदस्य प्रतीकारः? येनास्य जगत्प्रभो रक्षा स्यात्? इति तस्य वचनमाकर्ण्य सा वसुमती प्रत्यभाषत, वत्स! एक एवास्त्युपायः कर्त्तुञ्च शक्तो भवानिति। वीरवरोऽवदत्, देवि! तदद्रुतं यावत् शीघ्रं तत् साधयामि। अन्यथा कोऽर्थः प्राणैरस्माकम्। तदाकर्ण्य धरित्री प्राब्रवीत्, वत्स! त्वदन्यः कोऽन्यो मम प्रवरः स्वामिभक्तः तदस्य उपायं शृणु, अस्य राजकुलान्तिके राज्ञानेन प्रतिष्ठापिता देवी चण्डिकास्ति, तस्यै चेत् सत्वरं पुत्रमुपहारीकरोषि, तदा एष राजा न म्रियेत, अन्यत् शतं समा जीवेत्। अद्यैव चेत् भवता एतत् क्रियते तदैव शिवं नान्यथेति पृथिव्या तथाभिहितः स वीरो वीरवरस्तदा यामि, देवि! करोमि अधुनैव एतत् इति प्रत्यवादीत्। वसुन्धरा च भद्रं तेऽस्तु इत्यभिधाय तिरोदधे। गुप्तमनुसृतः स राजा तत् सर्वं शुश्राव। ततश्च गूढे तस्मिन्

राजनि तद्भावं जिज्ञासमाने गच्छति स वीरवर स्त्वरितं स्वगृहमगात्। आगत्य च तत्र पत्नीं धर्म्मवतीं विबोध्य तत् सर्वं वसुन्धरा प्रोक्तमर्थं प्राब्रवीत्। सापि तदाकर्ण्य तं स्वामिन माहस्म प्रभो! शिवं भाव्यं चेत् तदा शिशुमेनं प्रबोध्य भवानेव ब्रवीतु। ततः स वीरवर स्तं सुतं बालं सुप्तं प्रबोध्य वृत्तान्तमाख्याय समवोचत्, पुत्र! त्वयि चण्डिकादेव्या उपहारीकृते राजासौ जीवति, नोचेत् तृतीयेऽह्नि विपत्स्यते, तदाकर्ण्य बालोऽपि यथार्थं नाम दर्शयन् अकातरचित्तः सत्वरं पितरमवदत् तात! यदि राजा मम प्राणैर्जीवेत् तदाहं कृतार्थः, भुक्तस्य च तदन्नस्य परा निष्कृतिः प्रदत्ता स्यात् तत् किं विलम्ब्यते, शीघ्रं मां नीत्वा भगवत्या उपहारीकुरुष्व, मज्जीवनेन राज्ञोऽमङ्गलशान्तिर्भवतु। इति तेनोक्तो वीरवरः सहर्षं साधु सत्यं त्वं मत्पुत्र इति तमभ्यनन्दयत्। तस्य भार्य्या धर्म्मवती कन्या वीरवती च तस्यां रात्रौ ताभ्यां वीरवर-सत्यवराभ्यां सह चण्डिकागृहे ययतुः। राजापि छद्म-वेशः तान् पृष्ठतोऽलक्षितः समनुससार। तत्र देव्याः पुरः पित्रा स्कन्धादवतारितः स सत्यवरः देवीं प्रणम्य धैर्य्यराशिः कृताञ्जलिर्न्यवेदयत् देवि! मम शिरस उपहारेण राजासौ अन्यत् शतं वत्सरान् जीवन् अकण्टकं राज्यं करोतु इत्येवं प्रार्थयतस्तस्य सूनोः सत्यवरस्य शिरश्छित्त्वा वीरवरः चण्डिकायै मत्पुत्रोपहारेण राजा जीव-त्विति वदन् प्रददौ। तत्क्षणं अन्तरीक्षात् वागुदचरत् कस्त्वदन्यः स्वामिभक्तः भो वीरवर! येन त्वया एकमात्र-

पुत्रेण तथाविधसत्पुत्रप्राणव्ययिना अस्य भूपतेः जीवनं राज्यञ्च हृतमिति। तच्च सर्वं तस्मिन् नृपे पश्यति शृण्वति च तस्य वीरवरस्य कन्या वीरवती तस्य भ्रातुर्निहतस्य मूर्द्धानमाश्लिष्य शोकान्धा स्फुटितहृदया तत्क्षणात् व्यपद्यत। ततो भार्य्या धर्मवती वीरवर मब्रवीत् नाथ! राज्ञस्तावत् श्रेयः क्षतम्। इदानीमहं वदामि दृष्टा त्वया कन्यापि मे शोकात् मृता, तदिदानीं नष्टापत्याया मे जीवितेन किम्? प्रागेव मूढ़या मया राज्ञः श्रेयार्थं स्वशिरः उपहर्त्तव्यमासीत्, तदधुना अनुज्ञां देहि अहं शीघ्रम् अनलं प्रविशामि। इति आग्रहेण वदन्तीं तां वीरवरोऽवदत् एवं कुरुष्व, अपत्यदुःखैकमये जीवितव्ये का प्रीतिः? यच्च त्वयोक्तं किं दत्तो मयात्मा इति तदत्र व्यथां मा कुरु, यदि अन्यसाध्य मेतत् राज्ञः श्रेयो भवेत् तदाहमपि किं आत्मानं न दद्याम्। तत् प्रतीक्षस्व तावत् अमीभिर्दारुभि स्ते चितां सञ्चयामि, इत्युक्त्वा चितायां तेन प्रस्तुतायां ज्वलन्त्यां धर्मवती पत्युः पादयोः पतित्वा तां चण्डीं देवीं प्रणम्य व्यजिज्ञपत् देवि! जन्मान्तरेऽपि अयमेव मे पति र्भूयात्, अस्य च प्रभोः शूद्रकस्य मदीयेनात्मजेन शिवमिति समुदीर्य्य तस्मिन्नेव ज्वालामालिनि अनले देहं न्यक्षिपत्। ततश्च स वीरवरश्चिन्तयामास निष्पन्नं मे राजकार्य्यं दिव्यवाण्या विज्ञातं भुक्तस्य च राजान्नस्य साम्प्रत मनृणोऽस्मि, तदिदानीमेकाकिन मम केयं जीवनतृष्णा, भरणीयं सर्वं कुटुम्बकं व्ययीकृत्य एकमात्मानं जीवयन् मादृशो न शोभते। तत्

किं आत्मोपहारेण अम्बिकां न प्रीणयामि, इत्यालोच्य स वीरवर स्तां देवीं प्रथमं स्तुत्वा उपतस्थे, जय महिषासुर-मर्द्दिनि! तारिणि! दानवदारिणि त्रिशूलधारिणि विबुधोत्सवकारिणि भुवनत्रयधारिणि! जय मातर्वरे जगदर्च्चितचरणे शरण्ये निःश्रेयसकारिणि भक्तजनानां, कालि! कपालिनि! कङ्कालिनि शिवे! नमोऽस्तु ते, प्रसीदेदानीं शूद्रकस्य नृपतेरनेन मदीयेन मस्तकोपहारेण, इति स्तुत्वा स वीरवरः सद्यः तरवारेण स्वं शिरश्चिच्छेद। तदालोक्य स छन्नस्थितः शूद्रकोनृपः व्याकुलः सदुःखः साश्चर्य्यश्च व्यचिन्तयत् अहो! न मया ईदृशमन्यत्र दृष्टं वा श्रुतम्, साधुनानेन सपरिवारेण मदर्थे दुष्करं कृतम्। विचित्रेऽस्मिन् संसारे कोऽन्यः अनेन समो धीरः, प्रभोरर्थे यः पुत्रादीन् स्वञ्च जीवितं प्रादात् एतस्य उपकारस्य सदृशमुपकारं यदि अहं न कुर्य्याम् तदा मे प्रभुत्वेन किं जीवितेन वा पशोरिव किं? सत्त्व-भ्रंशात् सर्व्वमेव मे अयशो भविष्यतीति संचिन्त्य स राजा कोशात् करवालमाकृष्य समुपेत्य तां देवीं व्यजिज्ञपत् देवि! सततमनुप्रपन्नस्य मम अधुना अनेन शरीरोपहारेण सुप्रीता सती अनुग्रहं कुरु। अयं नानागुणयुतो वीरवरः सपरि-वारो मदर्थं त्यक्तकलेवरः साम्प्रतं जीवतु इति उदीर्य्य असिना यावत् स्वं शिरश्छेत्तुं प्रावर्त्तत, तावत् गगनात् भारती उद्भूत्, वत्स! मा साहसं कृथाः अनेन ते सत्त्वेन परितुष्टास्मि; प्रत्युज्जीवतु अयं सापत्यदारो द्विजो वीरवरः। इत्युक्त्वा तस्मीमन्तरिक्षवाचि विरतायामेव स वीरवरः पुत्रेण दुहित्रा पत्न्या च सह अक्षतशरीरो

जीवनुत्तस्थौ। तद्दृष्ट्वा राजा पुनश्छन्नविग्रहः हर्षाश्रु-पूरयंत दृष्ट्वा तान् पश्यन् न तृप्तिमाययौ। सोऽपि वीर-वरः सुप्तोत्थित इव तं पुत्रं पत्नीं दुहितरञ्च पश्यन् विभ्रान्त-मानसः समभवत् अपृच्छच्च पृथङ्नामग्रहं तान्, कथं भस्मीकृता यूयं जीवन्तः पुनरुत्थिताः?। किमयं मे विभ्रमः? आहोस्वित् स्वप्नो माया वा? उत देव्या अनु-ग्रहः?। एवं वदन् स दारापत्यैः देव्यानुग्रहेणैव वयं जीवाम इति निजगदे। ततः स वीरवर स्तथेति मत्वा तां देवीं प्रणम्य पुत्रदारानादाय कृतार्थो गृहं ययौ। तत्र च तं पुत्रं तांश्च भार्य्यां दुहितरञ्च प्रवेश्य तस्यामेव रात्रौ राज्ञः सिंहद्वारमागमत्। राजा च गूढ़ एतत् सर्वं दृष्ट्वा अल-क्षित एव गत्वा स्वं प्रासादमारोह पप्रच्छ च कोऽत्र सिंहद्वारे स्थित इति। वीववरः प्रत्यवादीत्, प्रभो! अहं वीरवरस्तिष्ठामि। देवादेशाच्च तां रुदतीं स्त्रियं प्रति गतवानहम्। सा कापि राक्षसी मम वचसा दृष्टैव क्वापि प्रनष्टेति। एतत्तस्य वचः श्रुत्वा राजा नितरां विस्मितो हृष्टोदन्तो व्यचिन्तयत् अहो! समुद्रगम्भीरधीरचित्ता मन-स्विनः, ये अनन्यसामान्यं कर्म कृत्वापि नोद्गिरन्ति। इत्यालोच्य प्रासादादवरुह्य स राजा अन्तःपुरं गत्वा रात्रि-शेषं मत्यवाहयत्।

अथ प्रातरास्थानसमये दर्शनार्थमुपगते वीरवरे स्थिते हृष्टो राजा सर्वेभ्यो मन्त्रिभ्यः अन्येभ्यश्च तस्य तं रात्रि-वृत्तान्तमवर्णयत्। सर्वे सविस्मया मोहिताश्च वीरवर-गुणवर्णनेन तत्क्षणमभवन् प्रशंसंश्च साधु साधु इति।

ततो राजा वीरवरश्च अन्योन्यं तुल्यविभवौ सुखमासताम्। इति कथामाख्याय वेतालस्तं विक्रमसेनं नृपमपृच्छत्, राजन्! एतेषु सर्वेषु कोऽधिकस्ते मतः? यदि जानन्न वक्ष्यसि, तदा पूर्व एव स शापः सेत्स्यति। एतदाकर्ण्य स राजा तं वैतालमभाषत, देवयोने! एतेषु सर्वेषु राजा शूद्रक एव समधिकः प्रवीर इति। वेतालोऽब्रवीत्, नृपते! कथं वीरवरो न, यस्य तुल्यः पृथिव्यां सेवको न विद्यते, तत्पत्नी वा कथं समधिकेति न प्रशस्यते? या सूनोः पशूपहारतां प्रत्यक्षं दृष्ट्वापि न धैर्य्यात् प्रच्युतासीत्। स वा पुत्रः सत्यधरः कथं नाभ्यधिकः? यस्य बालस्यापि सतस्तादृशः सत्त्वोत्कर्षः। तत् कथमेकं शूद्रकं नृपं त्वं प्रवरं भाषसे? इत्युक्तवन्तं वेतालं स नृपः पुनरवादीत् कुलपुत्रो वीरवरस्तादृक् न, तस्य प्राणैः सुतैः दारैश्च स्वामिसंरक्षणं कार्य्यम्। तस्य च पत्नी कुलजा साध्वी पतिप्राणा भर्त्तृवर्त्मानुसरन्ती धर्ममेव पालितवती। सत्यधरोऽपि तयोर्जातस्तादृश एव, यादृशास्तन्तवः तादृश एव पटो जायते। येषां भृत्यानां प्राणैः नृपेण आत्मा रक्ष्यते, तेषामर्थे प्राणां स्त्यजन् शूद्रक एव सर्वेषु विशिष्यते, इति वचः समाकर्ण्य स वेतालः नृपतेरंसादलक्षितः सहसा निजावासं ययौ। राजापि तन्मायया अनुचलितोऽपि तस्यामेव निशि पुनस्तमानेतुं मतिमकरोत्।

---

## अथ जनाशीतितमतरङ्गः ।



ततश्च स राजा विक्रमसेनः पुनः शिंशपातरोरन्तिकमभ्येत्य तथैव लम्बमानं नरशरीरगं तं वेताल मवतार्य्य तस्य बहुना वैकृतेनापि निर्भीकः सत्वरमागन्तुं प्रववृते । आगच्छन्तं तूष्णीं पथि पूर्ववत् स वेतालः प्रावदत्, राजन् ! अभिनिविष्टोऽसि, दृष्टिप्रियोऽसि च तत्तव चित्तविनोदाय कथामपरां कथयामि शृणु ।

अस्त्युज्जयिनी नाम भुवनविश्रुता नगरी । तस्यां पुण्यसेनो राजा अभूत् तस्य प्रियोऽनुजीवी अमात्यो हरिस्वामीति सद्गुणालङ्कृतो विप्रः प्रतिवसति स्म । तस्य गृहपतेरनुरूपायां भार्य्यायां सुसदृशः देवस्वामी नाम पुत्रोऽजायत । एका च असामान्यरूपलावण्यविश्रुता सोमप्रभा नाम अन्वर्थनाम्नी कन्या उदपद्यत । सा एकदा शैशवातिक्रान्ता रूपोत्कर्षाभिमानवती मातुर्मुखेन पितरं भ्रातरञ्च जगाद शूराय ज्ञानिने विज्ञानिने वा अहं देया, अन्यस्मै, दत्ताहं न जीवामीति । तदाकर्ण्य पिता तस्याः तादृशं वरं चिन्वन् यावत् चिन्तामलमापेदे, तावत् स पुण्यसेनेन राज्ञा दाक्षिणात्यस्य कस्यचित् नृपस्य अन्तिकं सन्धिविग्रहाय दौत्ये प्रहितः । तत्र च कृतकार्य्यं तं कश्चित् ब्राह्मणयुवा श्रुततदुदुहितृरूपसम्पद् अभ्येत्य तां सुतामयाचत । स च तमब्रवीत् मत्सुता विज्ञानिनो

ज्ञानिनो वा शूरात् अन्यं पतिं नेच्छति, तेषां मध्यात् भवान् कः, कथय इति। स ब्राह्मणोऽवदत् अहं विज्ञानं जानामि। तर्हि तद् दर्शय इति तेनोक्तः स विज्ञानी स्वयुक्त्या खेचरं रथं कल्पयामास। दर्शयामास च तत्र मायायन्त्ररथे तं हरिस्वामिनमारोप्य नीत्वा च स्वर्गादीन् लोकान्। आनिनाय च तुष्टं तं दाक्षिणात्यस्य नृपतेः कटकं यत्र स स्वकार्य्यार्थमायात इति। ततः स हरिस्वामी तस्मै तां सुतां प्रतिशुश्राव सप्तमेऽहनि च वैवाहिकलग्नं निश्चिकाय। तस्मिंश्च काले उज्जयिन्यां अन्येन द्विजकुमारेण तत्पुत्रो देवस्वामी तत् स्वसारमयाच्यत। तेनापि ज्ञानिविज्ञानिशूरेभ्यो नान्यं पतिं मे स्वसा कामयते इति विज्ञापितः स आत्मानं शूरमभ्यधात् ततो दर्शितशस्त्रास्त्रविद्याय तस्मै शूराय स देवस्वामी निजानुजां दातुं प्रतिपेदे। कृतनिश्चयश्च मातुःपरोक्षं गणकवचनात् सप्तमेऽह्नि विवाहं निर्णिनाय च। एतस्मिन्नन्तरे हरिस्वामिभार्य्या च केनाप्यपरेण द्विजयूना सुतां याचिता प्राब्रवीत्, वत्स! ज्ञानी विज्ञानी शूरो वा मम कन्यां वोढुमर्हति नान्य इति तत् त्वमेतेषु कः, उच्यतामिति। सोऽब्रवीत् अहं ज्ञानीति ततः सा भूतं भविष्यच्च पृष्ट्वा ज्ञानिनं निश्चित्य तस्मै सुतां दातुं तस्मिन्ने सप्तमेऽह्नि प्रत्यशृणोत्।

अन्येद्युश्च हरिस्वामी समागत्य यथाकृतं सर्वं पत्न्यै पुत्राय च समाचख्यौ। स च सा च स्वं स्वं कृतं तत् सर्वं पृथक् पृथक् तस्मै, अवोचत्। इत्थं स हरिस्वामी त्रयाणां

वराणां निमन्त्रणात् नितरां व्याकुलः समपद्यत। अथ सप्तमे दिने आगते ते त्रय एव वराः हरिस्वामिनो गृहमाययुः। चित्र मन्त्रो! तत्कालं सा सोमप्रभा क्वापि गता। तदाकर्ण्य ज्ञानी अवदत् राक्षसेनापहृत्य धूम्रशिखाख्येन विन्ध्याटव्यां निजां वसतिं नीता। इति ज्ञानिनाभिहितो हरिस्वामी भीतः तं विज्ञानिनम् उपायं पप्रच्छ। स च पूर्ववत् सर्वास्त्रसंयुतं रथं कृत्वा तं हरिस्वामिनं तौ च ज्ञानिशूरौ तत्क्षणं विन्ध्याटवीं प्रापयामास। तत्र ज्ञानिना समाख्यातां तस्य राक्षसस्य वसतिं प्राप्य स शूरः हरिस्वामिना सह तं राक्षसं क्रुद्धं ज्ञातवृत्तान्तनिर्गतं योधयामास। तदा तयोर्मानुषराक्षसयो चित्रास्त्रयोधिनोः रामरावणयोरिव स्त्र्यर्थं महद् युद्धमवर्त्तत। क्षणेन च स शूरः संग्रामदुर्द्धरस्यापि तस्य रक्षसः शिरः अर्द्धचन्द्रेण बाणेनाच्छिनत्। अथ रक्षसि हते तत् स्थानात् प्राप्तां तां सोमप्रभामादाय विज्ञानिरथेन ते सर्वे ततः उज्जयिनीं प्रत्यागमन्।

अथ हरिस्वामिगृहप्राप्तानां तेषां त्रयाणां लग्ने संप्राप्ते महान् विवादः प्रादुरभूत्। ज्ञानी अवदत् यद्यहम् इमां ज्ञानबलेन न जानीयां तदा कथमियं गूढ़स्था प्राप्येत, अतः मह्यमेवैषा देयेति। विज्ञानी अवोचत् यद्यहं व्योमरथं न कुर्य्यां तदा देवानामिव तत्र गतागतं कथं तत्क्षणं स्यात्, कथं वा तेन रथिना रथयुद्धं स्यात्, तस्मान्मह्यमेवेयं दातव्येति। शूरोऽब्रवीत् यद्यहं तं राक्षसं रणे न हन्यां तदा युवाभ्यां यत्ने कृतेऽपि क एनामानयेत्। तन्मह्यमेव

कन्येयं दातव्येति तेषु विवदमानेषु हरिस्वामी अप-
मुग्धभ्रान्तमानसस्तूष्णीमासीत्। इति कथामाख्याय
वेतालः राजानं पप्रच्छ राजन्! एतेषु कस्मै सा देयेति
भवान् वदतु, यदि जानन् न वदिष्यति, तदा ते मूर्द्धा
शतधा स्फुटिष्यति इति वेतालवचः समाकर्ण्य राजा
मौनं विहाय प्रत्यभाषत शूराय सा प्रदातव्या, येन देह-
पणोद्यमात् बाहुबलेन तं राक्षसं जित्वा कन्या समुपा-
र्जिता, आनि विज्ञानिनौ तु विधात्रा अस्य सहायौ
नियोजितौ। पश्च गणकतक्षाणौ किं परोपकरणाय न? इति
मनुजपते र्वाचं निशम्य स वेतालः सपदि तस्य स्कन्धात्
निजं निलयमगमत्। राजापि तमानेतुं पुनः कृतोद्यम-
स्तमेव शिंशपातरुमभिजगाम।

---

## अथ अशीतितमस्तरङ्गः।

---

ततः स राजा प्राग्वत् शिंशपान्तिकमुपेत्य वेतालमा-
दाय मौनी तथैव तं भिक्षुमुद्दिश्य प्रतस्थे। तावच्च स
वेताल स्तं भूपमवादीत्, राजन्! त्वं सुधीः सत्त्ववांश्च
तेनासि मे प्रियः, तस्मात् त्वां विनोदयितुं पुनः कथा-
माख्यामि प्रश्नश्च, शृणु।

आसीत् पुरा यशःकेतुर्नाम नृपः पृथिव्याम्। तस्य
शोभावती नाम राजधानी। तस्यामुत्तमं गौरीमन्दिर

प्रभवत्। तस्य च दक्षिणतः गौरीतीर्थं नाम सरः। प्रतिवर्षम् आषाढ़शुक्लचतुर्दश्यां तस्य यात्रायां नानादिग्भ्यो महाजनगणः स्नातुमायाति स्म। एकदा स्नानार्थं धवलो नाम कश्चित् रजकः ब्रह्मस्थलात् ग्रामात् तत्राजगाम। स युवा तत्र स्नातुमागतां शुद्धपटनाम्नः कस्यचित् सुतां मदनसुन्दरीं नाम ददर्श। तया तु इन्दोर्लावण्यहारिण्या-हृतमानसः तत्र तस्या नामकुलमन्विष्य कामार्त्तो गृह-मगात्। तत्र चागत्य अनवस्थः तया विना निराहारश्च तिष्ठन् मात्रा पृष्टो मनोगतं तस्यै समाख्याय कथा तस्थौ। सापि गत्वा विमलनाम्ने स्वभर्त्रे तन्न्यवेदयत्। स चा-भ्येत्य तथावस्थं तं दृष्ट्वा समभ्यधात् पुत्र! किं विषी-दसि, एतत्ते अभीप्सितं न दुष्प्रापं स हि शुद्धपटो मया याचितः अवश्यमेव सुतां तुभ्यं दास्यति। वयं कुलेन अर्थेन कर्मणा च तस्मादन्यूनाः, अहं तं वेद्मि, स च मां वेत्ति, तदिदं न दुष्करम्। इति पुत्रमाश्वास्य भोजना-दिकं कारयित्वा च तेन सह अन्येद्युरसौ विमलः शुद्ध-पटस्य गृहमगात्। अयाचत च तस्य धवलस्य पुत्रस्यार्थे तत् कन्याम्। स च सादरं तस्मै तां दातुं प्रतिशुश्राव।

अथ लग्नं सम्प्राप्य स शुद्धपट स्तस्मै धवलाय तुल्यां सुन्दरीं सुतां प्रादात्। स च कृतोद्वाहः दर्शनरक्तया तया भार्य्यया साकं कृतार्थः पितुर्गृहमागात्। कदा-चित् सुखस्थितस्य तस्य श्वशुरात्मजः मदनसुन्दर्य्याः सहो-दरः समागात्। स चागत्य सर्वैः पृष्टकुशलोदन्तः स्वसा च समाश्लिष्य अभिनन्दितः विश्रान्तः प्रावदत् अहं मदन-

सुन्दर्य्या आमंत्रण निमन्त्रणार्थं तातेन प्रेषितोऽस्मि, अस्माकं गृहे पूजोत्सवो वर्त्तते इति। ततस्ते सर्वे सम्बन्धिनः तस्य तद्वाक्यं श्रद्धाय यथोचितैः पानभोजनैः तं तद्दिनः समुपाचरन्।

अथ प्रातः स धवलः तेन श्वशुरनन्दनेन मदनसुन्दर्य्या च सहितः श्वाशुरं गृहं प्रति प्रस्थितः। ताश्च शोभावतीं नगरीं प्राप्य महद् गौर्य्या निकेतनं ददर्श। निजगाद च तां मदनसुन्दरीं तद्भ्रातरञ्च अचैतां देवतां पश्याम इति। प्रथममहं तावत् व्रजामि, युवामत्रैव तिष्ठतम् इति उक्त्वा धवलः तां देवीं द्रष्टुं समुपागात्। मन्दिरं प्रविश्य च तां प्रणम्य अष्टादशदोर्दण्डखण्डितोद्दण्ड-दानवां पादपद्मतलाक्रान्तमहिषासुरमर्दिनीं विभाव्य सहसा विधिनोत्पादितमतिरचिन्तयत् विविधैर्जीवोपहारैः जनः इमां देवीमर्चयति, अहञ्च सिद्धये आत्मोपहारेण किं नैनां प्रीणयामि? इत्यालोच्यैव निर्जनात् गर्भगृहात् खड्गमानीय स्वयमेव निजं शिरश्छित्त्वा भुव्यपातयत्। क्षणान्तरे कथमसौ चिरयतीति तमन्वेष्टुं स श्वाशुर्य्योऽपि तत्र देवीभवने प्राविशत्। प्रविष्टश्च तं छिन्नशिरसं भगिनीपतिं दृष्ट्वा शोकव्यामोहितः तथैव तेनासिना स्वं शिरश्चिच्छेद। अथ यावत् सोऽपि नायाति तावत् सा मदनसुन्दरी समुद्भ्रान्तमानसा तत् देवीभवनमाययौ। प्रविश्य च पतिं भ्रातरञ्च तथाविधं दृष्ट्वा हा! किमेवं हतास्मीति विलपन्ती भुवि न्यपतत्। क्षणेन चोत्थाय तौ अकाण्डहतौ शोचन्ती किं मे अनेन जीवितेनेति पर्य्यालोच्य देहत्यागो-

ष्ठ्खी तां देवीं व्यजिज्ञपत् देवि ! सौभाग्यचारित्रविधा-नैकाधिदेवते ! मारारिपुशरीरार्धहरे ! अशेषसकलजनशरण्ये ! दुःखहारिणि ! एकपदे कथं मे भर्त्ता भ्राता च त्वया निहतः ? न युक्तमेतत्ते, अहं हि त्वयि नित्यभक्ता, तदा-श्रितायां मे शरणं भवतो एकं करुणं वचः शृणोतु । एतां दौर्भाग्योपहतां तनुं त्यजामि अत्रैव, देवि ! यत्र कुत्रापि जनिष्ये, परं तत्र तत्रैव जन्मनि एतौ मे भर्त्तृभ्रातरौ भूयास्तामिति संप्रार्थ्य स्तुत्वा नत्वा च तां देवीं तत्रस्थे अशोकपादपे पाशं विरचयामास । तत्र यावत् पाशे कण्ठ-मर्पयति तावत् तत्र गगनादशरीरिणी वागुदचरत् पुत्रि ! मा साहसं कृथाः, बालाया अपि ते अनेन सत्त्वोत्कर्षेण प्रीतास्मि पाशमेतं त्यज । संश्लेषय च स्वं स्वं शिरः भर्त्तृभ्रातृ-कबन्धयोः, एतौ जीवितौ द्वावपि मत्प्रसादादुत्तिष्ठता-मिति । एतदाकर्ण्यैव पाशं त्यक्त्वा सा हर्षादुपेत्य अतिरभसा-दविभाव्य भ्रान्ता मदनसुन्दरी भर्त्तृशिरो भ्रातृदेहेन भ्रातृ-शिरश्च भर्त्तृदेहेनायोजयत् । ततश्च अक्षताङ्गौ तौ जीवन्तौ सुप्तोत्थिताविव उदतिष्ठताम् । अथ ते अन्योऽन्योदित-स्व स्व वृत्तान्ततोषिणः देवीं प्रणम्य यथेष्टं प्रययुः । यान्ती च सा मदनसुन्दरी तयोः स्वकृतं शिरोविनिमयं दृष्ट्वा उद्-विग्ना किं कर्त्तव्यविमूढ़ा चासीत् । इमामाख्याय कथां वेतालः पप्रच्छ राजन् ब्रूहि ! कः सङ्कीर्णयोरनयोरस्या भर्त्ता भवितुमर्हति ! जानं चेत् न ब्रवीषि तदा पूर्वोक्त एव शापः स्यात् इति समाकर्ण्य राजा तं वेतालमवादीत् यस्मिन् कलेवरे तत् पतिशिरः संस्थं स एवास्याः पति र्भवेत्

प्रधानं सर्वेषु अङ्गेषु शिरः तद्युता प्रत्यभिज्ञा च इत्युक्तवतो नृपतेः स्कन्धात् स वेतालस्तथैवातर्कितः सहसा प्रययौ। राजा च भूयस्तमानेतुं सम्मुद्यतस्तत्रैव जगाम।

---

## अथ एकाशीतितमस्तरङ्गः ।

ततः स राजा पुनः शिंशपान्तिकमेत्य तथैव वेतालं स्कन्धमारोप्य प्रतस्थे। प्रस्थितञ्च तं वेतालः पथि सम-भाषत, राजन्! पुनस्ते श्रान्तिविनोदिनीं कथामेकां कथ-यामि शृणु।

अस्ति पूर्वाम्बुधितटे ताम्रलिप्तीति पुरी। तस्याञ्च चण्डसिंहो नाम राजाभूत्। यः परस्त्रीषु पराङ्मुखः परं संग्रामभूमिषु न। शत्रुसङ्घानां हन्ता, परद्रव्यसम्पदान्तु न। एकदा तस्य भूपतेः द्वारि दाक्षिणात्यः सत्त्वशीलो नाम जनप्रियः कश्चित् राजपुत्रः समभ्यगात्। तत्रागत्य स आत्मानमावेद्य नृपात् नैव काममवाप। ततश्च स यावत् यदि मे राजान्वये जन्म, तदीदृशं निर्धनत्वं किम्? निर्धनत्वे च धात्रा किं मे महेच्छता विहिता? अयं हि राजा सेवमानमेवं क्लिष्टपरिच्छदं चिरं क्षुधा अवसीदन्तं मां नाद्यापि पश्यति, इति ध्यायति तावत् स नृपः आखेट-कार्थं निरगात्। अग्रे च तस्मिन् कार्पटिके राजपुत्रे लगुड़-वाहिनि धावति राजा प्रभूताश्वपादातयुतः प्रायात्।

तत्र च वेगात् समन्वितम् आरात् महान्तं शूकरमनुधावन् अतिदूरं वनान्तरं प्रापत्। तत्र पर्णतृणच्छन्नमार्गतया शूकरं तमपश्यन् श्रान्तः स राजा तस्मिन् वनान्तरे दिङ्मोहमगमत्। एक एव स कार्पटिको राजपुत्रः प्राणानपेक्षी पदातिः क्षुत्तृषापरीतः वाताश्वपृष्ठगं तं राजानमनुससार। स राजा तं तथानुयान्तं दृष्ट्वा सस्नेहमवदत् भद्र! कच्चित् यथागतं मार्गं वेत्सि? तदाकर्ण्य स बद्धाञ्जलिः कार्पटिकोऽभ्यधात् देव! वेद्मि परं इह क्षणं विश्राम्यतु देवः, एष खलु दिवो वध्वा मेखलामध्यमणिः स्फुरद्रश्मिजालोऽस्मिन्नाथकोऽतितरां देदीप्यते। एतदाकर्ण्य स राजा सनिर्बन्धं तमभाषत तर्हि क्वापीह भवता पानीयं दृश्यताम्। स च कार्पटिकस्तथेत्युक्त्वा तुङ्गं तरुमारुह्य समन्तात् पश्यन् नदीमेकां दृष्ट्वा अवरुह्य तं नृपं तत्र निनाय। नीत्वा च तदीयं वाहं विपर्य्याणीकृतं कृत्वा अम्बूनि शष्पाणि च दत्त्वा विगतश्रममकरोत्। ततश्च स कृतस्नानाय राज्ञे वसनाञ्चलात् प्रोन्मुच्य आमलकानि फलानि प्रक्षाल्य तस्मै हृद्यानि उपानयत्। एतानि कुतः प्राप्तानि? इति पृच्छन्तं भूपतिं स कृताञ्जलिर्व्यजिज्ञपत्, देव! एतद्दृत्तिरहं नित्यं व्यतीतदशवत्सरः देवमाराधयन् अनेकान्तमुनिव्रतं चरामि। इति श्रुत्वा राजा सत्त्वशील! त्वं सत्यनामा, किमुच्यते इति अभिधाय कृपाक्रान्तः लज्जितश्चाचिन्तयत् धिक् नृपान्, ये भृत्येषु क्लिष्टमक्लिष्टं न जानन्ति। धिक् तत्परिवारान् ये प्रभुं तत्तत् न ज्ञापयन्ति, इति संचिन्त्य स राजा दे

आमलके कार्पटिकहस्तात् कथञ्चिदनुबध्नतः प्रतिजग्राह। विश्राम च ते भुक्ता अम्बु च निपीय चचां तेन जम्बामलकपीतजलेन कार्पटिकेन सह। ततः तेन कार्पटिकेन सञ्जीकृतं वाहमारुह्य तस्मिन्नपसरे गच्छति मार्गदर्शिनि राजाज्ञया हयस्य पश्चाद्भागासनस्थिते स राजा पथि सम्प्राप्तसैनिकः स्वां पुरीं प्रायात्। तत्रागत्य तस्य कार्पटिकस्य भक्तिं प्रख्याप्य वसुभिः कार्पटिकं पूरयित्वापि निष्कृतिं नामन्यत। ततः स कृतार्थः चण्डसिंहस्य भूपतेः पार्श्वचरः त्यक्तकार्पटिकाचारः सत्त्वशीलस्तस्थौ।

एकदा राजा तं सत्त्वशीलं सिंहलेश्वरसुतामात्मार्थं याचितुं सिंहलद्वीपं प्रैषयत्। ततश्च स गच्छन् अभीष्टदेवतामर्चयित्वा राजादिष्टैः द्विजैः सह प्रवहणमारुरोह। तस्मिंश्च प्रवहणे मध्यभागमम्बुधिं गते सहसा तस्मात् जलधेः अभ्रंलिहाग्रः सुमहान् जाम्बूनदविनिर्मितः विचित्रवर्णविचलद्वैजयन्तीविभूषितः ध्वजः विस्मयं जनयन् उत्तस्थौ। तस्मिंश्च काले समुन्नद्घनावली सहसा भृशं वर्षितुमारेभे, तीव्रो मारुतश्च ववौ। स द्विपः वर्षवातैर्बलादाकृष्य आधोरणैरिव तस्मिन् प्रवहणध्वजस्तम्भे आसज्यत। तावच्च तस्मिन् वीचिविप्लुते वारिधौ स ध्वजस्तेन वहनेन समं मज्जितुं प्रावर्त्तत। ततस्ते द्विजा तत्रस्याश्चण्डसेनं स्वभूपतिमुद्दिश्य भयार्त्ताः अब्रह्मण्यमुदघोषयन्। तदाकर्ण्य स सत्त्वशीलः स्वामिभक्त्यतिशयात् असहिष्णुः निस्त्रिंशहस्तः बद्धोत्तरीयकः अनुध्वजमात्मानं निरपेक्षः वारयामास उदधेः प्रतिविधित्सया

प्रक्षिपत्। अथ तस्मिन् मग्ने वातोर्मिभिर्दूराचिप्तं तत् प्रवहणमभज्यत। ततस्तांश्च सर्वे यादसां मुखे निपेतुः। स च सत्त्वशीलोऽम्बुधौ मग्नो यावत् निरीक्षते स्म तावत्तत्र दिव्यं पुरं ददर्श न वारिधिम्। तत्र मणिमयस्तम्भभास्वरे हेममन्दिरे सद्भिः रत्नैर्बद्धसोपानवापीके उद्यानशालिनि नानामणिशिलाभित्तिरत्नचित्रोच्छ्रितध्वजं मेरुप्रोन्नतं कात्यायनीमन्दिरं प्रविश्य तां तत्रस्थां देवीं प्रणम्य स्तुत्वा अभ्यर्च्य च तदग्रतः किमेतदिन्द्रजालमिति सविस्मयमुपाविशत्। तावच्च सहसा कापि दिव्या इन्दीवराक्षी चन्द्रवदना कुसुमस्मिता मृणालमृदुकलेवरा स्त्रीसहस्रपरिवारा सहसा कवाटमुद्घाट्य देवीगर्भगृहं सत्त्वशीलस्य च हृदयं समं विवेश। सा च तत्र देवीमभ्यर्च्य तस्मात् गर्भगृहात् निरगात् न पुनः सत्त्वशीलस्य हृदयात्। प्राविशच्च तत्रैव प्रभामण्डलकान्तरे। सत्त्वशीलोऽपि तामनुजगाम। ददर्श च अन्यत् उत्तमं सर्वासां भोगसम्पदां सङ्केतोद्यानमिव भवनम्। तत्रान्तर्मणिपर्यङ्कनिषण्णां तां विलोक्य समुपेत्य तत्पार्श्वे समुपाविशत्। आसीच्च तन्मुखासक्तलोचनो लिखित इव। इत्थं सोत्कम्पपुलकैरङ्गैर्वदनालोकनोत्सुकं तं स्मराविष्टं दृष्ट्वा कापि तदीया चेटी तदीङ्गितज्ञा तमब्रवीत् भद्र! अतिथिस्त्वमिह प्राप्तः, तदस्मत् स्वामिन्याः कृतम् आतिथ्यं भजस्व, उत्तिष्ठ, स्नाहि भुङ्क्ष्व, तदाकर्ण्य स आशां कथञ्चित् तदुक्तितः सम्भाव्य तया दर्शितामेकां उद्यानवापीमगात्। उदतिष्ठच्च तस्यां निमग्नस्तत्क्षणं

तान्त्रिकायां चण्डसिंहस्य नृपतेर्वापीमध्यात्। तत्राकस्मात् प्राप्तमात्मानं वीक्ष्य सोऽचिन्तयत् अहो! किमेतत् क्व तदुद्यानं दिव्यं क्व च तत्र अमृतसारमयं तस्या दर्शनं, क्व चानन्तरमेव तद्विरहमहाविषमिदम्। स्वप्नोऽयं न, विनिद्रोऽहं न्यूनं तया चेव्या अहं विप्रलब्धः विमूढोऽस्मि। इति चिन्तयन् तां कन्यां विना सोन्माद इव तस्मिन्नुद्याने भ्रमन् कामार्त्तो विललाप। तदवस्थञ्च पिशङ्गैः पुष्परेणुभिर्वातोद्धूतैर्वियोगानलैरिव परीताङ्गं तं दृष्ट्वा उद्यानपालः चण्डसिंहं महीपतिं गत्वा व्यजिज्ञपत्। स च तदाकर्ण्य उद्भ्रान्तः स्वयमेत्य तं ददर्श पप्रच्छ च सान्त्वयन् किमिदं ब्रूहि सखे! त्वं क्व प्रस्थितः, क्व च प्राप्तः क्व आस्थाः, क्व च पतित इति तदाकर्ण्य स तस्मै सर्वं वृत्तान्तमशंसत्। राजा व्यचिन्तयत् हन्त वीरोऽयं मत्पुण्यैः कामेनैष विडम्बितः, तदिदानीमस्यानृण्यं लब्धुमयमवसरो मया प्राप्तः। इति चिन्तयित्वा स राजा तं जगाद सखे। मुधा शोकं मुञ्च, अहं त्वां तेनैव मार्गेण नीत्वा तामसुरकन्यकां प्रापयामि इति उक्त्वा स्नानादिना तं समाश्वासयत्।

अथान्येद्युः स मन्त्रिविन्यस्तराज्यभारः तेन समं प्रवहणारूढः तद्दर्शितेन अम्बुधि मार्गेण गच्छन् तन्मध्यभागे प्राग्वत् समुत्थितं सपताकं ध्वजं ददर्श। तदवलोक्य सत्त्वशीलो राजानमभ्यधात् देव! सोऽयं दिव्यप्रभावो महाध्वजः समुत्थितः, मयि अत्र मज्जे देवेनानुध्वजं मज्जनीयम् इत्युक्त्वा तस्य निमज्जतो ध्वजस्य

निकटं प्राप्य स सत्त्वशीलः पूर्वमात्मानं तत्र न्यक्षिपत्। ततो राजापि तमनु आत्मानं निचिक्षेप। अन्तर्मग्नौ च तौ तत्र तत् दिव्यं पुरमवापतुः। तत्र दृष्ट्वा राजा सविस्मयो देवीं तां पार्वतीं प्रणम्य सत्त्वशीलेन सम-मुपाविशत्। तावच्च तत्र सा कन्या सखीजनसमन्विता रूपिणी प्रभेव ततः प्रभामण्डलकात् निरगात्। इयं सा सुमुखीति सत्त्वशीले वदति स राजा तस्यामस्यानुरागो युक्त इत्यमन्यत। सापि तं राजानं दिव्यशरीरलक्षणं वीक्ष्याचिन्तयत् कोऽयमपूर्वः पुरुषातिशयः, विवेश च अम्बिकापूजार्थं तन्मन्दिरम्। सोऽपि नृपः तं सत्त्वशील-मादाय अवशां प्रदर्शयन् उद्यानमाजगाम। क्षणेन च सा कन्यका कृतदेवीपूजा तस्या देव्याः सत्पतिलाभं याचित्वा तद्गृहाभ्यन्तरात् निर्गत्य सखीमेकां प्राब्रवीत् सखि! क्वासौ वीक्ष्यतां यो मया इह दृष्टः, स महात्मा क्व तिष्ठति? गुणाभिर्विचित्य आतिथ्यमित्य गृह्यतां प्रसादो मे त्वया क्रियतामित्येवं अभ्यर्थनीयः स हि पूज्यः कोऽपि उत्तमः पुमान्। एवं तयोक्ता सखी तं विचित्य उद्यान-वर्त्तिनं स्वस्वामिनीनिदेशं प्रह्वा व्यजिज्ञपत्। तदाकर्ण्य वीरो नृपः सावज्ञं तामुवाच भद्रे! वचसैव कृतमातिथ्यं नान्यत् किमपि उपयुज्यते। एतदाकर्ण्य तया सख्या गत्वा सा असुरनन्दिनी आविता तदा उदारं तमसा-माध्य कमपि अभ्यमन्यत। ततस्तेन मानुषायोग्येऽपि आतिथ्ये निस्पृहेण तेन राज्ञा धैर्यपाशेनाकृष्यमाणा मत्वैषैपार्वतीयेषा परिपाकसमन्विता दैत्यकन्यका स्वय-

मुपेत्य उद्यानं प्राविशत्। प्रविश्य च राजानं तमभ्येत्य प्रश्रयान्विता आतिथ्यग्रहणार्थं प्रार्थयामास। ततः स नृपस्तं सत्त्वशीलमुद्दिश्य तामुवाच भद्रे! अनेन कथितां देवीमिह द्रष्टुमहमागतः, दृष्टा च सा गौरी परमाद्भुत-केतनं ध्वजपथं प्राप्य, तदनु त्वञ्च। तदाकर्ण्य सा कन्यका प्रत्यभाषत राजन्! तर्हि कौतुकात् त्रिजगदद्भुतं पुरं वीक्षितुमागम्यताम्। एवं वादिनीं तां स नृपो विहस्या-वदत् तदपि अनेन मे कथितं यत्र सा स्नानवापी अस्तीति। कन्यकावादीत् देव! मैवमादिश, नाहं विडम्बनशीला पूज्ये विडम्बना का? विशेषतस्त्वहं युष्माकं सत्त्वोत्कर्षेण किङ्करीकृतास्मि। तन्मम प्रार्थनाभङ्गं मा कुरुष्व, एतदाकर्ण्य स राजा सत्त्वशीलेन सहितः तथे-त्युक्त्वा तया सह प्रभामण्डलोपान्तं ययौ। अथ अपा-वृतकवाटे तस्मिन् प्रविष्टः अपरं दिव्यं नित्यं सर्वर्त्तु-कुसुमफलशोभितं रत्नकाञ्चनैर्निर्मितमपरं मेरुपृष्ठमिव पुरं ददर्श। तत्र सा महार्हे रत्नासने राजानमुपवेश्य यथोचितं अर्घ्यादिकमानाय्य राजसुताब्रवीत् महाभाग! अहमस्मि असुरेन्द्रस्य महात्मनः कालनेमेः सुता। चक्रिणा स मम पिता स्वर्गं प्रापितः। इदञ्च मे पैतृकं पुरद्वयं विश्वकर्मणा कृतं, सर्वकामदे अत्र न जरा न च मृत्युः बाधते। इदानीञ्च त्वं मे पिता सपुराया इति समर्पितात्मसर्वस्वां तामवादीत् स राजा। यदि एतत् तर्हि त्वं मम सुता अस्यै सत्त्वशीलाय सुहृदे वीराय बान्धवाय च मया दत्ता, एवं देवीप्रसादेन मूर्त्तेनेव नृपेण

सा तन्वी गुणज्ञा विनता तं राजानं तथेति अन्वमन्यत। ततस्तस्याः पाणिग्रहं कृत्वा कृतार्थे तस्मिन् सत्त्वशीले राजा असुरैश्वर्यं सर्वं दत्त्वा तं सत्त्वशीलमुवाच सखे! भुक्तयोरामरणयोरेकमद्य मया तव संशोधितम् असंशोधितात् द्वितीयात् तेऽहं ऋणी तिष्ठामीति प्रणतं तमुक्त्वा तां दैत्यपुत्रीमब्रवीत् भद्रे! मार्गो मम दृश्यतां येन स्वां पुरीं प्राप्नुयामिति ततः सा अपराजितं नाम खड्गम् एकञ्च जन्मजरा मृत्युहरं फलं दैत्यनन्दिनी तस्मै भूपाय प्रादात्। अथ स राजा ताभ्यां खड्गफलाभ्यामन्वितः तयोक्तायां तस्यामेव वाप्यां मग्नः स्वदेशतः समुत्थाय सर्वकार्यसिद्धिमानभूत्। स च सत्त्वशीलः दैत्यस्त्रीपुरराज्यं सुखेन शशास। इति कथामाख्याय वेतालो राजानमप्राक्षीत् राजन्! कोऽनयोर्द्वयोरब्धिपतने सत्त्वाधिक इति। तदाकर्ण्य राजा शापाद् भीतः सदुत्तरमेव प्रत्यभाषत एतयोः सत्त्वशील एव अधिकः सत्त्ववान् मे प्रतिभाति, स हि पूर्वम् अविज्ञाततत्त्वः निराश एवाम्बुधौ पतितः। राजा तु तत्त्वं विज्ञाय अम्भोधिमाविशत् इति समाकर्ण्य राज्ञो निरस्तमौनस्य वचनं स वेतालः स्कन्धात् पूर्ववत् अलक्षितः तमेव शिंशपातरुमगमत्। राजापि पूर्ववत् तमानेतुं पुनरुद्योगमकरोत्। नहि प्रारब्धे असमाप्ते धीराः शिथिला भवन्ति।

# द्व्यशीतितमस्तरङ्गः।



ततश्च स राजा भूयः शिंशपामूलं गत्वा तं वेतालं तथैव प्राप्य स्कन्धे कृत्वा भिक्षुमुद्दिश्य प्रातिष्ठत। प्रयान्तंश्च तं स स्कन्धवर्त्ती वेतालः सम्बोध्य प्राब्रवीत् राजन्! श्रमविनोदाय पुनरिमां कथामाकर्णय।

अस्त्यङ्गदेशे महान् वृक्षघटाभिधः जनपदः। तत्र विष्णुस्वामीति महान् यज्वा महाधनो द्विजः प्रतिवसति। तस्य स्वानुरूपायां पत्न्यां क्रमात् त्रयः पुत्रा जज्ञिरे। कदाचित् ते तरुणाः भोगवैदग्ध्यशालिनः कूर्महेतोः पित्रा प्रारब्धयज्ञेन प्रेषिताः भ्रातरः अम्बुधिं ययुः तत्र कूर्ममेकं प्राप्य ज्यायान् कनिष्ठावाह स्म युवयोरेकः कूर्ममिमं पितुः क्रत्वर्थं गृह्णातु अहमेनं विस्रं पिच्छिलञ्च गृहीतुं न शक्नोमि इत्युक्तवन्तं तं ज्येष्ठं कनिष्ठावूचतुः आर्य्य! तवात्र चेत् विचिकित्सा, तदावयोः कथं न स्यात्। तदाकर्ण्य स ज्येष्ठोऽवादीत् युवां कच्छपं गृह्णीतम् अन्यथा युवाभ्यां कृते पितुर्यज्ञलोपः स्यात्, ततो युवयोस्तस्य च पितुः ध्रुवं नरकपातः स्यात्। इति तेनोक्तावनुजौ विहस्य तमवोचताम् आर्य्य! आवयोरेव समानं धर्मं वेत्सि, नात्मनः? ततो ज्येष्ठोऽवादीत् किं युवां मम भोजनचण्डतां न जानीथः? अहं हि भोजनेषु चण्डः, कथमिमं जुगुप्सितं स्पृशामि? एतत्तस्य

वचः श्रुत्वा मध्यमोऽब्रवीत् अहं हि अधिकचण्डः नारीषु विचक्षणः तत् कथमिमं स्प्रष्टुमर्हामि। एवं मध्यमेनोक्ते ज्येष्ठः कनीयसमवादीत् त्वं तावत् आवयोः कनीयान् कूर्मं गृहाण। ततः स कनीयान् भ्रुकुटिं विधाय तावबोचत् मूर्खौ। अहं हि विशेषेण तूलिकाचण्डः। इत्थं ते कलहासक्तास्त्रयो भ्रातरः निर्णयाय अभिमानिनः तं कूर्मं विहाय प्रसेनजिदाख्यस्य भूपतेर्नगरं विटङ्कपुरं ययुः। तत्र गत्वा प्रतीहारमुखेनावेद्य तेन च प्रवेशितास्तं नृपं तं वृत्तान्तं विज्ञापयामासुः। राजा च सर्वं श्रुत्वाब्रवीत् तिष्ठत यूयमत्र परीक्षिष्ये वः क्रमात् इति। ततस्ते तथेत्युक्त्वा सर्वे तत्रावतस्थिरे। ततः स नृपः स्वाहारकाले तानानीय तेभ्यः अग्र्याणि आसनानि राजार्हाणि च षड्रसानि स्वादूनि अन्नादीनि दापयामास। ततः सर्वेषु भुञ्जानेषु तेषामेको विप्रः भोजनचण्डो जुगुप्साकलिताननो न बुभुजे। कथं न भोजनं स्वादु सुगन्ध्यपि न भुङ्क्षे इति राज्ञा स्वयं पृष्टः स शनैर्जगाद, राजन्! अस्मिन् भक्ते शवधूमदुरामोदो वासते, तेनाहमिदं भोक्तुं स्वादु अपि नेच्छामि। इत्युक्ते तेन सर्वेऽपि नृपाज्ञया तदाघ्राय कलमशाल्यन्नमिदं सुगन्धि चेति शशंसुः। स तु भोजनचतुरः पिहितनासिकस्तन्न बुभुजे। ततः स राजा सञ्चिन्त्य क्रमात् यावदन्विष्यति तावन्नियोजितजनमुखात् तदन्नं ग्रामश्मशाननिकटक्षेत्रसम्भवशालिजं बुबुधे। ततोऽतिविस्मितस्तुष्टश्च राजा तमभाषत ब्रह्मन्! सत्यं त्वं भोजनचण्डः तदन्यत् भुज्यतामिति।

ततो राजा कृताहारान् तान् वासगृहेषु विसृज्य स्वामिकां गणिकोत्तमाम् आनयामास। प्राहिणोच्च निशि तां सर्वाङ्गसुन्दरीं कृतमण्डनां तस्मै द्वितीयस्मै नारीचण्डाय भ्रात्रे। सा च राजभृत्येनान्विता तस्य द्वितीयस्य वासगृहं प्रागात्। तस्याश्च प्रभासितवेश्मनि प्रविष्टायां समुत्पन्नमोहः वामपाणिना संवृतनासापुटोऽसौ नारीचतुरो राजभृत्यानब्रवीत् निष्काश्यतामेषा, नो चेत् म्रियेऽहम्, अस्याश्छागलगन्धो निर्याति। इत्युक्ता राजपुरुषाः समुद्विग्नाः सविस्मयाश्च तां ततो राजान्तिकं नीत्वा तं वृत्तान्तं तस्मै न्यवेदयन्। राजा तं नारीचण्डमानीय तदाब्रवीत् ब्रह्मन्! येयं चन्दनकर्पूरकालागुरुभिः कृतदेहविलेपना दिक्षु प्रसरच्चारुसौरभा वर्त्तते, तस्या वारविलासिन्याश्छागलगन्धः कुतः? इत्युक्तोऽपि स नारीचण्डः यदा न प्रतिपेदे तदा राजा विचारकुतुकोऽभवत् अबुध्यत च तां तस्या एव मुखेन शैशवे मातृवियोगात् अजाक्षीरविवर्द्धिताम्। ततो राजा अतिविस्मितस्तस्य नारीचण्डस्य चण्डतां बहु प्रशंसन् तस्मै तृतीयाय तूलिकाचण्डाय आशु शय्यामदापयत्। स च तूलिकाचतुरः पर्य्यङ्कोपरि सप्तसङ्ख्यतूलिकायां शय्यायां धौतश्लक्ष्णपटप्रच्छद्वाससि सुष्वाप। रात्रेर्यामार्द्ध एव गते स सहसा पाणिना अवष्टब्धपार्श्वः क्रन्दन् व्यथाकुलः तस्मात् शयनादुत्तस्थौ। तत्रस्थैश्च राजपुरुषैः तस्य पार्श्वे गाढलग्नस्य केशस्य कुटिलारुणामुद्रे च अदृश्यत। तैश्च तत्क्षणं गत्वा निवेदितो राजा तानुवाच तूलिकानां तलेषु किञ्चित् स्यात् न वा वीक्ष्यताम्। ततस्ते गत्वा यावदीक्षन्ते एकैकं

तूलिकातलं तावत् सर्वतले स्थितमेकं बालं प्रापुः, दर्शयामासुश्च तं नीत्वा तत्क्षणं राज्ञे, स च राजा तं तूलिकाखण्डमानीय तस्याङ्गं तद्रूपमङ्कितं दृष्ट्वा परं विस्मयमवाप। सततमभ्यस्तूलिकाभ्यः अस्य तनौ कथमयं बालो मग्न इति चिन्तयमानस्तां रात्रिमनैषीच्च। प्रातश्चोत्थाय राजा अद्भुतवैदग्ध्यसौकुमार्यो अमी इति परितुष्टः तेभ्यस्त्रिभ्योऽपि चण्डेभ्यो हेमलक्षत्रयं ददौ। ततस्ते सुखिता विस्मृतकच्छपाः पितुर्यज्ञविघ्नेन उपार्जितपातकास्तत्र तस्थुः। इति अद्भुतां कथामाख्याय स्कन्धनिषण्णः स वेतालः तं राजानमपृच्छत् राजन्! पूर्वोक्तं शापं विचिन्त्य त्वं एषां त्रयाणां कोऽधिकचण्डः इति ब्रूहि। तदाकर्ण्य स धीमान् नृपति स्तं वेतालं प्रत्यभाषत अहमेतं अकैतवं तूलिकाचण्डमधिकं मन्ये यस्याङ्गे बालप्रतिबिम्बं प्रत्यक्षमुद्गतं दृष्टम्। इतराभ्यान्तु कदाचित् तत्पूर्वमवगतं सम्भवेत्। इत्युक्तवतो नरपतेः स्कन्धात् स वेतालः प्राग्वत् प्रययौ। राजापि तमानेतुं पुनः शिंशपातरुमूले तमन्वगात्।

---

## व्यशीतितमस्तरङ्गः।

---

ततः स राजा पुनः शिंशपान्तिकं गत्वा तं वेतालं स्कन्धेनादाय प्रस्थितस्तेन वेतालेन प्राग्वदभ्यधायि राजन्। कस्मिन् श्मशाने निशि ते एतादृक् प्रयासः भूतसङ्कुल

यात्रिभीषणं चिताधूमैरिव ध्वान्तैर्निरुद्धं पितृकाननं किं वेत्सि? तस्य भिक्षोरनुरोधतः कथमीदृशा प्रयासेन आत्मानं खेदयसि? तदिमं मे प्रश्नं मार्गविनोदकं शृणु।

अवन्तीषु युगादौ देवनिर्मिता शैवी तनुरिव उद्दामभोगभूतिविभूषिता पद्मावती, भोगवती हिरण्यवतीति च कृतादिषु त्रिषु युगेषु पुरी क्रमशः आसीत्, कलौ च उज्जयिनीति पुरी अस्ति। तस्यामासीत् वीरदेवो नाम नृपतिः। तस्य पद्मरतिर्नाम्नी महादेवी आसीत्।

एकदा राजा तया सार्कं मन्दाकिनीतटे पुत्रकाम्यया तपसा हरमाराधयामास, चिरञ्च तपश्चरन् कदाचित् परितुष्टशङ्करोदिताम् आकाशवाणीं शुश्राव राजन्! उत्पत्स्यते ते पुत्रः शूरः कुलोद्वहः। कन्या चैका लावण्येन जिताप्सराः। एतां नाभसीं वाणीं श्रुत्वा स भूपतिरभीष्टसिद्धिप्रहृष्टः महिष्या समं स्वनगरीमाययौ। तस्य प्रथमं पद्मरत्यां देव्यां शूरदेवो नाम पुत्रः, तदनु च अनङ्गरतिर्नाम अनङ्गमोहिनी कन्या समजायत। क्रमेण च तस्यां वृद्धिं गतायां स राजा सदृशं वरं प्रेप्सुः पृथिवीमण्डलस्थान् सर्वान् नृपतीन् पटलिखितानानाययत्। यदा तेषु एकोऽपि तस्याः सदृशो न प्रत्यभासत, तदा स राजा वात्सल्यात् तां सुतामभाषत वत्से! अहं तावत् ते सदृशं वरं न पश्यामि, तत् सर्वान् नृपान् समानाय्य स्वयंवरं कुरुष्व। एतत् पितृवचनमाकर्ण्य सा राजपुत्री जगाद तात! स्वयंवरमतिक्षेपणं, तदहं नेच्छामि, यो हि युवा सुरूपः केवलं पूर्णं विज्ञानं वेत्ति, तस्मै

त्वया मह्यं देया, अन्याधिकेन मे नास्ति प्रयोजनम् । इति दुहितुर्वचः समाकर्ण्य यावत् स भूपतिस्तादृशं वरम् अन्विष्यति, तावत् तत् लोकमुखात् विदित्वा चत्वारो वीरा विज्ञानिनो भव्याः पुरुषा दक्षिणापथात् तं राजानमाययुः । ते च राज्ञा सत्कृताः एकैकशः स्वं स्वं विज्ञानं राजसमक्षं शशंसुः । तेषामेको जगाद अहं तावत् शूद्रः नाम्ना पञ्चफुट्टिकः । एकोऽहमन्वहं पञ्च श्रेष्ठाणि वसनयुग्मानि करोमि, तेषामेकं देवाय प्रयच्छामि, एकं द्विजाय, एकमात्मनः कृते परिदधामि, एकञ्च भार्य्यायै (या मे भवति) ददामि । पञ्चमञ्च विक्रीय आहारादिकं विदधामि । तदेवं विज्ञानिने मह्यम् अनङ्गरतिस्ते दुहिता दीयतामिति । द्वितीयोऽब्रवीत् अहं तावत् वैश्यः, भाषाज्ञो नाम, सर्वेषां मृगपक्षिणां रुतं वेद्मि, तदेषा राजपुत्री मह्यं दीयतामिति । ततस्तृतीयोऽभाषत अहं खड्गधरो नाम भुजवीर्य्यशाली क्षत्रियः, खड्गविद्याविज्ञाने अस्यां क्षितौ मे प्रतिमल्लो नास्ति । हे राजन् ! तदेषा तनया ते मह्यं दीयतामिति । अतश्चतुर्थोऽब्रवीत् राजन् ! अहं तावत् जीवदत्तो नाम विप्रः, मम चैतादृशं विज्ञानमस्ति यत् मृतानपि जन्तून् आनीय आशु जीवतो दर्शयामि, तद्वीरचर्य्यासिद्धं मां एषा ते तनया पतिं प्रपद्यतामिति । एवं ब्रुवतः तान् दिव्यवेशाकृतीन् पश्यन् राजा वीरदेवः सुतया दोलारूढ़ इवाभवत् । इति कथामाख्याय वेतालः राजानमप्राक्षीत् राजन् ! पूर्वोक्तं शापं स्मृत्वा ब्रूहि एतेषां कस्मै कन्यैषा देयेति । एतदाकर्ण्य राजा तं

वेतालं प्रत्यवादीत् भवान् केवलं कालक्षेपाय मां मौनं त्याजयति. अन्यथा कोऽयं गहनः प्रश्नस्तदुच्यतां शूद्राय कुविन्दाय कथं क्षत्रिया दीयते वैश्याय च, यच्च तद्गतं मृगादिभाषाविज्ञानं तत् कस्मिन् कार्य्ये उपयुज्यते? विप्रेणापि तेन स्वकर्मप्रच्युतेन ऐन्द्रजालिकेन पतितेन वीरमानिना किम्? तस्मात् क्षत्रियायैव खड्गधराय विद्याशौर्य्यशालिने सा देयेति। एतत्तस्य वचो निशम्य स वेतालः योगबलात् स्कन्धदेशात् सहसा अलक्षितः क्वापि जगाम। राजापि तथैव तमनुययौ। सोत्साहघने हि वीरहृदये न जातु खेदोऽन्तरं लभते।

---

## अथ चतुरशीतितमस्तरङ्गः।

ततश्च स राजा पुनः शिंशपामूलं गत्वा तं वेतालं तथैव स्कन्धमारोप्य सत्वरं कृतमौनः समुच्चचाल। प्रयान्तञ्च तं स्कन्धवर्त्ती स वेतालस्तमपृच्छत् राजन्! श्रान्तोऽसि, तदिमां श्रान्तिहारिणीं कथां शृणु।

आसीत् वीरबाहुर्नाम सकलभूपालशिरःसमभ्यर्चितशासनः पाकशासन इवापरो नृपतिः। तस्यानङ्गपुरं नाम नगरवरमभवत्। तत्रार्थदत्तो नाम महाधनः सार्थवाहः प्रतिवसति स्म। तस्य धनदत्तो नाम ज्येष्ठः पुत्रः कनीयसी च कन्या मदनसेना नाम समजायत।

एकदा धर्मदत्तो नाम कस्यचित् वणिक्पतेस्तनयः तां लावण्यरसनिर्भरां कुंचकुम्भाग्रवलिम्बितयरञ्जितां यौवनद्विरदस्येव लीलामज्जनवापिकां वीक्ष्य सद्यः स्मरवाणौघपातापहृतचेतनः समपद्यत। अहो! मारेण धाराधिरूढ़ेन अमुना रूपेण द्योतिता भल्ली मे हृदयं भेत्तुमिव निर्मिता। इत्येवं प्रासादाग्रमारूढ़ां तां दृष्ट्वा चिन्तयतः चक्राह्वस्येव तस्य वासरोऽतिचक्राम। ततः सा मदनसेना चित्तञ्च तस्य धर्मदत्तस्य तद्दर्शनदुःखाग्निसन्तप्तं ज्वलत् गृहान्तरं विवेश। भास्वांश्च तद्दर्शनजनितरागोऽपराम्बुधौ निपपात। ताञ्च सुमुखीं नक्तम् अभ्यन्तरागतां दृष्ट्वा तन्मुखाब्जविनिर्जितश्चन्द्रः शनैरुदगात्। धर्मदत्तश्च तावत् गृहं गत्वा तामनुचिन्तयन् शयने चन्द्रपादाहतो लुठन् निपत्य तस्थौ। यत्नेन सखिभिर्बन्धुभिश्च पृच्छ्यमानो न किञ्चित् कथयामास। निशि च कृच्छ्रात् प्राप्तनिद्रः तथैव तां पश्यन् अनुनयंश्च समुत्सुकः किमिव नाकरोत्। प्रातश्च प्रबुद्धो गत्वा रहसि सखीं प्रतीक्षमाणाम् उद्यानवर्त्तिनीं ददर्श। उपेत्य च परिष्वङ्गलालसः प्रेमपेशलैर्वचोभिश्चरणानतः उपच्छन्दयामास। साब्रवीत् अहं कन्या, साम्प्रतं ते परदाराश्च, यतोऽहं पित्रा समुद्रदत्ताय वणिजे वाचा दत्ता, कतिपयैरेव दिनैर्विवाहो मे भविता, तत् तूष्णीं गच्छ मा कश्चित् पश्येत् ततो दोषो भवेत्। इत्युक्तस्तया त्यक्तश्च स धर्मदत्तस्तां जगाद सुन्दरि! यदस्तु, त्वां विना नाहं जीवेयम्। तदाकर्ण्य सा वणिक्सुता बलात्कारभयाकुला तमुवाच तर्हि विवाहो मे तावत्

सम्पद्यतां पिता मे चिरकाङ्क्षितं कन्यादानफलं लभतां, ततोऽहं त्वां निश्चितं प्रणयेन समुपैष्यामि। तदाकर्ण्य सोऽब्रवीत् अन्यपूर्वा मम प्रिया नेष्टा, परभुक्ते कमले विमलेऽपि किं रतिर्जायते? इति तेनाभिहिता सावादीत् तर्हि कृतोद्वाहैव पूर्वं त्वामुपयास्यामि, ततः पतिमिति एवमुक्तवतीं तां वणिक्पुत्रीं प्रत्ययार्थं शपथेन सत्येन स धर्मदत्तः सम्बबन्ध। ततस्तेनोज्झिता सा समुद्विग्ना स्वां मन्दिरं विवेश।

अथ प्राप्ते लग्नदिवसे निवृत्तोद्वाहमङ्गला सा गत्वा पतिगृहं नीला च उत्सवेन वासरं निशि पत्या समं शयनीयगृहमध्यास्त। तत्र शय्यानिषण्णापि असम्मुखी समुद्गृत्तस्य तस्य पत्युः परिष्वङ्गं न प्रत्यपद्यत। तेनानुनीयमानापि सा यदा उदश्रु बभूव तदा स नाहमस्या अभिमतोऽस्मीति हृदाकरोत्। अवादीच्च सुन्दरि! यदि तेऽहं नाभिमतः तत्ते योऽभिमतः तं सेवितुं गच्छ। तदाकर्ण्य सा नतमुखी शनैरवादीत् नाथ! त्वं मे प्राणाधिकः प्रेयान्, किन्तु मे विज्ञप्तिमेकां शृणु, सहर्षं मे अभयं प्रयच्छ, शपथञ्च कुरुष्व, आर्यपुत्र! अवक्तव्यमपि ते वदामि। एवमुक्तवती सा तथेति कृच्छ्रात् प्रतिपद्यमानं तं सविषादं सलज्जं सभयञ्चावादीत् नाथ! एकदा एकाकिनीं गृहोद्याने मां दृष्ट्वा धर्मदत्तो नाम मम भ्रातुः सखा युवा स्मरातुरः मामवृणत्। मया परीवादं पितुः कन्यादानफलञ्च रक्षन्त्या हठप्रवृत्तस्य तस्य वाक्संयमः पूर्वं विवाहिता त्वामुपैष्यामि ततः पतिमिति।

तत् प्रभो ! मे सत्यं प्रतिपालय अनुमन्यस्व मां तदन्तिक-गमनाय, तन्निकटं गत्वा क्षणेनागमिष्यामि, न हि आबाल्यसेवितं सत्यमतिक्रमितुं शक्नोमि, इति तस्या वचोवज्रपातेन सहसा हतः समुद्रदत्तः सत्येन बद्धः क्षणमचिन्तयत् अहो ! धिक् इयमन्यरक्ता, एतया ध्रुवमेव गन्तव्यम्। तत् कथं सत्यं हन्मि, यातु इयं कोऽस्याः परिग्रहः ? इत्यालोच्य तां यथेष्टगमनाय अनुमेने। सापि सहसा समुत्थाय तस्माद् वेश्मनो निरगात्। अथ सा यान्ती मदनसेना निशि मार्गे एकाकिनी केनापि चौरेण प्रधाव्य वसनाञ्चलात् रुरुधे। ऊचे च बिभ्यती सा, का त्वं सुभ्रु ! क्व यासीति ? सावादीत् मुञ्च मां किं तवानेन प्रसङ्गेन, कार्यमस्ति मे। ततश्चौरोऽब्रवीत् सुन्दरि ! चौरात् मत्तः कथं त्वं मुच्यसे ? तदाकर्ण्य सावदत् गृहाण मे आभरणानि, ततश्चौरोऽभ्यधात् शोभने ! किमेभिरुपलैः, चन्द्रकान्ताननां जगदाभरणभूतां भवतीं नैवाहं त्यजामि, इति तेनोक्ता विवशा सा वणिक्-नन्दिनी निजवृत्तान्तमाख्याय तमेवं प्रार्थयामास भद्र ! क्षणं अपेक्षस्व यावत् सत्यमनुपालयामि, इहस्थस्यैव ते पार्श्वं सत्वरमेष्यामि, नाहमिमां गिरमुल्लङ्घयिष्यामि। एतदाकर्ण्य चौरस्तां सत्यसन्धां मत्वा मुमोच, तस्थौ च तत्र तदागमं प्रतीक्षमाणः। सापि तस्य धर्मदत्तस्य वणिजोऽन्तिकमाजगाम। स च धर्मदत्तस्तामभीष्टां प्राप्तां दृष्ट्वा यथावृत्तं पृष्ट्वा विचिन्त्य च क्षणमब्रवीत् सुन्दरि सत्येन ते तुष्टोऽस्मि, त्वया परस्त्रिया मे नास्ति प्रयोजनम् यावत्त्वां कश्चिन्नेक्षते तावत् यथागतं गम्यतामिति त

त्यक्ता सा तथेति तस्मात् तद्देशात् प्रत्यागमत्। अथ पथि चौरस्य प्रतिपालयतो निकटं प्राप्य ब्रूहि कस्ते वृत्तान्तस्तत्र गताया इति पृच्छते तस्मै सा तेन वणिजा यथोक्तं तत्सर्वमाख्यातवती। ततः चौरस्तामवादीत् यद्येवं तत् मयापि सत्यतुष्टेन विमुक्तासि, साम्प्रतं साभरणा गृहं व्रज इति। एवं तेनापि सम्त्यक्ता रचिता अनृणा अलुप्तशीलमुदिता पत्युरन्तिकमाययौ। तत्र गुप्तं प्रविष्टा प्रहृष्टेवागता पृष्टा तस्मै पत्ये तत् सर्वं यथावद्वर्णयत्। सोऽपि अम्लानमुखकान्तिस्तामसम्भोगलक्षणां अनष्टचारित्रां सत्यपालनगतां अदुष्टमनसं सम्भाव्य अभिनन्द्य च तया सह स समुद्रदत्तः यथासुखं तस्थौ। इति कथामुक्त्वा स वेतालस्तं भूपं पृच्छति स्म राजन्! पूर्वोक्तं शापमनुस्मृत्य ब्रूहि एषां चौरवणिजां मध्यात् कस्त्यागीति। तदाकर्ण्य स राजा मौनं विहाय तं वेतालमाह एषां चौरस्त्यागी न पुनरुभौ तौ वणिजौ, यो हि पतिस्तां अत्याज्यां विवाह्यापि अजहात् स कुलजः सन् अन्यासक्तां भार्यां जानन् कथं वहति? योऽपि अपरः स भयात् अथवा कालेन जीर्णसन्निवेगात् तमत्याक्षीत्। चौरस्तु गूढ़चारी निरपेक्षः पापी, प्राप्तं साभरणं स्त्रीरत्नं यदमुञ्चत् तेन स एव त्यागीति। एतदाकर्ण्यैव स वेतालः पूर्ववत् स्वं पदमगात्, राजापि पुनस्तमानेतुं सयत्नोऽभवत्।

## अथ पञ्चाशीतितमस्तरङ्गः।



ततः स राजा शिंशपासकाशं गत्वा तं वेतालं पुनस्स्कन्धमधिरोप्य तं भिक्षुं प्रति आगन्तुमारेभे। गच्छन्तञ्च तं स्कन्धस्थितः स वेतालः प्राब्रवीत् राजन्! विचित्रामेकां अमापह्नां कथां ते निवेदयामि शृणु।

पूर्वमासीत् उज्जयिन्यां धर्मध्वजो नाम नृपतिः। तिस्रः राजकन्यास्तस्यातिवल्लभा भार्य्या आसन्। तासामेका इन्दुलेखा, द्वितीया तारावली, तृतीया मृगाङ्कवती। ताभिः राज्ञीभिः सह विहरन् राजा जिताशेषरिपुः सुखमासाञ्चक्रे।

एकदा तत्र वसन्तोत्सवे समुपस्थिते ताभिः प्रियाभिः सह स राजा क्रीडितुं उद्यानमगात्। तत्र अलिमालामौर्वीकाः पुष्पानता लताः अनङ्गस्य सज्जिताश्चापयष्टीरिव पश्यन् तत्रत्यतरुपरिवर्त्तमानानां कोकिलानां गिरं सम्भोगैकरसस्य मनोजस्य आज्ञामिव शृण्वन् वासवोपमः स राजा अन्तःपुरिकाभिः साकं कन्दर्पजीवितस्यापि जीवितं मधु सिषेवे। तत्र तस्य राज्ञः इन्दुलेखाया देव्याः केलिकचग्रहात् कर्णाग्रात् उत्सङ्गे उत्पलं पपात। तदभिघातेन च क्षते जाते अभिजाता सा महादेवी हा! हा! इत्युक्त्वा मुमूर्च्छ। तदवलोक्य विह्वलेन राज्ञा परिजनेन च शीताम्बुमारुतैः समाश्वासिता सा कथञ्चित् संज्ञामवाप।

अथ राजा तां राजधानीं नीत्वा भिषजां शतैर्विविधौषधैः प्रियामुपाचरत्। ततः स राजा रात्रौ तां सुस्थितां दृष्ट्वा द्वितीयया तारावल्या सह चन्द्रप्रासादमारुरोह। तत्र तस्य राज्ञः क्रोड़सुप्तायां तस्यां गवाक्षमार्गेण हिमकरत्विषः तदङ्गेषु पेतुः। ततः क्षणात् प्रबुद्धा सा दग्धास्मीतिवादिनी सहसा शयनादुत्तस्थौ। अथ स राजा प्रबुद्धः किमेतदिति सम्भ्रान्तः समुत्थाय तस्या अङ्गेषु विस्फोटान् निर्गतानपश्यत्। किमेतदिति पृच्छन्तं तं तारावली राज्ञी प्राहस्म नाम। अङ्गपतितैरिन्दोः किरणैरेतत् मे कृतम्। इत्युक्तवत्याः रुदत्यास्तस्यास्तामार्त्तिं दृष्ट्वा राजा विह्वलः परिजनमाह्वयत्, अकारयच्च तेन परिजनेन सजलैर्नलिनीदलैः शय्याम्, अदापयच्च अङ्गेषु आर्द्रश्रीखण्डविलेपनानि। तावच्चास्य तृतीया महिषी मृगाङ्कवती तत्पार्श्वमागन्तुमना निजमन्दिरात् निरगमत्। निर्गच्छन्ती च सा क्वापि गृहे निःशब्दायां तस्यां रजन्यां विदूरे सुव्यक्तं धान्यावघातज मुषलध्वनिं शुश्राव। अत्रैव वा सा हा! मृतास्मीति वदन्ती करौ धुन्वती च व्यथिता मार्गे एव उपाविशत्। ततः प्रतिनिवृत्त्यैव परिजनेन स्वमेवान्तःपुरं नीता सा बाला रुदती शयनं भेजे। ततश्चरिजनश्च किमेतदिति चिन्वन् सास्रुः आनीलभ्रमरौ पद्माविव किणाङ्कितौ तस्याः हस्तौ ददर्श। उपाच्च च गत्वा तं वृत्तान्तं राज्ञे। सोऽपि राजा सम्भ्रान्तः समागत्य किमेतदिति तां प्रियां पप्रच्छ। सापि हस्तौ प्रदर्श्य व्यथिता प्रोवाच नाथ! मुषलध्वनौ श्रुतमात्र एव मे

एतौ किणौ जाताविति । ततः स राजा दाहप्रशमनमौषधं चन्दनविलेपनादिकं तस्य हस्तयोरदापयत्। एकस्या उत्पलेनापि पतता क्षतमाहितं, द्वितीयस्याः शशिकरैरपि अङ्गं दग्धम्। तृतियस्याश्चास्याः श्रुतेन मुषलशब्देन हस्तयोरीदृश्याः किणा जाताः। अहो! युगपत् एतासां मे प्रेयसीनां गुणोऽपि अभिजातत्वं दोषायैव जातः। इति चिन्तयतः अन्तःपुरेषु भ्रमतस्तस्य नृपतेः सा त्रियामा शतयामेव कृच्छ्रात् विरराम। प्रातश्च स राजा शल्यहर्त्तृभिर्भिषग्भिः सह तथा विधानमकरोत् यथा अचिरात् स्वस्थान्तःपुरनिर्वृतोऽभवत्। इत्यमेतां कथामाख्याय वेतालः पप्रच्छ राजन्! एतासां का सुकुमारतरा? यस्याः मुषले अस्पृष्टेऽपि शब्देनैव किणा उद्गताः उत्पलेन्दुकरैः स्पर्शे जाते ययोर्व्रणविस्फोटा इत्ताः, ते उभे तस्याः समे न। इति राज्ञो वचनमाकर्ण्य स वेतालः यथास्थानमगात्, राजा च दृढ़निश्चयः पुनस्तमानेतुं सत्वरो बभूव।

---

## अथ षड़शीतितमस्तरङ्गः।



अथ राजा तथैव तस्य शिंशपातरोरन्तिकं गत्वा तं वेतालं स्कन्धमारोप्य पुनर्गन्तुं प्रावर्त्तत। वेतालश्च भूयस्तमवादीत् राजन्! इत्यमनुद्विग्नः त्वं श्रृणु मे

प्रियोऽसि, तदेतां कथामाख्यायिकां ते श्रमविनोदाय कथयामि, शृणु।

आसीदङ्गदेशे यशःकेतुरिति युवा स्वाङ्गगुणैर्यम् अदग्धस्तनुमाश्रितोऽपर इव स्मरो नरपतिः। बाहुवीर्य्येण पराजितवैरिकुलस्य तस्य शक्रस्येव बृहस्पतिः दीर्घदर्शी नाम मन्त्री अभूत्। कदाचित् स राजा वयोरूपमदात् निहतकण्टकं राज्यं तस्मिन् मन्त्रिणि विन्यस्य शनैः सुखासक्तः समजायत। केवलं निरन्तरं प्रमदास्पदे अन्तःपुरे तस्थौ, शुश्राव च तासां सानुरागगीतं न हितैषिणां वचनम्। रज्यति स्म स सततं जालवातायनेषु न पुनर्बहुच्छिद्रेषु राजकार्य्येषु कदाचिदपि। दीर्घदर्शी तु तं राज्यचिन्ताभारं समुद्वहन् दिवानिशमतन्द्रितस्तस्थौ।

अथ पौरेषु नृपं व्यसने प्रक्षिप्य महामन्त्री दीर्घदर्शी साम्प्रतं राज्ञः श्रियं स्वयं भुङ्क्ते इति जनवादे समुत्थिते स मन्त्री स्वगेहिनीं मेधाविनीं प्राब्रवीत् प्रिये! राजनि सुखासक्ते तद्भारं वहतोऽपि मे राज्यं भक्षितमनेनेति महदयशो मे समुत्पन्नं जनेषु। लोकवादो हि महतामपि दोषमावहति, रामोऽपि जनापवादेन जानकीं त्याजितो न किम्? तन्मया किं कर्त्तव्यमधुनेति मन्त्रिणाभिहिते भार्य्या मेधाविनी धीरा अन्वर्थनाम्नी तं पतिमभाषत नाथ! तीर्थयात्रापदेशेन युक्त्या महीपतिमापृच्छस्व, कियन्तं कालं विदेशं गन्तुं मे इहस्येदानीं युक्तं तदनुमन्यतामिति। एवं हि निस्पृहस्य ते स जनवादो निवर्त्स्यते। त्वयि चास्थिते राजा स्वयं राजधु-

रानुदेष्यति। ततश्च शनैरस्य व्यसनितश्च शान्तिमेष्यति। आगतस्य च पुनस्ते स एव मन्त्रिता अनिन्द्या भविता इति भार्ययानुशिष्टो महामन्त्री तथेति कथाप्रसङ्गेन तं नृपं यशःकेतुं व्यज्ञपयत् राजन्! अनुजानीहि मां कांश्चिदपि दिवसानहं तीर्थयात्रार्थमितो व्रजामि, धर्मो हि मे परमो मतः। तदाकर्ण्य स राजाब्रवीत् मन्त्रिन्! मा मैवं तीर्थैर्विना अपरो दानादिः किं न धर्मः? स्वगृहेऽपि तेन स्वर्गसाधनं किं न स्यात्? अथ मन्त्री तमवोचत् देव! दानादौ अर्थशुद्ध्यादिकं मृग्यते, तीर्थानि तु नित्यशुद्धानि, यावच्च यौवनं तावदेव धीमता गम्यानि, नोचेत् अविश्वास्ये अस्मिन् शरीरे कुतस्तैः सह सङ्गमः? इति तस्मिन् मन्त्रिणि वदति राज्ञि च तत् निषेधति प्रविश्य प्रतीहारी तं राजानं व्यजिज्ञपत् देव! भगवानंशुमान् व्योमसरोमध्यमवगाहते, तदुत्तिष्ठ, स्नानवेला तेऽतिवर्त्तते। एतदाकर्ण्य राजा सहसा स्नातुमुदतिष्ठत्। यात्रोन्मुखः स मन्त्री च तं प्रणम्य गृहमगात्। तत्र तां भार्य्यामनुगन्तुमनसं निवार्य्य स्वभृत्यैरपि अतर्कितः स्वयुक्त्या यात्रामकरोत्। क्रमेण च एकाकी तान् तान् देशान् तीर्थानि च भ्रमन् ओड्रविषयं प्रापत्। तत्राब्धेरदूरे एकं पत्तनं प्राप्य तत्र चैकं शैवं मन्दिरं प्रविश्य तत्प्राङ्गने उपाविशत्। तत्र तं अर्ककर-सन्तप्तं दूराध्वभ्रमणधूसरं निधिदत्तो नाम देवार्च्चनागतः कश्चिद् वणिक् ददर्श। स तं तथाविधं दृष्ट्वा सयज्ञसूत्रं श्रान्तं द्विजश्रेष्ठं सम्भाव्य आतिथ्यार्थं स्वं गृहमनयत्।

अपूजयच्च स्नानभोजनाद्यैः । अप्राक्षीच्च विश्रान्तं कस्त्वं कुत आयातः, क्व यासीति । सोऽब्रवीत् अहं दीर्घदर्शी नाम विप्रः, अङ्गदेशादिह आयातस्तीर्थयात्रार्थीति । ततः स महावणिक् निधिदत्तस्तमब्रवीत् अहं वणिज्यया सुवर्णद्वीपं गन्तुमुद्यतः, त्वं तावदस्मद्गृहे तिष्ठ, यावदहं आगमिष्यामि, तीर्थयात्रापरिश्रान्तोऽसि, अत्र कञ्चित् कालं विश्रम्य ततो यास्यसीति । तदाकर्ण्य स दीर्घदर्शी प्रत्यवादीत् ममेह स्थित्या अलं, त्वयैव सह तत्राहमपि गन्तुमिच्छामि । ततस्तेन साधुना एवमस्तु इति कथिते स मन्त्री चिरादुपास्तशयनो निशां तामनैषीत् ।

अथान्येद्युस्तेन वणिजा सार्द्धं वारिधिं गत्वा तद्भाण्डपूर्णं प्रवहणं समारुरोह । तेन प्रवहणेन गच्छन् अद्भुतभीषणम् अम्भोधिं विलोकयन् क्रमेण तत् स्वर्णद्वीपमुपाययौ । तत्र च द्वीपे तेन क्रयविक्रयौ कुर्वता वणिजा निधिदत्तेन सह कञ्चित् कालमुवास । ततश्च तेन सह प्रत्यागच्छन् प्रवहणेन, तस्मात् सागरात् सहसा समुत्थितम् प्रवालैः शाखासुभगैः जाम्बूनदोज्ज्वलैः काण्डैः मणिमयैः फलैः कान्तैश्च कुसुमैः सुशोभितं कल्पवृक्षमद्राक्षीत् । तस्य च स्कन्धे सद्रत्नपर्यङ्कोपरिस्थिताम् अत्यद्भुताकारां कमनीयां कामपि कन्यकामैक्षत । अहो ! किमेतदिति स मन्त्री यावत् ध्यायति स्म तावत् सा कन्या वीणापाणिः गातुमुपचक्रमे । येन यत् कर्मबीजमुप्तं स निश्चितं तत् फलं भुङ्क्ते, पूर्वकृतं हि कर्म विधिनापि अन्यथा कर्त्तुं न शक्यते, इति सङ्गीतार्थं प्रकटय्य क्षणादेव सा

दिव्यकन्या कल्पद्रुमपर्य्यङ्कसहिता तत्रैव ममज्ज। किम-प्येतदपूर्वमद्य मयेह दृष्टं क्व अब्धिः, क्व च दृष्टनष्टोऽयं दिव्याङ्गनासहितस्तरुः। यदि च अब्धेरीदृश एव प्रख-राकारः, तदा लक्ष्मीन्दुपारिजाताद्याः अस्मात् न किमु-द्गताः इति सञ्चिन्तयन्तं दीर्घदर्शिनं विलोक्य विस्मया-विष्टं कर्णधारादयोऽब्रुवन् भद्र! एव मेषा वरकन्यका सदैव इह दृश्यते, निमज्जति च च्क्षणेन तव तु अस्या नवं दर्शनं इति तैरुक्तः स मन्त्री सविस्मयस्तेन निधिदत्तेन समं पोतात् सागरतीरमाससाद। तत्रोत्तारितभाण्डेन तेन वणिजा हृष्टभृत्येन सह स मन्त्री तद्गृहं गत्वा बहून् दिवसान् तत्र सुखेन स्थित्वा तं निधिदत्त मुवाच सार्थवाह! भवद्गेहे अहं चिरं सुखेन विश्रान्तः, इदानीं स्वदेशं गन्तुमिच्छामि, ते भद्रमस्तु इत्युक्त्वा तमनिच्छन्तमपि वणिक्पतिं आमन्त्र्य स दीर्घदर्शी सत्त्वमात्रसहाय स्ततः प्रतस्थे। क्रमेण नाना देशानतिक्रमन् निजम् अङ्गविषयं प्रायात्। तत्र यशःकेतुना राज्ञा तदन्वेषणाय नियुक्ता-श्चारा बहिर्नगरमागतं तं ददृशुः। ततस्तैर्विज्ञप्तो राजा तद्विश्लेषसुदुःखितः स्वयं नगरात् निर्गत्य तमभ्यगात्। ततश्चोपेत्य परिष्वज्य अभिनन्द्य च अध्वश्रमश्यामधूसरं तं अभ्यन्तरमनयत्। अब्रवीच्च तं विश्रान्तं मन्त्रिन्! अस्मान् त्यक्त्वा त्वया किमर्थं यावच्छरीरं निःस्नेह पक्ष्मा-मिमां दशां मानसं नीतं अथवा भगवतो भवितव्यस्य गतिं विचित्रां को विज्ञातुमर्हति। येन अकस्मात् ते तीर्थादिभ्रमणे मति रेषाभवत्। तद्ब्रूहीदानीं के त्वया

देशा भ्रान्ताः, किञ्च नवं वस्तु दृष्टमिति। ततः स क्रमाद्‌-वर्णयन् सुवर्णद्वीपान्तमध्वानम्, अब्धौ समुत्थितां गायन्तीं त्रिजगत्सारभूतां कल्पतरुस्थितां तां दिव्यकन्यकां तस्मै यथावदकथयत् राजा तु तत् श्रुत्वैव तथा स्मरवशोऽभवत् यथा तया विना राज्यजीविते निष्फले अमन्यत। अवदच्च तं मन्त्रिणं एकान्ते नीत्वा मन्त्रिन्। मयावश्यमेव सा द्रष्टव्या, नोचेत् मे जीवितं नास्तीत्यवधारय। भवितव्यतां प्रणम्य त्वदुक्तेन पथा गच्छामि, अहं ते न निवारणीयः नानुगम्यश्च, गुप्तमेकाकी गच्छामि, राज्यन्तु मे त्वया रक्ष्य इदञ्च मद्वचो-नान्यथा कार्य्यं मया असुभिः शापितोऽसि इत्युक्त्वा तत्-प्रतिवादं निरस्य तं मन्त्रिणं विससर्ज्ज। तदा स दीर्घदर्शी अनल्पोत्सवेऽपि विमना इव आसीत् स्वामिनि असाध्य-व्यसनासक्ते सन्मन्त्रिणां कुतः सुखम्?।

अथान्येद्यु स राजा तस्मिन् मन्त्रिणां वरे न्यस्तराज्य-भारः निशि तापसरूपधरः यशःकेतुः स्वात् नगरात् प्रतस्थे। गच्छंश्च स पथि कुशं नाम मुनिमपश्यत् सोऽपि तं प्रणतं तापसकल्पं समादिशत् वत्स! लक्ष्मीदत्तेन वणिजा साकं पोतेन वारिधौ गत्वा अभीष्टां कन्यां प्राप्स्यसि, निराकुलो व्रज इति तद्वचनं श्रुत्वा हृष्टः प्रणम्य च तं राजा गच्छन् देशान् नदीरद्रीं-श्चातिक्रम्य तमम्बुधिमाससाद। तस्य च तीरे मुनिप्रोक्तेन तेन लक्ष्मीदत्तेन स्वर्णद्वीपं यियासुना वणिजा सहसा अस्य सङ्गतिरजायत। तेन च चक्राङ्कपादमुद्रादिदर्शनात् प्रह्वेन सह स नृपः प्रवहणमारुह्य अम्बुधौ प्रतस्थे।

सम्प्राप्ते मध्यमध्ये तस्मिन् प्रवहणे, सहसा कल्पविटपि-स्कन्धाधिरूढ़ा सा कन्यका उद्गात्। यावत् राजा चकोरश्चन्द्रिकामिव तां पश्यति तावत् सा तथैव वल्लकी-वाद्यसङ्गतं गायति स्म। यत् कर्म्मबीजं येन प्रागुप्तं तत् फलं तेनै निश्चितं भोक्तव्यं पूर्व्वकृतं हि विधिरपि नान्यथा कर्त्तुं प्रभवति। तस्मात् यत्र यथावत् यस्य यत् दैवयोगेन भवितव्यं तत्र तेन भवितव्ये नासौ जन्तुर्विवशो नीयते इति सूचितभाव्यर्थां गीतिकां गायन्तीं तां पश्यन् राजा तत्‌क्षणं स्मरशराहतः निस्पन्द एवातिष्ठत्। हे रत्ना-कर! तुभ्यं नमोऽस्तु, येन त्वया इमां प्रच्छाद्य श्रिया हरि-र्विप्रलब्धः, तत् त्वां शरणं प्रपन्नोऽस्मि त्वं मे इष्टसिद्धिं विधत्स्व। यावदित्थं स राजा समुद्रं स्तौति स्म तावत् सा कन्यका सपादपा तत्र न्यमज्जत्। तदवलोक्यैव स राजा तामनु आत्मानं सिन्धौ प्राक्षिपत्। तद्वीक्ष्य स सज्जनः लक्ष्मीदत्तः तं विनष्टं मत्वा दुःखात् देहं त्यक्तुं समुद्यतोऽ-भवत्। मा तावत् साहसं कार्षीः, मग्नस्यास्य अम्बुधौ भयं नास्ति एष राजा यशःकेतुर्नाम तापसरूपभृत्। अस्या एव कन्याया अर्थे समायातः, इयं हि अस्य पूर्वभार्य्या, एतां प्राप्य पुनरसौ अङ्गराज्यं गमिष्यति इति गगनादुद्गतया वाचा समाश्वासितोऽसौ सार्थवाहः यथाकाममिष्टं देशं स्वार्थसिद्धये जगाम। राजा यशःकेतुश्च अम्बुधौ मग्नः अक-स्मात् दिव्यमेकं नगरमद्राक्षीत्। सविस्मयश्च तत् नगरं भा-स्वन्मणिमयस्तम्भैः काञ्चनोज्ज्वलभित्तिभिः मुक्ताजालगवा-क्षैः प्रासादैः विराजमानं नानारत्नशिलाबद्धसोपान-

वापिकैः कामदैः कल्पवृक्षाद्यै रत्नानेकपशोभितं दृष्ट्वा समृद्धेऽपि तत्र पुरे निर्जने गृहं गृहं प्रविश्य यदा तां प्रियां क्कापि न दृष्टवान् तदा विचिन्वन् उत्तुङ्गमेकं मणिमन्दिरमारुह्य तद्द्वारमुद्घाट्य तत्र प्रविवेश। प्रविश्य च तत्र मद्रत्नपर्य्यङ्कस्थितां वस्त्राच्छादितसर्वाङ्गां शयानाम् एककामैक्षिष्ट। किं स्यात् सैवेयं इति सोत्कण्ठं यावत् तन्मुखमुद्घाटयति तावत् तामेव ईप्सितां कन्यकामद्राक्षीत्। तद्दर्शनेन चास्य तदा कापि अवस्था ग्रीष्मत्तमरुपान्थस्य सरिद्दर्शनेनेवाभवत्। सापि उन्मीलितलोचना तं कल्याणाकृतिलक्षणं काम्यं प्राप्तं वीक्ष्य सम्भ्रमात् शयनमजहात्। ततश्च कृतातिथ्या आनतमुखी फुल्लेक्षणोत्पलन्यासैः पादयोः पूजयन्ती शनैरभ्यधात् महाभाग! को भवान्? कथमिदमगम्यं रसातलं प्रविष्टोऽसि? राजलक्षणाङ्कित-तनोस्ते तापसव्रतं किमिदं? महाभाग! यदि ते मयि प्रसादस्तदा एतदाख्याहि। एवं तस्या वचः श्रुत्वा स राजा तां प्रत्युवाच सुन्दरि। अहमङ्गराजः यशःकेतुर्नाम, आशाञ्जनादिहाम्बुधौ दृष्टां त्वामश्रौषं ततस्त्वदर्थम् इमं वेशं कृत्वा राज्यं विमुच्य आगत्य च अनुमार्गेण इह प्रविष्टोऽस्मि, तस्मे कासि त्वं कथय इति तेनोक्ता सा सलज्जा सानुरागा च तमभ्यधात् महाभाग। मृगाङ्कसेन इति श्रीमानस्ति विद्याधराधिपः। मां मृगाङ्कवतीं नाम तस्यात्मजां विद्धि। स पिता मामस्मिन् नगरे एकाकिनीं विमुच्य केन हेतुना सपौरजनः क्कापि गत इत्यहं न जाने। तेनाहं शून्यवसतेरस्मात् वारिधौ उन्मज्ज्य कल्प-

द्रुमारूढ़ा भवितव्यकां गायामि, एवमुक्तवती सा तस्य मुनेर्वचः स्मरता तेन राज्ञा पेशलैः सुवचोभिः तथा अरज्यत यथा अनुरागविवशा तत्क्षणं तस्य वीरस्य भार्य्यात्वं अङ्गीकृत्य समयमेकमभ्यधात् आर्य्यपुत्र। प्रतिमासं शुक्लकृष्णचतुर्दश्यां अष्टम्याञ्च अनायत्ता चतुरो दिवसान् यत्र क्वापि दिनेषु गच्छन्ती अहं त्वया न निवार्य्या नापि द्रष्टव्या; अत्र हि कारणं विद्यते इति। ततस्तथेति प्रतिपद्य स राजा गान्धर्वेण विधिना तां परिणीय तत्र तया सह दिव्यं भोगसुखं बुभुजे।

एकदा सा मृगाङ्कवती दिव्यसम्भोगसुखावस्थितं तं भूपं प्राह स्म। नाथ! त्वमिहैव प्रतीक्षस्व, कार्य्यार्थं क्वापि अहं यामि, अद्य सा कृष्णचतुर्दशी मम सम्प्राप्ता, आर्य्यपुत्र! इहस्थश्च अमुं स्फाटिकं गृह मास्म गमः। मा अत्र वाप्यां निपतितो भव, तर्हि भूलोकं त्वं तत्क्षणं गमिष्यसि। इत्युक्त्वा तमामन्त्र्य तस्मात् पुरात् सा वहिरगात्। राजापि गृहीतखड्गस्तां जिज्ञासुरन्वगमत्। अद्राक्षीच्च तमः श्याममव्यात्तवक्त्रविलं साकारमिव पातालमागच्छन्तं कमपि राक्षसम्। स च राक्षसः निपत्यैव घोरं रवं कुर्वन् तां मृगाङ्कवतीं वक्त्रे निक्षिप्य निगीर्णवान्। तदवलोक्यैव स राजा अतिकोपेन सहसा ज्वलन् निर्मोकमुक्तभुजगश्यामलेन महासिना क्रोधाकृष्टेन धावित्वा रक्षसस्तस्य सन्दष्टोष्ठपुटं शिरश्चिच्छेद। ततो मोहनिशान्धे विनष्टगतिके कान्तावियोगार्त्ते नृपे अकस्मात् मेघामलिनस्य तस्य रक्षसः अङ्गं भित्वा उद्योतितदिक्चक्रा

विमला चन्द्रमूर्त्तिरिव सा मृगाङ्कवती जीवन्ती अचत-ताङ्गी विनिर्ययौ। तां तथा सङ्कटोत्तीर्णां कान्तां दृष्ट्वा राजा एहि एहि इति वदन् प्रधाव्यैव आलिलिङ्ग। प्रिये ! किमेतत् स्वप्नोऽयमुत मायेति तेन पृष्टा सा संस्मृत्य विद्याधरी प्रत्यभाषत आर्य्यपुत्र ! शृणु नायं स्वप्नः नापि माया, अयं हि विद्याधरेन्द्रात् स्वपितुर्मम शापोऽभूत्। स मे पिता बहुपुत्रोऽपि इह वसन् वात्सल्यात् मया विना आहारं नाकरोत्। अहञ्च सर्वदा इह निर्जने शर्वपूजासक्ता चतुर्दश्याञ्च द्वयोरेव पक्षयोरागच्छम्।

एकदा चतुर्दश्यामिहागत्य चिरं गौरीं समर्चयन्त्या मे दैवात् समस्तं दिनमवसितम्। तस्मिन् दिने स मम पिता मत् प्रतीक्षः क्षुधितोऽपि मां प्रति कुपितः किञ्चिदपि नाभुङ्क्त नापि अपिवत्। ततो रात्रावुपेतायां सापराधां मामधोमुखीं भवितव्यतावलात् अस्नेहः शपति स्म। यथा त्वं मामवज्ञाय क्षुधार्त्तं सर्वं दिनं विस्मृतवत्यसि तस्मात् मासि मासि अष्टम्योश्चतुर्दश्योश्च हरार्च्चनरसात् पुरात् बहिर्यान्तीं त्वां कृतान्तसंत्रासो नाम राक्षसो निगरिष्यति। ततश्चास्य हृदयं भित्त्वा भित्त्वा निरेष्यसि, शापं ताञ्च निगरणव्यथां न स्मरिष्यसि। एकाकिनी च अत्र स्थास्यसि इति शापं ददत् स मयानुनीतः ध्यात्वा शापान्तमकरोत्। यदाङ्गपतिः यशःकेतुस्तव भर्त्ता भूत्वा राक्षसेन निगीर्णां त्वां दृष्ट्वा तं राक्षसं निहनिष्यति तदा त्वं तस्य हृदयान्निर्गता शापात् मोक्ष्यसे, संस्मरिष्यसि च शापादि सर्वां निजा विद्याः। इति शापान्तमुक्त्वा इह

मामेकाकिनीं मुक्त्वा सुपरिच्छदो निषधाद्रिं गतः। अहं तदादेशेन शापमोहादिहावसम्। स शापश्चास्य मे क्षीणः, जाता च सर्वत्र स्मृतिः। तदद्य तातपार्श्वगमनाय निषधाद्रिं व्रजामि, शापान्ते स्वगतिं प्राप्स्यामीत्येष मे नियमः। त्वमिहास्स्व व्रज वा स्वराष्ट्रं अत्र ते स्वातन्त्र्यम्। एवं तयोक्तो नृपति र्दुःखित स्तामभ्यर्थयामास सुन्दरि! सप्ताहानि त्वया न गन्तव्यं सुमुखि! प्रसीद, इह उद्याने त्वया सह क्रीड़न् औत्सुक्यं विनोदयामि ततस्त्वं पितुः स्थानं गमिष्यसि, अहञ्च स्वस्थानं यास्यामि। ततः स तथेति प्रतिपन्नया तया कान्तया तस्मिन्नुद्याने सजलोत्पलनेत्रासु मा स्म याहि अस्मान् विहाय इति हंस सारसनिचयैः क्वणन्तीष्विव रत्नचित्रसवीचिहस्तासु वापीषु सह रेमे। ततः सप्तमेऽहनि स राजा युक्त्या यत्र भूलोकप्रापिणी द्वारवापिकास्ति तत्र गृहे तां कान्तामनयत्। तत्र चागत्य तां कण्ठे गृहीत्वा तस्यां वाप्यां निपत्य सहसा तया स्वपुरोद्याने वापीमध्यादुत्तस्थौ। तत्र कान्तासमेतं प्राप्तं तं भूपं दृष्ट्वा उद्यानपालकाः प्रहृष्टा गत्वा मन्त्रिणं दीर्घदर्शिनं जगदुः। सोऽपि आगत्य पादयोः पतित्वा तमानीतेप्सिताङ्गनं सपौरोऽभ्यन्तरं प्रावेशयत्। अहो! कथं सैषा दिव्याङ्गना अनेन राज्ञा प्राप्ता, या व्योम्नि विद्युदिव क्षणदृश्या मया दृष्टा। धात्रा ललाटाक्षरपङ्क्तिषु यस्य यल्लिखितं तत्तस्य असम्भाव्यमपि अवश्यं उपतिष्ठते। इति तस्मिन् मन्त्रिमुख्ये अन्यस्मिंश्च जने ध्यायति सा मृगाङ्कवती तं भूपतिं स्वदेशागतं दृष्ट्वा

पूर्णसमाङ्गा वैद्याधरीं गतिं गन्तुमियेष। परं तदा उत्पतनी विद्या स्मृतौ नाविरासीत्। ततः सा मुषितेव परं विषादमगमत्। कथमेवं विषण्णासि ? प्रिये ! वद इति राज्ञाभिहिता सा विद्याधरी तमब्रवीत् अहं शापमुक्तापि यदियच्चिरं त्वत्स्नेहपाशसंयमिता स्थिता, तेन मम विद्या दिव्या गतिश्च नष्टा, तदाकर्ण्य राजा ममेयं विद्याधरी सिद्धेति प्रहृष्टः महान्तमुत्सवं चकार। तदवलोक्य स दीर्घदर्शी मन्त्री निशि गृहं गत्वा शयनीयं प्राप्य च सहसा हृत्स्फोटेन व्यपद्यत। ततो राजा स्वयं धृतराज्यभारः तया मृगाङ्कवत्या सह चिरं स्वर्गसुखमनुभवन् तस्थौ। इति कथामाख्याय स वेतालः पर्य्यपृच्छत् राजन्। स्वामिनस्तथाभ्युदये सम्पन्ने तस्य महामन्त्रिणः हृदयं यत् स्फुटितं तस्य कोहेतुः; किं दिव्याङ्गना मया नाप्ता इति शुचा वा राज्यार्थिनः पुनः राजागमनजेन दुःखेन ?। यदि जानन्नपि एतत् मह्यं न वक्ष्यसि, तदा ते धर्म्मो विनङ्क्ष्यति, यास्यति च ते शिरः शतधा खण्डितम्। इत्याकर्ण्य राजा तं वेतालमवादीत् योगीश्वर ! नैतत् द्वयमपि, शुभचरिते मन्त्रिवरे सम्भवति, किन्तु येन भूभुजा स्त्रीमात्रानुरागात् राज्यमुपेक्षितं अधुना तु दिव्यस्त्रीरक्तस्य तस्य अत्र का वार्त्ता ? तस्मै कष्टे कृतेऽपि प्रत्युत दोष एव समधिको जातः इति विभावयतस्तस्य मन्त्रिणो हृदयं स्फुटितमिति मन्ये इत्यभिहितो वेतालः स मायी तत्क्षणात् निजमेव निलयं जगाम। राजापि तमवाप्तुं पुनरुद्यतः तमेव शिंशपातरुमाससाद।

## अथ सप्ताशीतितमस्तरङ्गः।

अथ राजा पुनः शिंशपामूलं गत्वा तं वेतालं स्कन्धमारोप्य पूर्ववत् प्रातिष्ठत। गच्छन्तञ्च तं पुनर्वेतालः प्राब्रवीत् राजन्! शृणु संक्षिप्तामेकां कथाम्।

अस्ति वाराणसी नाम पुरी तत्र देवस्वामीति राजमान्यो द्विजः कश्चित् प्रतिवसति स्म। तस्य महाधनस्य हरिस्वामीति सुतोऽभवत्। तस्य लावण्यवती नाम उत्तमा पत्नी आसीत्। यां तिलोत्तमादिसुराङ्गनानिर्माणेन शिक्षितकौशलो विधि रनर्घरूपलावण्यैर्विनिर्ममे। कदाचित् स हरिस्वामी तया कान्तया चन्द्रांशुशीतले हर्म्ये रतिश्रान्तो निद्रां ययौ। तस्मिंश्च काले कामचारी मदनवेगो नाम विद्याधरकुमारः तेन पथा नभसि सञ्चरन् तत्र समायात् अपश्यच्च तां लावण्यवतीं पत्युः पार्श्वे सुप्ताम्। स तु दृष्ट्वैव तां सुप्तामेव गृहीत्वा नभोमार्गेण प्रायात्। क्षणेन च प्रबुद्धो हरिस्वामी तां प्राणेश्वरीमपश्यन् ससम्भ्रमं शयनादुदतिष्ठत्। अहो! सा मम कान्ता क्व गता, कुपिता किं मयि, अहोस्वित् प्रच्छन्ना मच्चित्तं जिज्ञासुः क्वापि स्थिता परिहसति? इत्येवं बहु वितर्कयन् व्याकुलः समन्तात् हर्म्यप्रासादवलभीषु अन्विष्यन् निशि अभ्रमत्। परं आगृहोद्यानात्

सर्वत्र चिन्वन् कुतोऽपि तां न प्राप। ततः स शोकाग्नि-सन्तप्तः स गद्गदं विललाप हा! चन्द्रमुखि! हा! ज्योत्स्नासिताङ्गि! हा प्रिये लावण्यवति! रात्र्या तुल्य-गुणद्वेषात् अनया किं न सोढ़ासि? त्वया कान्त्या जितो-ऽयं चन्द्रः चन्दनशीतलैः करैः मां समुखयत् सोऽयं त्वया विना लब्धान्तर इव तैरेव ज्वलद्भिरङ्गारैरिव विषदिग्धै-राशुगैरिव मां तुदति। इत्येवं विलपतस्तस्य हरिस्वामिनः सा निशा कृच्छ्रेण व्यरंसीत् न तु विरहव्यथा।

अथ प्रातः भास्वान् करैः विश्वस्य सन्तमस विभेद परं तस्य हरिस्वामिनो मोहान्धतमस न भेत्तुं चक्रमे। तीव्र-निश्वासैरिव वितीर्णस्तस्य करुणाक्रन्दितध्वनिः शतगुणत्वं भेजे। स स्वजनैः सान्त्वमानोऽपि वियोगानलदीपितः तां प्रेयसीं विना धृतिं न लेभे। इहानया स्थित इह स्नात इह प्रसाधनं कृत इह च विहृतमिति तत इतः करोद। बान्धवः सुहृदश्च तमेवं प्राबोधयन् न तावत् सा मृता, कथं वा त्वया आत्मा हन्यते? तदवश्यं ताम-वाप्स्यसि, धैर्य्यमवलम्बस्व, तां गवेषय च, धीरस्य उद्-योगिनोऽप्राप्यमिह नास्तीति। इत्येवं बोधित स हरि-स्वामी कृच्छ्रेण कैश्चित् दिनैः धृतिं बबन्ध। अचिन्तयच्च सर्वस्व ब्राह्मणसात् कृत्वा तीर्थानि तावत् भ्रमामि, पाप-सञ्चयञ्च क्षपयामि, पापक्षये जाते जातु तां प्रियां भ्राम्य-न्नवाप्नुयाम्। इत्यालोच्य स समुत्थाय स्नानादिक मक-रोत्। अन्येद्युश्च सत्रे विविधान्नपानानि कृत्वा अवारित द्विजन्मनामभ्यवहारमकारयत् धनानि च तेभ्यः सर्वाणि

प्रादात्। स ब्राह्मणमात्रवित्तश्च स्वदेशाद्विर्गत्य प्रियां प्राप्तुं तीर्थानि भ्रमितु मगात्। भ्राम्यतश्च तस्य भीमो भीषणर्तु-केशरी प्रचण्डादित्यवदनो ग्रीष्मतद्रश्मिकेशर: समाजगाम। समीरणश्च प्रियाविरहसन्तप्तानां पान्थानां निश्वास-मारुतै र्यस्तोष्मा इव अत्युष्णो वहति स्म। जलाशयाश्च शुष्कद्विपाण्डुपङ्का: घर्मलुप्ताम्बुसम्पद: स्फुटितहृदया इव दृश्यन्ते स्म। पादपाश्च पक्षिणां चीत्कारमुखरा स्ताप-म्लानदलाधरा: मधुश्रीविरहिण इव समदृश्यन्त।

तस्मिं श्च काले अर्कतापेन कान्तावियोगेन क्षुधया तृषया अध्वश्रमेण चातीव क्लान्तो हरिस्वामी भोजनार्थी भ्रमन् कञ्चिद्ग्राममाससाद। तत्र च पद्मनाभनाम्न: विप्रस्य गृहे बहून् विप्रान् भुञ्जानान् दृष्ट्वा द्वारशाखां समालम्ब्य नि:शब्दनिश्चल स्तस्थौ। तथा स्थितं तमालोक्य तस्य याज्ञिकस्य विप्रस्य गृहिणी साध्वी सञ्जातदया व्यचिन्त-यत् अहो! क्षुत् नाम गुर्वी कस्य लाघवं न कुर्य्यात्? यदेष कोऽपि अन्नार्थी द्वारि अधोमुखस्तिष्ठति। दृश्यते चासौ दूरादभ्यागत इव स्नात: क्षीणेन्द्रिय:। तदेष: अन्न-दान पात्रमित्यवधार्य्य सा साध्वी परमान्नभृतं सघृत-शर्करं पात्र मुत्क्षिप्य पाणिभ्यामानीय प्रश्रयवती तस्मै ददौ। जगाद एनं भुङ्क्ष्व इह क्वचित् वापीतटे गत्वा। सोऽपि तथेति तदन्नपात्र' गृहीत्वा नातिदूरतो गत्वा क्वापि वापीतटे वटतरोरध: स्थापितवान्। तत: स तत्र वाप्यां पाणिपादं प्रक्षाल्य आचम्य च यावत् भक्षयितु हृष्ट: परमान्नमुपैति तावत् कश्चित् श्येन: कुतश्चित् चञ्चा

पादद्वयेन च एकं कृष्णसर्पं गृहीत्वा तस्मिन् तरावुपाविशत् । तेन पक्षिणा आक्रम्य उह्यमानस्य उत्क्रान्तजीवितस्य तस्य सर्पस्य आस्यात् विषलाला विनिर्ययौ । सा अधःस्थिते तस्मिन्नन्नपात्रे तदापतत् । हरिस्वामी तु तद्दृष्ट्वा क्षुधार्त्तः आगत्यैव तत् सर्वं भुक्तवान् । अथ तस्य भुक्तवत एव तीव्रा विषज्वाला प्रादुरभवत् । अहो विधौ विपर्य्यस्ते किमिव न विपर्य्यति ? तत् सक्षीरघृतशर्करम् अन्नं मे विषी-भूतमिति जल्पन् हरिस्वामी परिस्खलन् तां मन्त्रिणस्तस्य विप्रस्य गेहिनीं गत्वा प्राब्रवीत् ब्राह्मणि । त्वद्दत्तात् अन्नात् मे विषं जातं तत् क्षिप्रं कञ्चित् विषमन्त्रिणम् आनय, नाचेत् तव ब्रह्महत्या भविता । इत्याकर्ण्य सा साध्वी किमेतदिति विह्वला यावत् विषमन्त्रिणमाना-यितुं चेष्टते स्म तावत् स हरिस्वामी परावृत्तनेत्रः प्राणै-र्व्ययुज्यत । ततः सा निर्दोषापि आतिथेयी अपि सत्रिणा तेन विप्रेण मिथ्यातिथिवधजनितकोपेन भार्य्या निष्कासिता शुभादपि कर्मणः समुत्पन्नमृषापवादा जा-तावमाना च तपसे तीर्थमशिश्रियत् । इति कथामाख्याय वेतालः पृच्छति स्म राजन् ! एषां सर्पश्येनान्नदातॄणां मध्ये कस्य विप्रवधोऽभूत् ? अस्य वादो धर्मराजसकाशेऽपि अभवत् परं न कोऽपि निर्णयः समजनि । तत् राजेन्द्र ! त्वमेव ब्रूहि, कस्य ब्रह्महत्या जाता ? मिथ्या ब्रुवतो जान-तस्ते स एव शापः स्मर्त्तव्य इति । तदाकर्ण्य राजा समु-ज्झितमौनस्तं वेतालमब्रवीत् कस्य तत् पातकं ? सर्पस्य तावदवशस्य शत्रुणा भक्ष्यमाणस्य कोऽस्त्यपराधः ?

श्येनेनापि क्षुधितात्मना न किमपि दृष्टं तत्तस्यापि नात्रापराधः। अकस्मात् प्राप्तमतिथिं भक्ष्येण भोजयतोर्दम्पत्योरपि द्वयोर्वान्यतरस्य वा कथं दोषः? यतस्तौ धर्मैकप्रवृत्तौ नेममपराधमर्हतः। अहं तावत् तस्यैवैषा ब्रह्महत्या इति मन्ये योऽविचार्य्यैव एषामन्यतरस्य तां ब्रूयादिति। इति वादिनो नृपस्य स्कन्धात् स वेतालस्तत्क्षणादलक्षितः तमेव शिंशपातरुमवललम्बे। राजापि तथैव तमानेतुं समुद्योगी तमन्वधावत्।

---

## अथ अष्टाशीतितमस्तरङ्गः।

अस्ति अयोध्या नाम नगरी। या रक्षःकुलकृतान्तस्य रामस्य राजधानी आसीत् तस्यां वीरकेतुर्नाम राजा महाबाहुः वसन् प्राकारो नगरीमिव इमां क्षोणीं ररक्ष। तस्मिन् महीपतौ शासति महीम् अस्यां पुर्य्यां रत्नदत्तो नाम कश्चित् महावणिक् प्रतिवसति स्म। तस्य नन्दयन्तीति समाख्यायां पत्न्यां रत्नवती नाम देवाराधनलब्धा सुता समजायत। सा पितृवेश्मनि रूपलावण्यविनयैः सहजैर्गुणैः सह दिने दिने वृद्धिमवाप। ताञ्च यौवनशालिनीं वीक्ष्य केवल महान्तो वणिजो न, राजानोऽपि तत् पितरं ययाचिरे। सा तु मनस्विनी पुरुषद्वेषिणी वासववमपि भर्त्तारं न कामयते स्म। विवाहकथामपि

श्रुत्वा प्राणान् त्यक्तुं यतते स्म। तेन तस्य पिता वात्सल्यदुःखितस्तूष्णीं तस्थौ। स च प्रवादस्तस्यामयोध्यायां सर्वत्र पप्रथे।

अत्रान्तरे चौरैर्मुष्यमाणाः समस्ताः पौराः सम्भूय तं नृपं वीरकेतुं व्यजिज्ञपन् प्रभो! प्रतिरात्रं चौरैरिह वयं मुष्यामहे, ते तु नास्माभिर्लक्ष्यन्ते। तदिदानीं देवः प्रमाणमिति पौरैर्विज्ञप्तो राजा तां पुरीमभितः तस्कराणामनुसन्धानाय कञ्चान् रात्रिरक्षकान् आदिशत्। ते च यदा समन्विष्य न तान् चौरानवापुः, तदा राजा स्वयं निशि एकाकी गृहीतशस्त्रो भ्रमन् एकतः एकं प्राकारपृष्ठेन यान्तं निःशब्दपदसञ्चारविचित्रगतिकौशलं सशङ्कलोलनयनं मुहुः पृष्ठतः पश्यन्तं कमपि पुरुषमपश्यत्। अयं स चौरो मे पुरीं मुष्णाति एकचरः। इति मत्वा स नृपस्तस्यान्तिकमुपययौ। ततः स चौरस्तं नृपं दृष्ट्वा कोऽसीति पप्रच्छ। राजापि चौरोऽहमिति तं चौरं प्रत्यवादीत्। तदाकर्ण्य स चौरः सानन्दं तमभ्यधात्। तर्हि दिष्ट्या त्वं मे सुहृत्, तत् एहि मम गृहं मित्राचारं तावत् करोमि इति। तदाकर्ण्य स राजा तथेत्युक्त्वा तेनैव चौरेण सह वनान्तः प्राकारवेष्टितम् अशेषभोगशोभाढ्यं भास्वद्रत्नविराजितं नवीनं बलिराजानधिष्ठितं पातालमिव तद्गृहं ययौ। तत्र प्रविष्टे तस्मिन् कृतासनपरिग्रहे राजनि स तस्करः गृहाभ्यन्तरं प्रविवेश। क्षणे च तस्मिन् कापि दासी समेत्य तं नृपमवादीत् महाभाग! कथं त्वमिह मृत्युमुखे प्रविष्टः? एकचौ-

दोऽसौ निर्गत्य त्वयि पापमाचरिष्यति। ध्रुवमयं विश्वासघाती, तदितस्त्वरितं व्रज। इत्युक्तस्तया स राजा द्रुतं निर्गत्य राजधानीञ्च गत्वा निशि सैन्यानि असज्जयत्। ससैन्यश्चागत्य तस्य दास्याः तत् भूगृहं तैर्बलैररुणत्। अथ गृहं रुद्धं दृष्ट्वा स चौरः हस्तं प्रति भेदमवगत्य मरणे निश्चितमतिः शूरो युद्धाय निर्ययौ। निर्गतश्च रणे अमानुषं विक्रमं कुर्वन् करिणां करान्, वाजिनां जङ्घान् भटानाञ्च शिरांसि एक एव खड्गचर्मभृत् चिच्छेद। ततस्तं चपितानीकं नृपः स्वयमभ्यधावत्। स राजा खड्गविद्याभिज्ञः करयुक्तिमवलम्ब्य तस्य हस्तात् निस्त्रिंशं क्षुरिकाञ्च जहार। ततोऽशस्त्रं तं मुक्तशस्त्रो नृपो बाहुयुद्धेन चौरं धरण्यां जीवग्राहमग्रहीत्। प्रातश्च नीयमानं शूलारोपणाय बध्यभूमिं तं सडिण्डिमं चौरं सा वणिक्कन्या हर्म्यपृष्ठतः रत्नवती ददर्श। तञ्च व्रणितं धूलिलिप्ताङ्गमपि दृष्ट्वा सा काममोहिता तत्क्षणं पितरमुपेत्य प्रोवाच तात!. योऽयं बध्यभूमिं नीयते चौरः, अयमेव मया भर्त्ता वृतः, तदेनं नृपात् रक्ष, नोचेदहं एतमनुम्रिये। तदाकर्ण्य पिता तामवादीत् पुत्रि! किमिदं भाषसे? चौरोऽयं पौराणां सर्वस्वहृत् राजपुरुषैः बधार्थं नीयते कथमेनमहं नृपतेर्मोचयामि, कीदृशी च ते प्रवृत्तिरियमिति निर्भर्त्स्यमानापि यदा सा निर्बन्धं न तत्याज तदासौ वणिक् दुहितृवत्सलः राजानं समुपेत्य सर्वस्वेनापि तं चौरं बधमोक्षमयाचत। राजा तु हेमकोटिशतैः प्रलोभ्यमानोऽपि तं स्वशरीरपणा-

नीतं सर्वापहारिणं चौरं न तत्याज। ततः पितरि विमुखे प्रत्यावृत्ते सा वणिक्सुता बन्धुभिर्वार्थ्यमाणापि अनुमर्त्तुं कृतस्नाना शिविकामारुह्य तस्य दस्योर्बध्यभूमिमगात्। पितरौ बान्धवाश्च रुदन्तस्तामन्वगच्छन्। तस्मिंश्च समये बधकैः स चौरः शूलमधिरोपितः गलत्प्राणस्तथागतां स्वजनान्वितां दृष्ट्वा कथयतो जनात् वृत्तान्तं शृण्वन् क्षणमश्रूणि मुक्त्वा हसन् प्राणान् जहौ। ततः शूलादवतारितं चौरकलेवरमादाय सा साध्वी वणिक्सुता चितामारुरोह। तस्मिंश्च क्षणे श्मशाने कृतनिवासः भगवान् भैरभः अदृश्यः अन्तरीक्षात् वाचमिमामुवाच पतिव्रते! अस्मिन् स्वयंवरपतौ तव अनया भक्त्या तुष्टोऽस्मि, तत् मत्तो वरं प्रार्थयस्व। तन्निशम्य सा वरदं देवं प्रणम्य वरं वव्रे। भगवन्! अपुत्रस्य मे पितुः पुत्रशतं भूयात् येनानन्यसुतोऽयं मां विना प्राणान् जह्यात् इति वादिनीं तां साध्वीं देवः पुनरन्तरीक्षात् अब्रवीत् साध्वि! पितुस्ते पुत्रशतं भवतु, अन्यच्च वरं वृणीष्व, त्वादृशी दृढ़सत्त्वा एतावन्मात्रं नार्हति। तदाकर्ण्य सा अवादीत् देव! यदि मयि प्रसन्नोऽसि, तदेष मे भर्त्ता जीवतु धार्मिकश्च सदा भवतु इति। एवमस्तु अक्षतशरीरस्तव पतिः उत्तिष्ठतु, धार्मिकश्च भवतु राजा वीरकेतुश्चास्य तुष्यतु इति उक्तवति अदृश्यमूर्त्तौ शर्वे नभसि स्थिते सहसा स चौरो जीवन्नक्षतशरीरः समुत्तस्थौ। ततो विस्मितहृष्टो रत्नदत्तो वणिक् तां रत्नवतीं चौरं जामातरञ्चादाय प्रहृष्टैर्बान्धवैः सार्द्धं निजमन्दिरं प्रविश्य लब्धपुत्रवरः स्वानन्दो-

चितमुत्सवमकरोत्। ज्ञातवृत्तान्तस्तुष्टश्च राजा तदैव तं चौरमेकवीरमानाय्य सेनापतिं व्यधात्। स च चौर्य्यात् निवृत्य तां वणिक्सुतां परिणीय धर्मरतः तया साकं सुखेन कालं निनाय। इति कथामाख्याय वेतालो दत्त-पूर्व्वशापभयं तं भूपं पप्रच्छ राजेन्द्र! ब्रूहि सपितृकां समुपागतां तां वणिक्सुतां दृष्ट्वा चौरेण शूलपृष्ठवर्त्तिना रुदितं हसितञ्च किम्? राजा प्रत्यवदत् चौरेण अस्य अकारणबन्धोः वणिजः नानृण्यं लब्धमिति दुःखात् रुदितम्। किमियं कन्या नृपानपि विहाय चौरे मयि अनुरक्ता, अहो स्त्रीचित्तमतिविचित्रमिति सविस्मयेन हसितञ्च। इति वादिनस्तस्य महीपतेरंसात् स वेतालस्तत्-क्षणमलक्षितः स्वं निलयं प्रत्यपद्यत। राजापि अवि-लुप्तधैर्य्यस्तमनुसरन् तं शिंशपातरुमाजगाम।

---

## अथ एकोननवतितमस्तरङ्गः।

ततो नृपः पुनस्तथैव गत्वा शिंशपामूलं, तं वेतालं प्राग्वत् स्कन्धमारोप्य गन्तव्याभिमुखं गन्तुमारेभे। वेता-लोऽपि यान्तं तं नृपं कथामेतामाचचक्षे।

आसीत् नेपालराज्ये शिवपुरं नाम नगरम्। तत्र पुरा यशःकेतुर्नाम नृपः यथार्थनामा प्रतिवसति स्म। स मन्त्रिणि प्रज्ञासागरनामके राज्यभारं निवेश्य चन्द्रप-

भानाम्ना महादेव्या समं भोगानसेवत । कालेन गच्छता तस्य तस्यां देव्यां शशिप्रभा नाम जगत्त्रयशशिप्रभा कन्या समुदपद्यत । क्रमेण सा यौवनस्था कदाचित् मधुमासे सपरिच्छदा उद्याने यात्रोत्सवं द्रष्टुमगमत् । अत्रान्तरे कश्चित् आढ्यपुत्रो मनःस्वामी नाम द्विजयुवा यात्रादर्शनार्थमागतः तां कुसुमावचयोद्यताम् उत्क्षिप्तबाहुलतिकां लक्षितैकपयोधरां दृष्ट्वा मदनमोहितः तया हृतया सद्यो-हृतस्य मनसः स्वामी नैवाभवत् । किमियं मनोभुवो रतिः वसन्तसम्भृतानि पुष्पाणि स्वयम् उच्चिनुते ? किं वा स्वयं वनदेवता माधवमर्च्चयितुमागता इति चिन्तयन्तं त सा नृपनन्दिनी समपश्यत् । सा च दृष्टमात्रे साङ्गे नव इव स्मरे तस्मिन् समुत्सुका पुष्पाणि च साङ्गानि च नास्मरत् । इत्येवं यावत् तौ अन्योऽन्यानुरक्तौ चित्र-लिखिताविवास्तां तावत् सहसा हाहेति रवः समुदभूत् । किमेतदिति समुत्क्षिप्तकन्धरं पश्यतोस्तयोः उपलभ्यान्य-मदगर्भ्यथया कषा भग्नानालो मत्तो द्विपः निर्गत्य मार्गद्रुमान् रुजन् पातिताधोरणो लम्बमानाङ्कुशस्तत्रा-गात् । ततश्च परिजने संत्रस्तविद्रुते स मनःस्वामी युवा ससम्भ्रम प्रधाव्य तां राजपुत्रीम् अङ्गैः किञ्चित् कृताश्लेषां भयप्रेमत्रपाकुलां दोर्भ्यामादाय गजगोचरात सुदूरमन-यत् । अथ कथमपि प्राप्तपरिजना तं युवानं पश्यन्ती माराग्निपुटपाकपच्यमाना सत्वरं राजभवनमगात् । स तु युवा उद्यानात् तस्मात् स्वान्तःपुरप्रविष्टां तां दृष्ट्वा समुत्सुको व्यचिन्तयत् एतां विना नाहं क्षणमपि स्थातु जीवितु

वा समुत्सहे। तन्मम श्रीमूलदेवो नामात्र सिद्धो धूर्त्तो गुरुर्मतिः इति सञ्चिन्त्य कथमपि अवसिते तस्मिन् दिने प्रातस्तस्य गुरोर्मूलदेवस्यान्तिकमगात्। अपश्यच्च तं मित्रेण शशिना नित्यसङ्गतम्। ततश्च समुपेत्य तस्मै प्रणम्य तत् स्वमनीषितं न्यवेदयत्। सोऽपि विहस्य तस्य तत् साधयितुं प्रत्यपद्यत। ततः स धूर्त्तपतिः मुखे योगगुलिकां निक्षिप्य आत्मानं वृद्धब्राह्मणरूपमकरोत्। द्वितीयां गुलिकां, तस्य मनःस्वामिनो मुखे निक्षिप्य तं सुकान्तकन्यकारूपं व्यधाच्च। अथ स धूर्त्तराजः तद्रूपं तं समादाय तं राजानमुपेत्य सभायां व्यजिज्ञपत् राजन्! एक एवास्ति मे पुत्रः तत्कृते दूरात् इयं कन्या याचित्वा आनीता परं स मे पुत्रः क्वापि गतः। तमन्वेष्टुमहं यामि, तदेषा कन्या त्वया रक्ष्यताम्। यावदहं सुतम् अन्वेषामि, त्वं हि विश्वस्य रक्षिता इति तच्छ्रुत्वा शापभयेन स भूपतिस्तथेति प्रतिपद्य सुतां शशिप्रभामानाययामास जगाद च तां पुत्रि! कन्यामिमां स्वमन्दिरे रक्ष, स्वपार्श्वमेवास्याः शय्यां प्रकल्पय। इति पित्रादिष्टया तया स कन्यारूपः द्विजयुवा मनःस्वामी निजमन्तःपुरं नीतः।

अथ तस्मिन् मूलदेवे यथारुचि प्रयाते कन्यारूपः स मनःस्वामी प्रियान्तिके अहर्निशं तिष्ठन् कतिपयैः दिवसैः सखीमिव प्रीतिविस्रम्भशालिनीं विदित्वा एकदा विरहक्षामां शयनीयलुठन्तीं तां राजसुतां रात्रौ आसन्नशयनस्थितः पप्रच्छ सखि! किं त्वं दिने दिने पाण्डुर-

कान्तिः क्षीयमाणा कान्तिवियुक्ते न दुःखिता तिष्ठसि? ब्रूहि। स्निग्धमुग्धे सखीजने मयि कोऽविश्वासः? न चेत् मम वदिष्यसि तदाहं न भोक्ष्ये। तदाकर्ण्य सा विनिश्वस्य शनैरब्रवीत् सखि! किं मे त्वयि अविश्वासः शृणु कथयामि।

एकदाहं यात्रां द्रष्टुं मधूद्यानं गताभूवम्। अपश्यञ्च तत्र कञ्चित् सुभगं हिममुक्तेन्दुसश्रीकं दर्शनोद्दीपितस्मरं मधुमासमिवालङ्कृतकाननं ब्राह्मणपुत्रम्। यावदिमे समुत्सुके तन्मुखेन्दुद्युतिसुधापायिनी लोचने मे चकोरायितुं प्रवृत्ते, तावत् मदस्रावी निरर्गलः अकालकालमेघनिभः महागजो गर्जन् अकस्मात् तत्रागात्। तत्सम्भ्रमाच्च परिजने भयविद्रुते भयविह्वला अहं तेन विप्रपुत्रेण दोर्भ्यामुत्क्षिप्य दूरतो नीता तदा, श्रीखण्डलिप्तेव सुधासिक्तेव न जाने तदा काममपि तदङ्गस्पर्शेन दशामन्वभवम्। क्षणेन च परिजनेन मिलितेन अवशाहमिहानीता स्वर्गादिव भुवस्तले निक्षिप्तास्मि। तदा प्रभृति तैस्तैः सङ्कल्पैः कल्पितसङ्गमं तं प्राणदं प्रियं पार्श्वस्थमिव सदा पश्यामि, सुप्तापि तमेव आश्लिष्यामि, किं बहुना तमेव सततं चिन्तयन्ती कालं हरामीति। तदेष मां प्राणेश्वरविरहानलः दिवानिशं दहति। इति तस्या वाक्सुधया पूरितश्रवणविवरः स मनःस्वामी सानन्दः आत्मानं कृतार्थं मन्यमानः आत्मप्रकाशनावसरोऽयमिति विविच्य मुखात् गुलिकां निष्कास्य स्वं रूपं प्रकटीचक्रे। जगाद सुन्दरि! स एवाहं यस्त्वया उद्याने दर्शनक्रीत-

श्चिरदासतां नीतः। त्वद्विरहातुरोऽहमिदं कन्यारूपं गृहीत्वा त्वत्सकाशमागतोऽस्मि। तदिदानीं कामसन्तप्तं मां प्रसाददृष्ट्या निर्वापय इति। एवं वदन्तं तं प्राणेश्वरं प्राप्तं विलोक्य सा राजसुता क्षिप्रं स्नेहाश्चर्यत्रपाकुला सहसा किंकर्त्तव्यविमूढा समपद्यत। ततश्च गान्धर्वविवाहेन कृतमङ्गलौ तौ प्रेम्णा परमेण तत्र निभृतं तस्थतुः। ततः स मनःस्वामी तत्र द्विरूपभृत् तस्थौ। दिवा सगुलिकः कन्यारूपः, रात्रौ निष्कासितगुलिकः पुमान्।

अथ गच्छत्सु दिनेषु यशःकेतोर्नृपस्य श्यालको मृगाङ्कदत्तः मृगाङ्कदत्तां नाम निजां सुतां द्विजातये महामन्त्रिणः प्रज्ञासागरस्य सूनवे महाडम्बरपुरःसरं प्रददौ। तस्मिन् मातुलपुत्त्र्या विवाहे सा राजपुत्त्री शशिप्रभा निमन्त्रिता मातुलगृहं प्रायात्। तया सह सोऽपि कन्यारूपी मनस्वी समायात्। तत्र तं कान्तं कन्यकारूपं मनःस्वामिनं दृष्ट्वा स मन्त्रिसुतः स्मरव्याधबाणैर्नितरां हतोऽभवत्। ततस्तया कपटकन्यया मुषितचित्तः स मन्त्रिसुतः स्ववधूसहितोऽपि शून्यमात्मानं मन्यमानः स्वगृहं जगाम। आगत्य च गृहं तन्मुखलावण्यध्यानासक्तो मोहमगात्। किमेतदिति सम्भ्रान्ते परिजने उत्सवोज्झिते स प्रज्ञासागरः पिता द्रुतं तत्रोपागमत्। तेन च पित्रा आश्वास्यमानः स मोहात् प्रबुध्य प्रलपन्निव सोन्मादं मनोगतमुज्जगार। तच्च पराधीनं मत्वा तत्पितरि नितरां व्याकुले विदितवृत्तान्तो राजा तत्रैवाययौ। स राजा तं

तथाविधं दृष्ट्वा सप्तमीं मदनावस्थां गतोऽयमिति मन्यमानो जगाद कथं ब्राह्मणनिक्षेपः कन्यासै दीयते तया च विना नियतमसौ पश्चिमां दशां यास्यति। अस्मिंश्च विनष्टे अस्य पिता महामन्त्री अपि विनंक्ष्यति। अस्य च नाशे मे राज्यनाशः तदत्र का गतिः? इत्युक्ताः सर्वास्ताः प्रकृतयः प्राब्रुवन् राजन्! प्रजानां धर्मरक्षण राज्ञां परमोधर्मः, तस्य मूलं मन्त्रं विदुः स च मन्त्रिष्ववस्थितः। मन्त्रिनाशे मूलनाशात् कथं धर्मरक्षा? अस्य च सपुत्रस्य मन्त्रिणो द्विजस्य बधात् पापञ्च स्यात् तस्मादासर्वाऽय धर्मविप्लवः भवता अवश्यं परिहर्त्तव्यः। सा विप्रन्यस्तकुमारिका मन्त्रिपुत्राय दातव्या, अथ कालान्तरं विप्रः आगमिष्यति, तदा तस्य प्रतिविधानं भविता इति एवं प्रकृतिभिरुक्तो नृपतिस्तथेति तां कूटकन्यां मन्त्रिपुत्राय दातुं प्रत्यपद्यत। अथ लग्नं निश्चित्य राजसुतागृहात् आनीतः कन्यारूपः स मनःस्वामी तं महीपतिं जगाद राजन्! अन्येन अन्यार्थमानीतां मां यदि अन्यस्मै ददासि, काम तदस्तु, त्वं हि राजा, धर्माधर्मौ तवोचितौ। अहन्तु ईदृशेन समयेन विवाहमिच्छामि, तावदहं बलात् पत्या एकशय्यां न नेतव्या यावदसौ षण्मासान् तीर्थानि परिभ्राम्य न समायतः। नोचेत् दन्तैः कृत्तजिह्वां मामवधारय। इति तेन समये उक्ते राज्ञा सम्बोधितः स मन्त्रिपुत्रः प्राप्तनिर्वृतिस्तथेति प्रतिपद्य आशु तं परिणीय एकस्मिन् वासके वेश्मनि रक्षितां तां मृगाङ्कदत्तां ताञ्च कूटकन्यां संस्थापयित्वा तीर्थयात्रायै प्रतस्थे। स च मनःस्वामी

स्त्रीरूपस्तया मृगाङ्कदत्तया सह एकगृहे समानशयनाशनस्तस्थौ। तथास्थितं तं कदाचित् सा मृगाङ्कदत्ता निशि बहिःसुप्तपरिजने शय्यागृहे रहसि प्राब्रवीत् सखि! कामपि कथामाख्याहि मे निद्रा नास्ति। तदाकर्ण्य स स्त्रीरूपो युवा अस्यै कथामिकामकथयत् सखि! पूर्वमासीत् इला नाम राजा सूर्य्यवंशभवः। गौरीशापेन स्त्रीत्वं प्राप्तस्य तस्य विश्वैकमोहनं रूपमासीत्, तदवलोक्य देवोद्यानगतश्चन्द्रतनयोबुधस्तां चकमे। तयोश्च सङ्गात् पुरूरवाः समजायत। इति कथां संक्षेपेणोक्ता स धूर्त्तः पुनरुवाच सखि! इत्थं देवतादेशात् मन्त्रौषधिबलाच्च कदाचित् पुरुषः स्त्री कदाचन स्त्री च पुमान् स्यात्। तदेवं महातामपि कामजाः संयोगा जायन्ते। श्रुत्वैतत् सा मुग्धा तरुणी मृगाङ्कदत्ता सहवासविस्रम्भात् प्राह सखि। श्रुत्वा ते इमां कथां मे अङ्गं सिमिसिमायते, हृदयञ्चेदं सीदतीव, तदेतत् किं ब्रूहि। तदाकर्ण्य अङ्गनारूपः स युवा तां प्रत्यवादीत् सखि! एतानि ते अपूर्वाणि कामचिह्नानि, मया एतानि अनुभूतानि, अहं तव न निगुह्ये। इति तेनोक्ता सा पुनवादीत् सखि! त्वं मे प्राणसमा, तदहं त्वां किं न वच्मि, अपि केनापि उपायेन इह पुंसः प्रवेशः स्यात्? एवमुक्तवतीं तां स धूर्त्तपतेः शिष्यो युवा विप्रः प्राह यद्येवं तत्ते वदामि, सखि! अस्ति मे वैष्णवः प्रसादः, येनाहं स्वेच्छया निशि पुरुषः स्यां तदेषः अद्य त्वत्कृते पुमान् भवामि। इत्युक्ता स मनःस्वामी मुखात् गुलिकामवतार्य्य परमसुन्दरस्वरूपं तस्यै अदर्शयत्। ततस्तयो स्तत्कालो-

चितरसः कोऽपि रतोत्सवः प्रावर्त्तत। ततश्च स तया मन्त्रिसुतभार्य्यया साकं दिवा नारी रात्रौ पुमान् भूत्वा कञ्चित् कालमनयत्।

अथ तं मन्त्रिसुतमासन्नागमनकालं बुद्धा तां तद्भार्य्यामादाय निशि स्वैरं पलाय्य क्वापि प्रायात्। ततश्च तं वृत्तान्तं विदित्वा स मूलदेवःपुनः वृद्धद्विजाकृतिः शशिना मित्रेण सम्भूय तं यशःकेतुमुपेत्य सविनयमब्रवीत् देव! आनीतोऽयं मया पुत्रः, तद्देहि मे तां स्नुषामिति। ततः स नृपः सम्मन्त्र्य शापभीतः समभ्यधात् ब्रह्मन्! न जाने सा ते स्नुषा क्व गता? तत् क्षमस्व, अस्माच्चापराधात् स्वसुतां तव सुताय ददामि। इत्युक्त्वा तं धूर्त्तराजं क्रोधनिष्ठुरं विब्रुवाणं जरद्विप्ररूपं कथञ्चिदनुनीय ततस्तस्मै कृततत्पुत्रापदेशाय शशिने तां तनयां शशिप्रभां यथाविधि प्रादात्। ततः स मूलदेवः तथाभूतौ वधूवरौ नीत्वा स्वं निलयं प्रायात्। तत स्तस्मिन् मनःस्वामिनि उपस्थिते तस्य मूलदेवस्य अग्रतः तस्य शशिनश्च महान् विवादः समजायत। मनःस्वामी अब्रवीत् एषा शशिप्रभा मह्यं दीयतां, कन्यैवासौ मया गुरोरनुग्रहात् प्राक् परिणीता इति। शशी प्रोवाच मूर्ख! कोऽस्यास्त्वं ममैवैषा भार्य्या। अग्निसाक्षिकमेषा पिता मह्यं दत्ता। इत्थं मायाबलप्राप्तराजपुत्रीनिमित्तं विवदमानयोस्तयोः कोऽपि निर्णयः नासीत्। तद्राजन्! त्वं मम ब्रूहि,कस्येयं भार्य्या उपपद्यते? एतं मे संशयं छिन्धि, समयश्च त्वया मम स्मर्य्यतामिति। इति वेतालवचः श्रुत्वा राजा तं प्रत्यभाषत मन्येऽहं शशिन

एवासौ न्याय्या भार्य्या, यस्मै तत्पिता सर्वजनसमक्षं अग्निसाक्षिकञ्च धर्म्येण वर्त्मना दत्ता। मनःस्वामी तां चौर्य्येण गान्धर्वधर्मतो भेजे। चौरस्य परस्त्रेषु स्वत्वं नैव कदाचित् न्याय्यमिति। एतत् राज्ञो वचनं निशम्य स वेतालः पुनस्तथैव स्वं निलयं प्राप। राजापि दृढ़प्रयत्नः पुनस्तत्र गत्वा तं स्कन्धमधिरोप्य गन्तुं प्रववृते।

---

## अथ नवतितमस्तरङ्गः।

अथ राजा तं वेतालं नीत्वा गच्छति स्म वेतालश्च तमब्रवीत् राजन्! शृणु अपूर्वामेकां कथाम्।

अस्ति हिमवान् नाम सर्वरत्नभूमिर्नगेन्द्रः। यो हि गौरीगङ्गयोः हरभार्य्ययोस्तुल्यप्रभवः। यश्च कुलभूभृताम् अग्रणीः सूर्य्येणाप्यदृष्टपृष्ठदेशः अभिमानोन्नतः सर्वत्र गीयते। तस्य सानोरुपरि काञ्चनपुरं नाम पुरं रविणा न्यासीकृतं रश्मिवृन्दमिव विभाति। तत्र जीमूतकेतुरिति श्रीमान् विद्याधरपतिः पुरन्दर इव मेरौ ममध्युवास। तस्य गृहोद्याने कुलक्रमागतः कल्पतरुः स्थितः। स राजा जीमूतकेतुः तं देवस्वरूपं कल्पतरुमाराध्य तत्प्रसादात् जातिस्मरं बोधिसत्त्वांशसम्भवं दानवीरं महासत्त्वं सर्व-

भूतानुकम्पिनं गुरुशुश्रूषणपरं जीमूतवाहनं नाम पुत्रं प्राप।

कालेन सम्प्राप्तयौवनं तं स राजा सद्भिस्तद्गुणैः सचिवैश्च प्रेरितः यौवराज्ये अभिषिक्तवान्। कदाचित् यौवराज्यस्थितः स जीमूतवाहनः हितैषिभिः पितृमन्त्रिभिरुपेत्य जगदे युवराज! योऽयं कल्पतरुः सर्वकामदः सर्वभूतानामधृष्यश्च तवोद्याने तिष्ठति, अयं तव सदा पूज्यः। अस्मिन् अनुकूले स्थिते शक्रोऽपि नास्मान् बाधितुं शक्नुयात् किमुतापरः? एतदाकर्ण्य स जीमूतवाहनोऽन्तरचिन्तयत् अहो! बत ईदृशममरपादपं प्राप्यापि पूर्वैः पुरुषैरस्माकं तादृशं फलं किमपि नासादितं केवलं कैश्चिदपि कृपणैस्तैः कश्चिदपि अर्थमर्थितः, तेन चात्मा च महात्मा चैषः उभौ लाघवं नीतौ। तदहमस्मात् मनोरथमभीष्टं साधयामि, इत्यालोच्य स महात्मा पितुरन्तिकमाजगाम। आगत्य च विहिताशेषशुश्रूषया परितोषितं सुखमासीनं पितरमेकान्ते व्यजिज्ञपत् तात! त्वमेव जानासि यदेतस्मिन् संसारसागरे आशरीरमिदं सर्वं धनं वीचिविभ्रमचञ्चलं विशेषेण अचिरस्थायिनी प्रकाशपलायिनी सन्ध्याविद्युदिव चला लक्ष्मीः न कुत्रापि कदापि स्थिरा। एकः परोपकार एवास्मिन् संसारे अनश्वरः युगान्तशतसाक्षिणी धर्मयशसी प्रसूते। तात! तत् क्षणिकेषु एषु भवेषु अस्माभिरीदृशः कल्पतरुः किमर्थं रक्ष्यते यैश्च पूर्वैरयं मम ममेति आग्रहेण रक्षितः, तैरिदानीं कुत्र गतम्? तेषां कस्यायम् अस्य वा ते के? तस्मात्

परोपकारैकफलसिद्धये त्वदाज्ञया इमं कामदं कल्प-
पादपम् आराधयामि ।

अथ पित्रा तथेति अभ्यनुज्ञातः स जीमूतवाहनः कल्पतरुं गत्वा उवाच देव ! त्वया अस्मत् पूर्वेषामभीष्टाः कामाः पूरिताः, तन्ममैकमनन्यं कामं परिपूरय । यथा पृथ्वीमदरिद्रां पश्यामि तथा करोतु देवः । भद्रमस्तु ते, व्रज, लोकाय अर्थिने त्वं मया दत्तोऽसि । इति वादिनि कृताञ्जलौ जीमूतवाहने त्यक्तस्त्वया एषोऽहं यातोऽस्मि इति वाक् तस्मात्तरोरुद्भूत् । क्षणेन च स कल्पतरु-र्दिवः समुत्पत्य भुवि तथा वसूनि अवर्षत् यथा न कोऽपि दुर्गत आसीत् । ततस्तस्य तया सर्वजीवानुकम्पया त्रैलोक्ये यशः पप्रथे ।

अथ तद्गोत्रजाः सर्वे मात्सर्य्यात् असहिष्णवः कल्प-पादपरहितं तं जीमूतवाहनं सपितृकं सुजयं मत्वा सम्भूय च तस्य राज्यापहरणाय योद्धुं समनह्यन्त । तद्-वलोक्य जीमूतवाहनः पितरमवादीत् तात ! धृता-युधेन त्वया योद्धुं कस्य शक्तिरस्ति ? किन्तु अस्य पापस्य विनाशिनः शरीरस्य कृते बन्धून् हत्वा कोऽकृपणो राज्य-माकाङ्क्षति ? तत् किं नो राज्येन, अन्यत्र क्वचिद् गत्वा वयं धर्ममेव आचरिष्यामः । येन लोकयोरुभयोः सद्गतिः स्यात् । कृपणा एते दायादा राज्यलोलुपा मोदन्ताम् । इति वादिनं तं जीमूतकेतुरब्रवीत् पुत्र ! अहं त्वदर्थं राज्यमिच्छामि, त्वञ्चेत् कृपया तत् जहासि, तदा वृद्धस्य मे तेन किम् ? इत्थं कृताभ्यनुज्ञेन पित्रा मात्रा च सम-

त्थाय नितान्तमुत्सुकः तदैव गौर्य्या मन्दिरमगात्। तत्र तेन सख्या मुनिपुत्रेण पृष्ठतः आगत्य, यावदसौ समाश्वास्यते तावत् मदनानलविह्वला सा मलयवती विरहासहा एकाकिनी गृहान्निर्गत्य गुप्तं प्राणत्यागाय तत्र निर्जने समायात् सा पादपान्तरितं कान्तमलक्षयन्ती उदश्रुलोचना देवीं गौरीं व्यजिज्ञपत् देवि! तव प्रसादात् अस्मिन् जन्मनि यदि मे जीमूतवाहनः पतिः न लब्धः, तदा अन्यस्मिन्नपि जन्मनि यथा स एव मे पतिर्भूयात् तथा प्रसादः क्रियता मित्युक्त्वा सा स्वोत्तरीयेण तत्क्षणम् अशोकतरुशाखायां तस्या एव देव्या अग्रतः हा नाथ! जीमूतवाहन! विश्वविख्यातकरुणिनापि त्वया कथमस्मि न परित्राता इत्युक्त्वा यावत् गले पाशं नियच्छति तावत् दिवि उदीरिता भारती अन्तरीक्षात् समुच्चचार। पुत्रि! मा साहसं कार्षीः भाविविद्याधरचक्रवर्त्ती जीमूतवाहनस्ते पतिर्भविष्यति। इति देवीं वाचमाकर्ण्य सवयस्यः जीमूतवाहनः हृष्टां तां प्रियामुपाजगाम। एष ते देव्या वर प्रदत्तः सत्यमेव इति तस्मिन् मुनिपुत्रे तां बालां जल्पति जीमूतवाहनस्तत्तत् पेशलं ब्रुवन् स्वहस्तेनैव तस्याः कण्ठात् पाशममोचयत्। ततोऽकस्मात् तत्र पुष्पाणि चिन्वती कापि सखी तं व्यापारमवलोकयन्ती हृष्टा समेत्य तां सव्रीड़या दृशा भुवं लिखन्तीं जगाद सखि! दिष्ट्या वर्द्धसे अभीष्टसिद्धितः, अद्यैव महाराजो विश्वावसुस्ते पिता मम सन्निधौ कुमारेण मित्रावसुना विज्ञप्तः तात! जगन्मान्यः कल्पतरुप्रदः योऽयं विद्याधरेन्द्रतनयो जीमूत-

वाहन इहागत:, स: अतिथित्वेन न: पूज्य: तादृशश्चान्यो वर: न दृश्यते, तस्मादसौ मलयवत्या कन्यारत्नेन पूज्यताम्। तथेति राज्ञा अहिते भ्राता ते मित्रावसु: अस्य महाभागस्य आश्रममद्यैव गत:। मन्ये सद्य एव ते विवाहो भविता तत् त्वं मन्दिरमागच्छ, एष च महाभाग: स्वमाश्रमं यातु। इति तया सख्याभिहिता सा शनै: प्रहृष्टा समुत्सुका च प्रायात्। जीमूतवाहनोऽपि शीघ्रमाश्रम माजगाम। आगत्य च मित्रावसोर्यथाभीष्टं कार्य्यं श्रुत्वा अभिनन्द्य च स्वां जातिं पूर्ववृत्तान्तञ्च तस्मै समाचचक्षे। ततो मित्रावसु: प्रीत: परितुष्टयो स्तत्पित्रोरावेद्य गत्वा स्वगृहं पितरौ तद्वार्त्तावर्णनेन समनन्दयत्। अनयच्च तस्मिन्नेव दिने स्वं गृहं जीमूतवाहनम्। ततश्च यथायथं महोत्सवं विधाय तत्रैव शुभे दिवसे तस्य विद्याधरेन्द्रस्य मलयवत्याश्च विवाहविधिं निरवर्त्तयत्। ततो जीमूतवाहन सिद्धमनोरथ: तया नवोढ़या मलयवत्या सह तत्रैव कियन्तं कालं तस्थौ।

एकदा कौतुकाच्छिन्नचित्त: स मित्रावसुना सह मलयाद्रिं भ्राम्यन् समुद्रवेलामाससाद। तत्रास्थिसङ्घातान् पतितान् दृष्ट्वा स तं मित्रावसुं केषामेते अस्थिसङ्घा: प्राणिनामिति पप्रच्छ। तत: श्यालको मित्रावसु: तं कारुणिक मब्रवीत् सखे! शृणु अत्र वृत्तान्तं संक्षेपेण ते कथयामि।

पुरा नागमाता कद्रु: तार्क्ष्यमातरं सपत्नीं विनतां सकपटपणनिर्जितां दासतामनैषीत्। तेनैव वैरेण

न्वितः स जीमूतवाहनः राज्यं विहाय मलयाचलमगात्। तत्र स रचिताश्रमः पितरौ शुश्रूषमाणस्तस्थौ।

एकदा स इतस्ततो भ्रमन् विश्वावसुनाम्नः सिद्धराजस्य तत्र निवासिनः पुत्रं मित्रावसुं नाम दृष्ट्वा सम्भाष्य च मित्रमकरोत्। ततश्चैकदा स जीमूतवाहनः उपवने स्थितं देव्या गौर्य्या आयतनं दृष्ट्वा प्रविवेश। ददर्श च तत्र उपवीणयन्तीं सखीजनपरिवृतां शैलबालाराधनार्थं स्थितां लोचनलावण्यदर्शनेन लज्जितैरिव निश्चलैर्मृगैराकर्ण्यमानसङ्गीतवीणारवां अञ्जनेन कृष्णां कर्णमूलं विमथ्नतीं पाण्डवचमूमिव तारकां बिभ्रतीं परस्परोपमर्देन मुखेन्दोरिव दर्शनमलममभिवाञ्छन्तौ उन्मुखौ स्तनौ दधतीं धातुः स्पृष्टवतो मुष्टिग्रहेणेव निपीड़िते वलीमग्नाङ्गुलीमुद्रे मध्ये, क्षाममनोरमां कामपि कन्यकाम्। तया च दृष्टया तन्व्या स जीमूतवाहनः सद्यो दृष्टिमार्गप्रविष्टया मुषितचित्तोऽभूत्। सापि तं भूषितोद्यानं उत्कण्ठाविकारप्रदं कामाङ्गदाहवैराग्यात् वनमाश्रितं मधुमिव दृष्ट्वा अनुरागविवशा तथा विह्वलतां भेजे यथा सखीनां व्याकुलतामधात्। ततः स जीमूतवाहन स्तस्याः सखीमपृच्छत् भद्रे! तव सख्याः किं धन्यं नाम, को वा वंशोऽनया अलङ्कृतः? तदाकर्ण्य सखी प्राब्रवीत् महाभाग! इयं हि नाम्ना मलयवती मित्रावसोः स्वसा सिद्धराजस्य दुहिता। एवमुक्त्वा सा सखी सहृदया तं जीमूतवाहनं, सहागतं मुनिपुत्रं अस्य नामान्वयौ पृष्ट्वा तां मलयवतीं स्मितमिताक्षरमवादीत् सखि! विद्याधरेन्द्रस्यास्य किमातिथ्यं न

करोषि ? जगत्पूज्य एष: अतिथि: प्राप्त इति तयोक्ते सा सिद्धराजसुता तूष्णीं लज्जावनतानना अभूत्। तत: सखी लज्जावतीयं मत्तोऽर्चां गृह्यतामिति वादिनी तस्मै साघ्यीं मालामुपानयत्। स च जीमूतवाहन: प्रेम-निर्भर: तां मालामादाय तस्या मलयवत्या: कण्ठे समर्पयत्। सापि तिर्य्यक्प्रसृतया स्निग्धया दृशा नीलोत्पल-मयीमिव मालां तस्मै प्रत्यर्पयत्। इत्येवमन्योन्यकृताशब्द-स्वयंवरयो स्तयो रेका सिद्धराजसुतां कापि चेटी समागत्य जगाद राजपुत्रि! जननी त्वां स्मरति, शीघ्रमागच्छ, तदाकर्ण्य सा कामेषु कीलितामिव सोत्कां दृष्टिं प्रिय-मुखात् कथञ्चित् आकृष्य कृच्छ्रेण गृहमगात्। जीमूत-वाहनोऽपि तद्गतात्मा स्वमाश्रममयासीत्। अथ सा प्राणेशविरहातुरा स्वां जननीं दृष्ट्वा शयनीयं गत्वा आशु तत्र पपात।

अथ सा अन्तर्गतकामाग्निधूमेनेव आविलनेत्रा सन्ताप-क्वथिताङ्गी अश्रूणि प्रमुञ्चन्ती सखीभिश्चन्दनैर्लिप्ता पद्मिनी-दलैश्च वीजिता शयने सख्या अङ्के भूतले च न शर्म लेभे। ततश्च वासरे रक्तया सन्ध्यया सह क्वापि गते, चन्द्रे च हसन्त्या: प्राच्या मुखं समाक्रम्य चुम्बति सा स्मरेणापूर्य्य-माणाऽपि जीवितस्पृहाशून्या दूतीसम्प्रेषणादिकं लज्जया कर्त्तुं नाशकत्। निनाय च कृच्छ्रेण निशाम्। जीमूत-वाहनोऽपि तद्वियोगार्त्त: शयनस्थोऽपि कामस्य हस्ते पतित:, नूतनोद्भिन्नरागोऽपि प्रोज्झितपाण्डुरकान्ति: लज्जा-मूकोऽपि कामजां पीड़ां वदन् निशामनैषीत्। प्रातश्चा-

तार्क्ष्यस्तां मातरं दास्यान्मोचयित्वापि बलात् नागान् कद्रुपुत्रान् सदा पातालं प्रविश्य, भक्षयितुं कांश्चित् जघान, कांश्चित् ममर्द च। इत्थं क्रमेण सर्वनागेषु व्यापन्नेषु सर्वक्षयमाशङ्क्य नागराट् वासुकिः प्रार्थनापूर्वं तार्क्ष्येण समयं व्यधात्। खगेन्द्र! एकमेकं नागं ते आहारार्थं प्रत्यहं प्रेषयामि अत्र दक्षिणोदधेः पुलिने, त्वया तु पुनः कदाचन पातालं न प्रवेष्टव्यं सर्वेषु नागेषु एकपदे निहतेषु तव कः स्वार्थः इति नागराजेनोक्तो स गरुड़ः स्वार्थदर्शी तथेति प्रत्यपद्यत। तदा प्रभृति दिने दिने असौ गरुत्मान् वासुकिप्रेषितमेकैकं नागं अस्मिन् अम्बुधेः पुलिने भुङ्क्ते, एते च तेषां भक्ष्यमाणानां नागानामस्थिसञ्चयाः कालक्रमात् गिरिशृङ्गनिभाः समपद्यन्त। इति मित्रावसोर्मुखादुपश्रुत्य सान्तर्दुःखः स जीमूतवाहनः निजगाद सखे। शोच्यः स राजा वासुकिः यः स्वहस्तेन स्वाः प्रजा विद्विषे उपहारीकरोति, स क्लीवः कृताननसहस्रोऽपि एकेन 'आननेनापि मामग्रतः भुङ्क्ष्व गरुत्मन्! इति भाषितुं नाशकत्। कथं वा निसत्त्वः स्वकुलक्षये तार्क्ष्यमभ्यर्थयामास। कथं वा तार्क्ष्यः कश्यपसुतो वीरः कृष्णवाहनः ईदृशं पापं कुरुते, अहो। मोहस्य प्रागल्भ्यम्? इति उक्त्वा स महासत्त्वः असारेण देहेन अद्य एकस्यापि नागस्य जीवितरक्षणं कुर्य्यामिति मनसि सङ्कल्प्य स्थिते तस्मिन् जीमूतवाहने मित्रावसोः पितुराज्ञया कश्चित् प्रतीहारः तयोराह्वानार्थं माजगाम। स तु जीमूतवाहनः व्रज त्वमग्रतः, अहं पश्चाद् यास्यामीति तं मित्रा-

वसुं विसृज्य स्वयं तत्राख्यात्। तस्मिंश्च गते जीमूतवाहनः तत्र वाञ्छितार्थोन्मुखो भ्रमन् दूरात् करुणं रुदितमशृणोत्। गत्वा च कियद्दूरं उत्तुङ्गशिलातलसमीपगं एकं दुःखितं युवानं सुन्दराकृतिं राजभटेनेव पुंसा आनीय तत्क्षणं त्यक्तं रुदतीं वृद्धां मातरं सानुनयं निवर्त्तयन्तं पुरुषमद्राक्षीत्। अथ कोऽयमितिजिज्ञासुः स यावदत्र करुणार्द्रचेताश्छन्नः शृण्वन् जीमूतवाहनस्तिष्ठति स्म तावत् सा वृद्धा दुःखभारातिपीड़िता स्त्री युवानं तं अनुशोचितुं प्रावर्त्तत हा शङ्खचूड़! हा दुःखशतलालित हा गुणिन्! हा कुलैकतन्तो! पुत्र क्वाहं त्वां पुनर्द्रक्ष्यामि, वत्स! त्वन्मुखचन्द्रे गते स तव पिता शोकान्धकारपतितः वृद्धः कथं जीविष्यति, अर्ककरस्पर्शादपि यत्तव अङ्गं दूयेत, कथं तत् तार्क्ष्यभक्षणजां रुजां सोढुं शक्ष्यति। विस्तीर्णनागलोकेऽपि विधात्रा नागाधिपेन च अभव्याया मे एकसुतस्त्वं विचित्य किं लब्धः? इति विलपन्तीं तां स युवा तनयः प्राब्रवीत् मातः! दुःखार्त्तमपि मां किं भृशं दुःखयसि? गृहानेव निवर्त्तस्व, एष ते पश्चिमः प्रणामः। आगमनवेला चेयं गरुत्मतः। तदाकर्ण्य हा हतास्मि को मे पुत्रमिह पास्यतीति सा वृद्धा दिक्षु प्रक्षिप्तार्त्तलोचना भृशं चक्रन्द।

एतत् सर्वमाकर्ण्य बोधिसत्त्वांशसम्भवः स जीमूतवाहनः दृष्ट्वा श्रुत्वा च सर्वं गाढ़करुणो व्यचिन्तयत् हन्त! अयं शङ्खचूड़ो नाम नागः वासुकिना आहाराय तार्क्ष्याय

प्रहितः, इयञ्चास्य जननी स्नेहेनान्वागता, एकसुता चेयं दुःखिनी नितान्तमार्त्ता विलपति। तदेनमेव मार्त्तं एकान्तनाशिना देहेन. यदि न रक्षामि साम्प्रतं तन्मे निष्फलं जन्म धिक्। इत्यालोच्य मुदा समुपगम्य जीमूतवाहनः वृद्धां तामुवाच नागमातः! अहं ते पुत्रं रक्षामि, मा रुद! इति श्रुत्वा सा वृद्धा गरुड़शङ्किनी सन्त्रस्ता, तार्क्ष्य! मां भुङ्क्ष्व मां भुङ्क्ष्व, इति जगाद। शङ्खचूड़ः प्राब्रवीत् मातः! नैषः तार्क्ष्यः मा त्रासं कार्षीः क्वाय चन्द्र इवान्तरिन्द्रियमाह्लादयति क्वचासौ तार्क्ष्यः भयमुत्पादयति। इति शङ्खचूड़ेनोक्ते जीमूतवाहनोऽब्रवीत् अम्ब! अहं विद्याधरः ते सुत रक्षितुमायातः स्वमेतत् शरीरं वस्त्रच्छन्नं गरुत्मते क्षुधिताय दास्यामि त्वमेत सुतं नीत्वा गृहं व्रज। तदाकर्ण्य वृद्धा अवदत् मा मैवं त्वं मम अधिकः पुत्रः, यस्य ईदृशेषु अस्मासु ईदृशी कृपालुता। एतदाकर्ण्य स जीमूतवाहनः पुनरब्रवीत् मातः! न त्वमस्य मे मनोरथस्य भङ्गं कर्त्तुमर्हसि। आग्रहेण एवं ब्रुवन्तं तं शङ्खचूड़ोऽवादीत् महासत्त्व! त्वया सत्यं कृपालुता दर्शिता, नाहन्तु त्वच्छरीरेण स्व शरीरं रक्षितु मिच्छामि। रत्नव्ययेन कोहि पाषाण रक्षति? मादृशैः स्वमात्रानुकम्पिभिर्विश्वमापूर्णं, येषां जगदनुकम्पया तादृशा भवादृशा अतिविरलाः। हे साधो! अहं कलङ्कः शशिबिम्बमिव शङ्खपालकुलं शुचि कलङ्कयितुं न च शक्ष्यामि। इति तं प्रतिषिध्यैव शङ्खचूड़ः मातरं पुनर्जगाद अम्ब! अस्मात् कान्तारात् निवर्त्तस्व, अत्रैतत् नागानामसृक्कभिरुक्षितं,

कृतान्तलीलापर्य्यङ्करौद्रं वध्यशिलातलं किं न पश्यसि? अहमिदानीं अब्धितटं, गत्वा गोकर्णाख्यमीश्वरं नत्वा द्रुतमागच्छामि, यावत् तार्क्ष्यो नागच्छति। इत्युक्त्वा मातरम् आपृच्छ्य च स शङ्खचूडो गोकर्णप्रणामार्थमगात्। अस्मिंश्चेत् समये तार्क्ष्य आगच्छेत् तदा मे मनोरथः सिद्धः स्यात् इति जीमूतवाहनो यावत् मनश्चकरोत् तावत् आसन्नपक्षीन्द्रस्य पक्षपवनान्दोलितान् निवारणपरानिव तरून् वीक्ष्य गरुडागमनवेलेयमिति मत्वा जीमूतवाहनः परार्थप्राणदित्सया तां वध्यशिलामारुरोह। आरूढमेव तं महासत्वं गरुडः सहसा निपत्य तस्मात् शिलातलात् चञ्च्वा जहार। जवाच्च स्रुतशोणितधारं उत्खातशिरोरत्नं तं नीत्वा मलयाद्रेः शृङ्गे भक्षयितुमारेभे। एवमेव प्रतिजन्म मे परार्थो देहः स्यात्, परोपकृतिरहितौ स्वर्गमोक्षौ माभूतामिति तार्क्ष्येण भक्ष्यमाणस्य तस्यानुध्यायतः विद्याधरेन्द्रस्योपरि नभस्तलात् पुष्पवृष्टिः पपात। अत्रान्तरे स रक्तधाराक्तशिरोमणिः तत्पतन्त्या मलयवत्याः पुरोऽपतत्। तत् चूड़ारत्नं दृष्ट्वा सुविह्वला श्वशुरयोः रन्तिकस्था सास्रं ताभ्यामुदर्शयत्। तौ च दम्पती सूनोस्तं चूड़ामणिं विलोक्य सहसा किमेतदिति सम्भ्रान्तौ बभूवतुः। ततः स्वविद्यानुभावात् यथावृत्तमवेत्य राजा जीमूतकेतुः राज्ञी च वध्वा मलयवत्या सह द्रुतं तत्र यावत् गन्तुं प्रावर्त्ततां तावत् स शङ्खचूडस्तं गोकर्णशिवं प्रणम्य तत्राययौ। ददर्श च तत्शिलातलं रुधिरार्द्रम्। हृष्टेव हा हतोऽस्मि महा-

पापः, ध्रुवं तेन महात्मना कृपालुना मत्कृते गरुत्मते आत्मा दत्तः, तदन्वेष्यामि स महात्मा गरुत्मता क्व नीतः, सच्चेत् जीवन्तमाप्नुयां तदा अयशःपङ्के न मज्जेयम्। इति उदश्रुर्वदन् स निरन्तरं सान्द्रां पतितां रक्तधारामनुसरन् ययौ।

अत्रान्तरे तं जीमूतवाहनं भक्षयन् गरुड़स्तं हृष्टं विलोक्य व्यचिन्तयत् अहो! अपूर्वः कोऽपि अयं महासत्त्वः, मया भक्ष्यमाणोऽपि प्रहृष्यति, न तु प्राणैर्वियुज्यते विभर्त्ति च लुप्तशेषेऽपि गात्रे रोमाञ्चकञ्चुकम्। किञ्चास्य उपकारिणीव दृष्टिर्मयि प्रसीदति। तदेषः न नागः, कोऽप्येष महापुरुषः, तदेनं पृच्छामि, न पुनर्भक्षयामि। इति विमृषन्तं तं तार्क्ष्यं जीमूतवाहनः प्राह पक्षिराज। किं निवृत्तोऽसि, अद्यापि मे देहे मांसशोणितं वर्त्तते, न च ते तृप्तिं पश्यामि तत् पुनर्भुङ्क्ष्व। एतदतिविचित्र माकर्ण्य स पक्षिराट् तं पप्रच्छ महात्मन्! नैव त्वं नागः, तद् ब्रूहि को भवानिति। नाग एवास्मि, कोऽयं ते प्रश्नः, प्रकृतमनुसर, कोहि बालिशः प्रस्तुतार्थविरुद्ध माचरेत्? इत्थं जीमूतवाहने तार्क्ष्यं प्रेरयति समुपेत्य स शङ्खचूड़ः दूरात् तमुवाच विनतानन्दन! मा महापापं साहसञ्च कृथाः, कोऽयं ते भ्रमः? नह्येष नागः, नागोऽहमस्मि। इत्युक्त्वा द्रुतमेत्य तयोर्मध्ये विभ्रान्तं तार्क्ष्यं पुनः शङ्खचूड़ोऽब्रवीत् गरुत्मन्! कस्ते, भ्रमः मे फणे द्वे च जिह्वे न पश्यसि? किञ्चास्य सौम्यामाकृतिं न पश्यसि? इत्थं शङ्खचूड़े वदति सा भार्य्या मल-

यवती पितरौ च सर्वेऽत्र सत्वरमाययुः। तत्र विलुप्ताङ्गं पुत्रं दृष्ट्वास्य पितरौ हा पुत्र! हा जीमूतवाहन! हा कारुणिक! हा वत्स! हा परार्थप्रत्तजीवित! इति विलपन्तौ भृशं रुरुदतुः। हा वैनतेय! त्वया कथमिदमविमृश्य समाचरितम्। इति श्रुत्वा तार्च्यो भृशमनुतप्तो व्यचिन्तयत् हा! कथं बोधिसत्त्वांशसम्भवो मया मोहात् भक्षितः? सोऽयं जीमूतवाहनः परार्थप्राणदाता, यस्य क्रतस्नेऽत्र जगति कीर्त्तिघोषणा भ्रमति। तदस्मिन् मृते पापस्य मे अग्निप्रवेशनं युक्तम्। अधर्मविषवृक्षस्य स्वादु फलं किं पच्यते? इत्येवं चिन्ताकुले तार्च्ये स जीमूतवाहनः बन्धून् समागतान् दृष्ट्वा निपत्य व्रणव्यथया पञ्चत्वमवाप। ततस्तत्र शोकदीनयोस्तत्पित्रोर्हाहेति विलपतोः शङ्खचूडे च आत्मानं निन्दति सा मलयवती अश्रुगद्गदं नभो दृष्ट्वा पूर्वप्रसन्नां तां वरदां देवीमम्बिकामिति उपालभत, मातः! विद्याधरचक्रवर्त्ती ते पतिर्भविता इत्यहं त्वयादिष्टा, तन्मम भाग्येन त्वं मिथ्यावादिनी जातासि इत्युक्तवत्यां तस्यां सा गौरी प्रत्यक्षीभूय, पुत्रि! न मे वचो मृषा इत्युक्त्वा कमण्डलोरमृतेन तं जीमूतवाहनं सिषेच। तेन च सः अक्षतसर्वाङ्गः पूर्वाधिकतरद्युतिर्जीवन् सद्यः समुत्तस्थौ। अथ सा देवी सर्वेषु प्रणमत्सु उत्थितं प्रणत तं जीमूतवाहनं प्राब्रवीत् पुत्र! तुष्टास्मि ते अनेन देहदानेन, तदेषाहं निजेन पाणिना विद्याधरचक्रवर्त्तिपदे त्वामभिषिञ्चामि, एवं वदन्ती देवी कलशाम्बुभिः तं जीमूतवाहन मभ्यषिञ्चत् तेन च पूजिता

तत्क्षणात् तिरोदधे। अस्मिंश्च समये नभसः दिव्याः कुसुमवृष्टयः पेतुः, नेदुश्च सहर्षं दिवि देवदुन्दुभयः।

अथ गरुत्मान् विनतस्तं जीमूतवाहनमुवाच चक्रवर्त्तिन्! अहं पुरुषातिशये त्वयि अतिप्रीतोऽस्मि, येन अपूर्वोदारमतिना त्वया त्रिजगत् कौतुकावहं ब्रह्माण्डभित्तिलिखितम् इदं चित्रं कृतम्। तस्मामाज्ञापय, मत्तश्चाभिमतं वरं वृणीष्व। इति वादिनं गरुड़ं स महासत्त्वः प्रावदत् गरुत्मन्! सानुतापेन त्वया पुनर्नागा न भक्ष्याः, ये चास्थिशेषाः पूर्वं त्वया भक्षितास्ते जीवन्तु इति। एवमस्तु न भोक्ष्येऽहमतः परं नागान् ये च प्राग्भुक्तास्ते च जीवन्तु इति तेन वरे दत्ते ये नागा अस्थिशेषाः पूर्वभक्षितास्ते च सर्वे सद्यः समुत्तस्थुः। ततः सर्वेषु सुरनागमुनिगणेषु सानन्देषु मिलितेषु स्म मलयाचलः लोकत्रयभूम्याख्यां लेभे। तस्मिंश्च काले गौर्य्याः प्रसादात् सर्वे विद्याधरेश्वराः तमद्भुतं जीमूतवाहनोदन्तं विविदुः। ततश्च ते सर्वे समेत्य चरणावनताः तं मुदितबन्धुसुहृत्समेतं गौरीस्वकरकृतमहाभिषेकं हिमाद्रिं निन्युः। तत्र गत्वा स जीमूतवाहनः पित्रा मात्रा भार्य्यया मलयवत्या मित्रावसुना लोकोत्तरचरितेन शङ्खचूड़ेन च समं बहुरत्नशोभितां विद्याधरचक्रवर्त्तितां भुञ्जानः सुखमध्युवास। इति महतीं विचित्रां कथामाख्याय बेतालः पर्य्यपृच्छत् राजन्! ब्रूहि शङ्खचूड़-जीमूतवाहनयोः कोऽधिकः सत्त्वेन? यदि जानन्नपि न वदसि, तदा पूर्वमेव दत्तः शापः सम्भविता इति। राजा अब्रवीत् बहुजन्मसिद्धमेतत्

जीमूतवाहनस्य न चित्रं श्लाघ्यस्त्वत्र शङ्खचूड़ः, यो मरणादुत्तीर्णोऽपि अन्यं प्राप्य सुदूरं गताय प्रभवे तार्क्ष्याय पश्चात् धावन् स्वं देहमुपानयत्। एतत्तस्य नृपस्य वचनं निशम्य वेतालः शिंशपान्तिकमगात् राजापि तमानेतुं पुनः प्रययौ।

—

## अथ एकनवतितमस्तरङ्गः।



अथ राजा पुनः शिंशपामूलमुपेत्य वेतालञ्च तं तथैव स्कन्धमारोप्य चलितुमुपचक्रमे। वेतालश्च तं पुनरब्रवीत् राजन्! श्रमविनोदाय पुनरहमेकामाख्यायिकां कथयामि शृणु।

पुरा गङ्गाकूले कनकपुरं नाम पुरमेकमासीत् यस्मिन् धर्मस्य एकोऽपि पादः कलिना न विहतः। तत्राभवत् यशोधराख्यो यथार्थनामा महीपतिः। यो हि धीरो वेलाद्रिरिव क्षितिं विप्लवात् ररक्ष। यश्च जगदाह्लादकश्चण्डप्रतापोऽखण्डमण्डलश्च विधिना चन्द्रार्कावेकीकृत्येव विनिर्मितः। जनता यं पापभीरुं यशोलुब्धं परस्त्रीषु षण्ढं शौर्य्यौदार्य्यमयं विदन्ति। तस्य राज्ञः पुरे कश्चित् महावणिक् प्रतिवसति स्म। तस्य उन्मादिनी नाम कन्याभवत्। यस्तामद्राक्षीत् स मदनबाणहतः उन्मादवानेवाभूत्। तस्यां यौवनस्थायां स वणिक् नीतिविज्ञः तं यशोधरं राजानमुपेत्य व्यजि-

अपत् प्रभो! त्रैलोक्यरत्नभूता मे कन्यैका प्रदेयास्ति, तां देवस्य अनावेद्य अन्यस्मै न दातुमुत्सहे। अस्मिंश्च भूमण्डले देव एव सर्वरत्नानां प्रभुः, तत् तां स्वीकृत्य मामनुगृह्णातु देवः, इति तस्य वचनमाकर्ण्य स राजा निजान् ब्राह्मणान् तस्या लक्षणानि परीक्षितुं व्यसृजत्। ते ब्राह्मणा गत्वा तां त्रिलोकसुन्दरीं दृष्ट्वा सद्यः क्षोभमगमन् व्यचिन्तयंश्च यदि राजा इमां परिणयेत् तदा राज्यमवसीदेत्, एतस्यामासक्तचित्तः स कदापि न हि राज्यमवेक्षिष्यते। तस्मादेषा सुलक्षणेति राज्ञे नास्माभिः कथनीयेति। इत्येवं मनसि सङ्कल्प्य ते राजान्तिकमाजग्मुः ऊचुश्च देव! सा कुलक्षणेति तेन च स राजा तां बणिक्सुतां न स्वीचकार। ततस्तदाज्ञया स बणिक् तां कन्यां बलधराख्याय सेनापतये प्रददौ। अथ सा भर्त्तृगृहे तेन भर्त्रा सुखेनास्थात्।

अथ गच्छति काले हैमन्तहस्तिनं प्रफुल्लकुन्दलतादन्तं मथिताम्बुजिनीवनं हत्वा लसत्पुष्पमञ्जरीकेसरावलिः चूताङ्कुरनखः कानने क्रीडन् मधुकेशरी समाजगाम। तस्मिंश्च काले वसन्तोत्सवं द्रष्टुं स राजा यशोधरः गजारूढः निर्जगाम। तद्रूपेण सम्भाव्यविप्लवाः कुलयोषितः अपसारयितुं तदा उद्घुष्य दत्तं डिण्डिमं श्रुत्वा सा उन्मादिनी परित्यागावमानिता स्वगृहहर्म्यतः तस्मै राज्ञे आत्मानमदर्शयत्। स च राजा सम्भुक्षितस्य मधुना मलयानिलैः कामाग्नेः ज्वालामिवोद्गतां तां दृष्ट्वा चुक्षुभे। तस्याश्च रूपं मनोभुवो जैत्रमस्त्रमिव हृदये गाढं प्रविष्टं निर्वर्णयन् क्षणात् मोहमगात्।

अथ स भृत्यैराश्वासितो राजधानीं प्रविश्य पृष्टेभ्यस्तेभ्यस्तां प्रागुपनतोज्झिताम् उन्मादिनीं बुबुधे। ततः स राजा तान् कुलक्षणीयमिति वादिनो विप्रान् देशान्निर्वास्य अनुदिनं तामेव समुत्सुको दध्यौ। अहो! जगन्निष्कलङ्के तस्या मुखे सति निर्लज्जो जड़ात्मा अयं शशी नित्यमुदेति। कठोरौ हेमकलसौ गजकुम्भौ च कर्कशौ अस्याः पीनयोस्तुङ्गयोः पयोधरयोः सादृश्यं न लभेयाताम्। काञ्चीनक्षत्रमालया विराजितम् अस्या जघनस्थलं कन्दर्पमातङ्गमस्तकनिभं कं न विलोभयेत् इत्येवं तामन्तश्चिन्तयन् राजा कामाग्निपुटपाकेन पच्यमानः दिवानिशं क्षीयते स्म। ह्रिया निगूहमानस्य पृच्छद्भ्यः आप्तेभ्यः तत् पीड़ाकारणं पप्रच्छ। अलं सन्तापेन, स्वाधीनां तां किं न भजसे? इति तैरभिहितः स धार्मिकः नरपतिः नैव तदनुमेने। ततो बलधरो नाम सेनापतिः तद् विदित्वा उपेत्य च चरणानतः प्रभुमभ्यर्थयामास। देव! दासस्त्री सा तव दास्येव, न पराङ्गना। अहञ्च स्वयं प्रयच्छामि, तदेनां मे भार्य्यां गृहाण, अथवाहं तां इह देवकुले त्यजामि, तर्हि तस्या ग्रहणे न दोषः, इति सेनापतिना निर्बन्धेन अभ्यर्थ्यमानोऽपि सान्तःकोपं तमुवाच अहं राजा भूत्वा कथमीदृशमधर्मं कुर्य्याम्। मयि धर्ममतिक्रामति कः स्ववर्त्मनि तिष्ठेत्? भक्तोऽपि त्वं कथं मां पापे परलोकमहादुःखहेतौ क्षणसुखावहे नियोजयसि? यदि त्वं धर्मपत्नीं विहास्यसि तदा त्वां न क्षमिष्ये। मादृशः को हि तादृशं धर्मविप्लवं सहेत?

तदहं मृत्युरिति उक्त्वा स राज्ञा तं निषिषेध। उत्तमसत्वा हि प्राणानपि त्यजन्ति न सत्पथम्। तथैवाभ्यर्थयमानान् सर्वानपि पौरजानपदान् मिलितानपि स राजा सुदृढ़निश्चयो निराचकार। ततः क्रमेण तेनैव स्मरज्वरभवोष्णा अभीक्ष्णं प्रक्षीणदेहः स राजा यशोधरः यशःशेषतां प्रययौ। सेनापतिश्च प्रभोस्तथा विलयमसहिष्णुः अग्निं विवेश अनिर्वचनीयं हि भक्तचेष्टितम्। इति कथामाख्याय स्कन्धस्थितो वेतालः तं पप्रच्छ राजन्! एतयोः सेनापति-महीभृतोः कोऽधिको मतः? त्वया पूर्वदत्तशापमनुस्मृत्य वक्तव्यम्। राजा अवदत् अहं राजानमधिकं मन्ये तदाकर्ण्य वेतालः साक्षेपमब्रवीत्, राजन्! सेनापतिः कथं नाभ्यधिकः? यः स्वामिने तथाविधां स्वभार्य्यां सुचिरेण ज्ञाततद्भोगसुखास्वादोऽपि समुपानयत्, प्रभौ च पञ्चत्वमागते तद्भक्त्या आत्मानमग्निसादकरोच्च, राजा तु अनास्वादिततद्भोगस्तस्य भार्य्यां जहौ। वेतालेनैवमुक्तः स राजा विहस्य पुनरब्रवीत् यद्यप्येतत् तदपि नातिचित्रं तत् कुलपुत्रो हि सेनापतिः, स भक्त्या यत्तथाकरोत्। प्राणैरपि भृत्यानां स्वामिरक्षणं व्रतम्। राजानस्तु मदाध्माता गजा इव निरङ्कुशा विषयोन्मुखा धर्ममर्य्यादा-शृङ्खलां छिन्दन्ति। तेषां हि उद्रिक्त चित्तानां अभिषेकाम्बुभिः समं विवेको विगलति। चलच्चामरमारुतैः उड्डूय तेषां वृद्धोपदिष्टशास्त्रार्थरजांसि उत्क्षिप्यन्त इव। आतपत्रेण च सत्यं सूर्य्यालोक इव निवार्य्यते। विभूतिवात्यया चोपहता दृष्टिः मार्गं नेक्षते। जगद्विजयिनो-

ऽपि ते ते नहुषादयो राजानः मारमोहितचेतसः तां तां विपदं प्राप्तवन्तः। एष राजा पृथिव्यामेकच्छत्रोऽपि यत्तया उन्मादिन्या चपलया लक्ष्म्या इव विमोहितोऽपि प्राणानपि तत्याज न पुनः अमार्गे पदं निदधे, तेनासौ वीरः मे अधिको मतः इत्याकर्ण्य नृपतेर्वाक्यं स वेतालः स्कन्धवर्त्ती पुनः स्वमेवं पदं मायया प्रायात्। राजापि अचलचित्तस्तं तथैवानुससार। आरब्धे सुदुष्करेऽपि महतां मध्ये विरामः कुत एव इति।

## अथ द्विनवतितमस्तरङ्गः

ततः स राजा क्रव्याद्भिः परिवृते ज्वालाविलोलरसनैः भूतैरिव चिताग्निभिः समन्तादतिरौद्रे तस्मिन् पितृवने तस्यां क्षपायां तं शिंशपातरुमुपेत्य तत्र वेतालविकृतान् सदृशाकृतीन् तस्मिन् तरौ लम्बमानान् सुबहून् प्रेत-कायान् अशङ्कितमद्राक्षीत्। अहो! किमेतत् किंवा अयं मायी वेतालो मे कालं क्षिपति, येन इह भूयसां एषां कं ग्राह्यं न वेद्मि, यदि असिद्धार्थस्य मे रात्रिरियं गच्छति, ततोऽहं वह्निं प्रवेक्ष्यामि, न तु हास्यतां सहिष्ये इति चिन्तयतस्तस्य राज्ञो निश्चयं ज्ञात्वा सत्त्व-तुष्टः स वेतालः तां मायां संजहार। ततोऽसौ एकमेव

नरकलेवरे स्थितं वेतालं दृष्ट्वा तथैवावतार्य्य अंसेन गृहीत्वा पुनः प्रतस्थे। प्रस्थितञ्च तं स वेतालः प्राब्रवीत् राजन्! न विरज्यसि चेत् तदिमां कथां कथयामि शृणु।

अस्ति गौर्य्या तपसा परितुष्टवता तेन प्रभुना असामान्यगुणोत्कर्षलुब्धेनेव स्वयं निर्मिता भोगवत्यमरावत्योस्तृतीया उज्जयिनी नाम पुरी। यस्यामुदारसुकृतिनः नानाभोगेन उपबृंहिताः स्वर्गमपि न कामयन्ते। यस्यां वरयोषितां कुचेषु कार्कश्यं लोचनेषु चापलं भ्रूषु भङ्गिः। यस्याञ्च निशासु तमः, कविवक्रोक्तिषु वक्रत्वं दन्तिषु मदो, मुक्ताचन्दनशशाङ्केषु जाड्यमासीत्। तस्याञ्च चन्द्रप्रभो नाम राजा अभवत्। देवस्वामीति विश्रुतो बहुधनसम्पन्नः बहुयज्ञः बहुश्रुतश्च कश्चिद्विप्रः तस्य अमात्य आसीत्। तस्य तनयश्चन्द्रस्वामी नाम कदाचित् कामपि विचित्रैः क्षणमाराभैर्नैव रिवाचैर्निरन्तरं अत्र कं आश्लिष्याम इति विपद्भिरिव वीक्षितां कोऽसौ अस्ति, यस्य अलकापतेरपि श्रियं न हरामि इति द्युतक्षतां कलहस्वनैकस्वैर्वदन्तीमिव द्यूतकारमहागोष्ठीं द्यूतेन क्रीड़ितुं ययौ। तां प्रविश्य स क्रमात् तैः कितवैरक्षैर्दीव्यन् वस्त्रादिकं हारयित्वापि अन्यत् धनमहारयत्। यदातु तद्धनं तैर्याच्यमानं नाद्दात् तदा सभिकेन सोऽवष्टभ्य लगुडैरताड्यत। लगुडाहतसर्वाङ्गः स विप्रसुतः पाषाणमिव निश्चलं आत्मानं मृतमिव कृत्वा तस्थौ। तथैव च द्वित्रान् दिवसान् तस्मिन् तत्र अवस्थिते क्रूरः स सभिकः तान् कितवानभाषत अनेन पाषाणकं श्रितं,

तदेनं क्वचित्, अन्धकूपे नीत्वा क्षिपत, अहं युष्माकं एतद्देयं धनं दास्यामि। इति तेनोक्ताः कितवास्तं चन्द्रस्वामिनं उत्क्षिप्य कूपगवेषिणः दूरं अरण्यं निन्युः। तत्रागत्य कश्चित् वृद्धः कितवस्तानन्यान् एव मब्रवीत् अयं तावत् प्रायशोमृतः तत् किमनेनाधुना कूपे क्षिप्तेन, तदिहैव एनमुज्झित्वा गत्वा कूपे उज्झितं वक्ष्यामः। इति तस्य वचस्ते सर्वे तथेति प्रतिपद्य तथैव तं त्यक्त्वा गताः।

अथ गतेषु तेषु कितवेषु स चन्द्रस्वामी समुत्थितः तत्र शून्यमेकं शिवमन्दिरं विवेश। तत्र किञ्चित् समाश्वस्य सुदुःखितश्चिन्तयामास हा कष्टं? विश्वस्तोऽहं धूर्त्तैः कितवैः मायया मुषितः, तदीदृशः नग्नः पांशुधूसराङ्गः क्व यामि, पिता बन्धुः सुहृद्वापि दृष्ट्वा किं मां वदेत्। तदिहैव साम्प्रतं स्थितोऽस्मि, नक्तञ्च क्षुत्प्रशान्तये निर्गत्य कथमपि भोजनं प्रति यतिष्ये इत्यालोचयतस्तस्य क्लान्तस्य दिगम्बरस्य मन्दीकृतातपो रविस्त्यक्ताम्बरो अस्ताचलमगात्। तावच्च भूतिलिप्ताङ्गः महाव्रती शूलधरो हर इवापरः कश्चित्तापसः तत्राजगाम। स चन्द्रस्वामिनं दृष्ट्वा कोऽसीति पृष्ट्वा तस्मात् वृत्तान्तं श्रुत्वा च प्रणतं तमवादीत् भद्र! त्वं ममाश्रमं प्राप्तः क्षुत्क्लान्तोऽतिथिः, तदुत्तिष्ठ कृतस्नानो मम भिक्षाभागमाहर। इति तेनोक्तश्चन्द्रस्वामी तमब्रवीत् भगवन्! विप्रोऽहं कथं तव भिक्षाभागं भोक्ष्ये? तदाकर्ण्य स सिद्धस्तापसः निजां मठिकां प्रविश्य अतिथिवात्सल्येन इष्टसम्पादिनीं विद्यां सस्मार। स्मृतोपस्थिताश्च तां किं करोमीति वादिनीं अमुष्य अतिथे-

रातिथ्यं कुरुष्वेति प्रययास। तथा तथेत्युक्ते सहसा तत्र सोपवनं मङ्गनाजनसहितं सौवर्णं पुरमुत्पन्नं स चन्द्रस्वामी ददर्श। विस्मितं तस्मादभ्येत्य तस्मात् पुरात् विलासिन्य: तं भद्र! उत्तिष्ठ, एहि स्नाहि भुङ्क्ष्व भज न: स्वामिनीं इति उक्त्वा अभ्यन्तरं नीत्वा स्नापयित्वा अनुलिप्य परिधाप्य च अन्यत् वासमन्दिरं निन्यु:। तत्र च प्रविश्य स युवा एकां सर्वाङ्गसुन्दरीं धात्रा कौतुकादिव निर्मितां कामपि वरारोहां ददर्श। तया च समुत्थाय अर्द्धासनोपवेशित: दिव्यमाहारं विविधानि फलानि भुक्त्वा गृहीतताम्बूल: पर्य्यङ्कशय्यायां तत्सम्भोगसुखेन निशामनयत्। प्रात: प्रबुद्धश्च तत्र तमेव शिवालयं ददर्श न तां दिव्याङ्गनां नापि पुरं तत् तथाविधपरिच्छदयुतम्। तत: स समुद्विग्नो निर्गत्य मठिकायां स्मितानमं दृष्टरात्रिवृत्तान्तं तं तापसं व्यजिज्ञपत् भगवन्! त्वत्प्रसादात् रजन्यामहं सुखमुषित:, किन्तु तया दिव्याङ्गनया विना मे प्राणा यास्यन्तीति तदाकर्ण्य स तापसो हसन्नब्रवीत् इहैव तिष्ठ, पुनर्नक्तं तथैव ते सुखं भविष्यति। इति तेन व्रतिना अभिहिते स चन्द्रस्वामी तस्य तापसस्य प्रसादात् प्रतिक्षपं तान् तान् भोगान् अभुङ्क्त। शनैश्च तस्य तं विद्याप्रभावं विदित्वा विधिचोदित: स चन्द्रस्वामी तं तापसं प्रसाद्य एकदा ययाचे भगवन्! यदि सत्यं शरणागते मयि ते कृपा जाता, तदेतां विद्यां मे देहि यस्या अयमीदृश: प्रभाव:। इति निर्बन्धात् प्रार्थयमानं तं स तापस: प्रत्यवादीत् भद्र! एषा विद्या तव

असाध्या, असौ अन्तर्जले साध्यते। तत्र चैषा जपतः साधकस्य विमोहाय तथा मायाजालं सृजति, यथा स सिद्धिं न लभेत। स हि जापकस्तत्र पुनर्जातं बालकमात्मानम् ईक्षते, ततो युवानं कृतदारं जातात्मजम्, ततः सुहृदयं मे, शत्रुरयं मम इति मिथ्या प्रपश्यति। न च इदं जन्म, नापि विद्यासाधने प्रवृत्तिं स्मरति यस्तु चतुर्विंशतिवर्षं तथा जपन् जन्म स्वं स्मृत्वा तत्तत् मायाविजृम्भितं विदित्वा तद्वशो वह्निप्रवेशं कुरुते स एष परमार्थतो जलोत्तीर्णः सिद्धविद्यां पश्यति। एषा च सुशिष्यस्यैव सिध्यति, अस्थानार्पणात् गुरोरपि विनश्यति। मत्सिद्धेयव ते फले सिद्धे किं ते अमुनाग्रहेण। मम सिद्धिहानौ एषा तदैव विनङ्क्ष्यति। एवं तपस्विनोक्तोऽपि स चन्द्रस्वामी शक्ष्यामि सर्वं मा तावदन्न भगवन्! चिन्ताभूः, इति तं तापसमब्रवीत्। ततः स तापसः तस्मै तां विद्यां दातुं प्रतिपेदे। आश्रितानुरोधेन किं हि न कुर्वन्ति साधवः। ततो नदीतीरं गत्वा स तापसस्तमब्रवीत् वत्स! विद्यां जपन् यदा तां मायां द्रक्ष्यसि, तदा मम विद्यया बोधितो मायाग्निमेव प्रविशेः। अहं हि तवैव जपतो नदीतटे स्थास्यामि तावत्। इत्युक्त्वा शुचि स्वमाचान्तं शुचिं चन्द्रस्वामिनं तां विद्यामध्यापयामास। ततस्तस्मिन् गुरौ तीरस्थिते स चन्द्रस्वामी तं मूर्ध्ना प्रणम्य सरभसं तां नदीमवततार। अवतीर्णश्च तस्यामन्तर्जले तां विद्यां जपन् सहसैव तन्मायया विमोहितो मिथ्या सर्वं जन्मवृत्तान्तं विस्मृत्य अन्यस्यां पुरि कस्यापि विप्रस्य पुत्र-

त्वेनोत्पन्नः शनकैर्वृद्धिं गतः कृतोपनयनोऽधीतविद्यः कृत-दारश्च दुःखसुखसम्मिश्रः क्रमात् सञ्जातापत्यः समभवत्। ततश्चात्र पुत्रदारस्नेहासक्तस्तत्सदाचरन् बहुरतिः पितृभ्यां बान्धवैश्च सह कियन्तं कालं तस्थौ। इत्थं मिथ्याजन्मा-न्तरक्लेशमनुभवतस्तस्य कालप्रबोधिनीं विद्यां कारुणिकोगुरुरसौ प्रायुङ्क्त। स चन्द्रस्वामी जन्मान्तरगतः तद्विद्या-प्रयोगेण सद्यः प्रबोधितः आत्मानं तञ्च गुरुं स्मृत्वा तच्च मायाजालमवेत्य विद्यासाध्यफलमाप्तुम् अग्निप्रवेशाय उद्यतस्तैर्निषेधद्भिर्दृढाप्तगुरुबन्धुभिः पर्य्यवारि। तैश्च बहुधा वार्य्यमाणोऽपि दिव्यसुखलोलुपः स सबान्धवः सज्जित चितं नदीतीरमगात्। तत्रागत्य च वृद्धौ पितरौ भार्य्यां बालापत्यानि च रुदन्ति दृष्ट्वा मोहात् पुनरचिन्तयत् कष्टं अनलं विशतो मे सर्व्वे इमे स्वजना म्रियन्ते, न च गुरोस्तद्वचनं सत्यं वा मृषा जानामि, तत् किं अग्निं प्रविशामि, उत गृहम्? अथवा गुरोस्तद्वचः कथं मिथ्या तादृशप्रभावशालिनः? तदग्निमेव प्रविशामि काममिति पर्य्यालोच्य स चन्द्रस्वामी अग्निमेव प्राविशत्। प्रविश्य च अनुभूतहिमस्पर्शो विस्मितः वह्नेः शान्तभयः तस्मात् नदीतोयात् उत्थाय तटमवाप। तत्रोत्थाय स्थितं तं गुरुं दृष्ट्वा पादयोर्निपत्य पृच्छन्तं तं अग्निशैत्यान्तं सर्वं वृत्ता-न्तमवर्णयत्। ततः स गुरुस्तमुवाच वत्स! मन्ये त्वया कश्चिदत्र अपचारः कृतः, अन्यथा अग्निः कथं ते शीतो-जातः? एतस्या विद्यायाः साधने एतद्धि अदृष्टम्। तदा-कर्ण्य स चन्द्रस्वामी प्रावदत् भगवन्! नाम कश्चिन्मया-

पचार: क्रत: प्रार्थ्यते। तत: स तद्गुरु: जिग्रासुस्तां विद्यां सस्मार। न च सा तस्य वा तच्छिष्यस्य आविरभूत्। अथ तौ नष्टविद्यौ विषस्रौ ततो जग्मतु:। इति कथामाख्याय वेतालस्तं भूपं पप्रच्छ राजन्! संशयमेतं मे छिन्धि केन हेतुना विहितेऽपि यथोद्दिष्टे कर्मणि विद्या तयोर्नष्टा? एतदाकर्ण्य स राजा तं वेतालं प्रत्यवोचत् योगेश्वर! जाने, भवान् मे कालं एवं क्षिपति, तदपि ते ब्रवीमि। दुष्करेणापि कर्मणैव पुरुषस्य न सिद्धिर्लभ्या, शुद्धेनैव कर्मणा। तत्रास्य मन्दस्य विप्रयूनश्चित्तं प्रबोधितमपि यत् विकल्पते स्म, तेनास्य विद्या सिद्धिं न गता, अस्थानदानाच्च गुरोर्विनष्टा। इति तस्य नृपस्य वाचं निशम्य स वेताल: पुन: स्वं निलयं प्रत्यपद्यत। राजापि अशिथिलयत्न:तमन्वेष्टुं धावति स्म।

## अथ त्रिनवतितमस्तरङ्ग:।

अथ राजा पुन: शिंशपातलं गत्वा वेतालं स्कन्धमारोप्य तथैव प्रातिष्ठत, वेतालोऽपि तं गच्छन्तं ग्यगादीत् राजन्! अपरां हृद्यां कथां ते आख्यामि श्रूयताम्।

अस्ति वक्रोलकं नाम सुरपुरोपमं पुरम्। तस्मिन् सूर्य्यप्रभो नाम इन्द्रसम: भूपतिरासीत्। य: सौकर्य्यार्थमतन्द्रा मूर्ध्ना दत्ताभन्दो हरिरिव वसुन्धरामिमां बहु-

हृत्य चिरं भुवं बभार। अस्य च प्रभोः धूमासङ्गेषु अश्रुपातः शृङ्गारे मारसंलापः हास्येषु हेमदण्डाः राष्ट्रेषु आसन्। इत्थं सर्वसम्पदाधारस्य तस्यैका अनिर्वृतिरासीत् यदन्तःपुरिकासु स्थितास्वपि पुत्रो नोदपद्यत। अथान्तरे ताम्रलिप्त्यां पुरि धनपालो नाम धनवतामग्रणीर्महावणिक् प्रतिवसति स्म। तस्य धनवती नाम एका कन्या विद्याधरीव शापात् सुरलोकाद्विच्युता समजनि। तस्यां यौवनस्थायां स वणिक् पञ्चतामवाप। तद्धनं सर्वं राजसाहाय्यात् तत्गोत्रजैराक्रान्तम्। ततो हिरण्यवतीनाम तस्य वणिजो गेहिनी अप्रकटस्थितानि रत्नाभरणानि गृहीत्वा तया दुहित्रा धनवत्या साकं दायादभयात् पलाय्य गुप्तं निशि गृहात् निर्ययौ। सा वहिरन्तश्च ध्वान्तेनान्धकारिता सुताहस्तावलम्बिनी कृच्छ्रात् पुरात् बहिः प्रायात्। तत्र सन्तमसे यान्ती विधियोगात् अलक्षितं शूलाग्रारोपितस्थितं चौरम् अंसेन अताड़यत्। स चौरः मम जीवस्वरंसाग्रवद्धनया अधिकायोड़ितः, हा! क्षते क्षारमेतस्मै केन दत्तमित्यभाषत। ततः सा वणिग्वधूः कोऽसीति भयात् पप्रच्छ। तां च चौरः प्रत्युवाच अहं चौर इति सूचितः। अद्यापि शूले स्थितस्यापि पापस्य मे असवः नोत्क्रामन्ति। तदार्ये! ब्रूहि मे का त्वं क्व च प्रयासीति। तदाकर्ण्य सा वणिक्पत्नी सर्वं स्वोदन्तं तमाह स्म। तावच्च भगवान् श्वेतभानुः प्राचीमुखमुदभासयत्। ततो दिक्षु प्रकाशितासु स चौरस्तां वणिक्सुतां धनवतीं दृष्ट्वा तां तन्मातरमुवाच आर्ये! शृणु मे

एकां प्रार्थनां काञ्चनसहस्रं ते दास्यामि, त्वमिमां ते सुतां मह्यं देहि। किमेतया दत्तया ते इति सस्मितं वदन्त्या तया अभिहिते स चौरः पुनरब्रवीत् नास्ति मे गतायुषः पुत्रः, न चापुत्री लोकानश्नुते, तदेषा मदाज्ञया कुतश्चित् पुत्रं जनयेत् स मे चेत्रजः पुत्रो भविता। इत्यङ्गमेतां प्रार्थये, तस्मै मातः! सफलयाभीप्सितम्। तदाकर्ण्य सा वणिग्योषित् लोभात् तथेति प्रतिपद्य कुतोऽपि सलिलमानीय चौरस्य तस्य पाणौ सुतेयं मे तुभ्यं दत्तेति अपातयत्।

अथ स तद्दुहितरि यथोक्तामाज्ञां दत्त्वा तां वणिक्योषितमवादीत् गच्छ मातः! अमुष्य वटस्य अधः खनित्वा तत् मे रक्षितं स्वर्णसहस्रं गृहाण। गतासोश्च मे देहं युक्त्या दाहयित्वा अस्थीनि तीर्थे निक्षिप्य च ससुता वक्रोलकं पुरं व्रज तत्र सूर्य्यप्रभे राजनि सौराज्यसुखिते जने निरुपद्रवनिश्चिन्ता यथेच्छं स्थास्यसि। इत्युक्त्वा तृषितः तयोपाहृतं जलं पीत्वा शूलव्यथया समुत्क्रान्तजीवितः समभवत्। ततः सा वणिक्पत्नी गत्वा तस्मात् वटवृक्षतलात् स्वर्णं गृहीत्वा ससुता सुगुप्तं भर्त्तुः सुहृदो गृहमगात्। तत्र स्थित्वा च युक्त्या तच्चौरकलेवरं दाहयित्वा तदस्थीनि च तीर्थेषु क्षेपयामास।

अथान्येद्युर्गृहीतगुप्तार्था ससुता निर्गत्य प्रयान्ती क्रमेण वक्रोलकं पुरमाससाद। तत्र वसुदत्तनाम्नो वणिजः सकाशात् गृहमेकं क्रीत्वा तया धनवत्या सुतया सह तस्मिन्नुवास। तस्मिंश्चावसरे विष्णुस्वामीति कश्चि-

दुपाध्यायस्तत्र वसति स्म। तस्य मनःस्वामी नाम अति-
रूपवान् कश्चिद् विप्रः शिष्योऽभवत्। स विद्याभिजन-
सम्पन्नोऽपि यौवनमत्तः तत्रत्यां हंसावलीं नाम विलासिनीं
चकमे। सा च यौवर्णदीनारशतपञ्चकं भाटिम् अन्वह-
मगृह्णीत्। तावन्ति च धनानि अप्राप्य असौ विप्रयुवा
नितरां क्षामवपुश्चिन्ताकुलोऽभवत्। एकदा सा वणिक्-
सुता हर्म्यस्था तादृशं क्षामकलेवरमपि अभिरामं तं युवानं
दृष्ट्वा तद्रूपेणाकृष्टचित्ता भर्त्तुश्चौरस्य आदेशं स्मरन्ती मातर-
मुवाच अम्ब! विप्रसुतस्यास्य रूपयौवने विश्वस्य नयना-
मृतवर्षिणी पश्य, एतदाकर्ण्य सा तस्मिन् बद्धभावां ताम-
वेत्य सा वणिक्पत्नी व्यचिन्तयत् दुहित्रा मे भर्त्तुराज्ञया
कश्चित् सुतार्थं वरणीयः तस्मादेष एव किं नाभ्यर्थ्यते?
इत्यालोच्य कामपि चेटीं तमानेतुं व्यसृजत्। सा च चेटी
विजने गत्वा तस्मै तत्सन्देशं शशंस। स च द्विजयुवा
व्यसनी तदाकर्ण्य तामभाषत यदि हंसावलीहेतोः दी-
नारशतपञ्चकं मह्यं दीयते, तदा एकां यामिनीं गच्छामि।
इति तेनोक्तया चेट्या आगत्य तथैवोक्ता वणिक्स्त्री तस्याः
हस्तेन तस्मै तद्धनं प्राहिणोत्। तदादाय मनःस्वामी तस्याः
दुहितुरावासं ययौ। आगत्य च स चकोर इव ज्योत्स्नां
तां ददर्श ननन्द च। तया सम्भं सम्भोगलोलया तां रात्रिं
नीत्वा प्रातःसुगुप्त निर्गत्य यथागतमगात्। सापि
वणिक्सुता तस्मात् सगर्भाभूत्।

अथ कालेन सा सुलक्षणं पुत्रमसूत। तां सुतोत्पत्त्या
परितुष्टां समाढ्यकां निशि हरः स्वप्ने प्रदर्शितवपुरादिदेश

हिमवत्स्येव युवाम् इमं शिशुं राज्ञः सूर्य्यप्रभस्य द्वारि नीत्वा मञ्चस्थं कृत्वा त्यज। एवं ते चेमं भवितेति समादिष्टा हरेण सा वणिक्सुता तन्माता च प्रबुध्य अन्योन्यमूचतुः तत्यजतुश्च भगवत्प्रत्ययात् तं राजद्वारं नीत्वा बालकम्। तावच्च तमपि सूर्य्यप्रभं पुत्रचिन्तासमुत्सुकं नृपं स्वप्ने भगवान् वृषध्वजस्तथैव समादिशत् राजन्! उत्तिष्ठ सिंहद्वारि सकाञ्चनो बालकः तिष्ठति केनापि स्थापितोऽतिसुलक्षणः मञ्चस्थितः। तं द्रुतं गृहाण। इति शम्भुनादिष्टः स राजा प्रातः प्रबुध्य तथैव द्वास्थैः प्रविश्य विज्ञप्तः स्वयं निर्य्ययौ। दृष्ट्वा सिंहद्वारे सहेमचयं मञ्चस्थं शिशुं रेखाच्छत्र ध्वजाङ्क पाणिपादं शुभाकृतिं शम्भुना दत्तोऽयं समुचितः पुत्र इति सानन्दं ब्रुवन् स्वयं बाहुभ्यां गृहीत्वा अन्तःपुरं विवेश। महोत्सवं कृत्वा च द्वादशेऽहनि पुत्रं नाम्ना चन्द्रप्रभमकरोत्। इत्थं स राजपुत्रश्चन्द्रप्रभः क्रमेण वपुषेव गुणेनापि आश्रितानन्ददायिना सर्वान् समनुरञ्जयन् शनैर्युवा सन् शौर्य्यौदार्य्यगुणादिभिरावर्जितप्रकृतिमण्डलः पृथिवीभारवहनक्षमः समजायत।

अथ सूर्य्यप्रभः पिता तादृशं तं दृष्ट्वा राज्ये अभिषिच्यैव वृद्धो वाराणसीं ययौ। ततश्च तस्मिन् नयशालिनि तनये पृथ्वीं शासति स राजा तत्र वाराणस्यां तीव्रतपसा तनुमत्यजत्। ततः स धार्मिको नरपतिः चन्द्रप्रभः पितृनिधनं श्रुत्वा अनुशोच्य कृतक्रियः सर्वान् सचिवान् अभ्यधात् तातस्य केनापि नाहमनृणो भवितुं क्षमः, तथापि स्वहस्तेन अस्य एकां निष्कृतिं ददामि, गङ्गायामस्य अस्थीनि

नीत्वा क्षिपामि, गयाञ्च गत्वा सर्वपितृभ्यः पिण्डं ददामि। एतत्प्रसङ्गेन च मे तीर्थयात्रा भविष्यति। इत्युक्तवन्तं राजानं मन्त्रिणो व्यज्ञिज्ञपन् देव! न तावदिदं ते कर्त्तुं युक्तं राज्यं हि बहुच्छिद्रं पितृरूपक्रियां च ते पुरोहितेनापि सम्पद्यते। स्वधर्मपालनात् तीर्थयात्रा न ते साधीयसी, बहुपापं क्व पान्थत्वं नित्यगुप्तः पार्थिवश्च क्व? इति मन्त्रिणां वचः समाकर्ण्य चन्द्रप्रभोऽब्रवीत् अलं विकल्पेन, पित्रर्थं अवश्यमेव मया गन्तव्यम्। तीर्थानि च मया गन्तव्यानि यावत् अहं शक्नोमि पश्चात् क्षणविनश्वरे शरीरे को वेत्ति किं भावि, यावदहमागच्छामि तावत् युष्माभिः राज्यं रक्ष्यमिति इत्थं राज्ञो निश्चयं श्रुत्वा मन्त्रिणस्तूष्णीमासन्। ततः स भूपतिः सर्वं प्रयाणसम्भारं सज्जं चक्रे। अथ शुभेऽहनि स राजा स्नातो हुताग्निः ब्राह्मणानर्चयित्वा सज्जितं रथमास्थाय प्रयतः शान्तवेशः सामन्तान् राजपुत्रान् पौरजानपदानपि आसीमान्तानुयायिनः सन्निवर्त्त्य सम्भाष्य च ब्राह्मणैर्वाहनारूढैः पुरोहितेन च सह प्रतस्थे। गच्छंश्च पथि विचित्रदेशभाषादिविलोकनविनोदितः क्रमात् बहून् देशान् क्रामन् जाह्नवीं प्राप। ददर्श च तां तरङ्गकल्लोलपङ्क्तिभिः जीवानां त्रिदिवारोहसोपानपङ्क्तिं सृजतीमिव हिमवत्प्रभवां गौरीं प्रतीक्ष्येव शम्भोः क्रोडगां क्रीडन्तीं देवर्षिगणवन्दिताम्। ततश्च राजा रथादवरुह्य यथाविधि कृतस्नानविधिः पितुः सूर्यप्रभस्य अस्थीनि गङ्गाम्भसि निचिक्षेप। तत्र च यथाविधि दानानि दत्त्वा कृतश्राद्धो रथमारुह्य प्रस्थितः क्रमेण

प्रयागं तीर्थमवाप। तत्र चोपोष्य कृतस्नानो श्राद्धदाना-
दिकञ्च यथाविधि कृत्वा वाराणसीं जगाम। तस्याञ्च
त्रीणि दिनानि उपोष्य वृषभध्वजमर्च्चयित्वा गयां प्रति
प्रययौ। क्रमेण नानाविधानि वनानि गिरीन् नदी-
श्चातिक्रम्य गयाशिरः प्राप। तत्र विधिवत् भूरिदक्षिणं
श्राद्धं विधाय गयाकूपे पिण्डं ददतोऽस्य पिण्डमादातुं
त्रयो मानुषपाणयः समुत्तस्थुः। तदवलोक्य स राजा
विभ्रान्तः किमेतदिति विमूढ़मतिः कस्मिन् पाणौ पिण्डं
क्षिपामीति निजान् ब्राह्मणानुवाच देव! अयं तावदेक-
श्चौरस्य पाणिर्निश्चितं यस्मिन् लौहमयः शङ्कुर्दृश्यते। द्विती-
यश्च करोऽयं ब्राह्मणस्य, यतो धृतपवित्रो दृश्यते, तृतीय-
श्चायं पाणिर्महाराजस्य साङ्गुलीयः सुलक्षणो विभाव्यते।
तत्र विद्मो वयं क्कायं पिण्डो निक्षेप्यः, किमिदं भवेदिति।
इति तैर्द्विजैरुक्तो राजा निश्चयं कर्त्तुं नाशकत्। इति
विचित्रां कथामाख्याय वेतालः स्कन्धस्थित एव पप्रच्छ
राजन्! कस्मिन् हस्ते स पिण्डो देय इति संशयं छिन्धि,
स्मर्य्यतां त्वया प्राक्तनः समय इति। राजाब्रवीत् वेताल!
यतोऽसौ राजा चन्द्रप्रभः क्षेत्रजः चौरस्यैव पुत्रः, नान्ययोः,
तस्मात् चौरहस्ते एव स पिण्डो देयः। विप्रस्य जनक-
स्यापि स पुत्रो न भवितुमर्हति, तेन हि धनेन एकां
रजनीम् आत्मा विक्रीतः। राज्ञः सूर्य्यप्रभस्यापि
संस्कारदानवर्द्धनादिभिः असौ पुत्रो भवेत्। यदि
तत्कृते अस्यस्यास्य स्वर्णराशयो न प्राप्येत। राजा
सूर्य्यप्रभो न्यस्तधनेनास्य वर्द्धनादिकमकरोत्। तस्मात्

यस्य हस्ते समर्पिता, यस्याज्ञया राज्ञस्तस्य चन्द्रप्रभस्य जननं यस्य च तत् निखिलं धनं तन्माचा समासादितं तेनैव विप्रसुतात् बीजं क्रीतं तस्यैव चौरस्य स क्षेत्रजः पुत्रः तस्मात् तस्यैव हस्ते पिण्डोऽदेय इति मे मतिः। इत्याकर्ण्य स वेतालः पुनरलक्षितः नृपस्कन्धात् तमेव शिंशपातरुमाश्रयत्। राजापि तथैव निश्चलप्रतिज्ञस्त-मन्वसरत।

## अथ चतुर्नवतितमस्तरङ्गः

ततः स राजा शिंशपान्तिकं गत्वा पुनस्तं वेतालं स्कन्धमारोप्य मौनी तथैव चचाल। वेतालोऽपि स्कन्ध-वर्त्ती तं मौनिनमवलोक्य प्रोवाच राजन्! कस्तेऽयं निर्बन्धः, गृहं गच्छ, रात्रिसुखं सेवस्व, कुभिक्षोस्तस्या-न्तिकं मां नेतुं न ते युक्तं ग्रहातिशयश्चेत् तव, तदा पुनरिमां कथामाख्यामि शृणु।

अस्ति चित्रकूटं नाम नगरम्। तत्रासीत् प्रणयि-चक्षुषाममृतासारवर्षी राजशिरोमणिश्चन्द्रालोको नाम। विद्वांसः यं शौर्य्यकरिणः आलानं दानस्रोतपत्तिनिकेतनं रूपस्य च विलासभवनं वदन्ति स्म। सर्वसम्पत्पूर्णस्यापि तस्य सदृशीं भार्य्यामप्राप्तवतस्तस्य हृदि महागुरुरोगः समभवत्।

एकदासौ राजा उद्वेगविनोदाय अश्वीयसैनिक-परिवृतो मृगयार्थं महाटवीं जगाम। तत्र निरन्तरैः शरैः वराहवृन्दानि श्यामलानि तमांसीव रविः करैः भिन्दन् समरदुर्मदान् सिंहान् शरशय्यासु शाययन् शरभांश्च पर्वतोपमान् कुलिशकर्कशप्रासपातैः पातयन् विचचार। इत्थं मृगानन्विष्यन् तीव्रपार्ष्णिप्रहारेण वाजिनं भृशं ताड़यामास। स च वाजी कशाघातेन पार्ष्णिघातेन च गाढ़ं ताड़ितो विषमं समश्वागणयन् चणात् वाताधिक-जवेन तं भूपं वनान्तरं नयन् दश योजनानि अतिक्रम-यामास। इत्थं वाहे चलिते राजा दिङ्मोहमुपेत्य भ्रमन् श्रान्तः आरात् एकं विपुलं सरो ददर्श। तत्र गत्वा च तुरगं विपर्य्याणं कृत्वा स्नातपीतं तरुच्छायासु कतिपयान् यवसान् तस्मै दत्त्वा च स्वयं कृतस्नानः सलिलं पिबन् विगतश्रमो रम्येषु तत्तत्प्रदेशेषु दृष्टिं निक्षि-पन् एकस्मिन् अशोकतरोरधस्तात् कामपि आमुक्त-पुष्पाभरणां वल्कलांशुकशोभिनीं बद्धमुग्धजटाजूटसवि-शेषमनोरमां सखीद्वितीयां आश्चर्य्यरूपां मुनिकन्यां ददर्श। चिन्तयामास च कामशराहतः, केयं ? किं स्वित् सावित्री सरसीषु स्नातुमागता ? आहोस्वित् स्वामिविभ्रष्टा गौरी पुन स्तपः कर्त्तुं प्रवृत्ता ? किंवा दिवातनीं कान्तिं शेषुं इन्दोः श्रियं धृतव्रता ? तदेनामुपसृत्य वार्त्तामुपलप्से इत्यालोच्य शनैस्तस्याः समीपमाययौ। सापि तमायान्तं दृष्ट्वा तद्रूपेण समाकृष्टचित्ता प्रारब्धपुष्पस्रक्सन्नहस्ता व्यचिन्तयत् कोऽयमीदृक् अस्मिन्नरण्ये, विद्याधरः कोऽपि वा,

चरितार्थं ममाद्य दृशौ, इत्थं वितर्क्य त्रपया तिर्य्यक् पश्यन्ती उत्थाय सोद्वसत्थापि गन्तुं प्रावर्त्तत। अथ राजा तामुपेत्याब्रवीत् सुन्दरि! प्रथमदृष्टस्य दर्शनमात्रार्थिनः दूरागतस्य जनस्य स्वागतादिकमास्तां कोऽयमाश्रमिधर्मः यदेतस्मात् पलाय्यते। इति तेन राज्ञाभिहिते विचक्षणा तदीया सखी तत्र राजानमुपवेश्य अतिथिसत्क्रियामकरोत्। अथ राजा तां सविनयमप्राक्षीत् भद्रे! अनया तव सख्या कः पुण्यवान् वंशः अलंक्रियते? कानि वास्याः कर्णरसायनानि नामाक्षराणि? कथं वा अनया कुसुमसुकुमारमिदं वपुः ईदृशे वयसि तापस्या वृत्त्या विजने कदर्थीक्रियते? एतत् राजवचनमाकर्ण्य सखी तं प्रत्यभाषत महाभाग! एषा महर्षेः कण्वस्य कन्यका मेनकासम्भवा आश्रम एव वर्द्धिता इन्दीवरप्रभा नाम। अस्मिन् सरसि पितुरनुज्ञया स्नातुमागता। इतो नातिदूरे अस्याः पितुराश्रमः। इत्यभिहितो राजा सम्प्रहृष्टः तुरङ्गमारुह्य तां कन्यां याचितुं महर्षेः कण्वस्याश्रममगात् प्राविशच्च विनीतवेशस्तमाश्रमं बहिः स्थापितव्यूहः। प्रविश्य च राजा जटावल्कलधरैः पाद्पैरिव तापसैः परिवृतं तेजसा चन्द्रमिव आह्लादिनं तं ऋषिं कण्वमद्राक्षीत्। दृष्ट्वैवोपेत्य तं पादयोर्ववन्दे। सोऽपि ज्ञानी मुनिः कृतातिथ्यं विश्रान्तं तमभाषत वत्स! चन्द्रालोक! शृणु यदहं वच्मि ते हितम्। संसारेऽस्मिन् प्राणिनां मृत्युभयं यादृक् तदहं जानामि। तत् निरर्थकं कथमिमान् मृगादीन् हंसि? भीतरक्षार्थमेव

धाता चतस्य प्रसृष्टं, तत् धर्मेण प्रजा रक्ष, कण्ट-कान् समुन्मूलय। इत्यवमादिभिः साधनैः चलां लक्ष्मीं साधयितुं यतस्व, राज्यसुखं भुङ्क्ष्व दानं देहि दिक्षु यशांसि विकिर, कृतान्तक्रीड़ितं मृगयाव्यसनं परित्यज यत्र हन्तुर्हन्यमानस्य च तुल्यप्रमादितास्ति तेन वहनर्थेन अनेन व्यापारेण किम्? पाण्डोर्नृपस्य वृत्तं त्वया किं न श्रुतम्। एतदाकर्ण्य मुनिवचनं कार्य्यज्ञो नृपः सम-भिनन्द्य प्रत्यभाषत भगवन्! अनुशिष्टोऽस्मि, महान् अनु-ग्रहो मे कृतः अनेन अनुशासनेन। अद्य प्रभृति मृगया-निवृत्तोऽभवं, प्राणिनो निर्भयाः सन्तु। तदाकर्ण्य मुनिरब्रवीत् तुष्टोऽस्मि तवामुना प्राणिष्वभयदानेन, तदी-प्सितं वरं वृणीष्व इति। ततः स कालज्ञो नृपतिरब्रवीत् भगवन्! प्रसन्नोऽसि चेत्, सुतामिन्दीवरप्रभां मह्यं देहि इत्यर्थितः स मुनि स्तस्मै स्नातागतां तामप्सरःसम्भवां कन्यां प्रददौ। ततः कृतविवाहः मङ्गलालङ्कृतः तां मुनिपत्नीकृतप्रसाधनाम् उद्वाष्पैस्तापसैरानिजाश्रमात् कृ-तानुयात्रां तामिन्दीवरप्रभां भार्य्यामादाय वाजिनमारुह्य राजधानीं प्रतस्थे।

एतस्मिन्नन्तरे दूराध्वगमनक्लान्तं तं नृपं वीक्ष्य भग-वान् सहस्ररश्मिः खिन्न इव अस्ताचलशिरसि समुपावि-शत्। ददृशे च रात्रिरभिसारिका मृगनेत्रा क्रमादुद्रिक्त-मन्मथा ध्वान्तनीलपटप्रावृता। तस्मिंश्चावसरे राजा जलाशयतीरवर्त्तिनं शाखापल्लव संकुल शाद्वलश्यामलस्थ-लम् अश्वत्थपादपं दृष्ट्वा. इह रात्रिं वसामि इति मनसि

अकरोत् । ततस्तुरगादवतीर्य्य तस्मै वाजिने तृणोदकं दत्त्वा वाप्या स्तस्याः सलिलानि पीत्वा प्रियया सह विशश्राम । तत्कालञ्च शशलाञ्छनः सरागः तिमिरांशुकहारी समाक्रम्य प्राच्या मुखं चुचुम्बे चन्द्रकिरणैः समाश्लिष्य प्रसाधिता वीतमामावकाशाः शेषाश्च दिशो विरेजुः । अत्रान्तरे लतागुल्मविवरप्रसृतैरैन्दवैः रत्नदीपाभैः करैस्तरुमूले अवभासिते स राजा तामिन्दीवरप्रभां नवसङ्गमरसोल्लासामाश्लिष्य सुरतोत्सवं सिषेवे । विस्रंसयामास च तस्यास्त्रपामिव नीवीम् । खण्डयामास च दशनैस्तस्या मुग्धभावमिवाधरम् । रचयामास च यौवनद्विपकुम्भयोः तस्याः कुचयोः सद्रत्न नवनखक्षतमाला इव नखक्षतानि । चुचुम्ब च मुहुः सर्वतो लावण्यामृतनिस्यन्दमिव पिबन् मुखं कपोलौ नयने च । इत्थं तया सह निधुवनक्रीड़या तत्र तां निशां क्षणमिवानयत् ।

अथ प्रातः समुत्थाय कृतसान्ध्यविधिः स्वसैन्यानुसन्धानाय तया कान्तया सह प्रयातुमुत्सुकोऽभवत् । तावच्च रजन्यां विलुप्तकमलिनीशोभं भियेव अस्ताचलकुहरप्रलीनं ध्वस्ततेजसं निशापतिं हन्तुकाम इव क्रोधादाताम्रतररोचिषि प्रसारितकरैरुत्क्षिप्त चन्द्रमण्डले विवस्वति अकस्मात् विद्युत्पिशङ्गजटः कज्जलश्यामलः कालमेघ इव कश्चित् अक्षमालाकृतोत्तंसः केशयज्ञोपवीती ब्रह्मराक्षसः नरशिरोमांसं खादन् कपालेन शोणितं पिबंश्च समाजगाम । सः अट्टहासं विमुच्य क्रुधा अग्निं वमन्निव दंष्ट्राकरालो राजानं तं निर्भर्त्सयन्नब्रवीत् पाप ! ज्वाला-

मुखं नाम मां ब्रह्मराक्षसं विद्धि। एष चाश्वत्थो मे निवासः देवैरपि न लङ्घ्यते। सोऽयं त्वया स्त्रिया सह समाक्रम्य परिभुक्तः, तदविनयमिदानीं भुङ्क्ष्व, दुराचार! एषोऽहं कामोपहतचेतसः ते हृदयमुत्पाट्य भोक्ष्ये शोणितञ्च पास्यामि। तदाकर्ण्य तञ्च घोरं राक्षसमवध्यमवेक्ष्य दृष्ट्वा च कान्तां भयविह्वलां, भयात् राजा सविनयमवादीत् अजानता मया ते अपराद्धं तत् क्षमस्व, तवाश्रमेऽहमतिथिस्त्वां शरणं गतः। दास्यामि च ते ईप्सितं पुरुष पशुम्। येन ते तृप्तिर्भविता, तत् प्रसीद क्रोधं परिहर इति राज्ञो वचनमाकर्ण्य स ब्रह्मराक्षसः शान्तकोपः अस्तु को दोष इति विविच्य प्रत्यभाषत राजन्! यः सप्तवर्षीयः महासत्त्वः विवेकवान् ब्राह्मणपुत्रः स्वेच्छया त्वदर्थमात्मानं दद्यात्, यञ्च हन्यमानं तन्माता हस्तयोः तत्पिता च पादयोः सुदृढं महीतले सन्निवेश्य अवष्टभ्नाति, सप्तदिनाभ्यन्तरे तादृशं पुरुषं स्वयं खड्गप्रहारेण मह्यमुपहारीकरोषि चेत् तदा ते इमं न्यक्कारं क्षमिष्ये, अन्यथा त्वां सपरिच्छदं सद्यो नाशयिष्यामि। श्रुत्वैतत् स राजा भयात् तथेति प्रतिपेदे। सोऽपि ब्रह्मराक्षसः तत्क्षणात् तिरोबभूवे।

अथ राजा चन्द्रालोकस्तया इन्दीवरप्रभया सह हयारूढः सुदुर्मना इतस्ततः सैन्यानि चिन्वन् प्रायात्। अहो! अहं मृगयया मदनेन च विमोहितः अकाण्डे पाण्डुरिव विनाशं गतः अस्य रक्षसः तादृशः उपहारः कुतो लभ्यते? तदिदानीं निजमेव नगरं यामि, पश्यामि किं—

भावि। इति ध्यायन् सः समन्तात् अन्विष्यन् स्वसैन्यं स्वनगरं चित्रकूटञ्च प्राप। तत्र अनुरूपभार्य्यालाभेन परितुष्टाभिः प्रकृतिभिः महोत्सवे विहितेऽपि अन्तर्गत-विषादस्य तस्य दुःखदुःखेनैव दिनशेषो व्यपगमत्। द्वितीयेऽहनि स रहसि मन्त्रिभ्यः तं सर्वं वृत्तान्तमाचचक्षे। तेषाञ्चैकः सुमतिर्मन्त्री प्रत्यब्रवीत् देव! विषादस्ते माभूत् अहमन्विष्यन् तादृशमुपाहारमानेष्यामि, विचित्रा हि मेदिनी। एवं राजानमाश्वास्य स मन्त्री सौवर्णीं शिशु-प्रतिमामकरोत्। यः सप्तवर्षदेशीयः विप्रपुत्रः सत्त्ववान् आत्मानं मातापित्रोरनुज्ञया ब्रह्मरक्षसः उपहाराय प्रयच्छति, यस्य हन्यमानस्ताभ्यां मातापितृभ्यां हस्त-पादे प्रगृह्यते, राजा तस्मै तत्पित्रोरुपकारार्थं ग्राम-शतसहितां रत्नयुक्तामिमां सौवर्णीं प्रतिमां तस्मै दास्यति। इति तां शिशुप्रतिकृतिं भ्रामयन् स मन्त्री अजस्रं पटहोद्घोषणमकारयत्।

एतदाकर्ण्य एकस्मिन्नग्रहारे कश्चित् द्विजशिशुः सप्त-वर्षदेशीयोऽपि अतिधीरः अद्भुताकृतिः बाल्येऽपि सदा पर-हिते रतः प्रजानां पुण्यपरिपाक इव मूर्त्तिमान् उद्घोषकान् प्रोवाच भद्राः! युष्मदर्थे अहमात्मानं ददामि, तिष्ठत, पितरौ बोधयित्वा द्रुतमागच्छामि। इति तानभिधाय तैश्चानुमतः स बालः गृहं गत्वा रचिताञ्जलिः पितराव-ब्रवीत् अम्ब! तात! अहं सर्वसत्त्वार्थं एतं विनश्वरं देहं ददामि, तन्मामनुजानीतं इमाञ्च राजदत्तां हेमरत्नमयीं ग्रामशतान्वितां आत्मप्रतिकृतिं गृहीत्वा वां वितरामि-

एवं सति मम युष्मदानृण्यं परार्थश्च सिध्यति। युवाञ्च चिरमदरिद्रौ बह्नन् पुत्रानवाप्स्यथः। इति वादिनं तं सहसा तौ पितरौ अवोचतां पुत्र! किमेतद् भाषसे? वातेन किं क्षुभितोऽसि? किं वा ग्रहगृहीतोऽसि, अन्यथा कथमेवं प्रलपसि। को हि अर्थैः शिशुं घातयेत्। कश्च शिशुः देहं दद्यात्। एतत् पित्रोर्वचः श्रुत्वा स बालः पुनरुवाच नाहं बुद्धिमोहात् ब्रवीमि, शृणुतं मे अर्थवत् वचनम्। अवाच्याशुचिपूर्णं जुगुप्सितं दुःखक्षेत्रं शरीरमिदम् अचिरात् विनाशि, तदेतेन अत्यसारेण यदि किञ्चित् सुकृतमुपार्ज्यते, तदेव अस्मिन् संसारे सारमिति बुधैरुच्यते। सर्वभूतोपकारादन्यत् किमस्ति सुकृतम्? तत्रापि पित्रोर्भक्तिश्चेत् साध्यते तदा देहादन्यत् किमिव अधिकं सम्पत्स्यते? इत्येवं धीरवचनैः सुदृढनिश्चयः स शिशुः शोचन्तौ पितरौ स्वमनीषितमङ्गीकारयामास। गत्वा च राजभृत्येभ्यः तां हिरण्मयीं शतग्रामशासनसहितां आनीय ताभ्यां पितृभ्यां प्रददौ।

अथ तान् राजभृत्यानग्रतः कृत्वा स बालकः पितृभ्यामन्वितः चित्रकूटं नगरं प्रति प्रायात्। तत्र गाप्तं अखण्डिततेजसं तं बालकं रत्नारत्नमिव दृष्ट्वा नृपतिः भृशं ननन्द तञ्च रचितमाल्यविलेपनं गजपृष्ठमारोप्य सपितृकं तत् ब्रह्मरक्षसः सदनं निनाय। तत्र तस्याश्वत्थस्य पार्श्वतः मण्डलमालिख्य पुरोहितेन कृतपूजेन वह्नौ हुते स ब्रह्मराक्षसः मुक्ताट्टहासः स्वाध्यायं पठन् घूर्णन् रक्तासवक्षीवः मुहुः श्वसन् जृम्भमाणः नेत्रैर्ज्वलन् दिशः देहच्छायया अन्ध-

कारिताः कुर्वन् ज्वालामुखो महारौद्रदर्शनः प्रादुरभूत्। ततो राजा तं दृष्ट्वा विनीतः प्राब्रवीत् भगवन्! अयं तव अभिमतो नरोपहारः समानीतः अद्य स सप्तमो दिवसस्ते प्रतिज्ञायाः। तत् प्रसीद गृहाण इममुपहारं यथाविधि। इति राज्ञार्थितः स ब्रह्मराक्षसः जिह्वया सृक्कणी लिहन् तमुपहारभूतं विप्रसुतमवलोकयामास। क्षणे च तस्मिन् स बालो महासत्त्वो हृष्ट व्यचिन्तयत् अनेन स्वदेहदानेन यन्मया सुकृतं अर्जितं तेन मे स्वर्गो वा निरुपक्रियो मोक्षो माभूत् जन्मनि जन्मनि मे परार्थो देहो भूयात्। इति तस्मिन् चिन्तयत्येव क्षणात् पुष्पवृष्टिमुचां देवानां विमानैः नभस्तलमापूर्य्यत। अथ तस्य ब्रह्मरक्षसः पुरतः स्थापितं तं बालं माता करयोः पिता चरणयोरग्रहीत्। ततो यावत् खड्गमाकृष्य राजा तं जिघांसति तावत् स शिशु स्तथा जहास यथा सब्रह्मराक्षसास्ते सर्वे स्वं स्वं कर्म त्यक्त्वा तन्मुखप्रेक्षिणः कृताञ्जलयः प्रह्वाश्चाभवन्। इति विचित्रां कथामाख्याय स वेतालस्तं पुनरब्रवीत् राजन्! तेन बालकेन तादृशे तस्मिन् प्राणान्तसमये यत् हसितं तस्य को हेतुः? महदत्र कौतुकं मम यदि न वक्ष्यसि जानन्नपि, तदा ते मूर्द्धा दशधा विदलिश्यति। एतदाकर्ण्य स राजा तं प्रत्यभाषत शृणु तस्य शिशोर्हासे अभिप्रायम्। योहिदुर्बलो जन्तुः भये प्रत्युपस्थिते प्राणार्थं मातरं पितरं तदभावे राजानं त्राणार्थं विधात्रा निर्मितं एषाञ्चालाभे देवता माक्रन्दति, तस्य एकोऽपि एतेषु आश्रयो भवेत अस्य तु सर्वमेव अन्यथा

जातम्। पितृभ्यां हस्तपादं दत्तं तयोरर्थतृष्णया। राजा च आत्मानं त्रातुं स्वयं हन्तुमुद्यत:। ब्रह्मराक्ष: दैवतमपि तस्य भक्षणार्थमुपस्थितम्। अध्रुवस्य अन्तविरसस्य आधि-व्याधियुक्तस्य देहस्यार्थे विमूढानामीदृक् विडम्बनं यत्र ब्रह्मविष्णुरुद्रादयोऽपि अवश्यं विनाशिन: तत्रैषां ईदृशानां शरीरस्थैर्य्यवासना कापि ? एतत् मोहवैचित्र्यमेषां दृष्ट्वा वाञ्छितं सिद्धञ्च मत्वा आश्चर्य्यहर्षोदयात् स द्विजशिशु-र्जहास। इति राजवचनमाकर्ण्य स वेताल: तस्य स्कन्धात् भूयोऽपि स्वकं निलयमाससाद। राजापि दृढ़-सङ्कल्पस्तमनुययौ। अम्भोनिधीनामिव सतां हृदयम-क्षोभ्यं हि।

## अथ पञ्चनवतितमस्तरङ्गः।

•०•

अथ राजा पुन: शिंशपामूलं गत्वा तं वेतालं स्कन्धे-नादाय सत्वरं प्रतस्थे। तञ्च प्रस्थितं दृष्ट्वा स्कन्धवर्त्ती स वेताल: प्राब्रवीत् राजन्! उन्नादकन्दर्पामेकां कथां शृणु कथयामि।

अस्ति अमरावतीव परा सुकृतिनां दिवश्च्युतानां कृते धात्रा विहिता विशाला नाम पुरी। तस्यामासीत् सचक्र-नन्दन: श्रीमान् आक्रान्तबलिराजक: पद्मनाभ इति

विश्रुतो नृपतिः। तस्मिंश्च राजनि तस्यां नगर्य्यां महा-वणिक् अर्थदत्तो नाम धनैर्विजित-धनपतिः प्रतिवसति स्म। तस्य अनङ्गमञ्जरीति एका सुता उदपद्यत। यया सुरसुन्दरीप्रतिकृतिर्धात्रा दर्शिता। तेन वणिजा ताम्र-लिप्ति-निवासिने मणिवर्म-नाम्ने वणिजे सुता सा प्रदत्ता। एकापत्यतया चातिवत्सलः स वणिक् तां भर्तृयुक्तां कन्यामनङ्गमञ्जरीं न तत्याज। स तु मणिवर्मा रोगिणः कटुतिक्तमौषधमिव तस्या अनङ्गमञ्जर्य्याः द्वेष्यो बभूव। भर्त्तुस्तु तस्य सा सुन्दरी जीवितादपि कृपणस्य सुचिर-सञ्चिता समृद्धिरिव प्रियतराभूत्।

एकदासौ मणिवर्मा उत्कण्ठया पित्रोरन्तिकगमनाय ताम्रलिप्तिं प्रातिष्ठत। ततो दिनेषु गच्छत्सु तीक्ष्णसूर्य्यांशुसायकैः प्रोषितानां निरुद्धमार्गः निदाघ-कालः समुपस्थितः। वसन्तविरहात् ककुभां मुखनिश्वासा इव मल्लिकापाटलामोदमेदुरा मरुतो वान्ति स्म। पव-नोद्धृता रेणुराजयः तप्तया भुवा घनागमायेव गगनं प्रहिता दूत्य इव समुत्पेतुः। दिवसा अपि कठोरातप-तापिता आकाङ्क्षितरुच्छायाः पथिका इव चिरेण यान्ति स्म। निशा च चन्द्रांशुपाण्डुरच्छायाः गाढ़ाश्लेषसुखप्रदं हेमन्तं विना अतिदुर्बलतां ययुः। एतस्मिन् समये चन्दना-नुलिप्ताङ्गी परिहिततनुवसना स्वगृहवातायनस्थिता अनङ्ग-मञ्जरी कमपि आप्तेन सुहृदा सहितं भव्यं युवानं रति-प्राप्तये सञ्चरन्तं नवोत्पन्नं स्मरमिव कमलाकर-नामानं राजपुरोहितसुतं ददर्श। सोऽपि कमलाकरः इन्दोरिव

मूर्त्तिमुपरिस्थितां तां कान्तां दृष्ट्वा सानन्दः कुमुदाकरतामभजत। तदा तयोर्यूनोरन्योन्यावलोकनं स्मरस्य गुरोरनुज्ञया अचूर्णं मनःसवलनमभूत्। इत्थं तां दृष्ट्वैव स कमलाकरः सद्यो मदनाविष्टः सुहृदा तेन कथञ्चित् स्वं भवनमनीयत। सा चानङ्गमञ्जरी तथैव मन्मथमोहिता सख्या मुखात् तन्नामधामनी श्रुत्वा तयैव सह शनैः वासकं विवेश। तत्र तं कान्तं सञ्चिन्तयन्ती कामज्वरातुरा शयनीये केवलं लुठन्ती किमपि नापश्यत् नाप्यशृणोत्।

इत्थं गतेषु द्वित्रेषु दिनेषु सत्रपा सभया विरहेण कृशपाण्डुरा दुष्पापप्रियसम्भोगनिराशा नक्तमेकदा गवाक्षप्रेरितकरेणेन्दुना आकृष्टेव सुप्ते परिजने निर्गत्य मरणनिश्चया स्वगृहोद्यानवापीं तरुतलवर्त्तिनीमगात्। तत्र पित्रा कृतप्रतिष्ठां कुलदेवतां चण्डीं समुपेत्य प्रणम्य नत्वा च व्यजिज्ञपत् देवि! अस्मिन् जन्मनि चेत् न मया कमलाकरः पतिः प्राप्तः, तदा अन्यस्मिन् जन्मनि स मम पतिर्भूयादिति प्रार्थ्य तस्या देव्याः पुरतः अशोकपादपे स्वोत्तरीयेण पाशं विरचयामास। तावच्च तस्याः सा आप्ता सखी प्रबुध्य वासके तामदृष्ट्वा चिन्वती दैवात् तदुद्यानमगात्। तत्र चागत्य तां गले पाशं योजयन्तीं दृष्ट्वा मा मा इत्युक्त्वा प्रधाव्यैव तस्यास्तं पाशमच्छिनत्। सापि तां कृतपाशां निजां सखीं प्राप्तां दृष्ट्वा अतिदुःखिता भूमौ पपात। ततश्च सख्या तया समाश्वासिता पृष्टा च दुःखहेतुं समुत्थाय क्रमकथयत् सखि मालति! दुर्लभे तस्मिन् प्रियसङ्गमे

पित्रादिपरतन्त्रायाः मे मरणात् परं सुखं नास्ति। इति ब्रुवाणा भृशमनङ्गशराग्निज्वलिता नैराश्यनिश्चयवती मोहं जगाम। हा कष्टं, स्मरस्य शासनं तथा दुर्लङ्घ्यं यथा इयमेतां दशां नीता इति विलपन्ती सा मालती सखी तां शीताम्बुपवनादिभिः शनैराश्वासयामास। चकार चास्याः तापोपशान्तये नलिनीदलैः शय्याम्। ददौ हृदये तुहिनशीतलं हारम्। ततः सा अनङ्गमञ्जरी लब्धसंज्ञा शनैः तां सखीं उद्बाष्पां प्रोवाच सखि! हारादिभिः नायं मे अन्तर्दाहः प्रशाम्यति। यदि मां जीवितामिच्छसि तदा सुयुक्त्या तेन कान्तेन मां योजय। एवं वादिनीं तां स्नेहार्द्रा मालती प्राब्रवीत् सखि। प्रायेणाद्य निशा गता, तत्प्रातरेव इह तं ते प्रियतमं सङ्केतेन आनेष्यामि। तस्मादालम्ब्य धृतिं, मधुना स्वं निवेशनं गच्छ। इत्युक्तवत्यै सख्यै सानङ्गमञ्जरी तुष्टा कण्ठादाकृष्य हारं पारितोषिकं दत्तवती। गच्छाव, इदानीं स्वगृहं ततः प्रातः कार्य्यसिद्धये गन्तव्यं त्वया इति तां सखीमुपदिश्य सा स्वमावासं प्राविशत्।

अथ प्रातः सा मालतिका केनाप्यनुपलक्षिता तस्य कमलाकरस्य भवनं चिन्वती गत्वा तत्रोद्यानतरुमूले चन्दनार्द्रपद्मिनीदल शय्यायां स्थितं एकेन रहस्यविदा सुहृदा कदलीदलवीजनै राश्वास्यमानं कामाग्निना दंदह्यमान तं कमलाकरमद्राक्षीत्। सा तु मम सख्या विना एतस्य ईदृशी कामावस्था स्यात् नवेति वेदितुं प्रच्छन्ना विनिश्चयं तस्थौ। तावत् सुहृत् स कमलाकरमवादीत्

मित्र। अत्रमत्र मनोरमे उद्याने दृष्टदृष्टि स्वान्तःकरणं विनोदय, मा भृशं व्याकुलतां गमः। तदाकर्ण्य स सुहृदं तं जगाद मम 'अनङ्गमञ्जर्या मनो हृतं तदिदं मदीये शरीर एव नास्ति कुतो विनोदयामि। स्मरेणाहं शून्यहृदयो बाणतूणीकृतोऽस्मि, तत् यथा तां मनस्विनीं प्राप्नोमि तथोपायं विधत्स्व। इति तेनोक्ते सा मालती निःशङ्का सम्प्रहृष्टा समुपेत्य आत्मानं प्रदर्श्य तमुवाच सुभग! अनङ्गमञ्जर्या तवान्तिकं प्रहितास्मि, निसृष्टाहं ते सन्देशं ब्रवीमि। क एष शिष्टधर्मः, यत् हठात् हृदयं प्रविश्य मुग्धया मनः मुषित्वा गम्यते। चित्रमिदं तथापि वामदृशा तया अधुना मनोहराय तुभ्यं देहोऽपि प्राणैः सह दातुमिष्यते। सा हि सन्तप्तान् दिवानिशं हृदि ज्वलितस्य कामाग्नेर्धूमानिव निश्वासान् विमुञ्चति मुहुः। अस्याः साञ्जना बाष्पबिन्दवः वदनाम्भोजसौरभलुब्धा मधुकराः इव सम्पतन्ति। तद् यदीच्छसि तत् उभयोः शिवं वच्मि। इति मालत्या तथोक्तः कमलाकरः प्रोवाच भद्रे! तवेयं वाक् विधुरावस्थां बद्धभावाञ्च मे प्रियां वदन्ती भयं करोति आश्वासयति च। तदेका त्वमेवात्र गतिः तत् यथोपायं कुरुष्व। इति तेनोक्ते मालतिका प्रत्यवोचत् अद्य तामनङ्गमञ्जरीं गुप्तं नक्तं स्वभवनोद्यानं प्रापयिष्यामि त्वं तत्र बाह्यतः तिष्ठेः। ततस्त्वां सुयुक्त्या तत्र प्रवेशयिष्यामि इत्थं युवयोः समागमो भविता। इति कथयित्वा तं विप्रपुत्र मानन्द्य मालती कृतार्था गत्वा तामनङ्गमञ्जरीं अभ्यनन्दयत्।



अथाङ्गा सह दिनपतौ सन्ध्यानुरागिणि क्वापि गते, वासवाशया स्वानने इन्दुतिलकेन प्रसाधिते पद्माकरं त्यक्त्वा श्रीरिदानीं मां प्राप्तेति हर्षात् उत्फुल्लवदने विषदे कुमुदाकरे हसति स कामी कमलाकरः प्रसाधिताङ्गः समुत्सुकः स्वैरं कान्तायास्तस्या गृहोद्यानद्वारि समुपागमत्। मालती च तामनङ्गमञ्जरीं कृच्छ्रात् गमितवासरां युक्त्या तद् गृहोद्यानमानिनाय। आनीय तां चूतशाखिनां तलेषु समुपवेश्य निर्गत्य तत्र तं कमलाकरं प्रावेशयत्। स च प्रविश्य पान्थ इव पल्लीघनपादपमध्यवर्त्तिनीं छायामिव तामनङ्गमञ्जरीमद्राक्षीत्। यावच्च स तामुपैति तावत् सा दृष्ट्वैव प्रधाव्य कामावेशकृतव्रीड़ा कण्ठे तं सहसाग्रहीत्। क्व यासि लब्धोऽसि मया मनस्तस्कर! इत्यालपन्ती तत्क्षणं सा अतिहर्षभरस्तब्धनिश्वासा पञ्चतामगात् पपात महीपृष्ठे वातहता लतेव विचित्रं वत कामस्य विषमः क्रमः। तदशनिपाताग्रं दृष्ट्वा स कमलाकरः सद्यः हा! हा! किमेतदित्युक्त्वा मूर्च्छितो निपपात। क्षणेन च लब्धसंज्ञस्तां प्रियामङ्कमारोप्य आलिङ्गन् परिचुम्बन् बहु विलपंश्च तथा दुःखातिभारेण प्रसह्य न्यपीड्यत यथा तस्यापि तदा हृदयमस्फुटत्। अथ तौ तथा क्षीणौ दृष्ट्वा रजनी क्रिया भिया च क्षीणेवाभवत्।

अथ प्रातरुद्यानपालेभ्यस्तं वृत्तान्तं ज्ञात्वा तयोर्बन्धुजनः त्रपाश्चर्य्य दुःखमोहाकुलः तत्रागात् कर्त्तव्यमूढ़श्च चिरमवाङ्मुखः समभवच्च। हा! कष्टं कुयोषितः कुलखलीकार हेतवः। तस्मिंश्चावसरे तस्याः पतिः मणिवर्मा अव-

ङ्गमञ्जर्य्या सोत्कण्ठः ताम्रलिप्तितः पितृगृहात् समाययौ। स श्वाशुरं गृहं प्राप्य तं व्यापारमवेक्ष्य च बाष्पाम्बुलोचनो ध्यायन् तद्देवोद्यानमागत्य भार्य्यां तामन्यसहितामपि गतासुं दृष्ट्वा शोकाग्निज्वलिताङ्गः सद्यः प्राणान् विजहौ। ततः सर्वस्मिन् जने कोलाहलाकुले क्रन्दति ज्ञातवृत्तान्ताः सर्वे पौरास्तत्र समाययुः। अथानङ्गमञ्जर्य्याः पित्रा पूर्वं प्रतिष्ठापिता सन्निहिता देवी चण्डी निजैः गणैः सङ्कपैः विज्ञप्ताभूत् मातः! त्वदाकार प्रतिष्ठापयितायमर्थदत्तः सदैव ते भक्तो वणिक् तदस्य अस्मिन् दुःखे दयां वितरतु भगवतीति। एतद् गणेभ्यः श्रुत्वा शरण्या सा शङ्करी शान्तानङ्गास्त्रयोऽपि एते जीवन्तु इति समादिशत्। अथ सर्वेऽपि सुप्तप्रबुद्धा इव क्षणात् तत्प्रसादात् जीवन्तोगतमन्मथाः समुत्तस्थुः। ततो दृष्ट्वा तद् व्यापारं सानन्दे तत्रत्ये सर्वस्मिन् जने कमलाकरः लज्जावनतमुखः स्वगृहं प्रायात्। अर्थदत्तोऽपि तां क्षीतां सुतामनङ्गमञ्जरीं भर्त्तृसहितामादाय सोत्सवं गृहं प्रविवेश। इति कथां कथयित्वा तस्यां रात्रौ पथि स वेतालः तं क्षोणीपतिमगदत् राजन्! कस्यैतेषु अनुरागमरणे मोहातिरेकः? जानंश्च न चेत् वदसि, तदा स पूर्वोक्त एव शापः स्मरणीयः। तदाकर्ण्य राजा तं प्रत्युवाच योगीश्वर! एतेषु मणिवर्मा एवातिमूढ़ो, योऽहि भार्य्यामन्यपुरुषासक्तमृतां दृष्ट्वैव कोपकाले प्रत्युत रक्तः शुचा प्राणानमुञ्चत्। इति निगदितवतस्तस्य नृपतेः स्कन्धात् स वेतालः सहसा स्वं निलयं प्रतस्थे। राजापि भूयस्तथैव कृतप्रयत्न स्तमन्वधावत्।

## अथ पञ्चविंशतितमस्तरङ्गः।



अथ राजा तमेव शिंशपातरुं गत्वा तञ्च वेताल-माटाय स्कन्धमारोप्य च गन्तव्यभूमिमभिप्रतस्थे। तञ्च प्रस्थितं पथि पुनः वेतालः प्राक्रमत वक्तुं राजन्! साधु सुसत्त्वस्त्वं तद्पूर्वामिमामपरां कथां कथयामि श्रूयताम्।

अस्ति कुसुमपुरं नाम नगरम्। तत्रासीत् धरणीवराहो नाम भूपतिः। तस्य ब्राह्मणभूयिष्ठे राज्ये ब्रह्मस्थलाभिधोऽग्रहारोऽभवत्। तत्र विष्णुस्वामी नाम कोऽपि द्विजः प्रतिवसति स्म। तस्य हविर्भुज इव स्वाहा नाम भार्य्याभूत्। तस्यां तस्य चत्वारः सुता जज्ञिरे। ते च कालक्रमेण पितरि स्वर्गते ज्ञातिभिर्हृतसर्वस्वाः मिथो मन्त्रयाञ्चक्रुः इहास्माकं गति र्नास्ति तदन्यत्र वयं व्रजाम इति मन्त्रयित्वा यज्ञस्थलाभिधे ग्रामे मातामहावासं बहुभिर्दिनैरगमन्। तत्र मातामहाभावात् मातुलैः सत्कृताः स्वाध्याय तत्परास्तस्थुः। कालक्रमेण ते अकिञ्चनाः भोजनाच्छादनादिषु तेषां मातुलानामवज्ञाभाजनतां जग्मुः। ततः स्वजनजेनावमानेन हृतात्मनां तेषां ज्येष्ठः रहसि तानब्रवीत् भ्रातरः! किं क्रियते, सर्वं विधिकृतमवधारयत। पुरुषस्येह कस्यचित् क्वचित् किमपि कर्त्तुं न शक्यम्। अहं हि उद्वेगेन भ्राम्यन् काननं प्राप्तः अद्य विपन्नस्थितं स्रस्ताङ्गं पुरुषं भुवि अद्राक्ष मचिन्तयञ्च तां

गतिं स्पृहयन्। अयं हि धन्यः, यः दुःखभारं विमुच्य स्थितः। इति संचिन्त्य तत्काल मरणनिश्चयं कृत्वा वृक्षाग्रलम्बिना पाशेन आत्मानमुद्लम्बयम्। यावच्च विसंज्ञस्य मे असवो न निर्यान्ति, तावत् त्रुटितपाशोऽहं महीतले पतितोऽस्मि। लब्धसंज्ञश्च केनापि कृपालुना पुंसा तत्क्षणमागतेन पटमारुतैराश्वास्यमानमपश्यम्। ततः स मामब्रवीत् सखे! कथय विद्वानपि क प्रति एवं खिद्यसे? सुकृती सुखमाप्नोति, दुष्कृती दुष्कृतादेव दुःखमाप्नोति नान्यतः। दुःखात् यदि तवेदृशः समुद्योगः, तत् सुकृतं समाचर। आत्मघातेन कथं नारकं दुःखमभिवाञ्छसि। इत्युक्त्वा मां समाश्वास्य स पुमान् क्वापि गतः। अहञ्च तादृशं मरणोद्यमं त्यक्त्वा इहागतः। तदेवं विधौ अनिच्छति मरणमपि न लभ्यते। इदानीं तपसा तीर्थे तनुं दाहयामि येन पुनरहं निर्धनतादुःखभागी न स्याम्। इत्युक्तवन्तं तं ज्येष्ठं कनिष्ठाः प्राब्रुवन्। आर्य! अर्थैर्विना कथं प्राज्ञोऽपि दुःखेन बाध्यते? किं न ज्ञायते? यदर्थानां शरदभ्रचला गतिः। आहृत्य रक्ष्यमाणापि यत्नेन, अन्तविरसा असम्मैत्री च वेश्या च श्रीश्च कस्य कदा स्थिरा? तदुद्योगिना मनस्विना स गुणः कोऽपि उपार्जनीयः, येन हठात् बद्ध्वा अर्थहरिणः सुखमानीयते। इति भ्रातृभिरुक्तो ज्येष्ठः क्षणात् धैर्यमवलम्ब्य उवाच को गुणस्तादृक् अर्जनीयो भवेदिति। ततः सर्वे ते विचिन्त्य परस्परं वदन्ति स्म पृथ्वीं विचित्य किमपि विज्ञानं वयं शिक्षामहे। एवं निश्चित्य सर्वे

समागमे सङ्केतस्थानं मुक्का एकैकशः ते चत्वारो भ्रातरश्च-
तस्रो दिशः प्रययुः।

अथ गच्छति काले सर्वे सङ्केतनिकेतने मिलिताः
केन किं शिचितमिति अन्योन्यमपृच्छन्। अथैषामेकोऽ-
ब्रवीत् मया ईदृक् विज्ञानं शिचितं येन अस्थिशकलं प्राप्य
यस्य कस्यचिदपि प्राणिनः तस्मिन् तदुचितानि मांसानि
उत्पादयामि। एतदाकर्ण्य तेषु द्वितीयोऽवदत् अहं तथा
विज्ञानमशिचि यथा सञ्जातमांसे अस्थिशकले तत्प्राणि-
सम्भवं लोमानि त्वचञ्च जनयितुं पारयामि। तृतीयो-
ऽवदत् मया ईदृशं विज्ञानमधिगतं येन जातत्वङ्मांसलो-
मनि प्राण्यवयवान् चक्षुरादीन् स्रष्टुं जाने। चतुर्थोऽ-
वादीत् अहं उत्पन्नावयवं तं प्राणैर्युक्तं कर्त्तुं शक्नोमि।
एवं ते परस्परमुक्का विज्ञानपरीक्षणार्थं चत्वारोऽपि अस्थि-
खण्डमानेतु मटवीं ययुः। विधिवशाच्च ते तत्र सिंहस्य
अस्थिखण्डं प्रापुः। जगृहुश्च अविज्ञात विशेषांस्तदेव।
एकस्ततसमुचितैः मांसैस्तदस्थिखण्डमयोजयत्। द्वितीय-
स्तस्य त्वचो लोमानिच उदपादयत्। तृतीयोऽपि सम-
ग्रैरिन्द्रियैस्तत्पूरयत्। चतुर्थस्तु यदा तस्य सिंहीभूतस्य
जीवितमदाद् तदा उद्भूतसटाभारोऽतिभयङ्करः दंष्ट्राकरा-
लवदनः खरनखाङ्कुशः सिंहः समुत्तस्थौ। सच स्वोत्पाद-
कान् तान् चतुरोऽपि स्वमुत्थाय अवधीत् प्राविशच्च सद्योऽ-
रण्यम्। एवं ते द्विजपुत्राः सिंहनिर्म्माणदोषात्
सर्वे एव विनाशं गताः। दुष्टं जन्तुमुत्थाप्य कस्य
वा सुखं भवेत्। इत्थं प्रतिकूले विधौ यत्नेनोपार्जिता

गुणः न सम्पत्तये, प्रत्युत विपत्तये एव भवति। मूले दैवे अविकृते प्रज्ञानवारिणा सिक्तः पौरुषपादपः नवालवालः प्रायः फलति। इति कथां समाख्याय निशि गच्छन्तं तं भूपतिमपृच्छत् राजन्! पूर्वकृतं शापं स्मृत्वा वद क एषां सिंहनिर्माणे विशेषेण अपराध्यति?। इति श्रुत्वा राजासौ मौनी व्यचिन्तयत् अयं पुनर्गन्तुमिच्छति, यातु, पुनरहमेनमानेष्यामि, इति निश्चित्य तमवादीत् यस्तेषां मध्ये सिंहस्य प्राणदाता स एव पापकृत्। प्राणिविशेषमबुद्ध्वा युक्तिबलात् यैर्मांसत्वग्लोमावयवनिर्माणं कृतं तेषा मज्ञानात् नैव दोषोऽस्ति। येन तु सिंहाकारं दृष्ट्वापि विद्याप्रकाशकामेन प्राणास्तस्य दत्ताः तेनैव ता ब्रह्महत्याः कृताः इति राज्ञो वचनं निशम्य स वेतालः स्वमेव धाम प्रायात्। राजापि पुनस्तमनुसरन् शिंशपान्तिक मगात्।

---

## अथ सप्तनवतितमस्तरङ्गः।



ततः स राजा शिंशपातरुमुपेत्य मौनी दर्शितानेकवैकृतं तं वेतालं स्कन्धे नीत्वा प्रातिष्ठत। वेतालोऽपि स्कन्धे स्थित स्तमब्रवीत् राजेन्द्र! अकार्य्येऽप्येतस्मिन् ते दुर्वारो ग्रहः, तत्ते श्रमविनोदाय कथामिमां कथयामि शृणु।

आसीत् कलिङ्गदेशे शोभावती नाम पुरी। तस्य

दिवीव सुकृतिनः प्रतिवसन्ति स्म । प्रद्युम्न इव ऐश्वर्य-वीर्य्यातिशयेन विश्रुतः प्रद्युम्नो नाम नृपतिः समूर्जितशासनस्तां शशास । यस्मिंश्च राजनि चापेषु गुणापकर्षः, मुरजेषु कराहतिः, युगेषु कलिः प्रजासु च तीक्ष्णता अश्रूयत । तस्या स पुरः क्वचित् प्रदेशे यज्ञस्थलाभिधानो बहुद्विजः कश्चिदग्रहारः नृपेण प्रतिष्ठापितः । तत्र कश्चित् वेदपारगो महाधनो अग्निहोत्री पूजितातिथिदेवः यज्ञसोमो नाम ब्राह्मणः समवात्सीत् । तस्य वार्द्धके अनुरूपायां भार्य्यायां एक एव सुतः समुदपद्यत । स च बालः पितुः प्रयत्नात् दिने दिने वर्द्धमानः शुभलक्षणयुतः देवसोम इति पित्रा कृतनामधेयः पित्रो रतिस्नेहपात्रता मगात् । अथ प्राप्ते षोड़शे वर्षे स बालकः विद्याविनयादिभिरावर्जितसमस्तजनः सहसा ज्वरेणाक्रान्तः पञ्चतामवाप । ततः परासुं तं दृष्ट्वा समाश्लिष्य च हाहेति रुदन् यज्ञसोमः भार्य्यया सहितः स्नेहात् दाहाय न जहौ । ब्रह्मन् ! गन्धर्वनगरस्येव संसारस्य गतिं परावरज्ञोऽपि किं न वेत्सि ? ये हि राजानः अमरम्मन्या अस्मिन् भूलोके व्यलसन् तेऽपि एकैकशः श्मशानेषु रुदत्प्रेतनुश्रायिपूर्णेषु चिताधिरूढ़ाः क्रव्यात्कृशानुना दग्धाः, शिवाभिश्च कालेन कवलीकृताः कैश्चिदपि न रोद्धुं शकिताः, का कथा अन्येषां हे विद्वन् ! तदेतं प्रेतमाश्लिष्य किं करोषि वद इत्येवं वृद्धा बन्धवः मिलितास्तं प्राबोधयन् । ततः कथञ्चित् तेन मुक्तं तं सुतं शिविकामारोप्य ते बान्धवाः कोलाहलसमाकुला श्मशानं निन्युः ।

अत्रान्तरे तत्र श्मशाने कोऽपि तापसः पाशुपतव्रती मठिकायां कृतनिवासः वयसा तपसा चातिभूयसा कृशां तनुं बिभ्राणः भङ्गभीत्येव शिराभिः परिवेष्टितः विद्युत्-पिशङ्गजटः द्वितीयो महेश्वर इव प्रतिवसति स्म। तस्मिंश्च काले स तापसः तं जनकोलाहलं श्रुत्वा दम्भोपालम्भवृंहितं भिक्षाफलधरमन्तिकवर्त्तिनं शिष्यं जगाद वत्स ! कथमयं जनकोलाहलः श्रूयते, गत्वा वहिर्विज्ञाय सत्वरमागच्छ, कुतोऽयमश्रुतपूर्वः तुमुलो रवः। इति तेन गुरुणोक्तः स शिष्य स्तं प्रत्युवाच नाहं यामि त्वं स्वयमेव याहि, मे भिक्षासमयोऽतिक्रामति। तदाकर्ण्य स गुरुरब्रवीत् धिक् मूर्ख ! उदरम्भरे ! अह्नः अर्द्धप्रहारे याते का तव भिक्षा-वेला ? श्रुत्वैव क्रुद्धः स कुशिष्यस्तं तापसं प्रत्यवदत् धिक् जराजीर्ण ! नाहं ते शिष्यः, त्वञ्च मे न गुरुः, अहमन्यत्र यास्यामि, त्वं स्वयं इदं पात्रं वह। इत्युक्त्वा स क्रुद्धः अग्रे दण्डकुण्डिकां त्यक्त्वा समुत्थाय प्रायात्। ततः स तापसः विहसन् तस्मात् मठात् निर्गत्य तत्रागात् यत्र दाहार्थं स मृतो द्विजार्भकः समानीतः। तं जनतया शोच्यमानाग्ययौवनं दृष्ट्वा जरार्द्दितः स योगी तद्देहं प्रवेष्टुं मतिमकरोत्। ततः एकान्ते गत्वा मुक्तकण्ठं गदद्य च यथोचितैरङ्गहारैर्ननर्त्त। ततः क्षणेन स तपस्वी पुनः यौवनसुखमनुबुभूषुः योगात् स्वां जीर्णां तनुं विहाय तत् द्विजपुत्रकलेवरं प्राविशत्। क्षणे च तस्मिन् स द्विजयुवा रचितायां चितायां सहसा लब्धजीवः समुत्तस्थौ। तदव-लोक्य बन्धुवर्गस्य सर्वस्य दिष्ट्यायं बालको जीवति जीव-

तीति सहर्षनिनादः समुदचरत्। अथ विप्रपुत्रशरीरान्तःस्थः स योगेश्वरः तान् बन्धूनब्रवीत् लोकान्तरगतस्य मम शर्वेण जीवितं दत्त्वा महापाशुपतव्रतं त्वया धार्य्यमिति समादिष्टं अधुनैव मया एकान्ते गत्वा तद्‌व्रतं ग्राह्यं नोचेत् मे जीवितं नास्ति, तद्यूयं गृहं यात, अहमपि यामि इति सर्वान् तान् तत्रस्थान् संबोध्य दृढ़निश्चयः हर्षशोकाकुलान् तान् स्वगृहं प्रेषयामास। स्वयञ्च गत्वा तत् पूर्वकलेवरं श्वभ्रे क्षिप्त्वा गृहीतव्रतो युवीभूय अन्यतो ययौ। इति कथां समाख्याय वेतालः निशि पथि यान्तं तं त्रिविक्रमसेनं नृपं पुनरब्रवीत् राजन्! ब्रूहि स योगीन्द्रः परदेहे प्रविशन् कथं वा पूर्वं प्राकृदत् किमर्थं वा अनृत्यत् अत्र मे महत् कौतुकं वर्त्तते। इति वेतालात् श्रुत्वा शापशङ्की राजा मौनं विमुच्य तमवादीत् शृणु वेताल! सिद्धिकारकं बाल्ये पितृभ्यां लालितं, अद्य इदं त्यजामीति दुःखितः दुस्त्यजदेहिकस्नेहात् प्रथमं रुरोद। नवं देहं प्रविश्य अधिकं व्रतं साधयिष्यामि इति यौवनलाभहर्षात् ननर्त्त च। एतत्तस्य राज्ञः वचनं निशम्य स वेतालः पुनः सहसा तं शिंशपापादपमगमत्। राजापि अविचलितोत्साहः पुनस्तमन्वसरत्।

## अथ अष्टनवतितमस्तरङ्गः ।

ततः स राजा तां तिमिरश्यामां चिताग्निज्वलितेक्षणां घोरां रजनिराक्षसीमगणयन् वीरः तस्मिन् भीषणे श्मशाने तां शिंशपां गत्वा तं वेतालं स्कन्धमारोप्य पूर्ववत् प्रातिष्ठत। वेतालोऽपि गच्छन्तं तं नरदेवमुवाच भो राजन्! अहं गतागतैर्भृशमुद्विग्नः, न पुनस्त्वं तदेकं मे महाप्रश्नं कथयतः समाकर्णय।

आसीत् पुरा दक्षिणापथे धर्मो नाम मण्डलेश्वरः साधूनां धुरन्धरः बहुगोत्रजः नरपतिः। तस्य चन्द्रावती नाम मालवदेशभवा भार्य्यासीत्। तस्यां कन्यैका प्रसूता। तस्याञ्च कन्यायां प्रदेयायां स धर्मनरपतिः राष्ट्रभेदिभिर्दायादैः मिलितैः उन्मूलितः पलाय्य सुदृशा भार्य्यया तया च दुहित्रा सह रात्रौ संगृहीतरत्नसञ्चयः स्वराष्ट्रात् निरगात्। मालवे श्वाशुरं गृहं प्रति स्वैरं गच्छन् स तया पत्न्या सुतया च सह विन्ध्याटवीमाससाद। तस्यां कथञ्चित् श्रान्तया भार्य्यया सुतया च परिखिन्नः निशामनयत्। अथ प्रातः भगवान् विभावसुः करान् प्रसारयन् मागा घोराटवीमेतामिति तं राजानं वारयन्निव पूर्वां दिशमारुरोह। ततो राजा पदातिः तसख्या सुतया जायया च सह कुशकण्टकैः क्षताङ्घ्रिः भिल्लानां परेषां प्राणसर्वस्वहारिभिः पुम्भिराकृतां धार्मिक-

जनरहितां कृतान्तनगरीमिव दुर्गां पल्लीमगच्छत्। तथा-गच्छन्तं वसनाभरणान्वितं तं दूरात् दृष्ट्वैव बहवो दस्यवः सायुधा मुषितुं प्राधावन्। राजा तानागच्छतो विलोक्य भार्य्यासुते जगाद म्लेच्छा इमे मा युवां स्पृशन्तु एतद् गहनं वनं विशतं इति राज्ञाभिहिता राज्ञी तया लावण्यवत्या तनयया सह भयात् वनमध्यं विवेश। वीरः स राजातु अभिमुखायातान् शरवर्षिणस्तान् शवरान् खड्ग-चर्मधरः बहून् न्यवधीत्। ततः पल्लीपतिनाज्ञप्ताः सर्वे दस्यवः निपत्य प्रहारच्छत सर्वाङ्गं तमेकाकं नृपं निजघ्नुः। ततः गृहीताभरणे दस्युसैन्ये प्रयाते सा राज्ञी वनगुल्मा-न्तरस्थिता भर्त्तारं निहतं दृष्ट्वा सुतया सह विह्वला पलायमाना अन्यत् दूरं गहनमरण्यं विवेश। तत्र मध्याह्नभानुतापितेषु अन्येषु शाखिनां छायासु निषण्णेषु एकदेशे कस्यचित् पद्मसरसस्तीरे अशोकतरुतले सा राज-महिषी चन्द्रावती सुतया लावण्यवत्या नितरां श्रान्तया भयशोकव्याकुलया सह समुपाविशत्। तावदरण्य-निवासी कोऽपि महामनुष्यः चण्डसिंहो नाम सपुत्रः अश्वारूढः मृगयार्थं तद्वनमभ्यागात्। स सिंहपराक्रमं नाम पुत्रं तयोः राजभार्य्यासुतयोः पदपद्धती दृष्ट्वा प्रोवाच पुत्र! एते सुरेखे सुभगे पदपद्धती अनुसृत्य यदि स्त्रियौ आप्नुवः तदा तयोरेकां यथारुचि स्वीकुरुष्व इत्युक्तवन्तं तं पुत्रः सिंहपराक्रमः प्रोवाच तात! यस्याः सूक्ष्मौ पादौ रेखयानया दृश्येते सा भार्य्या ममैव प्रतिभाति। इहतो या पदपद्धती दृश्यते एषा ज्येष्ठवयास्तव योग्या इति सूनो-

वचनमाकर्ण्य स चण्डसिंहस्तं जगाद पुत्र ! कैषा कथा तव जननी तव प्रत्यक्षमेव दिवं गता। तादृशे सुकलत्रे गते अन्यवासना मे नैव। तदाकर्ण्य सोऽपि तं पितर-मुवाच तात ! मैवं अभार्य्यं हि गृहपतेः गृहं शून्यम्। अन्यच्च, मूलदेवोक्ता कथा त्वया किं न श्रुता ? यत्र घन-स्तनजघना मार्गावलोकिनी कान्ता नास्ते, कः अजड़ः तत् अनिगड़ं गृहसंज्ञकं दुर्गं प्रविशति ? तत् तात ! मम जीवितेन शापितोऽसि यदि मदभीष्टाया द्वितीयां भार्य्यां तां न स्वीकरिष्यसि। एतत् पुत्रवचः श्रुत्वा स चण्डसिंहः तथेति प्रतिपद्य ससुतः त पदपद्धतिमनुसरन् शनैः ययौ। प्राप्य तत् सरःस्थानं तां श्यामां चन्द्रावतीं राज्ञीं रूप-लावण्यविभासिनीं ददर्श। उपाययौ च सकौतुकः सह पुत्रेण ताम्। सापि तं दृष्ट्वा चौरशङ्किनी वित्रस्ता समु-त्तस्थौ। अलं त्रासेन नौ, एतौ चौरौ न, सौम्याकृतौ सुवेशाङ्गौ कौचित् आखेटकृते नूनमिहायात प्राप्तौ इति सुतया बुद्धिमत्याभिहिता राज्ञी यावत् दोलायते, तावद-श्वावतीर्णश्चण्डसिंहः पुरोवर्त्ती तामुवाच सुन्दरि ! अलं सम्भ्रमेण, आवां इह मृगयार्थमागतौ, तद्विश्वस्य निरा-शङ्कं वदतं के युवां ? हरनेत्रानलज्वालादग्धमन्मथदुःखिते रतिप्रीती इव अरण्य मेवमुपागते ? कथं वा इह अमा-नुषे वने प्रविष्टे स्थः इदं हि युवयोर्वपुः रत्नप्रासादवासार्हं ? किमिति वराङ्गनविचरणयोग्यौ चरणौ कण्टकिनीमिमां भुवमवतारितौ ? चित्रमिदं एषा युवयोरानने पतन्ती वातोद्धृता धूलि रावयोर्मुखं हतच्छायं कुरुते। भवत्यो-

रङ्गेऽस्मिन् चण्डांशोरुच्चण्डः किरणः पतन् अस्मान् दहति। तदाप्तवृत्तान्तं ब्रूतं आवयो हृदयं भवत्यो एतामवस्थां गते दृष्ट्वा भृशं दूयते। अस्मिन् श्वापदावृतेऽरण्ये वां स्थितिं द्रष्टुं न शक्नुवः। इति चण्डसिंहेनोक्ता राज्ञी निःश्वस्य लज्जाशोकाकुला शनैः स्वं वृत्तान्तमवर्णयत्। ततश्चण्डसिंहः निःस्वामिकां तां मत्वा समाश्वास्य च मधुरैर्वाक्यैरनुरञ्जयन् ससुतां स्वीचकार। सपुत्रीं तां पुत्रः सः अश्वयारारोप्य वित्तपपुरीसमृद्धां निजां पुरीं निनाय। सापि जन्मान्तरगतेव अवशा अनाथा कृच्छ्र-पतिता अङ्गीचकार किं करोतु तपस्विनी। ततस्तां राज्ञीं सूक्ष्मपादत्वात् चण्डसिंहसुतः सिंहपराक्रमः राज्ञीं चन्द्रावतीं भार्य्यां व्यधात्। तत्सुताञ्च लावण्यवतीं राजकन्यां पादयोर्वृहत्त्वात् चण्डसिंहो भार्य्याञ्चकार। पूर्वप्रतिज्ञातं हि सत्यं कोऽतिवर्त्तते?। एवं पादविप-र्य्यासात् तयोः पितापुत्रयोः ते दुहितामातरौ भार्य्ये तदा-श्वश्रूस्नुषे जाते कालेन च तयोः ताभ्यां पतिभ्यां द्वयोरपि सुता दुहितरश्च क्रमात् जज्ञिरे। इति कथा माख्याय स वेतालः तं नृपं पप्रच्छ राजन्! अनयोर्मातादुहित्रो-स्ताभ्यां पितृभ्यां पितापुत्राभ्यां ये जन्तवो जाताः ते अन्योन्यं के किं सम्बन्धाश्च भवन्ति? यदि जानन्न ब्रवीषि, तदा पूर्वोक्त एव स शापः स्मरणीयः। इति वेतालवचः समाकर्ण्य बहु विमृषन् राजा किमपि वक्तु मशक्नुवन् तूष्णीक एव प्रययौ। ततः स वेताल तं प्रश्नोत्तरदाने असमर्थं दृष्ट्वा हृदि हसन् समचिन्तयत् अयं राजा अस्मिन्

महाप्रश्ने उत्तरं दातुं न हि शक्नोति, तेन तूष्णीं व्रजयेत्, न चायं मां वञ्चयितुं शक्तः शापस्य प्रभावात्। तत् प्रीतोऽस्मि अस्य महासत्त्वस्य सत्त्वातिरेकेण, तदद्य तं दुरात्मानं वञ्चयित्वा उपागतां तत्सिद्धिं भाविकल्याणे अस्मिन् राजनि निवेशयामि इत्यालोच्य स वेतालस्तं नृपमवदत् राजन्! कृष्णनिशाघोरेऽस्मिन् श्मशाने गतागतैः क्लिष्टस्त्वं सुखीव दृश्यसे, कोऽपि ते विकल्पो न विद्यते, तदाश्चर्य्येण धैर्य्येण च ते तुष्टोऽस्मि, त्वमिमं शवं नीत्वा इदानीं व्रज, अहमतो निर्गच्छामि, इदञ्च तव हितं यत् वदामि तत् कुरुष्व। यदर्थं भवता एतत् नृकलेवरं नीयते, कुभिक्षुः सः अद्य अस्मिन् मामाहूय अर्च्चयिष्यति। त्वाञ्च उपहारीचिकीर्षुः भूमौ साष्टाङ्गं प्रणामं कुरु इति वक्ष्यति। महाराज! स दुरात्मा तावत् त्वया एवं वक्तव्यः नाहं तथा प्रणामं जानामि, प्राक् त्वं दर्शय ततोऽहं तथा करिष्यामीति। ततो निपत्य भूमौ यावत् स त्वां प्रणामं दर्शयिष्यति तावत्त्वमसिना तस्य शिरश्छिन्द्याः। ततो विद्याधरैश्वर्य्यसिद्धिर्या तस्य वाञ्छिता, तां त्वमेव प्राप्स्यसि। अन्यथा तु स भिक्षुस्त्वामुपहारीकृत्य स्वेष्टसिद्धिं करिष्यति। एतदर्थं तव एतावान् विलम्बः कृतो मया, तत्ते सिद्धिरस्तु गच्छेदानीं इति उक्त्वा स वेतालः तस्य स्कन्धात् निर्गत्य प्रययौ।

अथ स नरपति वैतालवचसा तं क्षान्तिशीलं भिक्षुं तथा स्वाहिताय समुद्यन्तं विविच्य तत् नृकलेवरं गृहीत्वा प्रहृष्टः तत्वटतरुतलं प्रतस्थे।

# अथ नवनवतितमस्तरङ्गः ।

•ℴ•

ततः स राजा त्रिविक्रमसेनः शवं स्कन्धे वहन् क्षान्तिशीलस्य श्रमणस्य पार्श्वं प्राप दृदृशे च तं मार्गावलोकिनमेकं कृष्णपचरात्रां श्मशानतरुमध्यगम्। स राजा असृगलिप्तस्थले गौरेण अस्थिचूर्णेन निर्मिते विन्यस्तपूर्णशोणितकुम्भे महातैलकृतप्रदीपे कृतानलहोमे सम्भृतोचित सम्भारे कृतेष्टदैवतपूजने मण्डले समुपविष्टं तमुपागात्। भिक्षुश्च तमानीतमृतकं नृपं समुत्थाय प्रोवाच राजन्! त्वया अन्यदुष्करो महान् अनुग्रहो मे विहितः, त्वादृशाः क्व, क्व च इयं चेष्टा, क्व च वा ईदृशौ देशकालौ च। सत्यमेव त्वां कुलभूभुजां मुख्यमाहुः एवमात्मानपेक्षेण येन परार्थः साध्यते। एतदेव महतां महत्त्वमुच्यते प्रतिपन्नादचलनं प्राणानामत्ययेऽपि, इति ब्रुवन् स भिक्षुः सिद्धार्थमानी तस्य स्कन्धात् तं शवमवतारयामास। ततस्तं स्नापयित्वा बद्धमाल्यं विधाय तस्य मण्डलस्य अन्तः स्थापयामास। ततः भस्मालेपितगात्रः केशयज्ञोपवीती प्रावृत प्रेतवसनः भूत्वा क्षणं ध्याननिभृतः स्थितः। अथ ध्यानबलात् तस्मिन् नृकलेवरे प्रविष्टं तं वेतालं स भिक्षुः क्रमेण पूजयामास। प्रथमं तस्मै कपालेन पात्रेण अर्घ्यं ततः सुनिर्मलैर्नेवदन्तैः पुष्पं सुगन्धिविलेपनं मानुषनेत्रं धूपं मांसानि च नैवेद्यानि दत्त्वा पूजनं यथाविधि समाप्य पार्श्वगं राजानं प्रोवाच राजन्! इहास्य मन्त्राधि-

राजस्य कृताविर्भावस्य अष्टाभिरङ्गैः निपत्य भूतले प्रणामं कुरु। येनाभीष्टसिद्धिं तेऽयम् वरप्रदो दास्यति। श्रुत्वैतत् स्मृत वेतालवचनः स राजा तं भिक्षुमब्रवीत् भगवन्! नाहं तादृशं प्रणामं वेद्मि, तत् पूर्वं भवान् प्रदर्शयतु। ततस्तथाहं करिष्ये इति। ततः स भिक्षुः यावत् तथा प्रणामं दर्शयितुं भुवि पतितः, तावत् स राजा खड्गप्रहारेणास्य शिरः अच्छिनत्। आकर्षञ्चास्य हृत्पद्मं पाटितम्। ततः तत्शिरः तच्च हृत्पद्मं वेतालाय प्रददौ। ततः समन्तात् भूतगणैः हृष्टैः साधुवादे प्रदत्ते स वेतालः परितुष्टस्तस्मात् मृतकलेवरात् तं नृपमब्रवीत् राजन्! भिक्षोरस्य यत् विद्याधरेन्द्रत्वमीप्सितमासीत् तत्तावत् भूमिसाम्राज्यभोगान्ते ते भविष्यति। इत्युक्तवन्तं तं वेतालं स राजा प्रत्यवादीत् योगीन्द्र! त्वञ्चेत् प्रसन्नः, तदा को नाम अभीष्टो वरः न सिध्येत् तथापि अमोघवचनं त्वां इदमभ्यर्थये एतास्ते नानाख्यानमनोरमाः प्रश्नकथाः चतुर्विंशतिः पञ्चविंशतिसमाप्तिगाः भूतले ख्याताः पूजनीयाश्च भवन्तु। इति तेन राज्ञार्थितो वेतालः प्रत्यभाषत राजन्! एवमस्तु विशेषञ्च वच्मि शृणु याश्चतुर्विंशतिः पूर्वाः या च एषा कामदायिनी, यः अस्याः कथांशमात्रमपि सादरः कथयिष्यति वा श्रोष्यति स सद्यो मुक्तपापो भविष्यति। यत्रैषा कथा कीर्त्यते तत्र यक्षराक्षस-डाकिनी-वेतालकुष्माण्ड-राक्षसादयो न प्रभविष्यन्ति। इत्युक्त्वा स वेताल स्तस्मात् मृतकलेवरात् निर्गत्य यथारुचि योगमायया स्वं धाम प्रायात्।

ततस्तत्र सर्वैर्देवगणैः सह महेश्वरः परितुष्टः तत्राविर्भूत् प्रणतञ्च तं नृपमादिदेश्त् साधु वत्स ! यत् त्वयायं विद्याधरमहाचक्रचक्रवर्त्तिताहठकामुकः कूटतापसः निहतः । त्वं मयादौ स्वांशतः विक्रमादित्यः सृष्टः म्लेच्छरूपावतीर्णानामसुराणां शान्तये, इदानीञ्च उद्दामदुर्वृत्तानां दमनाय त्रिविक्रमसेनो नाम नरपतिः सृष्टः अतः सद्वीपपातालां महीं वशे स्थापयित्वा विद्याधराणामधिराजो भविष्यसि । तत्र च चिरं दिव्यान् भोगान् भुक्त्वा स्वेच्छया च तान् त्यक्त्वा अन्ते ममैव सायुज्यमवाप्स्यसि । एतच्च अपराजितं नाम खड्गं मत्तो गृहाण अस्यैव प्रसादात् यद् यदुक्तं तत् तत् सर्वं ते सेत्स्यति । इत्युक्त्वा तं खड्गरत्नं तस्मै दत्त्वा वाक्पुष्पैश्च तेनार्च्चितः शम्भुः देवैः सह तिरोदधे ।

अथ सर्वं कार्य्यं समाप्तं निशाञ्च प्रभातां दृष्ट्वा राजा स्वपुरं प्रतिष्ठानं प्रविवेश । तत्र प्रकृतिभिर्विहितात् सवाभिरभ्यर्च्चितः स्नानदानगिरिशार्च्चनगीतवाद्यादिभिः तत् सर्वं दिनमनयत् । ततः स्वल्पैरेव दिवसैः भगवतः शङ्करस्य प्रसादात् सद्वीपां सपातालां सर्वां महीं निष्कण्टकां वशीकृत्य बुभुजे । अथ महतीं विद्याधरसमृद्धिं सम्प्राप्य चिरं तत् सुखानि संभुज्य भगवत्सायुज्यमन्ते ययौ ।

इति अभिधाय स विक्रमकेशरी पथि शापविप्रयोगात् चिरमिलितः मृगाङ्कदत्तं राजपुत्रं पुनरुवाच देव ! स वृद्धो विप्रः एवं वेतालपञ्चविंशतिकां समाख्याय भूयो मामुवाच पुत्र ! स विक्रमसेनो नृपः वेतालानुग्रहात्

किमिव इष्टं नासाधयत् तस्मात् त्वमिह •मत्तः सकाशात् मन्त्रवरं गृहीत्वा विमुक्तविषादः वेतालमुख्यं प्रसादय येन सहायेन मृगाङ्कदत्तेन समागममचिरात् प्राप्स्यसि। उत्साहवतां किञ्चिदपि अप्राप्यं न। वत्स! भग्नोत्साहः मावसादं गमः। तदहं ते वच्मि त्वं मे बन्धुः सर्पदंशार्त्तिं हन्ता। इति वादिनस्तस्मात् विप्रात् सक्रियं मन्त्रमादाय तत्रागत्य उज्जयिनीं गतोऽभवम्। तत्र श्मशाने रजन्यां मृतकमाहृत्य स्नपनादिकं कृत्वा मन्त्रेण तेन तस्मिन् वेतालमाहूय यथावदर्च्चितवानस्मि। तस्मै भोज्यं महामांसं तृप्तये मया प्रदत्तम्। सोऽपि तद् आशु जग्ध्वा तृप्तोऽस्मि नैव,अन्यदुपानय मानुषमांसमिति मामभ्यधात् यदा कालं नाक्षमत, तदाहं निजानि मांसानि उत्कृत्य उत्कृत्य तत् प्रीतये प्रादाम्। तेन स योगीश्वरः मयि भृशमतुष्यत्। अथ स मामब्रवीत् भद्र! तव दृढ़ेन सत्त्वेनामुना साम्प्रतं तुष्टोऽस्मि, वीर! तस्मात् पूर्ववत् अक्षताङ्गो भव, वरञ्च वृणीष्व अभीप्सितम्। इति वादिनं तदैवाहं प्रत्यवोचं योगीन्द्र! तत्र मां नय, यत्र मे प्रभुर्मृगाङ्कदत्तस्तिष्ठति, अन्यः साम्प्रतं मे अभिमतो वरो न वर्त्तते। एतत् स वेतालो निशम्य मामभ्यधात् तर्हि मम पृष्ठमारोह तावत्, यावदहं त्वां त्वत्प्रभुसकाशं नयामि। इत्युक्तवतः तस्य स्कन्धमहं तत्क्षणादारोहम्। ततोऽसौ प्रेततनुं प्रविष्टः मामुद्वहन् नभसा इहानीय पश्यतो युष्मान् विलोक्य अम्बरात् मामवतार्य्य भवत् पादमूलं प्रापयामास। माञ्च प्रभुणा समागतं दृष्ट्वा स समामकृत्यः

स्वधाम प्रायात् । इत्येष मे नागशापात् भवद्वियुक्तस्य महान् वृत्तान्तः ।

इत्थं निजसचिवात् विक्रमकेशरिणः श्रुतवियोगवृत्तान्तः मृगाङ्कदत्तः कान्तालाभप्रत्याशया उज्जयिनीमगच्छत् । इत्थं नागशापभ्रष्टैः कतिपयैः सचिवैः क्रमेण मिलितः स राजपुत्रः सम्भावितसकलमनोरथसिद्धिर्भृशं मुमुदे ।

## अथ शततमस्तरङ्गः ।

अथ कथावसाने पथिमध्यात् समुत्थितः विक्रमकेशरिगुणाकरविमलबुद्धिविचित्रकथभीमपराक्रमप्रचण्डशक्ति श्रुतधिभिः परिवृतः प्रहर्षपुलकिताङ्गः प्राप्तशेषान् अमात्यांश्चिन्वन् शशाङ्कवत्याः सम्प्राप्तये उज्जयिनीं जिगमिषुः समुच्चाल । क्रमेण निदाघशुष्कतोयाम् अपादपां प्रचण्डमार्त्तण्डसन्तापतप्तबालुकामटवीं प्राप । तस्यां व्रजन् तान् सचिवानब्रवीत् पश्यत एषा अटवी कीदृक् दुर्गमा भयावहा च, तदेषास्माभिस्त्वरया लङ्घनीया, इत्युचिवान् स राजपुत्रस्तैः क्षुत्तृषार्दितैः सचिवैः साकं द्रुतं तामटवीं व्यलङ्घयत् । अपश्यच्च पुरतः स्वच्छशीतजलैरर्कतापगलितस्य शीतांशोर्द्रवैरिव भृतं महत् दिगन्तव्यापिविस्तारम्

आत्मनः प्रतिबिम्बं द्रष्टुं त्रैलोक्यलक्ष्म्या विहितं मणि-दर्पणमिव धार्त्तराष्ट्रकृतक्षोभं विचित्रार्जुनविभ्रमम् उप-कण्ठमिलितनीलकण्ठपीतविषोत्तमम् अच्युताश्रितलक्ष्मीकं मन्थकालाब्धिसन्निभं सूर्यरश्मिभिरप्राप्तगर्भोरश्मिभिरन्त-स्तरं अनन्तपद्मनिलयं पातालमिव भूतलगतं सरः। स राजपुत्रः ससचिवः तस्य सरसः पश्चिमे तटे वातान्दोलित-विस्तारिशाखाभुजकदम्बः मूर्त्तलग्नाभ्रसरितं नृत्यन्तं शङ्करमिव, अत्युच्छ्रितेन व्योमपृष्ठावगाहिना शिरसा कौतु-कात् नन्दनोद्यानशोभामिव द्रष्टुमुद्यतं दिव्यरसैः शाखा-वलम्बिभिः फलैः शोभमानं महान्तं दिव्यपादपं व्यलोक-यत्। यावदसौ मृगाङ्कदत्तः तं तरुं निर्वर्णयति, तावत् तस्मन्त्रिणः क्षुत्तृषार्दिताः तस्य फलानि दृष्ट्वा भोक्तुं तमा-रुरुहुः। अशङ्कितमारूढाश्च मानुषास्ते सद्योऽपि फलत्वं प्राप्ताः। ततो मृगाङ्कदत्तः तानपश्यन् सुविह्वलः एकैकं नामग्राहमाजुहाव। यदा ते प्रतिवचनं न ददुः, नाप्य-दृश्यन्त क्वचित्, तदा हा! हा! हतोऽस्मीति विधुरं नदन् स राजपुत्रः क्षितौ मूर्च्छितो न्यपतत्। केवलं द्रुमानारूढः पार्श्वस्थः श्रुतधिर्द्विज स्तमाश्वास्य तत्क्षणमुवाच देव! कृतप्रज्ञोऽसि, त्यक्तधैर्य्यः किं विषीदसि? योहि व्यसने न मुह्यते, स एव कल्याणमश्नुते। नागशापविमुक्तान् एतान् किं पुनर्न प्राप्तवानसि? तथैव पुनरपि एतान् मन्त्रिणो-लप्स्यसे। अचिराच्च ते शशाङ्कवत्याः संयोगो भविष्यति। एवं श्रुतधिनोक्तः स राजपुत्रः किञ्चित् समाश्वस्तः प्रत्य-वादीत् सखे! कुत एवं हि धात्रा अस्माकं नाशाय एतत्

सूचितम्? अन्यथा क्व निशि वेतालः? क्व चासौ भीमपराक्रमः, ? क्व शशाङ्कवती ज्ञानं? क्व तत् संवादप्रसङ्गतः तां प्राप्तुं अयोध्याया अस्माकं निर्गमः? क्व च विन्ध्याटव्यां नागशापात् परस्परं वियोगः, क्व च ततः क्रमेण कतिपयैः सह पुनर्मिलनं? क्व च पुनस्तैः सहसा वियोगः। ते खलु अत्र वृक्षे भूतैर्ग्रस्ता इति मन्ये, तैश्च विना शशाङ्कवती मम का? किञ्च जीवितम्? तदलं विकल्पेन इति उक्त्वा स राजपुत्रः तत्र सरसि आत्मानमुज्झितुं कृतधी वारयत्यपि समुत्तस्थौ। तावच्चात्र अशरीरिणी वागन्तरीक्षादुच्चचार पुत्र! मा साहसं कार्षीः सर्वं ते सम्यक् भवितेति अस्मिन् पादपे देवो गणपतिः स्वयं वसति, स खलु अद्य त्वत्सचिवैः समं विरोधितः। ते अशुद्धा अस्नाता अक्षालित करचरणाः क्षुधार्त्ताः फललुब्धाः तन्निवासेऽस्मिन् समारूढाः। स्पृष्टेषु च फलेषु तच्चित्तस्तद्गतिं गच्छन्तु इति विघ्नेशशापतः सद्य फलतां गताः। अन्येऽपि चत्वारस्त्वत्सचिवाः अमुना पथा गता एवमेवास्मिन्नारूढाः फलतामगमन्। तत् तपोभिर्गणनायकं समाराधय, अस्य प्रसादात् तव सर्वेष्टसिद्धिर्भविष्यति। इति सुधाधारयेव आकाशगिरा अभिहितः स मृगाङ्कदत्तः सञ्जातप्रत्ययः देहत्यागात् न्यवर्त्तत। सरसि च स्नानं कृत्वा तस्मिन् तरौ गणाधिपमर्च्चयित्वा त्यक्ताहारः कृताञ्जलिस्तमस्तौत्। जय गणेश! विघ्नराज! भवनन्दन! भवनाशन! भवानीलालित! जय करीन्द्रवदन! सुरासुरसंस्तुत! प्रसीद किङ्करे, जय भक्तजनवाञ्छितपूरण! विश्ववन्दितचरण! पाहि मां सङ्कटप-

तित सुदर कृपया वितर सुहृद्भिश्चमित्यादिभिः संस्तुत विघ्नपतिर्निराहारः कुशास्तरे तत्र तरुतले तां रात्रिं निनाय। इत्थं स राजसुतः श्रुतधिना परिचर्य्यमाणः एकादशाहानि विघ्नेशमाराधितवान्।

अथ द्वादशेऽहनि निशि स्वप्ने तं गणेश्वरः प्रत्यादिशत् वत्स! तुष्टोऽस्मि ते अनया भृत्यवत्सलतया, प्राप्स्यसि मन्त्रिणः, तैश्च समं गत्वा तां शशाङ्कवतीञ्च लप्स्यसे। ततः स्वनगरीं प्रत्यावृत्य पृथ्वीराज्यं करिष्यसि, इत्थं गणपतिनादिष्टः प्रबुद्धः प्रातः तं स्वप्नवृत्तान्तं श्रुतधये अभ्यधात्। ततस्तेनाभिनन्दितः स्नात्वा गणेशमर्च्चयित्वा तद्वासवृक्षं यावत् प्रदक्षिणं करोति स्म तावत् ते दशापि मन्त्रिणः तस्मात् तरोः फलत्वमुक्त्वा अवतीर्य्य तस्य पादयोर्निपेतुः। ततस्ते सर्वे मन्त्रिणः तं प्रभुं प्राप्य भृशं मुमुदिरे। राजपुत्रश्च तान् प्रत्येकं समधिकप्रणयं परिषस्वजे सम्बभाषे च तेऽपि तं स्वमं कृततपसं प्रभुं श्रुतधिनिगदित यथार्थं वीक्ष्य उद्बाष्पाः आत्मानं नाथवन्तममन्यन्त प्राशंसंश्च। अथ स मृगाङ्कदत्तस्तैः सचिवैः सह सरसि कृतस्नानः पूजितदेवश्च सुखपारणां कृत्वा सहर्षः स्वकार्य्यसिद्धौ लब्धधृतिरभवत्।

इति षष्ठतमस्तरङ्गः।

द्वितीय इवाग्निरिव आश्रमीं तनुमाश्रितः तेजसा प्रज्वलन् कृष्णाजिनसंवीताङ्गः एकेन करेण कमण्डलु मपरेणा-क्षमालिकामुद्वहन् सहागतैः वर्णैः कृष्णमोद्भात् वक्तिकैः कतिपयैः सवयोभिर्मुनिपुत्रैः समन्वितः कश्चित् मुनि-कुमारः समाययौ। स महात्मा दृष्ट्वैवास्मान् सरसि पतनोद्यतान् अवारयत् अकारण बन्धवः सन्तोऽपि करुणार्द्र हृदयाः भवन्ति। अवदच्च युष्माभिः किमिदं कापुरुषोचितं पापं कर्त्तुम् अध्यवसितम्? दुःखान्धा हि कातराः विषमखड्डे पतन्ति, धीरास्तु दृष्टसन्मार्गा विवेकमयबुद्धयः न पतन्ति गर्त्ते, प्रायश्चावश्यमधिगच्छन्ति। यूयं हि भव्याकृतयः ध्रुवं कल्याणं प्राप्स्यथ। तद्ब्रूत किं नु वो दुःखं? मानसं मे युष्मान् दृष्ट्वा दूयतएव। एवमुक्तवते तस्मै मुनिपुत्राय सर्वं आमूलतः स्वदृत्तान्तमहं कथितवानस्मि। ततस्तेन श्रुतास्मद्वृत्तान्तेन आयतिदर्शिना वयं सम्बोध्य देहत्या-गात् निवारिताः। अथ स मुनिकुमारः ज्ञात्वा आतिथ्यं विधित्सुः नातिदूरवर्त्ति पितुराश्रम मस्मानरैषीत्। तत्र उच्चयाखोद्ध्भुजैर्वदिकास्थितै रर्कमरीचिपायिभिः पादपैः प्रारब्धतपसीव एकदेशे अस्मान् उपवेश्य अर्घ्यं दत्त्वा स मुनिसुतः एकैकमाश्रमतरुं गत्वा भिक्षामयाचत। यथाच्च तेभ्यः स्वतश्च्युतैः फलैरस्य भिक्षाभाजन मपूर्य्यत। ततः स तद् गृहीत्वा अस्माकमन्तिकमागमत्। अदाच्च नः तानि दिव्यस्वादूनि प्रचुराणि फलानि। वयं तानि भुक्त्वा अम-तेनेव परितृप्ता जाताःस्म।

अथ क्षीणेऽहनि अब्धौ च पतिते भास्वति तत्पातोच्छ-

सितैरभ्रैः शीकरैरिव ज्योतिर्भिरम्बरे आपूरिते शशिनि च तद्वैराग्यादिव प्राच्यां संवीतचन्द्रिकाधौतवल्कले उदयाचलशैलस्थकृतपोवनमाश्रिते एकस्थानाश्रितानां समापिताशेषकर्म्मणां तत्राश्रमेषु दर्शनाय गता वयं प्रणिपत्य उपविष्टाः तैः कृतातिथ्यैर्मुनिभिः प्रियंवदैः कुतो यूयमिति पृष्टाः। ततोऽनेन मुनिकुमारेण सर्व्व एवास्मद्वृत्तान्तस्तेभ्यो निवेदितः। अथात्र कण्वो नाम महामुनिस्त्रिकालज्ञः प्रोवाच किमेवं धीरा यूयं क्लैव्यं गताः आपदि अभग्नधैर्य्यता सम्पदि अनभिमानिता उत्साहापरित्यागश्च सत्पुरुषव्रतम्। महान्तोऽपि महान्ति सङ्कटानि कृच्छ्रात् धैर्य्येण समुत्तीर्य्य महतोऽर्थान् समासाद्य माहात्म्यमुपयान्ति। तदत्र सुन्दरसेनस्य कथा श्रूयताम्। इत्युक्त्वा स मुनिः सर्व्वेषु महर्षिषु अस्मासु च शृण्वत्सु कथामेतामवर्णयत्।

अस्ति अलङ्कृतकौवेरीदिङ्मुखो निषधाख्यो देशः। तत्रासीत् पुरी अलका नाम अलकेव समृद्धिशालिनी पुरी। यत्र सदैव सर्व्वार्थसमृद्धिसुखिते जने केवलं रत्नदीपानामनिर्वृतिरासीत्। तस्यामभूत् महासेनो नाम यथार्थो नाम्ना महासेन इक्ष्वाकुतात्युग्रप्रतापाकृष्टशात्रवो नरपतिः। तस्य राज्ञः गुणपालितो नाम धौर्य्यालयः महीभारवहनक्षमः शेषइवापरः महामन्त्री आसीत्। तस्मिन् विन्यस्तराज्यभरस्य अपितद्विषः अस्य भूभृतः शशिप्रभाख्यायां देव्यां सदृशः सुतः सुन्दरसेन इति विश्रुतः समभवत्। स शिशुरपि गुणैरशिशुः शौर्य्यसौन्दर्य्यवान्

सर्व्वाः प्रकृतीरन्वरञ्जयत्। तस्य राज्ञस्तस्य तुल्य-वयोगुणाः शूराः आशैशवात् सह संवर्द्धिताः पञ्च मन्त्रिणः समभवन्। तेषां प्रथमश्चन्द्रप्रभः द्वितीयो भीमभुजः तृतीयो व्याघ्रपराक्रमः, चतुर्थो विक्रमशक्तिः पञ्चमो दृढ़-बुद्धिः। ते सर्व्वेऽपि महासत्त्वाः बलबुद्धिसमन्विताः कुलीनाः प्रभुभक्तास्तथा पशुपक्षिणां रुताभिज्ञाः। तैः समं तत्र राजपुत्त्रः सुन्दरसेनः अनुरूपां भार्य्यां विना पितुर्गृहे समुवास। अथ राजपुत्त्रः अनन्याशामाक्रमणं शौर्य्यं निजभुजार्जितं धनं अनुरूपा च भार्य्या एतत्त्रयं पुरुषस्य पूज्यते, अन्यथा तु एतेन त्रयेणापि किमिति चिन्तयन् तैर्वीरैः सचिवैः सैन्यैश्च सह मृगयार्थं नगर्य्या विनिर्ययौ। निर्गच्छन्तञ्च तं दूरदेशान्तरादागता कात्यायनी नाम कापि प्रव्राजिका तं ददर्श। चिन्तयामास च तद्रूपममानुषं दृष्ट्वा चन्द्रो रोहिणीरहितः किमयं शशी, किंवा रतिविरहितः काम इति तत्र स्वं परिजनैः राजपुत्त्रं विदित्वा धातुः सामग्र्यवैचित्र्यं प्रशंसती विसिष्मिये। उवाच च तारदीर्घेण स्वरेण तं राजपुत्त्रं कुमार! विजयस्वेति। सोऽपि तां प्रणम्य तद्वचनमनाकर्ण्यैव तत्क्षणं सचिवारब्ध कथा-व्यग्रेण चेतसा प्रययौ। अथ सा तापसी क्रुद्धा उच्चैः आह्वयन्ती तमवादीत् अहो राजपुत्त्र! कस्मात् ममाशिषं न शृणोषि? अहं कस्य राजपुत्त्रस्य राज्ञो वा न पूज्या, यदि ते एवमेव यौवनादिभिर्दर्पः तर्हि यदि त्वं हंसद्वीपेश्वरसुतां जग-द्विख्यातां मन्दारवतीं कन्यां भार्य्यामवाप्स्यसि, ततो

महेन्द्रादेरपि वचनं ध्रुवं न श्रोष्यसि । कैकाथा मानुषाणाम् ।
एवमुक्तवतीं तामाहूय सकौतुकः प्रष्टुः स सुन्दरसेनः
तां तापसीं क्षमयामास प्रणिधाय च भृत्यानां ह्रस्तैः
स्तदू विश्रामाय तां प्रष्टुकामः समन्त्रिणो विक्रमशक्तेः टेदक ।
ततो गत्वा स्नानं कृत्वा प्रत्यागत्य कृताह्निकः स राजपुत्रः
तां भुक्ताहारां तापसीमानाय्य पप्रच्छ भगवति ! उच्यतां
कैषा त्वयाद्य कीर्त्तिता मन्दारवती नाम कन्यका, परं हि
मे कौतूहलम् । तदाकर्ण्य सा तापसी तमुवाच । वत्स !
तीर्थादि हेतोः सद्वीपां महीं पर्य्यटामि । एकदा भ्रमन्ती
यदृच्छया हंसद्वीपमहं प्राप्ता तत्र मन्दारदेवस्य राज्ञः पुत्री
देवपुत्रोपभोगार्हा अपत्यकर्म्मभिरहस्या मया दृष्टा सा
मन्दारवतीति संज्ञां श्रीरिव नन्दने दधती कारिणी
दर्शनोद्दीपितस्मरा धात्रा सुधामयी इन्दुकलेव सृष्टा
यैः सा न दृष्टा तेषां जन्म नेत्रे च अफले तस्याः सदृशी
भूतले क्वापि रमणी न विद्यते । केवल मेकोभवान्
रूपसम्पदा तां हरतीति मन्ये । इति तस्यास्तापस्या
मुखात् निशम्य स राजसुतः प्रत्यवादीत् भगवति ! तस्या
स्तादृशं रूपं कथं पश्येयमिति तापसी प्राब्रवीत्
वत्स ! तत्काले मया कौतुकाविष्टया तस्या रूपं चित्र-
पटे लिखितं कृत्वा वस्तुनिकया धार्य्यते, यदि कौतुकं
तत्ते दर्शयामि इत्युक्त्वा वस्तुनिकातो निःसार्य्य चित्रस्थां
तामदर्शयत् । सोऽपि सुन्दरसेनस्तां चित्रगतामपि
विचित्ररूपां आनन्दनिष्यन्दमां विलोकयन् रोमाञ्चकण्ट-
कर्षितैरङ्गैः पुष्पबाणस्य निरन्तरैं र्बाणैः कीलित इव

सम्भाव्य तां कन्यामभ्यर्थयितुं मन्दारदेवस्यान्तिकं हंस-द्वीपे दूतं सुरतदेवं नाम प्रावर्त्तयत्। सुन्दरसेनस्य तापस्या लिखितं तत् चित्रपटद्वयं तस्य हस्ते रूपोत्कर्ष-प्रकाशनाय प्रादात्। सं च दूतः सत्वरं सम्बुधितटे महेन्द्रादित्यस्य नरपतेः शशाङ्कपुरं नाम पुरं प्राप्य ततः प्रवहणमारुह्य कतिपयैर्दिनैः हंसद्वीपमगात्। तत्रोत्ताय मन्दारदेवस्य सिंहद्वारं प्राप्य द्वास्थैरावेद्य च प्राप्तानु-मतिः प्रविश्य राजसकाशमवाप। राज्ञा च यथावद्दत्त-सत्कारः स दूतः कुशलप्रश्नपुरःसरं तस्मै नृपाय यथादिष्टं समाख्यत् राजन्! महासेनेन राज्ञा ते सन्दिष्टं सुन्दर-सेनाय मत्पुत्राय निजां सुतां देहि। पटे लिखिता तापस्यां सा तव कन्या मन्दारवती गौरवमिति दर्शिता, अस्मिन्नपि पटे तथैव लेखितं सुन्दरसेनस्य रूपं प्रेक्षितं वीक्ष्यताम्। एष हि रूपे असदृशां भार्यां स्वानुरूपां विना उद्वोढुं नेच्छति केवलमेका तव सुता अस्यानुरूपिणी इति सन्दिश्य मे हस्ते अयं पटः समर्पितः दृश्यतां तदिदानीं माधवीलता मधुना युज्यताम्।

एतद्दूतवचः समाकर्ण्य राजा हर्षेण सुतां मन्दारवतीं तस्याश्च मातरं राज्ञीं आनाययत्। ततस्ताभ्यां सह चित्रपट-मुद्घाट्य ददर्श स राजा तुल्यो मम दुहितुः इत्यन्यो नास्तीति एतन्मदनजयात्। अभाद् च यदि अमुना राजपुत्रेण कन्या मे युज्यते तदस्याः रूपनिर्माणं सफलं भवेत्, अनेन च विहीना मे तनया न राजते। का हि पद्मिनी विना हंसं क्व च हंसः पद्मिनीं विना। इति राजाभिहिते राजाज्ञ

तद्वचसि अतीव विश्वस्तायां सा मन्दारवती सद्यो मदन-विह्वला समजायत । प्रतिष्ठच्च तस्मिन् चित्रपटे न्यस्त-निश्चलोत्फुल्ललोचना अधिष्ठितेव सुप्तेव विनिद्रेव लिखि-तेव च । ततो मन्दारदेव स्वां सुतां तथाविधां दृष्ट्वा दान-मङ्गीकृत्य तं दूतमपूजयत् । अन्येद्युश्च तं विसृज्य तेनैव सह स्वकं दूतं कुमारदत्तं नाम विप्रं महासेननृपं प्रति प्राहिणोत् । जगाद च तावुभावपि, युवां गत्वा तं मल-केश्वरं महासेनं नृपं द्रुतं मद्वचसा ब्रूहि सौहार्द्देन मया तावत् कन्या दातव्या, तदादिश्यतां पुत्र स्तव इहायाति किं ? उत कन्या मया प्रहीयते ?

इति राज्ञोक्तसन्देशौ गृहीत्वा दूतौ अब्धिमार्गेण प्रवहण-मारुह्य प्रययतुः । क्रमेण च शशाङ्कपुरमासाद्य स्थलपथेन तां सम्बद्धा मलकामिव अलकां पुरीमुपेत्य राजसकाशं प्राप्य च यथोचितं कृतादरं महासेनं राजान मपश्यताम् । अवोचताञ्च सादरं तं प्रतिसन्देशम् । स च राजा तदाकर्ण्य तौ दूतौ अपूजयत् । ततः प्रतिदूतम् कन्याया जन्मनक्षत्रं दृष्ट्वा गणकान् विवाहलग्नमपृच्छत् । ते च मासत्रयात् परं कार्त्तिके मासि शुक्लपञ्चम्यां तयोर्वधूवरयोः शुभं लग्नं बद्दन्तिस्म । ततः सः अलकापतिः तस्मिन् लग्ने विवाहं तदा च पुत्रस्य प्रेषणं तस्मै मन्दारदेवाय सन्दिदेश । प्रणिधाय च पुनस्तं चन्द्रस्वामिनामानं स्वदूतं तञ्च कुमार-दत्तं प्रतिदूतं सलेखम् । तौ च दूतौ लेखं गृहीत्वा तथैव जलधीमनुपगम्य तत्रत्याय राज्ञे मन्दारदेवाय तत् सर्वं कथावृत्तान्तं ददतुश्च लेखम् । सोऽपि राजा तथेति

प्रतिपद्य तं चन्द्रस्वामिनं यथोचितं पुरस्कृत्य राज्ञो महासेनस्य अन्तिकं व्यसृजत् ।

अथ प्रत्यागते तस्मिन् चन्द्रस्वामिनि अलकां तत्कार्य्यं विनिश्चये गते सर्वे उभयपक्षीयाः लग्नप्रतीक्षायां व्यतिष्ठन्त । तावच्च सा मन्दारवती प्राक् चित्रपटदर्शनात् जातानुरागा हंसद्वीपे तं चिरभाविनं विवाहलग्नं तावत् कालक्षेपासहा प्रेयसि अतिसमुत्सुका मदनाग्निना गाढ़मदह्यत । चन्दनैरपि लेपनमङ्गेषु अङ्गारवर्षं पद्मिनीपत्रशय्यामपि सन्तप्तसिकतास्तरं सुधांशोरपि रश्मीन् दावानलशिखाः सा अमन्यत । ततः सा मौनावलम्बिनी विरहज्वरातुरा त्यक्ताहारा भ्रममाकुला विश्वस्तसख्या पृष्टा कृच्छ्रात् एवमवादीत् सखि! दूरे मम विवाहलग्नं न चाहं तमलकाधिपतेः सुतं विना क्षणमपि प्रतीक्षितुं शक्नोमि देशश्च कालश्च दूरवर्त्तिनौ हा कष्टं! विधातुर्विचित्रा गतिः तदन्तरे को वेत्ति किं कस्य भविता, तन्मे मर्त्तव्यमेवेति सा वदन्ती विरहासहा सद्यो विषमां दशामगमत् । तस्याः सखीमुखात् तद्विदित्वा तथाविधाञ्च तां दृष्ट्वा सभार्य्यो महीपतिर्मन्दारदेवः मन्त्रिभिः सह मन्त्रयामास स महासेनो नृपतिर्मे मित्रं एषा च मन्दारवती कालं प्रतीक्षितुमक्षमा, तदत्र त्वरां त्यक्त्वा यथावस्तु तत्रैव दूतं प्रेष्यतां तत्र गता च कान्तान्तिकस्था धैर्य्येण कालक्षेपं करिष्यति, इत्यालोच्य तां मन्दारवतीं समाश्वास्य सधनां सपरिच्छदां शुभेऽहनि हंसद्वीपात् समुद्रवर्त्मना विवाहार्थं जननीसमन्वितां

प्रवहणमारोप्य विनीतमतिनामानं स्वमन्त्रिणं सह दत्त्वा अलकां प्रति व्यसर्जयत् । ततो यावत् कतिचित् दिनानि सा मन्दारवती अम्बुधौ प्रवहणेन याति, तावद्-कस्मात् घोरेण महता सह गर्जन् जलदैः समुत्तस्थौ । क्षणेन च बलीयसा विधिनेव दूरमाकृष्य वातेन तस्याः प्रवहणं हन्यमानं अभज्यत । तस्मिंश्च भग्ने सा सपरिजना विनीतमतिना सह सधना अम्बुधौ न्यमज्जत् । सा तु राजसुता अब्धिना ऊर्मिबाहुभिर्जीवन्ती एव उत्क्षिप्य नीत्वा निकटे वेलावने निक्षिप्ता । क्व अब्धौ पातः क्व च तरङ्गैः वेलावने प्रापणं ? सर्व्वमेव भवितव्यता साध्यम् । ततः सा तादृशे विजने वने त्रस्तविह्वला एकाकिनमात्मानं दृष्ट्वा दुःखान्धा भूमौ न्यपतत् । क्वाहं प्रस्थितास्मि ? क्व प्राप्ता ? क्व चासौ मम सपरिच्छदः ? क्व वा विनीतमतिः ? अकस्मात् किमिदं मम वृत्तं, मन्दभाग्या क्वेदानीं गच्छामि ? हा हतास्मि, किं करोमि, हा हतविधे ! कथमहमस्मैः समुत्तारिता ! हा तात ! हा अम्ब ! हा आर्य्यपुत्र अलकापतिपुत्र ! त्वामप्राप्य विपद्येऽहं, पश्य मां को मामिदानीं परित्रायते इत्यादि बहु विलपन्ती सा मन्दारवती छिन्नहारमुक्ताफलोपमैः अश्रुभिः भृशं प्ररुरोद । तावच्च दैवयोगात् तत्र मतङ्गाख्यो महामुनिः आश्रमपदात् जलनिधेर्जलेषु स्नातुमाजगाम । स मुनिः सुदूरात् कौमारब्रह्मचारिण्या यमुनाख्यया दुहित्रा सहागच्छन् तस्या रुदितध्वनिमशृणोत् । अपश्यत् च तामुपेत्य तनयासहितस्तां राजसुतां भूपतितामिव श्रीं हरसानः अक्षिमात्तलोचनाम् ।

अपृच्छत् च स्निग्धया गिरा का त्वं शुभे ! कुत आगतासि ? कस्माच्च रोदिषि ? इति। ततः सा तं सरूपं दृष्ट्वा धर्मराशिरूपं तं प्रणम्य च तस्मै सतपं स्ववृत्तान्तमाचचक्षे। अथ स मुनिः प्रणिधाय तामब्रवीत् राजपुत्रि ! मा विषीद धैर्यमाश्रय, शिरीषपेशलाङ्गी त्वां क्लेशातिशयो नितरां बाधते, विपदः किं पेलव मपेलव मपेक्षन्ते, भवती अचिरादेव अभीप्सितं पतिमाप्स्यति, तदागच्छ मे आश्रमं इतो नातिदूरं तत्रानया मत्सुतया सह स्वस्थेह यथा आत्म इति तां समाश्वास्य कृतस्नानो महामुनिः सुतया सहितां मन्दारवतीं स्वमाश्रममानिनाय। तत्र सा संयता भर्तृसङ्गमार्थिनी तस्य मुनेः परिचर्य्याविनोदेन तत्सुतया सहिता तस्थौ।

अत्रान्तरे चालुक्यपतिसुतः दिनानि गणयन् विवाहलग्नोन्मुखः सुन्दरसेनः चिरमुत्कण्ठाकृशः चन्द्रप्रभादिभिर्मित्रै राश्वास्यमानः कथमपि कालमनयत्। क्रमाच्च लग्नदिवसे प्रत्यासन्ने राजा महासेनः हंसद्वीपं प्रति तस्य यात्रासमुद्योग मादिदेश। ततः शुभे ऽह्नि कृतप्रस्थानमङ्गलः स नृपात्मजः सुन्दरसेनः क्ष्मां स्वसैन्यैः कम्पयन् प्रतस्थे। क्रमेण च गच्छन् सचिवैरन्वितः अम्भोधेस्तीराभरणभूतं शशाङ्कपुरं नाम पुरमाससाद। तत्र प्रश्रयावनतेन राज्ञा महेन्द्रादित्येन प्रत्युद्गतः सहानुगः गजेन्द्रारूढः राजमन्दिरमाससाद। तत्र तेन महेन्द्रादित्येन राज्ञा ससचिवेन समुपचरितः तं दिवसं विशश्राम। अपि वारिनिधिमुत्तीर्य्य तां प्रियां प्राप्नुयाम् ? उत नवोढा सुलभ-

प्रेमलज्जासाध्वसशालिनी मामेत्य पाश्विष्यति ? काचो-स्वित् लज्जाविधुराक्षरं गर्भमधुरं जपन्तीं तां कान्तां श्रृणुयां ? इत्यादिभिर्मनोरथैः तां निशां नीत्वा प्रातश्च तत्रैव नगरे स्वसैनिकं स्थापयित्वा महेन्द्रादित्येनानुगम्यमानः वारिधेः कूलं ययौ । तत्र तेन राज्ञा सह महत् प्रवहण-मेकं परिच्छदपूर्णं स राजपुत्त्रः स्वसचिवैर्वृतः समा-रुरोह । द्वितीयस्मिन् प्रवहणे अपरान् परिजनान् समा-रोप्य दक्षिण पश्चिमां दिशं प्रति गन्तुं नाविकानादिशत् ।

अथ द्वित्रेष्वहःसु गतेषु अम्बुधौ गच्छतोर्द्वयोः प्रव-हणयोः अकस्मात् महान् उत्पातमारुतः समुत्तस्थौ । अहो वायुरपूर्व्वोऽयमिति आश्चर्य्यवशादिव जलधेस्तटेषु वन-राजयः व्याघूर्णन्ते इति तेषु तर्कयत्सु ते उभे प्रवहणे अम्बुधौ भ्रेमतुः । ततः सुन्दरसेनस्तत् दृष्ट्वा धैर्य्यादिव आसनात् चलितस्तं महेन्द्रादित्यं नृपतिं प्रति व्याजहार राजन् ! मम मन्दभाग्यस्य अपुण्यैः भवता सकाण्डे प्रल-योऽयमुपस्थितः । तच्च शक्नोमि द्रष्टुं आत्मानमम्बुधौ क्षिपामि, इत्युक्त्वा स्वोत्तरीयेण परिकरं बद्ध्वा स राजपुत्त्र-स्तस्मिन् जलधौ आत्मान मपातयत् । तदवलोक्य पश्च तद्वयस्याश्चन्द्रप्रभादयः तेन महेन्द्रादित्येन सह तत्रै-वात्मान मक्षिपन् । ते च बाहुभ्यां तरन्तो मदन्तश्च गतसम्भ्रमाः सर्व्वेऽपि वीचिवेगादितस्ततो जग्मुः । अथ क्षणेन शान्ते पवने निःशब्दस्तिमितोऽम्बुधिः सहसा प्रशान्तक्रोधस्य सज्जनस्य सादृश्यं बभार । तावच्च वातेन कुत्रापि नीतां यानपात्रिकां स सुन्दरसेनः हृदः क्षिता

मञ्जूषा वणिजः प्राप । आरुरोह च तेनैकेन मञ्जूषां ताम् । ततो दिशमजानन् अखिलं पयोमयमिव पश्यन् भ्रष्टपौरुषः दैवमेव शरणं मन्यमानः मन्दानुकूलेन दैवेनेव नभस्वता प्रेर्य्यमाणया तया नावा त्रिभिर्दिनैः तीरं प्रापितोऽभूत् । ततस्तीरविलग्नायां तस्यां यानपात्रिकायां स सद्वितीयः स्थलं जीविताशाञ्च समवाप । ततस्तञ्च समाश्वास्य दृढबुद्धिमभाषत सखे ! अम्बुधेरुत्तीर्णोऽपि, पातालादपि अधोगतोऽस्मि यत स्तं विक्रमशक्तिं व्याघ्रपराक्रमं चन्द्रप्रभं भीमभुजं तथा अकारणबान्धवं महेन्द्रादित्यं नृपं अन्यांश्च सर्व्वान् विनाश्य जीवितेन मे किं फलम् ? इति दुःखेन विलपन्तं शोकव्याकुलमानसं तं मन्त्री दृढबुद्धिरवादीत् देव ! धैर्य्यमवाप्नुहि, जानेऽहं अस्माकं कल्याणमस्ति । यथा आवां तथा तेऽपि जलधिं जातु तरेयुः । केन विज्ञातुं शक्यते ? दुर्ज्ञेया हि विधे र्गतिः । इत्यादिभि र्यावत् तं दृढबुद्धिः प्रबोधयति तावत्तत्र द्वौ तापसौ स्नानार्थमाजग्मतुः । तौ तं विषण्णं राजपुत्त्रमुपेत्य वृत्तान्तं परिपृच्छ्य च सदयमूचतुः सुमते ! देवा अपि सुखदुःखप्रदायिनः बलिनः पूर्व्वकृतस्य कर्म्मणः अन्यथाभावं कर्त्तुं न क्षमाः । तस्मात् दुःखं हातुमिच्छन् सुधीः सुकृतमाचरेत् । सा हि तस्य प्रतिक्रिया, तनोः शातनेन न शोकेनापि न, तत्त्वं विषादं जहीहि धैर्य्येण शरीरं रक्ष । शरीरे सति कोनाम पुरुषार्थो न सिध्येत् । कल्याणलक्षणेन तव अवश्यमेव शुभं भावीति सूच्यते । इत्युक्त्वा तौ मुनी तं समाश्वास्य सद्वितीयं स्वाश्रमं निन्यतुः । तत्र

स इत्याकुलः कांश्चित् दिवसान् मुनीनामाश्रमम् दृढबुद्धिना सहचरेण सह तस्थौ ।

अत्रान्तरे तस्य मन्त्री भीमभुजः विक्रमशक्तिश्च द्वौ द्वीप्यामब्धिं तीर्त्वा पृथक् तटमापतुः । यावामिव जातु सोऽपि राजपुत्रः समुत्तरेत् इत्याशया चिन्वन्तौ दुःख-मोहितौ महाटवीं विविशतुः । अपरौ तत्सचिवौ चन्द्र-प्रभ-व्याघ्रपराक्रमौ राजा महेन्द्रादित्यश्च तथैव वारिधिं समुत्तीर्य्य भृशदुःखिताः तं राजपुत्रं सुन्दरसेन मन्वि-ष्यापि अप्राप्तवन्तः अलब्धमन्ववहना सन्तः शशाङ्कपुरं पुरमवापुः । तत स्तौ मन्त्रिणौ तानि च प्राक् संस्थितानि बलानि ज्ञातवृत्तान्तानि तामलकां पुरीं विषादशून्य-प्रतिपत्ति प्रययुः ।

अथ तेषु प्राप्तेषु अनुशोचत्सु सा पुरी सर्व्वैव प्ररुरोद । राजा महासेनश्च देव्या सह तं पुत्रवृत्तान्तं निशम्य यावत् प्राणत्यागाय समुद्यच्छति, तावत् सर्व्वे सचिवा स्वै स्वै र्दर्शितोपपत्तिभि स्तं सदेवीकं न्यवारयन् । ततश्च राजा यावदहं सुतवार्त्तां नाधिगमिष्यामि तावदिहैव वत्स्यामीति सङ्कल्प्य पुराद्बहिः सदेवीकः पुत्रं चिन्वन् सानुगो वास मकल्पयत् ।

तावच्च मन्दारदेवोऽपि हंसद्वीपे जामातुर्दुहितुश्च अब्धिपातवृत्तान्तं विदित्वा श्रुत्वा च अलकाप्राप्तं जामातृसचिवद्वयं महासेनञ्च आशया धृतप्राणं तपस्थितं निशम्य च भृशमनुतताप । सुतशोकाच्च मरणोद्य-तोऽपि बन्धुभिर्वारितो मन्त्रिभिश्च तेन न्यस्तराज्यभरः महा-

सेनान्तिकं देव्या मन्दर्पवेनया सार्द्धं समागात्। आगत्य च मन्दारवतीशोकेन दग्धशरीरः महासेनेन समेत्य सम-दुःखः तेनैव समं पर्य्यशोचत् संवर्तेन्द्रियश्च तत्रावात्-सीत्। हंसद्वीपेश्वरोऽपि मितायो दर्भसंस्तरः सह देव्या महासेनान्तिक एव एवं चिरमतिष्ठत्।

इत्थं दुर्द्दैवेन सर्व्वेषु तेषु तेषु इतस्ततः प्रक्षिप्तेषु कदाचित् इतस्ततो भ्रमन् सुन्दरसेनः मतङ्गाश्रममा-ससाद। तत्र चागत्य दृढ़बुद्धिसखः श्रान्तः सहसा पुष्पावचयव्यग्राः कन्यका ददर्श। तन्मध्ये च एकां त्रैलोक्य-सुन्दरीं कान्त्या ज्योत्स्नयेव तदखिलं वनं भासयन्तीं विलो-कितैः दिशः प्रफुल्लनीलोत्पलाः कुर्व्वतीं चरणन्यासैरवनौ नलिनीवनानि तन्वन्तीं कन्यकां दृष्ट्वा केयं सहस्रनयन-प्रेक्षणीया किं अप्सराः अथवा पुष्पलम्पाग्रकरपल्लवा वनश्रीः किमियं मन्ये वस्तुदिव्याङ्गनारूपनिर्माणनैपुण्येन वेधसा एतस्या इदमद्भुतं वपु र्निर्म्मितम्। अहो! तस्याश्च चित्रहृदयालतेरेषा अनुसरति, सैव किं भवेत्, कथं वैतत् क्व सा हंसद्वीपवासिनी, क्वेदं गहनम् वनं। तन्न ज्ञायते केयं कुतः कुत्र वा एषा भामिनी इत्येवं बहु व्यतर्कयत्।

अथ दृढ़बुद्धिस्तां तथाविधां दृष्ट्वा तं राजसुत-मब्रवीत् देव! नेयं वनवर्द्धिता, तथा सति नेदृशं रूपं वा सौकुमार्य्यं न स्यात्, तदेषा कापि दिव्या वा राजकन्या, सैवेयञ्चविकन्या, तदत्र क्षणं तिष्ठावः ज्ञातुमिमाम्। इत्यभिहिते दृढ़बुद्धिना तावुभौ तत्र पादपान्तरितौ तस्थतुः। तावच्च समुच्चितपुष्पास्ताः कन्यकास्तस्या वद-

कन्यया सार्द्धं स्नातुं सरितं अवातरत्। तत्र तासु जलक्रीडाप्रसक्तासु विधियोगात् सा वरकन्यका ग्राहेणागत्य जगृहे। तदालोक्यैव सर्व्वास्ताः कन्याः भयविह्वलाः क्रन्दन्त्यः ब्रुवन्तिस्म वनदेवताः! त्वरध्वं त्वरध्वं एषा मन्दारवती सखी अस्माकं मध्यात् अशङ्किता ग्राहेणागत्य तरसा नीयते हा! विपद्यते च। एतदाकर्ण्यैव किं सैव मे प्रिया इति स सुन्दरसेनः प्रधाव्य द्रुतं क्षुरिकया तं ग्राहमवधीत् आश्वासयंश्च मृत्योरिव मुखात् तस्मात् ग्राहात् च्युतां तामुत्क्षिप्य रोधसि मन्दारवतीम्। सापि भयादुत्तीर्य्य तं सुभगं दृष्ट्वा व्यचिन्तयत् कोऽयं महात्मा मम प्राणदानार्थं मिहागतः, चित्रमिदं सुसदृशं रूपमिदं चित्रदृष्टस्य तस्य अलकेश्वरसुतस्य मे प्राणेशस्य। अपिनाम स एवायं स्यात्? अथवा धिक् मे दुश्चिन्तितं ईदृशः स विदेशस्थः कथं स्यात्, शान्तं माभूदेवं कदाचन, तदस्य अन्यपुरुषस्यान्तिके नाधुना मे स्थातुं युक्तं व्रजामि तावत् अस्मै च महात्मने स्वस्ति अस्तु। इति सञ्चिन्त्य सा मन्दारवती ताः सखीः प्राह सख्यः! एनं महाभागं प्रणम्य गच्छामः एत इति। तदाकर्ण्य स राजपुत्रः नामश्रवणरूपदर्शनाभ्यां प्रायेण जातनिर्णयोऽपि तत्रावस्थानमसम्भवं मत्वा संशयानः एकां तत्सखीमपृच्छत् शुभे! केयं कस्यात्मजा कीदृशी च वः सखी? कौतुकमत्र मे सुमहत् इति पृष्टवन्तं तं सा मुनिकन्या समभ्यधात् महाभाग! राज्ञो मन्दारदेवस्य हंसद्वीपपते रियमात्मजा मन्दारवती नाम। इयं कुमारी राजसूनवे सुन्दरसेनाय दातुं अलकां पुरीं

नीयमाना मत्प्रवहणा अम्भोनिधौ निमग्ना वीचिभिस्तटे आनीय दूरं क्षिप्ता । ततो मतङ्गेन मुनिना स्नातुं गतेन समुद्रतीरं दृष्टं प्राप्य आश्रममानीतेति । एवमुक्ते तदा हर्षविषादाकुलितं तं सुन्दरसेनं सखा दृढबुद्धिर्बभाषे राजपुत्र ! दिष्ट्या अद्य देवीलाभेन वर्द्धसे, सैव एषा हि, दैवेन समानदुःखस्य तवान्तिकं प्रापिता, अहो ! विचित्रं विधेर्विलसितमिति उक्त्वा पृच्छन्तीस्ताः सखीर्मुनिकन्यकाः राजपुत्रवृत्तान्तमवर्णयत् । श्रुत्वा च ताः तां मन्दार-वतीमभ्यनन्दयन् । ततः सा हा आर्यपुत्र ! इत्युदीर्य तस्य राजसुतस्य सुन्दरसेनस्य पादयोः पपात सोऽपि तामाश्लिष्य भृशं रुरोद । तौ च रुदन्तौ दृष्ट्वा दयार्द्राणि काष्ठानि तृणान्यपि तत्रत्यानि रुरुदुः का कथा अन्येषाम् ।

अथ गत्वा ताभिर्मुनिकन्याभिरुक्तं श्रावितो मुनिर्मतङ्गः स्वसुतया यमुनया सहितस्तत्रागात् । स चागत्य तं सुन्दर-सेनं चरणानतं समाश्वास्य मन्दारवत्या सहितं स्वाश्रमं निनाय । चकार च तमातिथ्येन सुसत्कृतं सद्वितीयं सुवि-श्रान्तम् । अन्येद्युश्च स महामुनिः तं राजपुत्रमाहस्म पुत्र ! मयाधुना कार्यतः श्वेतद्वीपे गम्यते, तत्त्वं मन्दारवतीं गृहीत्वा अलकां पुरीं गच्छ । तत्रैतां राजसुतां परिणीय अनुपालयेः, सुतेति प्रतिपन्नेयं अद्य तुभ्यं समर्पिता मया, निश्चिन्तश्चाहमद्य यथाकामं चरिष्यामि, त्वमनया साकं सुचिरं सुखेन राज्यं पालयिष्यसि, तांश्च सर्व्वान् सचिवान् अचिरेणैव प्राप्स्यसि । इत्युक्त्वा सवधूकं तं सुन्दरसेन-मामन्त्र्य नभसा सदुहितृकः श्वेतद्वीपं प्रति प्रतस्थे ।

ततः सुन्दरसेनः तया मन्दारवत्या कान्तया सचिवेन च दृढबुद्धिना सह तस्मादाश्रमात् प्रतस्थे । क्रमेण च जलधितीरमासाद्य वणिजा केनापि चन्द्रस्वामिना अधिष्ठितं वहनमेकं ददर्श दृष्ट्वा च तस्मिन् आश्रयं स्वदेशगमनाय लुब्धः दृढबुद्धिमुखेन । सोऽपि युवा वणिक्सुतः तां मन्दारवतीं पश्यन् स्मरमोहितस्तथेति प्रतिपद्य तीराभिमुखं तत् प्रवहणमचोदयत् । ततः सुन्दरसेनः अग्रतस्तां प्रियां तत्रारोप्य तटस्थितः स्वयमारोढुं यावदिच्छति, तावत् स परस्त्रीलम्पटः कुवणिक्पुत्रः शठः कर्णधाराय संज्ञां दत्वा द्रुतं प्रवहणमचालयत् । तच्च वहनं कन्दर्पराजसुतं क्षणेन पश्यतः सुन्दरसेनस्य दृष्टिपथमतिक्रान्तमभूत् । तदवलोक्य स राजसुतः हा ! धिक् चौरैः प्रमुषितोऽस्मीति समाक्रन्दन् भूमौ पपात विललाप च । अथ तेन दृढबुद्धिना स राजसुतः समाश्वास्य निजगाद देव ! उत्तिष्ठ, वैक्लव्यं मुञ्च, नायं शोकोचितः क्रमः: एहि चौरं तमन्वेष्टुं अनेन स्थलवर्त्मना गच्छावः । आपदि कष्टदशायाञ्च बुधैरवसादो न क्रियते । इति तेन दृढबुद्धिना कथञ्चित् प्रबोधितः कुमारः तस्मादब्धितीरादुत्थाय प्रतस्थे । गच्छन् क्रमेण हा प्रिये ! मन्दारवति ! इति विलपन् साश्रुरविघ्नं विरहाग्निना सन्तप्यमानः निराहारः केवलं दृढबुद्धिसहायः सोन्मादइव महारण्यमेकं विवेश । तदा तस्य सख्युः दृढबुद्धेर्हितं वचः न गणयामास । तत्र तत्र प्रियार्थी अभ्यधावत् किं मे प्रिया अत्र लताकुञ्जे पुष्पाणि चिनुते ? उताहो सरसि स्नातुमवतीर्णा, ? कथं नु तस्याः पद्मपला-

याप्याः वदनं नेक्ष्यते ? क्वासौ गता मामनादेश्य, किंवा कुपिता सा कुत्रापि प्रच्छन्नशरीरा ममानुरागं पश्यति. हा प्रिये ! दृश्यसे इव नापि दृश्यसे ? .एवं प्रतिपदं मुह्यन् राजसुतः वनार्केण तथा इन्दुना तप्यमानः तुल्यनक्तन्दिन- श्चिरं बभ्राम।

अथ कथञ्चित् दृढ़बुद्धिना तस्मात् वनादपवाहितः स राजपुत्त्रः मार्गभ्रष्टः पुनर्महतीं उदग्रव्याघ्रसिंहादिश्वापद- भीषणां सेनानीमिव दुर्दर्षां दस्युसेनानिषेवितां अटवीं प्राप। ततस्तां सुलभापदां निराश्रयां दुर्दशामिव सम्प्राप्य दृढ़बुद्धिमात्रसहायः समन्तात् यावत् अवलोकयति तावत् विन्ध्यकेतोः पुलिन्दराजस्य आज्ञाकरान् भगवत्याश्चण्डि- काया उपहारार्थं नरपशून् चिन्वतो बहून् पुलिन्दान् उद्यतायुधान् आपततः सन्ददर्श। विदेशो, विरहक्लेशः, नीचात् परिभवः, अनाहारः, अध्वसन्तापश्च इति पञ्चाग्नि- परीतस्यापि राजपुत्त्रस्य धैर्य्यमवेक्षितुं विधिः षष्ठं दस्यु- सम्पात मसृजत्। स राजसुतः तान् हरणार्थं प्रधावितान् बाणवर्षिणो दस्यून् बहून् छुरिकया अवधीत्। तद्विदित्वा राज्ञा विन्ध्यकेतुना पुलिन्दपतिना अन्यत् सैन्यं प्रैष्यत। सोऽपि युद्धश्री राजतनयः तान् बहून् चौरान् पुनर्जघान। अथासौ सवयस्यः बहुना युद्धव्यापारेण अध्वश्रमेण अनशनेन विरहेण च नितरां क्लान्तः बहुभिः शबरै र्गृहीत्वा राज्ञः पुलिन्दाधिपतेः सकाशं नीत्वा तदाज्ञया कारायां निचिक्षिपे। तत्र कीटोत्कराकीर्णे जालक- परिपूरिते गर्त्तबिलभिन्ने निर्लोकैः क्षुधिताश्चिसञ्चारे

अन्त: विसंख्यातानेकभीतापन्नजनाहते निरय इव स्थित: दृढगुप्तिमान्नसञ्चर:, आदौ बद्धानीतस्थितौ तौ तीर्थ-वारिणौ भीमभुजविक्रमशक्ती अपश्यत्। तौ तत्र प्रभुं तदवस्थमानीतं दृष्ट्वा रुदन्तौ परिज्ञाय तस्य पादयो: पेततु:। सोऽपि तौ प्रत्यभिज्ञाय रुदन् बाष्पाकुलकण्ठ: स्ववृत्तान्त मब्रवीत्। तत: अन्योन्यदर्शनेन शतगुणीभूत-दु:खास्ते आश्वासयद्भिरपरै र्बन्धनस्थैरूचिरे। भद्रा:! कृतं दु:खेन, नहि पूर्व्वकर्म्म अतिवर्त्तितुं देवैरपि शक्यं किं न पश्यथ सर्व्वेषामेव न: आगामिन्यां चतुर्दश्यां मृत्युरुपस्थितम्। अनेन पुलिन्दराजेन देव्या उपहारार्थं वयं नरपशव एते समाहृता:, तत् किं शोकेन? जन्तुषु क्रीड़तो विधेश्चित्रा गति:। स एव जन्तूनां भद्रमभद्रं वा दद्यात्। इति तैर्बन्धनस्थै रुक्ते सर्व्वे विषादमापन्ना अतिष्ठन्।

अथ प्राप्तायां चतुर्दश्यां, उपहारार्थं मानीयन्तां सर्व्वे बन्धनस्था इति राजाज्ञया पुलिन्दै: राजभृत्यै स्तत् दीप-ज्वाला चलज्जिह्वं घण्टानादान् कुर्व्वत् घोरं मृत्योर्मुखमिव देवीगृहमनीयन्त। तत्र सुन्दरसेन स्तां देवीं दृष्ट्वा भक्ति-प्रह्वेण मनसा प्रणम्य स्तुवन् व्यजिज्ञपत् भगवति! दैत्य-विनाशिनि! शमितसुरसन्तापे! प्रणताभयदायिनि मात:! प्रसन्नेन अमृतस्रुता लोचनेन दु:खदावाग्निदग्धं मां निर्व्वापय देवि! तुभ्यं नमोऽस्तु। इति व्याहरति तस्मिन् राजसुते तत्र पुलिन्दराट् विन्ध्यकेतु: तां देवीं अर्च्चयितु-मभ्यगात्। तं भिल्लराजं दृष्ट्वैव स सुन्दरसेन: त्रपानत: तान् वयस्यान् अवादीत् अहो! स एष पुलिन्दाधिपति:। विन्ध्य-

केतुः, यस्मात्तस्य प्रसादात् सेवया इमां महाटवीं भुङ्क्ते । तद् यदस्तु, नेह किञ्चन वक्तव्यमस्माभिः, वस्तुरपि मानिनः श्रेयान् न तु आत्मप्रकाशनम् । इति यावत् सचिवैः सह स इत्यालपः आमन्त्रयति, तावत् स विन्ध्यकेतुः स्वान् भृत्यानभ्यभाषत एत, प्रदर्शयत तं प्रवीरं महापशुं येन स्वल्पमात्रेण हता मे सुबहवो योधा इति । तच्छ्रुत्वैव तैः पशुभ्याशगद्भ्यो प्रणिताङ्गः स सुन्दरसेनः तदन्तिक-मनीयत । स पुलिन्देन्द्रः तं दृष्ट्वैव मनागिव परिज्ञाय परिशङ्कितः कस्त्वं कुत आगतः, ब्रूहीति परिपप्रच्छ । सुन्दरसेनोऽपि तं भिल्लेन्द्रं योऽहं यत आगतः, तत् श्रुत्वा चलं, कुत्र प्रस्तुतं, किमनेन श्रुतेन इति प्रत्यवादीत् । ततस्तं आलापात् सम्यक् प्रत्यभिज्ञाय ससम्भ्रमः नत्वा: हाहेति जल्पन् विन्ध्यकेतुः अवनौ सद्यः पपात । हा महाराज महासेन ! पश्य पापेन मया अद्य युष्मत्प्रसादानां कीदृश-मुचितं कर्त्तुमारब्धं. यत्ते प्राणसमः पुत्त्र इमामवस्थां नीतः देवोऽयं सुन्दरसेनः कुतोऽपि कथमिहागतः । इत्थं राजपुत्त्रमाश्लिष्य विन्ध्यकेतुस्तथा व्यलपत् यथा सर्व्वे तत्रत्या उदश्रवः समभवन् । ततः सर्व्वे ते एतद्देवात ते सौभाग्यं यत् पूर्व्वमेव प्रत्यभिज्ञातवानसि, पश्चाद्विदिते किं विधास्यसि, तदत्र को विषादः प्रहर्षकाले इति उक्त्वा तं विन्ध्यकेतुं समाश्वासयन् । ततश्च स राजा पादपतितः प्रीतः तं सुन्दरसेनं अन्यांश्च तद्वयस्यादीन् बन्धनात् मोचयित्वा सम्मान्य समभ्यर्च्य,च स्वां पल्लीं सवन्धुकं नीत्वा तथा पर्य्यचरत् यथा पथिश्रमेण ते अस्त्रप्रहारव्रणादि-

शयनेन पूर्ववत् सर्वतिस्थाः सुखमतिष्ठन्। अथ स्वस्थेषु तेषु राजा विन्ध्यकेतुरवादीत् राजपुत्र! कथमिहागतं भवता महत् कौतूहलमत्र तत् कथ्यतामिति। ततस्तेन सुन्दर-सेनेन आमूलतः स्ववृत्तान्ते वर्णिते, विलीयमानचेताः शवरेन्द्रस्तमुवाच क्व मन्दारवती क्वेतो यात्रा, क्वाम्बुधौ पातः, क्व मतङ्गाश्रमप्राप्तिः, क्व तथा तत्र सङ्गमः, क्व च अविश्वासिना वणिजा तस्याः पुनरपहरणं, क्व चाटवीप्रवेशः, क्वास्माभिः पशुवदुपहारार्थं बन्धनं, क्व च प्रत्यभिज्ञया मृत्योरास्यादिव निर्गमः, तत् विचित्रविधये तस्मै विधये नमः, तत्त्वया कान्तां प्रति नैव चिन्ता कार्य्या, यतो विधि-र्य्येदमकरोत् तथा तदपि अचिरात् करिष्यति, इति वादिन-मेव तं पुलिन्देन्द्रं सहसागतः तत्सेनापतिः प्रीतः प्रविश्य व्यजिज्ञपत् देव! भूरिधनं अतिरूपवत् स्त्रीरत्नमादाय सानुगः कोऽपि वणिक् एतामटवीं प्रविष्टः, स च मया सबलेन बद्ध्वा अवष्टभ्य सधनस्त्रीकः इहानीतो बहि-स्तिष्ठति। तदाकर्ण्य सुन्दरसेनः विन्ध्यकेतुश्च स वणिक् सा मन्दारवती किं स्यात्? इति दध्यतुः। प्रवेश्यतामिहैव असौ सा च स्त्री इत्युक्तवतोस्तयोः स सेनापतिः तं वणिजं ताञ्च स्त्रियं प्रावेशयत्। ततो दृष्ट्वैव तावुभौ दृढबुद्धिरभाषत सैवेयमस्माकं देवी मन्दारवती स चायं दुर्म्मतिः, हा देवि! निदाघदग्धेव लता कथमिमामवस्थां गतासि, इति तस्मिन् दृढबुद्धौ क्रन्दति स सुन्दरसेनः प्रधाव्य प्रियां तां कण्ठे सरभसं समग्रहीत्। ततस्तौ प्रियौ अश्रुधाराजलेन विरह-मालिन्यं क्षालयन्ताविव चिरं रुरुदतुः।

अथ विन्ध्यकेतुस्तौ समाश्वास्य तं वणिजं उवाच कथं त्वया विश्वस्तस्य दारा हृताः ?। ततः स वणिक् अवगद्गदया गिरा प्रोवाच इयं मया इदं सतीं पापेन, निजेन तु अपवर्णीयेन महसा इयं मनस्विनी रक्षिता, इयं वह्निज्वालेव मया स्प्रष्टुं न शकिता। निजं देशञ्च नीत्वा भर्तुः प्रसाधिता पापस्य मे इयं परित्यक्तुं अभिमेतासीत्। इत्युक्तवन्तं तं पुलिन्दराजेनादिष्टवधं सहृयो राजपुत्रः तं वणिजं वधादमोचयत्, यः प्राणाधिकं तस्य धनरत्नमहरत्। एवं सुन्दरसेनेन प्राणवधात् रक्षिते त्रपया तस्मिन् वणिजि गते स विन्ध्यकेतुः सुन्दरसेनेन सह तां मन्दारवतीं नीत्वा स्वदेवीमन्दिरं जगाम। तत्र स तां देवीं वस्त्रानुलेपनादिना समभ्यर्च्य मन्दारवतीं वस्त्रालङ्कारादिना सम्मान्य सुन्दरसेनं वरासने समुपवेश्य मुक्ताकनकमदादिभिः प्राभृतैरर्च्चयामास। चकार च तयो दम्पत्योः सङ्गमप्रीतो महोत्सवम्।

अथान्येद्युः सुन्दरसेनस्तं पुलिन्दराजमभ्यधात् राजन् यथेष्टमुपकृतोऽस्मि त्वया, तदधुना स्वनगरीं गच्छामः, तत् तताय चाशु स्वष्टत्तान्तमहागमनशंसनाय कश्चित् लेखहारः प्रेष्यताम्। इति तेन राजपुत्रेणोक्तः शवरेश्वरः तथैव इत्तसन्देशं लेखहारं व्यसर्जयत्। स लेखहारको यावत् तामलकां पुरीं प्रविशति तावत् तत्र स महासेनो नृपः देव्या सह पुत्रवार्त्तायाः कथमपि अप्राप्त्या किमिदानीं जीवितेनेति मोहितः शङ्करमन्दिराग्रे अनुशोचद्भिः पौरैरदस्रुभिः परिवृतो वह्निं प्रवेष्टुमुद्यतोऽभवत्

तदाकर्ण्य स शबरो धावन् लेखं प्रदर्शयन् महासेनं नृपं सत्वरमुपाजगाम ।। प्रोवाच देव ! दिष्ट्या वर्द्धसे, पुत्रस्तव सुन्दरसेनः निस्तीर्णाम्बुधिः मन्दारवत्या कान्तया मिलितः अस्मत्प्रभोर्विन्ध्यकेतोरन्तिके तिष्ठति, तेनैव साकमागन्तुं प्रवृत्तः मां लेखहारकमग्रतः प्राहिणोत् । इत्युक्त्वा धूलि-लिप्ताङ्गः धनुष्पाणिर्लताभिर्वद्धमूर्द्धजः श्यामः स शबरः राज्ञः पादान्तिके लेखं निदधे ।

ततोहृष्टैः सर्व्वजनैः कलरवे कृते, लेखे वाचिते च महाद्भुते वृत्तान्ते ज्ञाते स राजा कृतोत्सवः परित्यक्तशोकः तं लेखहारं पुरस्कृत्य सर्व्वैः सह राजधानीं प्राविशत् । ततोऽन्येद्युः तस्य आगमिष्यतः सूनोरग्रतः हंसद्वीपेश्वर-सहितः प्रायात् । चतुरङ्गबलस्य मेदिनीं प्रकम्पयत् तस्यानुपदं धावति स्म । सुन्दरसेनोऽपि विक्रमशक्तिः भीमभुजदृढ-बुद्धिभिः सखिभिः विन्ध्यकेतुना तत्सहचरैर्भिल्लवृन्दैश्च समन्वितः प्रियां मन्दारवतीमादाय वातरंहसा हयेनागच्छन् कतिपयैरेव दिनैरलकां पुरीमभितः पथि तिष्ठन्तं सम्मुखागतं सपरिच्छदबान्धवं पितरं ददर्श । ततस्तुरगादवरुह्य सानन्दं वाष्पवर्षिभिर्जनैर्वीक्षितः समुपेत्य सवयस्यः पितुः पादयोरपतत् । सोऽपि राकाचन्द्रमिवोदधिः पुत्रमालोक्य हर्षोल्लासतरङ्गितः आत्मन्येव न माति स्म । ततो मन्दारवतीं पादप्रणतां स्नुषां दृष्ट्वैव आत्मानं कुलस्य कृतिनं मेने ननन्द च । ततस्तान् दृढबुद्धिप्रभृतीन् भीन् प्रणतान् पुत्रमन्त्रिणः तथ विन्ध्यकेतुं सानुगं भृशमभ्यनन्दयत् ।

अथ सुन्दरसेनः पित्रा निर्दिष्टं तं मन्दारदेवं श्वशुरं दृष्ट्वा मुमुदे प्रणनाम च। ततस्तौ पूर्वागतौ चन्द्रप्रभव्याघ्रपराक्रमौ मन्त्रिणौ चरणानतौ दृष्ट्वा पूर्णान् मनोरथानमन्यत। सर्वो च तस्मिन् श्रुतवृत्तान्त हर्षितः स महेन्द्रादित्यो नृपः प्रीत्या शशाङ्कपुरात् तस्मात् समाजगाम। अथ स सुन्दरसेनः तैः समग्रैः स्वजनैः समं नलकूबर इव रम्भां मन्दारवतीं गृह्णन् वाहनारूढः अलकां पुरीं सर्वसमृद्धिपूर्णां भूयिष्ठपुण्य जनामयासीत्। तस्यां वातायनसंश्रिताभिः पौराङ्गनाभिर्नेत्रोत्पलैराकीर्य्यमाणः प्रियया समेतः पितृराजधानीं प्रविश्य आनन्दवाष्पाकुल-लोचनाया मातुश्चरणावभिवाद्य महोत्सवेन तं दिवसमनैषीत्।

अथान्येद्युः गणकैर्निर्द्धारिते शुभे लग्ने स राजसूनुः मन्दारदेवेनार्पितं चिरकाङ्क्षितं तस्या मन्दारवत्याः पाणिमग्रहीत्। मन्दारदेवश्च अनन्यपुत्त्रः तस्मै महान्ति रत्नानि यौतकानि दत्त्वा स्वदेहोत्तरकालं निजं राज्यञ्च जामात्रे दातुं व्यवस्थापितवान्। पिता महासेनश्च स्वेच्छाविभवानुरूपं महोत्सवं विधाय बन्धनागारेभ्यः बद्धान् अमोचयत् ददौ दीनदरिद्रानाथेभ्यः ब्राह्मणेभ्यश्च यथाभिलषितं धनम्। अथ जामातरं मन्दारवतीसमेतं पूर्णकामं दृष्ट्वा तद्विवाहजं प्रमोद मनुभूय च सम्बन्धिना महासेनेन समर्च्चितः मन्दारनृपतिः स्वं मण्डलमयासीत्। स च शशाङ्कपुरपतिः सं च महाटवीपतिर्विन्ध्यकेतुः स्वं स्वं नगरं प्रायात्। अथ गच्छत्सु दिनेषु महासेनो नृपतिः सद्गुणशालिनं प्रजाप्रियं पुत्त्रं प्रेक्ष्य स्वे राज्ये अभिषिच्य

च वनं समाश्रयत् । सोऽपि सुन्दरसेनः, राज्यं सम्प्रेक्ष्य स्वबाहुबलेन सर्वान् नृपान् निर्जित्य मन्दारवत्याः प्रेमनिर्भरः सर्वां पृथिवीं तैः पञ्चभिर्मन्त्रिभिः शशास ।

इति कथां समाख्याय व्याघ्रसेननामा मन्त्री भूयः कुमारं मृगाङ्कदत्तं निजगाद स कण्वोमुनिः स्वाश्रमान्तः कथामेतामुक्त्वा दयालु रस्मानाश्वासयन् पुनरवोचत् पुत्रकाः! इत्थं ये धीरचेतसः सुविषमाणि दुस्तराणि कष्टाणि सहन्ते ते अन्यदुर्लभानि अभीप्सितानि समाप्नुवन्ति । तस्मादिमां विश्वासवतां जहीत गच्छत, युष्माकमधिपतिश्च स मृगाङ्कदत्तः सम्प्राप्त-सर्व्वाभीष्टः अल्पीयसैव कालेन शशाङ्कवत्या सह पृथिवीं भोक्ष्यते । इत्थं तेन महर्षिणा सान्त्विता वयं धृतिमालम्ब्य तत्र तां निशां नीत्वा प्रातस्तस्मादाश्रमात् प्रचलिताः क्रमेणाध्वखिन्नाः काननमेतदवाप्ताः । इह चातितृषा क्षुधा च सन्तप्ताः फललाभाय एतं गणपतितरुमारूढा फलत्वमाप्तास्तव तपसा अद्य मोचिताः स्मः । इत्थं नागशापेन त्वद्वियोगातुराणा मस्माकं चतुर्णां वृत्तान्तः तदद्य सोऽस्माकं शापः क्षीणः, साम्प्रतं सत्वरं कार्य्यसिद्धैर अस्माभिः सह प्रयाहि । एतत् निजसचिवात् व्याघ्रसेनात् श्रुत्वा शशाङ्कवत्या लाभे लब्ध-धृतिः तां निशां क्षणमिवानयत् ।

## अथ द्व्यधिकशततमस्तरङ्गः ।

ततः प्रभाते समुत्थाय तस्मात् सरस्तटात् मृगाङ्क-दत्तः सर्व्वैः सचिवैः श्रुतधिना च युक्तः पुरीमुज्जयिनीं प्रति प्रतस्थे। क्रमेण तास्ता अनेकशतकृशानुमालाश्यामला-भोगा घननिशा इव वनभुवः अन्याश्च शुद्धाः पुष्पवतीरपि क्रूरसत्त्वाश्रिताः शान्तैर्मुनिभिरध्युषिता गिरिकन्दराः समतीत्य उज्जयिनीसन्निकर्षमवाप। तत्र च गन्धवतीं नदीं प्राप्य कृतस्नानः सानुगः तीर्त्वा च, महाकालाख्यं श्मशानं प्राप ददर्श च तत् बहुभिरतिविरपतितै रस्थि कपालशकलै राकीर्णं करालं वीरसेवितं बहुभूतगणैरधि-ष्ठितं आक्रीड़मिव कृतान्तस्य डाकिनीबहुलं महाभैरव-भासन्नचिताधूमैः समाच्छन्नम्। क्रमेण च तदुत्तीर्य्य तां युगपुरातनीं कर्म्मसेनेन नृपेण गुप्तां विविधायुधवरैः रक्षिभि-रधिष्ठितप्रतोलीकां प्रवीरकुलजाशेष—राजपुत्त्राभिर-क्षितैर्गिरि-शिखराकारैः प्राकारैः परिवेष्टितां अविज्ञातैर्दु-ष्प्रवेशां हस्त्यश्वरथसङ्कुलां उज्जयिनी मद्राक्षीत्। अथ मृगाङ्कदत्तः तादृशीं सर्व्वतोऽपि अतिदुर्गमां तां विलोक्य हताशः स्वान् सचिवानब्रवीत् हा! कष्टं क्लेशशतैरपि मन्द-भाग्यस्य मे नास्त्यत्र कथमपि प्रवेशः, प्रिया प्राप्तौ तु का गतिः! तदाकर्ण्य तेऽप्यवोचन् देव! एषा पुरी अस्माक-मपि तव बलसाध्या न प्रतिभाति। अत्र कोऽप्युपायो

विचेतव्यः, सचावश्यं सेत्स्यति दैवतो नङ्घयः समादिष्टं कथं विस्मृतवानसि? इति 'तै मन्त्रिभिः प्रबोधितः स कुमारः पुरात् बहिरेव कांश्चित् दिवसानतिष्ठत्।

एकदा तन्मन्त्री विक्रमकेशरी वासभवनात् तस्याः शशाङ्कवत्या आनयनार्थं प्राक्सिद्धं वेतालमस्मरत्। स्मृतमात्रश्च स कृष्णच्छविः प्रांशुः उष्ट्रग्रीवः गजाननः महिषाङ्घ्रिः पेचकाक्षः खरकर्णः वेतालः समेत्य तत्र प्रवेष्टुमशक्तः प्रतिजगाम। शम्भोर्वरात् तादृशा भूतयोनयस्तां पुरीं नाक्रमितुं शक्नुवन्ति हि। अथ नीतिज्ञः स द्विजः श्रुतधिः तममात्यैः तं पुरप्रवेशोन्मुखं कुमारमब्रवीत् देव! जानन्नपि नीतितत्त्वं किं मुह्यसि? स्वस्य परस्यच अन्तरमपश्यतो न विक्रमः श्रेयसे, अस्याश्च नगर्यां एकैकस्मिन् चतुर्ष्वपि द्वारेषु कुञ्जराणां द्वे सहस्रे, वाजिनां पञ्च सहस्राणि रथानां विंशतिः पदातीनाञ्च लक्षं वीराधिष्ठितं सन्नद्धं रक्षार्थमास्ते। तत् कतिपयानां नः पतङ्गानामिव अत्र प्रवेशनं न न्याय्यं केवलं अर्थसिद्धेः प्रतिकूलम्। मन्ये नापि सामान्येन सैन्येन इयं पुरी क्षेमुं शक्या अतिबलेन च यद्विरोधः तद्धि हस्तिपादात युद्धम्। तस्मात् तेन मायावटुना तथा तेन किरातराजेन वाल सब्रह्मचारिणा शक्तिरक्षिताख्येन विक्रमशक्तिना समेत्य स्वबलसैन्य पूरित दिङ्मुखः सहायसम्पन्नश्च एतत् समीहितं संसाधय। सच किरातराजः ते दूतागमन संविदं प्रतीक्षमाणा एव स्थित इत्येतत् कथं युवराजेन विस्मृतम् मायावटुश्च मातङ्गराजादेशात् भुवमागतः सुसज्जित सैनैवसहास्ते तथा हि

तस्य संवित् कृता। ततस्य मातङ्गपतेः निवासभूमिं विन्ध्यदक्षिणपार्श्वस्थितं कम्बुग्रीवाख्यं नगरं गच्छामः। तत्र च राजा शक्तिरक्षितः प्राप्तव्यः। ततस्तैः सर्वैः सम्भूय ते समुद्योगः सिद्धये भवतीति।

एतत् श्रुतधेर्वाक्यमर्थवत् प्राप्तसम्मतं श्रुत्वा सामात्यो मृगाङ्कदत्तः तथेति श्रद्दधे प्रतिपेदे च। ततश्च विश्वस्य प्रदर्शिताशं भगवन्तं भास्करं प्रणम्य विन्ध्यपार्श्वरक्षिणं मतङ्गनाथं शक्तिरक्षितं प्रति प्रचचाल। ते च व्याघ्रसेन-भीमपराक्रम गुणाकर मेघबल विमलबुद्धि विचित्र कथ-स्थूलबाहु विक्रमकेशरि प्रचण्डशक्तयः सचिवाः सह श्रुतधिना दृढ़बुद्धिना च त मनुजग्मुः। क्रमेण च अतिविस्तीर्णा निजा-श्रेष्टां इव तास्ता अटवीः स्वाभिप्रायानिव गहनोन्नवनो-द्देशांश्च अतिक्रामन् सरस्तीरतरुमूलेषु कृतनिशावसथः क्रमेण स्वचित्तमिवोन्नतं विन्ध्यं प्राप्य आरुरोह। ततस्तस्य प्रागदक्षिणं पार्श्वमवरुह्य दूरात् दक्षिणां दण्डैरजिनैश्च चिता भिल्लपल्लीर्विलोकयन् कुत्र तस्य मातङ्गपतेरास्पदं कुतोऽन्वास्याम इति यावत् स राजसुतो ध्यायति तावत् सम्मुखागतं एकं मुनिकुमारं सहसा ददर्श पप्रच्छ च, कृतप्रणतिः। भगवन्! अपि जानासि कुत्र इह मातङ्ग-पतेः स्थानं? तदाकर्ण्य स तापसः प्रत्यवदत् इतः क्रोश-मात्रके पञ्चवटीति प्रख्यातः प्रदेशोऽस्ति, तस्य च नाति-दूरे महर्षेरगस्त्यस्य त्रिदिवात् लीलया पातितोत् सिक्तनहु-षेन्द्रस्य आश्रमः। यत्र पितुराज्ञया सीतालक्ष्मण समेतो-रघुपतिः सुचिरं तं मुनिमसेवत। यस्मिंश्च स कबन्धः रक्षो-

विनाशपिशुनौ चन्द्रार्काविव रामलक्ष्मणौ नाक्रन्दितुं प्रवर्त्तते न च शशाङ्क। यत्र च रामः योजनाबाहोर्भुज मगस्त्यप्रार्थनायातनन्दुषाजगरोपममच्छिनत्। अद्यापि यत्र मेघागमे जलधरध्वनिं श्रुत्वा अम्बररोचिनः रामकोदण्डरवस्य स्मरन्तः जानकीवर्ज्जिता जरन्मृगाः सर्व्वा दिशः शून्या वीक्ष्य उद्बाष्पलोचनाः शष्पकवलानि न गृह्णन्ति। यत्र च वैदेहीविरहदो हेममृगः हतशेषानिव हरिणान् त्रातुं मायया राघवं जहार। तस्याश्रमस्य नातिदूरवर्त्तिनि विन्ध्यसानौ करभग्रीव नामा कुटिलदुर्गमः प्रदेशोऽस्ति, तत्र भूपालानिर्ज्जितोबली दुर्गपिशाचश्चण्डविक्रमः स मातङ्गपतिः प्रतिवसति। यः धनुर्धराणां लक्षस्याधिपतिः येषामेकैकं पञ्चशतं योधा अनुधावन्ति तादृशैर्दस्युभिः स सार्थान् मुष्णाति छिनत्ति च द्विषः। एताश्च महाटवीं भुङ्क्ते न कमपि नृपं गणयति च। एतत् तस्मान्मुनेरुपश्रुत्य तत्राश्रमन्त्यक्त्वा सानुगः स मृगाङ्कदत्तः तेनैव मार्गेण त्वरितं ययौ। प्राप्तश्च तस्य मातङ्गराजस्य निवासं करभग्रीवं भिल्लपल्लीपूर्णं प्राप्य दूरतः समन्ततः शवरौघान् बर्हिबर्हैर्भदन्त व्याघ्रचर्म्म मृगामिषभोजिनः पश्यन् सचिवानब्रवीत् पश्यत तिर्य्यञ्च इवामी अरण्यवृत्तयः जीवन्ति, चित्रं तदपि अमी दुर्गपिशाचं प्रभुं ब्रुवते। इत्येवं वदन् यावत् स करभग्रीवकोट्टमार्गं विचिनुते तावत् शवरभूभृतः तत्र पूर्व्वमागतस्य मायावटोश्चाराः पूर्व्वदृष्टं तं ददृशुः। दृष्ट्वैव ते तस्मै मायावटवे सद्यो न्यवेदयन्। सतु श्रुत्वा ससैन्यस्तं प्रत्युदियाय। समीपमागत्य च दृष्ट्वा प्रधाव्य मुक्तचापः तस्य राजसूनोः

पादयो रपतत्। ततोऽसौ पुलिन्दराट् पृष्टकुशलः सत-कण्ठग्रहं सामात्यं तं वाहनमारोप्य स्वं कटकमनयत्। प्राहिणोच्च तदागमनशंसिनं प्रतीहारं तस्मै पुलिन्द-राजाय। सोऽपि मतङ्गराट् दुर्गपिशाचः नाम्नो यथार्थतां बिभ्रत् शिलाकूटकठोराङ्गः तमालमलिनच्छविः पुलिन्दा-श्रितपादः विन्ध्याचलइव द्वितीयः प्रकृत्यैव त्रिशाखया भ्रुकुट्या भीषणमुखः विन्ध्यवासिन्या त्रिशूलेनेव चिह्नितः तरुणः चपिताशेषवयाश्चपि, असुदर्शनः कृष्णोऽपि, अनन्य-सेवी भूभृत्पादोपजीवी चपि, नवाभ्रइव मायूरपिच्छ-शक्रधनुर्धरः हिरण्याक्ष इव उद्दामवराहक्षतविग्रहः घटोत्-कच इव उद्रिक्तभीमरूपधरः कलिकाल इव अधर्मनिर-तोच्छृङ्खलप्रजः स्वदेशात् तं द्रुतमाजगाम। तस्य च आपू-रितभूभागः अर्जुनभुजासङ्गात् मुक्तो नार्मद इव प्रवाहः शिलाकपालः किमञ्जनाचलात् लुठितः किमुत अकाल-कल्पान्त मेघौघः पतित इति शङ्कां जनयन् असितच्छाया मलिनीकृतदिङ्मुखः वनराशिरदृश्यत। स खलु दुर्गपि-शाचः उपेत्य क्षितौ दूरात् न्यस्तशिराः तं मृगाङ्कदत्तं प्रणनाम। उवाच च अद्य देवी विन्ध्यवासिनी मे प्रसन्ना यत् मादृशां गृहान् अद्य भवान् प्राप्तः अद्य धन्योऽस्मि कृता-र्थोऽस्मि च इति वदन् मातङ्गराजः तस्य राजपुत्त्रस्य उपायनं मुक्ताकस्तूरिकादि प्रददौ। सोऽपि राजपुत्त्रः प्रीत्या तं यथायथमभ्यनन्दत्। ततस्तत्रैव ते सर्व्वे सेनानि-वेशं चक्रुः। सा महाटवी आलानबद्धैर्द्विरदैः मन्दुरास्थितै-र्वाजिभिः क्षतस्कन्धैश्च पादातैः स्थगिता अभवत्।

ततस्तत्र काननोद्याने कृतस्नानमण्डनं विहिताहारं सुखासीनं सचिवान्वितं तं मृगाङ्कदत्तं मायावटौ भ्रूभङ्गति स दुर्गपिशाचः कथान्तरेषु प्रीतिपेशलं प्राब्रवीत् देव! अयं मायावटुः पुलिन्दराट् बहुकाल मिहागतः मया साकं भवन्निदेशं प्रतीक्षते। हे राजपुत्र! तद्युष्माभि रियच्चिरं कुत्र स्थितं, किञ्च कार्य्यं कृतं, तदस्मान् कथनेन आप्यायितान् कर्त्तु मर्हसि। एतच्छ्रुत्वा राजपुत्त्रोऽभाषत मतङ्गपते! तदा मायावटोरस्य गृहात् विमल बुद्धि प्रचण्डशक्ती प्राप्तौ ततो मार्गक्रमेण एष विचित्रकथः विक्रमकेशरीच प्राप्तः अनन्तरं वन सरस्तीरे गणेशपादपं प्राप्य फलार्थं तमधिरुह्य एते तस्य शापात् फलतां प्राप्ताः ततः कथञ्चित् तं देवं गणनाथं तपसा समाराध्य मोचिता मया एते दृढमुष्टि-व्याघ्रसेनमेघबल स्थूलबाहवश्चत्वारः। ततः सर्व्वैरेतैः प्राप्तैः सचिवैः सह उज्जयिनी मगाम्। तस्यां गुप्तद्वारायां अस्माकं प्रवेश एव नास्ति, कुतः शशाङ्कवत्याः समागमः। सैन्यहीनस्य च मे दूतप्रेषणादिकञ्च न सम्भवति। तत् सर्व्वं रस्माभिः सम्मन्त्र्य युष्माकमन्तिक मायातम् इदानीं यूयं हि नः कार्य्यसिद्धौ प्रमाण मिति।

इत्थं मृगाङ्कदत्तेन स्ववृत्तान्ते समुदीरिते तौ मायावटु–दुर्गपिशाचौ तमवोचतां देव! धैर्य्यमवलम्बस्व, कियत् कार्य्यमिदं? अस्माभिः प्रथममेवाञ्जसा प्राणास्त्वदर्थमुपकल्पिताः, तं कर्म्मसेनं नृपं बद्ध्वा अत्रानयामः प्रसह्य च हरामस्तां शशाङ्कवतीं कन्यकाम्। इत्थं ताभ्यामुदीरिते मृगाङ्कदत्तः प्रीतिवर्द्धमानमभाषत किं न सम्भाव्यते

गुणाढ्य, इयमेव वो धीरसत्त्वता प्रतिपक्षं क्षुद्रहाख्य निर्वोढं वक्ति, यूयं विन्ध्याद्रेर्दीर्घं व्याघ्रेभ्यः शौर्य्यं वनकमलिनी-भ्यश्च मित्ररागितामादाय विधाता निर्म्मिता इव। तदत्र विचार्य्य यथाकार्य्यं कुरुध्वमिति वादिनि तस्मिन् मृगाङ्क-दत्ते तद्दिनं तत्र विशश्राम। ततस्ते सर्वे तस्मिन् स्कन्धावारे तत्तत्कर्म्माधिकृतकल्पितेषु निवासेषु यथोचितं तां निशां विशश्रमुः।

अथ प्रातरुत्थाय मृगाङ्कदत्तः किरातराजं सुहृदं शक्ति-रक्षित मानेतुं गुणाकरं सचिवं प्राहिणोत्। तेन च स्वल्पै-रेव दिनैर्गत्वा कथितवृत्तान्तः स किरातपतिः तेन गुणा-करेण सह महासैन्ययुतः समाययौ। द्वे पदातिलक्षाणि, वाजिनां द्वे लक्षे, महावीराधिरूढानां मत्तदन्तिनामयुतं रथानाञ्च अष्टाशीतिसहस्राणि तं किरातराजं ध्वजच्छत्र-संच्छादित नभःस्थलमन्वगुः। मृगाङ्कदत्तः सानुगः समागतं नृपं मुदा प्रत्युद्गम्य अभिपूज्य च तत् कटकं प्रावेशयत्। अत्रान्तरे च मातङ्गराजस्य तस्य मायावटोर्ये मित्र-बान्धवा दूतैरविगतवृत्तान्ताः, ते च सर्व्वे समुपागमन्। इत्थं लक्षशस्समिलद्वाहिनीशतः स बलसागरः मृगाङ्क-दत्त मनः समाह्लादयन् ववृधे। स दुर्गपिशाचः समागतान् तान् नृपतीन् मुक्ताभिर्मृगमदैः वस्त्रैः मांसभारैः फलै रास-वैश्च समभानयत्। शवरेश्वरो मायावटुः सर्वेभ्यस्तेभ्यः यथो-चितं स्नानानुलेपनानि आहारान् पानानि शय्याश्च प्रादात्। मृगाङ्कदत्तः सर्व्वैस्तैर्यथोचितस्थानेषु समुपविष्टेषु राजभिः समं एकत्र बुभुजे। इत्थं विश्रान्तेषु कृतभोजनेषु

सर्व्वेषु हस्तिहस्त्यासनस्थितः यथार्हं राजलोकैः कृतसत्क्रियः सभ्यान् तान् मातङ्गराजादीन् सुहृदो विजने प्राब्रवीत् कथमिदानीं कालहरणं क्रियते, एभिः सर्व्वैः शीघ्रमुज्जयिनीं प्रति गम्यतामिति।

तदनन्तरं श्रुतधिर्द्विजः तं राजपुत्त्रमभाषत देव! अत्र यथानीति विदाम्मतं शृणु कथयामि। विजिगीषुणा प्राक् कार्य्याकार्य्य विभागः बोद्धव्यः, असाध्यं यत् तदुपायेन साध्यं, उपायाश्च सामदान भेददण्डा इति स्मृताः, तेषां पूर्वैः पूर्व्वोवरः, परः परोनिकृष्टः। तस्मात् देव! प्रथमं ते सामप्रयोग एव युज्यते। निर्लोभे तस्मिन् कर्म्मसेने राज्ञि दाने न सिद्धिः नापि भेदः प्रयोज्यः, न हि अस्य क्रुद्धा लुब्धा अवमानिताश्च सन्ति। दण्डश्च दुर्गदेशस्थे अतिमहा-वले तस्मिन् अन्यैः नृपैरजितपूर्व्वे प्रयुक्तः संशयावहः। वलिनामपि युद्धेषु जयश्रीरविश्वास्या, न च कन्यार्थिना तद्‌बान्धवक्षयं कर्त्तुं युज्यते। तत्तस्य राज्ञः सान्त्वैव दूतस्तावत् विसृज्यताम्। तदसिद्धौतु अगत्योपनतो दण्डः प्रयोक्तव्यः।

इति तस्य श्रुतधेर्वचः समाकर्ण्य सर्व्वे तथेति अब्रुवुः प्रशशंसुश्च तस्य सर्व्वमन्त्रकमस्तताम्। ततो मृगाङ्कदत्तः तैः सर्व्वैः सुहृद्भिः सम्मन्त्र्य गुणान्वितं किरातराजानुचरं सुविग्रहं नाम द्विजोत्तमं दूतं लेखञ्च सन्देशहारिणं तस्मै कर्म्मसेनाय नृपतये प्रेषयामास। स दूतः सत्वरं उज्जयिनीं गत्वा प्रतीहारनिवेदितः बहुभाग्यद्विपाकीर्णं कक्षान्तर-मनोरमं राजभवनं प्रविश्य सिंहासनगतं मन्त्रिभिः परि-वृतं कर्म्मसेनं नृपं ददर्श। प्रणम्य च आसनासीनः क्रमेण

दृष्टकुशल स्तेन राज्ञाभिनन्दितश्च तस्मै लेखं समर्पयत्। आदाय च तं लेखं तन्मन्त्री प्रज्ञाकोशो नाम मुद्रामपनीय राजनि शृण्वति अवाचयत्।

स्वस्ति श्रीकरभग्रीवकोट्टकूलाटवीतटात् महाराजाधिराजस्य अयोध्यापुरीपतेः श्रीमतोऽमरदत्तस्य पुत्रः श्रीमान् महीमण्डलालङ्कारः मृगाङ्कदत्तः समाकृतप्रह्वोपनतराजवृन्दः उज्जयिन्यां महाराज कर्मसेनं प्रति सादरं निजवंशवयोऽनुरूपं सन्दिशति कन्या तव कास्ति सा अवश्यमन्यस्मै देया, तत् सा मह्यं प्रदीयतां दैवतैः सा मे सुसदृशी भार्य्येति दिष्टा, एवमावयोः बन्धुभावः स्यात् नश्येच्च पूर्ववैरिता, नोचेदत्र वस्तुनि निजभुजावेव प्रार्थयिष्ये इति।

इति लेखे वाचिते प्रज्ञाकोशेन मन्त्रिणा राजा कर्मसेनः सकोपः सारवान् निजगाद ते सदास्माकं विरुद्धाः अनात्मज्ञेन च तेन एतत्तथैव असमञ्जसं सन्दिष्टं पश्यत पूर्व्वं आत्मनाम अभिलिखितं पश्चादवज्ञया वयमभिलिखिताः, पर्य्यन्ते च दर्पाध्मातेन बाहुवीर्य्यमुदीरितम्। तदत्र स न प्रतिसन्देशयोग्यः का कथा कन्यायाः, गच्छ भद्र! भवत्स्वामी यदिच्छति तत्करोतु इति तेन राज्ञोक्तः स द्विजः स विप्रश्चोदर्पइव तं नृपमभाषत राजन्! त्वं राजपुत्त्रमदृष्ट्वा समन्युरात्मानमवमन्यसे तत् सत्त्वोभव आगते तस्मिन् स्वपरान्तरं वेत्स्यसि इति तेन दूतेनोदिते सा सभा क्षोभमियाय। राजा गच्छ, अवध्योऽसि किं कुर्म्म इति तं दूतं सकोपमवादीत्। अन्येच

राजपुत्रा दशनदष्टोष्ठपुटाः क्रोधेन करैः स्वान् करान् व्यहनन्तः किं नाद्यैव त्वां न निहन्म दूतब्रुवम् । अथ वटुकाचार्य्यः यातु एनं प्रति किं कुप्यते यदयं करिष्यामः तदस्य स्वामी ज्ञास्यति । अपरे तत्रत्याः क्रोधात्धर्म्मैस्तै-र्भ्रूभङ्गं कुर्व्वन्तः निःशब्दाएव तस्थुः ।

इत्थं क्षुब्धायां संसदि स दूतस्ततो निर्गत्य सत्वरं मृगाङ्कदत्तपार्श्वं प्रायात् । अशंसच्च तत् कर्म्मसेनोक्तं सर्व्वं तस्मै राजपुत्राय सानुगाय । सोऽपि सद्यएव सैन्यानां यात्रामादिदेश । ततः प्रभोरादेश प्रलयपवनापात-विधुतो बलाम्भोधिर्नयतुरगमातङ्ग मकरः धावन् तूर्य्यनादै-र्वधिरित भुवनः उज्जयिनीं प्रति उदचलत् ।

## अथ त्र्यधिकशततमस्तरङ्गः ।

ततः स मृगाङ्कदत्तः सुहृद्भिः सह सन्नद्धसैनिकः विन्ध्य-मुल्लङ्घ्य सत्वरमुज्जयिन्याः सीमान्त मासदत् । तद्वि-दित्वा राजा कर्म्मसेनोऽपि सबलवाहनः युद्धाय सन्नद्धो नगर्य्या निरगात् । निकटीभूय च अन्योन्यदर्शिन्योस्तयो-रुभयोः सेनयोर्महान् संग्रामः समवर्त्तत । स सम्प्रहारः नृसिंहनाद वित्रस्तभग्नग्रीवासुराकुलः हिरण्यकशिपोर्नि-वास इवाभवत् । शस्त्रेषु शलभा इव, सन्तता विनिष्क्रान्ताः वनागगन-गामिनः शराः बलेषु समन्ततः पेतुः । खड्गै-राहतेभ्यः इभकुम्भेभ्यः समुत्पतन् मुक्ताफलनिकरः संरम्भत्रुटितो हारइव समरश्रियः शुशुभे । तत् रणक्षेत्रं तीक्ष्णाङ्कुशमर्द्दनं प्रत्यास्त्रनरकुञ्जरं कृतान्तस्य वदनमिव

धिरेजे। बाहुशालिनां भल्ललूनानि शिरांसि दत्तोर्द्ध्वकम्पानि दिवि दिव्याङ्गनामुखानि चुम्बितुमिव उत्पेतुः। कबन्धाश्च सुबहुशो रणाजिरे तस्मिन् ननृतुः। इत्थं पञ्च दिवसान् वहच्छोणितनिम्नगः काकङ्ककूटसङ्कुलः शूरान्तकरो रणः समवर्त्तत। पञ्चमे दिवसे सायं स श्रुतधिर्विप्रः स्वमन्त्रिभिः सुहृद्भिश्च समेतं राजपुत्रं मृगाङ्कदत्तं अभ्येत्य निजगाद देव! युष्मासु समरव्यग्रेषु मया इतो भिक्षुकरूपिणा गत्वा निराकुलद्वारा मुज्जयिनीं प्रविश्य दैवविद्याप्रभावादलक्षितेन यदन्विष्टं तत् कथयामि शृणोतु देवः। यदैव राजा कर्मसेनो युद्धाय निर्गतः, तदैव मातुरनुज्ञया सा शशाङ्कवती गृहात् निर्गत्य तत्पूरीवर्त्ति गौर्य्यायतनमाश्रिता। देव! समरे पितुः श्रेयोऽर्थिनी तां देवीमाराधयितुमागता सा रहसि आत्मानैकां सखीमब्रवीत् सखि! मत्कृते तातस्य अयं संग्रामः समुपस्थितः, आक्रान्तश्चैष मे पिता तस्मै राजसुताय मां समर्पयेत् परं स राजपुत्रः मे अनुरूपो नवेति न जाने। काममहं मृत्युमिच्छेयं न तु विरूपं पतिम्। मन्येऽहं रूपातिशयसम्पन्नो दरिद्रोऽपि पतिर्वरं न तु विरूपः पृथिवीचक्रवर्त्ती अपि। तदसौ कीदृगिति त्वं सैन्यमध्यात् विलोक्य आगच्छ। प्रज्ञानेन च नाम्ना च त्वं चतुरिकासि। इत्थं तयोक्ता सा चतुरिका सखी युक्त्या अस्माकं कटकमेत्य त्वां विलोक्य प्रत्यागम्य च तां राजपुत्रीमुवाच सखि! किमन्यत्, मन्ये वासुकेरपि तादृशी जिह्वा नास्ति, या तस्य राजसुतस्य तत् रूपं गदितुं शक्नोति,

अहं पुनरेतत् ब्रवीमि यथा त्वया समा नान्यास्ति नारी, तथा तत्समोऽपि पुरुषो नान्योऽस्ति भूतले। अथवा अत्यल्पं मयोक्तं धिक्, जगत्त्रये तादृशः पुमान् न सिद्धो नापि गन्धर्वः नचापि विद्याधरः कश्चित्। इत्थं सख्या-वचसा तस्याः शशाङ्कवत्यास्त्वयि मानसं न्यस्तं कामेन च समं पञ्चभिः शरैः कीलितञ्च। ततः प्रभृति सा तव श्रेयस्कामा तपसा त्वद्विरहेण च कृशा भवन्ती स्थिता। तदद्य गुप्तं निशि गत्वा तस्मात् गौर्य्याश्रमात् विजनात् तां राजपुत्रीं आनयत, एते च त्वदर्थे त्यक्तजीविता नृपा अस्य मायावटोर्गृहान् यान्तु, पश्चात् प्रयोजने सञ्जाते पुनरेते समेष्यन्ति, साम्प्रतं युद्धमिदं निवर्त्ततां माभूत् सैन्यसंचयः पुनः। युष्माकं राज्ञस्तस्य च कर्म-सेनस्य देहे कुशलमस्तु। यच्च प्राणपणेन युद्धं एषाहि अगतिकगतिः। एवमुक्तः श्रुतधिना स मृगाङ्कदत्तः निशि अश्वानारुह्य सचिवैः सह सुप्तस्त्रीबालशेषां तामु-ज्जयिनीं मत्तैः स्वल्पैः रक्षिभिरसंवृतद्वारां विवेश। ततः श्रुतधिना ज्ञापितैरभिज्ञानैः सुलक्षितं ख्यातं पुष्पकरण्डा-ख्यमहोद्यानान्तरवस्थितं तत्कालातङ्कतप्राचीमुखेन शशिना करैः समुद्भासितं गौर्य्यायतनं प्रययौ।

तावच्च परिचर्य्यादिना श्रान्तसुप्ते सखीजने सा शशा-ङ्कवती एकाकिनी तत्र वीतनिद्रा व्यचिन्तयत् मदर्थमिमे उभयोः सैन्ययोराजानः राजपुत्राश्च दिने दिने वीरा हन्यन्ते। स च राजसुतः अद्य स्वप्ने देव्या अम्बिकया मे पूर्वभर्त्ता इति समादिष्टः, हृदयञ्च मम सिद्धलक्षेण कामेन

आच्छिद्य नीत्वा तस्मै समर्पितम् । तातस्तु मन्दपुण्यः तस्मै मां पूर्ववैरात् दर्पाच्च नैव दास्यति, अद्य लेखादिदं मया श्रुतं, तदत्र वाणि विधौ मे स्वप्नलब्धोऽपि देवादेशो विफल एव, नास्ति प्रियप्राप्तौ कामपि गतिं पश्यामि । तद् यावत् तस्य राजसुतस्य तातस्य वा रणे किमपि अहितं न शृणोमि तावत् हताशम् आत्मानं किं न त्यजामि इत्यालोच्य गौर्य्याः पुरो गत्वा सुदुःखिता अशोकपादपे स्वोत्तरीयेण पाशं व्यरचयत् ।

तावच्च मृगाङ्कदत्तोऽपि सवयस्यः तदुद्यानं प्रविश्य तस्या गौर्य्याः मन्दिरागतः तरुशाखायामश्वं नियम्य आरात् तिष्ठन् सचिवेन विमलबुद्धिना तां राजपुत्रीं विलोक्य स्वैरं निजगाद देव ! पश्यात्र काप्येषा वराङ्गी पाशेनात्मानं हन्तुमुद्यता तत् का पुनरियं भवेत् ? तदाकर्ण्य तां विलोक्यैव राजसूनुरुवाच अहो ! केयं रतिः किंस्वित् ? वा रूपेण साकारा निर्वृतिः ? अहोस्वित् इन्दोः कान्तिरियं विग्रहवती ? किं वा कापि देवाङ्गना ? नैवेयं मानुषी । कथमस्याः पाशोद्यमः ? तत्तावत् क्षणमिह पादपान्तरिता स्तिष्ठामः, यावत् कथमपि यदि केयमिति व्यक्तिः स्यात् इत्युक्त्वा सवयस्यः स राजसुतः प्रच्छन्नदेहो यावत्तिष्ठति । तावत् सा शशाङ्कवती समुद्विग्ना देवीं व्यजिज्ञपत् देवि ! यदि अस्मिन् जन्मनि स राजपुत्रो मृगाङ्कदत्तः मे पतिर्न निष्पन्नः, तदा जन्मान्तरेऽपि स एव मे भर्त्ता भूयात् हे आपन्नार्त्तिहरे ! प्रसीद इति विज्ञाप्य सा राजपुत्री तां देवीं प्रणम्य च वाष्पपूर्णनयना कण्ठे पाशमयोजयत् ।

क्षणे च तस्मिन् प्रबुध्यैव तद्दर्शनविह्वला स्तत्सख्यः तां चिन्वत्यः सहसा तदन्तिकमुपाययुः। हा हा सखि! किमिदमारब्धं साहसं त्वया, इत्युक्त्वैव तस्याः कण्ठात् पाशममोचयन्। अथ भीतविषण्णा सा बाला यावत्तत्रावतिष्ठते, तावत् गौर्य्या गर्भगृहान्तरात् भारती उदभूत् पुत्रि! मा विषादं कार्षीः, नैव तद्वचो मृषा भवितुमर्हति यत् स्वप्ने तव समादिष्टम्। सोऽयं मृगाङ्कदत्तस्तव पूर्वभर्त्ता तवान्तिके प्राप्त एव, व्रज, अमुना सह अखिलां भुवं भुङ्क्ष्व श्रुत्वैतां वाणीं सा शशाङ्कवती यावत् समाश्वसा इतस्ततो विलोकयति, तावत् मृगाङ्कदत्तस्य मन्त्री विक्रमकेशरी उपागम्य अग्रपाणिना दर्शयन् तां वक्ति स्म देवि! सत्यं भवान्या ते समादिष्टं, अयं हि स राजपुत्रः तव प्रेमावद्धचेताः पति रिहागतः। तदाकर्ण्य सा तिर्य्यक् न्यस्तदृष्टिस्तं कान्तं सहचरमध्यगतं ग्रहैः परिवृतं चन्द्रमसमिवावतीर्णं नभस्तलात्, अन्येषां रूपोपमानं दृशोरमृतस्यन्दनमद्राक्षीत्। ततः सा पतदनङ्गशराचितैरिव कण्टकितैरङ्गैर्यावत् स्तम्भनिश्चला व्यतिष्ठत, तावत् स मृगाङ्कदत्तः समुपेत्य तस्याः ह्रियमत्याजयत् अवदच्च प्रेममधुस्रुता गिरा, सुन्दरि! अहं त्वया गुणैर्बद्धा निजं देशं राज्यं बन्धूंश्च त्याजयित्वा दासीकृत्य इहानीतः, हे तन्वङ्गि! अद्य मया अरण्यवासस्य वसुधाशयनस्य फलाहारस्य तीव्रार्कतापसंसेवनस्य तपःक्लेशस्य च ईप्सितं फलमवाप्तं यदेषा नेत्रपीयूषवृष्टि स्तव तनुर्दृष्टा, हरिणाक्षि! यदि मयि स्नेहानुरोधस्ते स्यात् तदास्मत्-

पुरी सीमन्तिनीनां नयनोत्सवं विधेहि। संग्रामः शाम्यतु, उभयोश्च सैन्ययोः श्रेयो भवतु। कृतार्थं जायताञ्च मम जन्म सह गुरूणामाशिषा।, एवमुक्ता मृगाङ्कदत्तेन सा शशाङ्कवती तदा वसुधाविन्यस्तनयना शनैरवदत् आर्य्यपुत्र! अयं तावत् तव गुणक्रीतः स्वाधीन एव जनः, यदत्र कुशलमवैषि, तद्विधेहि इति तस्या वाक्सुधया निर्वापितः स कृती मृगाङ्कदत्तः तां देवीं स्तुत्वा प्रणम्य च तां राजपुत्रीं तुरङ्गसमारोप्य दशभिरश्वारूढैः पृष्ठानुधाविभिर्वयस्यैः शस्त्रपाणिभिर्वीरैः सार्द्धं तस्मात् गौर्य्यालयात् तस्यामेव रात्रौ निर्जगाम। ते च एकादश दृष्टापि क्रुद्धा-दुरासदा रुद्रा इव नगररक्षिभिः रोद्धुं न शेकिरे। ततश्च तस्या उज्जयिन्या विनिर्गत्य तस्य मयावटोर्गृहं जग्मुः। इत्थं तेषु प्रयातेषु क्रमात् राजसुता हृतेति कर्णपरम्परया श्रुत्वा राजमहिषी कर्मसेनाय मंह्रीभूते तदाख्यातुं कटकं प्रति नगराध्यक्षं प्राहिणोत्। अत्रान्तरे तस्यामेव रात्रौ चाराध्यक्षः कर्मसेनाय राज्ञे तद् व्यजिज्ञपत्। देव! अद्य प्रदोष एव गुप्तं मृगाङ्कदत्तः सामात्यः स्वसैन्यात् निर्गत्य उज्जयिनीं प्रति तां शशाङ्कवतीं गौर्य्यायतनवर्त्तिनीं हर्त्तुं गत इति मया सम्यक् ज्ञातं तदत्र देवः प्रमाणमिति। तदाकर्ण्य स राजा रहसि सेनापतिमाहूय तदवर्णयत्। स च वराश्वमारुह्य पञ्चभिः सैनिकैः सह प्रच्छन्नं द्रुतमुज्जयिनीं आजगाम। पथि आगच्छंश्च स मिलितात् नगराध्यक्षात् राजसुतां द्वैवीरैर्हृतामशृणोत्। ततश्च स नगराध्यक्षः समागत्य राजानं कर्मसेनं तद्वृत्तान्तमकथ-

यत्। स च राजा तद्विदित्वा तदशक्यं विचिन्त्य च अवस्कन्दनिह्नुतस्तूष्णीं तां निशामनयत्।

मृगाङ्कदत्तसैनिकेषु च मायावटुप्रमुखा नृपाः श्रुतधे- र्गिरा प्रबुद्धा एव तां रात्रिं निन्युः। प्रातश्चान्विष्टवृत्तान्तः कर्मसेनो नृपः मृगाङ्कदत्तकटकं प्रति राजदूतं विसृष्टवान्। स च दूतः समागत्य कटकस्थितान् मायावटुप्रभृतीन् नृपान् व्यजिज्ञपत् अहं राज्ञोदूतः, राजा कर्मसेनः प्राह, मृगाङ्कदत्तः छलेन मम कन्यां शशाङ्कवतीं हृतवान्, तदस्तु कोऽपरोऽस्यास्तादृशः पतिरिति। तदाकर्ण्य ते श्रुत- धिसहिता राजानस्तथा अदधुरूचुश्च तं दूतं प्रभुर्वः साम्प्रतं स्वपुरीं प्रयातु, यावद्वयं तं राजसुतं आनयामः,। तदा कर्ण्य दूतेन गत्वा तद्वृत्तान्ते निवेदिते स कर्मसेनः सबल स्तथेति उज्जयिनीमगात्। तदवलोक्य ते मायावटुपुरःसराः राजानः श्रुतधिं पुरस्कृत्य मृगाङ्कदत्तं प्रति प्रतस्थिरे। स च मृगाङ्कदत्तः सामात्यः तां शशाङ्कवतीं गृहीत्वा माया- वटोस्तत्काञ्चनपुरं प्राप। तत्र गत्वा तदन्तःपूरिकाभि. पौरैश्च यथार्हं कृतसत्क्रियः वयस्यैः सह तया शशङ्कवत्या च सिद्धकार्य्यः विशश्राम।

अन्येद्युश्च श्रुतधिसहितास्ते नृपाः किरातपतिं शव- राधिपतिं मायावटुं दुर्गपिशाचप्रभृतयः समागत्य शशा- ङ्कवतीसमेतं तं मृगाङ्कदत्तं दृष्ट्वा अभ्यनन्दन् अकुर्वंश्च महोत्सवम्। ततस्ते कृतयथार्हमानाय तस्मै तत्सर्वं कर्मसेनीयसन्देशं स्वगृहे च तस्य प्रवेशमवर्णयत्। अथ मृगाङ्कदत्तः चलन्नगरसन्निभं तत् कटकं निवेश्य सर्वैः सह

मन्त्राय समुपाविशत्। विवाहाय मया उज्जयिन्यां पुन-र्गन्तव्यं न वा इति तान् नृपतीन् सचिवांश्च पप्रच्छ। ते च नृपाः सचिवाश्च गृहेषु कृतवैरस्य ते गमने कुतः कुशलं? तत्र किमपि कार्य्यं नास्त्येव, तदात्मजा शशाङ्क-वती प्राप्तैव। इत्येकमत्येन सर्वे ते प्राब्रुवन्। तदा मृगाङ्कदत्तस्तं श्रुतधिं द्विजमप्राक्षीत् ब्रह्मन्! उदासीन इव किं तूष्णीं स्थितोऽसि? किमेभिर्यदुक्तं तत्तवापि अभि-मतं? न वा इति। तदाकर्ण्य श्रुतधिरब्रवीत् देव! यदि शृणोषि, तद्वदामि शृणोतु देवः। कर्मसेनस्य गृहे गन्तव्य-मिति मे मतिः, अशक्तेन तेन तवैतत् सन्दिष्टं हि नो चेत् कथं सुतापहारेऽपि स बली युद्धं त्यक्त्वा गृहं व्रजेत् सबलस्य च गृहं प्राप्तस्य ते स किं कुर्य्यात्। गतस्य च तव तेन समं प्रीतिरेव भवेत् स च दुहितुः स्नेहेन ते अग्रणीः सहाय एव भविता। अविधिना विवाहं स नेच्छति इत्यतः सन्दिष्टं तेन इति मया मन्यते, तदत्र त्वया गन्तुं युक्तमिति श्रुतधिनाभिहिते सर्वे ते तद्वचः साधु साधु इति ब्रुवन्तः श्रद्दधुः। ततो मृगाङ्कदत्तः प्राहस्म सर्वमस्तु एतत् परं तातमम्बां विना मम विवाहोऽयं न रोचते, तत्तयो-स्तातयोराह्वानाय कोऽपि गच्छतु, साम्प्रतं तस्य राज्ञः कर्मसेनस्याभिप्रायं विदित्वा यथायथं करिष्याम इति वदन् स मृगाङ्कदत्तः सम्मन्त्र्य पित्रोः पार्श्वं स्वमन्त्रिणं भीमपराक्रमं प्राहिणोत्। तावच्च तस्या मयोध्यायां पुरि तत्पिता नृपतिरमरदत्तः कालेन लोकतः मृगाङ्कदत्तस्य देशात् निर्गमनं कथं कृतमिति तत्त्वतो विदित्वा विनीत-

मतिना मन्त्रिणा राजपुत्रस्य तादृक् पैशुन माचरितमिति समुद्घोष्य तं कुमन्त्रिणं सान्वयं निहत्य च पुत्रनिर्वासनोद्‌भवदुःखेन विषमामवस्थामगात्। निर्गत्य च पुराद् वहिः स राजा देव्या सह नन्दिग्रामगतस्तत्र हरेरायतने तपश्चरन् तस्थौ। इत्थं स्थिते तस्मिन् स भीमपराक्रमश्चाराविदितागमः वाताश्ववेगात् द्रुतमयोध्यां प्राप। स तां पुरीं गतराजसुतामुद्विग्नां रामप्रवासवैधुर्य्यकष्टं पुनर्विरागता मपश्यत्। तत्र राजपुत्रस्य वार्त्तां पृच्छद्भिः पौरैर्वृतः तन्मुखात् राजवृत्तान्त श्रुत्वा नन्दिग्राममगमत्। अद्राक्षीच्च तत्र अभीष्टसुतो दन्तश्रवणसमुत्सुकं महिषीयुतं तपःक्षाम तनु तं नृपम्। उपेत्य च पादपतितः कृतकण्ठग्रहं पृष्टोदन्तं साश्रु तं स भीमपराक्रमः प्रावोचत् देव! मृगाङ्कदत्तेन ते सूनुना स्ववीर्य्यतः कर्मसेनस्य नृपस्य सुता शशाङ्कवती प्राप्ता, तद्विवाहश्च तस्य पितृभक्तस्य विना तातेन देव्या चाम्बया सर्वथा शोभनं न प्रतिभासते। ततस्तेनाहं विसृष्टो विज्ञापनाय धरणिन्यस्तशिरसा तव सूनुना भवत् पादमूलं, युष्मांश्च प्रतीक्षमाणः स काञ्चनपुरे शवराधिपते मायावटोर्नृपस्य गृहे स्थितः। इदानीं वृत्तान्तञ्च शृणु इत्युक्त्वा देशनिर्गमादारभ्य 'कर्मसेनीययुद्धपर्य्यन्तं सर्वं यथावदवर्णयत्। तदाकर्ण्य पुत्रवृत्तान्तं स राजा जातविस्मयः तदैव हर्षात् यात्रा मादिशत्। ततः स राजा पुत्रसमुत्सुकः देव्या सह गजारूढ़ः राजभिरन्यैः सचिवैश्च सार्द्धं चतुरङ्गवलपरिवृतः प्रायात्। प्रापच्च अल्पैरेव दिवसैः शवराधिपदेशस्थं तस्य तत् कटकम्।

तद्विदित्वा च चिरोत्सुकः स राजसुतो मृगाङ्कदत्तः अग्रेसरैः राजभिः सचिवैश्च सह स्वावासात् निरगात्। दृष्ट्वैव दूरात् स तुरङ्गात् गजारूढ़स्य पितुः पादयोरवतीर्य्य शरीरेण भुजान्तरं मनोरथेन हृदयं वाष्पैश्च दृशौ अपूरयत्। मातापि सुचिरात् पुत्रं पश्यन्ती मुहुराश्लिष्य भूयो वियोगभीतेव न मोक्तुमशकत्। ते चापि मृगाङ्कदत्तसुहृदो नृपास्तदाख्यातास्तदा सदेवीकं तं प्रभुममरदत्तं प्राणमन्। ततः स राजा सा देवी तान् पुत्रसुहृदो नृपतीन् पुत्रनिर्विशेषेण स्नेहेन कृताशीर्वादौ भृशं ननन्दतुः। अथ मायावटौः राजधानीं प्रविश्य तत्र तां पादावनतां स्नुषां शशाङ्कवतीं विलोक्य च गृहीतप्राभृतः तया देव्या स्नुषया च सह निर्गत्य स्वे कटके वसतिं व्यधात्। तत्र च पुत्रेण सर्वैः राजभिश्च सह भुक्त्वा गीतवादित्रनृत्यैः सुखैः सर्वं दिनमनयत्। अमन्यत्र तेन कृतिना भाविना चक्रवर्त्तिना पुत्रेण मृगाङ्कदत्तेन आत्मानं कृतिनम्।

एतस्मिन्नन्तरे सुमेधसा कर्म्मसेनेन राज्ञा सम्मन्त्र्य मृगाङ्कदत्तस्यान्तिकं दूतो व्यसृज्यत। सन्दिष्टञ्च तन्मुखेन यथा भवान् उज्जयिनीं तावत् इह नैवागमिष्यति, तदत्रैव अहं सुषेणं नाम सुतं प्रेषयामि, स एव तुभ्यं निजां भगिनीं शशाङ्कवतीं विधिवत् प्रदास्यति, हे सौम्य! तस्मादविधिना सा नैवं त्वया विवाह्या, यदि अस्मत् स्नेहोऽनुरुध्यते इति इत्यं दूतेन सन्देशे आवेदिते लेखे च वाचिते स राजा अमरदत्त एव तस्य राज्ञः कर्म्मसेनस्य दूतात्र प्रत्यभाषत भद्र! युष्मत्प्रभवे यथा रोचते तत्कर्त्तुमनु-

रुध्यस्व, यदा तत्कन्या शशाङ्कवती मम स्नुषा जाता तदा तं प्रति अस्माकं बन्धुस्नेहः सुतरां संवृत्त इति प्रतिसन्देशमुक्त्वा पुत्रं नृपतींश्च मायावटुप्रभृतीन् अब्रवीत् साम्प्रतं वयमयोध्यां यामः, तत्रैव विवाहः शोभते, तत्रैव सुषेणस्य यथावत् सत्कारो भविष्यति। राजा मायावटुरिह सुषेणं प्रतीक्षतां ततस्तेनागतेन सह पश्चादयोध्यां व्रजिष्यति, वयं पुनर्विवाहसम्भारहेतोरग्रतः गच्छामः। इति नृपवचः सर्वे ते अन्वमोदन्त।

अथान्येद्युः स महीपतिः देव्या समं सैन्यैश्च समन्वितः मृगाङ्कदत्तश्च तैस्तैः राजभिः सचिवैश्च युतः शशाङ्कवत्या सह मायावटुं सुषेणागमनार्थं तत्र रक्षित्वा अयोध्याभिमुखं प्रचचाल। इत्थं क्रमेण गच्छन्तौ तौ पितापुत्रौ पथि शक्तिरक्षितस्य किरातराजस्य गृहमवापतुः। तत्र तेन सस्त्रीकेण महारत्नहैमवसनादिभिः कृतोदारपूजौ सपरिग्रहौ दिनमेकं विश्रम्य कृताहारौ सानुगौ बलमग्रतः प्रस्थाप्य शनैः स्वनगरीमयोध्यामगच्छताम्। तत्रागत्य स राजा पुत्रेण सराजकेन ससचिवेन ससैन्येन सह हर्म्यवातायनारूढपौराङ्गनामुखैः कान्तिपल्लवितैः फुल्लविलोलकमलामिव सम्पतद्भिः राजहंसैर्वृतां पताकाभिस्तरङ्गितां प्रवाहसरसीमिव पुरीं प्रविवेश। प्रविशंश्च द्विजैः क्रियमाणाशीः वन्दिभिः स्तूयमानश्चारणैश्च गीयमानः समागतैः पौरैश्चाभिनन्द्यमानः राजभवनमगात्। तत्र कर्मसेनस्य तनयां शशाङ्कवतीं विलोक्य विस्मितो जनः कथयति स्म यदि महोदधिर्हिमवांश्च इमां पश्येत् तदा लक्ष्मी गौरी-

पितृत्वेन न कदाचित् स्पृहते। क्रमेण राजभवनं महोत्-सवपूर्णतया सर्वेषामानन्दकाननमभूत्। इत्थं तं दिवसं महोत्सवेन नीत्वा राजा परेद्युवि गणकैः सूनोः शुभो-द्वाहलग्ने निर्णीते विवाहसम्भारसमाहर्तुं भृत्यानादिदेश। क्रमेण सा पुरी नानादिग्भ्यः समाहृतैः रत्नसञ्चयैस्तथा अपूरि, यथा सा कुवेरनगरीमधश्चकार।

अथ कश्चित् भृत्यः मायावटुसकाशादेत्य प्रहृष्टः द्वा-स्थेन प्रवेशितः तं नृपतिं सभासीनं व्यजिज्ञपत् देव! आ-गतोऽसौ राजसुतः सुषेणः, नृपतिश्च नः मायावटुरयो-ध्यायाः सीमान्ते। श्रुत्वैव राजा मृगाङ्कदत्तश्च सुहृत्-प्रीत्या ससैन्यसामन्तः तौ प्रत्युद्ययौ। दृष्ट्वैव दूरात् वाहा-दवतीर्य्य तौ राजसुतौ मिथः कृतकण्ठग्रहौ पृष्टकुशलौ मिलतः स्म विविशतुश्च प्रेम्णा एकरथारूढौ पौरयोषितां नयनोत्सव वितरन्तौ तां नगरीम्। ततश्च सुषेणः राजानं दृष्ट्वा अभिवाद्य च तेन सुभृशं सम्मानितः शशाङ्कवत्याः स्वसुर्वासगृह मयासीत्  तत्र तया समुत्थाय वाध्याय-मानया कृताश्लेषः समुपविश्य सव्रीड़ां तामवादीत् तात-स्त्वामाह पुत्रि! त्वया नायुक्तं किञ्चिदपि कृतम्, अद्य मया स्वप्ने विज्ञातं यत् भगवत्या गौर्य्या तव मृगाङ्कदत्तः पतिः समादिष्टः, स्त्रीणाञ्च भर्त्तृमार्गानुसरणं परमं व्रत-मिति। एवमुक्ता सा बाला अधोमुखी स्वं हृदयं सिद्धं ते समीहितमिति पश्यन्तीव त्रपां जहौ। अथ सुषेणस्तां राजाग्रतो नीत्वा तस्मै शशाङ्कवत्यै तस्याः द्विसहस्रहेम-भारी रत्नाभरणभारमेकं पञ्च सुभृतान् करभान् हिरण्मयं

भाण्डस्यैकं स्वधनं प्रादात्। उवाच च यदेतत् दत्तमस्यै, एत-दस्याः स्वधनं, पितृप्रेषितानि तु विवाहवेलायाम् अस्यै दास्यामीति। ततः सर्वे ते मायावटुप्रभृतयो राजानः ससैनिकास्तत्र मृगाङ्कदत्तेन राजपुत्रेण सहिताः मुनि-र्वृताः सोत्सवं दिनमनयन्।

अथ प्राप्ते लग्नदिवसे राजनि मुदिते स्वयं विवाह-सम्भारव्यग्रे मृगाङ्कदत्तः स्नानादिकं माङ्गलिकमाचारम-करोत्। ताञ्च शशाङ्कवतीं कान्त्यैव कृतमण्डनां नार्य्यः केवलमाचार इति प्रसाधयामासुः। ततस्तौ वधूवरौ कौतुकागारात् हुताशनवतीं वेदीमध्यासाताम्। तत्र स राजसुतः सुषेणप्रदत्तं तस्याः शशाङ्कवत्याः पाणिं धृताब्ज-शोभारुचिरं लक्ष्म्या इव विष्णुः समग्रहीत्। अशोभत च किमपि अग्निप्रदक्षिणीकरणे तापात् धूमाच्च कलुषितं अकोपेऽपि तत् शशाङ्कवतीमुखम्। वह्नौ विकीर्णाश्च लाजाञ्जयः प्रयत्नसाफल्यहृष्टस्य मनभुवो हासा इव व्यरा-जन्त। तस्मिंश्च लाजविसर्गे प्रथमे राजसुतः सुषेणः अश्वानां पञ्च सहस्राणि, वारणानां शतं द्वे स्वर्णभारशते विंशतिश्च सद्रत्नवसनमुक्ताभरण भारैः समन्विताः करे-णुकाः, दासीनां विंशतिश्च तस्मै भगिन्यै यौतकानि प्रादात्। ततोऽन्येषु लाजमोक्षेषु क्रमात् द्विगुणं द्विगुणं पूर्वोक्तधनसञ्चयं स सोदरः प्रददौ। अथ उल्लसत्सु उत्सव-तूर्य्यनिस्वनेषु निष्पन्नविवाहमङ्गलः स राजसुतः मृगा-ङ्कदत्तः तया नवोढ़या शशाङ्कवत्या समं निजं मन्दिरं विवेश। ततोऽस्य पिता नृपतिः यथार्हैर्दत्तैर्हस्त्यश्व रत्ना-

भरणावपानैः आराजचक्रं शुकशारिकान्तं सर्वाः स्वाः प्रकृतीः समन्वरञ्जयत् तदास्य राज्ञस्तथा दानप्रकर्षः समजनि, यथा सर्वोजनस्तं महीकल्पतरु ममन्यत । ततः स राजा मृगाङ्कदत्तश्च राजभिः सुषेणेन च सार्कं पानगोष्ठ्यां पीत्वा भुक्त्वा च दिवसमनैषीत् । अथ सेवितनृत्यचर्चरीकेषु सुभुक्तपीतेषु जनेषु गृहं गतेषु परिपीतधरारसो गताध्वा रविरस्ताचलकन्दरं विवेश । तञ्च नवरागोज्ज्वलया सन्ध्यया समेतं क्वापि प्रयातमवलोक्य विगलत्खगमेखलाकुला ईर्ष्यया कुपितेव वासरश्रीरनुदधाव । क्रमेण च विलोलतारकेण मुखेन प्रबलीभूतमनोभवा विलसत्तिमिरा सितांशुका रजन्यभिसारिका दृदृशे । ततश्च नवसिन्दूरसमुज्ज्वलः उदयाचलवारणाङ्कुशः कुप्यदायताक्षीकुटिलापाङ्गसरोरुहः शशाङ्कः समुदियाय । रतिवल्लीनवपल्लवेन तेन शशिना कृतकेलिकर्णपूरं हसदाननं तमसोऽपगमे धृतप्रसादा ऐन्द्री हरित् बभार । तावच्च सोऽपि मृगाङ्कदत्तः कृतसान्ध्यविधिः तया शशाङ्कवत्यां सह महार्हशय्यं रजनीवासगृहं तस्याः कान्तायाः प्रविलुप्ततमसा मुखचन्द्रमसा अवभासितचित्रभित्तिना अन्तः पुनरुक्तीकृतमणिप्रदीपं प्रविवेश । तत्र च शयनीयगतः स राजसुतः परिवृत्य स्थितायाः तस्याः प्रियायाः परिरम्भणेन चुम्बनेन अधरखण्डनेन च लज्जां जहार । अनुबभूव च चिरकाङ्क्षितं तत्सङ्गमरसम् । अथ तयोः परिभोगलोलयेव क्षपिता त्रियामा अक्षीयत । गता निशा, देव ! सम्प्रति मुच्यतां विलासशय्या, अमीहि सुरतक्लमच्छिद्-

चूर्णालककम्पदायिनो निशान्तवायव: वान्ति। सहसा चन्द्रमनुयान्त्या निशाया: हारच्युतानि मौक्तिकानीव दूर्वावनाग्रेषु पिण्डितानि शिशिरजलानि स्फुरन्ति। कुमार! इन्दो:प्रभां लब्ध्वा विकसितेषु कैरवाणां कोशेषु ये निपीतमधव: सुचिरं सुखिता: स्थिता:, साम्प्रतं तेषु सङ्कोचमुपागतेषु विगलच्छोभेषु कैरवेषु ते भृङ्गा: मलिना: अन्यतो यान्ति कस्य स्थिरा हि समृद्धि:? इत्येवं मृदुमधुरैर्वन्दिवचोभि: तमसि शशाङ्कवती विमुक्तकण्ठ: अपगतसुरतास्तखेदनिद्र: स मृगाङ्कदत्त: सपदि शयनं विजहौ। उत्थाय च स प्रात:कृत्यं समाप्य पित्रा नियोजित-कृत्यमशेषं पर्य्यवेक्ष्य पुनस्तथैव वनितासख: उत्सवेन तानि बहूनि दिनानि निनाय।

अथ राजामरदत्त: तस्य सुषेणस्य कृताभिषेकस्य शिरसि पट्टं बबन्ध। ददौ च कृतादरं तदुचितमेकं विषयं हस्त्यश्वहिरण्यभारवस्त्राणि शतसंख्याश्च वराङ्गना:। तत: स नृपति: शबरराजं मायावटुं किरातशक्तिरक्षितं सबान्धवं सदारं मातङ्गचमूपतिं दुर्गपिशाचं पुत्रस्य मृगाङ्कदत्तस्य सचिवं श्रुतधिञ्च सम्मान्य एकैकैर्विषयैर्गोभिर्वाजिभिर्हेमवस्त्र-सम्भारैश्च प्रदत्तै: समपूजयत्। तत: तान् किरातराजादीन् सुषेणयुतान् स्वदेशेषु विसृज्य सुतशौर्य्यनिर्जित राज्यं सुखेन शशास। मृगाङ्कदत्तश्च वैरिणोविजित्य तया शशाङ्कवत्या मनोरमप्रियया सह तैश्च निजै: सचिवैर्भीमपराक्रमादिभि: श्रुतधिना च समेत: सुखेनावतस्थे।

अथ गतेषु कालेषु तस्य राज्ञः अमरदत्तस्याङ्गभूता जरा भुक्ताः श्रियः, परिणतं वयः, तदेव न गार्हस्थ्यकाल इति वक्तुमिव श्रवणमूलमुपाजगाम। ततः सम्भोगेषु विरक्तमानसो महीपतिः स्वान् मन्त्रिणः प्राब्रवीत् मन्त्रिणः! निशम्यतां, सम्प्रति यन्मम मनसि विचिन्तितमस्ति तद्वो वर्णयामि। गतमस्माकं वयः, साम्प्रतं कृतान्तदूतेन पलितेन कचग्रहः कृतः, जरागमे हि मादृशां जीर्णरसं कुभोगतृष्णाव्यसनं विडम्बनमेव। विवृद्धिभाजा वयसा समं यत् लोभकामग्रहो विवर्द्धते तत् निःसंशयं सत्पुरुषैर्विगर्हितं कापुरुषव्रतं वदन्ति। तस्मै सुतो अवन्तिनरेन्द्रनिर्जयात् महीतले लब्धयशा अनुरक्तप्रकृतिर्गुणाधिकः सुसहायवान् अयं मृगाङ्कदत्तः। तदस्मै निजभूर्जितं राज्यं समर्प्य तीर्थेषु तपश्चरितुं यतिष्ये, इति क्षितीशस्य सुनिश्चितं वचो निशम्य धीरास्तस्य मन्त्रिणः पौराश्च सर्वे तथेति प्रतिपेदिरे। ततः स राजा गणकैर्निरूपिते शुभे समये स्वहितैर्द्विजाग्र्यैः तस्य पुत्रस्य मृगाङ्कदत्तस्य राज्याभिषेकोत्सवं व्यधत्त। तदा नृपस्य भवनं इतस्ततोव्यग्रनिदेशधावज्जनाकुलं नृत्यद्वरचारणाङ्गणं मुदा जुघूर्णेव। सभार्य्यस्य मृगाङ्कदत्तस्य मूर्द्ध्नि भूरि तीर्थोदकं पपात, पित्रोस्तु सानन्दयोः तस्य च नेत्रयुगात् जलप्रवाहा निपेतुः। ततस्तेन सिंहपराक्रमेण नवेन राज्ञा अधिष्ठिते सिंहासने पितामरदत्तः सप्तदिनानि सज्जीकृतराजमार्गं यथार्हसम्मानित राजलोकं महोत्सवं ततान। ततोऽष्टमे दिने सदारः स नृपः पुत्रं मृगाङ्क-

दत्त पौरश्च सवाष्पं निवर्त्य नगर्य्या निर्गत्य मन्त्रिभिरनुगामिभिः सह वाराणसीं जगाम। तस्यां स राजा महिष्या सह गङ्गाम्बुपरिप्लुताङ्गः त्रिसन्ध्यं त्रिपुरान्तकस्य सपर्य्यां विदधत् फलमूलवृत्तिस्तपस्यन् तस्थौ। मृगाङ्कदत्तश्च भास्वानिवाम्बरतलं विपुलं निर्मलं राज्यमवाप्य क्रमेण प्रतापवान् करसन्निपातैः चितिभृतः समाक्रम्य प्रतपितुं प्रावर्त्तत। मायावटुप्रभृतिभिः श्वशुरेण कर्मसेनेन नृपेण श्रुतधिना सचिवैश्च सहायैः सद्वीपां चतुर्द्दिगन्तां महीं विजित्य एकातपत्रामकरोत्। तस्मिन् राजनि वसुन्धरा निग्रह्यमानदुर्भिक्षदस्युपरचक्रभयादिदुःखा नित्यप्रहृष्टसुखिता नव रामराज्यसुखमवाप। इत्थं नृपतिर्मृगाङ्कदत्तः तैः सचिवैः सह अयोध्यामध्यास्य नानादिगन्तागतनृपैरर्च्चितचरणकमलः तया शशाङ्कवत्या समं अकण्टकसुखान् भोगान् चिरं बुभुजे।

इति मलयवनान्ते कथामाख्याय स मुनिः पिशङ्गजटः तं विरहिणं नरवाहनदत्तं पुनर्जगाद राजपुत्र! इत्थं सोढ़क्लेशो मृगाङ्कदत्तः यथा शशाङ्कवतीं पुरा प्राप, तथा त्वमपि तां मदनमञ्चुकां प्राप्स्यसि। इति तस्मात् मुनेर्वचनमाकर्ण्य नरवाहनदत्तः मदनमञ्चुकाप्राप्तौ धृतिमधात्। अथ तद्गतचित्तः तं मुनिवरमामन्त्र्य पूर्वं हारितां तां ललितलोचनां तत्र मलयगिरौ चिन्वन् व्यचरत्।

## अथ त्रयोदशो लम्बकः।

### अथ चतुरधिकशततमस्तरङ्गः।

ततोऽसौ वत्सराजसुतो नरवाहनदत्तः मदनमञ्चुकां विना विरहसन्तप्तः तेषु तेषु मलयाचलपादेषु तदुपान्त-वनेषु च मधुमनोहरेषु भ्रमन् क्वचिदपि धृतिं न लेभे। तत्र च चूतमञ्जरी मृदुरपि आपतद्भिः शिलीमुखैः स्मरचापलतेव अस्य हृदयं विभेद। कोकिलकूजितं मधुरमपि कटु सारनिःसारणावाक्यमिव सुदुःसहमस्य हृदयं दुनोति स्म। शीतोऽपि मलयानिलः पुष्परेणुपिशङ्गः मदनाग्नि-रिव आपतन् अङ्गेषु तं ददाह। ततोऽलिकुलझङ्कार-मुखरैस्तैः काननैः निष्कास्यमान इव स राजसुतः शनकैस्तं प्रदेशं विजहौ। गच्छंश्च कथञ्चित् देवतासख एव, गङ्गा-गामिपथाभ्यर्णवनान्तेषु सरोवरमेकमवाप ददर्श च तत्र तरुमूलोपविष्टौ शुभाकृती द्वौ ब्राह्मणपुत्रौ स्वैरमाल-पन्तौ। तौ च तं नरवाहनदत्तं दृष्ट्वा समुत्थाय मन्मथं मन्यमानौ प्रणम्य अवोचतां भगवन् कुसुमायुध! नमस्तुभ्यं ब्रूहि देव! कथमेकाकी त्यक्तकौसुमकार्मुकः इतो भ्रमसि? सा सहचरी तव रतिः क्व? तदाकर्ण्य स वत्सेश्वरसुत-स्ताववोचत् नाहं कामः मनुष्योऽहं, सत्यन्तु मे रतिर्नष्टा इत्युक्त्वा स्वं वृत्तान्तमाख्याय स राजपुत्रः तौ विप्रौ पृष्ट-वान् कौ युवां युवयोश्च कीदृशी कथात्र वर्त्तते? ततस्तयो-रेकोविप्रयुवा विनतस्तमवादीत् भवादृशां राजसुता-

नामग्रे कथं रहस्यमुच्यते तथापि ते आज्ञानुरोधात् कथयामि निशम्यताम्।

अस्ति कलिङ्गविषये शोभावती नाम पुरी। सा अद्यापि कलिना न प्रविष्टा, नापि पापकर्मभिः स्पृष्टा, परराष्ट्रेण च न दृष्टा। तस्यां यशस्करो नाम विद्वान् आढ्यः महाक्रतुः ब्राह्मणः प्रतिवसति स्म। तस्य मेखला नाम भार्य्यासीत्। तयोरेक एवाहं मध्यमे वयसि सुतः समभवम्। क्रमेण चाहं ताभ्यां वर्द्धितश्चोपनीतश्चास्मि। ततः पठति अध्ययनं बाले मयि तत्र अतिदुरन्तं अवृष्टिकृतं दुर्भिक्षमुदपद्यत। तेन तातोऽम्बया साकं मामादाय सधनपरिच्छदः विलासां नाम नगरीं गतः। तत्र लक्ष्मीसरस्वत्योर्मुक्तवैरयोर्वसतौ स मम पिता केनचित् मित्रेण वणिजा दत्तवासः स्थितिमकरोत्। अहञ्च गुरुवेश्मसु विद्याधिगमं कुर्वन् सवयसां सब्रह्मचारिणां मध्ये अवसम्। तेषु चैकः गुणी महासत्त्वश्रिमतः क्षत्रियस्य कुमारो विजयसेनो नाम मम मित्रमभूत्। एकदा तस्य मे मित्रस्य स्वसा कुमारी मदिरावती नाम अस्मदुपाध्यायगृहं तेन मित्रेण सहागमत्। मन्ये तस्या विधात्रा तस्यां वदनलावण्यशेषेण हिमदीधितेर्जननेत्रामृतं विम्बं विनिर्मितम्। सम्भावयामि च तद्वपुः जगत्सम्मोहनं षष्ठमस्त्रं विलोक्य पञ्चसु अन्येषु शरेषु स्मरः मन्दादरो वर्त्तते इति। तां तस्मात् सुहृदः श्रुतनामान्वयां दृष्ट्वा अहं सपदि स्मराक्रमणपरवशमानसः समभूवम्। सापि मां स्निग्धमुग्धेन चक्षुषा तिर्य्यक् पश्यन्ती पुलकेनाङ्कुरितं प्रेम

मुखागा क्रीडाव्यपदेशात् चिरं स्थित्वा चलितापाङ्गा प्रीति-द्रवौ दृशौ मयि क्षिपन्ती कथञ्चित् स्वगृहमगात्। अहञ्च तद्विरहार्त्तो गृहं गत्वा निपत्य च शयनतले मत्स्य इव केवल-मुद्वर्त्तन विवर्त्तने अकार्षम्। प्रजापतेर्लावण्यामृतसर्वस्व-निधानं तस्यास्तदाननं भूयोऽपि पश्येयं, धन्यः सः सखीजनः, यः सुखेन निर्यन्त्रणं स्मरायतनभूतं तन्मुखं पश्यति तया चाल-पति। इत्यादि चिन्तयन् कृच्छ्रात् अहोरात्रं व्यतीत्य द्वितीयेऽहनि तदुपाध्यायसदनं गतोऽस्मि। तत्र स मे सुहृद् विजयसेनः सप्रहर्षः सादरं मामब्रवीत् सखे! मम माता स्वसुर्मे मदिरावत्या मुखात् मन्मित्रं त्वामोदृशं श्रुत्वा मत्स्नेहात् द्रष्टुमिच्छति। तत् मया साकं अस्मद्गृहमेहि यदि ते मयि स्नेहोऽस्ति, त्वत्पादपद्मरजसा तस्मै गृहं विभूषितमस्तु। एतत् तद्वचनं मरुभूमौ अध्वगस्य मह-दतर्कितं वर्षमिव सद्यः मम निर्वापणमभूत्। अहञ्च तथेति तेन सह तद्गृहं गत्वा तन्मातरं दृष्ट्वा तया च सत्कृतस्तत्र प्रियादर्शनेन निर्वृत आसम्। अथ विजयसेने पित्राहूते मदन्तिकात् गते मदिरावत्या धात्री मामेत्य प्रणम्याभ्यदत् ब्रह्मन्! अस्माकं भर्त्तृदारिकया मदिरावत्या स्वोद्याने विवृद्धिं नीता या मालतीलता, तस्या नूतनः पुष्पभरोद्गमः मधुसङ्गमसानन्दविलासहसितोज्ज्वलः व-र्त्तते, तस्याः कुसुमेषु शिलीमुखाः विपक्षाः पतिताः, अद्य भर्त्तृदारिकया स्वयं मुकुलानि उच्चितानि। तैः मौक्ति-कैरिव तया एषा एकावली विधाय ते प्रहिता, नवं हि वस्तु नवीनायेव दीयते इत्युक्त्वा तया चतुरया मह्यं माला

सपञ्चफलकर्पूरैर्नागवल्लीदलैर्युता, प्रदत्ता। अहं प्रियया स्वहस्तरचितां तां कण्ठे कृत्वा ताम्बूलञ्च मुखे दत्त्वा तां प्रियासखीमवोचम्। भद्रे! किमधिकं ब्रवीमि, ममायं कामः यत् तव वयस्यायाः कृते यदि जीवितमिदं त्यजेयं तदपि जन्म सफलं सा हि तव भर्त्तृदारिका मे प्राणेषु प्रभुः। इति तामुक्त्वा विसृज्य च अहमुपाध्याय गृहं तत्-क्षणमायातेन मित्रेण विजयसेनेन सह अगाम्।

अन्येद्युश्च स विजयसेनः मदिरावत्या सहितः मत्-पित्रोरानन्दवर्द्धनाय अस्मद्गृहमागात्। इत्थं मदिरा-वत्या मम च पुनःपुनर्दर्शनात् अनुवासरं गूढ़ एवानुरागो वृद्धिमगमत्। एकदा मदिरावत्या माता मां रहसि प्राब्रवीत् यतःप्रभृति भवान् दृष्टः ततः आरभ्य सा मम मदिरावती नाहारमभिनन्दति, प्रसाधनं न तनोति, न सङ्गीतेषु रतिं लभते, शुकादिभिश्च न क्रीड़ति। कदली-पत्रपवनैः श्रीखण्डार्द्रविलेपनैःतुषारशिशिरैश्चन्द्रपादैरपि तापमनुभवति। बहुलेन्दुकलेव चामीभवति। केवलं युष्मत्कथया श्रूयमाणया निर्वृतिं लभते। एतत् तस्याः सर्वक्रियावित् सखी, या छायेव क्षणमपि तत्पार्श्वं न मुञ्चति, तस्या मुखात् श्रुत्वा मया स्वयं रहसि समानीय पृष्टा सा मदिरावती त्वद्गतं मनः मह्यं कथितवती। तदिदानीं यथा तस्या मनोरथः फलेत् तथा सुभग! कुर्य्यथाः यदि तां जीवितामिच्छसि। अहन्तु तस्याः स्तादृश्या वाक्सुधया नितरां परितृप्तोऽभ्यधां मातः! युष्मादायत्तमेवैतत् अयं जनस्तव स्वाधीन इति।

एतदाकर्ण्य सा प्रहृष्टा यथागतमगात्। अहञ्च तत्प्रत्ययात् सञ्जातास्थः सुनिर्वृतो गृहमगाम्। अथाश्येयुः उज्जयिन्याः समागतो महान् क्षत्रियकुमारः कश्चित् तां मदिरावतीं तत्पितरमयाचत। तत्पिता च तस्मै सुतां दातुं प्रत्यपद्यत। अहं तत्परिजनात् तत् श्रोत्रदारुणं श्रुत्वा स्वर्गादिव भ्रष्टः कुलिशेनेवाहतः भूतेनेवाविष्टः सद्यो मोहमगमम्। क्षणाच्च संज्ञां प्राप्य समाश्वस्य च अचिन्तयं अधुना वैक्लव्येन किं? तावत् पर्य्यन्तमविक्लवः पश्यामि, यावत् कार्य्यशेषो न स्यात्। इत्यमालोच्य यावत् प्रियासखीभिरागत्य तस्या आश्वासवचोभिर्धार्य्यमाणः कांश्चित् दिवसान् न यामि, तावत् लग्नो निर्णीतः, मदिरावती च अभ्यङ्गमङ्गलं प्रापिता। तस्याश्च विततोत्सवो विवाहदिवसः प्राप्तः। ततः स्वेच्छासञ्चाररुद्धायां तस्यां निरागोऽहं कष्टं जीवितवैशसं तद्विरहात् मरणं सुखं मन्यमानः नगरीवाह्यं गत्वा वटतरुमारुह्य पाशं व्यरचयम्। तेन पाशेन नष्टरुद्धं मां कोऽपि सहसा दृष्ट्वा पाशं छित्वा तस्मात् तरोर्मां अवातारयत्। अहञ्च पतितः क्षणेन संज्ञां लब्ध्वा तस्य महापुरुषस्य उत्सङ्गे निषण्णमात्मानमद्राक्षं व्यचिन्तयञ्च नूनमनेन त्रातोऽहमिति मत्वा तमब्रुवं महासत्त्व! त्वया तावत् दयालुता दर्शिता, परं विरहार्त्तस्य मे मृत्युरिष्टो न जीवितं, येषां चन्द्रः अग्निः, हारः विषमः, गीतानि श्रोत्रसूचयः, उद्यानं बन्धनं, पुष्पमालां दिग्धा शरावली, चन्दनाद्यनुलेपनम् अङ्गारवर्षं किं बहुना सर्वं संसारे विपर्य्यस्तं तेषां वियोगिनां मादृशां जी-

विति को रसः ? इत्युक्त्वा तस्मै कच्छपबन्धवे सर्वं स्ववृत्तान्तमवर्णयम्। ततः स साधुर्मामब्रवीत् भद्र! प्राज्ञोऽपि किं विमुह्यसि ? यस्य कृते सर्वं, तेन त्यक्तेन जीवनेन किं फलम् आत्मीयमेकं वृत्तान्तं शृणु ते कथयामि।

अस्ति निषधो नाम देशः हिमालयान्तिकचरः। यः कलिविद्रावितस्य धर्मस्य एकः समाश्रयः सत्यस्य जन्मक्षेत्रं कृतयुगस्य च गृहम्। यत्र लोकस्य श्रुते अतृप्तिः न तु अर्थसञ्चये स्वदारेषु सन्तोषः न परापकारेषु। तत्र शीलस्तुतो नाम कश्चित् ब्राह्मणः प्रतिवसति स्म तस्याहमात्मजः। सोऽहं देशान्तरालोकनकौतुकात् गृहान्निरगाम्। सखे! देशान् भ्रमन् उपाध्यायांश्च पश्यन् क्रमात् शङ्खपुरं नाम नातिदूरमिदं पुरं प्रापम्। यत्र शङ्खपालस्य नागराजस्य पावनं शङ्खह्रद इति ख्यातं महत् सरः स्वच्छतोयमस्ति। तत्र पुरे उपाध्यायवेश्मनि वसन्नहमेकदा स्नानयात्रोत्सवे तत्सरो द्रष्टुमगच्छम्। गत्वा च नानादेशागतैर्जनैरसङ्ख्यैः पूरिततटं सुरासुरैः समन्ततः क्षोभ्यमाणमिवाम्भोनिधिं वीचिहस्तैः श्लथधम्मिल्लविस्रस्त-कुसुमस्रजां वधूनां परामृष्टजघनस्तनमण्डलम् आश्लेषापहृतेन अङ्गरागेण पिञ्जरीकृतं कामुकमिव तं महाह्रद मद्राक्षम्। तस्य दक्षिणतः किञ्चित् गत्वा सधूममिव तापिच्छैः साङ्गारमिव किंशुकैः, सज्वालमिव रक्ताशोकतरुभिः, हरनेत्रानलप्लुष्टं देहमिव रतिपतेः, तरुषण्डं व्यलोकयम्। तत्र अतिमुक्तलतामण्डपद्वारि कुसुमानि चिन्वतीं कामपि नीलकटाक्षविक्षेपतर्जितश्रवणोत्पलां उत्क्षिप्तबाहुलतिकां लक्षितैकपयो-

धरां पृष्ठतः परिलम्बितं कवरीभारं वदनेन्दुभयेन शरणागतं तिमिरमिव वहन्तीं कन्यकामपश्यं नूनं सा वेधसा रम्भादिसम्भारसिद्धहस्तेन निर्मिता, केवलं अस्मानिर्मेषेषु मानुषीति सा दृष्टैव जगत्त्रयविमोहिनी मारस्य धनुर्यष्टीव मृगेक्षणा मे हृदयं प्रविष्टा। परं सा मामवलोक्यैव सद्यः स्मरवशाभवत्। ततः सा प्रेमविह्वला पुष्पावचयक्रीडां विमुच्य गलन्त्या हारलतायां मध्यवर्त्तिनः पद्मरागस्य प्रभाभिः हृदयाद् वहिरुद्गिरमनुरागमिव दर्शयन्ती अपाङ्गविश्रान्ततारकान्तेन चक्षुषा मां मुहुरीक्षितुं तनुं परावृत्य यावदतिष्ठत् तावत्तत्र पलायमानानां जनानां महान् हाहारवः समुद्भूत्। विस्मयविह्वलश्चापश्यं एको वन्येभगन्धान्धो दलितशृङ्खलः दुरारोहकर्णान्तलुलिताङ्कुशः मत्तमातङ्गः धावन् समुपगच्छति। तं दृष्ट्वाहं प्रधाव्य वित्रस्तां विद्रुतानुगां तां प्रिया मुत्सङ्गमारोप्य जनमध्यमनैषम्। तत्रागतपरिजना सा यावत् समाश्वसिति, तावत् जनरवाकृष्टः स वारणस्तत्रैवागात्। तद्भयाच्च विद्रवत्सु जनेषु सा अनुगैः सह क्वापि तिरोहिता न ज्ञाता, अहन्तु गजभये प्रशान्ते तां सुमध्यमां चिन्वन् यदा अविज्ञात नामान्वयनिकेतनां नावापं तदा शून्यचित्तो विभ्रष्टविद्याविद्याधर इव भ्रमनुपाध्यायस्याहं कथञ्चिदवासमवान्। तत्राहं तत्प्रेमभङ्गेन तस्याः सोत्कम्पं तदाश्लेषसुखं स्मरन् मूर्च्छित इव प्रसुप्त इवाभवम्। क्रमाच्च स्त्रीसुलभात् आर्द्रभावादिव दर्शनाशया चिन्तया अहमुत्सङ्गे निपातितः सर्वं दिनमचेतितमेव अनैषम्। ततः क्रमेण अस्ता-

चलशिखरमारोहति सवितरि पद्मिनीनायके सह सन्ध्यया, पञ्चशरैकसुहृत् सुखिनां नयनोत्सवः प्राचीमुखविशेषकः शशी समुदगच्छत्। तस्य सुधामयैरपि ज्वलद्भिरिव करनिकरैर्नितरां दह्यमानस्य मे जीवितं सद्य एव व्यमील्यत।

अथ ज्योत्स्नानलच्छिन्नशरीरं मृत्युकाङ्क्षिणं मां विधुरं वीक्ष्य कश्चित् सहाध्यायी प्राब्रवीत् भ्रातः! किमेवमद्य दुःखितस्त्वं? व्याधिस्तव कोऽपि न लक्ष्यते, यदि ते अर्थकामकृतोऽयमाधि स्तदहं ते वच्मि शृणु। अतिवेगेन परं वञ्चयित्वा ये अर्था वा परेषाम् अपहृत्य ये अर्था वाञ्छ्यन्ते नैव ते स्थिराः यतस्ते पापमूलाः, अतः शीघ्रं विनश्यन्ति। तेषाञ्चार्जनादिभिर्महान् क्लेशः संजायते। अमुत्र च आचन्द्रतारकं महत् नरकं सम्भवेत्। कामोऽपि अप्राप्य नष्टश्चेत् प्राणान्तविडम्बना,यः केवलमधर्मस्य अग्रदूतः,निरयान्नैव प्रियं सुखम्। न्याय्यौ तु अर्थकामौ उत्साहवान् धीरः पुमान्·पूर्वसुकृतैरवाप्नोति न तु क्लीवो भवादृशः। तत् सखे ! धैर्यमालम्ब्य अभीष्टसिद्धये यतस्व। इति तेन सख्याभिहितस्तस्मै किञ्चिदपि नोत्तरमदां केवलं आशयं निगूह्य धैर्यमाश्रित्य क्रमेण निशां नीत्वा च गृहमागमम्। ततस्तत्रापि स्थातुमशक्तेन इतस्ततोभ्रमता इह प्राप्तेन मया पाशार्पितगलस्त्वं दृष्टः, पाशोत्तीर्णाच्च त्वत्तस्त्वद्दुःखं श्रुतं स्वञ्च वर्णितं तत् सखे ! अविज्ञात नामादेरपि तस्याः कृते पौरुषागोचरेऽपि अहं आहितोद्योगः, त्वन्तु मदिरावत्या गोचरे स्थिताया अपि प्राप्तौ पुरुषकारादिकं मुक्त्वा कथं क्लीववत् त्वया किं वक्ष्यस्याः पूर्ववृत्तान्तो न श्रुतः सा

चेदिपतये शिशुपालाय दत्तापि हरिणा किं न हृता ? इति तस्मिन् मे मित्रे निगदति सा मदिरावती सानुगा आतोद्यमङ्गलैः सह तत एव मातृदेवकुले कामदेवमर्चयितुमगात्। अत्र विवाहे कन्यकाः काममर्चयन्तीति स्थितिः। एतदर्थमेव तस्मिन् वटे मया पाशो योजितः यदि इहागता सा तदर्थमेव मां मृतं पश्यत्विति। इति मयाभिहिते स धीरो द्विजः मामवदत् सखे! तर्हि अत्रैव देवकुले अन्तः प्रविश्यैव मातृणां पृष्ठतश्छन्नौ साम्प्रतमास्वहे, एहि, पश्यावः कश्चिदुपायोऽत्र आवयोरस्ति नवेति। एवमुक्तवता तेन सख्या साकं तस्मिन्नेव देवकुले तथैव छन्नं यावत् तिष्ठावः तावत् सा मङ्गलतौर्य्यत्रिकसमेता तत्र देवकुले मदिरावती शनैः प्राविशत्। प्रविश्य च एकाकिन्येव कञ्चित् मनोगतं वरं याचिष्ये कामदेवात् भगवतः, तत् यूयं सर्वे वहिस्तिष्ठत इति सर्वान् अनुचरान् ससखीजनान् वहिष्कृत्य एकैव कामदेवं तमर्चयित्वा व्यजिज्ञपत् देव! मनोभवेनापि त्वया कथं मे मनोगतः प्रियो न ज्ञातः, किमिति बाला विप्रलब्धा हतास्मि, रतिपते! नास्मिन् जन्मनि चेत् ममाभीष्टं पूरयितुं शक्नोषि, तदा जन्मान्तरेऽपि मयि तथा कृपां कुर्य्याः यथा स एव सुभगो विप्रकुमारो मे भर्त्ता स्यादिति उक्त्वा सा बाला पश्यतोः शृण्वतोश्चावयोः स्वेन उत्तरीयेण अशोके पाशं कृत्वा कण्ठे न्यवेशयत्। ततश्च तेन सख्या, उपेत्य आत्मानं दर्शय अस्याः पाशञ्च गलात् हर इति आदिष्टः अहं तदैव तामुपासर्पं मा प्रिये! साहसं कार्षीः, पश्य ते

प्राणपणार्जितः सहजस्नेही दासोऽग्रतः स्थितोऽस्मि। इति हर्षगद्गदया गिरा व्याहरन् सुतनोस्तस्याः कण्ठात् त्वरितं पाशमपाहरम्। ततो मां वीक्ष्य सा सहसा सानन्दसाध्वसा यावत् क्षणं तिष्ठति, तावत् स सुहृत् मामब्रवीत्। दिनत्रयाप्रकाशेऽस्मिन् काले अहं निर्गत्य मदिरावत्या वेशेन अस्याः परिजनैः सह यामि, त्वं इमाम् आवयोरुत्तरीयाभ्यां संवीतां आदाय द्वितीयद्वारवर्त्मना निर्गत्य व्रज। अस्यामेव रात्रौ अलक्षितः देशान्तरं याहि। मा कृथा मम चिन्तां दैवं शिवं विधास्यति। इत्युक्त्वा उपात्तमदिरावतीवेशः स मे सुहृत् निर्गत्य तैः परिजनैः सह नक्तं प्रायात्। अहञ्च अनर्घ्यरत्नस्रजा मदिरावत्या सह अन्येन द्वारेण निर्गत्य तस्यामेव रात्रौ योजनपरिमितमध्वानं यातोऽस्मि। प्रातश्च निर्वर्त्तिताहारः क्रमात् गच्छन् दिनैः कतिपयैः बलपुरं नाम नगरं प्राप्तः। तत्र केनचित् मित्रीभूतेन द्विजकुमारेण दत्ते गृहे मया सत्वरं सा मदिरावती परिणीता, ततोऽत्र वसतः सिद्धमनोरथस्य मे किं स्यात् मे मित्रस्य वृत्तमिति चिन्ता प्रबलाभवत्। हे वत्सेश्वरनन्दन! तं मे प्राणप्रदं सुहृदमिमं पार्श्वस्थमेनं विद्धि। एषः अकारणबन्धुरद्य मया इह उत्तरायणे गङ्गास्नानार्थमागतेन दृष्टः प्राप्तश्च। चिरादेनं सवैलक्ष्यमाश्लिष्य उपाविश्य च यावत् वृत्तान्तं पृच्छामि तावत् त्वमिहागत इति तेन एकेन विप्रेण यथावृत्तं वर्णिते नरवाहनदत्तस्तमपरं द्विजमपृच्छत् ब्रह्मन्! कौतुकं मे ब्रूहि, त्वं तस्मात् सङ्कटात् कथं मुक्तः? मित्रार्थागणितप्राणा भवादृशा दुर्लभा हि, एतत्तस्य वत्सराजसुतस्य वचः समाकर्ण्य

द्वितीयोऽपि विप्रः स्वं वृत्तान्तं वर्णयितुमुपचक्रमे।

तदा तत्र मां मदिरावतीवेशेन विनिर्गतं देवगृहात्, तदनुगास्तामेव मदिरावतीं मन्यमानाः शिबिकामारोप्य तैर्न्त्यवाद्यसमाकुलैः सोमदत्तस्य विभवान्वितं क्वचित् सहस्त्रालङ्कारशोभाढ्यं क्वचित् निष्पन्नपक्वान्नं क्वचित् सज्जितवेदिकं क्वचित् प्रगीतदासीकुलं क्वचित् चारणैः सङ्कुलं क्वचिच्च लग्नवेलाप्रतीक्षैर्द्विजैरध्यासितं भवनं नीतोऽस्मि। तत्र एकस्मिन् गृहे पानक्षीबैः परिजनैः कृताव-गुण्ठनोऽहं नक्तं वधूबुद्ध्या प्रवेशितः। तत्रोपविष्टञ्च मां विवाहोत्सवसानन्दनानाचेष्टासमाकुलाः महिलाः पर्य्य-वारयन्। क्षणाच्च द्वारोपकण्ठे मेखलानूपुररवः सम-श्रावि। प्राविशच्च सहसा कापि ससखीजना नागीव विस्फुरद्रत्नालङ्कृतशिराः धवलकञ्चुका, अब्धिवीचीव लावण्यपूर्णा मुक्तावलीयुता, उद्यानदेवतेव साक्षात् सत्-पुष्पमालिनी सुपर्वबाहुलतिका विराजत्करपल्लवा कन्या। सा चागत्य यावत् मम पार्श्वे सखीधिया उपविशति तावत् पश्यामि सैव मे चित्तचौरी समागता। या शङ्करे स्नाना-र्थमागता मया दृष्टा गजात् त्राता लोकसमाजमध्ये नष्टा क्वाप्यगात्। किमेतत् काकतालीयं? किं स्वप्नः, उत सत्यमेव वा इति हर्षभरेणोद्भ्रान्तस्तदाहमचिन्तयम्।

अस्मिन्नेव क्षणे मदिरावत्याः रूप्यस्तामब्रुवन् आर्य्य-दुहितः! किमेवमुन्मना इव लक्ष्यसे? एतदाकर्ण्य सा कन्या आशयं निगृह्य अब्रवीत् जानीथ मदिरावती यादृशी मे सखी, एषा परिणीता श्वाशुरं गृहं यास्यति, एतया वियुक्ताहं कथं स्थास्यामीति दुःखितास्मि। तत्

यूयमधुना बहिर्निर्यात, यावदहं क्षणं विस्रम्भसंलापान् कुर्वती अनया मदिरावत्या सह सुखं तिष्ठामि इति ताः सर्वा निष्काश्य द्वारे स्वयमर्गलां दत्त्वा उपसृत्य सखीबुद्ध्या सा मामभाषत मदिरावति ! अस्मात् मम दुःखात् त्वद्-दुःखं ततोऽधिकं वर्त्तते, यत् प्राणप्रिये ! अन्यस्मिन् सति पित्रा अन्यस्मै दीयसे। यथाहं तव विस्रम्भभाजनं तथा, त्वमपि मे। सखि ! अहं यात्रायामेकदा शङ्करदं सरः स्नातुमगां भाविलदिरहातुरं हृदयं विनोदयितुम्। तच्चो-द्याने दिवं मुक्त्वा अवतीर्णः शशीव, सौन्दर्यदन्तिनः आलानकाञ्चनस्तम्भ इव लसत्कुसुमधुपश्रेणिभिः समा-श्रितमुखाम्बुजः कोऽपि कान्तो द्विजयुवा मया दृष्टः। वनेषु केवलं मुनिकन्यकास्तपोभिः क्लिश्यन्ति याभिरसौ युवा न दृष्टः, किं तासां तपसः फलं ? इति सञ्चिन्तयन्त्या मे कामेन हृदयं शरैस्तथा विद्धं यथा मे लज्जा भयञ्च गलितम्। ततस्तं पश्यन्तं यावत् तिर्य्यग्वलितेक्षणा पश्यामि तावत् आला-नमुक्तो मत्तेभस्तत्राशङ्कितमागात्, तेन च नश्यत्परिजनां भीतां मां दृष्ट्वा स युवा धावित्वा अङ्कमारोप्य दूरे लोकानां मध्यं निनाय। सखि ! तदङ्गस्पर्शामृतानन्दनिमीलि-ताहं तदा को हस्ती, किं भयं, क्वाहं क्व वा स्थितास्मि इति किमपि नाज्ञासिषम्। ततः परिजनो मे यावत्तत्र प्राप्तः, तावत् स मत्तहस्ती पुनर्मे मूर्त्तिमान् विरह इव तत्रा-गात्। परिजनैश्च मम भयाकुलैस्तत्क्षणमहं गृहं नीता, स च मे प्रियः तस्मिन् जनसंक्षोभे क्वापि गतः तदहं न जाने। तदा प्रभृति अविज्ञातनामान्वयं करं प्राप्तं तं निधिं केनापि हृतं स्मरन्ती स्वप्ने तद्दर्शनेच्छया सर्वदुःख

हारिणीं निद्रां वाञ्छन्ती चक्रवाकीभिः समं रात्रिषु क्रन्दामि, तदेवं निरुपायेऽस्मिन् दुःखे त्वद्दर्शनं मे विनोदनं यत् तदपि सखि। अधुना दूरीभवति। तदेवं गते मे मरणमेव उपस्थितं तत् क्षणमात्रं त्वन्मुखावलोकनसुखं अनुभवामि इति मे श्रोत्रपीयूषवर्षणं वचनमुक्त्वा साञ्जनैरश्रुविन्दुभिर्धवलेन्दुं कलङ्कयन्ती अवगुण्ठनमुत्क्षिप्य यावत् मम मुखं निरीक्षते तावत् सा मां प्रत्यभिज्ञाय सहसा सहर्षाश्चर्य्यसाध्वसाभूत्। ततो मयोक्तं मुग्धे! किं सम्भ्रमः, सोऽहमेव ते, विधिः सुमुखो घटयति हि अचिन्त्यानप्यर्थान्। मयापि त्वदर्थं सुदुःसहं दुःखमनुभूतम्। तत्तु विस्तरात् वक्ष्यामि नायं कथाक्रमकालः, निर्गमोपाय एव साम्प्रतं चिन्त्यताम्। इति मयोक्ता सा बाला प्राप्तकालमभाषत नाथ! अनेन पश्चाद्द्वारेण शनैरितो निर्गच्छावः, एतद्बहिश्च पितुर्मे क्षत्रियस्य गृहोद्यानं, तन्मार्गेणैव निर्गत्य यत्र कुत्रचित् व्रजावः। इत्युक्तवत्या गुप्ताभरणया तया सहैव तदुक्तेन मार्गेण ततो गृहात् द्रुतं निर्गतोऽस्मि। रात्रौ च दूरमध्वानं तया सह द्रुतं भयात् गत्वा प्रभाते प्रियायुक्तो महाटवीं प्राप्तवानस्मि। गच्छतोश्च तस्यामटव्यां निर्मानुषायां शनकैः स्वं वृत्तान्तं कथयतोः मध्याह्नः समवर्त्तत। तीक्ष्णांशुर्दुष्टभूपाल इव करैः निराश्रयाध्वगजनां निराक्रन्दां तां भूमिमतापयत्। तस्मिंश्च काले परिश्रान्तां तृषार्त्तां तां प्रेयसीं शनैः तरुच्छायायां शायितवान्। ततो यावत् पटमारुतैस्तां समाश्वासयामि तावत् अकस्मात् कश्चित् व्रणविद्रुतः वन्यमहिषस्तत्रागात्। तस्य च पश्चात् प्रधावन् हयारूढ़ आकृत्या महासत्त्व इति सूचितः कश्चित् धनुर्धरः समायात्। स

वीरः वज्रपातेन वज्रीव गिरिं अपरेण भल्लप्रहारेण तं महामहिषं न्यपातयत्। अस्मांश्च दृष्ट्वा उपागम्य प्रीत्येव मां पप्रच्छ साधो ! कस्त्वं, का चैषा ते, कुत आयातौ, क्व च चलितौ युवामिति। अथ उपवीतमुद्दाश्य मया सत्याकृते प्रोक्ते महासत्त्व ! अहं विप्रः, इयञ्च मे भार्य्या, कार्य्यवशात् देशान्तरागतौ आवां मार्गभ्रंशात् चौरहतात् सार्थात् विभ्रष्टौ। एवं मयोक्ते ब्राह्मण्यां सानुक्रोशः स मामभ्यधात् अहं वनचरध्वंसी मृगयार्थमिहागतः, युवाञ्च अध्वक्लान्तौ मम अतिथी सम्प्राप्तौ। तदागच्छतं विश्रामार्थं नातिदूरं ममालयम्। इत्युक्त्वा श्रान्तां मत्प्रियां स्वतुरङ्गमारोप्य स्वयं पादचारी भवन् आवां स्वं निवासं नीतवान्। तत्र स बान्धववत् भोजनाद्यैरुपाचरत् कुदेशेऽपि क्वचित केचित् महाशयाः सन्ति। ततस्तामटवीमुत्तीर्य्य तद्वितीर्णेनानुयात्रिकेण, प्राप्य चैकमग्रहारं मया सा वधूः परिणीता। ततो बहून् देशान् परिभ्रमन् त्वया समं सार्थं दृष्ट्वा अद्य भार्य्यासहायः स्नानं कर्त्तुमिहागतः। इहैव स मम स्वयंवरसुहृत् प्राप्तः देवश्च दृष्ट इत्येष मे वृत्तान्तः निवेदितः। इत्युक्त्वा विरतं निर्व्याजसत्त्वोचितप्राप्ताभीष्टफलं तं द्विजं स वत्सेश्वरसुतो यावत् प्रशंसतितरां तावत ते गोमुखप्रभृतयः स्वसचिवाः स्वस्मात् तं युवराजं चिन्वन्तः तद्यागत्य उपलेभिरे। स च राजपुत्रो नरवाहनदत्तश्चरणानतान् हर्षवाष्पधौतमुखान् तान् सर्वान् सचिवान् यथोचितं सम्भाव्य अभिननन्द। अथ स युवराजस्तौ विप्रयुवानौ सदर्थनीतिविदौ समादाय मन्त्रिभिः सहितः स्वपुरीमभिययौ।

# अथ पञ्चाख्यो नाम चतुर्दशलम्बकः ।

## 'शताधिक पञ्चम' स्तरङ्गः ।



ततो वत्सेश्वरतनयो नरवाहनदत्तः तास्ताश्त्रिलोक-सुन्दरीस्तथा मदनमञ्चुकाञ्च लभमानः कौशाम्ब्यां गोमुखादिभिः स्वसचिवैः परिवृतः पितृसमृद्धिं भुञ्जानः सर्व्वकामपूर्णः समुवास । अभीष्टनारीसम्भोगामृतरसेन नृत्यगीतादिभिः कलाभिश्च तस्य दिनानि व्यतीयुः ।

एकदा सः अवरोधेषु तां नवीनामग्र्यां कान्तां मदनमञ्चुकां तत्परिजनञ्चापश्यन् रजनीविरहेण क्षीणकान्तिरिन्दुरिव नितरां विवर्णतामगमत् समतप्यत च किं नु मे चित्तं जिज्ञासमाना प्रिया मे क्वापि छन्ना स्यात् ? अथवा अन्यस्या अवलेपात् कुतोऽपि क्वापि गता भवेत् ? अहो केनवा अपहृता ? इति । अथ राजा वत्सेश्वरः विदितवृत्तान्तः पिता मातरः सचिवा भृत्याश्च सर्वे विह्वलतां ययुः । हारैश्चन्द्रांशुभिः कदलीमृणालनलिनीदलैश्च तस्य सन्तापो ववृधे नतूपशशाम । सा च कलिङ्गसेना तया सुतया मदनमञ्चुकया विहीना सायं विभ्रष्टविद्या विद्याधरीव विद्यासम्मूढतां ययौ ।

अथात्र एका वृद्धा अन्तःपुररक्षिका सर्वेषु आकर्णयत्सु नरवाहनदत्तमब्रवीत् युवराज ! हर्म्याग्रे स्थितां ते मदनमञ्चुकां दृष्ट्वा नभसः समवतीर्य्य कश्चिद्विद्याधरयुवा कलिङ्ग-

सेनान्तिके स्वं नाम मानसवेग इति समुदीर्य देहि मे सुतामिति ययाचे। तया तु स तत्क्षणं निषिद्धो विफलप्रयत्नः यथागतमेव गत्वा इदानीं गुप्तमागत्य तां मायया जहारेति मे मतिः"। यदि च दिव्याः परदारग्रहं न कदाचित् कुर्वते तथापि रागान्धः कोहि अमार्गं वा मार्गं गणयति ? एतदाकर्ण्य युवराजस्य मनः वीचिषु अम्बुजमिव दोलायमानमभूत्।

अथ रुमण्वान् प्रोवाच कुतः पुरीयं विद्यते ? गगनं विना इह प्रवेशनिर्गमौ न विद्यते। भगवतो महेश्वरस्य प्रसादाच्च अस्या नानिष्टमस्ति तदिहैव क्वचित् प्रणयकोपेन स्थिता तदत्र कथामेतामाख्यामि श्रूयताम्। पुरा अङ्गिरा महर्षिः विवाहार्थमष्टावक्रस्य तनयां सावित्रीं नाम ययाचे अष्टावक्रस्तु तामन्यस्मै दातुं सङ्कल्पितां गुणिनेऽपि अङ्गिरसे सुतां न ददौ। ततः सोऽङ्गिरा स्वभ्रातृतनयामश्रुतां नाम परिणीय तया सह सुखेनावात्सीत्। अथ सा भार्या अश्रुता सावित्रीं भर्त्तुः पूर्ववाञ्छितां ज्ञात्वा तपस्यन्तं चिरं मौनिनं तं मुनिं पुनः पुनः तां सावित्रीं मुनिसुतां प्रति सप्रणयं बुद्ध्वा परिचुकोप। कुपिता च सा दुर्भगोऽयं देह इति मन्यमाना देहं त्यक्तुं वनं गता। भर्त्तुः शुभमनुध्याय कण्ठे पाशं समर्पयत्।

'अथ भक्तानुकम्पिनी देवी साक्षसूत्र-कमण्डलुः प्रत्यक्षीभूय मा पुत्रि ! साहसं कार्षीः तव पत्या अहं ध्याता नाङ्गना, इत्युक्त्वा तां समाश्वास्य तिरोदधे। अथाङ्गिरसा भर्त्रा अन्विष्यता सा वनान्तात् प्राप्ता, तस्मात् स्त्रीणां प्रणय-

खण्डनमिह अतीव दुःसहम्। तदेषा स्वल्पेनापि अपराधेन कुपिता क्वापि स्थिता अन्वेष्या इति.एवं रुमण्वतोक्ते राजा वत्सेश्वरोऽब्रवीत् एवमेतत् किञ्चिदपि अप्रियं सम्भाव्यते यतः नरवाहनदत्तस्य कामांशस्यावतीर्णस्य देवनिर्म्मिता भार्य्या रति र्मदनमञ्जुकेषा। असौ हि अनया सह दिव्यं कल्पं विद्याधरैश्वर्य्यं करिष्यतीति दिष्ट्या वागासीत् नैव तन्मृषा शङ्कितव्यम्। तदेषा विशेषेणान्वेषणीयेति राज्ञोक्ते स नरवाहनदत्तः तदवस्थ एव निर्जगाम। यथा यथा तां चिन्वन् स तेषु तेषु प्रदेशेषु नाध्यगच्छत् तथा तथा स उन्माद इवाभ्रमत्। तस्मिन् नगरे सर्वे एव जना स्तद्दुःखदर्शनोद्वेगादिव सम्मीलितलोचना निरुत्सवा आसन्। वनेषु पृच्छन्तं तं चलत्पल्लवपाणयः पादपा न साऽस्माभिर्दृष्टेति प्रत्यूचुरिव। वनेषु च समुत्पतन्तः सारसा विचिन्वते तस्मै न प्रियास्माभिरालोकितेति शशंसुरिव। ते च मरुभूति-गोमुख-हरिशिख-वसन्तकाः सचिवा समन्ततः तं भ्रमन्तमनुबभ्रमुः।

अत्रान्तरे वेगवती नाम कापि विद्याधरी दृष्टमदनमञ्जुकारूपा तदीयं रूपमास्थाय उपवनान्तरे आगत्य एकाकिनी स्वैरमशोकतरोरधस्तस्थौ। विचिन्वानश्च मरुभूतिः सद्यो विशल्यामिव सशल्यचेतसः तां सहसा ददर्श। जगाद च हृष्टः नरवाहनदत्तं मभ्येत्य, युवराज! समाश्वसिहि दिष्ट्या वर्द्धसे दृष्टा ते प्रिया मया उद्यान एवात्र स्थिता इत्येवमुक्तवता तेन साकम् स नरवाहनदत्तः तत्क्षणमेव सम्प्रहृष्टः तत्र प्रययौ। तृषितो वारिधारामिवा-

मिथिरहार्त्तः स तां मदनमञ्चुका मपश्यत्। दृष्ट्वैव च तृषाकूल स्तां यावदालिङ्गितु मिच्छति, तावत् सा परिणिनीषुर्धूर्त्ती तमेवं जगाद मा तावत् त्वं साम्प्रतं मां स्प्राक्षीः, मम वच स्तावदाकर्णय। मया प्राक् विवाहात् त्वत्प्राप्त्यै यक्षा विवाहे सति अहं वः स्वहस्तेन वलीन् दास्यामीति उपयाचिताः। तस्मिंश्च विवाहकाले मया ते प्राणेशप्राप्तया विस्मृताः। तस्माच्च कोपात् तै र्यक्षैरहमितः अपहृता उक्ता च गच्छ भूयो विवाहेन तं पतिं प्राप्य अस्मभ्यञ्च वलीन् दत्त्वा पतिं सेवस्व, नान्यथा ते शिवं भविता इत्युक्ता तै रिहाहमानीता साम्प्रतं मुक्तास्मि, तन्मां परिणय ततोऽहं तेभ्यः यक्षेभ्यः अभिमतां पूजां दत्त्वा त्वदभिलाषपूरणी भविष्यामीति तदाकर्ण्यैव स नरवाहनदत्तः सपदि शान्तिसोमं पुरोहित माहूय सम्भारांश्च समाहृत्य ताम् मायामदनमञ्चुकां विद्याधरीं वेगवतीं समुपयेमे। राजा वत्सेश्वरः महानन्दमहोत्सवं कारयन् सर्वान् पौरान् कलिङ्गसेनाञ्च समनन्दयत्। सा माया मदनमञ्चुका यक्षेभ्यो मर्यापिशिताशिभ्यः स्वहस्तेन वलीनदात्। नरवाहनदत्तोऽपि तया सह वासकस्थः सोत्सवं पानादिकं सेवमानः सुखेनास्थात्।

एकदा सा रहसि प्रियमब्रवीत् नाथ! अहं सुप्ता त्वया सहसा द्वारमुद्घाट्य सम्प्रति न वीक्षणीयेति। तदाकर्ण्य स राजपुत्रः किमेतदिति कौतुकी एकदा सुप्तायास्तस्या द्वारमुद्घाट्य मुखमैक्षत। ततो यावत् सा अन्यैव कापि न सा मदन मञ्चुकेति निश्चिता तावत्साऽपि प्रबुबुधे।

अथ स राजपुत्रस्तां का त्वं सत्यमाचक्ष्वेति पप्रच्छ। सापि उपविष्टं तं पतिमवलोक्य निजेरूपे स्थितैव सञ्जातप्रतिभेदा वक्तुं प्रचक्रमे नाथ! शृणु साम्प्रतं यथावस्तु ब्रवीमि।

अस्ति आषाढ़पुरं नाम, विद्याधरपुरे गिरिः। तत्र वेगवतोनाम्न राज्ञः पुत्रः विद्याधराधीशः मानसवेगोनाम भुजबलोर्ज्जितशासनः संवर्त्तते। तस्य कनीयसी भगिनी अस्म्यहं वेगवती नाम। स च मे भ्राता मे विद्यां दातुं नैच्छदिति द्वेषेणाहं गतोऽपयाता तपोवनगतात् पितुः सकाशात् तद्वरतः सर्व्वाधिकरणां विद्यां समधिगतवती अस्मि। साहं तां ते मदनमञ्चुकां तस्मिन्नाषाढ़ाद्रिपुरे उद्याने रक्षिभिर्वृतामपश्यम्। दुरात्मना रावणेन रामस्य जानकीव तेन मद्भ्रात्रा सा तव दयिता अपहृता। सा च साध्वी अनिच्छन्ती तेनाक्रन्तुं न शक्यते। स्त्रीणाम् बलात्कारे तस्य मृत्युदः शापोऽस्ति हि। ततस्तेन कुभ्रात्रा तस्याः प्रबोधने नियुक्ताहं तस्याः त्वत्प्रलापमय्याः सकाश मगमम्। तत्सङ्गाच्च कामाज्ञातुल्ये त्वन्नाम्नि उदीरिते तथा मम मनः सहसा त्वदेकाग्रं जातम्। तत्क्षणञ्च स ते पतिः स्यात् यन्नाम्नि श्रुत एवं त्वं स्मरवश्या भवेः इति देव्याः स्वप्नादेशो मया स्मृतः। संस्मृत्य तं स्वप्नादेशं तां मदनमञ्चुकां धृतिं ग्राहयित्वा मया समागत्य तद्रूपमास्थाय च पाणिं ग्राहितोऽसि। तदेहि साम्प्रतं यत्र ते मदनमञ्चुकास्ति तत्रैव त्वामहं कृपया प्राणेश! नयामि। त्वत्प्रियेति तस्याः सपत्न्या अहं किङ्करीति उक्त्वा स्वविद्याबलात् निशि तं नरवाहनदत्तं गृहीत्वा

नभ उदपतत् । अनैव यावत् सा व्योम्नि प्रायात् तावत् प्रातः तत्र नगरे सर्व्वैः परिजनैः सह राजा वत्सेश्वरः ससचिवः कुमारसचिवपरिवृतः भृशं चुक्षुभे । वासवदत्तादयश्च मातरः वज्राहताः शोकात् नितरामाकुलाः समभवन् । ततः सहसा अन्तरीक्षात् प्रभामण्डलैर्जगदुद्भासयन् द्वितीय इव भास्करो मुनिर्नारद समवतरत् । स च देवर्षिः राजानमुपेत्य प्रोवाच राजन्! मा विषादं कार्षीः शीघ्रं ते पुत्रः इह समुपैष्यति स हि विद्याधर्य्यानीतः तव हृत्यर्थं शूलिनाश्मि प्रेषितः । इत्युक्त्वा स मुनिः दत्तार्घ्याय तस्मै नृपाय वेगवत्याश्चरितं यथावदवर्णयत् । ततः स मुनिस्तं नृपं समाश्वास्य साधयामीत्युक्त्वा तिरोदधे ।

अत्रान्तरे सा वेगवती व्योम्ना तं नरवाहनदत्तं तं आषाढ़पुराख्यं गिरिमनैषीत् । मानसवेगस्तद्विदित्वा तौ संहन्तुमधावत । ततस्तेन भ्रात्रा समं तस्या वेगवत्या विद्याबलोद्धतं युद्धमभूत् स्त्रीणां हि पतिः प्राणाः, न बान्धवाः । अथ सा विद्याबलात् विकटं भैरवं रूपमास्थाय तं मानसवेगं संमोह्य अग्निपर्व्वते निदधे । तच्च नरवाहनदत्तं गन्धर्व्वपुरवर्त्तिनि क्वचित् विजने कूपे रक्षितुं निचिक्षेप । तत्र स्थितश्च तं स्वैरं मुवाच आर्य्यपुत्र! तिष्ठात्र हितत्वात्, तवात्र स्थितस्य शिवं भविता, मा विषादं हृदि कृथाः, अत्र स्थितस्य ते सर्व्वविद्याधरपतिता भाविनी । अहन्तु अद्य तं भ्रातरं प्रसादयितुं यामि यतो मे विद्याः ज्येष्ठस्य व्यतिक्रमकरणेन दुर्ब्बलाः संवृत्ताः, अचिरात् त्वामुपैष्यामीत्युक्त्वा सा विद्याधरी वेगवती क्वापि गताभवत् ।

## अथ शताधिक षष्ठस्तरङ्गः ।

ततो वीणादत्त इति ख्यातनामा कोऽपि गन्धर्व्वस्तत्र कूपे स्थितं तं नरवाहनदत्त मैक्षिष्ट । परार्थफलजन्मानो मार्गद्रुमा महान्त स्तापच्छिदो जना यदि नात्र स्युस्तदा जीर्णारण्यमिदं जगत् भवेत् यदसौ दृष्ट्वैव तं स्वजनइव अवगतनामानं पृष्ट्वा हस्तेऽवलम्ब्य तस्मात् कूपादुदहरत् अब्रवीच्च मानुषोऽसि न त्वं देवः, तत्कथं गन्धर्व्वनगरं मानुषागम्यमेतत् त्वया प्राप्तम् ? वद । नरवाहनदत्तोऽपि विद्याधर्य्या अहं विद्याबलादिहानीतोऽस्मि नात्मबलादिति तं यथायथं प्रत्यब्रवीत् । ततः स गुणी तं सुलक्षणं दृष्ट्वा स्वगृहमनयत् । उपाचरच्च स्वैरुपचारैः ।

अन्येद्युश्च स नरवाहनदत्तः तत् पुरं वीणाहस्ताखिल-प्रजं दृष्ट्वा तं वीणादत्तं पर्य्यपृच्छत् भद्र ! सर्व्वेऽपि आबाल वृद्धा जनाः किं वीणापाणयः दृश्यन्ते ?

वीणादत्तोऽब्रवीत् अत्रत्य गन्धर्व्वराजः सागरदत्त इति । तस्य गन्धर्व्वदत्ता नाम्नी सुता अस्ति । यया अप्सरसः रूपेण विनिर्जिताः । यस्याश्च वपुः धात्रा सुधाचन्द्रचन्दना-दिभिः समाहृतैः सर्व्वसुन्दरनिर्म्माणवर्णकैश्च निर्म्मित मिव । सा च सततं श्रौरिणादत्तं स्वगीतकं वीणायां 'गायन्ती' परमां गन्धर्व्वकाष्ठां गता । योहि वीणां वादयन् त्रिभिर्ग्रामैः 'सम्यक् वैष्णवस्तुतिमङ्गलं गायति स गान्धर्व्वकोविदो मे पतिः स्यादित्यस्या राजपुत्र्या निश्चयः स्थितः । तेनात्र सर्व्वे वीणाः शिक्षन्ते विदुश्च । एतदाकर्ण्यैव

स सानन्दस्तं वीणादत्तमब्रवीत् अहं सर्व्वाभिः कलाभिः स्वयंवरवृतः पतिः सर्व्वं गान्धर्व्वं त्रैलोक्यवर्त्ति जानामि। इत्युक्तवन्तं तं स सुजनो वीणादत्तः सागरदत्तस्य तस्य राज्ञः सकाशमनयत्। 'अवदच्च राजन्! अयं वत्सराजसुतो नरवाहनदत्तः। विद्याधरीहस्तात् विभ्रष्टस्तत्र नगरं प्राप्तः अयञ्च गन्धर्व्वाचार्य्यः केशवस्तुतिगीतकं वेत्ति, तद् गन्धर्व्वदत्ताया मनोरथपूरणाय कालोऽयमिति तदाकर्ण्य स राजा प्रत्यवादीत् सत्यमेतत् मया श्रुतम् गन्धर्व्वाणां मुखात् पूर्व्वं श्रुतम् तस्मादिहायं साम्प्रतम् मान्यः देवांशश्चायं नान्यथा भ्रमितव्यम् कथमन्यथा देवभूमौ विद्याधरीसङ्गात् अस्य इहागमः? आनीयतां सा मे गन्धर्व्वदत्ता, पश्यामस्तावदद्भुतमिति राज्ञोदिते महत्तराः किङ्करा स्तामानेतुं सत्वरं धावन्तिस्म। साच तत्क्षणात् कुसुमाभरणोज्ज्वला यौवन वायुना प्रनृत्यन्ती आर्त्तवी लतेव समागात्। क्षणच्च पितुः पार्श्वे समुपविष्टा सा तदनुमता वीणायां गीतकं गायतिस्म। सतु नरवाहनदत्तः तस्याः श्रुतिषु स्वरान् युञ्जन्त्याः सरस्वत्याः श्रियाश्च समे गीते रूपेच विस्मितोऽभवत् अवदच्च राजपुत्रि! तवेयं वीणा न सुस्वरा मे प्रतिभाति, मन्ये तन्त्र्यां केशः स्थित इति। अथ यावत् तत्र बालं वीक्ष्य स वहिरकरोत् तावत् सर्व्वे तत्र स्थिता गन्धर्व्वा विस्मयं जग्मुः। अथ सा राजसुता राजपुत्र! गृहाणेमां, अमृतेन नः कर्णौ सिञ्च इतिवदन्ती तस्मै वीणां ददौ। सोऽपि तां वीणां वादयन् तथा विष्णोः स्तुतिगीतकमगीयत् यथा सर्व्वे गन्धर्व्वास्तत्र

चित्रन्यस्ता इवाभवन् । ततोऽसौ गन्धर्वदत्ता स्वयं प्रणया- र्द्रया प्रफुल्लनीलाब्जमालयेव दृष्ट्या तं वव्रे । तदवलोक्य स राजा सागरदत्तः कन्यायास्तां प्रतिज्ञां स्मरन् सद्यएव तस्मै तां सुतां ददौ । तयोर्वधूवरयोर्विवाहे या दिव्या समृद्धिरजायत सा किमावेद्यते येन सा नोपमीयते । ततस्तत्र स राजपुत्रः नवोढया तया सह दिव्यान् भोगान् भुञ्जानः कञ्चित् कालमतिष्ठत् ।

एकदा स नगरश्रियं दिदृक्षुर्विनिर्गतः तान् तान् प्रदेशानालोक्य नगरोद्यानं विवेश । तत्र व्योम्ना अव- रोहन्तीं दुहित्रा समं दिव्याङ्गनां कामपि अनभ्रेऽपि सवृष्टिमिव विद्युतमैक्षत । अन्तिकागताञ्च तां सोऽयं वत्स- राजसुतः तत्र भावी पति इति दुहितरं जल्पन्तीं स वत्स- राजसुतो नरवाहनदत्तः कासि कुत आगतासि किमर्थं वा इति परिपप्रच्छ । साचाब्रवीत् राजपुत्र ! देवसिंहा- ख्यस्य विद्याधरपतेरहं भार्य्या धनवती नाम, इयञ्च मम सुता चण्डसिंहस्य भगिनी अजिनावती नाम । अस्यास्त्व- मेव भर्त्ता भवितेति गगनादुद्गता भारती । वेगवत्या अत्र निक्षिप्तं भाविविद्याधरचक्रवर्त्तिनं त्वां स्वविद्याबलात् विदित्वा एतदीप्सितं वक्तुमागतास्मि । विद्याधरगम्येऽत्र- देशे तवासितुं न युक्तं ते हि विद्वेषेण अप्राप्तपदमेकाकिनं त्वां जातु हन्युः । तदेहि तद्गम्यां भुवं त्वां सांप्रतं नयामि परिक्षीणःशशी किमर्कमण्डले कालं क्षिपति ? ततः सम्प्राप्ते अवसरे सुतां मे परिणेष्यसि इत्युक्त्वैव सा ससुता तं राजपुत्रमादाय समुत्पपात । प्राप्य च

अवन्तीं पुरीं तत्रोपवने तं निक्षिप्य ससुता तिरोदधे। अत्रान्तरे राजा प्रसेनजित् दूरात् मृगयार्थी तत्रागतः तं राजसुतं सुलक्षणं परमसुन्दराकृतिमपश्यत्। स तु सकौतुकमभ्येत्य नामान्वयौ पृष्ट्वा विदितवृत्तान्तः सम्प्रहृष्टः संप्रश्रयं तं स्वमन्दिरं निनाय। यत्र यत्र कल्याणभाक् जनो याति तत्र तत्रैव प्रियं जनमङ्गनेव सम्पत् रमयत्येव। यत् तत्र स्थिताय तस्मै नरवाहनदत्ताय स राजा प्रसेनजित् निजां सुतां भगीरथयशोऽभिधां ददौ। स च तया समं तत्र महार्हविभवसुखं भुञ्जन्नतिष्ठत्।

एकदा लोकलोचनानन्ददायिनि रजनीवधूमुखमण्डले निरभ्र-निर्मल-व्योमदर्पणप्रतिबिम्बिते भगीरथयशसो वदन इवामृतमनोरमे चन्द्रमसि समभ्युदिते कौमुदीसुधया धौते च हर्म्याग्रे स राजसुतस्तया प्रियया सह तदिच्छया पानमसेवत। तच्च प्रियामुखप्रतिमाभरणं मधु तस्य रसनाया इव लोचनयोरपि भृशमानन्दमजनयत्। परं प्रियामुखसमं कान्तं तत् न मेने यदत्र तादृशा भ्रूविभ्रमाः कुतः?।

इत्थं पानलीलां सेवित्वा अभ्यन्तरं गतस्तया सह शयनीयं भेजे। तस्यां प्रियायां तत्र सुप्तायां स नरवाहनदत्तः सहसा विनिद्रः स्मृत्वा अब्रवीत् कथं भगीरथयशसः प्रणयेन ता मे पूर्वभार्य्या विस्मृता इव, का गतिरत्र, दैवमेवात्र प्रभवति। सचिवाश्च मे दूरे, तेषाञ्च मरुभूतिरेव विक्रमैकरसः, हरिशिख स्तु नीतिमात्रे तिष्ठति। तेषात्र न मे ज्ञात्वं केवलमेको गोमुखश्चतुरः सर्वासु अवस्थासु मे

मित्रम् परन्तु विदूरस्थो मां दुनोति। इत्यमुल्लपन् स सहसा हा! दुःखमिति नार्य्योदीरित वचः शुश्राव। श्रुत्वैव दीप्रदीपेऽत्र यावद्वीक्षते तावत् गवाक्षान्तर्दिव्यं नार्य्यामुखमद्राक्षीत् व्यचिन्तयच्च कौतुकात् समले व्योम्नि मया चन्द्रो दृष्टः। इदन्तु अव्योम्नि धात्रा प्रदर्शितं किमिदं पुरा किल भगवता वेधसा युक्त्या सर्वविघ्नकृत् आतापिनाम दैत्यः आश्चर्य्यमत्र गत्वा पश्येति उक्त्वा नन्दनं वनं प्रैष्यत तत्र तेन अद्भुताकारो नार्य्याः कस्याश्चित् चरणः केवलो दृष्टः ततश्च तस्या अन्याङ्गदिदृक्षाव्यसनेनासौ विपन्नः। मन्ये विधात्रा ममापि विपत्तये इदं मुखमात्रं दृष्टा प्रेषितं स्यात्। इत्येवं यावत् स आकलयति तावत् तस्मात् गवाक्षात् कापि दिव्याङ्गना करपल्लवं प्रदर्श्य इत एहीति अङ्गुल्या सङ्केत मकरोत्। ततः स सुप्तदयितात् तस्मात् गृहात् स्वैरं निर्गत्य तस्या दिव्ययोषितः सकाशं सम्प्राप्तः। सा च अन्यासक्तं पतिं प्रशंसन्ती मदनमञ्चुके! हा! हतास्मीति तत्र तं राजसुतं दृष्ट्वा तामुद्दिश्याब्रवीत्। स तु तदाकर्ण्य तां प्रियां स्मृत्वा प्रज्वलद्विरहानलः तां मानिनीं पृच्छतिस्म भद्रे!

का त्वम्? कुतस्त्वया सा मे प्रिया मदनमञ्चुका दृष्टा? किमर्थं वा मामुपेतासि? कथ्यतां सर्वमिति। ततः सा तं विदूरं नीत्वा निशि शृणु सर्वमिति उक्त्वा वक्तुमुपचक्रमे।

अस्ति पुष्करावती नाम नगरी। तत्र अग्निपिङ्गलगान्धारो नाम विद्याधरेश्वरः प्रतिवसति। तस्य कन्यकां मां विद्धि। अहन्तु भगवतो वैश्वानरात् पित्रा समाराधितात् सुप्रसन्नात् सञ्जातास्मीति पिता मम प्रभावती समाख्यामकरोत्।

साहमेकदा वेगवतीं नाम सखीं द्रष्टुं आषाढ़पुरमगच्छम् न च तां तत्र प्रापम् । तन्मातुश्च मुखात् तां कुत्रचित् तपस्यन्तीं तथा मदनमञ्चुकां त्वत्प्रियां तत्र स्थितां श्रुत्वा तामहं द्रष्टुमगाम् । अपश्यञ्च तामनोहारकृशां पाण्डुरधूसरां वद्धैकवेणीं रुदतीं त्वद्गुणैकपक्षपातिनीं विद्याधरकन्यकाभिरुदश्रुभि स्त्वद्दर्शनश्रवणप्रोद्यद्दुःखयताकुलैर्वृतां तत स्तयोक्तात्वत्स्वरूपाहं भवदानयने कृतसङ्कल्पा तामाश्वास्य तत्कृपया त्वद्गुणाकृष्टहृदया विद्याप्रभावाद् त्वामिह स्थितं सम्प्रति बुद्धा तदर्थसिद्धये तवाभ्यास मागतास्मि । त्वाञ्चात्र प्रियं दृष्ट्वा विस्मिता मया हा! दुःखमिति उक्ता तां तव भार्यां स्मारितवत्यस्मि । इत्युक्तः स राजपुत्रः समुत्कण्ठितस्तां जगाद भद्रे ! नय मां तत्र, यत्र सा मे प्रिया, नियुङ्क्ष्व च यथेच्छसि । तदाकर्ण्य सा प्रभावती तमादाय निशि गन्तुं प्रावर्त्तत । यान्ती च क्वापि ज्वलन्तं अग्निं प्रदक्षिणं कृत्वा नरवाहनदत्तस्य तस्य करमादाय युक्त्या तत्रैव गगने उद्वाहविधिं व्यधात् । दिव्यानां हि सर्वाः क्रियाः सङ्कल्पमात्रप्रधानाः । ततः सा सिद्धकामा तस्मान्नभस्तलात् प्रियं नरवाहनदत्तं पृथिवीं वेदिकामिव, नदीर्भुजङ्गीरिव, पर्वतान् वल्मीकानिव तानि तान्यन्यानि च कौतुकानि पदे पदे दर्शयन्ती क्रमेण प्रययौ ।

अथाकाशगमनश्रान्तं तृष्णार्त्तं जलार्थिनं तं नरवाहनदत्तं सा प्रभावती व्योममार्गादवतार्य्य कमपि वनान्तं निनाय । तत्र चन्द्रांशुधवलसलिलस्य कस्यचित्सरसः समीपमेत्य पीताम्भसः श्रान्तदृष्टस्य विश्रान्तस्य तस्य तस्मिन्

रमणीये प्रदेशे कान्ता—सम्भोगतृष्णाया समुत्पन्नम्। ततः सहसा सम्भोत्क्रमथिता सा प्रभावती सानुक्रोशा कृताश्वासाच मदनमञ्जुकां ध्यात्वा नरवाहनदत्तं तं न्यवारयत् परार्थ-प्रतिपन्नाहि महान्तः स्वार्थं नेच्छन्ते। जगादचैनं आर्य्य-पुत्र! मा त्वमन्यथा मंस्थाः अत्र मे अभिप्रायोऽस्ति कश्चित् तदत्र कथामेकां शृणु।

पुरा पाटलिपुत्रे कापि गतभर्त्तृका बालैकपुत्रा तरुणी निर्धना रूपवती नारी आसीत्। सा च स्वपरितोषाय परपुरुषसङ्गमं विदधाना गृहात् प्रतिरात्र मितस्ततो गच्छतिस्म। पुत्र! त्वदर्थं मोदक मानेष्यामि प्रातरिति बालं सुतं समाश्वास्य प्रलोभ्य च सा अयासीत् आनयच्च प्रतिदिनं मोदकम्। स च बालस्तया मोदकाशया गृहे तूष्णीमासीत्। एकदा तया विस्मृत्य स मोदको नानीतः तच्च बालकं मोदकं याचमानं सा अब्रवीत् पुत्र! अहं स्वका-मुकं वेद्मि, न मोदकम्। तदाकर्ण्य नानयी अन्या नाकया मोदको मे आनीत इति निराशस्य तस्य शिशोर्हृदय-मस्फुटत्। तदहं नाथ! पूर्व्वं त्वां स्वीकरोमि चेत् तदा सुवैव कृताश्वासा त्वत्सङ्गममहोत्सवाकाङ्क्षिणी सा मदन-मञ्जुका विदितवृत्तान्ता मत्तएव निराशा कुसुमकोमलं हृदयं स्फोटयेत् तदेतेन नृशंस्यभयेन तामनाश्वास्य प्राणा-धिकप्रियमपि त्वां नाभिलषामि। इति तयोक्तः प्रभावत्या सानन्दविस्मयः राजपुत्रस्तत्क्षणमचिन्तयत् अहो! नवं नव-माश्चर्य्यं विदधाति विधिः। येनाविश्वोदारचरिता प्रभावती सृष्टाइति ध्यायन् स प्रेम्णा तां स्तुत्वा प्राब्रवीत् सुन्दरि!

तर्हि त्वरितं तत्र मां नय यत्र सा मदनमञ्चुका तिष्ठति। तदाकर्ण्य सा प्रभावती तमादाय नभसा क्षणेन तं आषाढ़पुरं गिरिं निनाय। सङ्गमयामास च तत्र क्षीणतनुं तां मदनमञ्चुकां नदीमिव वृष्टिपूरेण तेन राजसुतेन। सोऽपि राजपुत्रः वियोगाग्नि क्षीणां पाण्डुराङ्गीं तां कान्तां पार्वणीमिन्दुकलामिवापश्यत्। तदा तयोः प्राणलाभाय अन्योन्यसमागमः शर्वरीचन्द्रमसोरिव जगदानन्दो-दभूव। विरहानलसन्तप्तो तौ दम्पती अन्योन्यमाश्लिष्टौ स्वेदच्छलात् द्रवीभूतकायाविवाभूताम्। ततस्तौ प्रभावती-विद्याबलेन निशि कल्पितान् भोगान् स्वैरं बुभुजाते। तद्विद्याबलेन चात्र कश्चन तां मदनमञ्चुकां विना तं नरवाहनदत्तं न ददर्श। अथ प्रातर्वेणीं मुञ्चन्तं तं मदनमञ्चुका प्राब्रवीत् नाथ! मानसवेगे हते मम आर्यसुतेन वेणी मोक्तव्या, वा मृतायाः मे पक्षिभि वेणी मोक्तव्या अथवा वह्निना दग्धव्या इति मया पुरा प्रतिज्ञातम्। अस्मिंस्तु जीवति सद्यस्त्वया मुक्तेति मे मनः दूयते। एष वेगवत्या अग्निपर्वते क्षिप्तोऽपि न मृतः। त्वञ्चात्र प्रभावत्या विद्याबलाददृश्यः न केनापि विदितः अन्यथा त्वत्समीपे स्थितां मां शत्रोरस्यानुयायिनो दृष्ट्वा न सहेरन्। एवं तया साश्रयाभिहितः स कालानुरोधेन तां सान्त्वयन् प्रत्यभाषत प्रिये! सम्पत्स्यतेऽयं ते कामः अचिरात्तमरिं हनिष्यामि, प्रतीक्षस्व मनाक् विद्याः साम्प्रत मधिगच्छामि। इति तां प्रियां समाश्वास्य नरवाहनदत्तः तस्मिन्नेव वैद्याधरे पुरे तस्थौ।

अथ प्रभावती विद्याप्रभावेण स्वयमन्तर्हिता सती तस्य अतर्क्यं स्वं रूपं व्यधत्त । स च राजपुत्रस्तेन रूपेण तत्काल-चितस्तया समं यथासुखमतिष्ठत् अशङ्कितप्रकाशोऽपि तद्वि-द्यासिद्धिं भुञ्जानः । वेगवत्या वयस्येयं मदनमञ्जुकां परि-चरति तत्प्रीत्या इति तंवत्यान् ब्रवीति स्म च । सर्व्वएव मानसवेगानुचराः प्रभावतीहि एषेति तद्रूपच्छन्नविग्रहं तं राजपुत्रं मन्वानाः निःशङ्काः प्रभवे तस्मै संवादं प्रैरयन् ।

अथैकदा मदनमञ्जुका तस्मै नरवाहनदत्ताय प्रसङ्गतः स्वं वृत्तान्तमगादीत् नाथ ! तदा मानसवेगः स्वमायया मामिहानीय क्रूरकर्मभिरनुचरैः प्रलोभयितु मयतिष्ट । तावच्च भगवान् भैरवः उद्गतानिर्लोलजिह्वः स्वयं प्रत्यक्षीभूय हुङ्कारेणाभ्ययात् इह विद्याधरेन्द्राणां भाविनश्चक्रवर्त्तिनः नर-वाहनदत्तस्य भार्य्या अस्मासु स्थितेषु त्वया कथं परिभूयते इति एवं भगवतोक्ते अयं दुरात्मा मानसवेगो मुखेन रुधिरं वमन् धरणीतले पपात । ततस्तस्मिन् देवे तिरोहिते अशो चणात् समाश्वस्तः स्वं मन्दिरं गतोऽपि मयि क्रौर्य्ये-णैवावर्त्तत । अथ भीतां वियोगार्त्तां प्राणत्यागोन्मुखीं मामिह अन्तःपुरचेटिकाः समागत्य सान्त्वयन्त्यः समब्रुवन् पुरा कामपि रूपवतीं मुनिकन्यां दृष्ट्वा असौ मानसवेगः सहसा तां हरन् रे पाप ! अनिच्छन्तीं परनारीं बलाद्ध-रतस्ते मूर्द्धा शतधा विदलिष्यतीति तद्वचोभिर्नितरामत-प्यत । तस्मादेष बलात् परनारीं त्वां नैवाभि-गच्छेत् तद्विषादेनालम् । देवादेशाच्च ते भूयो भर्त्रा सङ्गमो-भविता इति एवं ताभिश्चेटीभिरुक्ते सा मानसवेगस्य स्वसा

वेगवती मां प्रबोधयितुमागमत्। स्वातु मद्दर्शनेन दृष्टा-तानुकम्पा मां त्वदानयनेन प्रसमाश्वास्य यथा त्वां प्राप्ता तथा ते विदितम्। अथ ज्योत्स्नासितैर्दशनैः साध्वी द्युतिरिव निर्म्मला साध्वी दुरात्मनः अस्य मानसवेगस्य भ्राता पृथिवी सौम्येन दर्शनेन सुधयेव मां सिञ्चन्ती समुपेत्य सस्नेहमिदम-ब्रवीत् वत्से! आहारं त्यक्त्वा शुभोदर्कमात्मानं कथमुपे-क्षसे? शत्रोरन्नं कथं भोक्ष्ये इति मा बुद्धिं कृथाः, अस्मिन् राज्ये मे दुहितुर्वेगवत्याः पितृकल्पितो भोगोऽस्ति, सा च ते भर्त्रा परिणीता तव सखी, तस्याश्च धनं तद्भर्त्तुः स्वक-स्मात् तव च स्वधनमेव, तदेत्य भुङ्क्ष्व, विद्याबलात् सर्व्वं ज्ञात्वा ते सत्यं वदामि। एवमुक्त्वा तया सशपथं सुता-सम्बन्धवद्या अवस्थोचित माहारं तदा भोजितास्मि। ततस्त्वया सहागत्य वेगवत्या एष निर्जितः भ्राता त्वञ्च रक्षितः नातः परमहं किञ्चिदपि वेद्मि। अथ वेगवती-सिद्धिं तच्च दैववचः स्मरन्ती अहं त्वत्प्राप्त्याशावलम्बितान् प्राणान् नामुञ्चम्। ततो महानुभावाया: प्रभावत्याः प्रभावात् त्वं शत्रुसङ्कटेऽपि अस्मिन् मयाधुना त्वं प्राप्तः। अत्र तावदियं मे चिन्ता यदि प्रभावती विलुप्ता भवेत् तव च तद्रूपं नश्येत् ततोऽस्माकं किंनु भवेदिति वादिनीं तां तस्तां मदनमञ्चुकां वीरो नरवाहनदत्तः समाश्वास्य स्वस्थामकरोत्। अथैकदा प्रभावत्यां पितृभवनं प्रया-तायां तत्सान्निध्यात् नष्टत द्रूपं तं नरवाहनदत्तं प्रभात-समये पुरुषरूपं दृष्ट्वा सर्व्वः परिजनः पारदारिक एषः कुत आगतोऽत्र प्रविष्ट इति भयाकुलः वारयन्तीमपि

भीतां मदनमञ्चुकामपास्य राजकुलं गत्वा समभ्यधात्। ततोऽसौ राजा मानसवेगोऽस्त्रबलैरन्वितः तं नरवाहनदत्तं धावित्वा समन्तात् पर्य्यवेष्टत। अथ सा माता अस्य पृथिवी देवी सत्वरमित्थं राजानमब्रवीत् पुत्र! एष मे दुहितुर्वेगवत्याः पतिः पुत्रो मे नैव ते हन्तव्यः नचासौ पारदारिकः, एष खलु वत्सराजसुतः नरवाहनदत्तः निजां भार्य्यां मदनमञ्चुकामभिगच्छति। विद्याबलेन सर्वमहं जाने कोपान्धस्त्वं किं प्रेक्षसे? अयं शशिकुलतिलको मे जामाता तव पूज्यः। एवं तयोक्ते मात्रा स मानसवेगस्तर्हि शत्रुरयं मे इति जातामर्षस्तां जगाद। ततोऽसौ माता जामातृस्नेहविह्वला तं पुनरब्रवीत् पुत्र! अस्मिन् वैद्याधरे लोके नाधर्म्मः कर्त्तुं त्वया शक्यते इह विद्याधराणां धर्म्मसभा विद्यते। तत्र यद्यस्य दोषो निर्णीयते तदास्य यत् शोभते तत्क्रियतां अन्यथा चेत् विद्याधरा विकुर्व्वीरन् तदा देवा न सहिष्यन्ते इति तस्या मातुर्वचनं गौरवात् प्रतिपद्य स मानसवेगस्तां सभां गच्छन् तं नरवाहनदत्तं वबन्ध। सच वीरो नरवाहनदत्तस्तं बन्धमसहिष्णुस्तोरणात् स्तम्भमुत्पाट्य बहून् तद्भृत्यानवधीत्। तेषाञ्च हतानां मध्यादेकस्य खड्गमाकृष्य तेन अन्यानपि दिव्यपराक्रमान् तान् जघान। ततो मानसवेगस्तं दिव्यया मायया भार्य्यासमेतं वबन्ध निनाय च तां सभाम् . तत्र सुधर्म्मायां सुराइव भेरीमहाशब्दसमाहूता बहव[illegible]ाधराः समन्ततो मिलन्तिस्म। तत्रचागत्य राजा वि[illegible]रेश्वरो वायुपथोनाम रत्नसिंहासनोपरि समुपावि[illegible] अथ स

मानसवेगः चामरैर्वीज्यमानस्य तस्य अग्रतस्तिष्ठन् पापः प्राब्रवीत् प्रभो ! मर्त्योऽयमस्मदन्तःपुरदूषकः स्वसुश्च मे छठपरिणेता शत्रुरेव तदयं यथाधर्म्ममनुशास्य इति । तदाकर्ण्य तेन सभापतिना प्रत्युत्तरं प्रति पृष्टः स वीरो नरवाहनदत्तः विस्रब्धमब्रवीत् सा सभा यत्र सभ्याः सन्ति ते सभ्याः ये धर्म्ममाहुः । स धर्म्मः, यत्र सत्यं स्यात्, तत् सत्यं यत्र न छलम् । बद्धोऽहं मायया अत्रैव भूमौ स्थितः,अयं पुन रासनस्थश्च मुक्तश्च अत्र नौ कोविवादः समः ? । एतद्वायुपथः श्रुत्वा तं मानसवेगं भूमौ उपावेशयत् तच्च नरवाहनदत्तं मानसवेगात् मुक्त मकारयत् । ततः सर्व्वेषु शृण्वत्सु स नरवाहनदत्तः वायुपथाग्रतः प्रतिवचः समभ्यधात् हृतानीतामनेन मे भार्य्यां मदनमञ्चुकां निजां प्राप्तोऽस्मि चेत् कस्त्वन्याऽन्तो मया दूषितः ? मम रूपेण विप्रलोभ्य यदि अस्य भगिन्या अहं पतिर्वृतः तत्र का मे अपराधिता ? सकामोऽस्मि चेत् कस्य कुत्र कामो न जायते ? एतद्वाकर्ण्य वायुपथो विमृश्याब्रवीत् अयं तावत् महात्मा धर्म्ममाह मानसवेग ! त्वमस्मिन् अधर्म्मं मा कृथा इति तेनोक्तोऽपि मोहान्धो अधर्म्मान्न न्यवर्त्तत । अथ तस्मिन् वायुपथे प्रस्थितुमुद्यते मानसवेगेन सह तत्र धर्म्मानुरोधिनो नरवाहनदत्तस्य सवड्सैनिकः सुमहान् संक्षोभः समभवत् । राजपुत्रो नरवाहनदत्तः तदाब्रवीत् धर्म्मासनोपविष्टा धीरा न्यायैकदर्शिनः न कदाचित् दुर्व्वलं वलिनं परं आत्मीयञ्च न जानन्ति विचारो यथा निर्णीतस्तथा आस्तां साम्प्रतं मायां विहाय मया सह स्पष्टं युध्यस्व यावदेकप्रहारेण त्वां हन्मि

पश्य मे पौरुषम् । इत्थम् अन्योऽन्यं जातकलहेषु विद्याधरेषु दिव्यकन्यकासु च पश्यन्तु सहसैव सभान्तरस्थात् स्तम्भोत्तमात् विभिन्नमध्यात् भगवान् भैरवो देवः विनिर्ययौ । व्याघ्राम्बरः अञ्जननिभः विद्युल्लता तरलदीप्त-विलोचनार्च्चिः दण्डप्रभा-विततपङ्क्तिपतङ्गाङ्को गर्ज्जन् महाप्रलयमेघ इव प्रचण्डः स देवः रे शठ! भाविनो विद्याधरचक्रवर्त्तिनोऽस्य नरवाहनदत्तस्य पराभवोनास्ति इति उच्चैराघोषयन् तं मानसवेगमधोमुखं तिरस्कारैः हर्षयामास च वायुपथम् । अथ भगवान् तं नरवाहनदत्तं रक्षणाय भुजाभ्यामादाय ऋष्यमूकं पर्व्वतं प्रापय्य स्थापयामास तिरोदधे च । अथ सभायां विद्याधराणां सम्भ्रमः प्रशशाम । वायुपथोऽपि यथागतं स्वैरनुचरैः स्वालयं जगाम । मानसवेगश्च तां मदनमञ्चुकां परतः कृत्वा समुद्विग्नः हर्षविषादाकुलितः आषाढ़पुर प्रतस्थे ।

## अथ शताधिक सप्तमस्तरङ्गः ।

मन्ये विधिः पुरुषस्य सुखदुःखयोर्धैर्य्यत्वं मुहुः परीक्षते यदेकाकं पदे पदे तं नरवाहनदत्तं विदेशेषु प्रक्षिप्य तैस्तैर्दारैश्च योजयित्वा पुनः पुनः व्ययोजयत् ।

अथ तस्मिन् ऋष्यमूकाद्रौ स्थितमेकचरं तं नरवाहनदत्तं सा प्रिया प्रभावती समागत्य अब्रवीत् नाथ! मत्सन्निधिदोषेण अवसरं लब्ध्वा मानसवेगेन दुरात्मना

गृहीतोऽभवः अहञ्च तस्य पापाभिप्रायं विदित्वा विद्याबलेन तदानीं देवाविर्भावाडम्बरं विरचय्य इह त्वामानीतवत्यस्मि नास्मिन् गिरौ बलवत्तरमपि विद्याधराणां विद्याप्रपञ्चः क्रमते सिद्धं हि क्षेत्रमिदं विद्याप्रभावोऽत्र न सिध्यति तस्मै दुःखमतीव यत् कथं त्वमत्र वन्याहारेण वत्स्यसि, इत्युक्तवत्या तया कान्तया सार्द्धं कान्ताकाङ्क्षी स नरवाहनदत्तस्तत्र तां मदनमञ्चुकां ध्यायन् तस्थौ। बुभुजे च तत्रत्यानि फलानि मूलानि सह पम्पा-सलिलैः। इत्थं वृक्षमूलेषु गुहासु च विचरन् तद्वनवासिनो रामस्य वृत्त मनुययौ। सा च प्रभावती तस्मिन् रामाश्रमान् दृष्ट्वा तस्मै रामायणवृत्तान्तं विनोदनार्थं मवर्णयत्।

इह ससौमित्रिः रामः सीतया सह तरुमूले कृतकुटीरः तापसैः सह न्यवसत्। सा च सीता अनसूयाप्रदत्तेन अङ्गरागेण आमोदित कानना वल्कलधारिणी मुनिपत्नीनां मध्ये सुखमतिष्ठत्। अत्र गुहायां बालिना दुन्दुभिर्नाम दैत्यः निहतः यत्तयोर्वानरपुङ्गवयोर्बालिसुग्रीवयोर्वैरकारणमभूत्। सुग्रीवोहि भ्रमन् दैत्येन दुन्दुभिना हतं बालिनं भ्रातरं मत्वा मां पुन राक्रमेदितिभयात् गुहाया द्वारं पाषाणैः पिधाय प्रस्थितः। ततश्च बाली तं दैत्यं निहत्य द्वारं रुद्धं दृष्ट्वा पादप्रहारेण भित्त्वा गृहमागत्य सुग्रीवं राज्यकामोऽत्र मामबध्नादिति निरवासयत्। स तु सुग्रीवः पलाय्य अस्मिन् ऋष्यमूके हनुमत्प्रभृतिभिः स्वानुचरैः सार्द्धं वासमकल्पयत्।

अथैकदा रावणोनाम राक्षसपतिः हेमहरिणव्याजेन

वञ्चित चेतसो रामस्य जानकीं जहार। ततः स रघुपतिः सीता प्रवृत्तिलाभाय बालिविधनार्थिना सुग्रीवेण सममवाप्य सख्यमकरोत्। विश्वासयामास चात्मानं समधिकबलं बालिवधसमर्थं एकेन पत्रिणा सप्त तालान् भित्त्वा। ततश्च तेन सह सुग्रीवेण किष्किन्ध्यां गत्वा हेलया एकेन मुक्तेन इषुणा तं बालिनं हत्वा सुग्रीवं तत्पदे न्यवेशयत्। अथ सीतान्वेषणार्थं सुग्रीवानुचरेषु हनुमत्प्रमुखेषु चतुर्दिशं प्रयातेषु तेन रामेण इह वर्षासु महामेघैर्विरावविभिः पतद्धाराश्रुतोयैः समदुःखैर्विरासितम्। ततश्च सम्पातिवचनात् हनुमान् तीर्णजलधिः लङ्कामेत्य सीताप्रवृत्तिं विज्ञाय राम सकाशं प्रत्याजगाम। अथ ज्ञातसीताप्रवृत्तिर्दाशरथिस्तैः कपिबलैः परिवृतोऽब्धिं सेतुना बद्ध्वा लङ्कायां गत्वा तत्र लङ्केश्वरं रावणं सवंशं निहत्य सीतामुद्दधार। आर्य्यपुत्र! इत्थं त्वमपि कल्याण मासाद्धि आयतसु धीरान् पुरुषान् स्वयं सम्पदः समायान्ति। इत्येवं कथयन्त्या तया प्रभावत्या सह नरवाहनदत्तः क्रीड़न् इतस्ततो विचरतिस्म।

एकदा पम्पायाः शोभां विलोकयन्तं तं उभे विद्याधर्य्यौ धनवत्यजिनावत्यौ दिवः समवतीर्य्य उपजग्मतुः याभ्यां स राजपुत्रः गन्धर्वपुरात् श्रावस्त्यां पुरा प्रापितः। यत्र भगीरथयशा नाम कन्या तेन पर्य्यणीयत। अथ प्रभावत्या अजिनावत्यां सख्यतो मिलितायां सा धनवती तं नरवाहनदत्त मेवमब्रवीत् एषा अजिनवती प्राक् तुभ्यं मया वाचा दत्ता तस्मादिदानीं एनां परिणय आसन्नतरो हि ते समभ्युदयः। एतत् तस्या वाक्यं सा प्रभावती सखीस्नेहाकुला

नरवाहनदत्तश्च तथेति अभ्यनन्दताम। ततो धनवत ता मजिनावतीं सुतां तस्मै वत्सेश्वरसुताय यथाविधि प्रादात्। इत्थं सा स्वविद्याप्रभावेण कल्पितसम्भारं सुतोद्वाहमङ्गलं निवर्त्त्य तं नरवाहनदत्तं प्राब्रवीत् पुत्र! न त्वया यत्र कुत्रापि चिरं स्थातुं युक्तं मायिनो हि विद्याधराः नचेह कार्य्यमस्ति ते तद्गच्छ भार्य्यायुक्तः साम्प्रतं कौशाम्बीमेव, अहञ्च चण्डसिंहेन पुत्रेण सह तत्रैवेष्यामि सहि स्वकैर्विद्याधरैस्ते अभ्युदयाय यतते। एवमुक्ता सा धनवती सितवसन प्रभया सज्योत्स्नामिव दिवापि दिवं कुर्व्वाणा समुद्ययौ। प्रभावत्यजिनावत्यौ च तं पतिं नरवाहनदत्तं नभसा कौशाम्बीमेव निन्यतुः। स च तस्यां नगर्य्यां व्योम्ना उद्यानमवतारितः स्वैः परिजनैरदर्शि। आगतोऽयं राजपुत्रः दिष्ट्या वर्द्धामहे वयं इत्येवं तत्र महान् कलकलः परिजनानां सर्व्वतः समद्भूत्।

अथाकाण्डसुधासमं वचनमाकर्ण्य राजा वत्सेश्वरः सोत्सवः प्रियया वासवदत्तया पद्मावत्या च बधूभिश्च सार्द्धं समुपागमत्। यौगन्धरायण—प्रमुखाश्च राजमन्त्रिणः कलिङ्गसेन—गोमुखादयश्च कुमारसचिवाः सर्व्वे ग्रीष्मे पथिकास्तड़ागमिव तं यथायथ मुपाजग्मुः दृष्ट्वा च तं रुक्मिणीसत्यभामाभ्यामिव ताभ्यां पत्नीभ्यां समेतं कृष्णमिव तं राजपुत्रम् आनन्दबाष्पपरीतनेत्राः सहसाभवन्। वत्सराजस्य देव्यौ च वासवदत्तापद्मावत्यौ चिरात् प्राप्तं पुत्रमालिङ्ग्य अङ्केषु कण्टकितेषु प्रोतमिव तं मोक्तुं न शेकुः। ततः आहततूर्य्ये महोत्सवे वर्त्तमाने सा नरवाहनदत्तस्य भार्य्या वेगवतः सुता मानस-

वेगस्य भगिनी वेगवती नभसावतीर्य्य सिद्धविद्याप्रभावात् विदितवृत्तान्ता समागता श्वशुरस्य श्वश्र्वाश्च पदेषु पतित्वा तं पतिं चरणयोः प्रणम्य प्राब्रवीत् नाथ! त्वत्कृते दुर्बलीभूता विद्याः पुनस्तपोवने साधयित्वा कल्याणिनस्तव पार्श्वमागतास्मि एवमुक्तवत्यां तस्यां पत्या हृष्टान्तैः प्रभावत्या अजिनावत्याचाभिनन्दितायां सा धनवती समाययौ। तदनु च विद्याधराधिपाः स्वाच्छादिताम्बरतलैः सैन्यैरिव वहैर्वृताः समाजग्मुः। तस्याश्च धनवत्याः सुतो महाभुजश्चण्डसिंहः अमितगतिर्नाम तदीयो महाबलः सुहृद्, स च प्रभावत्याः पिता महाबलः पिङ्गलगान्धारः स च पूर्वप्रतिपन्न सभापतिर्वायुपथः स च शूरो राजा रत्नप्रभायाः पिता ततश्च बलसमन्वितो वज्रप्रभः गन्धर्वराजश्च गन्धर्वदत्तया स्वसुतया समेतः स च सागरदत्तः सचित्राङ्गदः क्रमेणाजगाम। इत्थमागताश्च ते राज्ञा वत्सनृपेण यथायथ मर्च्चिताः सपुत्रेण आसनेषु समुपाविशन्।

अथ राजा पिङ्गलगान्धारो जामातरं सदसि स्थितं नरवाहनदत्तमब्रवीत् वत्स! त्वमस्माकं सर्वेषां चक्रवर्त्ती दैवनिर्म्मितः सर्वे च वयमतिस्नेहात् त्वामभ्युपगताः इयं धनवती देवी ते श्वश्रू नियतव्रता दिव्यज्ञानसम्पन्ना साक्षसूत्रा कृष्णाजिनवासा सावित्री सिद्धविद्या विद्याधरगणैः सदा वन्दिता साक्षात् भगवतीव त्वां रक्षितुं कृतप्रयत्ना वर्त्तते। तत्ते कार्य्यसिद्धिरस्ति परमिदानीं यदहं ते ब्रवीमि तत् शृणु। इह विद्याधराणां द्वौ वैभवौ हिमाचलेस्तः उत्तरो दक्षिणश्च तच्छृङ्गभूमिगतौ उत्तरस्तु कैलासात् परतः

दक्षिणस्तु अर्वाक्। तत्र उत्तराधिपत्यार्थमिदानीं मेऽमितगतिः दुश्चरं तपं कृत्वा शङ्करं पर्य्यतोषयत्। तेन च भगवता नरवाहनदत्तश्चक्रवर्त्ती ते समीहितं करिष्यतीति आदिष्टोऽयं त्वामभ्युपागतः। तत्र मन्दरदेवोनाम महान् सुदुर्मतिः नृपतिरस्ति। स खलु बलवानपि प्राप्तविद्यस्य ते नासाध्यो भविष्यति। यस्तु दक्षिणतः गौडमल्ल इति राजाध्यास्ते स हि विद्याप्रभावेण दुष्टात्मा अतिदुर्जयः स च अयञ्चास्ति मानसवेगस्य परमः सुहृत्। यावत् त्वं विद्याया पारदर्शी न भवसि तावत् तत्र ते कार्य्यं न सेत्स्यति। तदिदानीं त्वं स्वोत्कर्षसाधनं महत् विद्याबलं संसाधय। इत्थं पिङ्गलगान्धारेणोक्ते धनवती प्रोवाच पुत्र! राजा पिङ्गल-गान्धारो यथा वदति तत्तथैव, तस्मात् सिद्धक्षेत्रं गत्वा विद्यासिद्ध्यर्थमीश्वरं प्रसादय, तत्प्रसादं विना हि कुतः प्रकर्षः? अमी मिलिता राजान स्त्वामत्र रक्षन्ति। ततः पिङ्गलोऽवादीत् एवमेतत् अहं सर्वेषामेव पुरः अग्रयायी भवामि एष तावत् विजयः क्रियतामिति।

अथ तथेवेति निश्चित्य प्रस्थानमङ्गलं विधाय पित्रोरुदायोगुरुणाश्च पादौ प्रणम्य तैश्च कृताशीर्भार्य्याभिः सचिवैश्च सह अमितगते विद्याधर राजस्य प्रज्ञया कल्पितां शिविकोत्तमामारुह्य राजपुत्रः कल्पान्त पवनोद्धूत सागरसलिलनिर्भैर्बलैर्नभः स्थगयन् दिगन्तेषु सेनाकोलाहल प्रतिध्वानैः खेचराणां चक्रवर्त्ती आगत इति संवादयन्निव प्रतस्थे। क्षणेन च तैः गन्धर्वपति विद्याधरराजैर्धनवत्या च स सिद्धक्षेत्रपर्वतमनीयत। तत्र सिद्धैरादिष्टव्रतः प्रातः

शायी फलमूलभुक् भूमिशायी शङ्करमाराधयं स्तपश्चचार । ते च खेचराणां राजानः दिवानिशमतन्द्रिताः सर्वतः रक्षां कुर्व्वाणा स्वं परिचार्य्य तस्थुः । ताश्च विद्याधर-कुमार्य्यः तपस्यन्तं तं समुत्सुका नेत्रप्रभाभिः संवीत कृष्णा-जिनमिव विदधिरे । अपराः पञ्च विद्याधरकन्यकाः तं दृष्ट्वा मदनानलसन्तप्ता मिथः समयं चक्रुः । अयं पञ्चभि-रस्माभिः सखीभिर्युगपत् पतिर्वरणीयः विवाहश्च तथा भेदतो न कार्य्यः । यदि कापि अस्माकं पृथक् अनेन विवाहं कुर्य्यात् तदा अन्याभिस्तां सखीद्रुहमुद्दिश्य अग्निः प्रवेष्टव्य इति एवं तासु दिव्यासु कन्यकासु तं विभाव्य क्षुभ्यन्तीषु तत्र तपोवने सहसा महोत्पाताः प्रादुरासन् महारौद्रोवायुर्भद्रान् द्रुमानुन्मूलयन् शूरा रणे एवं पतिष्य-न्तीति वदन्निव ववौ । अत्र रणे किं स्यादिति भयादिव भूमि-रकम्पत । पर्वताश्च भीतानामवकाशदानार्थमिव व्यदीर्य्यन्त । विद्याधराः ! प्रभु यत्नतो रक्षत रक्षत इत्य ब्रवीदिव घोर-शब्दं नदन्नभस्तलम् । स तु नरवाहनदत्तः तस्मिन्नुत्पात-सम्भ्रमेऽपि भगवन्तं त्रिलोचनं ध्यायन्निष्कम्प एवासीत् । ते च वीरा गन्धर्व्वराजविद्याधरेश्वरा अनिष्टाशङ्किनः कृतसन्नाहास्तं रक्षन्तः समवतस्थिरे । वनान्ताश्च व्याधूता-सिलता अहितागमशंसिनं उत्पातान् भर्त्सयन्तइव सिंह-नादान् मुमुचः ।

ततो[illegible]भात् व्योम्नि कल्पान्ताम्बुदमेदुरं विद्या-धरवलं घो[illegible]मुच्चदृश्यत । तदा सा धनवती विद्या-

बलेन प्रोवाच वीराः! पश्यत सोऽयं गौरमुण्डः मानसवेगेन सह युयुत्सुरभ्यागत इति। ततोऽसौ गौरमुण्डः मानसवेगेन सह तान् उदायुधान् सगन्धर्व्वान् विद्याधरेन्द्रानभ्यधावत क्वायं मानुषः, क्व वयं खेचराः, तदेतत्पक्षपातिनां दर्पमद्य अपनयामीति वादिनं तं राजा चित्राङ्गदः, गन्धर्व्वाणामधीश्वरो राजा सागरदत्तश्च क्रोधात् प्रत्यभियुयोज। अन्ये च महारथाः सेनासमुदयान्विताः सिंहा इव गर्ज्जन्त स्तं पापं मानसवेग मभ्यधावन्। सैन्य रेणुभिर्घनैरिवाकीर्णं शस्त्रज्वालाभिर्विद्युद्भिरिव समुद्भासितं पतद्भिः रक्तौघै रक्तवृष्टिभिरिव समन्तात् व्याप्तं तत् युद्धं दुर्द्दिनमिवाभवत्। ते च वीराश्चित्राङ्गदादयः शोणितासवपूर्णं शत्रुशिरोवलिभिराकीर्णं भूतमहायोगमिव अकुर्व्वन्। क्रमेण कबन्धैर्ग्राहैरिव व्याप्ता आयुधैः पन्नगैरिवाकीर्णाः मेदोभिर्डिण्डीरराशिभिरिवाचिताः शोणितापगाः वहन्ति स्म। इत्थं हतसैन्यः क्षतविक्षताङ्गः गौरमुण्डः पर्व्वाराधितप्रसन्नां गौरिविद्यां सस्मार। स्मृता च सा तत्क्षणादाविर्भूय त्रिनेत्रा त्रिशूलधारिणी तान् प्रवरान् नरवाहनदत्तीयान् वीरान् अमोहयत्। ततोऽसौ गौरमुण्डः पुनर्लब्धबलः सिंह इव नदन् प्रधाव्य बाहुयुद्धाय नरवाहनदत्त मभ्यपतत्। ततश्च मायी स तां विद्यां स्मरन् बाहुयुद्धं कुर्व्वन्तं तं नरवाहनदत्तं बाह्वोरादाय खमुद्ययौ। धनवतीं विद्याप्रभावरक्षितन्तु तं हन्तुं न शशाक। परं वह्निपर्व्वते तं निचिक्षेप। सोऽपि मानसवेग स्तत् सचिवान् गोमुखादीन् गृहीत्वा गगनमुत्पत्य अनास्थया दिक्षु प्राक्षि-

यत्। तत्क्षणाच्च धनवतीप्रयुक्तया विद्यया मूर्त्तिमत्या तत्क्षिप्तास्ते रचित्वा महीतले स्थाप्यन्ते स्म। ततः सा विद्या तान् एकैकशः सिद्धकार्य्यं कुरुजिनं प्रभुं शीघ्रमाप्स्यथ इति समाश्वास्य तिरोदधे। ततो विजितमस्माभिरिति मन्यमानो गौरमुण्डः सह मानसवेगेन स्वान् गृहानगमत् ते च विद्याङ्गदादयः नरवाहनदत्तः सिद्धकार्य्यः सत्वरमेष्यति, न तस्यानिष्टमस्तीति धनवत्याभिहिता गतमोहाः स्वान् स्वान् आवासान् यथागतं जग्मुः। सा च धनवती सपत्नीभिः सहितां स्वसुतामजिनावतीं गृहीत्वा स्वं गृहं ययौ। मानसवेगश्च विजयप्रहृष्टो गत्वा तां मदनमञ्चुकां प्रोवाच सुन्दरि! स ते भर्त्ता हतः, तत् साम्प्रतं मां भजेति सापि तत्पुरस्था हसन्ती तं स एव वो हन्ता, न तस्य कश्चित् हन्ता, यतोऽसौ देवनिर्म्मित इति प्रत्युवाच। तदा कोऽपि दिव्यः पुमान् द्विषां वह्निपर्व्वते क्षिप्तं तं नरवाहनदत्तमापत्याग्रहीत् शनैश्च रचित्वा शीतं मन्दाकिनीतटम्। तेन च राजसुतेन को भवानिति पृष्टः स पुरुषस्तं जगाद देव! अहं अमृतप्रभनामा विद्याधरः। साम्प्रतं भवतो रक्षार्थं भगवता शम्भुना प्रेषितः। अयश्च ते अग्रतः स्थितः तन्निवासः कैलासाद्रिः। अत्रावाप्य श्रियं त्वं निर्विघ्नं श्रेयोऽवाप्स्यसि, तदेहि अत्र, त्वां नयामीति उक्त्वा तत्र तत्क्षणात् तं प्रापय्य आमन्त्र्य च प्रययौ। स च नरवाहनदत्त स्तं कैलासं सम्प्राप्य तपसा तदध्यक्षं विनायकं तोषयामास। आराधित प्रसन्नेन च तेन दत्ताभ्यनुज्ञः गिरिशस्याश्रमं प्रविश्य नियमक्षामो द्वारि स्थितं नन्दिनं ददर्श। स च

नन्दी कृतप्रणामप्रदक्षिणं तं दृष्ट्वा सदयः प्राब्रवीत् वत्स! प्रायः सिद्धोऽसि, अधुना ते विघ्नाः प्रशान्ताः तदिहस्थएव भगवन्तमाराधयन् मत्प्रसादात् तपश्चर। सिद्धयोहि दुरितघ्नीं तपःशुद्धिमपेक्षन्ते। इति तेन नन्दिनोपदिष्टः देवं शम्भुं देवीञ्च पार्व्वतीं ध्यायन् अनिलाशनः सुघोरं तपश्चचार।

अथ तपसा तुष्टः स भगवान् शिवस्तया गिरिजया सह प्रत्यक्षीभूय प्रह्वं तमेवमादिशत् वत्स! साम्प्रतं सर्व्वेषां विद्याधराणां चक्रवर्त्ती भव। सर्व्वातिशायिन्यश्च सर्व्वा विद्यास्ते प्रादुर्भवन्तु। मत्प्रभावाच्च त्वं शत्रूणामजेयोभविष्यसि अच्छेद्योऽभेद्यश्च सन् अखिलान् रिपून् हनिष्यसि, त्वयि च दृष्टे त्वद्विद्विषां विद्याः का अपि न स्फुरिष्यन्ति। गौरीविद्यापि त्वदधीना भविता इति यथेप्सितान् वरान् हरः ब्रह्मनिर्म्मितञ्च चक्रवर्त्तिमहापद्मविमानं तस्मै प्रादात्। ततस्तस्मिन्नेव क्षणे तस्य सर्व्वाः सविग्रहा विद्याः किमादिशसि? यद्वयं कुर्म्म इत्याज्ञासाधनोद्यताः प्रादुरासन्। इत्येवं नरवाहनदत्तः सिद्धकामः प्रणम्य भगवन्तौ जगतः पितरौ ताभ्यामनुज्ञातः तत्दिव्यं पद्मविमानमधिरुह्य सिद्धचारणगीतयशाः प्रथममेव तस्य अमितगतेश्चक्रपुराख्यं विद्याधरावेदितमार्गं पुरं प्रायात्। सोऽपि अमितगतिस्तमारूढ़विमानं नभसा प्राप्तं दूरात् दृष्ट्वा कृतप्रणतिः सहर्षं स्वगृहं प्रावेशयत्। विदिततपःसिद्धिश्च मुदा तस्मै नरवाहनदत्ताय सुलोचनां नाम स्वसुतां प्रथममुपार्थ्यैनं प्रादात्। सोऽपि नरवाहनदत्तः विद्याधरलक्ष्मीरिव

तया प्राप्तया परमप्रीतः तत्र महासम्भार समुदयं महोत्-सवं कुर्व्वन् सुखमवतस्थे।

## अथ शताधिकाष्टमस्तरङ्गः।

अथान्येद्युस्तत्र चक्रपुरे आस्थानवर्त्तिनं तं नूतनं चक्र-वर्त्तिनं नरवाहनदत्तं कश्चिद् वेत्रहस्तः पुमान् नभस्तलाद्-वतीर्य्य उपगम्य प्रणम्य च व्यजिज्ञपत् देव! मां चक्र-वर्त्तिप्रतीहारं क्रमागतं पौरुषदेवनामानं त्वमेवार्थमुपा-गतं विद्धि। तदाकर्ण्य स चक्रवर्त्ती अमितगतेर्मुखमैचत। तेन च 'सत्यमयं प्रतीहारएव' इति विज्ञप्तः स तं तथेति-प्रतिपद्य अभ्यनन्दत।

अथ प्रभातात् विदितवृत्तान्ताः सर्व्वे चण्डसिंह-पिङ्गल-गान्धार-वायुपथ-सागरदत्त-चित्राङ्गदादयः गन्धर्व्वविद्याधरे-श्वराः ताश्च सर्व्वा राजपत्न्यः धनवत्या वेगवत्या च सह सैन्यवृन्दैः संरुद्धनभसः समापेतुः। चक्रवर्त्तिनश्चापरे पर-तेजोऽसहिष्णुत्वं सूचयन्तइव समुपेत्य तस्य पादयोर्निपेतुः। सोऽपि स्वागतेन तान् यथार्हं सम्मानयामास। प्रणनाम च गौरवेण धनवत्याश्चरणौ। सापि प्रीता तं जामातर-माशीर्भिरभ्यनन्दयत्। तेन च प्रभुणा कथितसिद्धिवृत्तान्ताः सर्व्वे चण्डसिंहादयः सुतरां प्रमोदमगमन्। अथ पार्श्व-स्थिताः सर्व्वाः पत्नीर्वीक्ष्य स चक्रवर्त्ती तां धनवतीं क्व ते मे सचिवा इति पप्रच्छ। सा प्रत्यब्रवीत् वत्स! ते मानस-वेगेन नभसः क्षिप्ताः मया पुनर्विद्यया पृथक् संरक्ष्य

स्थापिताः। ततः स चक्रवर्त्ती रुपिणीं विद्यामादिश्य तानानाययत्। आगतांश्च तान् पृष्टकुशलान् पादपतितान् अभ्यधात् कथमेते दिवसाः क्कत्र युष्माभिरतिवाहिताः एकैकशः सर्व्वैः कथ्यतामिति। ततः प्रथममेव स गोमुखः स्ववृत्तान्तमाचचक्षे देव! तदा द्विषता चिप्तं मां कापि देवी हस्तयोरधात्। ततः समाश्वास्य दूरेऽरण्ये संस्थाप्य मां तिरोदधे। ततोऽहं दुःखितः प्राणान् त्यक्तुं यावदुद्यतोऽभवं तावत् कोपि तापसः समुपेत्य गोमुख! मा मैवं सिद्धार्थं प्रभुमचिरात् द्रक्ष्यसि इति सान्त्वयित्वा न्यवारयत् मया च कस्त्वं कथं एतत् वेत्सीति पृष्टः स एहि मे आश्रमं वक्ष्याम्यहं तदेवेति मां प्रत्यब्रवीत्। ततोऽहं मदीयेन नामज्ञानेनैव सूचितज्ञानसम्पदा तेन सह शान्तं तदाश्रममगच्छम्। तत्र च मां कृतातिथिसत्कारं स स्वां कथामवर्णयत्।

पुरा कुण्डिनाख्यायां पुरि नागस्वामी नाम द्विजोऽहमासम्। सोऽहं पितरि स्वर्गते पाटलिपुत्रं गत्वा विद्यार्थी तत्रस्थं जयदत्तं नामोपाध्यायमुपाचरम्। यदाहं शिक्ष्यमाणोऽपि जाड्यात् एकमप्यक्षरं बोद्धुं नाशकं तदा तत्रस्थाः सर्व्वे छात्रा मामुपाहसन्। ततोऽहमवमानेन वैराग्यमाश्रितः विन्ध्यवासिनीं द्रष्टुं प्रस्थितः पथि वक्रोलाख्यं पुरं प्रापम्। ततस्तत्र भिक्षार्थं प्रविष्टाय मह्यं कापि गृहिणी एकस्मात् गृहात् भिक्षया सह रक्तकमलमेकं ददौ। तद्गृहीत्वा अपरं गृहं तथैव भिक्षार्थं प्राप्तं मां वीक्ष्य तत्रत्या गृहिणी मात्रवीत् हा धिक्! भवान् योगिन्या

समाक्रान्तः। पश्य अनया रक्ताम्बुजव्याजेन हस्ते ते नृहस्तः प्रदत्तः। तदाकर्ण्य यावदहं पश्यामि तावत् स पाणिरेव सत्यं नाम्बुजं दृष्टम्। ततश्च तत्क्षणं तं परित्यज्य अस्याः पादयोः पतित्वा अब्रुवं मातः! कुरु कृपां यथाहं जीवामीति तदाकर्ण्य सा मामवादीत् ब्रह्मन्! इतो योजनं गच्छ ततोऽस्ति करभके ग्रामे देवरक्षित इति कश्चिद् द्विजः। तस्यास्ति कपिला साक्षात् सुरभिरिवोत्तमा गौः। सा हि अद्य शरणं प्राप्तं त्वां निशायां रक्षिष्यति। एवं तयोक्तः सभयोऽहं सत्वरं व्रजन् तस्मिन् दिनक्षये तं करभकं ग्राममासाद्य तस्य द्विजस्य गृहं प्रविष्टः तां तत्र कपिलां दृष्ट्वा प्रणम्य च देवि! त्वामहं शरणमापन्नः रक्ष मामिति व्यजिज्ञपम्।

एतस्मिन्नन्तरे सापि योगिनी अन्याभिः सह नक्तं मन्मांसरुधिरार्थिनी मां तर्जयन्ती तत्रागात्। तदालोक्य सा कपिला मां खुरान्तर्निवेश्य सर्वां निशां ता योगिनीः शोधयन्ती अरक्षत्। अथ प्रातस्तासु गतासु सा कपिला व्यक्तया गिरामामवोचत् पुत्र! नाहमद्य त्वां रक्षितुं शक्ष्यामि तद्गच्छ शीघ्रमितः पञ्च योजनानि अरण्यस्थं शिवमन्दिरम्। तत्रास्ति भूतिशिवोनाम ज्ञानी महापाशुपतः। स त्वा मेकां रात्रिं शरणागतं रक्षिष्यतीति। तदाकर्ण्य तामहं प्रणम्य ततः प्रातिष्ठे। क्रमागतं प्राणार्थी व्रजन् तं भूतिशिवं सायं प्राप्य शरणमभ्यगच्छम्। तत्रापि ता योगिन्यः नक्तं तथैवागच्छन्। ततः स भूतिशिवः मामन्तर्गृहं प्रवेश्य स्वयं त्रिशूलपाणिर्द्वारि तिष्ठन् सत्र

योगिनीर्निरभर्त्सयत्। ततश्च ताः पराजित्य प्रातर्मां भोजयित्वा स महात्मा मामवादीत् ब्रह्मन्! नाहमद्य त्वां रक्षितुं शक्ष्यामि तदितो योजनदशकेषु सन्ध्यावासाख्ये ग्रामे वसुमतिं नाम द्विजं गच्छ। तत्र तृतीयां रात्रिमद्य समुत्तीर्य्य मोक्ष्यसे इत्युक्तस्तेन तं प्रणम्य ततः प्रस्थितवानस्मि गच्छतश्चाध्वदैर्घ्यात् अन्तरा एव रविरस्तमगात्। ताश्च योगिन्यः पृष्ठतः समागत्य नक्तं मामगृह्णन्। यावच्च ता मां गृहीत्वा हृष्टा विहायसा गच्छन्ति, तावत् तासां पुरः अपरा योगिन्यः सहसा समापतन्। उद्भूच्च पक्षयोरुभयोस्तुमुलं युद्धं नभसि। तेन च तासां हस्तात् अहमतिनिर्ज्जने देशे भ्रष्टः समुत्थाय तत्र एकं अपावृतेन द्वारेण प्रविशेति वदद्दिव मां महामन्दिरमपश्यम्। तत्राहं प्रविश्य सभयं कामपि अद्भुताकारां नारीशतसेवितां प्रभया प्रदीपज्वलिताभिव प्रकाशमानां मदनुकम्पया धात्रा सृष्टां रक्षामहौषधिमिव नारीमद्राक्षम्। ततश्च क्षणं विश्रम्य समाश्वस्य च मया पृष्टा सा मामभाषत भद्र! अहं यक्षिणी सुचिरा नाम शापादिहैवं स्थिता, मानुषेण च मे सङ्गः शापशान्तये प्रदिष्टः, तन्मामशङ्कितं भजस्व मा भैषीरित्युक्त्वा चिरं दासीरादिश्य स्नानानुलेपनवसनान्नपानादिभिः मां हृष्टं पर्य्यचरत्। क्व तत् डाकिनीभ्यो भयं क्व च तत् तादृशं सुखं अचिन्त्योऽहि दैवेनापि सुखदुःखयोरागमः। ततस्तया यक्षिण्या सह तानि अहानि दिव्यं सुखमनुभवन्नतिष्ठम्।

एकदा सा स्वैरं तु मामब्रवी ब्रह्मन्! क्षीणोऽयं मे स

शाप: तदितोऽद्य व्रजामि, मत्प्रसादाच्च ते दिव्यं विज्ञानं सम्भविष्यति। तपस्वी सिद्धभोगो निर्म्ममश्च भविष्यसि, इहस्थश्च मध्यमं पुरं द्रक्ष्यसीति उक्का स सद्य एव तिरोऽभूत्। ततोऽहं कौतुकेन तत् मध्यमं पुरमारूढ़स्तत्र तुरङ्गम मपश्यम्। तेनाह मश्वेनान्तिक प्राप्त: खुरेणाहत एव क्षणात् आत्मानम् अस्मिन् शिवालये स्थित मद्राक्षम्। तत: प्रभृति तत्र स्थितोऽहं क्रमेण सिद्धिमवापम्। तदेवं मानुषस्यापि मे त्रिकालज्ञानमस्ति, इत्थं क्लेशबहुला: सतामपि सिद्धय:, तदिहैव तिष्ठ, शीघ्रमेव भीष्टसिद्धिं शम्भु र्विधास्यति। एवं तेन ज्ञानिनाभिहित: तदाश्रमे इयन्ति दिनानि त्वत्पादपद्मरागमालया स्थितोऽभवं प्रभो! अद्यतु शिवेन स्वप्नादिष्टभवत्सिद्धि: यावन्मुदमनुभवामि तावत् कयापि दिव्यया स्त्रियाहमिहानीत:। इत्येष मे वृत्तान्त इति तस्मिन् समाख्याय विरते मरुभूतिस्तं चक्रवर्त्तिनमवादीत् देव! तदा मानसवेगेन क्षिप्तं मां कापि देवता दोर्भ्यामादाय दूरे अटव्यां संस्थाप्य तिरोऽभवत्। ततोऽहं दुःखसन्तप्तः मरणोपायमेव चिन्तयन् भ्राम्यन् नदीपरिक्षिप्त माश्रममेक मपश्यम्। तत्र च प्रविश्य शिलातलोपविष्टं जटाभि:परीतं कमपि तापसं दृष्ट्वा प्रणम्यच अतिष्ठम्। ततस्तेन कस्त्वं कुत इमाममानुषीं भूमिं प्राप्त इति पृष्ट: सर्व्वं तस्मै समवर्णयम्। तत: स बुद्ध्वा मामवोचत् साम्प्रत मा आत्मानं वधी:, प्रभो र्वार्त्तां विदित्वा यथा कार्य्यं तथा करिष्यसि एवं तद्वचनात् भवद्वार्त्ताजिज्ञासया तत्र स्थिते मयि काचित् दिव्या योषि

स्नातुं तां नदी मागमन्। अथ स तापसो माम-वादीत् भद्र! गच्छ अस्या एकस्या स्नान्त्या वस्त्रमा-हर, ततः प्रनो वीर्णां प्राप्स्यसि। तदाकर्ण्य तथा कुर्वाणं मां सा बधूरन्वगात्। हृतवसना आर्द्रवस्त्रा सा नरवाहनदत्तस्य वार्त्तामाख्याय वाससी गृहाणेति तापसे-नोदिता अब्रवीत् साम्प्रतमसौ नरवाहनदत्तः हरमाराधयन् कैलासे तपस्यति अल्पैरेव दिवसै र्विद्याधरसम्राट् भविष्य-तिच एवमुक्तवती सा दिव्या योषित् शापवशात् तस्य तापसस्य भार्य्या समपद्यत। ततःस तापसस्तया विद्या-धर्य्या समं तत्रातिष्ठत्। अहञ्च तस्या वचसा प्रतीत स्त्वत्-समागमे जातास्थस्तत्रैवासम्।

अथ दिनैश्च कतिपयैः सा खेचरी सगर्भा सती तं गर्भं प्रसूयच तं तापस मब्रवीत् भगवन्! त्वत् सङ्गात् मे शापः शान्तः, भूयश्चेत् तव मत्सङ्गाभिलाषः, तदा एतं गर्भं तण्डुलैः समं पक्का भुङ्क्ष्व ततो मां प्राप्स्यसि। इत्युक्ता तस्यां प्रयातायां स तापसः तद्गर्भं सतण्डुलं पक्का भुक्ताच खमुत्पत्य जगाम। अहंतु तदुक्तोऽपि शादौ तत्राभक्षयं ततः सिद्धिमवेत्य तस्य पाकपात्रात् भक्त-सिक्थद्वयं प्राप्य अभक्षयम्। ततश्च यत्राहमष्ठीवं तत्र तत् काञ्चन मभूत् अथ तया सिद्धया अदेन्यः परिभ्रमन् एकञ्च नाम पुरमेकदा प्रागम्। तत्र वेश्यागारे स्थितस्य उदार-व्ययशी लस्य मे तत्रत्या कुट्टनी छलात् जिज्ञासुर्वमनं प्रादात्। तेन च वमतो मे भास्वत्पद्मरागनिभे उभे प्राग्भुक्ते भक्तसिक्थे तेमुखात् निरगच्छताम्। निर्गते च ते तया कुट्टन्या गृहीत्वा

भवितेऽ। अथ सा मे हेमशिखिनष्टा कुट्टन्याहृता। मन्ये स चन्द्रचूड़: शिव: सच सकौस्तुभो हरि: कुट्टन्या गोचरे अद्यापि न पतित:, येन ताभ्यामद्यापि तादृशं भूषणरत्नं परिरक्ष्यते। किञ्च एष ईदृगेव बहुच्छल: वञ्चनार्थ: संसार: य: समुद्र इव कदापि केनापि परिच्छेत्तुं न शक्यते इत्यहं विमृशन् निर्विघ्न: त्वत्प्राप्तये तपसा देवीमाराधयितुं चण्डिकागृहमगच्छम्। तत चिरात्रोपोषितं मां देवी स्वप्ने समादिशत् वत्स! स ते स्वामी साम्प्रतं सिद्धकाम:, गच्छेदानीमिति एतदाकर्ण्य यावत् प्रबुद्धोऽस्मि तावत् कयापि देव्या त्वत्पादमूलमानीत:। इत्येष मे वृत्तान्त: इत्युक्तवचनं कुट्टन्या विड़म्बितं मरुभूतिं स नरवाहनदत्त: पार्श्वचरै: सार्द्धं जहास।

ततो हरिशिखोऽवादीत् देव! तदा रिपुणाक्षिप्तं मां कापि देवी रक्षित्वा उज्जयिन्यां न्यधात्। तत्राहं भृशदु:खित: देहं त्यक्तुमिच्छन् निशागमे श्मशानं गत्वा तत्र पतितै: काष्ठैश्चितामरचयम्। ततस्तां प्रज्वाल्य तत्राग्निं पूजयन्तं मामुपेत्य तालजङ्घो नाम भूतपति रभ्यधात् किमर्थमग्निं प्रविशसि? स ते प्रभु: जीवन् तिष्ठति। पूर्णकामेन तेन त्वं सङ्गमाप्स्यसि। इत्थं स क्रूरोऽपि मां मरणात् न्यवारयत्। ग्रावाणोऽपि अभिमुखे विधौ आर्द्रतां भजन्ते। ततोऽहं देवाग्रे गत्वा तपस्यन् कियन्तं कालं स्थित: ततश्च प्रभो! कयापि देवतया अद्य ते पार्श्वमानीतोऽस्मि। इत्थं हरिशिखेन तथान्यैश्च क्रमात् अभिहिते असौ चक्रवर्त्ती नरवाहनदत्त: अमितगतेर्वचसा रामहर्त्तीं

विद्याधरार्च्चितां धनवतीमनुरुध्य तेभ्योऽपि स्वसचिवेभ्यः सर्व्वा स्त्रियो अदापयत्। ताः सर्व्वेषु तेषु सचिवेषु विद्याधरीभूतेषु अधुना ययुन् जयेति धनवत्यादिष्टः स चक्रवर्त्ती शुभेऽहनि सैन्यानां गोविन्द-कूटं नाम गौरमुण्डपुरं प्रति प्रयाणमादिशत्।

अथ तत् विद्याधरबलं छन्नार्कं वैरिभिरिष्टकरं शनैः प्रचचाल। नरवाहनदत्तोऽपि स्वयं कर्णिकामारुह्य ताश्च सर्व्वा भार्य्याः विमानस्य केसरेषु आरोप्य सुहृदश्चण्डसिंहादीन् पुरःसरान् विधाय विजयाय नभसा प्रतस्थे। गच्छंश्च अर्द्धपथप्राप्ते धनवतीगृहे सानुगस्तस्थौ। तत्र मातङ्ग-पुराख्ये धनवती—नगरे तया सस्नेहमभ्यर्चितः द्वौ विद्या-धरेन्द्रौ गौरमुण्डमानसवेगौ प्रति युद्धाह्वानाय दूतमेकं व्यस-र्जयत्।

अथान्येद्युस्तत्र मातङ्गपुरे पत्नीः सर्व्वा निधाय द्युचरैः राजभिर्युतः गोविन्दकूटं प्रति प्रायात्। तत्र युद्धायायातौ तौ गौरमुण्डमानसवेगौ तं चण्डसिंहादयः प्रथमं प्रत्यगृह्णन् प्रवृत्ते च समरे पतत्सु वीरेषु स गोविन्दकूटाद्रिः स्रवद्-रुधिरनिर्झरः रक्तलिप्तलताजिह्वः समन्तात् व्यशोभत। वेतालास्तालतज्ञाश्च समन्ततो मांसासृग्लालसाः परि-भ्रमन्तिस्म। कबन्धाश्च समुत्पतन्तो नर्त्तनैर्भूतानां महो-त्सवं व्यतन्वन्।

अथ स नरवाहनदत्तः रणे तं मानसवेगं सम्मुखागतं दृष्ट्वा क्रुद्धा समभ्यपतत्। अभिपत्य च तत्क्षणं तं केशेष्वा-क्रम्य खड्गेन शितधारेण चिच्छेद। तद्दृष्ट्वा कोपेन प्रधावितं

गौरमुण्डं तद्दर्शनैव नष्टविद्यावलं तथैव केशेषु गृहीत्वा भुवि निक्षिप्य पुनरङ्घ्रियुगे गृह्णन् नभसि भ्रामयित्वा शिलायामचूर्णयत्। इत्थं तयोर्गौरमुण्डमानसवेगयोः तत् भीमं बलं दृष्टप्रभुनाशं भयेन पलायाञ्चक्रे। तदा च तस्य चक्रवर्त्तिनः शिरसि पुष्पवृष्टिः पपात। गगनस्थिता देवाश्च सर्वे साधु साध्विति प्राब्रुवन्। अथ विद्याधरचक्रवर्त्ती नरवाहनदत्तः सर्वैः सहचरैः राजभिः सचिवैश्च सह गौरमुण्डराजधानीं विवेश। तदैव गौरमुण्डानुयायिनः सर्वे विद्याधराः प्रणतास्तस्य शासनं प्रतिपेदिरे।

ततोऽसौ श्वश्रूर्धनवती निहताराति तं सम्राजमुत्सवेषु चलत्सु व्यजिज्ञपत् देव! अस्ति गौरमुण्डस्य त्रैलोक्यसुन्दरी सुता, तां सुकन्यकामिदानीम् उपयच्छस्व। इत्युक्तः स चक्रवर्त्ती तत्क्षणं तामानाय्यैव उपयेमे अनुवभूव च तया सह तदहः परमं सुखम्। प्रातश्च स वेगवती-प्रभावत्यौ विसृज्य मानसवेगस्य पुरात् तां मदनमञ्चुकामानाययत्। सा तु मदनमञ्चुका समानीता हर्षाश्रुविकस्वरमुखी उदयस्थं निहताराततिमसं वीरं तं पतिं विरहदोषान्ते विलोक्य अवश्यायजलोत्फुल्लकमला नलिनीव परां मुदं प्रपेदे। सोऽपि सम्राट् तस्यै तदा सर्वा विद्याः प्रदाय प्राप्तविद्याधरत्वया तया सह तत्र सुतरां रेमे। तत्र गौरमुण्डपुरोद्याने स्थितः स सर्वाभिर्भार्याभिः सह पानादिमहोत्सवं विदधत् तानि तानि अहानि निनाय।

अथ स नूतनः सम्राट् प्रभावतीं विसृज्य भगीरथयशां

समानयत् अददाच्च तस्मै विद्याः। एकदा आस्थानवर्त्तिनं तं समुपेत्य द्वौ विद्याधरौ व्यजिज्ञपतां देव! आवामुत्तरवेदार्द्धमितो गतौ धनवतीगिरा मन्दरदेवस्य चेष्टितं ज्ञातुम्। तत्रास्थानगतः स विद्याधरेश्वरः आवाभ्याम् प्रच्छन्नदेहाभ्यां युष्मान् प्रति ब्रुवन् दृष्टः। श्रुतञ्च तस्य वचनं येन गौरमुण्डादयो निहता नरवाहनदत्तेन प्राप्तविद्याधरपदेन, सोऽस्माभिर्नोपेक्ष्यः रिपुः सः अवश्यमेव हन्तव्य इति तदेतदाकर्ण्य वक्तुं भवदन्तिकमागतौ स्वः। इति चारमुखात् वचः श्रुत्वा स नरवाहनदत्तः सुभृशं चुकोप। सा च सभा पद्मिनी वानिलाहता कोपाकुला अत्यर्थं चुक्षोभ। चित्राङ्गदस्य बाहू द्वौ विधुतप्रसृतौ वलयानस्वनै र्योद्धुमादेशमिव अमार्गताम्। अमितगतेश्च वक्षस्युत्फलन् हारः क्रुधा उत्तिष्ठ वीर! उत्तिष्ठ इतीव मुहुरब्रवीत्। पिशङ्गजान्धारः करेण भूमिं सशब्दं ताड़यन् वैरिणां चूर्णनोपक्रममिव व्यधत्त। वायुपथस्य मुखे भ्रूकुटिः कामेनारोपिता चापलतेव विद्विषाम् अन्ताय पदमादधे। चण्डसिंहः संक्रुद्धः पाणिना पाणिं प्रमर्दयन् एवं शत्रून् विनिर्मथामीति अभ्यधादिव सागरदत्तस्य बाहुः आस्फालनजन्मना शब्देन व्योम्नि मूर्च्छन् तं रिपुमाह्वयतीव। नरवाहनदत्तस्तु सकोपोऽपि अनाकुल आसीत् महतामक्षोभ्यतैव महत्व लक्षणम्। अथ स खेचरचक्रवर्त्ती तं शत्रुं जेतुं यात्रायै निश्चयं कृत्वा तथैव सभार्य्यः सचिवैरन्वितः विमानमारुरोह। ते च सर्वे गन्धर्वविद्याधरपतयः सबलाः परिवृत्यैनं चन्द्रमिव ग्रहाः प्रचेलुः। धनवती च तेषां पुरतः

प्रायासीत्। क्रमेण हिमाचलं प्राप्तः स सम्राट् सितपद्मो-च्छ्रितच्छत्रम् उन्नसहंसचामरं सम्राड्योग्यमुपायनमादाय उपस्थितमिव अभिमुखोड्डीयैर्वीचिहस्तैरदूरात् असकृत् साम्राज्यसंसिद्धिस्नानाह्वानमिव कुर्वत् महदेकं सरो ददर्श। देव! सरस्यस्मिन् स्नातव्यं भवतीति वायुपथेनोक्तः स स्नानार्थं तत्रावातरत्। नात्र अचक्रवर्त्तिनः स्नानं सिध्यति, ततश्च ते चक्रवर्त्तित्वं सिद्धमिति दिव्या वाक् तदोदचरत्। तदाकर्ण्य स चक्रवर्त्ती सम्प्रहृष्टः तज्जलान्तरेषु अन्तपुरिकाभिः सार्द्धं जलाधिपतिरम्बुधाविव चिक्रीड़। ननन्द च पश्यन् धौताञ्जनदृशः श्लथधम्मिल्लबन्धनाः अङ्गलग्नार्द्रवाससः प्रियाः। तासाञ्च महिलानां वदनाम्भोजलावण्यनिर्जितानीव पङ्कजानि जलोर्मिषु निमज्जन्ति स्म। अथ कृतस्नानः स तस्यैव सरसस्तटे सपरिच्छदः नर्म्मकथालापकोविदैरनुचरैर्विनोद्यमानस्तद्दहरवात्सीत्। प्रातश्च समुत्थाय विमानारूढ़ः सबलः प्रस्थितः पथि वायुपथस्य पुरं प्राप्य तदनुरोधेन तत्रैकं वासरमुवास। तत्र तेन दृष्टचरा वायुपथस्वसा वायुवेगयशा नाम कन्या उद्यानवर्त्तिनी अभ्यवाञ्छत। सा तु हैमवालुकनदीतीरोद्यानविहारिणी सम्पूर्णसौम्यवदना सौम्यालापमनोहरा सितहासा गुरुश्रोणी कन्या तमागतं वीक्ष्य तदनुरक्तहृदयापि अन्तर्दधे। अथ सम्राट् नरवाहनदत्तः किञ्चिद् विलक्षः तां हैलक्षरपराङ्मुखीं मत्वा निजावासमाययौ। तत्र गोमुखवैदग्ध्यवशेन मरुभूतिना सह स्थितेन राज्ञो वृत्तं तदुपलभ्य दिव्याश्रिताः परिहासाश्चक्रिरे। मरुभूते-

रवैदग्धयात् सत्रपो गोमुखः तं सलज्जं राजानं वीक्ष्य समाश्वास्य च वायुवेगपथायाश्चित्तं जिज्ञासुस्तस्य वायुवेगस्य पुरमगात्। ततो वायुपथः अकस्मात् पुरं द्रष्टुमिवागतं तं दृष्ट्वा प्रीत्या कृतातिथ्य एकान्ते नीत्वा जगाद सखे! वायुवेगयशानाम कन्या मम भगिनी अस्ति। सा किल सिद्धैः चक्रवर्त्तिमहिषी भाविनीति समादिष्टा, अतस्ताम् इह चक्रवर्त्तिने प्राभृतं दित्सामि, तत्त्वं मे अभीप्सितं संसाधय। एतदर्थमेवाहं तवान्तिकमागत इति स गोमुखो मन्त्री तं वायुपथमब्रवीत् यद्यपि प्रभुरयं नः जिगीषार्थं प्रवृत्तः, तथापि त्वमेतत् विज्ञापय, अहमपि सिद्धौ यते, इति तमुक्त्वा आमन्त्र्य च प्रभुसमीपं गत्वा तस्मै सिद्धं कार्य्यं विनाभ्यर्थनां न्यवेदयत्।

अथान्येद्युरागत्य वायुपथे तमर्थं स्वयं विज्ञापयति धीमान् स गोमुखस्तं राजानमब्रवीत् देव! वायुपथस्य त्वयाभ्यर्थनभङ्गो न कार्य्यः, भक्तोऽयं यत् ब्रवीति तत्त्वया अवश्यं कार्य्यमिति। ततः स सम्राट् तथेति प्रतिपेदे। वायुपथोऽपि तस्मै स्वां कनीयसीं भगिनीमानीय अनिच्छन्तीमपि प्रादात्। सा तु विवाह्यमानावोचत् अहमनिच्छन्ती भ्रात्रा बलात् दत्ता इति, तदत्र लोकपाला! मे नाधर्म्मः, एतत् ब्रुवत्यां तस्यां सर्वास्ता वायुपथाङ्गनाः तथा कोलाहलं चक्रुर्यथा तद्वचः न तत्रत्याः केऽपि शुश्रुवुः। ततो राज्ञस्तपाकरं तद्वाक्यं श्रुत्वा तदाशयलब्धये स गोमुखो युक्तिमन्वेष्टुमितस्ततोऽभ्रमत्। भ्रमंश्च एकान्ते विद्याधरकुमारिकाश्चतस्रः युगपत् अग्निप्रवेशं कर्त्तुमुद्यताः सम-

पश्यत्। तेन च कारणं पृष्टास्ताः सुमध्यमाः तस्मै वायु-वेगयशाकृतं समयोल्लङ्घनं कारणमाचख्युः। ततः स गोमुखो गत्वा सर्वसन्निधौ नरवाहनदत्ताय यथा वस्तु न्यवेदयत्। तदुक्ता राज्ञि विस्मिते वायुवेगयशा जगाद आर्य्यपुत्र! उत्तिष्ठ, सत्वरं गच्छामः वयं ताः कुमारिका रक्षितुं, ततोऽस्य कारणं वक्ष्यामीति। एवमुक्तः स चक्रवर्त्ती तत्र सर्वैः समं ययौ ददर्श च ताः कुमारीः पुरः प्रज्वलितानलाः ततश्चैता विधार्य्य वायुवेगयशा राजानमब्रवीत् एषा कालिका नाम कालकूटपतेः सुता, द्वितीयेयं विद्युत्पुञ्जा नाम विद्युत्पुञ्जस्य विद्याधरराजस्य तनया, एषा च तृतीया मन्दरस्य सुता मानङ्करी नाम, चतुर्थीयञ्च महादंष्ट्रस्य सुता पद्मप्रभा नाम, अहञ्च पञ्चमी एता वयं त्वां दृष्ट्वैव सिद्धक्षेत्रे तपस्यन्तं मारमोहिताः मिथः समयमकार्ष्म। यथा पञ्चभिरेवास्माभिरयं प्रियः पतिर्युगपत् वरणीयः, अस्माकमेकया भिन्नया नास्मै आत्मार्पणीयः, यदि काचित् पृथक् एनं परिणयेत् तदा सखोभिरहं तामुद्दिश्य अपराभिर्वह्निप्रवेशः कार्य्य इति। एतत्समयभीताहं पृथक् परिणयं नैच्छं न चाधुनापि आर्य्यपुत्र! तुभ्यमात्मा समर्प्यते, लोकपाला एवात्र साक्षिणः यदि स्वेच्छया एषः समयो मयोल्लङ्घित इति तदार्य्यपुत्र! ता एता मे सखी रुपयच्छस्व। सख्यः! युष्माभिरेतत् भावनीयं नान्यथा। एवं तयोक्ते ताः सर्व्वाः कुमार्य्यो मरणोत्तीर्णा मिथः समाश्लिष्य परां मुदमाययुः। राजापि विदितवृत्तान्तोऽन्तर्जहर्ष। तत्पितरश्च विदितवृत्तान्तास्तत्क्षणं तत्राययुः

प्राहुश्च नरवाहनदत्ताय ताः सुता यथार्हम्। प्रतिपेदिरे च तत्क्षणं जामातुः शासनम्। इत्थं ताः पञ्च महाविद्याधरात्मजाः प्रतिपद्य नरवाहनदत्तः परमं माहात्म्यं प्राप। तस्थौ च तत्र ताभिर्जायाभिः कतिपयान्यहानि।

ततः सेनापतिर्हरिशिखस्तमुवाच देव! शास्त्रज्ञोऽपि कथं नीतिमुल्लङ्घ्य वर्त्तसे? अयं तावत् विग्रहावसरः न तु कामभोगावसरः; क्वायं मन्दरदेवं जेतुं यात्रासमुद्यमः, क्व चैयन्ति दिनानि पथि अन्तःपुरिकाभिस्ते विहारः, एवं हरिशिखेनोक्तो महाराजो नरवाहनदत्तः सस्मितं तमुवाच सखे! युक्तमुक्तं परं नात्र भोगाय मे प्रयत्नः, एष मे भार्य्याव्यतिकरो हि मित्रलब्धिप्रदः। एष चारिमध्ये मुख्योपाय इत्यभिनन्दितो मया, तदद्य एतानि सैन्यानि मे अरिजयाय चलन्तु इत्युक्तवचनं तं श्वशुरो मन्दरोऽब्रवीत् देव! असौ हरदुर्गमभूमिगो मन्दरदेवः असिद्धचक्रवर्त्त्यङ्ग सर्वरत्नस्य ते दुर्जयः। असौ हि देवमायो महावीरः रक्षितद्वारया अग्रवर्त्तिन्या त्रिशीर्षाख्यया गुहया नियतं रक्ष्यते, सा तु गुहा सिद्धरत्नेन चक्रवर्त्तिना आक्रम्या, नान्यैरिति तत् चक्रवर्त्तिरत्नं चन्दनतरुरस्यां भुवि अस्ति, तत्तम् अभीष्टसिद्धये संसाधय, चक्रवर्त्तिनं विना कोऽपि तस्य पादपस्यान्तिकं गन्तुं न शक्नोति। इत्थं मन्दरात् श्वशुरात् श्रुत्वा स चक्रवर्त्ती रात्रौ निराहारो दत्तव्रतः तं चन्दनद्रुमं प्रति प्रागात्। गच्छंश्च स वीरो बहुभिर्विघ्नैः सुदारुणैर्विभ्राम्यमाणोऽपि न तत्रास प्राप च तन्महातरोर्मूलम्।

ततस्तं महारत्नविबद्धोत्तुङ्गवेदिकं दृष्ट्वा अभ्येत्य सोपानैरारुह्य च तं चन्दनद्रुमं ववन्दे ।

अस्मिन्नवसरे अशरीरिणी वाक् तमभ्यनन्दयत् चक्रवर्त्तिन् ! अयमहं चन्दनद्रुमस्ते सिद्धः, स्मृतश्च समये त्वत्सन्निधिं यास्यामि, साम्प्रतमितो व्रज गोविन्दकूटम् अन्यानि च ते रत्नानि सेत्स्यन्ति । ततस्त्वं हेलयैव तं मन्दरदेवं विजेष्यसे इति । ततः स महाविद्याधरपतिर्नरवाहनदत्तः शिद्धिमान् तथेति तं पादपं प्रणम्य प्रहृष्टो गगनवर्त्मना स्वं कटकमाययौ ।

अथ तां निशां नीत्वा प्रातरास्थाने सर्वसन्निधौ तं नैशं चन्दनपादपसाधनवृत्तान्तमाचख्यौ तदाकर्ण्य सर्वाः मेयस्यः कुमारसचिवा आप्ता विद्याधराः वायुपथादयः सानुचराः चित्राङ्गदादयश्च ते गन्धर्वाः तन्महासिद्धिलाभात् प्रहर्षाकुलाः तस्य चक्रवर्त्तिनः सत्त्वोत्साहधृतिप्रभावमहतीं धीरतामस्तुवन् । अथ राजा तैरनुचरैः सह सम्मन्त्र्य तं मन्दरदेवं विजेतुं दिव्यविमानहारी गोविन्दकूटगिरिं प्रति प्रायात् ।

---

## अथ महाभिषेकोनाम पञ्चदशोलम्बकः ।

## अथ शताधिकनवमस्तरङ्गः ।

अथामृतप्रभो नाम विद्याधरः तत्र गोविन्दकूटे आस्थानवर्त्तिनं तं चक्रवर्त्तिनं नरवाहनदत्तं नभसा समा-

जगाम। येनैष चक्रवर्त्ती पूर्वं भ्रमुधिमोऽग्निपर्वतात् संरक्षितः। स चागत्य आवेदितात्मा प्रणतश्च चक्रवर्त्तिना तेन कृतातिथ्यस्तं सम्राजमब्रवीत् देव! अस्ति दक्षिणस्यां दिशि मलयो नाम महागिरिः। तत्र कस्मिंश्चिदाश्रमे वामदेवो नाम मुनिरधिवसति। स खलु त्वामेकाकिनं कस्यापि कार्य्यस्य हेतोराह्वयति, प्रेषितश्च तेनाहं तदर्थं त्वत्समीपमद्य। त्वं हि मे पूर्वार्जितः प्रभुः, तेन चास्मि आगतः। तदेहि शीघ्रं सिद्धये तस्य गुरोरन्तिकं गच्छावः। एवमुक्तवता तेन विद्याधरेण सार्द्धं स नरवाहनदत्तः तत्रैव सर्वास्ताः कान्ताः सेनाश्च स्थापयित्वा नभसा समुत्पत्य त्वरितं मलयगिरिमासाद्य च तमृषिमभ्यगच्छत् अपश्यच्च तं जरसा पाण्डुरं प्रांशुविग्रहं निर्मांसनेत्रकुहरस्फुरत्ताः रकं विद्याधरेन्द्ररत्नानां निधिम्। उपेत्य च तं चरणयोर्वन्दमानं राजानं स मुनिः कृतातिथ्यः समभ्यधात् वत्स! पुरा दग्धोऽपि कामस्त्वं रत्यनुनयतुष्टेन शम्भुना सर्वविद्याधराणां चक्रवर्त्ती विनिर्मितः। तदाश्रमे ममास्मिन् गुहान्तरे सन्ति रत्नानि भूयांसि, तानि मत्प्रदिष्टानि त्वं साधय, सिद्धरत्नेन त्वया स हि मन्दरदेवो जेय इति गिरिशादेशेन त्वं मयाहूतः इति। इति तेन मुनिनाभिहिते स सम्राट् तदुपदिष्टविधिः प्रहृष्टस्तां गुहां प्राविशत्। प्रविश्य च स वीरस्तान् तान् विघ्नान् विजित्य अभिधावन्तं मत्तं सस्तनगर्जितं गजेन्द्रं ददर्श। स च सम्राट् मुखे तस्य मुष्टिप्रहारं दन्तयोश्च पादौ दत्त्वा लीलया तं मत्तगजमारुरोह। तदा साधु सिद्धं ते चक्रवर्त्तिनो महा-

गजरत्नम् इति वाणी गुहामध्यादशरीरा प्रादुरभूत्। ततः सः अहीन्द्रनिभं खड्गं दृष्ट्वा निपत्य च चक्रवर्त्तित्वलक्ष्म्या केशपाशमिव तमग्रहीत्। अरिन्दम! साधु ते खड्गरत्नं जैत्रं सिद्धमिति पुनर्वाक् गुहान्तरादुदचरत्। ततः स कामिनीरत्नं चन्द्रिकारत्नं विध्वंसिनीं नाम विद्यारत्नञ्च समसाधयत्। इत्यञ्च कार्य्यकालोपयुक्तानि रत्नानि माहात्म्यप्रदानि सप्त साधयित्वा तस्या गुहाया निर्गतः तस्मै वामदेवाय मुनये सिद्धं सर्वं शशंस। ततः स मुनिस्तं चक्रवर्त्तिनं प्रीत्याब्रवीत् पुत्र! महाचक्रवर्त्तिरत्नयुतः सिद्धोऽसि तत्साम्प्रतं व्रज, जय तं मन्दरदेवं कैलासपर्वतोत्तरपार्श्ववासिनम्। भुङ्क्ष्व च तदुभयपार्श्वयोः समूर्जितां साम्राज्यलक्ष्मीम्। इति तेन मुनिनोक्तः सिद्धकार्य्यः तं मुनिं प्रणम्य तेनाश्वतप्रभेण सह नभसा समुत्पतन् क्षणेन गोविन्दकूटस्थं स्वं महाप्रभावया श्वश्र्वा धनवत्याभिरचितं शिविरमासदत्। तत्र मार्गोन्मुखैर्निजैर्विद्याधराधिपैः भार्य्याभिः सचिवैश्च प्रहृष्टैरभिनन्दितः समुपविश्य पृच्छद्‌भ्यस्तेभ्यः आवामदेवदर्शनात् रत्नसिद्धिवृत्तान्तं सर्वमशंसत्। ततस्तत्र सानन्ददिव्यतूर्य्यः नृत्यद्विद्याधरीसार्थः पानमत्तजनः सुमहान् उत्सवः समुदभूत्।

अथान्येद्युः रिपुस्थानस्थिता सौम्यग्रहेण आक्रान्तकण्ठकास्थान सौम्येन स्वसमर्द्धिना सर्वसम्पद्युक्तेन लग्नेन कृतमङ्गलः तत् शम्भुदत्तं ब्रह्मनिर्मितं विमानं समारुह्य ससैन्यः सपरिवारः नभसारिजयाय प्रतस्थे। ते च भुक्त-

पीता गन्धर्वविद्याधराधिपतयः प्रवीराः सेनापतेर्हरिशिखस्य आदेशानुवर्त्तिनः तं परिवार्य्य प्रतस्थिरे। सुमेधसा माता धनवत्या युतश्चण्डसिंहः पिङ्गलगान्धारः वायुपथः विद्युत्पुञ्जः अमितगतिः कालकूटपतिः मदनः महादंष्ट्रः अमृतप्रभः सागरदत्तः चित्राङ्गदः एते महाबलाः प्रवीराः सानुचराः गौरमुण्डजयलब्धाश्च तदाश्रिता वीराः सर्वे जिगीषुं तं सम्राजमन्ववर्त्तन्त। इत्थं तत्सेनाभिर्गगने समाच्छन्ने भास्करः तत्तेजसा विजितप्रभ इव लज्जया निमिमील। अथ देवर्षिसेवितं मानसं सरः समुल्लङ्घ्य दिव्ययोषितां लीलोद्यानं गण्डशैलञ्च अतीत्य स चक्रवर्त्ती स्फटिकापाण्डरत्विषः निजयशोराशेरिव कैलासभूभृतः मूलं संप्राप। तत्र मन्दाकिनीतीरनिषण्णं तं विद्याधराधिपतिर्धीमान् मन्दरः मधुरं वचः प्रोवाच देव! इहैव देवनदीतटे अद्य स्थीयतां न युक्तमिमं कैलासमुल्लङ्घ्य अग्रतो गन्तुम्। हरनिवासस्यास्य लङ्घनात् सहसा विद्या भ्रश्यति। त्रिशीर्षगुहया अस्य उत्तरं पार्श्वं गन्तव्यम् अत्र च देवमायो नाम राजास्ति स चातिदृप्तः, तमजित्वा कथं वा गम्यते? इति मन्दरेण एवमुक्ते धनवत्या चानुमोदिते नरवाहनदत्तस्तत्रैव तं वासरमनैषीत् व्यसर्जयच्च साम्ना तं देवमायं प्रति दूतम्। स च साम्नैवास्य शासनं न प्रत्यपद्यत।

ततोऽपरेद्युः स चक्रवर्त्ती सन्नद्धैस्तैस्तै राजभिः सह तं देवमायं प्रति प्रचचाल। देवमायोऽपि तद्विदित्वा ससैन्यो वराह वज्रमुष्ट्यादिभिर्बहुभिः राजभिः परिवृतो

योद्धुमागमत् । ततस्तत्र कैलासे तयोः सेनयोर्महान् संग्रामः प्रावर्त्तत । सुरगणाः विमानैरम्बरं छादयामासुः । छिन्नैर्बहुभिः शिरोभिः करकावर्षैरिव भीषणः सवीरगर्जितः सुघोरो घनागम इव रणः प्रववृते । देवमायस्य सेनान्यम् अग्रयोधिनं वराहं चण्डसिंहो यत् जघान तदद्भुतं न चित्रमिदं यत् देवमायः स्वयं नरवाहनदत्तेन प्रहारैः रणे मूर्च्छितो बद्धः शत्रुहस्तमाययौ तस्मिंश्च बद्धे तत् सैन्यं वज्रमुष्टि-महाबाहु तीक्ष्णदंष्ट्रादिभिर्महारथैः सह अभज्यत । ततः सुरैर्विमानस्थैः साधु साधु इत्युदीरिते सर्वेऽपि जयिनं तं चक्रवर्त्तिनम् अभिननन्दुः । अथ तं संयतानीतं देवमायं महाराजो नरवाहनदत्तः समाश्वास्य प्रसादेनानुजग्राह मुमोच च । सोऽपि निर्जितः वज्रमुष्ट्यादिभिः सार्द्धं प्रणतस्तस्य चक्रवर्त्तिनः शासनं प्रत्यपद्यत । ततो निवृत्ते संग्रामे प्रातरास्थानगतः पार्श्वस्थः तेन चक्रवर्त्तिना पृष्टः तत्त्रिशीर्षगुहावृत्तान्तं देवमायो यथातत्त्वमकथयत् देव ! पुरा कैलासस्य विद्याधराश्रिते द्वे पार्श्वे दक्षिणोत्तरे भिन्नसाम्राज्ये अभूताम् । देवेन शम्भुना तुष्टेन पुरा ऋषभो नाम एतयोः द्वयोरेव पार्श्वयोश्चक्रवर्त्ती प्रदिष्टः । स कदाचित् उत्तरं पार्श्वं गन्तुं कैलासं लङ्घयन् अधस्थित हरक्रोधात् भ्रष्टविद्यो दिवोऽपतत् । ततः स पुनरतिकठोरेण तपसा समाराधितं हरं प्राग्वदादिष्टसाम्राज्यं व्यजिज्ञपत् देव ! कैलासोल्लङ्घनं न तावदस्ति तत् केन पथा गत्वा उभयोश्चक्रवर्त्ती भवामीति । तदाकर्ण्य अस्य उत्त-

रपार्श्वे गमनाय पिणाकी कैलासं भित्त्वा एकं महाविवरं चकार। अथ विद्धः स कैलासः उद्विग्नः तं हरं व्यज्ञापयत् भगवन्! मानुषागम्य मेतत् मे पार्श्वमुत्तरं परमनया गुहया तेषामपीदानीं गम्यं कृतम्। तदत्र तथा मर्य्यादां कुरु, येन सा मर्य्यादा न केनापि भज्यते एवं कैलासेन विज्ञप्तो हरः गुहायामस्यां दिग्दन्ति हस्तिषाहीन्द्र गुह्यकान् रक्षकान् तथा अस्य दक्षिणे द्वारि महामायं विद्याधरेश्वरम् उत्तरे च कालरात्रिम् अपराजितां चण्डिकां स्थापयामास। इत्थं स शङ्करः कृतगुहारक्षः महारत्नानि समुत्पाद्य तत्र व्यवस्थामकरोत् यः तेषु रत्नेषु सिद्धः, तेनैव चक्रवर्त्तिना इयं द्विपार्श्वी गम्या, नान्यस्य कस्यचिदपीति समादिष्टवति त्र्यम्बके स ऋषभः साम्राज्यं कुर्वन् परमेण सुखेन कालमनैषीत्। न हि ऐश्वर्य्यमत्तेषु चिरं तिष्ठन्ति श्रियः। स हि ऐश्वर्य्यदर्पात् कदाचित् देवैः सह युयुधे निजघ्ने च देवेन्द्रेण। प्रभो! इत्येषा अस्यास्त्रिशीर्षाख्याया गुहायाः प्रवृत्तिः, भवन्तं विना एषा अन्यैरगम्या। तस्याश्च गुहाया द्वाररक्षिणो महामायस्य कुले जातो देवमायो नाम विद्याधरः सर्वेषु विद्याधरेषु मृधे रिपुदुर्जयः। यश्च तं जेष्यति स चक्रवर्त्ती भविष्यति, तेन चास्य स्वामिना भवितव्यं स एव प्रभुरमुना परिचरणीय इति मज्जन्मदिने दिव्या सरस्वती व्याजहार। सोऽहं भवता जितः, भवांश्च सिद्धरत्नः प्रभाववान् कैलासस्य उभयपार्श्वचक्रवर्त्ती अभवत्। तदेतां त्रिशीर्षगुहां तीर्त्वा रिपून् विजयस्व, इति

देवमायेनोक्तश्चक्रवर्त्ती जगाद राजन्! अथ गुहाद्वारे गत्वा वसाम:। तत: कृतसंविश्रय: प्रातर्गुहां प्रवेक्ष्याम:। इत्युक्त्वा स सर्वैः राजभि: सचिवैश्च सह गत्वा गुहाद्वारं समावसत्। अपश्यच्च तां गम्भीरां निरालोकोदराम् अलब्धेन्दुकराणां तमसां जन्मभूमिमिव गुहाम्। ततश्च द्वितीयेऽह्नि एतां संपूज्य विमानस्थ: चिन्तितोपनतरत्न: सपरिच्छद: प्रविवेश। तत्र चन्द्रिकारत्नैस्तमांसि, चन्दनेन अहिद्विजान् हस्तिरत्नेन दिग्गजान्, खड्गरत्नेन गुह्यकान् तथान्यैश्च रत्नैरन्यान् विघ्नान् निरस्य सह सेनया तां गुहामुत्तीर्य उक्त द्वारेण विनिर्ययौ ददर्श च कैलासस्य उत्तरं पार्श्वमपुनर्जन्मजीवलोकान्तरोपमम्। तदा च साधु चक्रवर्त्तिन्! रत्नप्रभावमाहात्म्यात् गुहेयं त्वया तीर्णेति दिवो वाणी समुदचरत्। अथ धनवती देवमायश्च तमूचतु:, देव! सन्निहिताच द्वारे सदा कालरात्रि:, एषा पुरा विष्णुना अमृतमन्थने उत्पादिता अमृतं जिहीर्षूणां दानवानां दारणाय। सैषा अवेष्य गुहामेतां रक्षितुमादिष्टा यथा नान्यश्चक्रवर्त्तिनं विना इमां न तरेदिति। त्वन्तु चक्रवर्त्ती सिद्धरत्नश्च, तदेतां तीर्णोऽसि, तत्त्वया एषा विजयसिद्धये पूज्या, इत्थं धनवत्या देवमायेन च कथ्यमानस्य तस्य नरवाहनदत्तस्य स वासरोऽत्यगीयत। कैलासोत्तरसानवश्च भाविबलसंग्रामशत्रुशिरोवर्णं सूचयन्त इव सन्ध्यारुणा अभवन्। तमांसि च सम्भ्रमन्ति गुहाग्रहपराभवजं नवं वैरं स्मरन्त इव तस्य राज्ञ: कटकमावृण्वन्।

भूतवेतालडाकिनीनां घोरारावाः अनर्घोदुर्मनसः कालरात्रेः क्रोधाङ्कुरा इव बभ्रमुः। क्षणेन च सर्वं सैन्यं निःसंज्ञं सुप्तमिवाखिलमभूत्, केवलमेकः स नरवाहनदत्तो न मुमोह। ततोऽनघं नकुंद-कालरात्रिविजृम्भितं तत् मत्वा स चक्रवर्त्ती वचनकुसुमैस्तामर्चयत् भगवति ! त्वं जीविनाम् आश्चिरश्चक्रसञ्चारचतुरा प्रणवाकृतिः, प्राणशक्तिः, त्वामहं नमामि। महिषासुरघातेनाश्वासितत्रिभुवने ! दुर्गारूपिणि ! नमोऽस्तु ते। निशुम्भशुम्भमथने ! परित्राहि किङ्करं प्रणमामि त्वां विश्वजननीं भवसुन्दरि ! कृपां कुरु कृपामयि ! भक्तवत्सले ! विपन्ने दासजने। इत्येवं बहुभिः स्तवैः स्तुतापि यदा सा न तुतोष, तदासौ चक्रवर्त्ती मूर्ध्ना उपहारेण तामर्च्चयितुमियेष। पुत्र ! मा साहसं कार्षीः, एषाहं ते सिद्धा तवैतत् कटकं प्रकृतिस्थं वर्त्तते, जयमाप्नुहि इति तं गृहीतखड्गं चक्रवर्त्तिनं सा देवी तत्क्षणं जगाद। तस्य च तत् कटकं सुप्तप्रबुद्धमिव सहसाभवत्। ते च सर्वे राजानः सचिवाश्च सानुगास्तस्य तं प्रभावं दृष्ट्वा प्रशशंसुः। अथ स वीरः कृताहारपानादिविधिः तां त्रियामां शतयामामिवायतामनैषीत्। अथ प्रभाते तां कालरात्रिं यथाविधि प्रपूज्य विद्याधरनिरुद्धाश्रमार्गं धूमशिखं प्रति प्रययौ। तेन धूमशिखेन समं तस्य चक्रवर्त्तिनो यथा संग्रामोऽभूत् मन्दरदेवेन सह तादृशो न। तत्र खड्गमयं व्योम, वीरमूर्द्धमयी मही, अहि अहीति तीक्ष्णशूरवाक्यमयञ्च वचः समभूत्। तत्र स चक्रवर्त्ती धूमशिखं बद्धानीतं दृष्ट्वा सम्मान्य च स्वं आसनं याचया-

मास। निवेशयामास च तद्दृहस्ततसैन्यं तदीये पुरे। इत्थमग्निदग्धेन्धन इव धूमशिखोत्पाते प्रशान्ते द्वितीयेऽह्नि चारमुखात् योद्धुमभ्यागतमग्रतः स्थितं मन्दरदेवं विदित्वा सर्वैर्विद्याधरैः सह तं प्रति विजयाय प्रतस्थे। किञ्चिद् गत्वा अग्रतः बहुराजगणान्वितं रचितव्यूहं महासैन्यं मन्दरदेवस्य ददर्श। ततः स नरवाहनदत्तः प्रतिव्यूहं रचयन् तत्सैन्यमभ्यधावत्। अथ तयोरुभयोः सैन्ययोः प्रलयोद्दिग्न क्षुधिताम्बुधिनिभो घोरः संग्रामः प्रावर्त्तत। एकतश्चण्डसिंहाद्या महारथा अन्यतः काञ्चनदंष्ट्राद्याः शूराः समयुध्यन्त। त्रिभुवनमाकम्पते स्म कुलाचलाः क्षोभमापुः, शूराणां शोणितौघैः शोणैकपार्श्वः कैलासः समभवत्। अन्यगाच्च गिरिशं भूतैश्चितान्यपार्श्वः। खड्गानां प्रभाभिरुद्दितानेकप्रतिबिम्बप्रभाकरः सद्यं वीराणां प्रलयकालो महारणः प्रादुरासीत्। दृष्टदेवासुराहवा नारदाद्या अपि महर्षयः तत् महाविस्मयकरं युद्धं दिदृक्षवः समागमन्। इत्थं घोरे तस्मिन् रणे चण्डसिंहोऽभिधावन् काञ्चनदंष्ट्रेण भीमया गदया मूर्द्धनि जघ्ने। तदा तं सुतं गदाघातपतितं दृष्ट्वा सा धनवती विद्याबलेन उभे सैन्ये निश्चेतने व्यधात्। एकतश्च चक्रवर्त्ती नरवाहनदत्तः, अन्यतः मन्दरदेवः द्वावेव तौ सचेतनावास्ताम्। तदा क्रुद्धां धनवतीं जगत्संहरणक्षमां दृष्ट्वा अम्बरगता अपि देवा भयात् प्रदुद्रुवुः। अथ मन्दरदेवस्तमेकाकिनं चक्रवर्त्तिनं दृष्ट्वा खड्गपाणिरभ्यधावत। नरवाहनदत्तोऽपि विमानादवतीर्य समुद्यतखड्गरत्नः जवेन तं प्रतिजग्राह। ततो मन्दर-

देवः स्वमायया जयमिच्छन् समदोद्दाममातङ्गरूपं चकार। तद्दृष्ट्वा नरवाहनदत्तः विद्यातिशयशाली सुमहत् सिंहरूपमकरोत्। ततः स चक्रवर्ती भग्नेभवपुषा मन्दरदेवेन स्वं वपुः प्रतिपद्यमानेन मुक्तसिंहाकृतिः स्वं वपुः प्रतिपद्यमानः सुमहत् युद्धं व्यधत्त। तौ च नानाविचित्रकरणौ अङ्गहारक्रियायुतौ मण्डलाग्रकरौ नाट्यप्रवृत्ताविव विरेजतुः। अथ नरवाहनदत्तः साक्षात् जयमिव मन्दरदेवस्य करात् खड्गमहरत्। ततो हृतखड्गस्य छुरिकामाकर्षतोऽपि तस्य स चक्रवर्ती पुनस्तां सहसा जहार। ततो हृतास्त्रं त बाहुभ्यां युध्यमानं गुरुक्रमयोराहत्य मन्दरदेवं भूमाववपातयत्। प्रारभत च केशेष्वाक्रम्य तस्य शिरश्छेत्तं वक्षसि न्यस्तचरणः। तावच्च मन्दरदेवीति तस्य कुमारी स्वसा समभ्युपेत्य निवारयन्ती एवमभ्यधात् नाथ! तपोवनस्थ त्वं दृष्ट्वा मया भर्त्ता प्राक् सङ्कल्पितः। तदार्य्यपुत्र! मावधीर्मे भ्रातरम्। एवं तया सुदृशाभिहितः स वीरो जितलज्जितं तं विमुच्य जगाद विद्याधर! मया त्वं मुक्तोऽसि, माभूत् तेऽत्र लज्जा, चपलौ किं शूराणां रणे जयपराजयौ न? इत्येवमुक्तः स मन्दरदेवस्तं महाराजमब्रवीत् इदानीं त्वया पराभूतस्य मे किं जीवितेन, तदहं तपसे वनस्थस्य पितुरन्तिकं यामि, त्वमेव उभयवेद्यर्द्धचक्रवर्त्ती भगवता शङ्करेण निर्म्मितः पित्राचायं मे पराभवो भावीति पूर्वमसूच्यत इत्युक्त्वा स मानी पितुरन्तिकं तपोवनमगात्। तदा गगनस्थाः सुराः साधु महाचक्रवर्त्तिन्! जिता रिपवस्त्वया साम्राज्यं प्राप्तमधुनेति प्राब्रुवन्। अथ गते मन्दरदेवे सा-

धनवती निजं सुतम् उभे येने खयञ्चत्या लब्धचेतने अकार्षीत्। अथ सुप्तप्रबुद्धा इव सर्वे समुत्थाय वैरिणं जितं बुद्धा सचिवा राजानश्च तं विजयिनं नरवाहनदत्तम् अभिननन्दुः। मन्दरदेवीया: काञ्चनदंष्ट्रा शोककरकाश्च कालजिह्वाद्या राजानस्तस्य सम्राज: शासनं तदा अगच्छन्। ततश्चण्डसिंह: काञ्चनदंष्ट्रा लोकेन संस्मृत तद्गदाप्रहार: दृढ़मुष्टिविधृतम् असिं प्रकम्पयन् चुकोप। तदवलोक्य धनवती पुत्र! इह कुपितेन कृतं, कस्त्वां समरमुखे विजयेत? किन्तु युक्त्या मया उभयबलक्षयसंरक्षणाय क्षणं माया विरचिता आसीत् इति वदन्ती तं सुतं प्रकोपात् प्रशमय्य सर्वं बलं सराजकमभ्यनन्दयत्। अथ विजितारिवर्ग: अक्षतमित्रवर्गश्च स नरवाहनदत्त: कैलासोत्तरपार्श्वसाम्राज्यमधिगत्य परां प्रीतिमभजत। ततोऽरिविजय महोत्सवे प्रहतेषु तारेषु तूर्य्येषु खेचरीषु च प्रवृत्त नृत्यगीतासु सचिवै: राजभिश्च सर्वै: समेत: वैरिणां प्रतापमिव मधु पिबन् दिवसमनैषीत्।

## अथ शताधिकद्वयमस्तरङ्गः।



अथापरेद्युः तस्मात् कैलाससानुत: समुत्थाय स चक्रवर्त्ती सबल: काञ्चनदंष्ट्रस्य राज्ञो वचनात् विमलाख्यं सौवर्णं प्रांशुप्राकारसमुच्छ्रितं सुमेरुमिव कैलाससभाजनार्थमा-

गतं मन्दरदेवीयं पुरं सम्प्राप। विवेश च अतिगम्भीरम् अच्युतश्रीविराजितम् अनन्तरत्ननिचयं निस्तोयं सागरमिव। तत्रास्थानवर्त्तिनं राजभिर्विद्याधरैरन्यैश्च परिवृतं सम्राजमेत्य कापि अन्तःपुरवृद्धा व्यजिज्ञपत् प्रभो! युष्मत्पराजिते मन्दरदेवे वनं गते साम्प्रतं तस्य देव्यः अग्निं विविशन्ति तदत्र श्रुत्वा देवः प्रमाणमिति। एवमुक्तः स चक्रवर्त्ती ता मरणान्निवार्य्य निवासादिदानेन भगिनीरिव संविभेजे। तेन च सर्वे विद्याधराधीश्वरास्तं दत्तानुरागनिगडं साम्राज्यं समपादयन्।

अथ कृतज्ञः स चक्रवर्त्ती तत्र तम् अमितगतिं राजानं पूर्वकल्पितं मन्दरीये राज्ये समभिषिक्तवान्। अर्पितवांश्च तस्मै भक्ताय अव्यभिचारिणि राज्ञे काञ्चनदंष्ट्रादीन् तदीयान् महीक्षितः। ततस्तत्र कैलासोत्तरदिक्पार्श्वलक्ष्म्या समालिङ्गितः सप्ताहं तत्रत्येषु महर्द्धिषु उद्यानेषु रेमे। ततः उभयवेद्यर्द्धविद्याधरमहीभृतं चक्रवर्त्तित्वमासाद्यापि अधिकेच्छुः स्वमन्त्रिभिर्वारितोऽपि अलङ्घ्यमेरुभूमीः सुराश्रया विजेतुं गमनाय प्रावर्त्तत। अत्यर्थोपचिता तेजस्विनो दीप्रा दावानला इव साधनं विना कामं विवशा न हि तिष्ठन्ति। ततस्तं तथा प्रवृत्तं नारदः समुपेत्य एवमवादीत् राजन्! नीतिज्ञस्यापि ते कोऽयमविनयोद्यमः? उत्सेकादसाध्ये प्रवर्त्तमानो हि दर्पेण कैलासोन्मूलनोद्यतः दशास्य इव परिभूयते। दुर्लङ्घ्योऽयमर्कचन्द्राभ्यामपि मेरुः, तव च भगवता शम्भुना विद्याधरेन्द्रता प्रदिष्टा न सुरेन्द्रता, विद्याधराणां भूमिर्हिमालयस्त्वया

विजितः, तद् राजन्! देवभूमौ मेरौ किं ते कार्य्यं दुर्गं हं मुञ्च, मन्दरदेवस्य पिता अकम्पनो नाम त्वया शिवमितः च्छता वनस्थो द्रष्टव्यः इति अभिधाय स मुनिस्तथेति प्रतिपन्नं तं चक्रवर्त्तिनमामन्त्र्य यथागतमयासीत्। चक्रवर्त्ती अपि कार्य्यज्ञः नारदेन निवारितः देवमायात् श्रुतम् ऋषभनाशं स्मरन् बुद्ध्या विमृश्य तं तपोवनस्थं राजर्षितमं मन्दरदेवपितरम् अकम्पनं द्रष्टुमभिजगाम। प्राप चास्य तपोवनं योगनिष्ठैः पद्मासनोपविष्टैर्महर्षिभिर्ब्रह्मलोकमिव वृतम्। ददर्श च तत्र वृद्धं जटावल्कलधारिणं मुनिवरैर्महाद्रुममिवाश्रितम् अकम्पनम्। ववन्दे चोपसृत्य तस्य तपस्विनः पादौ। असौ अपि कृतातिथिसत्कारः तं निजगाद राजन्! त्वया इममाश्रममागच्छता युक्तं कृतम् उल्लङ्घ्य गच्छतस्ते महर्षयः शापं दद्युः। इत्येवं तस्मिन् राजर्षौ वदति तत्र तपोवने गृहीतमुनिव्रतः स मन्दरदेवः स्वस्रा कुमार्य्या मन्दरदेव्या सहितः पितुरन्तिकमागात्। नरवाहनदत्तश्च तं दृष्ट्वा कण्ठे समग्रहीत् जितशान्तेषु अरिषु धीराणां स्नेह एवोचितः। अथ स राजर्षिरकम्पनः तां मन्दरदेवीं भ्रात्रा सममुपगतां दृष्ट्वा तं सम्राजमब्रवीत् वत्स! इयं मन्दरदेवीति ख्याता मम सुता, दिव्यया वाचा इयमादिष्टा चक्रवर्त्तिमहिषी भाविनीति। तदेतां चक्रवर्त्तिन्! मदर्पिताम् उपयच्छस्व। इति तस्मिन् पितरि उक्तवति सा मन्दरदेवी जगाद तात! सन्ति मे वयस्याश्चतस्रः कन्यकाः। एका कनकवती नाम काञ्चनदंष्ट्रस्य राज्ञः कन्या, द्वितीया कालवती नाम कालजिह्वस्य कन्या।

तृतीया दीर्घदंष्ट्रस्य सुता श्रुता नाम। चतुर्थी पौत्रगजस्य सुता अम्बरप्रभा नाम। तासां विद्याधरेन्द्रकन्यानामहं पञ्चमी। वयं पञ्चैव भ्रमन्त्यः पूर्वं तपोवने इमं दृष्ट्वा सोत्काः समयपूर्वकम् भार्य्यपुत्रं व्यदध्म। यथा समभस्माभिरसौ वरणीयः, या अस्माकं पृथगमुं भजेत्, तामुद्दिश्य अस्माभिरात्मा मोक्तव्य इति। तत् ताभिः सखीभिर्विना न मम परिणयो युक्तः, कथं हि मादृश्यः सत्योल्लङ्घनसाहसं कुर्य्युः।

इत्थं तया प्रौढ़या कन्ययाभिहिते तत्पिता ऋकम्पनः तान् चतुरोऽपि कन्यकापितॄन् विद्याधरेन्द्रानानाययत्। अवदच्च तेभ्यः कन्यावृत्तान्तं सर्वम्। तेऽपि तत्क्षणं कृतार्थंमन्याः स्वाः स्वाः कन्या गृहेभ्यः समानयन्। ततः सम्राट् नरवाहनदत्तः ताः सर्वाः पञ्च कन्याः यथायथं परिणिनाय उवास च तत्र ताभिः समं बहूनि दिनानि ऋषीन् त्रिसन्ध्यं प्रणमन् समहोत्सवम्। अथाकम्पनेन राजन्! अधुना महाभिषेकार्थम् ऋषभाद्रिं व्रजेत्युक्तो देवमायोऽपि तमुवाच देव! एवमेव त्वया कार्य्यं यतः प्राक्तना ऋषभादयश्चक्रवर्त्तिनः प्रथममभिषेकं कुर्वन्ति स्म। तदाकर्ण्य समीपवर्त्तिनि स्वाध्ये मदनाद्रौ प्रशंसति अभिषेकं हरिशिखे वागुदचरद्दिवः राजन्! पूर्वे सर्वे हि चक्रवर्त्तिनः ऋषभशैले महाभिषेकं प्रापास्तत् त्वमपि सिद्धये तत्र गच्छ इति। एवमुक्तः स दिव्यया वाचा, तानकम्पनादीन् ऋषीन् प्रणम्य शुभेऽहनि ऋषभाद्रिं प्रति प्रतस्थे। तत्र त्रिशीर्षाख्य गुहाया उत्तरं द्वारं प्राप्य अमितगति-

प्रभृतिभिर्विद्याधरेश्वरैः सह तत्र तां कालरात्रिं संपूज्य द्वारेण तेन तां गुहां प्रविश्य च दक्षिणेन विनिर्ययौ। निर्गत्य च सैन्यैः समं देवमायस्य मन्दिरे तेनानुरुद्धः सपरिच्छदस्तस्मिन् दिने विशश्राम। तत्रस्थश्च स तत्र कैलासे नित्यसन्निहितं हरं विचिन्त्य तं द्रष्टुं गोमुखादिभिः सचिवैः सह जगाम। तदाश्रममासाद्य दृष्ट्वा च तत्र सुरभिं वृषभं प्रणम्य च द्वास्थं नन्दिनमुपससाद। अथ तेन प्रदक्षिणं प्रतीतेन मुक्तद्वारः प्रविश्य तं वृषभध्वजं देव्या सह अक्षैः क्रीड़न्तमद्राक्षीत् दृष्ट्वैव च दूरात् तस्य वरदस्य वरदायायाश्च चरणेषु पपात चकार च त्रिः प्रदक्षिणम्। प्रहृष्टश्च भगवानब्रवीत् वत्स! युक्तं कृतं त्वयात्रागतेन, अन्यथा महान् दोषो भवेत् अधुना ते सर्वा विद्याः अखण्डभङ्गुरा भविष्यन्ति। तदिदानीं सिद्धेत्वमृषभाद्रं व्रज। तत्र च शीघ्रं प्राप्तकालं महाभिषेकमवाप्नुहि। इति समादिष्टः स नरवाहनदत्तः तं देवं देवीञ्च पुनः प्रणम्य पुनर्देवमायस्य मन्दिरमगात्। आगतञ्च, आर्य्यपुत्र! त्वमद्य प्रहृष्टो दृश्यसे, इहापि किम् अन्याः पञ्च कन्यकाः मिलिताः? इत्यादि नर्म्मवचसा आप्याययन्तीं मदनमञ्चुकामुक्ततत्त्वार्थो नन्दयन् सुखमवास्थित।

अथान्येद्युः स गन्धर्वविद्याधरबलान्वितः तेजस्विना आत्मना द्विभास्करमिव व्योम कुर्वन् सावरोधः ससचिवश्च विमानवरमारूढ़ः ऋषभपर्वतं प्रययौ। प्राप च तं वाताधूतजटालतैर्विकीर्णपुष्पैस्तापसैरिव पादपैर्वृतं गिरिम्। तत्र ते ते विद्याधरेन्द्रास्तस्य प्रभोर्महाभिषेक-

सम्भारान् समाजह्रुः। तस्मिंश्चाभिषेके सर्वे भक्तभीत-जिताहृता विद्याधराः प्राञ्जलपाणयः दिग्भ्यः समापतन्। ततस्ते विद्याधराः, अत्र महादेवीपदे का अर्द्धासनोपविष्टा अभिषेक्तव्या इति तं पप्रच्छुः। समं मया देवी मदनमञ्चुकाभिषेक्तव्या इति राज्ञाभिहिते ते खेचराः समं ध्यानं ययुः। अथ गगनादशरीरा सरस्वती समुदचरत् हं हो विद्याधराः! नेयं मदनमञ्चुका मर्त्या वेदितव्या, एषा रतिरेव समवतीर्णा अस्य कामदेवावतारस्य युष्माकं प्रभोः। नासौ कलिङ्गसेनाया मदनवेगात् जाता, अयोनिजैषा देवैर्हि मायया तस्यास्तं गर्भं परिवर्त्य कलिङ्गसेनायास्तत्क्षणं समर्पिता यस्तु मदनवेगात् तस्या गर्भो जातः, सः अकसंज्ञक एवास्य मदनवेगस्य पार्श्वे समर्पितः। तदेषा मदनमञ्चुका एवास्य पत्युरर्द्धासनभाक्, अस्या एव तपस्तुष्टो हरः पुरा एवं वरं प्रादात् इत्युक्त्वा तस्यां वाचि विरतायां ते विद्याधरास्तुतुषुः तुष्टुवुश्च तां देवीं मदनमञ्चुकाम्। ततः शुभेऽहनि शान्तिसोमे पुरोहिते व्यग्रे, खेचरीणां माङ्गल्यतूर्यसङ्गीतेषु प्रारब्धेषु दशदिशो ब्राह्मणानां ब्रह्मघोषेषु उच्चरत्सु स्वियः स्वयं वामार्द्धस्थितमदनमञ्चुकं सिंहासनस्थं तं नरवाहनदत्तं नानातीर्थसमुद्भवैः हेमकुम्भसलिलैरभ्यषिञ्चन्। चित्रमिदं तस्य मूर्ध्नि पतितैर्मन्त्रपूतैर्जलैर्मलतो धौतं गूढं द्विषां वैरमलं निरगात्। लक्ष्मीस्तदभिषेकाम्बुसामुद्रबन्धुबुद्ध्या साक्षात् तेन अम्बुना सह तस्याङ्गमन्वागतेवाहृष्येत्। ततो नाकनारीणां करेभ्यश्च्युताः स्वयं पतन्ती पुष्पाणां माला तस्य शिरसि

गङ्गेव हरस्य व्यशोभत । स तदा अरुणेनाङ्गरागेण प्रतापेन चालङ्कृतः उदयस्थः समुद्रसलिलस्नातः सूर्य्य इव बभौ बद्धमन्दारमाल्यः सहस्राभरणोज्ज्वलः आमुक्तदिव्यमुकुरः श्रियं वासवीमिवाङ्कसत् । पार्श्वस्था कृताभिषेका देवी मदनमञ्चुका च दिव्यैरलङ्कारैरिन्द्रस्य शचीव विबभौ । तत् दिनं नदद्दुन्दुभिमेघं दिवः पतत् कुसुमवर्षं सुराङ्गना विद्युत्पूर्णं चित्रं दुर्द्दिनमभवत् । ततश्चारणैस्तस्मिन् महोत्सवे यन्त्रमुरजेषु आहतेषु नगोऽपि प्रतिशब्दवतीर्गुहा अवादयदिव । दिव्यासवरसेन क्षीवैश्चलद्भिर्विद्याधरैरावृतः स पर्वतोऽपि पानेन घूर्णमान इव व्यराजत् । इन्द्रोऽपि उक्ताभिषेकस्य श्रियं प्रेक्ष्य स्वाभिषेके भग्नमानो विमानगः समभवत् । इत्थम् अभीष्टचक्रवर्त्तिमहाभिषेकं प्राप्य स नरवाहनदत्तः समुत्सुकः पितुः सस्मार । सद्यश्च सचिवैर्गोमुखादिभिः सम्मन्त्र्य साम्ना राजानं वायुपथमाहूय समादिशत् सखे ! भृशमुत्कण्ठितस्त्वां स्मरति नरवाहनदत्त इति पितरं गत्वा मदीयवृत्तान्तं ब्रूहि, आनय च तं तातं मातॄश्च मन्त्रिणश्च तांस्तान् मत्सकाशमिति । इति श्रुत्वा स वायुपथः सपदि व्योम्ना प्रययौ प्राप च क्षणात् दृष्टः सभयविस्मयैः पौरैः कौशाम्बीं विद्याधराणां सप्तभिः कोटिभिर्वृतः । ददर्श च तं वत्सराजं मन्त्रिभिर्वृतं देवीभिः सहितं चिन्तान्वितम् । अथ यथार्हं विहितादरः समुपविश्य कुशलञ्च पृष्ट्वा स विद्याधरपतिः सर्वैः सकौतुकं दृश्यमानः तं नृपमवादीत् देव ! तव नरवाहनदत्तः सुगूढं देवं शङ्करमाराध्य साक्षात्तस्य

च तस्मात् सुदुर्जया विद्याः समवाप्य च मानसवेगं गौर-मुण्डञ्च दक्षिणे हत्वा उत्तरे वेद्यर्द्धपतिं मन्दरदेवं विजित्य च असाध्योभयवेद्यर्द्धविद्याधराधिपतीनां सर्वेषां शासन-भूतं महत् चक्रवर्त्तिपदं प्राप्य साम्प्रतं ऋषभे पर्वते महा-भिषेकं सम्प्राप्तस्तिष्ठति। स खलु सम्राट् साम्प्रतं समु-त्कण्ठितः त्वां सदेवीमन्त्रिकं स्मरति। प्रेषितश्चाहं तेन भवतामानयनार्थम्। तत् सत्वरमागम्यताम्। पुण्यवन्तो हि उच्चैः कृतान्वयं सन्तानं पश्यन्ति। इति तस्मात् विद्याधरात् निशम्य स राजा वत्सपतिर्भृशमुत्कण्ठां बभार। चकार च गमने मतिम्। अथ स देवीभ्यां कलिङ्गसेनया च समन्वितः सचिवैः सर्वैः सह शिविका-मारुह्य विद्याधरस्य तस्य विद्याप्रभावात् व्योम्ना समुत्-पपात प्राप च द्रुतं तं दिव्यमृषभाख्यं महागिरिम्। ददर्श च तत्र दिव्यसिंहासनस्थितम् विद्याधरेन्द्रैः स्तूय-मानं बह्वीभिर्भार्य्याभिः मदनमञ्चुकमुख्याभिः परिवृतं पूर्वाचलमस्तकस्थितं ग्रहग्रामपरीतं भूरितारावलीवेष्टितं शशाङ्कमिव पुत्रम्। तदानीं राजा उदयनः तद्दर्शनसुधा-सारसेकेन प्रोल्लसितान्तरः कामपि चन्द्रोदयारब्धां निर्वृतिं सागर इव भेजे। स च नरवाहनदत्तश्चिरात् तं पितर-मागतं दृष्ट्वा ससम्भ्रममुत्थाय सपरिच्छदः समुत्सुका यावदभ्यगात्, तावत् तेनालिङ्गितः 'अङ्कमधिरोपितश्च भूयोऽपि आनन्दवाष्पाम्बुपूरेण अभ्यषिच्यत। देवी च वासवदत्ता चिरात् तं तनयमाश्लिष्य तदालोकप्रस्रुत-स्तन्यैः अमृतमयैरिवमभ्यषिञ्चत्। पद्मावती यौगन्धराय-

याद्याः पैतृका भगिन्यः मातुलः गोपालकश्च सतृष्णया दृष्ट्या तस्यामृतमयं वपुः पिबन्ति स्म। कलिङ्गसेना तं जामातरमात्मजाञ्च दृष्ट्वा हर्षजडा स्वेषु अङ्गेषु न मातिस्म यौगन्धरायणाद्याश्च मरुभूतिमुख्यान् सुतान् नरवाहनदत्तप्रसादेन लब्धविद्याधरपदान् दृष्ट्वा भृश-मभ्यनन्दन्।

अथ आमुक्तदिव्याभरणा मदनमञ्चुका अलङ्कारवती रत्नप्रभा ललितलोचना कर्पूरिका शक्तियशा भगीरथ-यशा रुचिरदेवभगिनी दिव्यरूपा वेगवती गन्धर्वदत्ता प्रभावती चन्द्रलेखा वायुवेगयशा कालिकाद्याश्चतस्रः सुलोचनाः तथा मन्दरदेवीप्रमुखाः पञ्च विद्याधर्य्यः सर्व्वा एव नरवाहनदत्तस्य महिष्यः तं श्वशुरं वत्सराजं श्वश्रू वासवदत्तां पद्मावतीञ्च पादेषु प्रणेमुः। ते च हर्षात् यथोचिताभिराशीर्भिस्ता अवर्द्धयन्।

अथ यथार्हासनासीने सान्तःपुरे वत्सराजे नरवाहन-दत्तः स्वं सिंहासनमारुरोह। ततो देवी वासवदत्ता-स्तास्ताः स्नुषाः सादरं पश्यन्ती कुलनामनी च पृच्छन्ती भृशं मुमुदे। ततस्ते वत्सेश्वरादयः पुत्रस्य तां दिव्यां विभूतिं पश्यन्तः कृतार्थं जन्म मेनिरे।

इत्थं तत्र बन्धूनां समागमोत्सवे प्रवृत्ते प्रतीहारी रुचिदेवी नाम प्रवीरः प्रविश्य व्यज्ञापयत् देव! आपान-भूमिः सज्जिता, तत्रागम्यतामिति तदाकर्ण्य ते सर्वे तां शुभ्रां विचित्ररत्नचषकप्रफुल्लविविधाम्बुजां विकीर्णा-नेककुसुमामुद्यानमलिनीमिव आसवापूर्णकलसधारि-

स्त्रीभिः पुरन्ध्रिभिर्व्योम्नि पानभुवमाययुः। पपुश्च तत्रावरोधस्त्रीलज्जानिगडभेदि स्मरजीवितसर्वस्वं विलाससचिवं मधु। तेषां मधुना उत्फुल्लानि अरुणानि मुखानि बालातपेन सम्पृक्तानि सरसां सरोजानीव विरेजुः। देवीनाम् अधरजितैर्भीतैरिव तत्सङ्क्रमात्, अल्पराजचषकैः स्वरुचा ग्रीधुनिङ्कवस्त्रे तदा नरवाहनदत्तस्य देव्यो मद्यपायिन्यः अकोपकलिता अपि सभ्रूभङ्गारुणेक्षणा आसन्। ततस्ते क्रमेण विद्याविभवसम्भृतविविधाहारहारिणीं भोजनभूमिमासादयन्। ततो विहिताहारास्ते भास्करे सन्ध्यया सह अस्तगिरौ विश्रान्ते शय्यागृहाणि भेजुः। नरवाहनदत्तस्तु विद्यया बहुधा वपुर्विभज्य सर्वा एव देवीः स्वगृहेषु समासदत्। तासु च इन्दुवदनां समदां लोलतारकां निशामिव तां मदनमञ्चुकामादाय विशेषेण रेमे। वत्सेश्वरोऽपि सानुगो दिव्यभोगवान् तथैव तत्वा सम्प्राप्तजन्मान्तर इव तां रात्रिमनयत्। अथ प्रातः सर्वे ते प्रबुध्य विद्यासिद्धवरोद्यानमन्दिरेषु तैस्तैर्भोगैः परमं सुखमनुभवन्तस्तस्थुः।

इत्थं विविधविहारैस्तेषां तत्र बहुषु दिवसेषु प्रयातेषु प्रीतिमान् वत्सराजः स्वां पुरीं जिगमिषुः निखिलखचरराजं प्रश्नं स्वसुतमुपगम्य जगाद पुत्र! एषु दिव्येषु भोगेषु कः सचेतनो न रमते? किन्तु जन्मभूमिस्नेहः मानुषमनाकर्षति। तत् वयं स्वां पुरीं व्रजामः त्वं पुनरिमां वैद्याधरीं श्रियां भुंक्ष्व,

पुनश्च अवसरे वयम् आज्ञातव्याः, यदेतं कान्तं चक्षुःपीतामृतरसमयं त्वन्मुखेन्दुम् आलोकयामः यच्च दिव्यां भवतो लक्ष्मीं वीक्ष्य मोदामहे एतद्धि इह जन्मनि फलम्। इत्थं पितुरङ्कतकं वचो निशम्य सम्राट् नरवाहनदत्तः विद्याधरपतिं देवमायमाहूय वाष्पगद्गदमादिदेश। सखे! तातो मे अम्बया सचिवैश्चान्वितः स्वां राजधानीं जिगमिषति तदस्याग्रे सम्पूर्णहेममणिभारसहस्रं प्रस्थापय। इति स्वामिनाज्ञप्तः प्रह्वः स देवमायः प्रीतिपूर्वं तमाहस्म प्रभो! आकौशाम्बि, एतत् सिद्धये सानुगः प्रयास्यामीति। अथ स चक्रवर्त्ती वस्त्रालङ्कारपूजितस्य तस्य पितुरनुयात्रिकः वायुपथदर्शितमार्गः सचिवयुतः समभवत्। सोऽपि वत्सराजः सपरिवारः आरूढदिव्यवाहं पुत्रं दूरानुगतं निवर्त्त्य निजां पुरीं प्रययौ। देवी वासवदत्ता तत्कालोद्भूतशतगुणोत्कण्ठं प्रणतं तं पुत्रं निवर्त्त्य साश्रु पश्यन्ती कथञ्चित् राजानमन्वगात्। नरवाहनदत्तोऽपि सचिवादियुतस्तान् गुरूननुव्रज्य वाष्पान्धकारितमुखः तमेव ऋषभगिरिं प्रत्यगात्। तत्र स कालसचिवैर्गोमुखादिभिर्विद्याधरेन्द्रैः परिवृतः सान्तःपुरो मदनमञ्चुकया परिचर्य्यमाणः दिव्यान् भोगाननुभवन् सुखमतिष्ठत्।

## अथ सुरतमञ्जरीनाम षोड़शो लम्बकः ।



### अथ प्रतोक्तरैकादशस्तरङ्गः ।



एवं तस्मिन् ऋषभे पर्वते तिष्ठतः सभार्य्यस्य समन्त्रिणः परां विद्याधरश्रियं भुञ्जानस्य तस्य चक्रवर्त्तिनः सुखानि पुष्णन् एकदा मधुरायया । प्रबलचण्चाकचन्द्रिका प्रससाद । वसुन्धरा नवीनशाद्वलाश्लिष्टा सखेदा अभूत् । मुहुश्च मलयमारुतैरालिङ्ग्यमानाः कम्पमाना वनराजयः कण्टकिताः सरसाश्चासन् । पुष्पचापप्रतीहारः कोकिलः चूतयष्टिं विलोकयन् क्वणन् मानवतीनां मानमिव निराकरोत् । भृङ्गराजयश्च पुष्पवल्लीभ्यः सस्वना मारवीरस्य धनुर्मुक्ता नाराचपङ्क्तय इव निष्पतन्तिस्म । एवं तां मधुप्रवृत्तिं वीक्ष्य ते सचिवा गोमुखादयस्तं नरवा[illegible]हनदत्तं व्यजिज्ञपन् देव ! पश्य अस्य एवं मधूत[illegible]मकाननालीनिरन्तरः पुष्पमयोऽयमृषभाद्रिर्जात[illegible] विलोकयतु देवः, इमा हि लताः अन्योन्यघटित[illegible] पुष्पैस्तालयुतैरिव भृङ्गीणां विरुतैः सङ्गीता इव [illegible] वातवेपिता वसन्तसञ्जिलोद्याममत्त[illegible] [illegible]मनः परागपटमालिनीः । इयञ्च अलिमाला[illegible] जगत् जित्वा विश्रान्तस्य कामस्येव धनुर्लता चूतमञ्जरी दृश्यताम् । तदत्र रुचिरोद्याने मन्दाकिनीतटे गत्वा इमं तावत् मधूत्सवमुपभुञ्जमहे । इति तैः सचिवैरभिहितः

स नरवाहनदत्तः सावरोधस्तं मन्दाकिनीतटं प्रययौ। तत्र नाना विहगनादिते। एलालवङ्गवकुलाशोकमन्दार-मण्डिते उद्याने चिक्रीड़। चन्द्रकान्तशिलातले विपुले समुपविश्य च तां महादेवीं मदनमञ्चुकां वामे निवेश्य च अन्याभिश्च विद्याधरीभिर्महिषीभिः विद्याधरैश्च चण्ड-सिंहामितगतिप्रमुखैः परिवृतः आपानं सेवमानः तास्ताश्च प्रमोदकारीः कथाः प्रस्तावयन् तमृतुमधिकृत्य स्वान् सचिवानब्रवीत् पश्यत, मधावस्मिन् सुखस्पर्शो मृदुर्दक्षिणः पवनः, विमला दिशः, पदे पदे पुष्पितानि सुगन्धीनि काननानि, मधुराः कोकिलानामालापाः, पानलीला च सुखावहा, तदत्र किं प्रेयः सुखं न? वियोगस्तु अत्र सुदुःसहः। किमन्येषां, तिरश्चामपि अत्र वियोगिता कष्टा, पश्यत एतां विरहक्लान्तां कोकिलाम्, एषा हि नष्टं पतिमन्वेष्टुं सुचिरं कूजन्ती तमप्राप्य चूते मृते वालीव निस्वना तिष्ठति। इत्युक्तवन्तं तं राजानं गोमुखो मन्त्री प्राब्रवीत् देव! सत्यं कालेऽस्मिन् विरहः सर्वदेहिनामेव सुदुःसहः। तदत्र श्रावस्तीवृत्तमेकं कथयामि शृणोतु देवः।

अस्ति श्रावस्ती नाम नगरी। तत्रासीत् कश्चित् राज-सेवको ग्रामभुक् राजपुत्रः शूरसेनो नाम। मालवदेशीया अनुरूपा सुषेणा नाम्नी तस्य भार्य्या प्राणाधिकप्रिया आसीत्। स कदाचित् राज्ञादिष्टः कटकं गन्तुमुद्यतः अनुरागिण्या तया साध्व्या निजगदे आर्य्यपुत्र! न मामेकाकिनीं विहाय गन्तुमर्हसि। न ह्यहं क्षणमपि

त्वया विना स्थातुं शक्ष्यामि। एवमुक्तस्तया प्रियया स व्याजहार तन्वि ! राज्ञाहूतः कथं न गच्छामि, न त्वं किं वेत्सि? राजपुत्रोऽहं परायत्तवृत्तिः सेवकोऽस्मीति तदाकर्ण्य साश्रुमुखी सा भार्य्या तं प्रत्यभाषत नाथ ! यदि ते अवश्यं गन्तव्यं तदहं कथञ्चित् सहिष्ये, यदि मधौ समुपस्थिते त्वं दिनमपि अनतिक्रामन् उपैष्यसीति। तदाकर्ण्य सोऽब्रवीत् प्रिये ! निश्चितं ब्रवीमि, कार्य्यमपि त्यक्त्वा चैत्रस्य प्रथमेऽहनि अवश्यमेष्यामीति। इत्युक्तवान् कथमपि प्रियया अनुमतः स शूरसेनः राज्ञः समीपं कटकमगात्। तस्य भार्य्या च आशया दिनानि गणयन्ती तदागमावधि मधुप्रारम्भदिवसेच्छिणी कथञ्चित् तस्थौ।

अथ गतेषु दिनेषु मधूत्सववासरः समायातः। तत्पथाह्वानमन्त्राभो विलसत्कोकिलध्वनिः कुसुमामोदमाद्यमधुकरारवैः समं कामेनारोप्यमाणस्य कार्मुकस्येव निस्वनः शुश्रुवे। सोऽयं मधूत्सवः प्राप्तः, तदद्य ध्रुवं प्रियो मे समुपैष्यति इति तस्मिन् दिने सा शूरसेनप्रिया विचिन्त्य विहितस्नाना पुष्पैरभ्यर्चितस्मरा विरचितवेशा तन्मार्गमुदीक्षमाणा तस्थौ। यदा दिनात्ययेऽपि तस्याः पतिर्नाययौ तदा सा निशि नैराश्यविधुरा व्यचिन्तयत् मृत्युकालोऽयं मे समायातः, न तु स मे प्रियः समागतः, परसेवैकसक्तानां हि निजे जने कः स्नेहः? इत्येवं चिन्तयन्त्यास्तस्यास्तद्गतचेतसस्तद्वा स्मरदावाग्निदह्यमाना इवासवः निर्ययुः। शूरसेनोऽपि दयितोत्सुकः कथमपि

भूपात् आत्मानं मोचयित्वा तद्दिनं व्यतिक्रामन् करभश्रेष्ठमारुह्य सुदूरमध्वानमुल्लङ्घ्य रात्रेः पश्चिमे यामे आगतः निजं गृहं प्राप। ददर्श च तां कृतमण्डनां गतप्राणाम् उत्फुल्लकुसुमां वातेनोन्मूलितामिव लतां पतितां प्रियाम्। दृष्ट्वैव विह्वलस्य तामङ्के कुर्वतः विरहिणः प्रलापैरेव तत्क्षणात् प्राणा विनिर्ययुः। इत्थं विपन्नौ तौ दृष्ट्वा दम्पती, परया कृपया युक्ता वरदा कुलदेवता चण्डी जीवयामास। ततस्तौ प्रत्यागतप्राणौ ततः प्रभृति अन्योन्यं दृष्टानुरागौ अवियुक्तौ अभूताम्। तदेवं देव! वसन्तसमये केषां देहिनां मलयानिलवीजितो विरहानलः न सुदुःसहः? इति गोमुखेनाभिहिते नरवाहनदत्तस्तदेव किल भावयन् अकस्मात् विमना इवाभवत्। महात्मनां विना हेतुं सुस्थितो वा दुस्थितोऽन्तरात्मा हि पुरोभावि शुभं वा अशुभं सूचयति, ततश्च दिवसेऽतिक्रान्ते सम्राट् सन्ध्यामुपास्य वासवेश्मनि विश्रान्तः शयनीयं गत्वा स्वप्ने निशावसाने स्वं पितरं कृष्णया कयाचित् स्त्रिया आकृष्य दक्षिणापथं नीयमानमपश्यत्। दृष्ट्वैव प्रबुद्धः सः अनिष्टशङ्कया ध्यातोपस्थितां विद्यां वार्त्तामपृच्छत् विद्ये! ब्रूहि मे तातस्य वृत्तान्तं तन्निमित्तस्य दुःस्वप्नस्य दर्शनात् शङ्कितोऽस्मि। इति तेनोक्ता सा विद्या मूर्त्तिमती तमभाषत देव! शृणु ते पितुर्वत्सराजस्य वृत्तम्। स एकदा कौशाम्बीस्थितः उज्जयिन्या समागतात् दूतात् चण्डमहासेनं ते मातामहं विपन्नम् तथाङ्गारवतीं देवीं कृतानुगमनां शुश्राव। श्रुत्वैव स राजा सह वासवदत्तया

मुमोह पपात च धरण्याम्। अथ कथञ्चित् लब्धसंज्ञः सदेवीकः स्वर्गतौ श्वशुरौ भृशं शुशोच। राजन्! भङ्गुरेऽस्मिन् संसारे न च कस्यापि स्थिरता, स च राजा चण्डसेनोऽशोच्यः यस्य जामाता भवान्, पुत्रश्च विश्रुतो गोपालकः। दौहित्रश्च विद्याधरचक्रवर्त्ती नरवाहनदत्त इति मन्त्रिभिः प्रबोध्य समुत्थापितः श्वशुराभ्यां जलमदात्। ततः श्यालं शोकार्त्तं पार्श्वस्थितं गोपालकं स्नेहात् सबाष्पकण्ठः समभ्यधात् सखे! उत्तिष्ठ उज्जयिनीं गच्छ, पैतृकं राज्यं पालय। दूतमुखात् श्रुतं प्रजास्त्वां प्रतीक्षन्ते इति तदाकर्ण्य स गोपालको रुदन् वत्सराजमवादीत् देव! नाहं त्वां भगिनीञ्च त्यक्त्वा गन्तुं शक्नोमि, तातशून्याञ्च पुरीं द्रष्टुं न चोत्सहे। तत् पालको मेऽनुजः मदनुज्ञया राजास्तु। एवं वदन् यदा गोपालको राज्यं नैच्छत् तदा सेनापतिं रुमण्वन्तम् उज्जयिनीं पुरीं विसृज्य वत्सेश्वरः कनिष्ठं श्यालं तं पालकं ज्येष्ठेन दत्ताभ्यनुज्ञं तस्यां राज्येऽभ्यषेचयत्। अथ स तव पिता सर्वमस्थिरमालोक्य विषयेषु विरक्तः यौगन्धरायणादीन् सचिवानिदमब्रवीत् असारेऽस्मिन् भवे भावाः पर्य्यन्तनीरसा दृश्यन्ते, अस्माभिश्च राज्यं कृतं भोगाश्च भुक्ताः, अरयश्च जिताः, सुतश्च मे विद्याधरेन्द्रत्वं प्राप्तो दृष्टः, इदानीञ्चास्माकं बान्धवैः साकं वयोऽतीतं, पलितञ्चास्मान् मृत्यवे दातुं केशेषु आचकर्ष। बलिभिश्च क्लीवं राज्यमिव शरीरं मे समाक्रान्तम्। तस्मात् कालिञ्जरगिरौ गत्वा अशाश्वतं देहमिमं त्यजन् शाश्वतं पदं साधयामि। इत्युक्तास्तेन

राज्ञा सर्वे सचिवा देवी वासवदत्ता च तत् विचार्य्य सम-चित्तास्तं नृपमब्रुवन् देव! यथाभिरुचितं भवतः, वयमपि भवत्प्रसादात् अनुगच्छन्तः उत्तमां गतिं गन्तुमिच्छामः। इत्थं स्वमतानुयायिभिस्तैः सचिवैरनुमोदितः स राजा कृतनिश्चयः तं गोपालकं स्वाग्रजं तत्रस्थं मुख्यमभ्यधात् सखे! नरवाहनदत्तः त्वञ्च मम दृश्यौ मतौ, तदेतां कौशाम्बीं रक्ष, राज्यं तुभ्यं मयार्पितम्। इत्थं वत्सराजेनोक्तः स ते मातुलो गोपालकः प्रत्यवादीत् देव! युष्माकं या गतिः, सैव मे रुचिरा, नाहं युष्मान् त्यक्तुमुत्सहे। एवं देवानुबन्धेन जल्पन् स स्नेहवत्सलः गोपालको वत्सराजेन कृतकं कोपं कृत्वा जगदे अद्यैव मम अनायत्तो जातोऽसि? स्वपदात् च्यवमानस्य कस्याज्ञां कोऽपि मन्यते? इति राज्ञाभिहिते गोपालकोऽधोमुखो रुदन् वनाय कृतबुद्धिः सन्नपि तदानीं न्यवर्त्तत।

ततो राजा गजारूढः देव्या वासवदत्तया पद्मावत्या च सहितः मन्त्रिभिश्च परिवृतः सम्प्रतस्थे। तत्र कौशाम्ब्या निर्गतं क्रन्दन्तः सयोषिद्बालवृद्धाः पौराः समनुजग्मुः। ततश्च राजा वत्सेश्वरः, गोपालको युष्मान् पातीति कथयन् तानाश्वास्य निवर्त्त्य च कालिञ्जरं गिरिं प्रायात्। तञ्च गिरिं सम्प्राप्य समारुह्य च तत्र वृषभध्वजं प्रणम्य सर्वकामप्रियां घोषवतीं वीणां हस्ते कृत्वा पार्श्वगामिनीभ्यां देवीभ्यां मन्त्रिभिश्च यौगन्धरायणादिभिरन्वितः प्रपातात् पतितोऽभवत्। पतन्नेव स भूपतिः सानुगः तत्रागतेन विमानेन नीयमानः स्वर्गमगात्। एवं विद्यामुखाद

कथं हा तात ! हा अम्ब ! इति अभिधाय स नरवाहन-
दत्तः सहसा मूर्च्छितो भुवि पपात। अथ लब्धसंज्ञः नि-
जामात्यैः प्रमीतपितृकैः सार्द्धं पितरं मातरं पितृमन्त्रि-
णश्चान्वशोचत्। देव ! एतस्य क्षणभङ्गुरस्य इन्द्रजालोप-
मस्य संसारस्य तत्त्वज्ञोऽपि कथं विमुह्यसि ? अशोच्यान्
तत्त्वज्ञस्त्वम् पितॄन् कथमनुशोचसि ? येषां भवान् विद्या-
धरेन्द्राणां चक्रवर्त्ती सुत इति विद्याधरेन्द्रैर्धनवत्या च प्रबो-
धितः स सम्राट् पितृभ्यो जलं दत्त्वा पुनस्तां विद्यां
पप्रच्छ। विद्ये ! स मे मातुलो गोपालकः क्वास्ते,
किं वा करोतीति। ततो विद्यापि भूयस्तं सम्रा-
जमभाषत देव ! स तव मातुलो गोपालः वत्सराजे
महापथगिरिं प्रयाते तं राजानं भगिनीञ्चानुशोच्य
सर्वमध्रुवं मत्वा पुराद्बहिः स्थित्वा उज्जयिन्यास्तं पालकं
भ्रातरमानाय्य तस्मै कौशाम्बीराज्यमपि प्रादात्।
ततस्तस्मिन्ननुजे राज्यहयस्थे स वैराग्येण असितगिरिं
तपसे प्रयातः तत्र कश्यपमुनेराश्रमे वल्कलवान् मुनीनां
मध्ये तपश्चरन् साम्प्रतं तिष्ठति। इति श्रुत्वा तं मातुलं
दिदृक्षुरुन्मनाः सपरिच्छदः स नरवाहनदत्तः विमानेन
तमसिताचलमगात्। तत्र गगनादवतीर्य्य विद्याधर-
पतिभिर्वृतः मुनेः कश्यपस्य अनेककृष्णसारभ्रमणैः
सप्रेङ्खितमिव, पतत्रिणां क्वणितेन सस्वागताचारमिव,
अग्निहोत्राणि जुह्वतां तपस्विनां दिवि आरोहमार्गं
प्रदर्शयद्भिरिव धूममण्डलैः समुदभासमानं बहुभूचर-
नागेन्द्रं कपिलाद्यन्द्रैराश्रितम् अपूर्वमूर्द्धवर्त्ति वितामसं

पातालमिव तदाश्रममपश्यत्। तत्र च तापसेषु जटालं तरुवल्कलवाससं मूर्त्तं शममिव वह्निमिव दीप्यमानं मातुलमद्राक्षीत्। सोऽपि गोपालको भागिनेयं तमुपागतं दृष्ट्वा समुत्थाय समाश्लिष्य स्म उदश्रुलोचनमङ्के चकार। अथोभौ तौ नवीभूतशोकौ बन्धूनशोचताम्। स्वजनालोकवार्त्तैरितो दुःखाग्निः कं नोपतापयेत्। अथ तयोर्दुःखदर्शनेन आर्त्तेषु तिर्य्यक्ष्वपि ते मुनयः काश्यपादयः समेत्य तौ समाश्वासयामासुः। एवं तस्मिन्नहनि गते प्रातः स सम्राट् तं गोपालकम् एहि मदैश्वर्य्ये त्वं निवसेत्यभ्यर्थयामास। गोपालकोऽपि तमवादीत् वत्स! किं न पर्य्याप्तं तव दर्शनेन, स्नेहस्तवास्ति चेन्मयि, तदिमं समागतं वर्षाकालमिहाश्रमे त्वं मया सह निवस। इति तेन मातुलेनोक्तः स नरवाहनदत्तः तस्मिन्नेव काश्यपाश्रमे तं वर्षाकालं सपरिच्छदस्तस्थौ।

## अथ शताधिकद्वादशस्तरङ्गः।

अथैकदा तस्मिन्नसितगिरौ निवसन्तमास्थानगतं तं नरवाहनदत्तं कश्चित् सेनापतिरवादीत् देव! अद्याहं हर्म्यस्थः सेनां रचन् पश्य दिव्येन केनापि पुंसा नभसि निशि ह्रियमाणां हा आर्य्यपुत्रेति वदतीं कान्तिसर्वस्वहारिणीं कामपि स्त्रियम्। दृष्ट्वैव तमहमन्वधावम् अवदञ्च

सम्मुखपतितं तं पापं रे दुरात्मन् ! परदारानपहृत्य क्व यासि ? देवस्य नरवाहनदत्तस्य रक्षितुः राज्ये योजनानां षष्टिसहस्रेषु वैद्याधरे पदे तिर्य्यञ्चोऽपि नाधर्मं कुर्वन्ति, किं पुनरन्ये। इत्युक्त्वैव सत्वरं प्रधाव्य सानुगेन मया स पुमान् सनारीकः संयम्य व्योम्नः समवतारितः। अव तार्य्य च यावत् पश्यामि तावत् स पापः युष्मत्सहादेव्या मदनमञ्चुकाया भ्राता अर्को नाम नभश्चरः ज्ञातः, यः कलिङ्गसेनायां देव्यां मदनवेगात् जातः। का इयं ? कथमित इमां हरसीत्युक्तः स एवमभ्यधात् इयं मतङ्ग-देवस्य विद्याधरपतेः सुता चूतमञ्जर्य्यां तस्महिष्यामुत्पन्ना सुरतमञ्जरी नाम। सेयं प्राक् मात्रा मह्यं वाचा दत्ता किल, साम्प्रतम् अस्याः पिता अन्यस्मै मानुषाय प्रति-पादिता, तस्मादसौ मे निजा भार्य्या यदि प्राप्य हृता, तत्र को दोष इत्युक्त्वासौ व्यरमत्। अथ सा सुरतमञ्जरी केनादौ त्वं परिणीता, कथं वामुना प्राप्तासीति पृष्टा प्रावोचत्।

अस्ति उज्जयिन्यां श्रीमान् पालको नाम नृपतिः। तस्य कुमारो नाम सुनामा पुत्रोऽवन्तिवर्द्धनोऽस्ति। तेनाहं परिणीता, अद्य हर्म्यतले सुप्ताहं सुप्तस्यार्य्यपुत्रस्य अमेन पापेन हृता। एवमुक्तवती सा संयतश्च सः अर्कः द्वावेव इहानीतौ साम्प्रतं प्रभुरेवात्र प्रमाणमिति। इत्थं सेनापतेर्हरिशिखात् श्रुत्वा स चक्रवर्त्ती संशयमापन्नस्तं गोपालकं प्रशंस स च गोपालकोऽवादीत्। वत्स ! नैतन्मे विदितं, जाने च साम्प्रतं पालकपुत्रेण एषा परिणीता.

तदुज्जयिन्याः स कुमारो भरतरोहकेण मन्त्रिणा सममा-नीयतां ततो निश्चयं प्राप्स्यामः। तदाकर्ण्य मातुर्वचः, स चक्रवर्त्ती धूम्रलेखं विद्याधरं, कनीयसो मातुलस्य पालकस्य राज्ञः सकाशं विसृज्य तावुभावानायितवान्। प्राप्तौ कृतप्रणामौ च तौ स चक्रवर्त्ती गोपालकेन सहितः स्नेहादराभ्यां सम्मान्य प्रस्तुतं पप्रच्छ।

ततः स्थिते तस्मिन् अवन्तिवर्द्धने कुमारे निशाहीन-चन्द्राभे, सुरतमञ्जर्याञ्च तथा दीनानाथायां स्थितायां अग्रे च संयतस्थिते वायुपथाद्येषु सत्सु कश्यपे च मुनौ शृण्वति अन्येषु च समन्तात् तिष्ठत्सु स मन्त्री भरतरोहकः प्राब्रवीत् देव! आमूलात् शृणु कथयामि।

एकदा उज्जयिनीवासिभिः पौरैः समेत्य पालक-भूपतिर्विज्ञप्तः प्रभो! अस्यां पुरि उदकदानाख्यः उत्सवः यथा भवेत् तथादिश्यतां, यद्यत्र हेतुः सम्यक् न श्रीमता श्रुतः, तत् श्रूयताम्। पुरा ते पिता चण्डमहासेनो नृपतिरुत्तमं खड्गं उत्तमाञ्च भार्य्यां प्राप्तुं देवीं चण्डिका-मतोषयत्। सा प्रसन्ना भगवती तस्मै उत्तमं खड्गं दत्त्वा भार्य्यार्थमेवमभ्यधात् वत्स! अङ्गारकाख्यमसुरं हत्वा अचिरात् तस्य सुतामङ्गारवतीं नाम भव्यां भार्य्यामवाप्-स्यसि। इति तया देव्यादिष्टः स राजा समुद्विग्नमना-स्तस्थौ।

अत्रान्तरे उज्जयिन्यां यो यो नगराधिपोऽभवत् स स केनापि सत्त्वेन रात्रौ रात्रौ आगत्य अभक्ष्यत। ततश्चण्ड-महासेनस्तदन्वेष्टुं स्वयं निशि स्वैरं भ्रमन् पारदारिकं

पुरुषमेकं प्राप। स तत्क्षणं तस्य रचितमण्डलं शिरः खड्गेन चिच्छेद। छिन्नञ्च तत् मण्डलं सद्यः कोऽपि राक्षसः समेत्याग्रहीत्। अयमेव पुराधिपान् अत्ति नूनमिति समुदीर्य्य स राजा तं केशेषु आदाय राक्षसं हन्तुं प्रचक्रमे। तावच्च स राक्षसस्तमवादीत् राजन्! मां मृषा मावधीः, यस्ते पुराधिपान् खादति, सः अन्य एव, कोऽपीति। कोऽसौ, ब्रूहीति राज्ञा पृष्टः स पुनरब्रवीत् राजन्! अस्ति अङ्गारको नाम पातालवासी कश्चिदसुरः। अरिन्दम! स ते पुराधिपान् निशीथे समागत्य अत्ति, सर्वतो राजकन्यावस्त्रं हठेन हरति। कारयति च तेन अङ्गारवत्याः स्वसुतायाः परिच्छदम्। अटव्यां भ्रमन् त्वं तां कन्यां दृष्ट्वा हत्वा च कृती भव। इत्युक्तवन्तं तं राक्षसं मुक्त्वा स राजा स्वमन्दिरमगात्।

अथैकदा आखेटकार्थी वनमभ्येत्य महाकायं कोपज्वलितलोचनं दिवश्च्युतमञ्जनाद्रेरेकं खण्डमिव सूकरमद्राक्षीत्। न वराहो भवेदीदृक्, कोऽपि मायी अन्तिकं मे समायाति इति ध्यायन् स राजा क्रीड़ावाणैस्तमताड़यत्। स वराहः तान् वाणान् अगणयित्वैव तद्रथं व्याधूय सुमहत् भूविवरं कृत्वा प्राविशत्। सोऽपि वीरो नृपतिः तमनु तत्रैव प्रविश्य दिव्यमेकं पुरं ददर्श, सूकरन्तु न ददर्श। तत्र वापीतटोपविष्टः कन्याशतपरिवृतां रूपिणीं रतिमिव कन्यकामपश्यत्। सा तु कन्या समेत्य पृष्ट्वा चागमनकारणं, तं पश्यन्ती साश्रुनयना जातानुरागा जगाद हा कष्टं कुत्र प्रविष्टोऽसि? यस्त्वया वराहो दृष्टः, स कि-

ज्वाङ्गारको नाम बृहत्कायो महाबलो दैत्यः। सम्प्रत्यसौ त्वत्तवाराहरूपः श्रान्तः स्वपिति। आहारकाले च प्रबुध्य तवाहितं कुर्य्यात् सुभग ! अहमस्य अङ्गारवती नाम सुता, तव चानिष्टमाशङ्क्य प्राणा मे कण्ठगता इव। इत्युक्तः स नृपतिः देव्या दत्तं वरं स्मरन् कार्य्यसिद्धिर्ममास्तीह इति सञ्जातास्थः तां प्रत्युवाच सुन्दरि ! यदि ते मयि स्नेहो-ऽस्ति तस्मै वचः कुरु। त्वं प्रबुद्धस्य पितुरस्य पार्श्वं गत्वा रुदिहि रोदनकारणञ्च पृष्टया त्वया एवं स वाच्यः यदि कश्चित् त्वां हन्यात् तदा मे का गतिरिति। एवं कृते तव मम च ध्रुवं श्रेयो भविता। इति तेन राज्ञाभिहिता मद-नमोहिता सा गत्वा प्रबुद्धस्य पितुः पार्श्वे समुपविश्य प्रारु-दत्। पृष्टा च कारणं, सा तस्मै तदधजं भयमाचख्यौ। ततः स तामवादीत् वत्से ! वज्राङ्गं मां को हि हन्तुम-र्हति ? यच्च मे वामकरे मर्म्मास्ति तद्धनुः रक्षतीति। स राजा प्रच्छन्नस्तस्य तद्वचः शुश्राव। अथ स दैत्यः स्नात्वा हरं पूजयितुं प्रवृत्ते, राजा च तत्क्षणं प्रकटीभूय आ-रोपितकार्मुकः तं गृहीतमौनं दैत्यं युद्धाय आजुहाव। सोऽपि दैत्यः वामं करमुत्क्षिप्य अर्च्चायां नियुक्तदक्षिण-करः क्षणं प्रतीक्षस्वेति तस्य संग्रामकरोत्। तत्क्षणञ्च तेन राज्ञा सिद्धलक्षेण वाणेन सममर्म्मणि वामे तस्य करे हतः स दैत्यः सहसा भुवि अपतत्। यो मां तृष्णार्त्तं निहतवान् सः प्रत्यब्दं जलैर्न चेत् मां न तर्पयेत् तदा तस्य पञ्च मन्त्रिणो नङ्क्ष्यन्ति।" इत्युक्त्वैव तस्मिन् पञ्चतां गते नृपस्तां तत्सुतामङ्गारवतीमादाय उज्जयिनीमगात्।

ततश्च तां यथाविधि परिणीय स तव पिता सदेवीकः प्रतिवर्षमप्यारब्धस्य जलदानमकारयत्। सर्वे च उदकदानाख्यं तमुत्सवमिह प्रकुर्वन्ति। प्राप्तश्च स कालः, यत्र ते पिता तत् चकार, तदिदानीं त्वमपि कुरुष्व। एतत् प्रजानां वचः श्रुत्वा स पालको नृपतिः तत्र पुरि तं जलदानोत्सवं प्रावर्त्तयत्। तस्मिंश्च उत्सवे प्रवृत्ते जने च तद्व्यग्रे कोलाहलाकुले, अकस्मात् भग्नालानो गजः सोन्मादः तत्र प्राधावत्। स वारणः अङ्कुशं छित्वा व्याधूताधोरणो भ्रमन् नगरान्तः बहून् जनान् व्यापादयत्। प्रधावितेषु तद्ग्रहणार्थं महामात्रप्रभृतिषु गजाध्यक्षेष्वपि पौरेषु च कोऽपि तं गजं नियन्तुं नाशक्नोत्। क्रमेण भ्रमति तस्मिन् चण्डालवाटकं प्राप्ते तस्मात् कापि चण्डालदारिका निरगात्। मुखेन इन्दुं जयन्ती पादलग्नया कमलश्रिया भुवं भासयन्ती निद्रेव सर्वलोकस्य नयनयोर्विश्रान्तिदायिनी सा तं वारणेन्द्रं सम्मुखागतं करे करेणाहत्य कुटिलैः कटाक्षैरताडयत्। स च हस्ती तस्याः करस्पर्शेन मोहितो विनताननः तत्कटाक्षविद्धः तां पश्यन् पदमपि नाचलत्। ततः सा तस्य दन्तयोरुत्पत्य आरुह्य च स्वोत्तरीयेण कृतायां दोलायां प्राक्रीडत्। स च द्विपस्तां घर्मार्त्तां दृष्ट्वा तरुच्छायामगात्। एतत् महच्चित्रमालोक्य पौरा तत्र मिथः प्राब्रुवन् अहो! कापि एषा दिव्या सर्वातिशायिनी कन्या, यया रूपेणेव प्रभावेणापि तिर्य्यञ्चोऽपि मोहिताः।

अत्रान्तरे च कुमारोऽवन्तिवर्द्धनस्तद्विदित्वा कौतुकं द्रष्टुं निर्गतः तां कन्यकामपश्यत्। पश्यतश्च तस्य राज-

सूनोर्धावितश्चित्तहरिणस्तया मदनव्याधवागुरया अव-
ध्यत। सापि तं वीक्ष्य तद्रूपेण हृतचित्ता गजेन्द्रदन्तदो-
लाया अवरुह्य तदुत्तरीयमग्रहीत् अथ प्रशान्ते तस्मिन्
गजसम्भ्रमे सा कन्या तं नृपात्मजं सलज्जं सानुरागञ्च प-
श्यन्ती स्वगृहानयासीत्। अवन्तिवर्द्धनोऽपि कुमारः तया
हृतेन चित्तेन शून्यः स्वं मन्दिरमगात्। तत्र च तां वराङ्गीं
विना सन्तप्यमानः स विस्मृतारब्धजलदानोत्सवः सखीन-
पृच्छत्। जानीथ यूयं कस्य तनया सा, किन्नामा च?
तदाकर्ण्येति वयस्यास्तं राजपुत्रमब्रुवन् कुमार! अस्तीह
चण्डालवाटके उत्पलहस्तो नाम कश्चित् मातङ्गः। तस्येयं
तनूजा सुरतमञ्जरी नाम। तस्याश्च मनोरमं वपुः चित्र-
स्थायास्तरोरिव दर्शनमात्रैकफलं नोपभोगार्हम्। तत्तेभ्यः
सखीभ्यः श्रुत्वा कुमारस्तानब्रवीत् मन्ये सा न मातङ्ग-
सुता, कापि दिव्या ध्रुवम्। न हि चण्डालात् तादृशी रत्नो-
त्पत्तिः सम्भवति। तद्दसौ चेत् मम भार्य्या न स्यात् तदा
जीवितेन किम्? इति ब्रुवन् स सचिवैरनिवार्य्यनिश्चयः
तद्वियोगेनातीवार्त्तः समपद्यत। ततोऽवन्तिनाथः पालकः
देवी च तत् पितरौ तस्य तत् विदित्वा रहस्यं भृशमाकु-
लावभूताम्। कथं मे पुत्रः राजवंशजोऽपि अन्त्यजां का-
मयते इति देव्याभिहिते स पालकोऽब्रवीत्। तस्यामस्य
मत्सुतस्य चेतो यतो धावति तदत्र कारणेन
केनापि भवितव्यं सा कापि अन्यैवेति मे मतिः। रज्य-
दरंज्यद्वा सतां मनः कार्य्याकार्य्ये वक्ति हि। अत्र चैषा
कथास्ति, देवि! त्वया न श्रुता चेत् श्रूयताम्।

अस्ति सुप्रतिष्ठितं नाम पुरम्। तत्रासीत् प्रसेनजित् नाम्न राजा। तस्य कुरङ्गी नामातिरूपवती सुताभवत्। कदाचित् सा उद्यानविहारिणी उच्छृङ्खलेन हस्तिना धावित्वा सवहना दन्तयोरुपरि उत्क्षिपे। अस्याश्च परिवारे भयात् विद्रुते तं गजं तस्य च दन्तस्थितां राजकन्यां दृष्ट्वा कश्चित् चण्डालदारकः गृहीतखड्गः प्राधावत। स प्रवीरः खड्गप्रहारेण तं गजं लूनकरं कृत्वा हत्वा च तां राजकन्यां मोचयामास। ततोऽसौ कन्या मिलत्परिजना तस्य चण्डालदारकस्य रूपवीर्य्यसम्पदा समाकृष्टहृदया स्वमन्दिरं प्रययौ। तत्रागता सा स मे वारणात् रक्षिता भर्त्ता वा मृत्युरेव वा इति चिन्तयन्ती तद्विरहातुरातिष्ठत्। स च चण्डालयुवा शनैर्निजं गृहं गत्वा तस्या रूपेण हृतचित्तस्तामेव ध्यायन् भृशं पर्य्यतप्यत। क्वाहमन्त्यजजातिः, क्व च सा राजकन्या, काकस्य राजहंस्याश्च समागमः कीदृशः? एतच्च हासकरं वस्तु, न शक्नोमि वक्तुं कस्यापि, नाप्युपेक्षितुं तदत्र मरणमेव मम शरणं इत्यालोच्य स निशायां पितृकाननं गत्वा स्नातश्चितां कृत्वा अग्निं तत्र प्रज्वाल्य एवं व्यजिज्ञपत् देव वैश्वानर! विश्वात्मन्! त्वयि आत्माहुतिदानेनानेन जन्मान्तरेऽपि सा राजसुता मे भार्य्या भूयादिति। इत्युक्त्वा आत्मानं चितायां क्षेप्तुमुद्यतं भगवान् पावकः प्रकटीभूय सप्रसादं अब्रवीत् वीर! मा साहसं कृथाः, सा एव ते भार्य्या भविष्यति। पुत्र! न हि त्वं चण्डालः, यस्त्वं तत् कथयामि शृणु।

आसीदत्र नगरे कपित्थशर्म्याख्यो द्विजः। तस्याग्न्यागारे अहं साकारः प्रत्यक्षं वसामि। तत्रैकदा अग्निकशास्त्रां तत्सुतां कन्यां रूपलोभात् वरेण दूषणं तस्याः समुत्सार्य्य भार्य्यामकरवम्। तस्यां तदैव मम वीर्य्येण त्वं जातः। तया च लज्जया तत्क्षणं रथ्यामुखे त्वं निक्षिप्तोऽसि। ततस्त्वां चण्डालाः प्राप्य अजाक्षीरेण वर्द्धयामासुः। तदेवं त्वं ब्राह्मणकन्याया गर्भे मयोत्पादितः तस्मात् मत्तेजःसम्भवस्य ते अपवित्रता नास्ति, तामेव कुरङ्गीं राजकन्यामवश्यं प्राप्स्यसि इत्युक्त्वाग्निरन्तर्दधे। सोऽपि सानन्दः कृत्रिममातङ्गसुतः विस्रस्तचित्तः स्वं गृहमगात्। ततो राजा प्रसेनजित् नृपतिः स्वप्ने अग्निना समादिष्टः तत्त्वमन्विष्य तस्मै पावकसूनवे तां कन्यामदात्। देवि! एवं सदैव भुवि प्रच्छन्ना दिव्या भवन्ति। तदेषा कापि दिव्यैव, नान्या सुरतमञ्जरी। सा निश्चितं मत्सुनोर्जन्मान्तरप्रियतमा इति मे मतिः। इत्यमस्मासु तिष्ठत्सु राज्ञि च पालके ब्रुवति अहं तत्र कैवर्त्तीयां कथामिमामकथयम्।

आसीत् मलयसिंहो नाम नृपतिः। तस्य मायावती नाम रूपेणाप्रतिमा कन्याभवत्। कदाचित् सा रूपयौवनशालिनी मधूद्याने क्रीड़न्ती केनचित् कैवर्त्तकुमारेण ददृशे। स च सुप्रहारो नाम कैवर्त्तयुवा तां दृष्ट्वैव स्मरवशोऽभूत् नहि भवितव्यता साध्यासाध्यं विचारयति। स च गृहं गत्वा पाठीनाहरणादिकं विहाय तदेकचित्तः त्यक्ताशनः शय्यायामिव तस्थौ। अनु-

बन्धेन मात्रा रचितकाख्यया पृष्टः स्वाभिप्रायं शशंस। सा तु माता तं पुत्रमभ्यधात्। पुत्र! मा विषीद। आहारं तावत् कुरुष्व, निश्चितमिदं ते समीहितं स्वयुक्त्या साधयामीति। इत्युक्त्वा कृताश्वासे जातास्थे भुक्तवति पुत्रे सा मत्स्यान् उत्तमान् आदाय राजसुतागृहमगात्। तत्र दासीभिराख्यातसेवाभिप्राया सा प्रविश्य दाशी रचितका तस्यै उत्तमं मत्स्यमेकं प्राभृतं ददौ। इत्थं क्रमेण प्रतिदिनं ददती सा तां नृपात्मजामाराध्य वचनाकाङ्क्षिणीमकरोत्। ब्रूहि यत् वाञ्छसि मत्तः, तदहं दुष्करमपि कुर्य्याम्। इति तया राजकन्ययाभिहिते सा धीवरी याचिताभया रहसि स्थितां तामवादीत् राजदारिके! बिभेमि वक्तुं परमकथयित्वा स्थातुं न शक्यते। शृणु तावत्, एकदा त्वामुद्यानविहारिणीं दृष्ट्वा मे सुतः नितरां स्मरवशस्त्वाम् अत्यर्थं ताम्यति। मया च आशां प्रदर्श्य स प्राणत्यागात् रक्ष्यते। तद् यदि मयि ते कृपा तदा स्पर्शेन मे सुतं जीवय। एवं तया कैवर्त्तपत्न्या कथिते सा नृपात्मजा सलज्जा सानुरोधा च विमृश्य एवमब्रवीत् गूढं नक्तं मन्मन्दिरे तं ते सुतमानय। तदाकर्ण्यैव सा दाशी प्रहृष्टा सुतान्तिकं प्रायात्। नक्तञ्च सा यथाशक्ति कृतमण्डनं तं सुतं स्वैरं राजसुताया अन्तःपुरमानिनाय। तत्र सा राजपुत्री चिरोत्सुकं तं सुप्रहारं कैवर्त्तसुतं हस्ते गृहीत्वा कृतप्रीतिं शयने न्यवेशयत्। समाश्वासयच्च तं विरहाग्निना सन्तप्तं श्रीखण्डशिशिरस्पर्शेन करसंवाहनेन। सोऽपि दाशसुतस्तेन सुधासिक्त इव चिरात् कृतार्थ-

श्रान्तः विश्रान्तो निद्रया सपदि जह्रे। तस्मिंश्च सुप्ते सा नृपसुता युक्त्या रञ्जितकैवर्त्तसुता रचितस्वधर्मा च-श्च-न्यतो गत्वा सुष्वाप। ततस्तस्य तन्तुकरस्पर्शविगमात् प्रतिबोधवतः हस्तोपनतविभ्रष्टां तां वल्लभामपश्यतः निधिकुम्भीमिव दरिद्रस्य विषादिनः दाशसूतोर्निराशस्य सद्यः प्राणा विनिर्यान्ति स्म। तद्विदित्वागत्य आत्मानं निन्दन्ती राजकन्या प्रातस्तेन सह चितामारोढुं व्यवसिताभवत्। ततो मलयसिंहोऽस्याः पिता विदितवृत्तान्तः समुपेत्य तां तथाभूतां दृष्ट्वा निवार्य्य च आचम्य इदमब्रवीत् यदि अहं सत्यं देवदेवे त्रिलोचने भक्तः स्यां, तत्मे लोकपालाः! कर्त्तव्यं वदत यथोचितम्। इत्युक्तवन्तं राजानं दिव्या वागब्रवीत् राजन्! इयं भवत्सुता अस्य दाशसूनोः पूर्वभार्य्या, पुरा नागस्थलाख्ये ग्रामे महीधरसुतः बलधरो नाम गुणवान् ब्राह्मणः कश्चिदासीत्। स खलु पितरि स्वर्गते गोत्रजैर्हृतवित्तः विरक्तः भार्य्यया सार्द्धं द्युनदीतटं जगाम। तत्र निराहारस्थितः कदाचित् क्षुधावसन्नः दाशान् मत्स्यान् भक्षयतो दृष्ट्वा मनसि स्पृहाञ्चक्रे। ततस्तं तत्सङ्कल्पकलङ्कितं पञ्चतां यातं सा भार्य्या शुद्धसङ्कल्पा तपसि स्थिता पतिमन्वगात्। स एषः द्विजः सङ्कल्पदोषात् दाशकुले जातः। सा च सुतपा भार्य्यास्य तव सुता जाता। तदेषा ते अनिन्दिता सुता पूर्वभर्त्तारमेतं गतासुमायुषोऽर्द्धेन जीवयतु। अस्याश्च तपःप्रभावात् तस्य तीर्थस्य समाश्रयणात् पूतोऽयं ते जामाता भूत्वा राजा भविष्यति। इति दिव्यया वाचाभिहितः स राजा सुप्रहाराय आयु-

घोऽर्थं दत्त्वा कन्यया सञ्जीविताय तां सुतां प्रददौ। ततश्च स सुप्रहारस्तद्दत्तैर्भूमिहस्त्यश्वरत्नैर्भूपतिर्भूत्वा क्रतो भार्यां तां तया च शूरात्मजं समासाद्य सुखमतिष्ठत्। इत्थं प्राक्तनसम्बन्धः प्रायशः शरीरिणां प्रीतये भवति। किञ्चैकवरसम्बन्धे इयं कथा श्रूयताम्।

पूर्वमयोध्यायामासीत् वीरबाहुर्नाम नृपति.। यः पुत्रनिर्विशेषं सततं प्रजाः पालयामास। कदाचित् तं राजानमेत्य पौरा व्यजिज्ञपन् देव! चौराः प्रतिनिश-मिमां नगरीं मुषन्ति। जाग्रद्भिरपि अस्माभिस्ते लक्षयितुं न शक्यन्ते। तदाकर्ण्य राजा निशि अत्र नगर्यां स्थानेषु वीरान् स्थापयामास। परं तेऽपि चौरान् नासादितवन्तः। न चासावुपद्रवः शान्तिमगमत्। ततो राजा स्वयं रात्रौ चौरानन्वेष्टुं विनिर्ययौ। एकाकी खड्गपाणिः सञ्चरन् समन्तात् प्राकारोपरि पुरुषमेकमद्रा-क्षीत्। तञ्च भयात् लघुपदन्यासं काकचञ्चललोचनं मृगारिमिव समन्तात् वलितकन्धरं पश्यन्तं दृष्ट्वासौ नृप-तिरचिन्तयत् नूनमसौ तस्करः, अनेनैकचरेणैव मे पुरी मुष्यते। इत्यालोच्य चतुरो नृपस्तमुपागमत्। सोऽपि चौरः सशङ्कस्तमप्राक्षीत् को भवानिति। ततो राजा तमब्रवीत्। अहं साहसिकश्चौरः, त्वं कः? साम्प्रतं ब्रूहि। चौरोऽप्यब्रवीत् अहम् एकचरश्चौरो महाधनः। तदेहि मम गृहं तव धनाकाङ्क्षां पूरयामि, तदाकर्ण्य राजा तथेति प्रतिपद्य तेन दस्युना समं वनान्तः खातनिर्मितं वराङ्गनाभिरधिष्ठितं भूरिभिः रत्नैरुद्भासितं

सद्मा नवोपभोगं भुजङ्गनगरोपमं तद्वेश्म जगाम। तत्र गत्वा गर्भगृहं प्रविष्टे तस्मिन् तस्करे वाह्यस्थानस्थितम् एकाकिनं तं नृपं कापि दासी सानुकम्पमवादीत् भद्र! क्व प्रविष्टोऽसि, शीघ्रं निर्याहि, विश्वस्तघातकोऽयम् एकचरं त्वां प्रतिभेदभयादधुनैव हन्यात्। तदाकर्ण्य द्रुतं निर्गतो राजा स्वं मन्दिरं गत्वा सेनापतिं समाहूय ससैन्यः पुनराययौ। आगत्य च तद्‌वेश्म रुद्धा शूरानन्तः-प्रवेश्य च हृतार्थसञ्चयं तं चौरमवष्टभ्यानिनाय।

अथ गतायां निशि तेन राज्ञा समादिष्टनिग्रहः स चौरः विपणिमार्गेण वध्यभूमिमनीयत। नीयमानञ्च तं दृष्ट्वा दिष्ट्या अनुरागिणी कापि वणिक्सुता तत्क्षणं स्वं पितरमभाषत तात! योऽयं दत्तडिण्डिमो वध्यभूमिं नीयते असौ चेत् न मे भर्त्ता स्यात् तन्मां मृतामवधारय इति स च वणिक् तां सुतामहार्य्यनिश्चयां दृष्ट्वा गत्वा च नृपतिं बहुभिर्दीनारैरपि तस्य चौरस्य मुक्तिमयाचत। राजापि निर्बन्धेन तं वणिजं प्रति चुकोप न तु तं तस्करं मुमोच। निवेशयामास च तमविलम्बं शूले। ततः सा वामदत्ता नाम्नी वणिक्सुता चौरस्य कलेवरमादाय तत्रा-नुरागात् अग्निं प्रविवेश।* इत्थं परायत्तेषु जन्तुषु प्राग्-जन्मसम्बन्धो दृश्यते को जनः भावि वस्तु अतिक्रामेत्, को वा कस्य कं वारयेत्। तस्मात् पुत्रस्य ते कापि पूर्वसम्ब-न्धनिर्मिता सुरतमञ्जरी एषा भवितुमर्हति, अन्यथा सुजन्मनः अस्य राजसूनोः कथं मातङ्गग्रामस्यामेतादृक् अभिष्वङ्गः? तस्मात् प्रभो! उत्पलहस्तः स तत्पिता

मातङ्गस्तां सुतां पुत्रार्थं याचतां पश्यामः, स किं ब्रवी-तीति। एवं मयोक्तः स पालकस्तां कन्यां याचितुम् उत्पलहस्ताय दूतान् प्राहिणोत्। स च मातङ्गस्तैर्दूतैर्याचितस्तानब्रवीत् एतन्मेऽभिमतं यो मद्गृहे पुरवासिनां विप्रसहस्राणाम् अष्टादश भोजयति, तस्मै मयासौ सुरतमञ्जरी सुता दातव्येति। एतद्वचनं श्रुत्वा ते दूतास्तथेति प्रतिज्ञाय आगत्य राज्ञे पालकाय न्यवेदयन्। एतत् सकारणं मत्वा क्षितिपः उज्जयिन्यां ब्राह्मणान् समाहूय प्रावोचत् यूयमष्टादशसहस्राणि मातङ्गस्य वेश्मनि भुङ्ग्ध्वम्, एतन्मेऽभिमतमिति। इति नृपेणोक्ता द्विजा भीताः कर्त्तव्यसंमूढाश्चण्डालान्नं कथं भोक्तव्यमिति मत्वा महाकाले तपस्येरुः। उत्पलहस्तस्य मातङ्गस्य गृहे यूयमशङ्किता अन्नं भक्षयत, अयं हि विद्याधरः, न चण्डालः सपरिवारः, इति प्रभुना स्वप्ने समादिष्टास्ते विप्राः समुत्थाय राज्ञे तदाख्याय पुनरब्रुवन् राजन्! अयमुत्पलहस्तश्चाण्डालवाटादन्यत्र शुद्धमन्नं पचतु, ततस्तद् वयं भुञ्ज्महे। तदाकर्ण्य राजा उत्पलहस्तस्य अन्यत् स्थानं निर्दिश्य शुद्धैः कारुभिः तत्रान्नमपाचयत्। अथ स्नाते शुद्धवस्त्रे उत्पलहस्ते पुरःस्थिते तैर्द्विजन्मनामष्टादशसहस्रैरन्नं भुक्तम्। तेषु च विप्रेषु भुक्तवत्सु स उत्पलहस्तः राजानमुपेत्य प्रणम्य समभाषत राजन्! आसीत् गौरमुण्डो नाम विद्याधरेश्वरः। अहञ्च मतङ्गदेवनामा विद्याधरः तस्य समाश्रित आसम्।' भूपते! अस्यां सुरतमञ्जर्यां मम सुतायामुत्पन्नायां स गौरमुण्डः सुगुप्तं माम-

अब्रवीत् यदयं वत्सेश्वरसुतो नरवाहनदत्तः अस्माकं भाविचक्रवर्त्ती पुरे कथ्यते, स यावत् अस्माकं शत्रुः न चक्रवर्त्तित्वमापद्येत, तावत् त्वं स्वमायया गत्वा तमचिरात् निपातय इति। इत्थं पापेन तेन गौरमुण्डेन प्रेषितस्तदर्थं नभसा गच्छन् पुरः देवं शङ्करमपश्यम्। स ईश्वरः तद्बुद्ध्वा क्रुद्धः सन् हुङ्कारं कृत्वा सद्य एव मामशपत् दुर्मते ! यत् त्वं विजने ईदृशं पापम् चिकीर्षसि तदनेनैव देहेन भार्य्या दुहितृसंयुतः उज्जयिन्यां गत्वा चाण्डालत्वमापन्नः तदन्तर्निपत। यदा कश्चित् ते गृहेषु सुताया अस्याः परिणयार्थी पुरवासिनामष्टादशसहस्राणि विप्राणां भोजयिष्यति, तदा ते शापान्तो भविता। तस्मै च तच्छुल्कदायिने सुतेयं त्वया देयेति उक्त्वा तस्मिन् शम्भावन्तर्हिते अहं तदैव पतितः अन्त्यजेषु मध्ये उत्पलहस्तसंज्ञया वासमकार्षम्। अद्य तु त्वत्पुत्रस्य प्रसादात् स मे शापोऽवसितः। तन्मया तस्मै तव पुत्राय एषा सुरतमञ्जरी दत्ता साम्प्रतं निजं वैद्याधरपदं नरवाहनदत्तस्य चक्रवर्त्तिनः सेवार्थं गच्छामि। इत्युक्त्वैव सुतां समर्प्य कुमाराय अवन्तिवर्द्धनाय, सदारः स मतङ्गदेवः भवच्चरणान्तिकं प्राप्तः। राजापि पालकः सुविदितवृत्तान्तहृष्टः स्वसुतस्य सुरतमञ्जर्य्या विवाहं यथाविभवं यथोत्साहञ्च समपादयत्। कुमारोऽपि तां विद्याधरीं प्राप्य मनोरथाधिकप्राप्त्या कृतार्थः समभवत्।

एकदासौ राजपुत्रः तया समं हर्म्ये सुप्तः निशाक्षये प्रबुद्धस्तां प्रियामकस्मात नैक्षिष्ट। ततस्तामन्विष्य अप्राप्य

च तां तथा समन्वतप्यत यथास्य पिता समुपेत्य विदित-वृत्तान्तः सुभृशं विह्वलः समभवत्। रक्षितेयं पुरी, नास्यां निशायां कोऽप्यपरः प्रविशेत्, तन्नूनं केनापि पापेन आकाशचारिणासौ हृता इत्येवमस्मासु जल्पत्सु दुःख-निमीलितेषु सहसा युष्मत्प्रेषितो धूमशिखो नामासौ विद्याधरः दिवः समवातरत्। तेन चायं कुमारोऽवन्ति-वर्द्धनः अहृत्य सैषा सुरतमञ्जरी, या पित्रा अवन्ति-वर्द्धनाय प्रदत्ता, तदत्र साम्प्रतं देवः प्रमाणमिति।

इत्थं पालकमन्त्रिणि भरतरोहके निगद्य विरते नरवाहनदत्तः सभायां मतङ्गदेवं प्रपच्छ भवता कस्मै ते सुता सुरतमञ्जरी दत्तेति कथ्यताम्। सोऽब्रवीत् मयैषा अवन्तिवर्द्धनाय दत्तेति। अथ तमकमब्रवीत् सम्राट्, कथं त्वमिमां हरसीति। अकोऽब्रवीत् प्रथममेषा मात्रास्याः मह्यं दत्तेति। सति पितरि माता का तद्दाने, कश्च तवात्र साक्षी? तदियं परदारास्ते, इति सर्वे सभ्याः प्रोचुः। अथ चक्रवर्त्ती नरवाहनदत्तः तस्य निरुत्तरा-त्तस्य अकस्य दुर्विनयनिग्रहं समादिदेश। ततो मुनिभिः काश्यपेन च देव! अस्य एकमेतमपराधं क्षमस्व, अयं हि मदनवेगसुतस्ते श्याल इति समभ्यर्थितः स राजा तं कथञ्चिन्निर्भर्त्स्य मुमोच। प्रजिघाय च तं मातुलपुत्र-मवन्तिवर्द्धनं निजपत्न्या समेतं सचिवयुतं वायुपथहस्तेन स्वपुरीम्।

# अथ शताधिकत्रयोदशस्तरङ्गः ।

इत्थं तत्रास्मितगिरो साध्वीं सुरतमञ्जरीम् अङ्कापहृतां तस्मादपभर्तृस्मितात् श्वाशकादाच्छिद्य भर्त्त्रे समर्प्य मुनिमध्ये अवस्थितं तं काश्यपः समब्रवीत् राजन्! त्वया समं चक्रवर्त्ती काम्मं न भविता, यस्य ते धर्मासनस्थस्य मतिर्न रागादिवशा, तेऽपि धन्याः, ये त्वां सुकृतिनं सदा पश्यन्ति । ईदृशस्य ते साम्राज्ये न किमपि अवद्यम् अस्ति । पुरा, ऋषभाद्याः चक्रवर्त्तिनः आसन् ते च नानादोषैर्ग्रस्ताः श्रियश्च्युता नष्टाश्च । ऋषभः सर्वदमनः तथा बन्धुजीवकः त्रय एते अतिदर्पेण शक्रात् निधनमापुः । जीमूतवाहनोऽपि चक्रवर्त्तित्वमेत्य विद्याधरेश्वरैः समभागतेन नारदमुनिना चक्रवर्त्तिपदप्राप्तिकारणं परिपृष्टः कल्पवृक्षस्य निजतनोश्च दानमाचख्यौ । तेन सुकृतोदीरणेन स स्वपदात् सद्य एवाभ्रश्यत् । यश्च विश्वान्तरो नाम चक्रवर्त्ती आसीत् सोऽपि इन्दीवराख्यं तनयं वसन्ततिलकनाम्ना चेदिमहीभृता दारध्वंसकारणात् हतं निशम्य तेन कुपुत्रशोकमोहेन अधैर्य्यैः पञ्चतामगात् । राजेन्द्र! एक एव तारावलोको नाम मानवः सुकृतैर्विद्याधराणां चक्रवर्त्तितामापन्नः अनासादितदोषः सुचिरं साम्राज्यं भुक्त्वा अवसाने जातवैराग्यः स्वयं त्यक्त्वा वनमगात् । इत्थं प्रायशः सर्वे विद्याधराः स्वपदप्राप्तिमोहिताः रागादिवशीकृताः समुचिते पथि न तिष्ठन्ति

पतन्ति च। तत्त्वं न्याय्यात् पथः भ्रश्यत् आत्मनः स्खलितं रक्षेः मा ते धर्मव्यतिक्रमोऽस्तु इति कश्यपेनोक्तः स सम्राट् श्रुत्वा तद्वाक्यं, सादरं पप्रच्छ। भगवन्! कथं मानुषेण तारावलोकेन विद्याधरैश्वर्यमिदं प्राप्तं तदहं श्रोतुमिच्छामि। तद्वाकर्ण्य कश्यपोऽब्रवीत् राजन्! श्रूयतां कथयामि।

आसीत् शिविषु चन्द्रावलोक इति ख्यातो भूपतिः। तस्य चन्द्रलेखेति प्रिया महिषी अभवत्। तस्य च भूपतेः परसेनाविमर्दनः कुवलयापीड़ इति महीतले ख्यातो महान् वारणः स्थितः। तस्य प्रभावेण स राजा केनापि बलिना शत्रुणा न कदापि पराजीयत। तस्य राज्ञः यौवनापगमे च तस्यां चन्द्रलेखायामेकः सुलक्षणः सुतः समजायत। स च राज्ञा तारावलोक इति कृतनामधेयः क्रमात् दानधैर्यविवेकाद्यैः सहजैर्गुणैः सह वृद्धिमगात्। अशिक्षत च निःशेषं वाङ्मयम्। केवलमर्थिषु कामप्रदः सन् एकं नशब्दार्थं नाशिक्षत।

क्रमेण च युवापि वयसा, सर्वचेष्टितैः स्थविरः, अत्यर्थं सौम्यदर्शनोऽपि तेजसा सूर्यसन्निभः, अशेषकलापूर्णोऽपि राकाचन्द्र इव, विश्वस्य लोकस्य अनौत्सुक्यदोऽपि कन्दर्प इव, पितृशुश्रूषया जितजीमूतवाहनः समभिव्यक्तमहाचक्रवर्त्तिलक्षणः संववृधे। ततस्तेन महीभृता चन्द्रावलोकेन तस्य सूनोः कृते मद्रेश्वरतनया माद्री नाम कन्या समाजह्रे। ततः कृतोद्वाहं तं तद्गुणोत्कर्षसन्तोषितो राजा तदैव यौवराज्ये समभ्यषेचयत् सोऽपि

पित्राभिषिक्तः युवराजः पितुराज्ञया अन्नादिदान-सत्राणि अकारयत्। प्रातः शय्यायाः समुत्थायैव सदा कुवलयापीड़मारुह्य तानि सत्राणि प्रविशमाणः समन्ता-दभ्रमत्। यो यदर्थयते स्म, स तत् जीवितमपि दातु-मपराङ्मुखोऽभवत्। इत्थं क्रमेणास्य युवराजस्य यशः पुरेषु राष्ट्रेषु च सर्वत्र पप्रथे।

अत्रान्तरे तस्य युवराजस्य तस्यां माद्र्यां जायायां यमौ सुतौ अजायेतां स पिता तौ नाम्ना रामलक्ष्मणौ करोति स्म। तावर्भकौ पित्रोः स्नेहानन्दाविव तथा पितामहयोश्च प्राणेभ्योऽपि समधिकप्रियौ क्रमेणावर्द्धे-ताम्। पितरौ तारावलोको माद्री च आरोपितगुणौ कोदण्डाविवानतौ तौ पश्यन्तौ मनसा अनृत्यताम्।

अथ रिपवः तारावलोकस्य यशःसमाकर्णनसञ्जा-तेर्ष्याः विप्रान् कांश्चित् रहसि सादरमब्रुवन् भगवन्तः! यूयं गत्वा तारावलोकं युवराजं कुवलयापीड़ं गजं याचध्वं, यदि तावत् स तं युष्मभ्यं प्रददाति, तदा तद्वि-हीनस्य तस्य राज्यं हरिष्यामः, अथ न ददाति, तदास्य दातृत्वयशो विनश्यति। इत्युक्तास्ते ब्राह्मणाः गत्वा तं दानवीरं तारावलोकं कुवलयापीड़मयाचन्त। किं प्रयोजनं गजेन्द्रेण द्विजन्मनाम्? तन्मन्ये एते केनचित् शत्रुणा मम सकाशं प्रतारणार्थं प्रेषिताः। तद् यदस्तु, मयायं द्विपराजो दातव्यः। कथं मे जीवतो अर्थी अप्राप्य कामं यास्यति? इति सञ्चिन्त्य स तारावलोकः निष्कम्पेनैव चेतसा तेभ्यो द्विजेभ्यो द्विपोत्तमं तं प्रददौ।

ततस्तैर्द्विजैर्नीयमानं तं गजवरं दृष्ट्वा पौराः कुद्धाश्चन्द्रा-लोकस्य राज्ञोऽन्तिकमाययुः। ऊचुश्च राजन्! तव सुतेन अधुना राज्यं त्यक्तं मुनिधर्मश्च गृहीतः सर्वसन्न्यास-कारिणा, यदेतेन श्रियो मूलं गन्धभग्नान्यवारणः कुवलया-पीड़ो गजराजोऽर्थिभ्यः प्रदत्तः। तदेतं पुत्रं तपसे वनं प्रस्थापय वा गजं प्रत्याहर, नोचेत् वयमन्यं राजानं कुर्महे। इति तैः पौरैः उक्तश्चन्द्रावलोकः प्रतीहारमुखेन तथैव तत् पुत्रं सर्वं श्रावयामास। सोऽपि तारावलोक-स्तत् श्रुत्वाब्रवीत् हस्ती तावत् मया दत्तः, परं मे अर्थिने किमपि अदेयं नास्ति। ईदृशेन पौराश्रितेन राज्येन मम किं? किञ्च विद्युद्विलोलया अनुपयोगिन्या लक्ष्म्या च मे किं प्रयोजनं? तन्मम सर्वभोग्यफलश्रियां तरूणां मध्ये वने वासः श्रेयान्, न पुनर्नृपशूनामीदृशाम्। इत्युक्त्वा तुल्यसङ्कल्पधीरया भार्य्यायान्वितः पित्रोः पादा-वनुध्यायन् अर्थिभ्यः अर्थसञ्चयं दत्त्वा गृहीतवल्कलः तारावलोकः पुत्राभ्यां सार्कं निजात् पुरात् अनुगच्छतो निवारयतो द्विजान् सान्त्वयन् निरगात्। तं तथा प्रस्थितं दृष्ट्वा पशूनां पक्षिणामपि वदतामश्रुधाराभिः भूरसिच्यत।। पुत्रयोर्वहन मात्रार्थं रथेन पथि व्रजन् स तारावलोकः अन्यैर्द्विजैः रथाश्वान् याचितस्तत्क्षणं तेभ्यस्तान् अश्वान् ददौ। चकर्ष च स्वयं रथं सभार्य्यः सुकुमारौ तौ सुतौ वनं नेतुम्। ततश्च पथि परिश्रान्तं निरश्वं रथं कर्षन्तं तं कोऽप्यपरो ब्राह्मणः, समुपेत्य तं रथं ययाचे। सोऽपि निश्चलचित्तः तस्मै तमपि दत्त्वा

सपुत्रदारः पद्भ्यामेव कथञ्चित् तपोवनमाससाद। तत्र माद्र्या स्वभार्य्यया कृतपरिचर्य्यः तरुमूले कृतवसतिपरिच्छदस्तस्थौ। वनान्तास्तं वैराग्यराज्यस्थं वाताहत्या चलद्भिः पुष्पमञ्जरीचारुचामरैः पृथुच्छायैस्तरुच्छत्रैः पत्रशय्याशिलासनैः भृङ्गाङ्गनानां गीतस्वनैः नानाफलरसासवैश्च सिषेविरे।

एकदा तत्पत्न्यां भार्य्यां तत्कृते फलपुष्पादिकमाहर्त्तुम् आश्रमाद् बहिर्गतायां कश्चिद् ब्राह्मणः तम् उटजस्थितं तारावलोकं तनयौ रामलक्ष्मणौ ययाचे। वरं शिशू अपि इमौ पुत्रौ नीतौ मारयिष्यन्, न पुनर्भग्नकामोऽयमर्थी कदाचन प्रेषितः, मन्ये शठो विधिर्मे धैर्य्यध्वंसं वीक्षितुकामः। इति संचिन्त्य स तस्मै विप्राय तौ सुतौ प्रादात्। नीयमानौ च तौ विप्रेण यदा न ययतुः, तदा स विप्रः लताभिस्तौ बद्धहस्तौ कृत्वा अताड़यत् अनयच्च नृशंसः क्रन्दन्तौ जननीं मुहुः। विवृत्य तं पितरं पश्यन्तौ साश्रुलोचनौ तौ पश्यन्नपि तारावलोकः न चुक्षुभे। चुक्षुभे चास्य धैर्य्येण चराचरो भूतग्रामः।

अथ सा सती माद्री शनैः पुष्पमूलमालादिकमाहृत्य श्रान्ता वनान्तादाययौ ददर्श च पतिमाश्रमस्थमधोमुखं न पुनः सुतौ। ततोऽनिष्टाशङ्किहृदया विप्रकीर्णस्थितक्रीड़ामृण्मयाश्वरथद्विपी क्व मे तौ पुत्रकाविति सम्भ्रान्ता हा हतास्मीति वादिनी पतिमपृच्छत्। सोऽप्यवादीत् अनघे ! तौ मम तनयौ याचमानाय दरिद्राय द्विजन्मने

मया प्रदत्तौ। तदाकर्ण्य परित्यक्तमोहा सा साध्वी तं पति-मवदत् आर्य्यपुत्र ! युक्तं कृतं, कथमर्थी पराङ्मुखो यातु। एवं तयोक्ते तयोर्दम्पत्योस्तुल्यसत्त्वतया भुवनं चकम्पे, चचाल च इन्द्रस्य आसनम्। अथ देवराजः प्रणिधानेन तयोर्माद्रीतारावलोकयोर्दानसत्त्वप्रभावेण कम्पितं जगदैक्षत। ततः स ब्राह्मणो भूत्वा आशयं जिज्ञासुस्तं तारावलोकं तामेकपत्नीं माद्रीमयाचत। सोऽपि निर्विकल्पेन चेतसा तस्मै तां वनान्तसहचारिणीं धर्म्मपत्नीं दातुं हस्तेन उदकं जग्राह। तदवलोक्य द्विजोऽब्रवीत् राजर्षे ! ईदृशान् अदेयानपि दत्त्वा किं साधयसीति। सोऽब्रवीत् ब्रह्मन् ! न मे किमपि साधनीयमस्ति, एतावती च मे वाञ्छा, यत् प्राणा अपि ब्राह्मणेभ्यः देयाः, न पुनरर्थी पराङ्मुखो भवेदिति तदाकर्ण्य स्वं रूपमवलम्ब्य देवेन्द्रस्तमवादीत् राजेन्द्र ! प्रीतोऽस्मि ते जिज्ञासार्थमागतः, वदामि ते शृणु, नाहं ते पत्नीं गृह्णामि। त्वमचिरात् विद्याधराणां चक्रवर्त्ती भविष्यसीत्युक्त्वा तिरोदधे।

अत्रान्तरे स वृद्धो दरिद्रो द्विजः दक्षिणार्जितौ तारावलोकतनयौ गृहीत्वा मार्गभ्रमात् भ्रमन् दैवात् चन्द्रालोकस्य नृपतेः पुरं प्राप्य आपणे तौ राजपुत्रौ विक्रेतुं प्रचक्रमे। तत्र तौ प्रत्यभिज्ञातौ पौरा गत्वैव तस्य भूपतेश्चन्द्रावलोकस्य समावेद्य पुरः सद्विजौ तारावलोकपुत्रौ निन्युः। स राजा तौ पौत्रौ दृष्ट्वा साश्रुः पृष्ट्वा च तं द्विजं तदुक्तेन वृत्तान्तेन श्रुतेन हर्षविषादजडश्चिरमभवत्। ततः स राजा निजपुत्रस्य तं सत्त्वोत्कर्षं विभाव्य त्यक्तराज्यस्पृहः

पौरैरर्थ्यमानोऽपि तौ पौत्रौ तस्मात् द्विजात् अर्थेन तत् प्रार्थितेन क्रीत्वा गृहीत्वा च सपरिच्छदः पुत्रस्य तारावलोकस्याश्रमं प्रायात्। अपश्यच्च तत्र तं बद्धजटं वल्कलधारिणम् आशयागतैर्द्विजैर्महाद्रुममिव भुक्तश्रियं पुत्रम्। यत् स दृष्ट्वैव दूरात् प्रधाव्य चरणयोः पतितं तम् अश्रुवारिणा अभिषिच्य उत्सङ्गमारोपयत् तदैव विद्याधराधिराज्यार्थमभिषेकपुरःसरं तस्य सिंहासनारोहे आरम्भतामगात्। अथ राजा तस्य तौ तनयौ रामलक्ष्मणौ क्रीतावेताविति ब्रुवन् प्रादात्। यावत् ते तत्रान्योन्यवृत्तान्तकथां कुर्वन्ति, तावत् चतुर्दन्तो गजः लक्ष्मीश्च दिवस्तत्रावातरत्। अन्येषु च विद्याधरपतिषु अवतीर्णेषु लक्ष्मीः पद्महस्ता तं तारावलोकमवादीत् वत्स! आरोहास्मिन् वारणे, एहि विद्याधरपदास्पदम्। दानप्रभावतो जितां तत् साम्राज्यश्रियं भुङ्क्ष्व। इत्युक्तवत्या लक्ष्म्या साकं स भार्यासुतान्वितः पितुश्चरणौ प्रणम्य पश्यत्सु आश्रमवासिषु तं दिव्यं गजमारुह्य विद्याधरैर्वृतः नभसा वैद्याधरं पदमगात्। तत्र च चिरं भुक्तसाम्राज्यः विद्याभिः सर्वाभिः सेवितः कालेनोत्पन्नवैराग्यः पुनस्तपोवनमशिश्रियत्। इत्थं मानुषेणापि तारावलोकेन पुरा निर्मलैः सुकृतैः सर्वविद्याधरेन्द्रता प्राप्ता। अन्ये तु तां श्रियमवाप्यापि स्वैः स्खलितैर्विभ्रष्टाः। तत्त्वया स्वतःपरतोऽपि वा स्खलितं रक्षणीयम्। इति कश्यपमुनिना समीरितां कथां निशम्य तदुपविष्टस्तथेति प्रतिपेदे सम्राट् नरवाहनदत्तः। ततः स चक्रवर्त्ती विद्याधराः! शृणुत, योऽत्र

ममाधिकारे प्रजानुधर्मव्यतिक्रममाचरेत् स नियतमेव मे वध्यः इति समन्तात् समुद्घोषणां भ्रमयाञ्चकार। ततोऽवनतशिरोभिर्गृहीतशासनैर्विद्याधरैः समं सुरतमञ्जरीमोचनात् विलसद्यशोराशिः मातृलसन्निधौ तस्मिन्नसितगिरौ प्राहषं तस्य मुनेराश्रमे न्यवसत्।

---

## अथ पद्मावतीनाम सप्तदशो लम्बकः।

## अथ चतुर्दशोत्तरशततमस्तरङ्गः।

एवं तत्रासितपर्वते कश्यपमुनेराश्रमे मातुलस्य गोपालकस्य तपस्यतोऽनुरोधात् वर्षातिपाताय निवसन् सचिवैरन्वितः सर्वविद्याधरचक्रवर्त्ती कथाप्रुवन् सपत्नीकैर्मुनिभिरपृच्छ्यत। देव ! यदा मानसवेगेन दुरात्मना पत्नी ते मदनमञ्चुका माययापहृता, तदा विरहनिःसहं त्वां कः कथं व्यनोदयत् इति नः कथ्यताम्। एवं तैर्मुनिभिस्तद्भार्याभिश्च पृष्टः स नरवाहनदत्तः वक्तुं प्रचक्रमे। हृतायामस्यां प्रियायां दुरात्मना मानसवेगेन, मया यदनुभूतं दुःखं, तत् किमधुना कथ्यते। प्रथमतस्तावत् तत् पुरम् उद्यानं सर्वञ्च स्थानं चिन्वन्नहं मत्सचिवाश्च यदा तामिमां नासादितवन्तः, तदा सोन्मादमिव कस्यचित् उद्यानतरोस्तले उपविष्टं मां लब्धावसरः सान्त्वयन्

गोमुखोऽब्रवीत् देव ! मा गा विक्लवताम्, अचिरात् देवीं प्राप्स्यसि, देवा हि तथा सह ते युवराजैश्वर्यमादिशन्, तदवश्यं तथा भवितव्यं नहि तेषां वचनं मृषा भवितुमर्हति धीराश्च सोढ़विरहाः प्राप्नुवन्ति अभीष्टसङ्गमम् । पश्य रामो दाशरथिः नैषधो नलः तव पितामहाश्च विरहं दुर्विषहं विषह्य किं न प्रेयसीः प्राप्नुवन्ति स्म ? स च खचारिणां चक्रवर्त्ती मुक्ताफलकेतुः पद्मावत्या वियुक्तो दुःसहं विरहमतीत्य किं पुनस्तां न प्राप ? तद्देव ! शृणु तत्कथां तव कथयामि । इत्युक्त्वा गोमुखो मह्यं कथामिमामकथयत् ।

अस्ति सुविख्याता पृथिव्यां वाराणसी नाम पुरी । या धुनदीव सिता शाम्भवी मूर्त्तिः सुरसद्मध्वजपटैर्मारुता-नमितोन्नमितैः इहैत, मोक्षं यात इति अनिशं जनान् ब्रुवाणेव शैवगणाकीर्णकैलासाद्रिस्थलीव राजते । तस्या-मभूत् ब्रह्मदत्तो नाम राजा । स खलु शिवैकभक्तः ब्रह्मण्यः शूरः दाता कृपापरः दुर्गेष्वपि न चस्खाल, नापि ममज्ज अब्धिष्वपि । यस्याज्ञा भुवि भ्रमन्ती द्वीपा-न्यपि अतरत् । तस्य चकोरस्येव आह्लाददायिनी सोमप्रभा नाम देवी नेत्रपेया अभवत् । तस्य शिवभूतिर्नाम मन्त्री द्विजोऽभवत् । स खलु बुद्ध्या बृहस्पतिरिव सर्व-विद्यापारदर्शी । कदाचित् स नृपश्चन्द्रप्रासादे शयने स्थितः गगनेनागतं हंसयुगलं दीप्तजाम्बूनदमयम् अभ्र-गङ्गाजलोत्पन्नमिव हैमाम्बुजद्वयं निशि अद्राक्षीत् । अथ गते तस्मिन् दृष्टिपथातीते स राजा पुनस्तद्दर्शनोत्कण्ठया

पर्य्यतप्यत। अथ राजा अनिद्र एव कथञ्चित् तच्चिन्तया तां रात्रिं नीत्वा प्रातस्तं मन्त्रिणं यथादृष्टं तत् हंस-युगलं शशंस। यदि तौ हंसौ यथेष्टं न पश्यामि तदा किमेतेन मे राज्येन किं वा जीवितेन। इति राज्ञोदिते स मन्त्री शिवभूतिस्तं जगाद राजन्! अस्त्यत्र उपायस्तं वदामि शृणु विचित्रकर्मयोगेन अस्मिन् संसारे विचित्रो भूतग्रामो जायते अपरिच्छेद्य एव। तत्र दुःखमये एव मोहात् उद्भवत्सुखबुद्धयो जन्तवः निवासाहारयाना-दिविविधान् रसान् भुञ्जते। तेषाञ्च आहारयानशय-नादि पृथग्विधं स्वस्व जात्यनुसारेण प्रीतिप्रदं विधिर्विदधे तदिदानीं देव! विहगानामुपसेव्यं कमलोत्पलसंछन्नं रक्षिभिः रक्षितमपि निर्बाधं सुदृश्यं महत् सरः कारय। प्रक्षेपय च सदा तत्तटे अन्नम्। तथा कृते नानादिग्भ्यः जलपक्षिणस्तत्र आयास्यन्ति। तौ च हंसौ न चिरादेव अवश्यम् उपैष्यतः। ततस्तौ अजस्रं द्रक्ष्यसि, मा वैमनस्यं भज। इति मन्त्रिणोक्ते स राजा अविलम्बितमेव तद्-कारयत् यथोक्तलक्षणं महासरः। क्रमेण तत्र हंसचक्र-वाकसारससंछन्ने तदपि हंसमिथुनं हंसश्रेण्यामुपा-विशत्। तदुपेत्य सरोरक्षिभिर्विज्ञप्तः स नृपो ब्रह्मदत्तः सिद्धं मनोरथं मत्वा संहृष्टस्तं सरोऽभ्यगात्। अद्रा-क्षीच्च तौ हेमहंसौ दूरतः। आश्वासयच्च तत्र तौ सक्षीरान् तण्डुलान् निक्षिप्य। ततो राजा विशु-द्धकलधौताङ्गौ [मणिमुक्तामयेक्षणौ प्रवालचञ्चुचरणौ शातकुम्भाग्रपक्षतौ [illegible]गतौ तौ हंसौ विभावयन्

पुरतः अम्लानपुष्परचनामपश्यत्। अपृच्छच्च रक्षिणः, केनैषा पूजा कृता ततस्ते सरोरक्षिणस्तं नृपमेवं व्यजिज्ञपन् देव! एतौ हिरण्मयौ हंसौ त्रिसन्ध्यमिह स्नातौ नित्यं पूजां कुर्वन्तौ ध्यानेन तिष्ठतः, तत् प्रभो! किमेतत् महदद्भुतं न विद्मः। तदाकर्ण्य राजा चिन्तयामास क्व हंसौ, क्वेदृशी चर्य्या, अत्रमत्रास्ति किञ्चित् कारणम्। तत्तावत् तपश्चरामि यावदिमौ को ज्ञास्यामि इति पर्य्यालोच्य राजा भार्य्यया मन्त्रिणा च समं कृताहारपरित्यागः हरध्यानपरस्तपश्चचार।

अथ तौ दिव्यौ हंसौ द्वादशाहमुपोषितं राजानं स्वप्ने उपेत्य व्यक्तया वाचा प्रोचतुः, राजन्! उत्तिष्ठ, प्रातः सभार्य्यसचिवस्य ते यथार्हं पारणे कृते विजने सर्वं यथातत्त्वं वक्ष्याव। इत्युक्त्वा तौ हंसौ तिरोभूतौ। राजापि प्रबुध्य समुत्थाय च प्रातः भार्य्यामन्त्रिभ्यां सह पारणञ्चकार। ततश्च कृतपारणं लीलागृहाभ्यन्तरे समासीनं नृपं सहामात्यकलत्रं तौ हंसावुपेयतुः। कौ युवामिति तेन राज्ञा पृष्टौ तौ क्रमात् स्ववृत्तान्तमेवमाचख्यतुः।

अस्त्यत्र जगति विश्रुतो मन्दरो नाम रत्नराजिराजितो महागिरिः यत्र सदा सुरनिवहा विहरन्ति। यस्य मथितक्षीरवारिधेरमृतेन सिक्तेषु सानुषु जरामृत्युहराणि फलपुष्पमूलानि तिष्ठन्ति। कैलासाधिककान्तस्य यस्य शृङ्गाग्रभूमयः नानासद्रत्नराजिता धूर्जटेर्लीलोद्यानानि। तत्र कदाचित् देवः पिनाकी

पार्वत्या क्वतक्रीड़स्तामवस्थाप्य केनापि देवकार्य्यानुरोधेन अन्तर्दधे। ततस्तद्विरहेणार्त्ता सा पार्वती तत्क्रीड़ाकाननेषु देवताभिराश्वास्यमाना बभ्राम। एकदा मधुप्रवृत्तौ सोद्वेगा सा गणैर्वृता देवी तरुतले यावत् प्रियचिन्तया समाकुला तिष्ठति तावत् जयासुतां देव्याश्चामरधारिणीं कुमारीं चन्द्रलेखां साभिलाषमवलोकयन्तीं समानरूपयौवनः सन्निहितो गणोत्तमः मणिपुष्पेश्वरो नाम साभिलाषं व्यलोकयत्। तदवलोक्य अन्यौ पिङ्गेश्वर गुहेश्वरौ नाम गणश्रेष्ठौ सस्मितमन्योन्यमुखावलोकिनौ अभूताम्। तौ च तथाभूतौ दृष्ट्वा कस्यैतौ कृते हसत इति सान्तःकोपा देवी यावद्दृष्टिमदात्। तावत् तौ अन्योन्यं प्रति सतृष्णमवलोकयन्तौ तां चन्द्रलेखां तच्च मणिपुष्पेश्वरं ददर्श। ततो विरहसमुद्विग्ना देवी क्रुद्धा तौ जगाद यदेताभ्यां हंसलीलाभ्यां देवस्य असन्निधौ मत्समक्षं स्मरावलोकनं हसितञ्च कृतं तस्मादेतौ मर्त्त्ययोनौ कामार्त्तौ स्त्रीपुंसौ इतः पततम्। तत्र चैतौ अविनीतौ दम्पती भविष्यतः। हंसलीलाविमौ भुवि बहून् क्लेशान् प्राप्स्यतः। पूर्वं दुःखितौ ब्राह्मणौ, तदनु ब्रह्मराक्षसौ, ततः पिशाचौ, पश्चात् चण्डालौ तस्करौ, ततश्छिन्नपुच्छौ श्वानौ, ततो विविधौ खगौ भविष्यतः। आभ्यां स्वस्थचित्ताभ्यां हि एष दुर्विनयः कृतः इत्यादिष्टवतीं देवीं धूर्जटो नाम गणोत्तमः प्राब्रवीत् देवि! अत्ययुक्तमिदं, न खलु एते गणाः स्वल्पादपराधात् इयन्तं शापमर्हन्ति। तदाकर्ण्य सा देवी कोपात् तमपि धूर्जटमभिशशाप अनात्मज्ञ! त्वमपि मर्त्त्ययोनौ पत।

अथ प्रतीहारी जया चन्द्रलेखाया जननी सुतायां दत्त-शापां तामम्बिकां पादलग्ना व्यजिज्ञपत् देवि! प्रसीद अस्या मे दुहितुः एतेषाञ्च सुभृत्यानाम् अज्ञानविहितागसां शापान्तं कुरु। इत्येवं विज्ञप्ता प्रतीहार्य्या जयया सा गिरिनन्दिनी प्राब्रवीत् यदा सर्वे ज्ञानयोगात् क्रमेण ब्रह्मादीनां तपः चेत्रं तथा सिद्धोश्वरं दृष्ट्वा मिलिष्यन्ति तदा पुनर्मुक्तशापा मत्पदमेष्यन्ति। इत्युक्त्वा सा देवी यावत् विरता, तावत् तत्र ज्ञातहरासन्निधिरन्धको नामासुरः देवीं तां कामयन् आगतः भर्त्सितश्च देव्या गणैर्गतः। तद्विदित्वासौ देवेन शम्भुना निहतः। ततः कृतकार्य्यमन्तिकायातं देवं सा देवी तुष्टा अन्धकागमं न्यवेदयत्। अथ स देवो गिरिजापतिस्तां गिरिजामवादीत् देवि! स ते मानसः पूर्वपुत्रोऽन्धकः अद्य मया निहतः। अधुना च स त्वगस्थिशेषो भृङ्गी भविता। इत्युक्त्वा स देवः देव्या समं विहरन् तत्रातिष्ठत्। ते च मणिपुष्पेश्वराद्याः पञ्च भुव्यपतन्। राजन्! तत्र तावत् द्वयोः पिङ्गेश्वरस्य च विचित्रमायतं वृत्तान्तं निशामय।

अस्त्यत्र महीतले यज्ञस्थलाख्यं नगरम्। आसीत् धनवान् गुणवान् यज्ञसोमो नाम ब्राह्मणः। तस्य मध्यमे वयसि द्वौ पुत्रौ उदपद्येतां ज्येष्ठस्तयोर्हरिसोमः, कनिष्ठः देवसोमः। तयोश्च समुत्तीर्णशैशवयोरुपनीतयोः सभार्य्यस्य तस्य विप्रस्य आयुषा समं धनं क्षीणम्। ततस्तौ सुतौ पितृभ्यां हीनौ अहर्निशौ दायादैर्हृतशेषधनौ मिथो मन्त्रयामासतुः पश्य भिक्षैकवृत्ती साम्प्रतं जातौ स्वः, न चात्र

भिक्षा प्राप्यते। तत् दूरमपि मातामहगृहं वरं गच्छावः। यदि च नौ तत्र दीनौ स्वयमागतौ न कोऽपि श्रद्दध्यात् तथापि यावः, किं कुर्मः, नहि आवयोरन्या गतिः। इति सम्मन्त्र्य क्रमेण भिक्षमाणौ यत्र तयोर्मातामहगृहं तत्र ययतुः। तत्र हठात् मृतं सभार्य्यकं मातामहं श्रुत्वा तौ मन्दभाग्यौ अनन्यगतिकौ यज्ञदेव क्रतुदेव-नाम्नो र्मातुलयोर्गृहं मलिनवेशौ रजोध्वस्तकायौ विवि-शतुः। तत्र ताभ्यां मातुलाभ्यां सद्विप्राभ्यां कृपास्वराश्नतौ अधीयानौ यावत् कियन्तं कालं तिष्ठतः, तावत् तावपि उपक्षीणधनीभूतौ अभृत्यकौ च मातुलौ तौ भागिनेयौ प्रीतिपूर्वमभाषताम्। वत्सौ! दरिद्रीभूतानामस्माकं पशुपालकं रक्षितुमिदानीं सामर्थ्यं नास्ति तद् युवां पशून् रक्षतम्। इत्युक्तौ मातुलाभ्यां तौ हरिसोमदेवसोमौ बाष्पकण्ठौ तथेति तद्वचः प्रत्यपद्येताम्। ततस्तौ अटव्यां पशून् नीत्वा सततं ररक्षतुः, परिश्रान्तौ च सायं ताना-दाय पुनर्गृहमाजग्मतुः। इत्थं पाशुपाल्यं कुर्वतोस्तयोः कदाचित् प्रसुप्तयोः कश्चित् पशुः केनापि अहार्य्यत, कश्चिच्च व्याघ्रेण भक्षितः। ततस्तौ मातुलौ यावत् उद्विग्नौ तौ सुप्तावटव्यामपश्यतां तावत् समन्तात् चिन्वन्तौ तयोरेकां धेनुम् एकञ्च छागं नष्टमद्राष्टाम्। तौ च प्रबुद्धौ भागिनेयौ मातुलावागतौ पशूंश्च अल्पानव-लोकयन्तौ भयार्त्तौ पलायमानौ चिन्वन्तौ दूरं वनं विवि-शतुः। तत्र व्याघ्रखादितं तं निजं छागं दृष्ट्वा शोचन्तौ ह्रतात्मानौ एवं जगदतुः हा कष्टं! छागोऽयं नौ मातु-

ताभ्यां यच्छ्राद्धं रक्ष्यते स्म, तदस्मिन् विनष्टे तयोर्द्वयोः कोपो भविता, तदिदानीमस्य व्याघ्रभुक्तावशिष्टस्य मांसं वह्नौ संस्कृत्य भुक्ता च हतक्षुधौ शेषमादाय क्वाप्यावां गच्छावः। इति सञ्चिन्त्य यावत् तौ छागं अनले संस्कुरुतः, तावत् तयोः पश्चात् धावन्तौ मातुलौ समाजग्मतुः। ताभ्यां छागं पचन्तौ तौ यावत् दृष्टौ, तावत् तद्दर्शनत्रस्तौ तौ ततः पलाय्य ययतुः। युवाभ्यां यदेतत् राक्षसं कर्म कृतं तस्मात् युवां पिशिताशनौ ब्रह्मराक्षसौ भविष्यत इति तौ क्रुद्धौ मातुलौ तयोः शापं वितेनतुः। तौ च द्विजसुतौ सद्यः ब्रह्मराक्षसौ अभूताम्। ततस्तौ दंष्ट्राविसङ्कटमुखौ दीप्तकेशौ बुभुक्षितौ प्राणिनः प्राप्य खादन्तौ अटव्यां भ्रमतुः। एकदा तौ योगिनं कमपि हन्तुम् अधावताम्। तेन च प्रतिघ्नता तौ शप्तौ पिशाचत्वं गतौ। पिशाचत्वेऽपि तौ ब्राह्मणस्य गां हन्तुं तरन्तौ तस्य ब्राह्मणस्य मन्त्रेण भग्नौ तच्छापात् चाण्डालत्वमवापतुः। चाण्डालत्वे च धनुष्पाणी भ्रमन्तौ क्षुत्पिपीड़ितौ कदाचित् भोजनार्थिनौ चौरपल्लीं प्रापतुः। तत्रागतौ दृष्ट्वैव तौ तद्द्वाररक्षकः चौरशङ्कया अवष्टभ्य छिन्नकर्णनासौ चकार। तथाविधौ च तौ बद्धा ते तस्कराः लगुड़ाहत्या ताड़यन्तः प्रधानचौराणामन्तिकं निन्युः। तत्र प्रधानैस्तस्करैर्दृष्टौ पृष्टौ च भयार्त्तौ क्षुत्तृषा-दुःखावाप्तसंक्लेशं स्ववृत्तान्तमाचख्यतुः। ततस्ते मुख्या-स्तस्कराः कृपया तौ बन्धनात् विमोच्य ऊचुः युवामत्र तिष्ठतं अश्नीतञ्च मा अत्र वां भयं भूत्। अद्य अष्ट-

ष्यामिह सेनानी पूजनावसरे युवामस्माकमतिथी प्राप्तौ संविभागमर्हतः। इत्युक्त्वा ते देवीमभ्यर्च्य चौरा दैवाद्-त्यन्नप्रीतयस्तौ स्वाद्यभोजितौ कृत्वा नैवान्तिकात् तत्यजुः। ततः क्रमेण तैः सह चौर्य्यं कुर्वाणौ स्वशौर्य्यतस्तेषां महा-सेनापती संवृत्तौ।

एकदा तौ सेनापती चौरराजाज्ञया शैवक्षेत्रं महदेकं पुरं मुषितुं ससैन्यौ निशि जग्मतुः। दुर्निमित्ते दृष्टेऽपि तौ अनिवृत्य तत्पुरमवाप्य कृत्स्नं सदेवभवनं लुण्ठयामासतुः। ततस्तत्स्वामिभिः शैवैः शरणार्थिभिः क्रन्दद्भिः स्मृतो हरः कुपितस्तान् चौरान् विकलानन्धांश्च चकार। तदकस्मात् विलोक्यैव ते पौराः शार्वमनुग्रहं मत्वा सम्भूय तान् दस्यून् लगुडैरश्मभिश्च निजघ्नुः। गणा-श्चादृश्यमानाश्चौरान् कांश्चित् श्वभ्रेषु अवाक्षिपन्, कांश्चिद्-मृद्यन् कांश्चिच्च भुवि निहत्य अपातयन्। यावच्च तौ सेना-पती दृष्ट्वा जनो जिघांसति तावत् तौ चौर विनाकृतौ श्वानौ समपद्येताम्। तथाभूतौ च तौ पूर्वजातिं स्मृत्वा अग्रतः शङ्करस्य सन्निधौ नृत्यन्तौ तमेव शरणमापतुः। तद्दृष्ट्वा सर्वे सविप्रवणिजो जनाः विस्मिता गतचौरभयास्तान् दस्यून् हसन्तः स्वान् गृहान् जग्मुः। ततस्तौ श्वानौ शान्तमोहौ प्रबुद्धौ शापशान्तये त्यक्ताहारौ शिवमुद्दिश्य तपः शिश्रि-यतुः प्रातश्च कृतोत्सवास्ते पौरा ईश्वरं संपूज्य दत्तेऽपि अन्ने तौ श्वानौ ध्याननिष्ठौ पराङ्मुखौ ददृशुः। तथैव दृश्यमानौ तौ यावत् बहून् दिवसान् ध्याननिश्चलौ स्थितौ, तावत् गणा देवं शम्भुं व्यजिज्ञपन् देव ! इमौ

पिङ्गेश्वरगुहेश्वरौ देव्या शप्तौ बहुकालं बहून् क्लेशान् प्राप्तौ, तदेतयोः कृपां कुरु। तदाकर्ण्य भगवानुवाच इदानीमेतौ सारमेयतां परित्यज्य वायसौ भवताम्। ततस्तौ तद्वचनात् वायसीभूतौ बलिदत्तेन अन्नेन कृतजीवितौ जातिस्मरौ सुष्ठु शिवैकाग्रचेतसावभूताम्। कालेन भक्तितुष्टस्य शम्भोर्निदेशात् तौ भासौ ततः शिखण्डिनौ च अभूताम्। ततः पुनः कालेन तौ गणेश्वरौ हंसतामुपागतौ हेमरत्नमयौ संजज्ञाते। तावेव पार्वतीशापप्राप्तक्लेशपरम्परौ हंसतां प्राप्तावावां विद्धि। यश्च जयासुताभिलाषो मणिपुष्पेश्वरो नाम गणाधिपः देव्या शप्तः, स त्वं भुवि ब्रह्मदत्तनृपाख्यया जातः। सा च जयासुता तव भार्य्या सोमप्रभा जाता स च धूर्जटिस्ते शिवभूतिको नाम मन्त्री जातः। तदावाभ्यां सम्प्राप्तज्ञानाभ्यां साम्प्रतमम्बिकाकृतं शापान्तं स्मृत्वा दत्तं वां निशि दर्शनम्। तदायात, तत् त्रिदशशैलम् उमापतेरचलेन्द्रं व्रजामः यत्र देवा विद्युद्ध्वजासुरविनाशार्थं सिद्धीश्वरं किल तपः विदधुः। जिग्युश्च तमसुरं समधिकबलदर्पयुक्तं शर्वप्रसादलब्धेन मुक्ताफलकेतुना। स च मुक्ताफलकेतुः शापकृतं मर्त्त्यभावमुत्तीर्य्य पुनः शर्वानुग्रहाद् पद्मवत्या समासङ्गमवाप। तादृशे तत्र चैत्ये हरं दृष्ट्वा नत्वाच स्वां पतिं प्रयास्यामः। एवं रूपो हि देव्या अस्माकं शापान्तो विहितः।

इति ताभ्यां दिव्यहंसाभ्यामुक्तो स ब्रह्मदत्तो नृपः सद्योमुक्ताफलकेतोः कथा श्रवणे जातकौतूहलः समभवत्।

# अथ पञ्चदशोत्तरशततमस्तरङ्गः ।

ततः स ब्रह्मदत्तस्तौ दिव्यहंसावब्रवीत् कथं मुक्ताफलकेतुर्विद्युद्ध्वजं तमसुरं जघान कथञ्च शापमर्त्यत्वमुत्तीर्य्य पद्मावतीं पुनःप्राप्तः एतत्तावत् युवां कथयतं ततः प्रकृतमनुसरामः । तदाकर्ण्य तावेतौ गणौ तत्कथामवर्णयताम् ।

आसीत् पुरा विद्युत्प्रभो नाम देवदुर्जयो दैत्येन्द्रः । स एकदा जाह्नवीतीरं गत्वा पुत्रकामो ब्रह्माणमाराधयन् वर्षशतं दुश्चरं तपश्चचार । ततः स सुरारिस्तपस्तुष्टस्य ब्रह्मणो वरात् विद्युद्ध्वजं नाम देवानामप्यवध्यं तनयं प्राप । स बालोऽपि महावीरः दैत्यराजसुतो बलैः रक्ष्यमाणं समन्तात् स्वपुरमालोक्य एकदा वयस्यमेकमप्राक्षीत् सखे ! कुतोऽत्र भयम् ? येनेदं पुरं रक्षकैर्नित्यं रक्ष्यते ? ततो वयस्योऽवादीत् अस्ति नस्त्रिदशानामीश्वरः प्रतिपक्षः, तदर्थोऽयं पुररक्षणविधिः इदं पुरं दशलक्षदन्तिनः, चतुर्दशलक्षरथाः त्रिंशल्लक्षाश्वाः सततं पर्य्यायक्रमेण प्रतियामं रक्षन्ति। तेषाञ्च सप्तभिरङ्कैः प्रहरवारः समायाति। तदाकर्ण्य स विद्युद्ध्वजः प्रत्यवदत् सखे ! धिगीदृशं राज्यं यत् परेषां बाहुभिः रक्ष्यते न स्वबाहुना । तदहं तीव्रं तपः कृत्वा यथा भुजनिर्जितशत्रोर्मे एषा विडम्बना न स्यात् तथा करिष्यामि । इत्युक्त्वैव तं वयस्यं वारयन्तं निषिध्य सः विद्युद्ध्वजः पित्रोरनुज्ञया तपसे वनं प्रययौ । ततश्च

विदितवृत्तान्तौ पितरौ स्नेहात् तमन्वागत्य प्रोचतुः पुत्र ! क्व त्वं बालः, क्व च कष्टं तपः मा तावत् साहसं कृथाः, जितशत्रु नो राज्यमिदानीं, त्रैलोक्ये इतोऽधिकं किं गाच्छसि ? वृथात्मानं दुन्वन् कथं नौ तापयसि ? शोषयसि च ? एवं वादिनौ पितरौ विद्युद्ध्वजः प्रोवाच तातौ ! बाल्ये एव दिव्यानि अस्त्राणि उपार्जयिष्यामि, ततो बलात् निःसपत्नं जगत् राज्यं भवेत् एतेन, तपसा, किमेतत् न ज्ञायते ? नित्यसन्नद्धैर्बलैः स्वपुरं रक्ष्यते इदं किं न लज्जाकरं भवताम् ? इत्युक्त्वा तौ पितरौ विसृज्य स विद्युद्ध्वजः घोरं तपश्चरन् विरिञ्चिमाराधयामास। स दैत्यः त्रीणि त्रीणि वर्षशतानि फलाहारः अम्बुपायी तथा वायुभक्षश्च क्रमेण तस्थौ। ततो भगवान् वेधा जगत्क्षोभकरं तत्तपः समवलोक्य समुपेत्य तदर्थिने तस्मै ब्राह्मादीनि अस्त्राणि ददौ उवाच च वीर ! ब्रह्मास्त्रमेतत् रौद्रं पाशुपतम् अस्मद्गोचरमस्त्रं विना अन्येन अस्त्रेण न प्रतिहन्यते। तत्त्वया जयैषिणा अकाले एतत् न प्रयोक्तव्यं इत्युक्त्वा ब्रह्मान्तर्दधे, सोऽपि दैत्यवरः स्वं गृहमायात्। ततस्तदागमनप्रीतिपरैः सर्वैरसुरैरभिनन्द्यमानः स पित्रा समं स्वबलैः सह शक्रजिगीषया सुरलोकमगात्। इन्द्रोऽपि तदागमं बुद्ध्वा पूर्वमेव कृतसुरलोकरक्षाविधानः सख्या चन्द्रकेतुना विद्याधरेण पद्मशेखरनाम्ना गन्धर्वराजेन च सह युयुत्सुस्तदंशतः समुपययौ विद्युद्ध्वजश्च बलैरम्बरमाच्छादयन् तमभीयाय। ब्रह्मविष्णुरुद्रादयो देवास्तमाहवं द्रष्टुमागमन्। ततस्तयोरुभयसैन्ययोः तुमुलः सम्प्रहारः प्रावर्त्तत। पर-

सुरासुरसम्पातेन निरुद्धार्कतया अन्धकारितदिङ्मुखः श्रमसंवर्त्तेन क्षुभिताभिर्वाहिनीभिः सङ्कुलः लुठद्वाजिगजग्राहः समरार्णवः सम्बवृधे। परस्परेण देवैर्यथाबलं द्वन्द्वयुद्धेषु प्रवर्त्तितेषु विद्युत्प्रभः क्रुधा शक्रमभ्यागात्। तेनामरद्विषा अस्त्रप्रत्यस्त्रयुद्धेन नितान्तमभिभूयमानः देवेन्द्रः तस्मै वज्रमवाक्षिपत् स तु दैत्येन्द्रः वज्रताड़ितः सहसा गतजीवितः पपात। अथ विद्युद्ध्वजः क्रोधात् तं शतक्रतुमभ्यधावत्। अक्षिपच्च तं प्रति ब्रह्मास्त्रम् अप्राणसंशयेऽपि। अन्ये चासुरास्तस्मिन् देवेन्द्रे अस्त्राणि प्राक्षिपन्। अथ स शतक्रतुः ईश्वरादिष्टं पाशुपतं स्मृत्वा अभ्यर्च्य शत्रुषु तदस्त्रं प्राक्षिपत्। तेन कालाग्निकल्पेनास्त्रेण तत् सर्वमासुरं बलं दग्धम्। विद्युद्ध्वजस्तु बालत्वादहतोऽपि मूर्च्छितोऽपतत्। न हि तदस्त्रं बालं वृद्धं पराङ्मुखं निहन्ति। ततो लब्धजया देवा स्वस्थानानि प्रययुः। विद्युद्ध्वजस्तु ध्वस्तः सुचिरात् लब्धचेतनः शोचन् पलायमानान् शेषान् सैनिकानवोचत् वीराः! जयिनोऽपि वयम् अद्य ब्रह्मास्त्रे प्रक्षिप्तेऽपि जिताः, तद् गत्वा शक्रमासाद्य आहवे जीवितं त्यक्ष्यामि, न तु हते पितरि स्वपुरं गन्तुं शक्ष्यामि। इत्युक्तवन्तं तं वृद्धः पैतृको मन्त्री उवाच वत्स! अकाले त्वया ब्रह्मास्त्रं मुक्तम् अन्यायमसहमानेन पाशुपतेन निराकृतम्! तत् लब्धजयं तं शक्रमकाले आक्रेमुं नार्हसि, तथा कृते तस्योपचयः स्वस्य च नाशो भवेत्। धीरो हि काले आत्मानं रक्षन् रिपोर्बलं प्राप्य प्रतिक्रियां कृत्वा विश्वश्लाघ्यं यशोऽश्नुते। इति तेन वृद्धमन्त्रिणाभिहितो

विद्युद्ध्वजस्तमुवाच तर्हि अस्मद्राज्यरक्षार्थं यूयं यात, अहं पुनर्गत्वा तमेव विश्वेश्वरं शिवं तपसा आराधयिष्यामि। इत्युक्त्वा अनिच्छतोऽपि तान् अनुगान् स विससर्ज। पञ्चभिरेव वयस्यैर्दितिजकुमारैरन्वितः गत्वा कैलासमूलं गङ्गातीरे तपः समाश्रयत्। एकं वर्षसहस्रं शिवं ध्यायन् फलमात्रवृत्तिर्निदाघे पञ्चाग्निमध्ये शीते च वारिणि तस्थौ। द्वितीयं वर्षसहस्रं मूलाशनः, तृतीयं वर्षसहस्रं वारिभोजनः चतुर्थं वर्षसहस्रं वायुभक्षः, पञ्चमञ्च वर्षसहस्रं निराहारश्च घोरं तपश्चचार। अथ तपस्तुष्टागतं ब्रह्माणं स खलु न बहु मेने उवाच च दृष्टस्ते वरप्रभावः, गम्यतामिति। अथ तावन्तं कालं निराहारमेव स्थितं तं साक्षात् शम्भुरागत्याब्रवीत् वीर! वरं वृणीष्व, प्रीतोऽस्मि ते तपसा साहसेन चेति। दैत्योऽब्रवीत् प्रभो! अहं त्वत्प्रसादात् रणे शत्रुं बध्यामिति। उत्तिष्ठ न विशेषोऽस्ति जितस्य हतस्य वा तदिन्द्रं रणे जेष्यसि, तत्पदे च निवत्स्यसि। इत्युक्त्वा देवे अन्तर्हिते स दैत्यराजः सिद्धं मनोरथं मत्वा पारणं कृत्वा च स्वपुरं ययौ। तत्र पौरैस्तेन च वृद्धेन मन्त्रिणाभिनन्दितः मिलित्वा च सर्वैरसुरैर्महोत्सवं व्यधत्त। ततश्च सर्वाणि असुरसैन्यानि आहूय विहितरणसज्जः देवेन्द्राय युद्धाय सज्जो भवेति दूतं प्राहिणोत्। सेनानादनिर्घातदारितं नभश्चचाल। इन्द्रोऽपि तं लब्धवरं समायान्तं दैत्यपतिं विज्ञाय समाकुलः देवगुरुणा सम्मन्त्र्य सुरसेनान्यमाजुहाव। ततो विद्युद्ध्वजे रणशिरसि समुपस्थिते उभयोः सेनयोः

स्तेषां परेषाञ्चाज्ञातविभागो महारणः संववृते। बाहु-शालिप्रमुखा दैत्या वायुभिः समयुध्यन्त। पिङ्गाद्याद्या असुरा महामायिनः उग्रयोधिभिः कुवेरबलैः, अयःकामा-दयोऽसुराः सूर्य्यैः, आकम्पनादयः सिद्धैः, केचिदसुराः विद्याधरैः, अपरे गन्धर्वैः समयुध्यन्त। एवं तेषां विंशति दिनानि घोरं युद्धमवर्त्तत। एकविंशतिदिने दैत्यैः सुरा अभज्यन्त। ते च भग्नाः पलाय्य स्वर्गान्तः प्रविविशुः। ततः स्वयं वासव ऐरावतारूढ़ः निरगात्। पुनश्च देव-सैन्यानि तं परिवार्य्य निरगच्छन्। चन्द्रकेतुप्रभृतयश्च खेचरास्तमन्वसरन्। ततश्च पुनः प्रवृत्ते संग्रामे सुरासुरे च हन्यमाने विद्युद्ध्वजः पितृवधामर्षपूरितः शतक्रतुमभ्य-धावत्। देवराजः क्रुद्धस्तस्य दैत्येन्द्रस्य प्रतिघ्नतः अस्त्राणि कोदण्डञ्च अस्त्रसंघैः पुनः पुनश्चिच्छेद। ततोऽसुरपति-र्महेश्वरवरोद्धतः मुद्गरमादाय जवात् तं वासवमभ्य-द्रवत्। उत्पत्य च ऐरावतस्य दन्तयोर्हत्वा कुम्भाग्रमारुह्य यन्तारं विममाथ। प्रजहार च देवेन्द्रं तेन मुद्गरेण। देवराजश्च मुषलेन सत्वरं तं प्रतिजघान। सोऽपि विद्यु-द्ध्वजस्तं भूयोऽपि मुद्गरेण जघान। तेन स देवेन्द्रः वायुध्वजस्योपरि मूर्च्छितः पपात। तदवलोक्य वायु-र्मनोजवेन रथेन तमिन्द्रं रणादन्यतोऽपाहरत्। विद्यु-द्ध्वजश्च तमपसार्य्यमाणमपि अन्वसरत्। अथ अकालोऽयं रणस्य, तदेनमिन्द्रं रणादपसारयत इति सहसा आका-शात् सरस्वती उदचरत्। ततो वायुना रथवेगात् शक्रे अपसारिते विद्युद्ध्वजोऽपि रथारूढ़ो यावत् तमनुधावति

तावत् ऐरावतः क्रुद्धो निरङ्कुशः धावित्वैव मथ्नन् सैन्यानि शक्रसकाशमाययौ। ततो रणं मुक्त्वा देवसैन्ये इन्द्रमनुसृते सुरगुरुः भीतां शचीं ब्रह्मभवनं निनाय।

अथ विद्युद्ध्वजः जयं प्राप्य नदद्भिः सैन्यैः सह शून्याममरावतीं प्रविवेश। इन्द्रोऽपि लब्धचेतनः साम्प्रतम् असाम्प्रतं रणोद्योग इति मत्वा सर्वैः सुरैः सह ब्रह्मलोकमगात्। पितामहस्य साम्प्रतमसौ हरवरप्रभावः, तत् मा शोकं कृथाः, भूयः स्वं पदं प्राप्तासि, इति समाश्वास्य देवेन्द्रं, सर्वसुखावहं स्वं समाधिस्थलं नाम ब्रह्मलोकैकदेशस्थं स्थानं तस्मै वसतये प्रददौ। तत्र स देवेन्द्रः शच्या ऐरावणेन च संयुतः समुवास। विद्याधरेश्वराश्च तदादेशात् वायुलोकमगमन्। गन्धर्वपतयश्च अष्टाग्यं सोमलोक माययुः। अन्ये च त्यक्तस्वनिवासा अन्यान् लोकान् गताः।

विद्युद्ध्वजस्तु देवानां राज्यं त्रिपिष्टपं निर्मर्यादः अहमेव सुरासुरपतिरिति डिण्डिममाघोष्य बुभुजे।

अत्रान्तरे वायुलोकस्थितो विद्याधरेन्द्रश्चन्द्रकेतुरित्थं व्यचिन्तयत् इह सपदभ्रष्टेन मया कियच्चिरं स्थातव्यम्। अद्यापि अस्माकं शत्रोर्विद्युद्ध्वजस्य नाशः क्षयोऽस्ति। श्रुतञ्च मया, स मे सुहृत् पद्मशेखरो गन्धर्वराजः सोमलोकात् तपसे शिवलोकं गतः। देवेन प्रभुना तस्य प्रसादः कृतो नवेति नाद्यापि जाने, तद्विदित्वा आत्मनः कर्त्तव्यं निरूपयामीति यावत् ध्यायति, तावत् स गन्धर्वराजः प्राप्तवरः सखा तं विद्याधरेन्द्रमभ्याययौ। स तेन सख्या चन्द्र-

कौतुका प्रेमृणा समाश्लिष्य विहितस्वागतः पृष्टश्च स्वं वृत्तान्तं गन्धर्वपतिराचचक्षे । सखे ! गत्वाहं शिवपुरे भगवन्तं शम्भुं तपसा समाराधयम् । स च मामादिशत् वत्स ! गच्छ, तव उत्तमः पुत्रो भविता, पुनश्च राज्यमेकाञ्च कन्यकां प्राप्स्यसि ।" तस्यास्ते सुताया वीरो भर्त्ता विद्युद्ध्वजस्य अन्तको भविष्यति । इत्यादिष्टोऽहं शम्भुना प्रीत्या तं वक्तुमागतः । एवमाकर्ण्य गन्धर्वपतेर्वचः, चन्द्रकेतुरब्रवीत् सखे ! अहमपि एतस्य दुःखस्य शान्तये तं महेश्वरं गत्वा आराधयामि तमनाराध्य नैव ईप्सितसिद्धयः । इति निश्चित्य स चन्द्रकेतुस्तपसे त्रिशूलिनो दिव्यं क्षेत्रं स्वपत्न्या मुक्तावल्या समं जगाम । स च पद्मशेखरः इन्द्राय स्वबलवृत्तान्तमाख्याय रिपुजये उत्पन्नास्थः सोमभवनमगात् । ततः सुरपतिस्तत्र समाधिस्थले वसन् रिपुक्षये सञ्जातप्रत्याशः सुरगुरुमस्मरत् । स्मृतोपस्थितश्च तं स विनयनम्रः प्राब्रवीत् गुरो ! तपसा तुष्टो हरः पद्मशेखरस्य समादिशत् विद्युद्ध्वजस्य हन्ता ते जामाता भावीति । तदस्ति अस्य दुःखस्य अन्तः किन्तु अहं चिरम् अत्र निवसन् स्वपदभ्रंशेन निर्विषस्तिष्ठामि, तद्भ भगवन् ! शीघ्रकारिणमुपायं चिन्तय, इति शक्रवचः समाकर्ण्य देवगुरुरब्रवीत् देवराज ! तस्यासुरस्य दुष्कृतैः प्रायशस्तपसः क्षयः प्राप्तः । तस्मादस्माकं स्वप्रयत्नविधिरवसरोऽयं तदेहि ब्रह्मणः सकाशं, स एवास्मान् उपायं वदिष्यति । इति गुरुणोक्तः शक्रस्तेन सहित, ब्रह्मणोऽन्तिकमगात् । शशंसच, प्रणम्य तस्मै स्वं मनोगतम् । ततः स्वयम्भुरव-

दन् ममापि किमत्र चिन्ता नास्ति? किन्तु शर्वकृतं शर्वेणैव व्यपोहितुं शक्यं स च देवः सुचिरेण प्राप्यः, तदेनं हरेर्निकटं यामः, स हि तदभिज्ञात्मा सदुपायं वदिष्यति। इति सम्मन्त्र्य ते ब्रह्मेन्द्रगुरवः हंसयानमारुह्य श्वेतद्वीपमुपागमन्। यत्र सर्वो जनः शङ्खचक्रगदापद्मधारी चतुर्भुजः मूर्त्तौ च चित्ते च भगवन्मयः। तत्र गत्वा ते महारत्नगृहान्तरे स्थितं कमलया सेवितचरणकमलं शेषशय्यागतं देवं हरिं ददृशुः। ततः कृतप्रणामास्ते तेन च यथार्हं सत्कृताः तत्र यथोचितमुपाविशन्। व्यजिज्ञपंश्च पृष्टकुशलास्तं भगवन्तं देव! किमिवास्माकं कुशलं सति विद्युद्ध्वजे। सर्वमेव देवो जानाति यत् तेनासुरेणास्माकं कृतम्। तदर्थमस्माकमागमः, तदत्र देवः प्रमाणमिति एवमुक्तवतो देवान् तान् प्रोवाच जनार्दनः। कथं न जानामि, यत्तेन असुरेण मे स्थितिः सनातनी भग्ना, किन्तु स्वयं त्रिपुरारिणा यत्कृतं तत् तेनैवान्यथा कर्त्तुं शक्यते नान्येन तत एवास्य दैत्यस्य पापस्य क्षयो भवेत् अत्र कुरुध्वमुपायं यदि, तदहं वच्मि निशम्यताम्।

सिद्धीश्वराख्यं माहेश्वरं क्षेत्रमस्ति, तत्र नित्यं सन्निहितो हरः संप्राप्यते, दर्शितज्वालालिङ्गमूर्त्तिः स भगवान् हरः प्रजापतेश्च पूर्वं मे एतत् रहस्यमवदत्। तदेत, तत्र गत्वा तपसा तं देवं प्रार्थयामहे। स एव जगतामस्मुपद्रवं शमयिष्यति। इत्यादिष्टवता तेन देवेन विष्णुना सह सर्वे ते ताभ्यां हंसाभ्यां यानाभ्यां तत् सिद्धीश्वरं क्षेत्रं ययुः। यत्र जरा मृत्युश्च न पदमाप्नोति, यस्मिंश्च,

सौख्यैकनिकेतने मृगाः पक्षिणः द्रुमाश्च हेमरत्नमयाः। तत्र ते हरिविरिञ्चिदेवेन्द्रसुरगुरवः शूलिनः चणे चणे दर्शितान्योन्यमूर्त्तिभेदं लिङ्गमभ्यर्च्च्य दुष्करं तपः प्रारेभिरे।

अत्रान्तरे चन्द्रकेतोस्तीव्रेण तपसा तुष्टो हरः तस्य विद्याधरपतेर्वरमदात्। राजन्! उत्तिष्ठ, ते महावीरः सुतो जनिष्यते। यः समरे युष्मच्छत्रुं विद्युद्ध्वजं निहनिष्यति। स च शापात् मानुष्ये अवतीर्णः देवानां हितं साधयन् गन्धर्वराजस्य पद्मशेखरस्य दुहितुः पद्मावत्याः तपोबलात् पुनस्तयैव भार्य्यया सह स्वपदमायास्यति। दश कल्पांश्च सर्वविद्याधरैश्वर्य्यं भोक्ष्यते। इति दत्तवरे देवे दृष्टिपथातीते स चन्द्रकेतुः सभार्य्यः तदैव वायुभवनमागात्। तावच्च तत्र सिद्धीश्वरे तीव्रतपसा तुष्टो भगवान् शम्भुस्तान् विष्णुब्रह्मेन्द्रगुरून् चतुरो देवान् प्रहृष्टः प्राब्रवीत् उत्तिष्ठत अलं वः क्लेशेन, युष्मत्पक्षेण विद्याधरेश्वरेण चन्द्रकेतुना अहं तपसा तोषितः, मदंशसम्भवस्तस्य वीरः पुत्रो भविष्यति, यस्तं विद्युद्ध्वजं रणे निहनिष्यति। ततो देवकार्य्यार्थं मानुष्ये शापतश्च्युतः पद्मावत्या पद्मशेखराख्यस्य गन्धर्वपतेः सुतया उद्धारं लप्स्यते। तद्गच्छत, मनागेव कालः तस्य शत्रोः प्रादुर्भावे सोढव्य इति तान् अच्युतादीनादिश्य देवोऽन्तर्दधे। ततो हृष्टास्ते सुराः स्वं स्वं धाम यथागतं प्रतिजग्मुः।

अथ विद्याधरेन्द्रस्य चन्द्रकेतोः प्रिया महिषी रत्न-

बली सगर्भाभूत् प्रासोष्ट च काले दुरासदेन तेजसा दिशः प्रकाशयन्तं तामसोपद्रवं हन्तुं बालार्कमिवोदितं सुतम्। तस्मिंश्च सुते जातमात्रे दिवः भारती प्रभुवे चन्द्रकेतौ। अयं ते सुतो विद्युद्ध्वजस्य असुरेन्द्रस्य हन्ता नाम्ना च मुक्ताफलकेतुर्भविष्यति। इत्युक्ता सा वाक् चन्द्रकेतुं प्रहर्षयन् विरराम। पुष्पवृष्टिश्च पपात। पद्मशेखरः देवेन्द्रश्च सर्वैः सुरैः सह परस्परं हरप्रसादवृत्तान्तमाचक्षन्तः तत्र समागमन्। आगत्य च ते महोत्सवमनुभूय पुनः स्वस्थानानि प्रत्यागमन्। स च मुक्ताफलकेतुः सर्वैः संस्कारैः संस्कृतः देवानां महानन्देन समं क्रमेण वृद्धिमगमत्।

अथ गच्छति काले पद्मशेखरस्य गन्धर्वपतेः कन्यैका समजनि। तस्याञ्च जातायां अन्तरीक्षात् वागेषा समुदचरत्। गन्धर्वपते! सुतेयं ते विद्युद्ध्वजद्विषः विद्याधरपतेर्भार्य्या नाम्ना च पद्मावती भविष्यतीति। अथ सा यथोक्तविधिना कृतसंस्कारा सुधांशोरालोकसंक्रान्तेन अमृतपूरेणेव, लावण्यप्रसारेण विराजिता कन्या क्रमेण व्यवर्द्धत। सोऽपि बालो मुक्ताफलकेतुर्महामतिः केवलं शिवपरः व्रतोपवासादि तपश्चचार।

एकदा ध्याननिष्ठं द्वादशाहमुपोषितं तं बालं भगवान् शम्भुः प्रत्यक्षीभूय जगाद वत्स! तव अनया भक्त्या तुष्टोऽस्मि, मत्प्रसादेन तव सर्वाणि शस्त्राणि सर्वाश्च विद्याः कलाश्च आविर्भविष्यन्ति। एतच्च अपराजिताख्यं खड्गं गृहाण, येन विपक्षैरपराजितः साम्राज्यं करि-

थसि, इत्युक्त्वा स विभुस्तस्मै तं खड्गं दत्त्वा तिरोऽभ-वत्। स च राजपुत्रस्तत्प्रभावात् महास्त्रबलविक्रमः सम्-भवत्।

अत्रान्तरे स महासुरो विद्युद्ध्वजः कदाचित् दिविस्थः मन्दाकिनीसलिले जलक्रीड़ां कुर्वन् तस्या जलं पुष्परेणुभिः कपिशं मदगन्धानुविद्धं वीचिविक्षोभित-मद्राक्षीत्। ततोऽसौ भुजबलमदाध्मातः निजान् अनु-चरान् जगाद पश्यत, यात, ममाप्युपरि कः अम्भोभिः क्रीड़ति? तदाकर्ण्य उपरि यातास्त असुरा शाक्रेण दन्तिना सार्द्धं वृषभमेकं क्रीड़न्तं ददृशुः। ततस्ते आगत्य तमसुरेन्द्रं देवमब्रुवः प्राब्रुवन् देव! उपरि एष वृषः, ऐरावणेन हस्तिना सह क्रीड़ति अम्भसि। तस्य वृषस्य ऐरावतस्य च मार्थ्यमंदेन पयः सम्मिश्रितम्। श्रुत्वैतत् सोऽसुरः रुद्रमगणयन् मदात् चुक्रोध, उवाच च दुष्कृतपरिपाकमूढ़ात्मा स्वान् भृत्यान्। यात भो! आनयत बद्धा तौ वृषैरावणौ इति ततो गत्वा ते असुरा यावत् तौ जिघृक्षन्ति, तावत् तान् तौ वृषद्विपौ क्रुद्धौ प्रधाव्य जघ्नतुः। ततो हतशेषा असुरा गत्वा तमसुरराजमूचुः। स च तदाकर्ण्य क्रुद्धः तौ प्रति आसुरं महाबलं प्राहि-णोत्। अथ तत् सैन्यं पापपाकागतचयं मथित्वा वृषो हरान्तिकम् ऐरावतश्च देवराजसविधमगात्। अथे-न्द्रोऽपि ऐरावतरक्षिगणात् तस्य दितिजस्य तद्विचेष्टितं निशम्य तमरिं गौरीपतेरपि कृतावमानं सम्मासरोष-समयममन्यत। ततश्च कमलयोनये तदावेद्य तेन गु

मतः विद्याधरादिभिर्देवसैन्यैश्च सहितस्तं रिपुं हन्तुं प्रचोरचितमङ्गलः ऐरावतं तमारुह्य प्रतस्थे।

# अथ षोड़शोत्तरशततमस्तरङ्गः।

अथ स देवेन्द्रः त्रिपिष्टपं प्राप्य हरानुग्रह-सोत्साहै-र्बलैः पर्य्यवेष्टत। तदवलोक्य विद्युद्ध्वजः समस्तसैनिकः पुरान्निर्जगाम। निर्गच्छतश्च तस्य अनिमित्तानि प्रादु-रभवन्। ध्वजेषु रथानां विद्युतः पेतुः, गृध्राश्च उपरि भ्रेमुः। महान्ति च छत्राणि अभज्यन्त, शिवाश्चाशिवं प्राक्रन्दन्। स चासुरस्तानि अरिष्टानि अगणयन् निरगा-देव। ततश्च देवासुराणां महान् रणः प्रावर्त्तत।

स खलु मुक्ताफलकेतुः किमद्यापि नायाति इति वज्रिणा पृष्टश्चन्द्रकेतुस्तं व्यजिज्ञपत् देवेन्द्र! त्वरया विस्मृत्य आगच्छता मया तस्य नोक्तं परं स स्वयमेव बुद्ध्वा ध्रुवं सत्वरमागच्छत्येव। एतदाकर्ण्य स देवेन्द्रश्चतुरं वायुसारथिं तं मुक्ताफलकेतुमानेतुं द्रुतं प्राहिणोत्। पिता च चन्द्रकेतुस्तेन समं स्वसैनिकानामाह्वानाय प्रती-हारं व्यसर्जयत्। स च मुक्ताफलकेतुः दैत्याहवं गतं पितरं बुद्ध्वा सानुगस्तत्रैव गन्तुं स्वयमेव अभ्युद्यतोऽभवत्। ततोऽसौ जयगजारूढ़ो जनन्या कृतमङ्गलः तस्माद् वायु-लोकात् तमैश्वरं खड्गमुद्वहन् उदचलत्। प्रस्थितस्य तस्य

शिरसि नभसः पुष्पवृष्टिरपतत्। देवाश्च दुन्दुभीन् जघ्नुः, शिवाश्च वायवः वान्ति स्म। ततस्ते देवगणास्तमासाद्य सोत्सवं परिवव्रुः। ततः स तेन महता सैन्येन सह गच्छन् मार्गे मेघवतं नाम पार्वत्या सुमहत् आयतनं ददर्श। ततः स तदनुल्लङ्घयन् भक्त्या नभसोऽवतीर्य दिव्यानि पुष्पाणि च आहृत्य देवीं पूजयितुं प्रववृते।

अत्रान्तरे सा गन्धर्वपतेः पद्मशेखरस्य सुता पद्मावती प्राप्तयौवना सखीजनानुगता भर्तुः संग्रामगतस्य पितुश्च श्रेयस्कामा तपसि स्थिता स्वां मातरमनुज्ञाप्य इन्द्रलोकात् विमानेन तदेव गौर्य्यायतनमाजगाम। अद्यापि ते कश्चित् वरो न निश्चितः, यस्य युधि स्थितस्य त्वं श्रेयोऽर्थिनी, पितुश्च ते श्रेयोनिमित्तं तव माता तपसि स्थिता। त्वमिदानीं कन्या, तत् कस्य कृते तपः चिकीर्षसि? इति पथि सख्योक्ता सा पद्मावती तामब्रवीत् सखि! पितैव कन्यकानां सर्वसिद्धिकृत् दैवतम्। वरोऽपि अनन्यसामान्यगुणो मे निश्चितः। शम्भुना भगवतादिष्टः विद्याधरेन्द्रसुतो मुक्ताफलकेतुः विद्युद्ध्वजं निहत्य मे वरो भविष्यतीति एतत् मया अम्बया पृष्टस्य तातस्य मुखात् श्रुतम्। स च मे वरः संग्रामं गच्छति यातो वा। अतो भगवतीं गौरीं तपसाहं तस्य पत्युस्तातस्य च विजयं काङ्क्षन्ती समाराधयामि। एवं वादिनीं तां राजपुत्रीं सा सखी प्राह स्म सखि! भाविन्यर्थेऽपि तवैषः व्यवसायः, तत्ते अभिलषितं सिद्ध्यतु इति तया सख्या कृताशीः सा गौर्य्यायतनाभ्यर्णं महदेकम् उत्फुल्लैः स्वर्णकमलैः

तन्म,खाम्बु,रुहोत्सर्पत्कान्तिविच्छुरितेरिव प्रतिच्छन्नं भास्वरं सरः प्राप। तत्रावतीर्य्य सा अम्बिकायां अर्च्चनार्थं कमलानि उच्चित्य यावत् स्नानं विधित्सति, तावदेव असुरगणान् प्रति धावत्सु आमिषलुब्धेषु रक्षःसु तेन पथा आगते दंष्ट्राघोरमुखे पिशङ्गमूर्द्धजे धूमश्यामसत्काये लम्बोदरपयोधरे द्वे राक्षस्यौ आगते। ताभ्यां तत्क्षणं राक्षसीभ्यां दृष्टैव सा गन्धर्वराजसुता निपत्य जगृहे निन्ये च गगनोन्म,खम्। एतदवलोक्य यावत् तस्याः परिजनः समाकुलः समुच्चैराक्रन्द, तावत् मुक्ताफलकेतुः देवीगृहात् कृतार्च्चनः निर्गतः तमाक्रन्दं श्रुत्वा तदुद्देशमागमत्। आगत्य च स राक्षसीभ्यां गृहीतां तां असदृग्द्युतिं कालमेघावलीमध्यगतां सौदामिनीमिव पद्मावतीं दृष्ट्वा प्रधाव्य च ते राक्षस्यौ बलाद्धते विचेतने भुवि पातयित्वा तां व्यमोचयत्। अपश्यच्च तां लावण्यरसनिर्झरवाहिनीं त्रिवलीलहरीहारिमध्यभागेन शोभिनीं स्वर्गवधूनां संसर्गेण जातकौशलोत्कर्षेणेव विधात्रा समग्रसौन्दर्य्यसारेण विनिर्मितामिव पद्मावतीम्। दृष्ट्वैव तां स कन्दर्पमोहितः धीरोऽपि तत्क्षणं चित्रस्थ इव निश्चलस्तस्थौ। सापि पद्मावती राक्षसीसम्भ्रमे प्रशान्ते क्षणादिव समाश्वस्य तं जगतां नेत्रोत्सवदायिनं त्रैजगमोच्चादकारिणम् इन्दुकन्दर्पौ एकीकृत्यैव विधिना निर्मितं मुक्ताफलकेतुं ददर्श। ततो लज्जावनतमुखी सखीं स्वैरमभाषत सखि! भद्रमस्तु अस्य इतः परपुरुषपार्श्वतः अन्यतो व्रजामि, एवं वदन्त्यां तस्यां सा सखी तेन मुक्ताफलकेतुना वालिवं·

किमाह इति पर्य्यपृच्छ्यत। साप्यब्रवीत् वीर! शुक्लेयं प्राणदस्य तव कृताशीर्वादा एहि मध्यपुरुषपार्श्वात् प्रणाम इति मां वक्ति।" तदाकर्ण्य मुक्ताफलकेतुः ससम्भ्रमं तामुवाच भद्रे! केयं कस्य सुता? कस्मै शुभकर्मणे एषा प्रदेया? इति तेन पृष्टा तद्वयस्या तमब्रवीत् सुभग! इयं पद्मावती नाम कन्या, सखी मे, गन्धर्वाधिपतेः पद्मशेखरस्य सुता। विद्याधरेन्द्रस्य चन्द्रकेतोस्तनयो मुक्ताफलकेतु रस्याः शम्भु नादिष्टः पतिर्जगत्प्रियः देवसहायो विद्युद्ध्वजस्य अन्तकः। इयं हि तस्य भर्त्तुः पितुश्च संग्रामे जयकाङ्क्षिणी एतत् गौर्य्यायतनं तपसे समागता इति एतदाकर्ण्य मुक्ताफलकेतोरनुचरास्तां राजपुत्रीं दिष्ट्या देवि! सत्यासाकमयं ते भर्त्तेति समनन्दयन्। ततोऽन्योऽन्यपरिज्ञानहर्षपूर्णौ निजात्मनि तौ कन्यावरौ युगपत् अन्तर्न मातः स्म। यावच्च तौ अन्योऽन्यं प्रति सप्रेमतिर्य्यगवलोकितं तिष्ठतः, तावत् तूर्य्यनिस्वनः शुश्रुवे। ददृशे च महत् सैन्यं वायुयुक्तश्च रथः, चन्द्रकेतुप्रतीहारद्द। ततस्त्वरितागतौ तौ वायुप्रतीहारौ विनयेन वाहनं त्यक्त्वा उपागम्य तं मुक्ताफलकेतुमवोचतां राजपुत्र! पिता ते, देवेन्द्रस्य आह्वयचेतात् त्वामाह्वयति, तदिमं रथमारुह्य शीघ्रमागम्यतामिति। ततः स पद्मावतीप्रेमनिघ्नोऽपि गुरुकार्य्यानुरोधात् ताभ्यां सह तं रथोत्तममारुरोह। प्रतस्थे च दिव्यमिन्द्रप्रहितं कवचं बध्नन् वलितग्रीवं मुहुः पद्मावतीं पश्यंश्च। सा च पद्मावती आदृष्टिगोचरम् एकपापितलाघातेन निहतरागद्देहयं

तं मुक्ताफलकेतुमेव चिन्तयन्ती बाला पार्वतीपरमेश्वरौ संपूज्य तत्रस्थिता पतिपित्रोः श्रेयोऽर्थिनी तपस्तेपे। सोऽपि मुक्ताफलकेतुस्तामेवानुचयं चिन्तयन् विजयाशंसी दैत्य-सुरसैन्यं समासदत्। ते च सर्वे महासुराः तं सर्वैन्य सुसन्नद्धमागतं वीरं दृष्ट्वा तमेव प्रति अभ्यधावन्। स शूरः शरवर्षेण तेषामसुराणां शक्तीकृतैः शिरोभिः रणोत्सवारम्भे दिग्देवतानां बलिमिव चक्रे। तेन मुक्ता-फलकेतुना हन्यमानं बलं वीक्ष्य स विद्युद्ध्वजः क्रोधात् स्वयं तं प्रति अभ्यधावत्। स च दैत्यः आपतन्नेव तेन मुक्ताफलकेतुना ताड़ितः सम्भ्रान्त इवाभवत्। तदा च सर्वतः तदासुरं सैन्यं तमभ्यद्रवत्। तदवलोक्य वासवः सिद्धगन्धर्वविद्याधरसुरगणान्वितः तत् दैत्यसैन्यमभि-दुद्राव। ततः पततां शरप्रासशक्तितोमरपट्टिशानां निहन्यमानानाञ्च सैनिकानां सुमहान् नादः समुद्-भवत्। गजाश्वकायमकरा दन्तिमौक्तिकवालुकाः शरीरचक्रपाषाणाः शोणितसरितः समन्तात् प्राव-हन्। शोणितासवेन मत्तानां मांसलोलुपानां भूतानां कबन्धैः सह नृत्यतां महानन्दकरः स महारणः प्रावर्त्तत। तस्मिन्नाहवार्णवे जयश्रीर्देवानां दैत्यानाञ्च महोर्मिचपला इतस्ततः केवलं सञ्चचार, नैकत्र स्थिति-मवाप। इत्थं चतुर्विंशतिदिनानि तत् तुमुलं युद्धं विमानस्थैः शिवशौरिविरिञ्चिभिः प्रेक्ष्यमाणमासीत्। पञ्चविंशमे दिने प्रायशः क्षीणयोरुभयसैन्ययोः, द्वन्द्वयुद्धेषु प्रवृत्तेषु प्रधानेषु मुक्ताफलकेतोः रथस्थस्य विद्युद्ध्वजस्य च

गजारूढस्य इन्द्रयुद्धमवर्त्तत। मुक्ताफलकेतुः तिमिरास्त्रं भास्करास्त्रेण, शिशिरास्त्रं नैदाघास्त्रेण, शैलास्त्रं कुलिशेन, नागास्त्रं गारुडेन निवार्य्य तस्य दैत्यपतेर्यन्तारं वारणञ्च एकैकेन इषुणा न्यपातयत्। स च दैत्यराजः रथारूढस्य तस्य मुक्ताफलकेतोः रथं सारथिं तुरगांश्च शरौघेन हत्वा मायामशिश्रियत्। तया च मायया सर्वसैन्यानामदृश्यः सर्वतः सुरवाहिनीमभितः विविधानि शस्त्राणि च ववर्ष। मुक्ताफलकेतुना यद्दिव्यं शरजालम् अवध्यत, दैत्यस्तत् अनलवृष्टिभिर्ददाह। अथ स मुक्ताफलकेतुः सानुगं तमरिं प्रति विश्वक्षयक्षमं ब्रह्मास्त्रमभिमन्त्र्य मुमोच। तेनास्त्रेण निहतः ससैन्यो महासुरो विद्युद्ध्वजः गतजीवितो नभसः निपपात। शेषा विद्युद्ध्वजसुतादयः वज्रदंष्ट्रादिभिः सह रणात् पलाय्य रसातलं विविशुः। देवाश्च सिंहनादं नदन्तः साधु साधु इति तं मुक्ताफलकेतुमभ्यनन्दन्। पुष्पवृष्टिश्च दिवः पपात। ततस्तस्मिन् हते शत्रौ देवेन्द्रः प्राप्तत्रिदिवराज्यः अमरावतीं प्रविवेश विदधे च त्रिषु लोकेषु महान्तमुत्सवम्। प्रजापतिः स्वयं शचीं पुरस्कृत्य समागात् अबध्नाच मुक्ताफलकेतोः शिरसि चूडारत्नोत्तमम्। इन्द्रोऽपि राज्यदायिनो विजयशोभिनस्तस्य कण्ठे स्वकं हारं न्यधात्। समुपावेशयच्च तं निजासनसमासने। अमरर्षयश्च देवाः सानन्दं तमाशिषा। अथ देवराजः तस्मै मुक्ताफलकेतवे विद्युद्ध्वजासुरपुरम् अवसरे दास्यन् प्रतीहारं विसृज्य तत् पुरादिकम् अधिचकार।

ततः स गन्धर्वपतिः पद्मशेखरः तस्मै राजपुत्राय पद्मावतीं सुतां दातुं साकूतं दातुमुपक्रमे स्थितः। स च दाता ज्ञातामयस्तं गन्धर्वेन्द्रमुवाच राजन्! अस्ति कश्चित् कार्य्यशेषः, तन्मुनाक् प्रतीक्षस्व इति। ततो हाहाहूहू-प्रभृतीनां गीतैः तुम्बुरुनारदवादितैः रम्भादीनामप्सरसां नृत्यैश्च महान् इन्द्रस्य विजयोत्सवोऽभवत्। ततो हृष्टोत्सवे सप्तर्षौ याति धातरि वृत्रहा लोकपालादीन् सम्मान्य स्वे स्वे धाम व्यसर्जयत्। तञ्च गन्धर्वराजं पद्मशेखरं सपरिच्छदं सम्मान्य गन्धर्वनगरं तौ च मुक्ताफलकेतुं चन्द्रकेतुञ्च पिता-पुत्रौ सुसत्कृतौ उत्सवाय स्वं विद्याधरलोकं प्राहिणोत्। स च मुक्ताफलकेतुः संहृतविघ्नकण्टकः जनकेन सह वि-द्याधरकन्यकाभिरुद्गीयमानयशाः स्वां राजधानीमाज-गाम। सा च नगरी तस्मिन् सपितृके जयशालिनि चिर-गते राजसुते प्रविष्टे तदानीं ध्वजपटांशुकमालिनी वरैश्च रत्नैरलङ्कृता विबभौ। स च राजा चन्द्रकेतुः परितोषित-बन्धुभृत्यवर्गः जलदो जलमिव वसु प्रवर्षन् सुतविजयोत्सवं व्यतनोत् स च मुक्ताफलकेतुस्तां विद्युद्ध्वजजयकीर्त्तिमपि लब्ध्वा तां पद्मावतीं विना निजेषु भोगेषु सुखं न मेने। केनचिच्च शर्वादेशशंसिना संयतकाख्येन सख्या समाश्वा-स्यमानः कृच्छ्रेण तान्यहानि निनाय च।

## अथ सप्तदशोत्तरशततमस्तरङ्गः।



अत्रान्तरे स गन्धर्वराजः स्वनगरीं प्रविष्टः कृतमहोत्सवः पौरान् नन्दयन् स्वस्य भर्त्तुश्च जयाशंसया गिरिजालयं गत्वा तपश्चरन्तीं तनयां भार्य्यामुखात् श्रुत्वा पद्मावतीं समानयत्। अथोपगतां तपसा विरहेण च क्षामां तां तनयामाशीर्भिरभिनन्दयन् जगाद वत्से! मदर्थं त्वया महान् तपःक्लेशो विहितः, तत् विद्याधरेन्द्रसुतं विद्युद्ध्वजान्तकं जगच्छरण्यं जयिनं शम्भुना देवेन स्वयं व्यादिष्टं मुक्ताफलकेतुं पतिं शीघ्रमाप्नुहि। इति पित्रोदिता सा यावदवनतमुखी आस्ते तावत् तन्माता कुवलयावली राजानमाह आर्य्यपुत्र! कथं तादृशः त्रिलोकीभयावहः असुरः तेन राजपुत्रेण संयुगे निहतः? ततः सा पद्मावतीसखी मनोहरिका नाम तत्कृतां राक्षसीद्वयवधवार्त्तामाचचक्षे। ततस्तौ राजदम्पती तस्य राजपुत्रस्य सुतायाश्च वृत्तमन्योन्यदर्शनं प्रीतिञ्च निशम्य परां मुदमवापतुः। जघ्नतुश्च येन अगस्त्येन जलधिरिव असुरचमूचयः निगीर्णः, तस्य के इमे राक्षस्यौ। इत्थं तस्य वीरस्य उत्कर्षवर्णनावात्यया पद्मवत्याः स मदनानलः प्रबलः प्रजज्वाल। ततश्च सा तत्क्षणात् पित्रोः सकाशात् निर्गता सोत्सुका गृहान्तरस्थप्रासादमारुरोह। तत्र सा रत्नस्तम्भबद्धमौक्ति-

कजालके मणिकुट्टिमेषु विन्यस्तसुखशय्यावरासन समन्विते चिन्तितोपनतनानादिव्यभोगमनोरथे स्थिता प्रेयो विरह-वह्निना समधिकमतप्यत। अपश्यच्च ततः प्रासादपृष्ठात् हेमद्रुमलताञ्चितं रत्नवापीशताकीर्णं समृद्धिमत् दिव्य-मुद्यानम्। दृष्ट्वा च साचिन्तयत् चित्रमिदम् अस्माकं पुरं मज्जन्मभूमेरैन्दवात् भवनादपि सुन्दरम्। हिमाद्रेर्मौलिषु अपि न चेदं मया दृष्टम्। नन्दनादपि अभ्यधिकमिदमुप-वनं, तदत्र गत्वा सच्छायशीतले विजने वरं विरहानल-सन्तापं मनाक् शमयामि। इति सञ्चिन्त्य सा बाला शनैरेकाकिनी युक्त्या ततः प्रासादादवरुह्य पुरोद्यानं गन्तुं प्रचक्रमे। पद्भ्यां गन्तुमशक्ता सा स्वविभूतिवशात् उप-स्थितैः पक्षिभिर्वाहनीभूय तदुद्यानमनीयत। तत्रान्तः कदलीषण्डगृहे पुष्पास्तरेषु दिव्यगीतादिकं शृण्वती उपा-विशत्। न च सा क्षणमपि तत्र रतिमलभत, नापि तस्याः स्मरज्वरः शशाम। प्रियेण विना कामाग्निः प्रत्यु-तावर्द्धत। ततः सा समुत्सुका चित्रस्थमपि प्रियं दिदृक्षुः स्वसिद्धया वर्णयन्ती चित्रफलकमग्रहीत्। धातापि यत् सदृशं द्वितीयं स्रष्टुं न शक्नोति, तं पुनरहं सोत्कण्ठा सन्नपाणिः कथमालिखे ? तथापि आत्मविनोदाय यथा तथा तं लिखामि, इति सञ्चिन्त्य फलके सा यावत् तमा-लिखति, तावत् तस्याः सखी तां चिन्वती तमुद्देशमागात्। सा मनोहरिका तां राजपुत्रीमेकाकिनीं सचित्रफलकां पृष्ठतो निःशब्दपदसञ्चारेणागत्य स्थिता, पश्यामि तावत् किमियमेकाकिनीह करोतीति सञ्चिन्त्य प्रच्छन्ना तस्थौ।

सा च तावत् तं चित्रलिखितं प्रियम् उदश्रुनयनोत्पला एवमवादीत् नाथ! येन त्वया दुर्जयानसुरान् हत्वा देवेन्द्रो रक्षितः, स त्वमालापमात्रेण कथमशरणां मां न रक्षसि? मन्ये, मन्दभाग्यस्य कल्पद्रुमोऽपि अदातृत्वं सुगतोऽपि अदयालुतां सुवर्णमपि अल्पतां भजते। स्मरज्वरानभिज्ञस्त्वं नूनं मद्व्यथां न वेत्सि, दैत्याजितस्य ते तपस्वी स पुष्पेषुः किं करोतु। किं वा वामं विधिं वच्मि, यः अश्रुणा दृशौ मे पिदधत् तव दर्शनं चित्रेऽपि न दापयति। इति सोपालम्भमुक्त्वा सा राजपुत्री छिन्नहारगलत्स्थूलमुक्ताफलनिभैरश्रुबिन्दुभिः धरातलमभिषिञ्चन्ती रोदितुं प्रावर्त्तत।

तस्मिंश्च क्षणे सा मनोहरिका तामुपासर्पत्। सा च राजपुत्री तच्चित्रं वसनाञ्चलेनाच्छाद्य तां सखीं अगाद् सखि! इयच्चिरं न दृष्टासि कथं, क्व स्थितासि? तदाकर्ण्य सा विहसन्ती तामवादीत् सखि! त्वामेव चिन्वती चिरं भ्रान्तास्मि तत्त्वया चित्रमिदं किं छाद्यते, दृष्टं मया चित्रं श्रुतश्च ते करुणम्। एवं तयोक्ता सा पद्मावती अश्रुगद्गदं लज्जावनतमुखी हस्ते गृहीत्वा तामवादीत् सखि! प्रागेव त्वया सर्वं विदितं तत् किं निगूह्यते। तेन राजपुत्रेणाहं तस्मिन् गौर्य्याश्रमे उद्धृता महाघोरराक्षसीसङ्कटात्, परं दुर्वारविरहज्वाले मदनानले निक्षिप्ता। तन्न जानामि, क्व गच्छामि किं करोमि, कस्मै कथयामि, कमुपायमाश्रये वा दुर्लभे समासक्तचित्तास्मि। इति वादिनीं तां राजपुत्रीं सखी प्राब्रवीत् सखि! अनुरूपोऽयं ते अभिष्वङ्गो-

मनसः, युवयोः सङ्गमः परस्परशोभायै एवावश्यं विधात्रा घटयिष्यते । मात्र ते अधृतिरस्तु, स खलु भवतीं विना कदापि न स्थास्यति, त्वयापि किं स तथाभूतो न लक्षितः स्त्रियः रूपलोलुपा यं पुमांसं दृष्ट्वा इच्छन्ति सोऽपि पुमान् ता एव दृष्ट्वा तथा कामयन्ते । शर्वोऽपि किमलीकवादी, येन युवां दम्पती समादिष्टौ । अक्रूरवर्त्तिन्यभीष्टे को नाम न धृतिं लभेत । तदाश्वसिहि, स एव ते अचिरात् पतिर्भविता । त्वया कश्चिन्न दुर्लभः, त्वन्तु सर्वेषां दुर्लभा । इति तया सख्याभिहिता सा राजपुत्री तां जगाद सखि ! यद्यपि तथैव जानामि, तथापि इदं तदासक्तं चेतः न क्षणं सहते तेन विना स्थातुं मन्मथश्च न क्षमते, तमेव स्मरन्त्या मे मनः क्षणमपि न निर्वृतिं लभते, सन्तापेन मेऽङ्गानि दह्यन्ते, असवश्च उत्क्रामन्तीव, किं करोमि । इति वादिनी सा कुसुमसुकुमाराङ्गी मोहेन समाक्रान्ता तस्या वयस्याया उत्सङ्गे पपात । अथ सा सखी रुदती अम्बुसेककदलीपल्लववीजनैः क्रमेण तामाश्वासयामास । सा च सखी तस्या यानि मृणालहारवलयानि चन्दनविलेपनानि नलिनीदलशयनानि च विदधे, तान्यपि गात्रसन्तापेन सन्तप्तानि शुष्काणि च समदुःखत्वमिव भेजिरे । ततस्तामतिविक्लवां सखीमवेक्ष्य पद्मावती प्राब्रवीत् सखि ! कथमात्मानम् आश्वासयसि वृथा, नैवं मे व्यथा शाम्यति । येन शाम्यति, तच्च करोषि चेत्, शुभं भवेत् । एवमुक्तवतीमार्त्तां तां सखी प्रत्यभाषत सखि ! ब्रूहि, किन्ते करोमि, केन वा तापः शान्तिं गच्छति ? तवार्थे दुष्करमपि मे नैव

मकरणीयं विद्धि। तदाकर्ण्य सा राजसुता किञ्चिदिव क्रियादादीत् प्रियसखि ! तं मे कान्तं गत्वा द्रुतमिहानय, अन्यथा मे तापो नोपशाम्येत्, तातश्च नैव कुप्यति। प्रत्युत इहागतायैव अस्मै तातो मां प्रदास्यति। एवं तयोक्ता सा वयस्या तामब्रवीत् यद्येवं त्वं धैर्य्यमवलम्बस्व, कार्य्यमिदं कियत् ? एषाहं त्वत्प्रियानयनाय तत्पितुः खेचरेन्द्रस्य चन्द्रकेतोः चन्द्रपुरं नाम पुरोत्तमं याम्येव, त्वं निर्वृता भव, शुचा अलम्। एवमाश्वासिता सा राजसुताभ्यधात् सखि ! तदुत्तिष्ठ ! शिवस्ते पन्था भूयात्, सत्वरं व्रज। लोकानां त्रयाणां त्राता स मे प्राणेश्वरो वरस्त्वया सप्रणयं मद्वचसा एवं वाच्यः, नाथ ! तस्मिन् गिरिनन्दिनीनिकेतने तथा राक्षसीभयात् परित्राय साम्प्रतं स्त्रीघ्नेन मकरकेतुना हन्यमानामिमां कथं न दयसे ? भुवनोद्धरणसहानामेष को धर्म्मः ? यदापदि पूर्वत्रातं जनमुपेक्षते। हे कोकिलि ! त्वं तमेव वदेः, यथा वा स्वयं जानासि इति व्याहृत्य सा पद्मावती तां सखीं व्यसृजत्। सा च स्वसिद्धा समुपनतं पक्षिवाहनमास्थिता तत् विद्याधरपुरं प्रति प्रतस्थे। सा च पद्मावती किञ्चिदाश्वस्तचित्ता चित्रफलकं गृहीत्वा पितृमन्दिरं प्राविशत्। तत्र दासीभिः परिवृता निजवासकं प्रविश्य कृतस्नाना भक्त्या गौरीनाथं प्रपूज्य व्यजिज्ञपत् भगवन् ! त्रिषु लोकेषु त्वदिच्छां विना कस्यापि वाञ्छितमल्पं वा अधिकं न सिध्यति। तस्मै यदि तं विद्याधरचक्रवर्त्तिसुतं पतिं न दास्यसि, तदाहं तवाग्रतः देहं त्यक्ष्यामि। एवं चन्द्रशेखरे विहितविज्ञप्तिं ता-

मुपसृत्य सर्वः परिचारकजनः सखेदं साश्चर्यञ्चावदत् राज-पुत्रि! सदैव निरपेक्षेव किमिदं भाषसे? अत्र जगत्यां तव किमसुलभं विद्यते? त्वया अभ्यर्थमानः सुगतोऽपि ससम्भ्रमं स्वधर्मं मुञ्चेत्। एक एव स सुकृती, यस्त्वया एवमभ्यर्थ्यते। एतदाकर्ण्य सा राजपुत्री गुणानुरक्ता प्रावोचत् यः सेन्द्राणां देवानां त्राता स एव मे समाश्रयः, येनैकेन अर्केणेव तमः, सर्वमासुरं बलं ध्वस्तम्। यश्च मे प्राणदाता स कथं न मे प्रार्थनीयः? इत्यादि ब्रुवती समुत्सुका सा तयैव कथया आसेन तेन सखीजनेन समतिष्ठत्।

अत्रान्तरे सा मनोहरिका वयस्या विद्याधरेन्द्रनगरं चन्द्रपुरं मनोहरमद्राक्षीत्। सा अतर्क्यसिद्धिविभवं भास्वन्मणिमयद्रुमम् एकवृक्षोद्गतानेकजातीकुसुमशोभितं दिव्य-गीतरसोन्मिश्रशकुन्तरुतसुन्दरं तत् पुरमवलोकयन्ती भ्रम-मनन्दत्। तत्र उद्यानपालकैर्विचित्रैः पक्षिरूपिभिः सुव्यक्तवचनैः प्रियवादिभिः सा पारिजाततरोर्मूले नानारत्नो-ज्ज्वलासने उपवेश्य समुचितैर्भोगैः पूजिता। सा तु तत्र तां पूजामभिनन्द्य चिन्तयामास अहो! विद्याधरेन्द्राणां विचित्राः सिद्धिभूतयः? येषामचिन्त्योपनमद्भोगमीदृशमुद्यानं सुराङ्गनाबद्धसङ्गीतं शकुन्तपरिवारकम्। इत्येवं चिन्तयन्ती तानुद्यानपालकान् दृष्ट्वा चिन्वती पारिजातादि-तरुषण्डमवाप। तत्रान्तश्चन्दनसिक्तं कुसुमास्तरशायिनं मुक्ताफलकेतुं सविकल्पमिवालोक्य गौर्य्याश्रमे दृष्टचरं प्रत्य-भिज्ञाय पश्चाद्स्य किमस्वास्थ्यं इति प्रष्टुमा व्यतिष्ठत।

तथा स्थितश्च मुक्ताफलकेतुः कमपि परिचारकं सखा-यमब्रवीत् सखे ! मन्येऽहं शरीर चन्द्रारासुहिनेषु न्यस्ताः, चन्दनेषु तुषाग्मयः, मरुति दावानलाश्च समन्तात् विरहा-नलसन्तापं सृजता। तत् किमेवमात्मानं वृथा क्लिश्नासि ? अस्मिन् चन्दनाभ्यधिके मनोरमेऽपि उद्याने सुराङ्गनानां नृत्यगीतादिविनोदैरपि मे मनो दूयते। तां पद्मनेत्रां पद्मा-वतीं पद्मशेखरस्य गन्धर्वपतेः सुतां विना अयं मे स्मरशरज्वरः नैव शाम्येत्। न चैतत् कस्यापि वक्तुम् उत्सहे, धृतिञ्च न लभे। एक एव मे तत्प्राप्तौ उपायोऽस्ति, तत्रैव गौर्य्या-लयं गच्छामि, यत्र तया दृष्टया प्रियया कटाक्षेषुभिरुत्-खाय मे हृदयं हृतम्। तत्राद्रिराजतनयासङ्गतः स एव शम्भुः तपसाराधितः मे तत्समागमे उपायं विधास्यति। इत्युक्त्वा यावत् स राजपुत्र उत्थातुमिच्छति, तावत् सा सा मनोहरिका तुष्टा अयमेव समय इति बुद्ध्वा आत्मानमद-र्शयत्। वयस्य ! दिष्ट्या वर्द्धसे, तव समीहितं सिद्धम्। पश्य इयं तस्याः प्रियायाः सखी भवान्तिकं प्राप्ता, तत्पार्श्व-स्थैव एषा तत्राम्बिकायतने मया दृष्टा, इति सहर्षं स सखा संयतकस्तं राजपुत्रमब्रवीत्। ततः स राजसुतः तां प्रिया-सखीं दृष्ट्वा स्फुरदानन्दविस्मयौत्सुक्य सङ्कुलां कामपि अवस्थामभजत अपृच्छत् नेत्रपीयूषवृष्टिं तामुपगतां समीपे उपवेश्य कान्तायाः शारीरकुशलादिकम्। अथ सा निज-गाद प्रभो ! मत्सख्याः कुशलं त्वयि नाथे ध्रुवं भावि, साम्प्रतन्तु सा नितरामकुशलिनी, यदा प्रभृति दृष्टेन त्वया तस्या मनो हृतं तत आरभ्य विमना न किमपि शृणोति

मापि करोति न च पश्यति। सा बाला आहारं विमुच्य मृणालहारं दधती शयनोज्झिता केवलमम्भोजिनीपत्रेषु लुठति। या पूर्वं क्रीडां वरकथामपि नासहिष्ट, सेदानीं प्रियतमं विना इमामवस्थां प्राप्ता। इति तस्याः स्वान्येवा-ङ्गानि सन्तापशुष्कश्रीखण्डसितानि परस्परं हसन्तीव। एवञ्च सा त्वां ब्रवीति। इत्युदीर्य्य सा मनोहरिका ते पद्मावती सन्देशगीतके पपाठ।

स तु मुक्ताफलकेतुस्तत्सर्वमाकर्ण्य गतक्लमः तां मनोहरिकां हर्षात् अभिनन्द्य अभ्यभाषत सखि! अमृतेनेव तव वचसा ममेदं मनः सिक्तं, चैतन्यं श्वसितञ्च धृतिश्च मे जाता, क्लान्तिश्च गता। मन्ये फलितमद्य मे पूर्वसुकृतैः, यदहो गन्धर्वराजतनया मयि एवं पक्षपातिनी जाता। किन्त्वहं कथञ्चित् विरहव्यथां सोढुं शक्नुयाम्, सा तु शिरीषसुकुमाराङ्गी कथं सहेत। तस्मादहं तमेव गिरिजालयं गच्छाम्येव। तत्र त्वं ते सखीमानय, येनाद्य नौ सङ्गमः स्यात् कल्याणि! त्वरितं गत्वा तामाश्वासय च इमञ्च परितुष्टेन स्वयम्भुवा वितीर्णं मे चूड़ामणिं सर्वदुःख-निवारकं तस्यै देहि। अन्यश्च प्राप्तोऽयं हारः तव पारितोषिको मया दत्तः। इत्युक्त्वा स राजपुत्रः तस्यै शिरस्थितं चूड़ामणिं समर्प्य स्वात्कण्ठाच्च आदाय तस्याः कण्ठे समर्पयत्।

अथ सा मनोहरिका हृष्टा तं प्रणम्य ततो विहग-मारुह्य सखीं पद्मावतीं प्रति प्रतस्थे। स च मुक्ताफलकेतुः प्रहर्षेण गतक्लमः संयतकेन रक्ष्या समं त्वरितं पुरं प्रवि-

मत्। सापि सत्वरं पद्मावतीं प्राप्य तस्मै यथायथं तत्-प्रियवृत्तान्तं सर्वमाचख्यौ ददौ च तत्प्रहितं चूडामणिम्। आत्मनश्च पारितोषिकं हारं तस्यै प्रदर्शयत्। ततः पद्मावती तां व्रतिनीं सखीमाश्लिष्य अपूजयत् व्यस्मरच्च तां स्मरसन्तापरुजाम्।

अथ सा आनन्दमिव तं चूडामणिं शिखायां बद्ध्वा गौरीकाननागमनार्थं संविधानमकरोत्। अत्रान्तरे कश्चित् मुनिः नाम्ना दृढ़व्रतेन शिष्येण सह तत् गौरीवनमागमत्। स चात्र तं शिष्यं दृढ़व्रतमुवाच वत्स! अस्मिन् दिव्योद्याने चणं समाधिं विदधामि, त्वया द्वारि स्थित्वा कस्यापि प्रवेशो न दातव्यः। ततश्चाहं समाहितसमाधिः पार्वतीं पूजयिष्यामीत्युक्त्वा मुनिरुद्यानद्वारे शिष्यं तं निवेश्य पारिजातस्य अधस्तात् समाधिमसेवत। चणान्तरे च समाधेरुत्थितः अन्तरम्बिकां पूजयितुं प्रविवेश। तच्च द्वारवर्त्तिने शिष्याय न जगाद।

एतस्मिन्नन्तरे स मुक्ताफलकेतुः प्रसाधितः दिव्यकरभमारुह्य सह तेन सख्या संयतकेन तत्राययौ। प्राविशच्च तदुद्यानम्। तावच्च मुनिशिष्यस्तं मा मा गुरुर्मे समाधौ वर्त्ततेऽत्र इति प्रवेष्टुं न्यषेधत्। जातु मे प्रिया अभ्यन्तरे आगता स्यात् मुनिरसौ अत्रैकदेशे स्थित इति समालोच्य स सोत्सुकः राजसुतः अस्य मुनिशिष्यस्य दृक्पथमतीत्य सुहृद्युतः व्योममार्गेण तत्र प्रविवेश। मुनिशिष्यश्च यावत् गुरोः समाधिं निरीचितुमागच्छति तावत् गुरुं तत्र न ददर्श, ददर्श च तं सवयस्यं मुक्ताफलकेतुमपथेन प्रविष्टम्।

ततः स मुनिश्शिष्यस्तं राजपुत्रं क्रुधा अशपत् अस्मादविनयात् सवयस्यस्त्वं मानुष्यं व्रज, यतः समाधिं भङ्क्त्वा मे गुरुस्त्वया ताड़ितः। इत्थं दत्तशापः स तं गुरुं स्वमेव अनुचचार। स च मुक्ताफलकेतुः सिद्धप्राये मनोरथे शापाशनिनिपातेन परं विषादमगमत्। पद्मावती च तावत् प्रियसङ्गमलालसा विहगमारुह्य तया सख्या मनोहरिकया सह स्वयंवराय तत्रागात्। ताञ्च तैमागतां दृष्ट्वा शापान्तरितां सुखदुःखमयीं कष्टामवस्थां स राजसुतः सम्प्राप। तत्कालञ्च पद्मावत्या दक्षिणं चक्षुः पस्पन्दे, चकम्पे च मानसम्। ततः सा राजसुता प्रियसङ्गमे विघ्नं विलोक्य अत्रसीत् अचिन्तयच्च किमसौ पूर्वमागतत्वात् खिन्नः स्यात् इति। ततः स राजपुत्रः तां प्रश्रयागतामवादीत् प्रिये! भग्नोऽयं सिद्धोऽपि आवयोर्मनोरथो धात्रा। इत्युक्तां कथं भग्न इति ससम्भ्रमं पृच्छन्तीं तां राजसुतां स राजसूनुस्तं शापमवर्णयत्। ततो विविग्नास्ते सर्वे शापदातुर्गुरुं मुनिं देवीगृहस्थं शापान्ताय अनुनेतुमगमन्। ततः स ज्ञानी महामुनिः तानागतान् दृष्ट्वा तं मुक्ताफलकेतुं प्रीतिपूर्वमभाषत वत्स! मूर्खेण अविवेकिना अनेन शप्तोऽसि, न त्वया मे किञ्चिदपि अहितं कृतम्, अहं स्वतएव ततः समाधेरुत्थितः। अयञ्च निमित्तमात्रम्, इदं हि ते भवितव्यम्। मानुष्ये ते अवश्यं कार्य्यमस्ति, तच्च देवकार्य्यं तदनुष्ठानाय दैवेनासौ शापदानाय तव प्रहितः। एताञ्च पद्मावतीं दैवात् स्मरातुरां दृष्ट्वा स्मरातुरः मर्त्यशरीरं त्यक्त्वा शीघ्रं शापात् विमोक्ष्यसे। अनेनैव देहेन

पुनः प्राणेश्वरीं प्राप्तासि, त्वं हि विघ्नदाता, नचरशाप नार्हसि। त्वया प्रयुक्तेन ब्रह्मास्त्रेण दैत्या बालहत्यादयो-ऽपि हताः, स एवाधर्मलेशस्तवात्र हेतुः। तदाकर्ण्य सा पद्मावती तमृषिं सविनयमब्रवीत् भगवन्! आर्य्यपुत्र-स्यास्य या गतिः सैव मे भवतु साम्प्रतम्। नाहमेतेन विर-हिता क्षणमपि स्थातुं शक्नोमि। इति प्रार्थितवतीं पद्मा-वतीं स मुनिरभ्यधात् वत्से! नैव तदस्ति, त्वं तपस्यन्ती इहैव तिष्ठ, येनाचिरात् मुक्तशापोऽयं त्वां परिणेष्यति। ततश्चानेन मुक्ताफलकेतुना सह दश कल्पान् खेचराणां साम्राज्यं करिष्यसि। एतत् दत्तं चूडारत्नं तपस्यन्तीं त्वां पास्यति, एतद्धि महाप्रभावं विधातुः कमण्डलोरुत्प-न्नम्। इति पद्मावतीमुक्तवन्तं दिव्यदर्शिनं मुनिं स मुक्ता-फलकेतुः प्रार्थयामास. भगवन्! मानुष्येऽपि मम भवे अभङ्गुरा भक्तिरस्तु, पद्मावतीं विना अन्यस्यां स्त्रियाञ्च मे मनो मा गात्। एवमस्तु इति तेन मुनिनोक्ते सा पद्मा-वती तस्य अपराधिनं शिष्यं शपतिस्म। यदसौ आर्य्यपुत्र-स्त्वया मौर्ख्यात् शप्तः, तत्त्वमपि मानुषस्यैव कामरूपः कामचरो वाहनं भविष्यसि। एवं तयाभिशप्तेन विषण्णेन तेन कुशिष्येण सार्द्धं स तपोधनः सहसान्तर्दधे।

ततः पद्मावतीं मुक्ताफलकेतुरभाषत प्रिये! अहमि-दानीं स्वां पुरीं यास्यामि, किमत्र स्थितेन मया कार्य्य-मिति। तदाकर्ण्य विरहविवशा सा पद्मावती वातरुग्णा लतेव सपुष्पाभरणा भुवि पपात। ततः स कथमपि क्र-न्दन्तीं प्रियां समाश्वास्य तेन सुहृदा सह मुहुर्वलितकन्

तामेव पश्यन् मुक्ताफलकेतुस्ततः प्रययौ। सा च तस्मिन् प्रयाते सुदुःखिता विलपन्ती आश्वासयन्तीं मनोहरिकां सखीमभ्यधात् सखि! जानेऽहम्, अद्य स्वप्ने मया देवी पार्वती दृष्टा, स्म मत्कण्ठे उत्फुल्लदाम चेमं ग्रथितापि आस्तां तावत्, परतो द्वाःस्थामोत्सुक्ता विरताभवत्। तदयं तया मे प्रियावाप्तिविघ्नः संसूचितः। इति अनुशोचन्तीं तां तदा सखी प्राह स्म? तर्हि देव्यापि ते आश्वासनाय स्वप्ने एतत् सूचितम्। मुनिना च तथैव देश्यादेशः प्रकटितः। तदिदानीमाश्वसिहि, तेन प्रियेण तव अचिरात् सङ्गमो भावी, इत्यादिभिः सखीवचनैः कथमपि धृतिमाश्रिता सा पद्मावती सचूडामणिका तस्मिन्नेव गौर्य्याश्रमे, तस्थौ चकार च तपस्विसभ्यमीशं गिरिजासहितं पूजयन्ती। तच्च प्रियचित्रपटं स्वपुरादानीय तत्र च देवबुद्धिमास्थाय पश्यन्ती प्रियं कथञ्चित् कालमनयत्। पुत्रि! निश्चितेऽपि भाविनि अर्थे वितथं मा तपःक्लेशं कथाः, इति सान्त्वमुपेत्य निवारयन्तौ विदितार्थौ पितरौ सा पद्मावती एवमाह स्म तात! अम्ब! भर्त्तरि मे देवनिर्मिते सहसा शापदुःखितस्थिते कथमत्राहं सुखं वसेयं परमं दैवतं हि पतिः कुलाङ्गनानाम्। अस्मिंश्च वृजिने तपसा परिक्षयं गते, शम्भौ च तोषमुपगते अचिरात् मे प्रियसङ्गमो भविता, किमिवास्ति तपसामसाध्यम्? एवं स्थिरनिश्चयया तया पद्मावत्याभिहिते माता तदीया कुवलयावली तत्पितरं पद्मशेखरमाह स्म। नाथ! तपः क्लेशम् इयं कुरुतां, किमधिकं

खिद्यते मृषा, एतच्चास्या भवितव्यं, कारणमत्रास्ति कथयामि शृणु।

पुरा देवप्रभा नाम्नी कापि सिद्धाधिपकुमारी अभिमतभर्त्तृप्राप्तये शिवपुरे अतिमहत् तपः कुर्वाणातिष्ठत्। तत्रैषा पद्मावती मया सहिता तत्र देवं शम्भुं द्रष्टुं गता, न तपसे कथं पतिहेतोस्तपश्चरन्तीति तामुपेत्य अहसत्। सा च सिद्धकन्या, मूढ़े! शिशुत्वात् हससि, त्वमपि वरार्थं क्लेशदायि तपः कर्त्तासि इति रुषा इमामशपत्। तदवश्यमनया सिद्धकन्यकाशापफलं भोक्तव्यम्। कोऽन्यथा तत् कर्त्तुमीष्टे, तदियं करोतु यत् कुरुते। इति तया राज्ञ्याभिहितः स राजा गन्धर्वपतिः पद्मशेखरः तां तनयां चरणावनतां कथञ्चित् आश्वास्य तया महिष्या साकं निजं नगरमगात्। सापि अनुदिनं गगनेन कमलयोनिनिषेवितं स्वप्ने हरेण गदितं तत् सिद्धीश्वरक्षेत्रं गत्वा गिरिशमर्चयन्ती अत्रैव गिरिजाश्रमे नियमपरावतस्थे।

## अथ अष्टादशोत्तरशततमस्तरङ्गः।

एवं पद्मवती यावत् प्रियप्राप्त्यै तपः संश्रिता, तावत् मुक्ताफलकेतुः स्वं नगरमवाप। प्राप्य च स्वं भवनं स विद्याधरतनयः ब्रह्मशापेनासन्नमानुष्यावतारो भयात् शिवं शरणमगात्। तच्चार्चयन् तद्गर्भगृहात् भारतीं शुश्राव

वत्स! मा भैषीः, तव गर्भवासक्लेशो न भविष्यति, मानुष्यऽपि दुःखं न भविता, नापि चिरस्थितिः महाबलपराक्रमो राजसुतो जनिष्यसे। कुतोऽपि तपोधनात् मुनेः तत्क्षमस्त्रग्राममवाप्स्यसि, मदीयः किङ्करः कश्चिद्गणस्ते अनुगो भविष्यति तत्सहायश्च रिपून् जित्वा देवकार्य्यं करिष्यसि, ततः पुनः पद्मावत्या युतः खेचराणां साम्राज्यं करिष्यसि च। एवमाकाशसरस्वतीमाकर्ण्य धृतिमास्थाय च शापफलागमं प्रतीक्षमाणस्तस्थौ।

अत्रान्तरे पूर्वस्यां दिशि आसीत् देवसभं नाम जितदेवसभं श्रिया, नगरम्। तत्राभवत् मेरुध्वजो नाम सार्वभौमो नरपतिः। यः सुरासुररणागमे देवराजस्य सहाय आसीत्। यस्याभवत् लोभो यशसि, न कदाचित् परस्वे, तैक्ष्ण्यं खड्गे, न दण्डे, भयं पापात्, न शत्रुभ्यः, भ्रुवोः कोपे कौटिल्यं नाशये, पारुष्यं मौर्वीकिणाङ्के भुजे, न पुनर्वदने। यो हि युधि दीनारातिरक्षणं व्यधात् न कर्म्मिषु, धर्मचर्य्यासु रतिं अबधे, नाङ्गनासु। तस्य भूपतेः मनसि सततमुभे चिन्ते अभूतां यदेकोऽपि तावत् पुत्रो न अजायत, इत्येका। तत्पूर्वं देवासुरमहाहवात् हतशेषा असुराः पलायिताः पातालं जग्मुः। तेश्च ततो निर्गत्य दूरात् तीर्थायतनाश्रमान् छलेन विनाश्य मुनरसकृत् पातालमाविशन्ति स्म, न च तान् स नृपः पातालव्योमचारिणः प्राप्नोति स्म इति द्वितीया। स राजा तेन हेतुना निःसपत्नेऽपि भूतले भृशं सन्तेपे।

कदाचित् एतच्चिन्ताकुलः स भूपतिः प्रवृद्धितेन

रथेन देवस्थानीं ययौ। तत्र च चैत्रदिनेषु स राजा मेरुध्वजः देवरथेन शक्रस्य सर्वतो रमणीयानि स्थानानि पर्य्यपश्यत्। तादृशेऽपि तत्र दिव्याङ्गनानां नृत्यगीतमनोरमे प्रदेशे शक्रेण सुसत्कृतोऽपि स चिन्ताकुलः सततं निश्शश्वास। तदवलोक्य ज्ञातहृदयो वासवस्तं जगाद राजन्! ज्ञातं ते मनोदुःखम्। अलं चिन्तया, शिवांशो मुक्ताफलध्वजो नाम ते सुतो जनिता। द्वितीयश्च ते सुतो गणावतारो मलयध्वजो नाम भविष्यति, असौ मुक्ताफलध्वजः तपोधनात् मुनेः सर्वा विद्याः अस्त्राणि च कामरूपं वाहनञ्च प्राप्स्यति। ततश्च महापाशुपतास्त्रं लब्ध्वा दुर्जयो भविष्यति। पृथ्वीञ्च वशीकरिष्यति पातालञ्च निहतासुरः। त्वमपि व्योमचरो इमौ समहास्तौ काञ्चनगिरि-काञ्चनशिखरनामनौ वारणौ गृहाण। इत्युक्त्वा अप्सरगणान् दत्त्वा वज्रिणा प्रेषितः स मेरुध्वजः प्रहृष्टः पृथ्व्यां निजं नगरमायात्।

अथ स राजा पुत्रलालसः शक्रात् श्रुतस्य तस्य तपोधनस्य मुनेराश्रमं दिव्येन वाहनेन प्रययौ। तत्र तमृषिमभिगम्य शक्रादेशञ्च निवेद्य भगवन्! शीघ्रमादिश उपायं येन मे अचिरादिष्टसिद्धिरिति तेनाभिहितः स मुनिस्तस्य इष्टसिद्धये समादिशत् राजन्! सभार्य्यस्य ते शम्भोराराधनं व्रतं कार्य्यमिति। एवमुपदिष्टः स राजा सभार्य्यः शिवमाराधयामास। स च विभुस्तुष्टः स्वप्ने तमेवमादिशत् राजन्! उत्तिष्ठ शेषासुरविनाशाय द्वौ मद्भक्तौ कदराकृती ते पुत्रौ अचिरादितं जनिष्येते। एतदा-

क्षणं स राजा प्रबुद्धः प्रातरुत्थाय पारणं कृत्वा पुनः स्वपुरं ययौ।

तत्र कतिपयैरेव दिनैस्तस्य महादेवी सुलक्षणं गर्भं प्रतिपेदे। तस्या गर्भे स मुक्ताफलकेतुः शापवशः तां वैद्याधरीं तनुं विहाय समजनिष्ट। सा च तस्य वैद्याधरी तनुर्निजे एव चन्द्रपुरे पुरे विद्याप्रभावात् अम्लाना एव बान्धवैः सुरक्षिता तस्थौ। सापि मेरुध्वजमहिषी सम्प्राप्तगर्भा तस्मिन् देवसभे पुरे तं पतिमनन्दयत्। यथा यथा च सा गर्भभरालसा आसीत् तथा तथैव स राजा सोत्साहः परमानन्दमन्वभवत्।

अथ समये सा पार्वती कुमारमिव उग्रमहसम् अर्कसन्निभं पुत्रमसूत। तस्मिंश्च जातमात्रे समये वसुधातले महोत्सवः प्रादुरासीत्। नभसि च देवानां दुन्दुभौ ताड़िते, स तपोधनो मुनिर्दिव्यदर्शी स्वयं तं मेरुध्वजं नृपं दिष्ट्या वर्द्धयितुं अगात्। स राजा तेन मुनिना साकं तं पुत्रं शक्रोदितेन नाम्ना मुक्ताफलध्वजं चकार।

अथ गते तस्मिन् उत्सवान्ते मुनौ संवत्सरान्ते तस्यामेव राज्ञ्याम् अस्य राज्ञः द्वितीयः सुतोऽभवत्। राजा च हर्षायातेन तेनैव मुनिना सह तं नाम्ना मलयध्वजमकरोत्। ततः सोऽपि संयतको नाम मुक्ताफलकेतुसुहृत् शापात् तस्यैव राज्ञः मन्त्रिसुतोऽभूत्। तत्पिता तं नाम्ना महाबुद्धिं व्यधात्।

अथ तौ नृपसुतौ तेन मन्त्रिसुतेन सह सिंहशावका-

विव क्रमेण अवर्द्धेताम्। ततस्त्रिमात्रेषु वर्षेषु गतेषु स मुनिस्तपोवनादेत्य तयोः राजसुतयोरुपनयनमकरोत्। अथ तेन अन्यानि अष्टौ वर्षाणि विद्यासु सर्वासु कलासु सर्वेषु महास्त्रेषु तौ विनीयेते स्म। अथ स राजा मेरुध्वजः पुत्रौ युवानौ सर्वशास्त्रविदौ महास्त्रपारगौ सुयोधिनौ दृष्ट्वा आत्मानं कृतिनममन्यत। अथ स्वाश्रमं जिगमिषन्तं मुनिं राजाब्रवीत् भगवन्! इदानीमेव अभीष्टा दक्षिणा गृह्यतामिति। एषैव मे अभीष्टा दक्षिणाः, यदसुरान् यज्ञविघातकान् मे सपुत्रस्त्वं हनिष्यसीति वादिनं तं महर्षिं स राजा पुनरब्रवीत् भगवन्! यज्ञार्थमेव त्वया अधुना दक्षिणा गृह्यताम्। आरभस्व च यज्ञं ततो यदा तद्विघ्नाय असुराः समापतिष्यन्ति तदाहं सपुत्रकस्तव तपोवनं गत्वा तान् हनिष्यामि। तपोधन! पूर्वं हि ते दैत्याः स्वबलदर्पेण दोषं कृत्वा निपत्य पातालमगमन्। इदानीन्तु इन्द्रदत्तौ मे खेचरौ विद्येते। ताभ्यां सह सपुत्रोऽहं तान् व्योमगानपि आसादयिष्यामि। तदाकर्ण्य स मुनिस्तुष्टस्तं नराधिपमवादीत् राजन्! तर्हि त्वं मे यथायोग्यं यज्ञभारं समाहर। ततोऽहं गत्वा दिक्षु श्रुतं सत्रयागं समारप्स्ये। प्रेषयिष्यामि च एकं दृढव्रतं सञ्जातकाम गोदाऽमहाबलं शिष्यं तव सकाशम्। स च मुक्ताफलध्वजस्यास्य वाहनं भविता। इत्युक्त्वा स मुनिः स्वमाश्रमं प्रायात्। राजा च तस्यानुपदं सर्वान् यज्ञसम्भारान् प्राहिणोत्।

अथ प्रारब्धे तस्मिन् सत्रे समागतेषु च देवर्षिसमवा-

येषु पातालनिलया दैत्याः बुद्धा क्षोभमापुः। तद्विदित्वा स मुनिः तं दृढ़व्रतं शिष्यं शापकल्पितपक्षीन्द्ररूपं तत् देवसभं पुरं प्रजिघाय। तच्च प्राप्तं दृष्ट्वा राजा मुनिवचः स्मरन् तौ दिव्यौ गजौ सज्जीचकार। आरुरोह च स्वयं तयोर्मुख्यं काञ्चनगिरिम्। ददौ कनीयसे पुत्राय मलयध्वजाय द्वितीयं काञ्चनशेखरम्। मुक्ताफलध्वजस्तु दिव्यास्त्रधरः वन्दिभिः स्तूयमानो दृढ़व्रतं तं खगेन्द्ररूपिणमारुरोह। ततस्ते त्रयो वीराः खेचरवाहनाः द्विजवरैर्दत्ताशिषः सैन्यैः परिवृताः प्रययुः। आगतेभ्यश्च तेभ्यः स्वमाश्रमं स प्रीतमानसो मुनिर्भूयः सर्वशस्त्राणामभेद्यानि कवचानि ददौ। दानवबलञ्च तावत् यज्ञं विहन्तुं समाययौ। तदवलोक्य तत् महत् मेरुध्वजबलं नददभ्यधावत्। ततो दैत्यानां मानुषैः सह संग्रामः प्रावर्त्तत। दैत्यास्तु खस्था मानुषास्तु भूतलस्था बभासिरे। ततः स पक्षिवाहनो मुक्ताफलध्वजस्तान् दैत्यान् प्रधाव्य शरवर्षेण चकर्त्त च ममन्थ च। तं विहङ्गस्थं तेजसा ज्वलन्तमिव दृष्ट्वा शेषा दैत्या नारायणशङ्कया प्राद्रवन्। गत्वा च भयात् पातालं त्रकालासुरदैत्येन्द्राय त्रैलोक्यमानिने तत् तथैव शशंसुः। स तु दानवपतिः तदद्भुतं बुद्धा चारैरन्विष्य तं मुक्ताफलध्वजं मर्त्त्यमवेत्य च मानुषाभिभवेन सञ्जातक्रोधः सर्वान् पातालवासिनो दितिजान् संवाद्य वार्य्यमाणोऽपि सुमन्त्रिभिर्निर्य्योद्धुं तमाश्रममागात्।

मुक्ताफलध्वजश्च तत् आयातं पुरः अलङ्घ्यतेजः पाशुपतम् अतिप्रमाणमुदयलक्ष्मिज्वालं त्र्यम्बकं चतुर्मुखं प्रज्ञाङ्घ्रिमष्ट-

वाहुं कल्पान्तानलसन्निभं महास्त्रमद्राक्षीत् प्रत्यक्षीभूय समभ्यर्च्य महारादेशात् तव विजयायोपस्थितं मां विद्धि इति तुवाचम्। अत्रान्तरे गगनस्थैरसुरैरस्त्रवृष्टिभिस्तदधःस्थितं मकरध्वजबलम् अताड्यत।, ततस्तिमयोधी मुक्ताफलध्वजः तत् पितृसैन्यं रक्षितुं शरजालं प्रादुश्चकार युयुधे च तैरसुरैः सह। ततस्त्रैलोक्यमानी तं पितृभ्रातृयुतं खेचरवाहनं दृष्ट्वा पन्नगास्त्रममुञ्चत्। मलयध्वजस्तदवलोक्य गारुड़ास्त्रं तस्मात् निर्गच्छतोऽसंख्यान् घोरानाशीविषानर्दयामास। ततोऽसौ दैत्येन्द्रः यत् यत् अस्त्रं मुमोच, मुक्ताफलध्वजस्तत्तत् लीलया प्रचिच्छेद। अथ क्रुद्धः स देवारिः अन्ये च पुरोवर्त्तिनो दानवा युगपत् तस्मिन् आग्नेयादीनि अस्त्राणि प्राक्षिपन्। तानि चास्त्राणि तस्य मुक्ताफलस्य अग्रतः स्थितं पाशुपतं दृष्ट्वा भीतानि विमुखानि रणात् प्रदुद्रुवुः। ततस्ते दैत्यास्त्रस्ता यावत् पलायितुमिच्छन्ति, तावत् मुक्ताफलध्वजो वीरः तत्कालोचितं बुद्धा तेषामूर्द्धं चतुर्दिक्षु शरजालसुदुर्भेद्यं वज्रपञ्जरसन्निभं बबन्ध। जघान च तन्मात्लभ्रमतः तान् शङ्कितानिव दानवान् निशितैः शरैः। छिन्नैश्च तेषां करैः पादैः शरीरैः शिरोभिश्च मेदिनी अपूर्य्यत, वहन्ति स्म च रुधिरौघप्रवाहिन्यो निम्नगाः। ततः सुरैः सपुष्पवर्षं साधुवादे प्रयुक्ते स मुक्ताफलध्वजः तेषां सम्मोहनाय मोहनास्त्रं मुमोच। तेन च मोहितान् भूमौ पतितान् असुरान् वारुणास्त्रेण पाशबद्धांश्चकार।

अथ स तपोधनो मेरुध्वजनृपमवादीत् राजन्! इदं

खलु आसुरं सैन्यं हतशेषं न बध्यम्। अयं दैत्येन्द्रः सपुत्रपरिवारो महासुरराक्षसगणैः सार्द्धं संयम्य श्वेतशैलगुहान्तरे स्थाप्य इति एवमुक्तो मेरुध्वजस्तान् दैत्यवीरान् अब्रवीत् मा भैष्ट, यूयं नास्माभिर्बध्याः, अधुना सभ्राटकस्यास्य मुक्ताफलध्वजस्य शासने वर्त्तध्वम्। एवमुक्तास्ते दानवास्तथेति प्रतिपेदिरे। ततः स राजा तं दैत्येन्द्रराजं त्रैलोक्यमानिनं पुत्रादिसहितं श्वेतशैलमनाययत्। अस्थापयच्च तद्गुहाभ्यन्तरे तं संयतं बहुभिर्बलैः प्रधानामात्यैश्च सुरक्षितम्।

ततो निवृत्ते संग्रामे वैमानिकेषु च कृतमन्दारपुष्पवर्षेषु यातेषु जगदुत्सवे च प्रवृत्ते स राजा विजयी मेरुध्वजस्तौ पुत्रौ प्रोवाच पुत्रौ! इहैवाहं यज्ञरक्षार्थं तिष्ठामि यूयमेतैः सैनिकैः प्राप्तदैत्यविमानैः शेषासुरबलेन च पातालं प्रयात। गत्वा च तत्र पातालवासिनः समाश्वास्य वशीकृत्य च प्रधानेन केनचिदधिष्ठितान् कृत्वा पुनरिहागमिष्यथ। एतदाकर्ण्य तथेति पितुर्वचः समभिनन्द्य दिव्यकीमगवाहनः मुक्ताफलध्वजः सभ्राटकः ससैन्यो रसातलमविशत्। दानवसैन्यानि च प्रणतानि तमनुजग्मुः। प्रविश्य च स्थानेषु स्थानेषु परिपन्थिनो रक्षिणो विनाश्य शेषाणां जनानामभयडिण्डिमम् अदापयत्। अथ विश्वस्तेषु प्रणतेषु सर्वेषु सप्त पातालान् नानारत्नविचित्रान् स्वीचकार बुभुजे च तत्र सानुगो त्रिविधान् भोगान्। रेमे च तत्र सर्वकामदेषु दिव्यासवभृतानेकरत्नसोपानवापिकेषु रम्योद्यानेषु। दानवाङ्गनाश्चलन्नाड्ताकृती तौ भ्रातरौ ददृशुः।

तस्मिंश्च काले स्वयम्प्रभो नाम त्रैलोक्यमालिनो महिषी भर्त्तुर्वृद्धस्य त्रैलोक्यमालिनो मुक्तये तपस्तप्तुमारेभे। तस्याश्च द्वे सुते त्रैलोक्यप्रभात्रिभुवनप्रभे कुमार्य्यौ पितुः श्रेयसे तप आरेभाते। तौ च राजसुतौ तत्र पाताले सर्वं जनं लब्धप्रशमनाश्वस्तं विविधैः प्रियैः सम्मान्य संग्रामसिंहादीनधिकारिणः स्थापयित्वा तपोवनस्थस्य पितुः पार्श्वमुपेयतुः।

अथ तस्मिन् यज्ञे समाप्तिं गते देवा ऋषयश्च स्वं स्वं धाम गन्तुं प्रारेभिरे। मेरुध्वजश्च तदा परितुष्टं शक्रं व्यजिज्ञपत् देव! यदि मयि तुष्टोऽसि, तदा मदीयं नगरमागम्यताम्। तदाकर्ण्य वासवः तत्प्रीतये तं मुनिमामन्त्र्य तेन सपुत्रेण राज्ञा सह तत् देवसभं पुरमायात्। गृहागतञ्च तं देवराजं लोकद्वयेश्वरो राजा तथा पर्य्यचरत् यथा स दिव्यं सुखं विस्मरति स्म। ततः प्रीतः स शक्रः तं सपुत्रं महीपतिं दिव्येन स्वेन वाहनेन त्रिपिष्टपं निनाय। तत्र नारदतुम्बुरुप्रभृतिभिः रम्भादिभिश्च कृतसङ्गीतनृत्यमनोहरे स वासवः तं मेरुध्वजं मुक्ताफलध्वजं मलयध्वजञ्च विश्रमय्य पारिजातमञ्जरीस्रजः दिव्यञ्च रत्नमुकुटं दत्त्वा सम्मान्य च गृहं प्राहिणोत्। ते च गृहं प्रतिनिवृत्य भूलोके पाताले च गतागतं कुर्वाणा उभयलोकयोः साम्राज्यं चक्रिरे।

एकदा मेरुध्वजो मुक्ताफलध्वजमभाषत पुत्र! असुरा विजिताः, युवां भ्रातरौ युवानौ, स्वाधीनाश्च सर्वा राजकन्याः मया गोपिताः वर्त्तन्ते, तदिदानीं दारसंग्रहः

क्रियतामिति। एवमुक्ते पित्रा मुक्ताफलध्वजोऽवादीत् तात! न मे परिणये मनः प्रवर्त्तते, अहं सम्प्रति हरमाराधयितुं तपश्चरिष्यामि। एष तावत् वत्सो मलयध्वजो विवाहं कुरुताम्। एतद्वाक्यमाकर्ण्य स मलयध्वजोऽनुजः प्रत्यवादीत् आर्य्ये अपरिग्रहे मम विवाहः किं युज्यते? इत्येवमभिहिते मलयध्वजेन, राजाब्रवीत् मेरुध्वजस्तं ज्येष्ठं तनयं मुक्ताफलध्वजम्। पुत्र! अमुना ते अनुजेन युक्तमेवाभिहितं, त्वन्तु अयुक्तमेव वदसि, साम्प्रत् तव यौवनं, को नाम तपसः कालः, अयं हि ते भोगकालः। तत पुत्र! अकालोचित एष दुर्ग्रहस्त्यज्यताम्। इति तेन राज्ञा कथ्यमानोऽपि स ज्येष्ठः सुतः यदा निश्चयेन उद्वाहं नाङ्गीचकार तदा स नृपतिः कालं प्रतीक्षितुं तूष्णीमतिष्ठत्।

अत्रान्तरे त्रैलोक्यमानिनः तपसि स्थिते द्वे कुमार्य्यौ तां मातरं स्वयम्प्रभामूचतुः अम्ब! आवयोः समाष्टवर्षयोः पिता संयतः। राज्यध्वंसश्च संवृत्तः। कस्मादकृतपुण्ययोरष्टमं वर्षमेतत् तपस्यन्त्योर्नौ भगवान् हरो न प्रसीदति, तातश्चाद्यापि बन्धनात् न मुच्यते, तस्मादावयोः यत्र परिभवो न स्यात् तावत् निर्लक्षणामिमां तनुम् अनले जुहुवः। इति ताभ्यां दुहितृभ्यामुक्ता स्वयम्प्रभा एवं जगाद पुत्र्यौ! प्रतीक्ष्यतां तावत्, पुनरस्माकमुदयो भविष्यति, अद्य तपसि स्थितां मां स्वप्ने देवः शङ्करः एवमादिशत् वत्से! धृतिं कुरु, पुनस्ते पतिः राज्यं प्राप्स्यति। इतो राजपुत्रौ मुक्ताफलध्वजो मलयध्वजश्च द्वौ तव दुहित्रो-

भर्त्तारौ भविष्यतः। एतौ मानुषाविति मा विश्वासीः एतयो-रेकः विद्याधरेन्द्रसुतः, द्वितीयो मदीयो गणः। इति देवेन शम्भुनादिष्टाहं रजनीक्षये प्रबुद्धा। अनया चाशया मया महान् क्लेशः सोढ़ः। तस्मादिदमर्थं युवयोः पितुर्मे आर्य्य-पुत्रस्य आवेदयामि। यतिष्ये च तदिच्छया युवयोरुद्वाह-मङ्गलाय। इत्थं सा स्वयम्प्रभा कन्यके द्वे समाश्वास्य इन्दुमतीं नाम वृद्धामन्तःपुरिकामब्रवीत् भद्रे! गच्छ आर्य्यपुत्रस्यान्तिकं श्वेतशैलगुहायाम्। त्वञ्च पादयोर्नि-पत्य मद्वचसा विज्ञापय, महाराज! दारुणेन धात्रा दारु-णाहं निन्दितास्मि, याहं त्वद्विरहाग्निनाद्यापि न दग्धे-यम्। पुनस्त्वद्दर्शनाशयैव मया शरीरं न त्यक्तम्। इत्युक्त्वा मदीयं शर्वस्वप्नादेशं निवेदयेः। ततः स कन्याविवाहे यत् स्वाभिमतं प्रकाशयिष्यति, तत्त्वयावश्यं मे वाच्यम् अहं तथा विधास्ये। इति सा इन्दुमतीं सन्दिश्य व्यसर्जयत्। सापि पातालात् निर्गत्य तत् सुरचितं श्वेतशैलगुहान्तरं प्राप। तत्र रक्षिणोऽभ्यर्थ्य अन्तःप्रविश्य च तं प्रभुं त्रैलोक्य-मालिनं संयतं प्रेक्ष्य च साश्रुः पादयोः पतित्वा तत्पृष्ट-कुशला च शनैस्तं सर्वं स्वयम्प्रभा सन्देशं व्यज्ञपयत्। ततः सोऽब्रवीत् भद्रे! योऽस्माकं राज्यलोभः शम्भुना प्रदर्शितः, स तथैवास्तु, मेरुध्वजस्य पुत्राभ्यां आत्मजादाने तु का कथा? इहैवाहं विपद्येयमपि, न तु शत्रुभ्यां मानुषाभ्यां राजकन्यके उपायनं दद्यामिति प्रेषिता सा इन्दुमती प्रतिनिवृत्य स्वयम्प्रभायै तद्वचोऽभ्यधात् तदाकर्ण्य दैत्य-कन्ये त्रैलोक्यप्रभा-त्रिभुवनप्रभे जननीं तां स्वयम्प्रभाम-

चतुः मातः! आवयोरधुना यौवनभयात् अग्निरेव गतिः। तदस्यां चतुर्दश्यां तं प्रदेशं गच्छावः! इत्येवं कृतनिश्चययो-स्तयोः सा तन्माता सपरिच्छदा मरणायैव निश्चय-मकरोत्।

अथ प्राप्तायां चतुर्दश्यां ताः सर्वाः पापरिपुनामके तीर्थे गत्वा तत्रस्थं हाटकेश्वरं शम्भुमभ्यर्च्य चितां रचया-मासुः। राजा मेरुध्वजश्च सपुत्रभार्य्यस्तस्यामेव तिथौ तत्र हाटकेश्वरमर्च्चयितुमागात्। स राजा सानुगः तं पापरिपुतीर्थं व्रजन् दूरात् तत्तीरे वनान्तरुद्गतं धूमं ददर्श। कुतोऽयं धूमोद्गम इति पृच्छन्तं तं भूपतिं संग्रामसिंहाद्याः पातालाधिकारिणं प्राब्रुवन् देव! त्रैलोक्यमालिनो दैत्येन्द्रस्य भार्य्या स्वयम्प्रभा कुमारीभ्यां दुहितृभ्यां समेता अत्र तपस्यन्ती स्थिता, नूनमद्य ता एव अग्निकार्य्यादिकं किञ्चित् चिकीर्षन्ति। अथवा तपसा खिन्ना अग्निप्रवेशनं कुर्वन्ति। तदाकर्ण्य स राजा पुत्राभ्यां पत्न्या च सह तैश्चाधिकारिभिः प्रदर्शितमार्गः अन्याननुगान् निषिध्य तत्रागमत्। अद्राक्षीच्च प्रच्छन्न-स्थितः ते दैत्यकन्यके मात्रा सह सुसमिद्धं चितानलं पूजयन्त्यौ मुखलावण्यपूरनिस्यन्दैः सर्वतो दिक्षु चन्द्रविम्ब-शवानीव रसातले रचयन्त्यौ, लोलहाराम्बुपूराभ्यां कुच-काञ्चनकुम्भाभ्यां कामस्य त्रिजगज्जयाभिषेकमिव कुर्वन्त्यौ, विपुलं बद्धमेखलं जघनाभोगं नक्षत्रमालाङ्कं शरद्दिव-सिरस्थलमिव. बिभ्राणे, निर्मितौ पन्नगाविव केशपाशौ

अथ स राजा ते दृष्ट्वा सञ्जातविस्मयश्चिन्तयामास अहो ! विश्वसृजः सृष्टिः लसन्ती नवेन नवेनाद्भुता। तदेतयोः रूपेण रम्भापि न तुल्यतां भजते, नापि उर्वशी, न च तिलोत्तमा। इति चिन्तयतस्तस्य नृपतेः सा दैत्यकन्यका ज्येष्ठा त्रैलोक्यप्रभा वह्निमर्चयित्वा व्यजिज्ञपत् भगवन् वैश्वानर ! यतः प्रभृति मे अम्बया हरस्य स्वप्नादेशोऽभिहितः, तत आरभ्य तस्मिन्नेव गुणनिधौ राजपुत्रे मुक्ताफलध्वजे यतो भर्त्तृबुद्धिर्बद्धा, अतएव स मे अन्यजन्मनि भर्त्ता भूयात्। साम्प्रतम् अस्मिन् जन्मनि संवतेन मानिना तातेन अभ्यार्थितापि नाङ्गीकृता दातुमिति। तदाकर्ण्य सापि कनीयसी त्रिभुवनप्रभा तथैव प्रार्थयामास देव हुताशन ! यथा मे मलयध्वजो राजसुतः जन्मन्यस्मिन् पतिर्भवेत् तथानुग्रहः क्रियताःमिति।

ततो राजा मेरुध्वजस्तत्प्रिया च हर्षनिर्भरमानसौ परस्परमवोचतां यदि मदीयौ सुतौ इमे भार्य्ये प्राप्नुयातां तर्हि एताभ्यां लोकद्वयरत्नमवाप्तं स्यात्। तद्यावत् अस्मिन्ननले आत्मानमेते क्षिपतः, तावत् समाह्वके एते किं न वारयामः ? एवं देव्या सह समालोच्य राजा ता उपेत्यावोचत् मा तावत् साहसं कार्ष्ट, अहं हि वो दुःखं शमयिष्यामि। इत्येवं श्रोत्रपीयूषवर्षाभं भूपतेर्वचः श्रुत्वा तञ्च राजानं दृष्ट्वा ता असुराङ्गनाः प्रणेमुः। राजन् ! वयं पूर्वं पश्यन्त्योऽपि मायया छन्नास्त्वया न लक्षिताः, अद्य पुनर्लोकद्वयेश्वरेण त्वया दृष्टाः स्मः त्वद्दर्शनेन च अस्माकं

अमर्थितेऽपि वरे दत्ते। तत् कृतासनपरिग्रहा अर्घ्यपाद्यादिकं गृह्णीत, भवन्तोऽपि जगतां पूज्याः, अयञ्च अस्माकमाश्रय इति वादिनीं स्वयम्प्रभां स राजा पुनरब्रवीत् असुरेन्द्रमहिषि! जामातृभ्यामेताभ्यां पाद्यार्घ्यं दीयतामिति। स्वयम्प्रभावादीत् राजन्! तदा एताभ्यां पाद्यार्घ्यं दास्यामि यदा देवो वृषध्वजो दापयिष्यति, साम्प्रतं युष्माभिरर्घ्य गृह्यतामिति। मेघध्वजोऽवादीत् सर्वमिदं मया आत्तम्, यूयमिदानीं मरणोद्योगात् निवर्त्तध्वं तिष्ठत च प्रविष्टाः सर्वकामदे स्वपुरे। ततोऽहं यथा वः कुशलं भवेत् तथा विधास्यामि, इत्युक्तवन्तं राजानं साब्रवीत् स्वयम्प्रभा, देवस्यादेशात् साम्प्रतं मरणव्यवसायात् निवृत्ताः स्मः, परं कारास्थे प्रभौ कथं नः स्वगृहेषु स्थितिः? तदिहैव तावत् वयं तिष्ठामः यावत् देवः स्वयं दत्तं वरं दुःखमोचनरूपं पालयिष्यति, मोचयिष्यति च ससुतामात्यं मम प्रभुम्। मुक्तश्च त्वदधिकारी सन् राज्यं करिष्यति, यथा च त्वदिच्छया तुभ्यमेव राज्यं प्रत्यर्पयिष्यति तथा प्रतिबद्धं समयं करिष्यति च। वयञ्च पातालवासिभिः सह अत्रान्तरस्थाः साम्प्रतं तेभ्यः पातालवासिभ्यः अस्मदीयानि रत्नानि गृहाण। एवमुक्तवतीं तां स्वयम्प्रभां मेघध्वजोऽवादीत् अहमेतत् विज्ञास्यामि, युष्माभिश्च स्ववचः स्मर्त्तव्यम्। इत्युक्त्वा स नृपः स्नात्वा हाटकेश्वरमपूजयत्। ते च दैत्येश्वरसुते तयोरेव स्वदृष्टयो राजपुत्रयोस्तदेकाग्रगतचित्ते बभूवतुः।

निलयैस्त्रैलोक्यमालिनो दैत्येन्द्रस्य मुक्तिं प्रतिपद्य याच्य-
मानः स्वयशः शुभ्रैश्छत्रैराशाः स्थगयन् पुत्राभ्यां पत्न्या च
असुरलोकात् निर्गत्य निजं नगरमागात्। तत्रागत्य
राजपुत्रो मलयध्वजस्तां यवीयसीं दानवराजपुत्रीं ध्यायन्
अनिद्रोऽपि निमीलिताक्षः स्मरज्वरेणातिसमाकुलः रजनीं
निनाय। स च धैर्य्यजलधिरपि युवा मुक्ताफलध्वजः ता-
मसुरपतेः सुतां दृढ़निबद्धभावां मुनीन्द्रमनसामपि स्मर-
विकारकारिणीं ज्यायसीं विचिन्त्यापि पुरा मुनेरर्पित-
वरतया चेतसा न किल चुक्षुभे। मेरुध्वजस्तु तं निषिद्ध-
दारक्रियं सुतं ज्येष्ठं मुक्ताफलकेतुं तञ्च मलयध्वजं स्मरार्त्त-
चेतसमवेत्य महासुरञ्च तं त्रैलोक्यमालिनं कन्याप्रदान-
विमुखं विचिन्त्य उपायघटनाकुलचित्तवृत्तिरभूत्।

इति अष्टादशोत्तरशततमस्तरङ्गः।

# अथ अष्टविंशोत्तरशततमस्तरङ्गः ।



ततो राजा मेरुध्वजस्तं पुत्रं मलयध्वजं तथा कामसन्तप्तं दृष्ट्वा स्वां देवीमेवमब्रवीत् । देवि ! पातालदृष्टे त्रैलोक्यमालिनोदैत्यराजस्य कुले चेत् मत्पुत्रयोर्भार्य्ये न स्यातां तदाथा किं कृतं ? तयोः कनिष्ठाश्च विना मे पुत्रो मलयध्वजः लज्जानिगूढ़ेन कामाग्निपुटपाकेन पच्यते । तदर्थञ्च मया त्रैलोक्यमालिनो मोक्षः प्रतिश्रुतोऽपि तत्पक्षेर नाद्यापि सत्वरं विधीयते । यदि स बन्धनान्मुक्तः असुराभिमानी मानुषाभ्यां मे पुत्राभ्यां दुहितरौ न दद्यात् तदेतत् सान्त्वेन तस्य अहं ब्रवीमि । इति देव्या सममालोच्य प्रतीहारमादिशत् । गच्छ तच्छैलगुहां गत्वा त्रैलोक्यमालिनं दैत्येन्द्रं समयस्थितं मद्वचसा प्रीत्या ब्रूहि । दैत्यपते ! कर्मयोगादिह यूयं चिरक्लिष्टाः, तदिदानीं मम वचः चिरात् क्षेमं मम नय । दृष्टानुरागे स्वकन्ये मत्पुत्राभ्यां देहि । इतोमुक्तश्च विहितप्रत्ययः स्वराज्यं कुरु । इत्यभिहितः प्रतीहारः तच्छैलगुहान्तरे गत्वा तस्मै दैत्येन्द्राय तत् राजवचनं यथोक्तमाचख्यौ । तेन च दैत्येन्द्रेण मानुषाभ्यां नाहं कन्यां दद्यामिति प्रत्युक्तः स चत्ता तथैवेत्य राजानमवोचत् ।

अथोपायं विचिन्वति तस्मिन् मेरुध्वजे कतिपयेषु यातेषु दिनेषु विदितवृत्तान्तया स्वयंप्रभया पातालात्

प्रेषिता दूती तत्सन्देशहारिणी इन्दुमती राजभवन-मागात्। साचागत्य प्रतीहारमुखेनात्मानं निवेद्य कृता-दरा महादेवीसकाशं प्रविवेश। प्रणिपत्य च तामब्रवीत् देवि! स्वयम्प्रभा देवी विज्ञापयति किं वस्तत् निजं वचनं विस्मितं? सागराः कुलशैलाश्च प्रलये अन्यथा भवन्ति, भवादृशान्तु वचनं तत्रापि नान्यथा भवेत्। यद्यपि नास्मत्स्वामिना कन्यकार्पणं अङ्गीकृतं नचैनदसङ्गतम्। यतः बद्धः स कथं दुहितरमुपायनं दद्यात् यदि युष्माभि-रौचित्येन उपकाराय स मुच्यते तत् निश्चितमेव सुता-दानेन वः प्रत्युपक्रियां कुर्य्यात्। अन्यथा स्वयम्प्रभा स-कन्या एव प्राणान् परित्यजेत्। तदेवं वः स्नुषाप्राप्तिः सत्यपालनञ्च न भवेत्। तद् देवि! तथा समयप्रत्यया-दिना तथा कुरुष्व, यथास्माकं प्रभुं राजा कार्य्यसिद्धये मुञ्चेत्। तया च स्वयम्प्रभया विसृष्ट मिदं विभूषणं दिव्यैः खेचरत्नादिदायिभि स्तैस्तैरत्नैश्चितं गृहाण। एवमुक्तवती-मिन्दुमतीं राज्ञी जगाद भद्रे! दुःखितायास्तस्याः कथमे-तत् मया गृह्यतामिति। त्वया एतस्मिन्नगृहीते अस्माक-मधृतिर्भवेत्, गृहीतेतु निजं दुःखं कथमपि आन्तं वयं मन्या-महे इति तयेन्दुमत्या यत्नेन बोधिता सा राज्ञी तस्या आश्वा-सार्थं तत् रत्नाभरणमग्रहीत्। आर्य्ये! इहैव तावत् तिष्ठ, धावत् राजा आगमिष्यति इत्युक्त्वा सा राज्ञी तामिन्दुमतीं स्थापयति स्म स्वसन्निधौ। तावच्च राजा तत्रागात् साचेन्दु-मती राज्ञी निवेदिता सादरं तं भूपं प्राणमत्। समर्प-यच्च तस्मै स्वयम्प्रभावितीर्णं विषरक्षोजरा रोगहरं चूड़ा-

रत्नम्। अथ, प्रौढ़ा इन्दुमती स्वसत्यमनुपाल्यैव एतत् ग्रहीष्यामीति वादिनं तं नृपम् एवं व्यजिज्ञपत् देव! भवता प्रतिपन्नं चेत् सत्यं तत् प्रतिपालितमेव, नात्र सन्देहः। अस्मिंस्तु गृहीते अस्माकं सुतरामाश्वासः स्यात्। एवं तयोक्ते सा राज्ञी साधूक्तमनयेति उक्त्वा तत् चूड़ा-रत्नमादाय तस्य नृपतेर्मूर्ध्नि ववन्ध। ततः स्वयम्प्रभा-वाक्यं यथा सेन्दुमती लक्ष्ये शशंस तथा सर्वं नृपतये सा राज्ञी समाचचक्षे ततो राजा श्रुततद्वाक्या तामिन्दुमती-मभाषत आर्य्ये! इहैवाद्य प्रतीक्षस्व, प्रातरहं तव यथायथं वक्ष्यामि। इत्युक्त्वा तां निशां नीत्वा प्रातःमन्त्रिणः समा-हूय तामिन्दुमतीं राजा एवमवादीत् आर्य्ये! एभिर्मन्त्रिभिः सार्द्धं गत्वा त्रैलोक्यमानिने आवेद्य पातालात् स्वयम्प्र-भाद्याः मुख्याः सर्वाः पातालवासिनीः असुराङ्गनाः समा-नय। त्रैलोक्यमानिना दैत्येन्द्रेण सभृत्यबन्धुना अस्मद्-वशे नित्यं स्थातव्यम्। अत्रार्थे स्वयम्प्रभाद्याः मत्सन्निधौ भर्त्तृचरणौ स्मृत्वा शपथं कुर्वन्तु, भवन्तु च ते पातालवा-सिनः पूर्ववत् प्रभवः। सर्वे च सराजकाः अपत्यानि स्थापयन्तु। लिखिताश्च सराजका लिखितं कुर्वन्तु पिवन्तु च हाटकेश्वरसर्वाङ्गवारिकोशम्। ततोऽहं कारा-गृहात् त्रैलोक्यमानिनं मोक्ष्यामीति प्रोच्य स राजा तामिन्दुमतीं सामात्यां विससर्ज। सा इन्दुमती मन्त्रि-सहिता त्रैलोक्यमानिनं गत्वा प्रोच्य च तद्वृत्तान्तं तेन अर्च्चिता पातालमाविशत्। ततः सा स्वयम्प्रभादीन् कोशवारि च समानीय तेषां ममात्मानामग्रतः सर्वं तत्

राजोत्तममकारयत्। मेरुध्वजश्च विहितप्रत्ययं सपरिच्छदं त्रैलोक्यमालिनं कारागृहात् मुमोच। आनीय च गृहं सम्यक् सभाज्य च स्वोऽजतासुरराजसञ्चयस्तं सपरिच्छदं स्वराज्ये विससर्ज।

त्रैलोक्यमालीच पुनः स्वं रसातलं प्राप्य प्राप्तराज्यः स्वैर्भृत्यैर्बन्धुभिश्च ननन्द। मेरुध्वजश्च पातालप्रभवैरर्घ-सञ्चयैः मरुत्वानिवाम्बुभिः पृथिवीं पूरयामास। अथ त्रैलो-क्यमाली निजभार्यया सम्मन्त्र्य मेरुध्वजसुताभ्यां कन्याद्वयं दित्सुः स्ववेश्मनि नृपं मेरुध्वजं सबान्धवं नेतुं स्मृतो-पकारः पातालात् स्वयमायात्। आगत्य च कृतातिथ्यं राजानं प्राब्रवीत् राजन्! युष्माभिस्तदा नातिनिर्वृत्या रसातलं, दृष्टम्, इदानीं परिचर्य्यापरैरस्माभिः समेत्य दृश्यताम्। गृह्येतां च मदीये सुते सुतयोः कृते। इति तेनासुरराजेनाभिहिते स मेरुध्वजः तत्रैव तां भार्य्यां उभौ पुत्रौ च आनाययामास। अब्रवीच्च तेभ्यस्तं दैत्येन्द्रवाक्यं कन्यादानात्मम्। ततो ज्येष्ठो मुक्ताफलध्वजस्तं राजानम-ब्रवीत् तात! अनाराधितशङ्करोऽहं विवाहं न करिष्यामि, एतन्मदा प्रागुक्तं तन्मेऽत्रापराधः क्षन्तव्यः। मयि वनं प्रयाते तु मलयध्वजो विवाहं करोतु तां पातालकन्यां विना नास्य हि निर्वृतिरिति। तदाकर्ण्य स कनीयान् तमवादीत् आर्य्य! त्वयि स्थिते नाहमप्यस्य मधर्म्यञ्चेदृशं करोमि। ततो राज्ञि मेरुध्वजे प्रयत्नात् बोधयत्यपि स मुक्ताफलध्वजः यदा स्वां विवाहक्रियां नैच्छत्, तदा त्रैलोक्यमाली तं खिन्नं भूपतिं मामन्त्र्य सानुगः स्वमेव

पातालं यथागतमगात्। आगत्य च स तं वृत्तान्तमावेद्य पुत्रं भार्य्यांश्चाभ्यधात् पश्यतं विधिः कीदृशोन्यकारैकपरः। मानुषौ प्रार्थितौ अपि मे कन्ये नागच्छीतां पूर्वं प्रार्थितैर्नापि मया ताभ्यां दातुं नाङ्गीकृतम्। तदाकर्ण्य तौ जगदतुः देव! को जानाति, कथमेतत् विधेश्चेतसि स्थितं, किं शाश्वतं वचोमृषा स्यात्? इत्यादिवदतां तेषां तत्विदित्वा ते कन्ये त्रैलोक्यप्रभात्रिभुवनप्रभे प्रतिज्ञां चक्रतुः। यदि द्वादशाहं निराहारस्थितयोरावयोर्देवोमहेश्वरो विवाहसम्पत्तिप्रसादं न करिष्यति, तत आवाभ्यां सहैवाग्निप्रवेशनं कार्य्यं, न तु वृत्त्यर्थं वा शरीरं धार्य्यम्। इत्थं प्रतिज्ञाय नियम्य च ते निराहारे जपध्यानपरे एव देवस्य शम्भोः पुरस्तस्थतुः। तद्विदित्वा च दुहितृवत्सलौ तयोः पितरौ असुरेन्द्रदम्पती अपि तथैव निराहारावास्ताम्। ततः सा स्वयम्प्रभा पुनस्तं वृत्तान्तं मेरुध्वज महादेव्यै वक्तुम् इन्दुमतीं द्रुतं प्राहिणोत्। तया इन्दुमत्या आगत्य तस्मै महादेव्यै स्वस्वामिगृहसङ्कटं तदाख्यातम्। राज्ञापि तत् मेरुध्वजाय तथैव निवेदितम्। ततस्तावपि राजदम्पती तत्र तदनुरोधात् आहारं तत्यजतुः, तत्पुत्रौ च तौ पितृभक्त्या। इत्यम् उभयोर्लोकयोः राजगृहेषु सङ्कटस्थेषु मुक्ताफलध्वजः अनश्नन् शङ्करं देवं दध्यौ। षट्सु रात्रिषु गतासु राजपुत्रः प्रातः प्रबुध्य महाबुद्धिं पूर्वमिव संयतकं प्राब्रवीत् सखे! अद्याहं स्वप्ने विमानतामुपगतं निजं वाहनं तपोवनं मुनिसुतं कामरूपमारुह्य निर्वेदात् मेरुपार्श्वगं गौरीशायतनमितो गतो-

ऽस्मि। तत्र इतस्ततः पश्यन् काञ्चित् तपःकृशां दिव्यकन्यामपश्यम्। तामुद्दिश्य कश्चित् जटाभृत् पुरुषो हसन् मामब्रवीत् त्वमेकस्याः कन्यकायाः पलाय्य इहागतोऽसि, इह चैषा द्वितीया सम्प्राप्ता त्वां पश्यतीति। तदाकर्ण्य वचस्तस्य, अहं तस्याः कन्याया रूपदर्शने अतृप्त एव सहसा निशाक्षये प्रबुद्धोऽस्मि। तस्मात्तत्रैव तां दिव्यकन्यकां प्राप्तुं गच्छामि। न चेत् तां प्राप्स्यामि तदा हुताशनं प्रवेक्ष्यामि। तां तथोपनतां हित्वा दैत्यकन्यकायां स्वतः प्रदुष्टायां न कथमपि मनो रज्यति मे, कोऽत्र उपायः क्रियतां, मन्ये, तत्र यातस्य मे निश्चितं शुभमस्ति। इति उक्त्वा तत् मुनिदत्तं स्ववाहनं सस्मार। आरुह्य च तत् स्मृतोपस्थितं कामगं विमानं स मुक्ताफलध्वजः सख्या समं दिव्यं तत् गौरीआयतनं प्रायात्। तत्र प्राप्य यथास्वप्नं तत्र पश्यन् जहर्ष। ततश्च स तत्र सिद्धोदकनाम्नि तीर्थे सख्या सह स्नानादिकं कर्त्तुं प्रचक्रमे।

अत्र च तत्पिता राजा मेरुध्वजः भार्य्यासुतादिभिः सह तं मुक्ताफलध्वजं क्वापि अविज्ञातगतं बुद्ध्वा उपवासकृशं दुःखेन, क्षोभेण च नितरां व्याकुलोऽभवत्। पातालवासी दैत्येन्द्रः स त्रैलोक्यमानी च भार्य्यापुत्रादिसहितः तथैव उपवासकृशः तं वृत्तान्तं विज्ञाय स्वकन्यके गृहीत्वा नृपान्तिकमायात्। मन्ये चतुर्द्दश्यामस्यां हरमर्चितुं स क्वापि गतः, तत् प्रतीक्षामहे तावत् दिनमेकम्, यदि स अद्य आगच्छेत् तदा प्रातः स यत्र गतः, तत्रैव गमिष्यामः, ततो यद् विधिर्विधास्यतीति राजा तान् सर्वान् सान्त्वयित्वा अतिष्ठत्।

अत्रान्तरे तस्मिन् गौर्य्याश्रमे स्थिता सा पद्मावती सखीरवोचत् सख्यः! अद्य स्वप्ने दृष्टः कोऽपि जटाधरः पुमान् देवागारात् विनिर्गतः सिद्धीश्वरगतां मामवदत् पुत्रि! दुःखं ते समाप्तम्, आसन्नस्ते भर्त्तृसङ्गमः। एवमुक्त्वा तस्मिन् गते मम निद्रा निशि अपि गते। तदेत तत्र गच्छाम इत्युक्त्वा सा पद्मावती तत् मेरुपार्श्वस्थितं गौरीनिकेतनं प्रायात्। तत्र सिद्धोदके स्नान्तं तं मुक्ताफलध्वजं दूरात् दृष्ट्वा सविस्मया स्वाः सखीरेव मभ्यधात्। सख्यः! पश्यत, सदृशोऽयं मम प्रियस्य पुमान् कीदृशः। किमाश्चर्य्यं स एवैषः स्यात्? तदाकर्ण्य ताः सख्यस्तं दृष्ट्वा एवमब्रुवन् भर्त्तृदारिके! न केवलमयं तव प्रेयसः सुसदृशः स च त्वत्-कान्तस्य सुहृदपि एष एव प्रतीयते। यतः तस्य संयतकस्य सौसादृश्यं सम्यगश्नुते। देवि! यथा त्वया स्वप्नवृत्तान्तो वर्णितः तथा मन्यामहे नूनमेतौ तौ मानुषतां गतौ। ईश्वरेण शम्भुनेव स्वयुक्तित इहानीतौ। कुतोऽन्यथा अस्यां देवभूमौ मानुषागमनम्। एवं सखीभिरभिहिता सा पद्मावती ईश्वरमभ्यर्च्य तस्मिन् देवान्तिके प्रच्छन्ना तयो-श्चेष्टितं जिज्ञासुः स्थिता।

अत्रान्तरे स मुक्ताफलध्वजः सवयस्यः तं देवं शम्भु-मर्चितुम् आगतः सर्वतो दत्तदृष्टिस्तं महाबुद्धिं सुहृद-मब्रवीत् सखे! तदेवायतनं चित्रमेतत् यत्र मयाद्य स्वप्ने वीक्षितं लिङ्गान्तर्गौरीश मूर्त्तिरत्नमिदं, तानेव स्वप्न-दृष्टान् दिव्यविहगस्फुरद्रत्नप्रभद्रुमान् प्रदेशानिहाद्य प्रश्यामि, परं तत्कालदृष्टां तां दिव्यकन्यां न पश्यामि।

तस्यान्तु अप्राप्तायाम् अद्य निश्चितं देहं त्यक्ष्यामि। इति तेनोक्ते ताः सख्यस्तां पद्मावतीं रहः प्रोचुः शृणु देवि! नूनमसौ स्वप्ने त्वां दृष्ट्वाद्य समागतः। त्वद्दर्शनं विना च प्राणान् त्यक्तुं समीहते। तदत्र निगूढ़स्थिता एव निश्चयं पश्याम इति तासु छन्नस्थितासु स मुक्ताफलध्वजः अन्तः-प्रविश्य देवमर्चयित्वा विनिर्ययौ। निर्गत्य च यावत् भक्त्या त्रिः प्रदक्षिणं कुरुते, तावत् स सखा च तस्य स्वां जातिं सस्मार। स्मृतजाती च हर्षात् तौ पूर्ववृत्तान्तं यावत् कथयामासतुः तावत् सा पद्मावती दृष्टिगोचरतामवाप। स मुक्ताफलध्वजः तदा तां दृष्ट्वैव हर्षनिर्भरः सुहृदमाह स्म सखे! सा मे प्रिया पद्मावती स्वप्ने दृष्टा, दिष्ट्या प्राप्ता च तदिमां सम्भावयामि तावत्, इत्युक्त्वा उपेत्य च साश्रुस्ता-मवादीत् देवि! माधुना क्वापि यासीः, सोऽहं ते प्रियो मुक्ताफलकेतुरस्मि। दृढ़व्रतस्य शापेन मानुषीं तनुमाश्रि-तेन मयाद्य जातिः स्मृता, इत्युक्त्वा तामालिङ्गितुमैषीत्। सापि पद्मावती साश्रुलोचना तं वीक्ष्य भ्रान्त्येवातिरोभूत्। सोऽपि मुक्ताफलध्वजस्तां राजसुतां पश्यन् मोहात् भुवि अपतत्। ततः सदुःखं तद्वयस्यः आकाशे जगाद देवि! पद्मावति! यदर्थं त्वया तपःक्लेशोऽनुभूतः, कथं प्राप्तं तं प्रियं नाभिभाषसे? अहं स संयतकः तव दयितस्य सुहृद्। युष्मदर्थं भ्रमस्य मे कथं प्रियं नालपसि? इत्युक्त्वा तं नृपा-त्मजं समाश्वास्य प्रोवाच सखे! त्वया असुरराजकन्या अनु-रागोपगता यत् परित्यक्ता तस्य पापस्य फलमिदमागतम्। तदाकर्ण्य सा पद्मावती छन्ना सखी राह सख्यः!

श्रुत असुरकन्यकासु न किलार्थं प्रवर्त्तते। ततः सख्योऽपि तामूचुः सखि! सर्वमिदं संवदति, किं त्वया न स्मर्यते? शापकाले तव प्रियेण तस्मात् तपोधनात् मुनेः प्रार्थितं यथा मानुषे पद्मावतीं विना नान्यस्यां मे मनो मागादिति। सोऽपि तपोधनस्तथैव तस्मै वरमदात्। तत्प्रभावादयं नूनम् अन्यासु स्त्रीषु न रज्यति। एतदाकर्ण्य सा राजपुत्री संशयाकुलाभवत्। सोऽपि मुक्ताफलध्वजः दृष्टनष्टप्रियः तदा चक्रन्द हा प्रिये! पद्मावति! किं त्वया नैतत् प्रेक्ष्यते, विद्याधरत्वे मया त्वदर्थं अन्न शापः प्राप्तः, अद्य च असंशयं मृत्युं प्राप्स्यामि च। इत्येवमार्त्तं प्रलपितं तस्याकर्ण्य सा पद्मावती सखीः प्राह सख्यः! यदि च सर्वाण्यभिज्ञानानि संवादीनि प्राप्तानि, तथापि देशान्तरपारम्पर्य्येण एतानि श्रुतानि, न चैतेभ्यो मे मतिनिर्णयः स्यात्। तस्मात् परमस्य वचः श्रोतुं शक्नोमि, तदेवं गौर्य्यायतनं व्रजामि, पूजाकालश्चायं मेऽतिवर्त्तते। इत्युक्त्वा सा पद्मावती सखीभिः सह तमम्बिकाश्रमं जगाम। तत्रागत्य तामर्चयित्वा च व्यज्ञपयत् भगवति! सोऽ[illegible]सखीश्वरदृष्टश्चेत् सत्यं मे पूर्वप्रियः, तत्तथा कुरु यथा मे शीघ्रं प्रत्ययः स्यात्। इत्युक्त्वा पद्मावती यावत् समुत्सुका तत्र तिष्ठति तावत् सोऽपि मुक्ताफलध्वजस्तं पूर्वमित्रं संयतकं महाबुद्धिमुवाच। सखे! मन्ये सा तदेव गौर्य्यायतनं याता, तदेहि तत्रैव याव इत्युक्त्वा तदेव विमानमारुह्य तमम्बिकाश्रममेव स जगाम। अथ दूरात् नभस्तलात् तं विमानेनावतीर्णं दृष्ट्वा सख्यः तां पद्मावतीमूचुः देवि!

पश्येदमद्भुतम्। स खलु दिव्येन विमानेन इहैवायातः, मानुषस्यास्य दिव्यः प्रभावोऽयं कुतः? ततः पद्मावतीस्ताः प्राहुश्च सख्यः! तं किं न स्मरथः? यत् स शापप्रदाता दृढ़-व्रतो मया शप्तः, यथा मानुषत्वेनावतीर्णस्य अस्यैव कामरूपं वाहनं भविष्यसीति। तत्तेन मुनिशिष्येण वाहनेनैव निश्चितं विमानरूपं दधता स्वेच्छं सर्वतोभ्रमति। एवं तयोक्ते सख्यस्तामूचुः देवि! यद्येवमवैषि, तदेनं कथं न सम्भावयसि? किमिति समीक्षसे च। एतत् सखीवचः समाकर्ण्य पद्मावती प्राहस्म सख्यः! एवं सम्भाव्यते, पर-मद्यापि निश्चयो नैव विद्यते मम। स्वदेहानाश्रितः अन्य-देहस्थः कथमभिगम्यः। प्रच्छन्ना एवास्य चेष्टितं तावत् पश्यामः। इत्युक्त्वा सा राजपुत्री छन्नैवावर्त्तत सखीभिः। तावच्च विमानादवतीर्य्य अम्बिकाश्रमं, स मुक्ताफलध्वजः तं वयस्यमुवाच सखे! अमुष्मिन् उद्यानान्तरे स्वयम्वरागता सा मया राक्षसीवत् पूर्वं सम्भाविता इह चावाप्तशापं मां पश्यन्ती च सा पद्मावती नूनं मुनीन्द्रेण तेन निवर्त्तिता, पश्य सा मे दृष्टिमार्गात् पलायते। एतत्तस्य वचः श्रुत्वा सा पद्मावती सखीरब्रवीत् सख्यः! सत्यमसौ स एव कथ-मेनं पूर्वदेहमनाश्रितं उपैमि, तदत्र मे सिद्धीश्वर एव गतिः। अथ सा धूर्जटिमभ्यर्च्य प्रार्थयामास देव! पूर्वदेहस्थितेन प्रियेण मम सङ्गमं विधेहि, वा मृत्युं तृतीया गतिर्नास्ति मे इति। तस्थौ सखीभिः सह तत्र देवकुलाङ्गने। तावच्च स मुक्ताफलध्वजस्तत्र गौर्य्याश्रमे तामन्विष्य अप्राप्य च समुद्विग्नस्तं वयस्यमवादीत् सखे!

नासादिता सा कन्यका मया, तदिदानीं देहविसर्जनाय अग्नौ यतिष्ये इति तदाकर्ण्य स सखा प्रत्यवादीत् सखे! तव कल्याणमेव भावि, मुनिवचो नैव मृषा, शाम्यतु स्वप्नादेशः। इत्येवमाश्वासयता तेन सख्या सह स मुक्ता-फलध्वजः विमानमधिरुह्य सिद्धीश्वरमाससाद। तत्र प्राप्तं दृष्ट्वा पद्मावती अलक्षितेव तस्थौ। उवाच च सखीः, पश्यत इहैवासौ सम्प्राप्त इति। सोऽपि देवसमीपं प्रविश्य तत्र प्रत्यग्रपूजित मालक्ष्य तं वयस्य मभाषत सखे! पश्य केनापि साम्प्रतमेव विभुरर्चितः। नूनं सैव मे प्रियात्र क्वापि प्रच्छन्ना स्थिता, इत्युक्त्वा सोऽत्र तां चिन्वानो यदा न प्राप, तदा हा प्रिये! पद्मावतीति मुहुर्विलपन् चक्रन्द। स्मरज्वरावेगविवशः सः कोकिलारुते तदालापान् वर्हि-वर्हेषु तत्केशपाशान् सरसिजे तन्मुखं प्रीत्या ध्यायन् क्लान्तस्तेन सख्या स राजपुत्रः समाश्वास्य अनुनीय च जगदे सखे! बहुप्रयासक्लान्तेन त्वया किमारब्धं? भूलोकं पाताल च जित्वा कामेन दुरात्मना जीयमानमात्मानं कथमुपेक्षसे? त्वयि अन्तिकमनायाते तव पिता मेरुध्वजो नृपतिः, त्रैलोक्यमाली ते श्वशुरो दानवेश्वरः, तदात्मजा त्वदर्थिनी सा त्रैलोक्यप्रभा, सा च ते माता विनयवती, अनुजश्च स मलयध्वजः सर्वे एते अनिष्टाशङ्किनः सोपवासा असून् जहति। तदेहि गत्वा तान् रक्षाव इति वादिनं तं मित्रं स मुक्ताफलध्वजः प्राह सखे! त्वमेव मैहिमानेन गत्वा तान् समाश्वासय इति। ततस्तं स सखावोचत् सखे! कथं ममैतत् सङ्गच्छते, शापेनायं मुनिः

शिरस्तवैव वाहनतां गतः। इति वादिनं तं सुहृदं स राजपुत्रः प्रत्यभाषत तर्हि तिष्ठ सखे! पश्यामि तावत् किमिह भवेत्। एतत्तयोरालापं श्रुत्वा पद्मावती सखी-रवदत् सख्यः! जाने, अभिज्ञान संवादैः स एवायं मे पूर्वप्रियः कथं मानुषदेहस्थः शापेन एवं कदर्थ्यते? ममापि सिद्धकन्योपहासात् एष शापदोषः, इति यावत् सा ब्रवीति, तावत् आलोहितच्छविः वियोगि-वनदावाग्नि-र्भगवान् मृगलाञ्छन उदगात् अपूरयच्च शनैर्जगत् ज्योत्स्ना-पूरेण। तत्करामर्शसञ्जातद्विगुणमदनावेशं चक्राह्वमिव क्रन्दन्तं नृपात्मजं मुक्ताफलध्वजं दृष्ट्वा सा पद्मावती प्रच्छन्ना समुद्विग्ना जगाद राजपुत्र! यदि च स एव त्वं मे पूर्ववल्लभः, तथापि अन्यदेहस्थतया मम परपुरुषोऽसि, अहञ्च ते पर-दाराः, तत् किं मुहुः क्रन्दसि? यदि मुनेर्वचः सत्यं, तदा-वश्यमुपायो भविता,। एतत्तस्या वचनं श्रुत्वा स मुक्ता-फलध्वजः तामपश्यन् हर्षविषादविषमां दशामवहत् अवदच्च देवि! विस्मृतप्राग्जन्मना मया त्वं दृष्टासि, प्रत्य-भिज्ञातु तां त्वामेव तनुं वहति त्वन्तु वैद्याधरदेहे वर्त्त-मानं मां विलोक्य अधुना मर्त्यदेहे स्थितं मां कथं विजा-नीषे? तदवश्यं मया इदं हतशरीरं त्याज्यम्। इत्युक्त्वा स तूष्णीमभवत् सापि तत्प्रिया तथैव प्रच्छन्ना तस्थौ।

ततो भूयिष्ठयातायां निशायां अमात्ये पूर्वमित्रे संयतके महाबुद्धौ निद्रां गते तेन देहेन तां पद्मावतीं अप्राप्यां विदित्वा स मुक्ताफलध्वजः दारूणि आहृत्य अग्निमदीप-यत् अवोचच्च लिङ्गमूर्त्तिं शङ्करं प्रणम्य, भगवन्! त्वत्प्रसादेन

प्राकृतीं तां तनुं चितः, यथा अचिरेणैव प्रियां पद्मावतीं प्राप्नोमि तथा विधेहीति। एवमुक्त्वा स राजसुतस्तस्मिन् ज्वलिते हुताशने तनुं जुहाव। तावच्च प्रबुद्धः स महा-बुद्धिस्तं मुक्ताफलध्वजमपश्यन् विचित्य समन्तात् उद्विग्न-मनिमुद्देशत। अथ तं वयस्यं विरहातुरं तस्मिन् हुता-शने हुतात्मानं विचिन्त्य शोकात् तत्रैवाग्नौ आत्मानमपा-तयत्। तदवलोक्य सापि पद्मावती नितरां दुःखिता सखीरब्रवीत्, अहो! योषितां हृदयं कुलिशादपि कठोरं धिक्, इदं वैशसं पश्यन्त्या मम असुभिरिदानीमपि नोत्-क्रान्तम्? तत् कियच्चिरमशमधन्य आत्मा मया धार्य्यते? नास्ति मे अद्यापि दुःखान्तः, यदपुण्यैः तस्य मुनेरपि वचोऽन्यथा जातम्। तदत्र परपुरुषसङ्गेन मे मरणं न युक्तं, तदिदानीम् अनायासपाश एव मे गतिः। इत्युक्त्वा सा अश्वारशतः समुत्थ्य अशोकपादपे सा राजपुत्री लतया पाशं विधातुं प्रचक्रमे। यावच्च ताः सख्यः आशाभ्रष्ट-शिभिर्वाक्यै तां वारयन्ति तावत् स तपोधनो मुनिः सहसा तत्रागात्। पुत्रि! मा साहसं कृथाः, न भवेत् मे वचो-ऽन्यथा, धीरा भव, अधुनैव ते प्रियं प्राप्तं द्रक्ष्यसि। त्वदी-येनैव तपसा तस्याचिरात् पापक्षयः संवृत्तः, तत् स्वतप-स्यैव ते कथमीदृशी अनास्था? प्रत्यासन्ने विवाहे च तव केयं विषादिता? अहं प्रणिधानादिदं सर्वमवेत्य इहागतः। इति व्याहरन्तम् आगतं तं मुनिं वीक्ष्य प्रणम्य च सा पद्मा-वती क्षणं दोलारूढेव समभवत्।

अथ स मुक्ताफलकेतुः मर्त्यदेहदाहात् तं पूर्वदेहं वैद्या-

धरमुपेत्य सवयस्यः तत्रागात्। यातश्चैव नवमेवं कुमु-
दिनीव राकाशशाङ्कमुदितं तं विद्याधरेन्द्रतनयं गगना-
गतं वीक्ष्य सा पद्मावती तत्क्षणं हृदि कमपि प्रमोदमव-
हत्। मुक्ताफलकेतुश्च चिरमरुभूमिभ्रमणश्रान्तः पान्थ
इव सरितं, तां पद्मावतीं चिरादवेक्ष्य पिबन् भृशं मुमुदे।
शापरजनीक्षयाच्च तौ चक्रवाकदम्पती इव अवाप्तसङ्गमौ
तपनतेजसस्तस्य मुनेः पादपतने न तृप्ततां जग्मतुः। स
च महामुनिः, युवामिह यत् तीर्णशापौ मुदितौ समा-
गतौ, स एव मेऽद्य महान् चित्ततोष इति तावभ्यनन्दत्।

अथ गतायां निशि स मेरुध्वजो नृपतिः कनिष्ठपुत्र-
सहितः इन्द्रदत्तवारणगतस्तत्रैव चिन्वन्नाययौ। स च
दैत्याधिपस्त्रैलोक्यमाली सानुगस्तया दुहित्रा त्रैलोक्य-
प्रभया समं विमानचरस्तत्रागात्। ततः स मुनिः तयो-
र्नृपतिदैत्यराजयोः तं मुक्ताफलकेतुं प्रदर्श्य यथा स कार्य्यार्थं
शापात् मनुष्यतामवाप, ततश्च मुक्तिं गतस्तत् सर्वमवर्ण-
यत्। ततस्ते मेरुध्वजाद्यास्तद्विदित्वा अग्नौ पतनोन्मुखा
मुनिनोपदिष्टं सिद्धोदकस्नानहराचर्चनादिकं कृत्वा सहसा
विशोका बभूवुः। तया तु त्रैलोक्यप्रभया तत्राशु जातिं
संस्मृत्य विद्याधराधिनाथः पतिर्मेऽस्तु इति उक्त्वा याहं तप-
स्यन्ती पद्मावत्या उपहसिता स्वकामनासिद्धेय अनलं प्राविशं
सैव सिद्धाधिपकन्या देवप्रभाहम् अस्मिन् दितिजकुले जाता-
स्मि, यत्र चानुरक्तास्मि, सोऽप्येष राजपुत्रः पुनर्वैद्याधरीं तनु-
माश्रितः। न चानेन देहेन अन्यरूपोऽयमभिगन्तुं युज्यते,
तदिमां तनुं तस्यैव विद्याधरेन्द्रस्य प्राप्त्यै पुनर्जने

आसुरीं तनुमिमां जुहोमीति विमृश्य तच्च वृत्तान्तं पित्रोः
निवेद्य तमेव मुक्ताफलध्वजं हुताशनमनुप्रविष्टां तां करुणया-
र्द्रांश · अप्रितपूर्वदेहीं, स्वयं हुताशनः आविरभूत्
अब्रवीच्च, मुक्ताफलकेतो ! इयं त्वामुद्दिश्य मयि विमुक्त-
तनुः, तदिमां सिद्धेशसुतां देवप्रभां परिगृहाण । इत्ये-
तदुक्त्वैव अनले देवे तिरोहिते, भगवान् पद्मयोनिः सेन्द्रैः
सुरैः सह तत्रायर्यौ । गन्धर्वराजश्च पद्मशेखरः विद्याधरे-
न्द्रेण चन्द्रकेतुना सह समागात् । अथ स गन्धर्वराट् व्यग्र-
परिग्रहः सर्वान् समागतान् यथायथमभिवन्द्य मुक्ताफल-
केतवे तां सुतां पद्मावतीं यथाविधि प्रादात् । स च
विद्याधरपतिसुतः चिरोत्सुकां तां दयितामवाप्य जन्म-
तरोः फलमवाप्तं मेने, उवाह च तां सिद्धकन्याम् । स च
मलयध्वजः तया दितिजेश्वरकन्यया त्रिभुवनप्रभया यथा-
विधि प्रदत्तया कान्तया समयुज्यत । ततोऽसौ मेरुध्वजस्तं
पुत्रं मलयध्वजं सद्वीपपृथ्वीराज्ये अभिषिच्य सदारस्त-
पसे वनमगात् । स च दितिजाधिपस्त्रैलोक्यमानी मय-
विग्रहः स्वं पदं प्रायात् । अथ देवराजः मुक्ताफलकेतवे
तां विद्युद्ध्वजस्यासुरेन्द्रस्य राजलक्ष्मीं प्रादात् । ततश्च
अयं मुक्ताफलकेतुः विद्याधराणामसुराणाञ्च ऐश्वर्य्यं भुङ्क्तां,
सुराश्च स्वपदानि यान्तु इति वाक् दिवः समुदचरत् ।
तामाकर्ण्य च ते सुराः ब्रह्मादयः प्रमुदिताः स्वं स्वं धाम
ययुः । तपोधनश्च स मुनिः शापामुक्तेन शिष्येण च समं
तपोवनमगात् । स च चन्द्रकेतुः भार्य्याद्वयभाजितेन तेन
सुतेन मुक्ताफलकेतुना सह वैद्याधरं पदमवाप । ततश्च

स विद्याधरचक्रवर्त्ती चन्द्रकेतुः चिरं साम्राज्यं भुक्त्वा तस्मिन् सुते मुक्ताफलकेतौ स्वराज्यधुरां निवेश्य विरक्तः देव्या समं मुनितपोवनमशिश्रियत्। स मुक्ताफलकेतुः प्राक् इन्द्रात् सुरसाम्राज्यमवाप्य साम्प्रतञ्च पितुः सकाशात् वैद्याधरसाम्राज्यं पद्मावत्या सहितो दश कल्पान् बुभुजे। ततः स क्रमेण भावानवसानविरसान् आलोक्य अन्ते मुनीन्द्रकाननं संश्रित्य तत्र तपःप्रकर्षात् परं ज्योतिर्धूर्जटे-रीशस्य पदमगात्।

इत्थं हंसयुगलात् सरसां कथां निशम्य ज्ञानं दिव्यं दिव्यां गतिञ्च अवाप्य भार्य्यया सहितेन ताभ्याञ्च विहगाभ्यां सह तं सिद्धेश्वरं गत्वा श्रापतनूस्त्यक्त्वा च निजां शिवानुचरतामवापुः। इति गोमुखमुखात् कथामाकर्ण्य मदनमञ्चुकाविरही नरवाहनदत्तः क्षणमात्रं चित्तविनोदमवापम्। इत्थं कथितकथे तस्मिन् चक्रवर्त्तिनि ते मुनयः गोपालकेन सहिताः कश्यपाश्रमवासिनः परां मुदमवापुः, परितुष्टुवुश्च तं सम्राजम्।

## अथ विषमशीलो नाम अष्टादशो लम्बकः।

### अथ विंशोत्तरशततमस्तरङ्गः।

ततस्तस्मिन्नसितगिरौ तत्र कश्यपाश्रमे नरवाहनदत्त-स्तान् मुनीनेवमभाषत, अन्यच्च देवीविरहे यदाहं सानुरागया वेगवत्या विहायसः न्यस्तः अभिरमयितुं नीतः देशान्तरं, तदा परदेशगः विरही अहं देहत्यागेच्छया वनान्ते भ्रमन् महामुनिं कण्वमपश्यम्। स मां पादानतं दृष्ट्वा प्रणिधानात् सर्वमवेत्य च दुःखितं दयालुः स्वाश्रमं नीत्वाभ्यधात्, वीर! सोमवंशीयोऽपि किं नाम मुह्यसि? देवादेशोऽपि ते ध्रुवं भार्यासङ्गमे नास्था? असम्भाव्या अपि समागमा नृणां सम्भवन्तीह। तदत्र विक्रमादित्यकथामाख्यामि, श्रूयताम्।

अस्ति अवन्तिषु युगादौ विश्वकर्मणा निर्मिता त्रिपुरारेर्वसतिरुज्जयिनी नाम नगरी। सा सतीव परैरस्पृष्टा, पद्मिनीव श्रियाश्रिता, सतां धीरिव धर्माढ्या, पृथ्वीव बहुकौतुका। तस्यां महेन्द्रादित्य इति जगद्विजयी अमरावत्यां महेन्द्र इव विपक्षबलसूदनो राजासीत्। यः शौर्यें नानाशस्त्रायुधः, रूपे कुसुमायुधः, त्यागे मुक्तकरः, करे च बद्धमुष्टिरवर्तत। तस्य नृपतेः, शचीवेन्द्रस्य,

गौरीव शम्भोः, श्रीरिव विष्णोः, सौम्यदर्शना नाम महिषी अभवत्। सुमतिर्नाम महामन्त्री, वज्रायुधो नाम च प्रतीहारः क्रमागतः तस्याभूताम्। स राजा तैः समं राज्यं शासत् शश्वत् हरमाराधयन् पुत्रकाम्यया नानाव्रतधरः समभवत्।

अत्रान्तरे सेन्द्राः सुरा म्लेच्छानामुपद्रवेण दुःखिताः गीर्वाणगणसंश्रितकन्दरे अन्यदिग्जयेन सानन्दायाः कौवेर्य्या दिशो हाससुन्दरे कैलासशैले पार्वत्या सह स्थितं पुरारिमभिजग्मुः, व्यजिज्ञपंश्च कृतप्रणामाः स्तुवन्तः पृष्टागमनकार्य्यास्तं देवम्। त्वया देव! विष्णुना च ये असुराः निहताः ते पुनरद्य महीतले म्लेच्छरूपेण जाताः। ते चेदानीं विप्रान् व्यापादयन्ति, विघ्नन्ति च तेषां यज्ञादिकाः क्रियाः, हरन्ति च मुनीनां कन्याः, किं बहुना, कुर्वन्ति जगतामित्थम् उपद्रवम्। प्रभो! भूलोकादेव शश्वत् देवलोकः आप्याय्यते, ब्राह्मणैरग्नौ हुतं हि हव्यं दिवौकसां तृप्तये, तदिदानीं म्लेच्छाक्रान्ते निर्वषट्कारे भूर्लोके यज्ञादिविच्छेदात् देवलोकोऽवसीदति, तदत्र कञ्चिदुपायं कुरुष्व, कञ्चित् प्रवीरं पुरुषं भूतले अवतारय, यस्तान् म्लेच्छानुत्सादयिष्यति। इत्येवं देवैर्विज्ञप्तः पुरारिस्तानवादीत् यात यूयं, नात्र युष्माभिश्चिन्ता कार्य्या, अचिरेणास्योपायं निःसंशयं करिष्यामि, इत्युक्त्वा तान् देवान् विसृज्य भगवान् भवानीपतिः माल्यवन्तं नाम गणाधिपमाहूय समादिशत्, पुत्र! महापुरि उज्जयिन्यां महेन्द्रादित्यनृपतेः सुतः समुत्पद्यस्व, स राजा ममैवांशः, भार्य्या च तस्य अम्बि-

काया अंशभूता। तयोः पुत्रत्वेन समुत्पन्नः देवकार्य्यं कुरुष्व। यवनविघातकान् अशेषान् म्लेच्छान् व्यापादय। मत्प्रसादात् सप्तद्वीपपतिः राजा भविष्यसि। यक्षा राक्षसा वेतालाश्च ते वशे स्थास्यन्ति। सुचिरं मानुषभोगान् भुक्त्वा च पुनरस्मानुपैष्यसि। इति पुरजिता-दिष्टो माल्यवान् गणराजः प्राब्रवीत्, भगवन्! आज्ञा भवतः अलङ्घ्या, भोगास्तु मानुषके के? यत्र बन्धूनां सुहृदां भृत्यानाञ्च वियोगाः सुदुःसहाः, यत्र च धनार्जनैः जरया रोगादिभिश्च सततं व्यथाः। इति तेन गणेनोक्तो देवः प्रत्यभाषत अनघ! गच्छ त्वम्, एतानि दुःखानि तव तत्र न भविष्यन्ति, मम प्रसादात् सर्वेषु कालेषु सुखित एव स्थास्यसि। इति शम्भुनोक्तः स गणः माल्यवान् तत्क्षणादृश्योऽभवत्, अजायत च उज्जयिनीपतेः तस्य महेन्द्रादित्यस्य नृपतेर्महिष्या गर्भे।

तस्मिंश्च काले निशाकान्तशेखरः शङ्करः तं महेन्द्रादित्यं नृपतिं स्वप्ने समादिशत्, राजन्! तुष्टोऽस्मि ते, यस्ते पुत्रो जनिष्यते, स विक्रमेण सप्तद्वीपां पृथ्वीमाक्रमिष्यति, यक्षान्, रक्षांसि, पिशाचादींश्च पातालाकाशचारिणः सर्वान् वशीकरिष्यति, म्लेच्छांश्च सर्वान् निहनिष्यति, तस्मादेवास्य विक्रमादित्य इति, अरिषु च वैषम्यकरणात् विषमशील इति च नाम प्रचरिष्यति। इत्युक्त्वा देवेऽन्तर्हिते स महीपतिः प्रबुद्धः प्रातः स्वसचिवेभ्यः प्रहृष्टः स्वप्नवृत्तान्तमवर्णयत्। तेऽपि सचिवाः प्रमुदितास्तस्मै राज्ञे स्वं स्वं पुत्रप्राप्तिफलं हरादेशं शशंसुः। तावच्च राज्ञोऽन्तः-

पुरचेटिका सत्वरमेत्य देव्यै तं साचात् फलं हरादेर्यं न्यवेदयत्। ततः स राजा सचिवैरभिनन्दितः सत्यं प्रभुना मम सुतो दत्त इति मुहुर्वदन् परां मुदमवाप।

अथ तस्य राज्ञी सगर्भा समूर्जितद्युतिः प्रातरुद्यत्-सहस्रकरमण्डला प्राचीव शुशुभे। कुचयोश्च क्रमेण श्यामा चुचुकत्विट् समजायत। ततः सा समये निखिलैः यक्ष-राक्षसवेतालैः प्रणम्यमाना पुत्रं मनस्विनं सूते स्म। तस्मिंश्च सुते जाते निपतत्पुष्पवृष्टिप्रहासिनी गीर्वाण-दुन्दुभिनिनादिनी द्यौरजायत। सा च पुरी तत्काल-मुत्सवानन्देन व्याकुला क्षीवेव भूताविष्टेव वातक्षोभात्नृत्यतीव चाभवत्। राजनि तदा अविरतं वसूनि वर्षति कश्चि-दपि दरिद्रो नासीत्। ततः स राजा प्रभुनादिष्टेन नाम्ना तं विक्रमादित्यं विषमशीलञ्चाकरोत्।

अथ कियत्सु दिनेषु गतेषु तस्य राज्ञःमहामन्त्रिणः सुमते-र्महीपतिर्नाम सुतो जज्ञे। क्षत्तुश्च वज्रायुधस्य पुत्रो भद्रा-युधो नाम अजनि। पुरोहितस्य च महीधरस्य श्रीधरो नाम तनयः समुदपद्यत। तैश्च मन्त्र्यादिसुतैस्त्रिभिः स राजसुतः विक्रमादित्यः तेजोवीर्य्यबलैरिव युतो वव्रधे। उपनीतस्य तु तस्य विद्यासु गुरवो हेतुमात्रतामुपययुः, "तासु तस्याप्रयासेन स्वयमेव प्रादुरासन्। विद्वांसो यां यां विद्यां तमपृच्छन् तस्यां तस्यामेव तैस्तस्य असमोत्कर्षः समबुध्यत। तच्च राजसुतं दिव्यास्त्रयोधिनं पश्यन् जनः रामादिधनुर्धरकथादिष्वपि मन्दादरोऽभवत्। पिता महे-न्द्रादित्यश्च नृपः आक्रान्तोपनतैर्नृपैर्दत्ता रूपवतीः कन्याः

अपरा: श्रिय इव तत्कृते आजहार । ततः स राजा तं पुत्रं प्राज्यविक्रमं यौवनस्थं विलोक्य यथाविधि राज्ये जनप्रियमभिषिच्य भार्य्यासचिवसहितः चरमे वयसि वाराणसीं गत्वा शरण्यं शम्भुं शिश्रिये । विक्रमादित्योऽपि तत् पैतृकं राज्यमवाप्य नभो भास्वानिव क्रमात् प्रतपितुमारेभे । तेनारोपितगुणं कोदण्डं नमदालोक्यैव तच्छिक्षयेव नृपतयः उच्छ्रितोऽपि अनमन् । विद्यानुभावात् यक्षराक्षसादीनपि उन्मार्गगामिनः साधयन् सम्यक् वसुन्धरामन्वशासत् । महीतले तस्य सेना आदित्यस्य रश्मय इव ककुभः प्रसादयन्तः समन्तात् विचरन्ति स्म । स राजा विक्रमादित्यो महावीरोऽपि परलोकतो भीरुः, शूरोऽपि अचण्डकरः, कुसन्तापी अपि अङ्गनाप्रियः, पितृहीनानां पिता, अबन्धूनां बान्धवः, अनाथानां नाथः प्रजानामभवत् । नूनं तस्य यशः श्वेतद्वीपस्य क्षीरसागरस्य कैलासस्य हिमाचलस्य च निर्मातुर्विधातुरुपादानमभवत् ।

एकदा सभासीनं तं नृपं प्रतीहारो भद्रायुधः समुपेत्य व्यजिज्ञपत्, देव ! दक्षिणदिग्विजयाय प्रहितस्य ससैन्यस्य विक्रमशक्तेः पार्श्वं देवेन अनङ्गदेवो नाम यो दूतः प्रेषितः, स सद्वितीयः समागतो द्वारि तिष्ठति, प्रभो ! अस्य च हृष्टं मुखं शुभं वक्ति इति । अथ राज्ञा प्रवेश्यतामसावित्युक्ते स प्रतीहारः सद्वितीयं तम् अनङ्गदेवं सगौरवं तत्र प्रवेश्य स्वाधिकारमगात् । अथ प्रविष्टः स सप्रणामं जयशब्दमुदीर्य्य अग्रतः समुपविष्टो राज्ञा तेनापृच्छ्यत । कच्चित् स सेनानी राजा विक्रमशक्तिः कुशली ? कच्चिच्च व्याघ्र-

बलाद्या अपरे भूभुज: कुशलिन: ? अन्येषाञ्च राजपुत्राणां प्रधानानां तस्मिन् बले कुशलम् ? गजाश्वरथपादातानाञ्च कच्चित् शिवम् ? इति राज्ञा पृष्ट: स: अनङ्गदेव: प्रोवाच, देव ! विक्रमशक्ते: सर्वस्य सैन्यस्य च शिवम्। अपरान्तेन सहितं दक्षिणापथं देवेन विजितम्। मध्यदेश: सौराष्ट्र:, वङ्गाङ्गा च पूर्वदिक् विजिता। कश्मीरसहिता कौवेरी दिक् करदीकृता। तानि तानि द्वीपानि दुर्गाणि च विजितानि। म्लेच्छसंघा निहता, वशे स्थापिताश्च। ते ते च नृपा: विक्रमशक्ते: कटकेषु प्रविष्टा:। स च विक्रमशक्तिस्तैस्तै राजभि: सममागत:। आस्ते च इत: प्रयाणशतेषु स्थानेषु। एवमाख्यातवन्तं तं दूतं तुष्टो नृपतिर्विक्रमादित्य: वस्त्रैरलङ्कारैर्ग्रामैश्च अभ्यपूरयत्। पुनश्च तं दूतं पप्रच्छ, अनङ्गदेव ! त्वया गतेन के के देशा विलोकिता: ? कुत्र च किं दृष्टं कौतुकं मे तत्तच्छ्रवणेषु, कथ्यताम्। इति तेन भूभृता पृष्टोऽनङ्गदेव: वक्तुं प्राक्रमत, देव ! इतो देवाज्ञया अहं गत्वा क्रमात् विक्रमशक्ते: सैन्यसमुदयं मिलितानन्दनागेन्द्रं सदश्वशतपूरितं समुद्रमिव विस्तीर्णं सपक्षै: क्ष्माभृद्भिराश्रितं प्राप्तवान्। तत्र चाहमुपागत: तेन विक्रमशक्तिना प्रभुणा प्रहित इति प्रणतेनाभिसत्कृत: यावत् विजयमवलोकयन् तिष्ठामि, तावत् सिंहलेश्वरसकाशात् दूत: कश्चिदुपागमत्, उवाच च तस्मै विक्रमशक्तये, राज्ञो विक्रमादित्यस्य हृदयभूत: अनङ्गदेवस्तेऽन्तिके स्थित:, इति त्वत्पार्श्वप्रहितागतैर्दूतैर्मे कथितम्। तत् त्वरया तं मदन्तिकं प्रहिणु, अस्य

सकाशे कल्याणं किञ्चन राजकार्य्यं वक्ष्यामीति।

अथाहं तेन सिंहलाधिपदूतेन सह वहनेन अब्धिवर्त्मना सिंहलद्वीपमगच्छम्। तत्र च गत्वाहं हेमनिर्मितां विचित्ररत्नप्रासादां निर्वाणनगरीमिव तस्य राजधानीमपश्यम्, अद्राक्षञ्च तत्र वीरसेनं नृपतिं सिंहलाधिपतिं विनीतैः सचिवैर्वृतं शतक्रतुमिव सुरैः। स प्रभुर्मामाहूय आदृत्य च कुशलं पृष्ट्वा च भूयसा सत्कारेण विश्रामयामास।

ततोऽन्येद्युः सभासीनो मामिकान्ते आहूय देवभक्तिं दर्शयन् उवाच, अस्ति ममैका दुहिता भूलोकेषु सुन्दरी मदलेखा नाम, तामहं भवतां राज्ञे ददामि, तस्य भवत्प्रभोः सा अनुरूपा भार्य्या, स च तस्याः अनुरूपः पतिः। एतदर्थं त्वमाहूतः, तदेतां वार्त्तां स्वामिने विज्ञापयितुं मदीयेन दूतेन सह गच्छ। अहञ्च तदनुपदं तत्रात्मजां प्रेषयामि। इत्युक्त्वा तां कन्यां रूपलावण्ययौवनैर्भूषितावयवां स्वान्तिकमानाययामास। तामङ्कमारोप्य मां दर्शयित्वा च जगाद, भद्र! त्वत्स्वामिने दत्ता इयं कन्या परिगृह्यतामिति। अहञ्च तां राजपुत्रीं वीक्ष्य तस्या रूपेण विस्मितः प्रेषितेयं स्वाम्यर्थं मयेति मुदितोऽब्रुवम्, अचिन्त्यञ्च अहो! विधिराश्चर्य्यस्य विधौ नृत्यति। यत् तिलोत्तमां कृत्वापि तदुत्तमाम् इमां विदधे। ततोऽहं तेन राज्ञा सत्कृतः तस्मात् सिंहलात् वलयवेनेन तदीयेन दूतेनामुना प्रस्थितः। यावदावां वहनमारुह्य अम्बुधौ व्रजावः, तावत् सहसा तस्याब्धेर्मध्ये महत् पुलिनं दृष्ट-

वन्तौ। तन्मध्ये च अद्भुतरूपे द्वे कन्यके अपश्याव। तयो-रेका प्रियङ्गुश्यामाङ्गी, अपरा चन्द्रामलद्युतिः। ते च स्वस्ववर्णोचितेन वस्त्रालङ्कारेण अलङ्कृते सद्रत्नकङ्कणक्वाणं करतालिकां दत्त्वा पुरतः जाम्बूनदमयमपि सजीवं रत्न-चित्रितं क्रीड़ाहरिणपोतकं नर्त्तयन्त्यौ दृष्ट्वा आवाभ्यां विस्मिताभ्यामन्योन्यमभण्यत, अहो किमेतदाश्चर्य्यं, स्वप्नो वा माया वा एषः? क्व अब्धौ सहसा पुलिनम्? क्व वा ईदृश्यौ कन्यके? क्व च एतयोः रत्नचित्राङ्गो हेममयः सजीवो मृगः? इत्येवं तर्कयतोरेव आवयोरकस्मात् अम्भो-निधिम् उद्वेलयन् वायुः प्रावर्त्तत। तेनास्माकं तद्वहनं वेलाद्रौचिषु निचिप्तमभज्यत। तद्गताश्च जना मकरै-र्भच्यमाणा ममज्जुः। आवान्तु ताभ्यां कन्याभ्यामेत्य बाहुषु आलम्ब्यैव उत्चिप्य च अप्राप्तमकराननौ पुलिनं नीतौ। ततश्च ऊर्मिभिस्तस्मिन् पुलिने पूरिते विह्वलावावां समा-श्वास्य गुहागर्भमिव ताभ्यां प्रवेशितौ। ततो यावत्तत्र दिव्यं नानाविचित्रद्रुम वनं वीक्षावहे, तावत् नाम्भोधिः, न तटं नापि मृगशावो नापि च कन्यके, चित्रं किमेतत् मायैवैषा नूनम् इति वादिनावावां क्षणं भ्रमन्तौ तत्र महत् एकं स्वच्छं गम्भीरविस्तीर्णं महतामाशयमिव तृष्णा-सन्तापशमनं मूर्त्तिमत् निर्वाणमिव सरः अपश्याव। तत्र च स्नातुमायातां साक्षात् वनश्रियमिव परिजनवृतां काञ्चित् वराङ्गनां दृष्टवन्तौ। अथ सा कर्णीरथात् अवरुह्य विकसितसरोरुहे तस्मिन् सरसि स्नात्वा कियन्तं कालं यावत् ध्यानमास्थिता तावत् तस्मात् सरसः समुद्गम्य

साक्षात् लिङ्गाकृतिः शिवः तस्या अग्रतः समुपागात्। ततः सा स्वविभवोचितैस्तैस्तैर्द्रव्यैर्विविधैर्दिव्यरत्नमयं तं लिङ्गमयं देवं विधिवदभ्यर्च्य वीणामादत्त। अवादयच्च तया तां सुस्वरं गायन्ती, यथा तच्छ्रवणाकृष्टचेतसः खेचरा गगनतलवर्त्तिनः आलिखिता इव निष्पन्दा आसन्। अथ सा उपसंहृतगान्धर्वा शम्भोर्विसर्जनमकरोत्, स च देवस्तत्क्षणं सरसि मग्नवान्। ततः सा हरिणेक्षणा समुत्थाय वहनमारुह्य सपरिजना शनैर्गन्तुं प्रवृत्ता अभवत्। केयमिति असकृत् सादरं पृच्छतोरपि आवयोस्तत्परिजनः कश्चिदपि नोत्तरमदात्। अहन्तु अस्य सिंहलेश्वरदूतस्य तावकं प्रभावं दर्शयिष्यन् तामिदमुच्चैरवादिषम्, सुन्दरि! देवस्य विक्रमादित्यस्य अङ्घ्रिस्पर्शेन शापितासि, त्वयात्मानं अस्मभ्यमनाख्याय न गन्तव्यमिति। तदाकर्ण्य सा वराङ्गी परिजनं निवार्य्य अवरुह्य च वहनात् मामुपागम्य मधुरया गिराभ्यधात्, भद्र! कच्चित् श्रीमान् विक्रमादित्यः कुशलवान्? किं वा पृच्छामि, सर्वमेव मे विदितं, मयैव मायामुद्राख्य भवानिहानीतः। स हि मे महाभयात् त्राता नृपतिर्मान्यः। तदेहि मद्गृहं तत्र याहि यथा च स राजा मे मान्यः, कार्य्यञ्च तस्य यत् तत् सर्वं ते वक्ष्यामि। इत्युक्ता सचित्तं मुक्तकर्णीरथा अस्माभिव पथि व्रजन्ती क्रमेण स्वर्गोपमं नानारत्नविचित्रहेमरचितं द्वारेषु नानाविधैर्विविधरूपधरैः प्रवीरपुरुषैरध्यासितं स्वं पुरमावामनैषीत्। तत्र च वरवधूभिरशेषदिव्यभोगसिद्धिभिः रूपशालिनीभिः परि-

हृते भवने स्नानानुलेपनवरभूषणादिभिरावां सम्मान्य विश्रामयामास।

## अथ एकविंशत्यधिकशततमस्तरङ्गः।

इत्येवमुक्त्वा आस्थानवर्तिने देवाय विक्रमादित्याय अनङ्गदेवः पुनः कथयामास। ततः सा सखीजनहृता कृतभोजनं मामब्रवीत् अनङ्गदेव! सर्वं ते कथयामि श्रूयताम्। अहं धनदस्य भ्रातुर्माणिभद्रस्य गेहिनी, दुन्दुभिनाम्नः यक्षराजस्य दुहिता मदनमञ्जरी नाम। साहं सरितां तीरेषु सरोवरेषु शैलेषु उपवनेषु च भर्त्रा सह सुखं अचरम्। एकदाहं प्रियेण समं उज्जयिन्यां मकरन्दाख्यमुद्यानं विहर्तुं गन्ताभूवम्। तत्र दैवात् उषसि एकः अण्डकापालिकाधमः विहाराश्रमसंसुप्तप्रबुद्धो मां पश्यति स्म। स पापः मां दृष्ट्वा कामपरवशः श्मशानं गत्वा होमकर्मणा मन्त्रेण मां भार्यात्वे साधयितुं प्रावर्त्तिष्ट। अहञ्च स्वप्रभावेण तद्विदित्वा भर्त्रे न्यवेदयम्। तेन च स्वायत्ते भ्रात्रे धनदाय तदावेदितम्। धनाध्यक्षेण च गत्वा कमलयोनिर्विज्ञप्तः। स चापि भगवान् चतुर्मुखो ध्यात्वा तमब्रवीत् सत्यमयं कपाली ते भ्रातृजायां हर्तुमुद्यतः। अस्य हि यक्षसाधनमन्त्राणां तादृशी शक्तिरस्ति। तया तु अस्मेनाक्षमाशया विक्रमादित्यः क्रन्दनीयः। स नृपति-

स्तां रक्षिष्यति। एतत् ब्रह्मवचः श्रुत्वा समागत्य मद्भर्त्तां धन-दोऽब्रवीत्। मम च भर्त्ता कुमलयचकिताम्लने मह्यं तदाह स्म। तावच्च स पापात्मा चक्रसिद्धेन मन्त्रेण मामाकृष्टवान्। अहञ्च तेन मन्त्रेणाकृष्टः विवस्त्रा अधिक-पालाद्येर्भीषणं भूतवेष्टितं तत् पितृकाननं प्राप, ददर्श च तत्र तं दुष्टकापालिकं हुताग्निम् अर्चितोत्तानशवा-धिष्ठितम्। स च दर्पमोहितः कापालिकः मां प्रांशा-मालोक्य कथञ्चित् दूरस्थां नदीं स्नातुमगात्। अहञ्च तत्क्षणं ब्रह्मवचनं संस्मृत्य अचिन्तयं किमहं राजानं नाक्रन्दामि, स राजा जातु इहागच्छेत्। इत्येवं चिन्त-यन्ती तमहमुच्चैराक्रन्दितवती। देव विक्रमादित्य! परि-त्रायस्व मां, जगद्रत्नामणे! पश्य बलात् कुलवधूं सतीं माणिभद्रस्य धनदानुजस्य गृहिणीं दुन्दुभितनयां मदन-मञ्जरीं माम् अयं कापालिकाधमः त्वद्राज्ये धर्षयितुमुद्यत इति। इत्याक्रन्दिता एव ज्वलन्तमिव तेजसा कृपाणपाणि-मायान्तं तं महापुरुषं नृपमहमपश्यम्। आगत्य च स मामवदत्, भद्रे! मा भैषीः, निर्वृता भव। शुभे! अहं त्वां कापालिकादस्मात् रक्षामि। को हि मम राज्ये ईदृशमधर्म्यं कर्त्तुमुत्सहेत। इत्युक्ता सः अग्निशिखं नाम वेतालमाजुहाव। स चाहूतः ज्वलनेत्रः प्रांशुरूर्द्ध्वशिरोरुहः समुपेत्यैव तं भूपतिमब्रवीत्, देव! किं करोमि, आमादिशतु भवान् इति। राजाब्रवीत्, एष पारदारिकः पापकृत् कापालिकस्त्वया निहत्य भक्ष्यतामिति। ततः सोऽग्निशिख-स्तस्मिन् शवार्चामण्डलस्थिते श्मशाने प्रविश्य प्रसारित-

भुञ्जानः तम् आयान्तमायातं पलायनपरायणं कापालिकं भुजयोर्गृहीत्वा तमभि भ्रामयित्वा च क्षिप्रं चितावाच्छिद्य तस्य देहं मनोरथपात्रपूर्णयत्। ततः कापालिकं हतं दृष्ट्वा आमिषगर्धिषु भूतेषु आगच्छत्सु यमशिखो नाम कश्चित् दुर्मदो वेतालः समायात्। उपेत्यैव स तत् कापालिककलेवरमगृह्णात्। ततः सोऽग्निशिखः पूर्ववेतालस्तमभाषत, अरे श्रीमतो विक्रमादित्यस्य देवस्यादेशात् मयायं कापालिको निहतः, दुराचार। त्वमस्य कः? एतदाकर्ण्य स यमशिखस्तमब्रवीत्, भ्रातः! तद् ब्रूहि मे, स राजा किंप्रभाव इति। ततः सोऽग्निशिखोऽब्रवीत् न चेत् तत्प्रभावं वेत्सि, तदहं ते कथयामि शृणु।

इह नगर्यां ठाकिनेयो नाम कश्चित् सुधीरः कितवः प्रतिवसति स्म। स कदाचित् कितवैर्द्यूतमायया हृतसर्वस्वः समधिकस्य पणस्य दाने अक्षमतया तैरबध्यत। निर्धनत्वेन दातुमशक्तः तैलगुडादिभिस्ताड्यमानः ग्रावभूतो मृत इवावतस्थे। ततश्च तैः सर्वैः पापैः सभिकैर्नीत्वा जीवतोऽस्मात् प्रतिक्रियामसम्भाव्य महान्धकूपे निचिक्षिपे। स च कितवो ठाकिनेयः तस्मिन्नतिगम्भीरे कूपे भ्रष्टः महान्तौ पुरुषावागतौ ददर्श। तौ च तं पतितं भीतं दृष्ट्वा सान्त्वं अपृच्छतां कस्त्वं? कुतश्च कूपे पतितः? कथ्यतामिति। अथ स द्यूतकरः समाख्याय स्ववृत्तान्तं निजेच च तावपि अपृच्छत् कौ युवां? कुतश्चागताविति। तदाकर्ण्य ताववोचतां, भद्र! आवामस्याः पुरः श्मशानवासिनी ब्रह्मराक्षसी। आवाम् इह पुरि द्वे कन्यके मुख्य-

अन्निसुतामेकाम् अपरां वणिक्सुतां हृतवन्तौ। कश्चिदपि ते कन्ये आवाभ्यां मोचयितुं न शक्नोति स्म। ततश्च देवो विक्रमादित्यस्तत्पितृवल्लभः यत्र ते कन्ये स्थिते, तत्रागात्। आवाञ्च तं नृपं दृष्ट्वा ते कन्यके मुक्त्वा पलायितुमिच्छन्तावपि तत्सकाशात् गन्तुं नाशक्नुवः, अपश्याव च सर्वा दिशस्तस्य तेजसा ज्वलन्तीः। ततः स नृपतिः नौ दृष्ट्वा स्वप्रभावतः प्रबध्नात्, समादिशच्चैवं जातमृत्युभयौ सुदीनावावां वीक्ष्य। पापौ संवत्सरमन्धकूपान्तर्वसतं, मूर्खाभ्यां भवद्भ्यां नैतच्च पुनरपि कार्यम्। यदि करिष्यथस्तदाहं तत्क्षणं निग्रहीष्यामि वाम्। इत्यादिश्य तेन विषमशीलेन राज्ञा आवामस्मिन् अन्धकूपे निक्षिप्तौ, कृपया न निपातितौ। अष्टभिर्दिवसैरस्यावयोः कूपनिवासस्य अवधिः पूर्य्यते, ततो मुच्यावहे। तदेतानि अहानि यदि नौ किञ्चित् किञ्चित् भक्ष्यं ददासि, तदा अमुष्मात् कूपात् त्वामुद्धृत्य वहिः क्षिपावः। यदि चाङ्गीकृत्य उद्धृतो न ददासि भक्ष्यं, ततस्त्वां निर्गतौ निश्चितं भक्षयिष्यावः। इति ताभ्यां ब्रह्मराक्षसाभ्यामुक्तः स कितवस्तथेति प्रतिपद्य ताभ्यां कूपादुदस्यत। स तु कूपादुद्धृतः अन्यथा तदशक्तिमपश्यन् महामांसं पणायितुं निशि श्मशानं प्राविशत्। तत्कालञ्च तत्र तिष्ठता मया गृह्णातु महामांसं कश्चित् विक्रीणेऽहमिति ब्रुवन् स कितवो दृष्टः। ततो मया अहं गृह्णामि, किं मूल्यं मार्गसीत्यभिहिते स्वो कृत्यभावं देहि मह्यमिति सोऽब्रवीत्। मया पुनः वीर! किं करिष्यसि ताभ्यामिति कथिते स कितवः

स्वं स्ववृत्तान्तमुक्ता एवमब्रवीत्, त्वदीयाभ्यां रूपप्रभावाभ्यां तान् मद्वैरिणः कितवान् समाकृष्य ब्रह्मरक्षोभ्यां ददामि। तदाकर्ण्य धैर्य्यतुष्टेन मया तस्मै द्यूतकृते दिनस्तबकमवधीकृत्य स्वौ रूपप्रभावौ दत्तौ। स च कितवः ताभ्यां मदीयरूपप्रभावाभ्यां क्रमात् तानपकारिणः कूपे समाकृष्य ब्रह्मराक्षसभक्ष्यतां नयति स्म। ततः स डागिनेयो द्यूतकारः मया स्वीकृतयोः स्वरूपप्रभावयोः, भयाकुलः मामब्रवीत्, अद्य मया तयोर्भक्ष्यं न दत्तं परमद्य अष्टममहः। तदेतौ ब्रह्मराक्षसौ निर्गत्य मां भक्षयिष्यतः। तदत्र किं मया कार्य्यं वद, त्वं हि मे परमं मित्रमिति वादिनं तमहं संस्तवप्रीत्या अवादिषं भद्र! त्वया ताभ्यां रक्षोभ्यां ते वैरिणः कितवाः खादिताः, अहन्तु तवार्थे तौ राक्षसौ भक्षयामि, तन्मित्र! तौ दर्शय इति। ततस्तेन कितवेन तथेति अहं तदन्धकूपनिकटं नीतः। ततोऽहं यावदशङ्कितः अधोमुखस्तं कूपं पश्यामि, तावत् तेन पापेन कितवेन अर्द्धचन्द्रं दत्त्वाहं तदन्तरे क्षिप्तः। ततः कूपान्तःपतितस्य भक्ष्यबुद्ध्या गृहीतस्य मम ताभ्यां रक्षोभ्यां बाहुयुद्धमवर्त्तत। यदा तौ मम बाहुबलम् अतिवर्त्तितुं न शेकतुः, तदा युवं त्वका कस्त्वमिति तौ मामपृच्छताम् ततो मया डागिनेयवृत्तान्तादारभ्य स्वके वृत्तान्ते कथिते तौ मया मैत्रीं विधाय अवोचताम्, अहो! तव आवयोस्तेषाञ्च कितवानां कीदृशी अवस्था तेन दुरात्मना कितवेन विहिता, येषां मनः न मैत्री, न घृणा, नोपकारः स्पृशेत्, तेषु छलैकचित्तेषु

कितवेषु कीदृशो विश्वासः ? तेषाञ्च साहसं नैरपेक्ष्यञ्च निसर्गजम् । तदत्र रिङ्गाकरालस्य कथा श्रूयताम् ।

पूर्वमस्यामुज्जयिन्यां रिङ्गाकरालो नाम विषमोऽन्वर्थनामा द्यूतकरः निवसति स्म । स नित्यं द्यूते पराजयं लभमानः क्रमेण हृतसर्वस्वोऽभूत् । अथ जयिनोऽपरे सभिकास्तं वृत्तिम्लानं दृष्ट्वा प्रत्यहं तद्वृत्त्यर्थं कपर्दकशतं ददुः । स दुर्भाग्यः तेन अपणात् गोधूमचूर्णं क्रीत्वा दिनात्यये क्वापि कर्परे अम्भसा मर्दित्वा अपूपिकाश्चकार । ततश्च श्मशानं गत्वा निशि चिताग्नौ ताः पक्त्वा महाकालनिकेतनस्य शिवस्य दीपघृताभ्यक्ताः कृत्वा नित्यमभक्षयत् तत्रैव च महाकालदेवागाराङ्गने उपधानीकृतभुजः क्षितौ निशि सुष्वाप ।

एकदा रजन्यां तस्मिन् महाकालनिकेतने मातृमण्डलयक्षादिप्रतिमाः स्फुरन्तीः पश्यतस्तस्य मतिरजायत इह अर्थार्थं युक्त्या किमिति उपायं न करोमि, सिद्ध्येत् भद्रम्, असिद्धे तु का क्षतिः ? इत्यालोच्य ता देवताः, द्यूताय आक्षिपन् अब्रवीत्, एत भोः, युष्माभिः सह इह दीव्यामि । पातयिता यथा सद्यः पणीकृतं ददाति, तथा अपरैरपि सह क्रीडन्निर्जितं दीयते । इति तेनोक्तास्ताः मातरस्तूष्णीं तस्थुर्यदा तदासौ रिङ्गाकरालः स्वयं पणं कृत्वा चित्रा वराटिकाः अपातयत् । अनिषिध्यता कितवेन पातनम् अङ्गीकृतं स्यादिति सर्वत्र द्यूतकृतां स्थितिः सदा प्रचलति । ततश्च स बहुस्वर्णं क्रमेण जित्वा ता देवता जगाद जितं धनं मह्यं यथाभाषितं प्रयच्छत इति तेन कितवेन

असकृदुक्ताः कितवा यदा किमपि नालपन्, तदासौ क्रुधा प्रोवाच, यदि यूयं तूष्णीं स्थिताः मत्पणितं न प्रयच्छथ, तदा अदत्तहारितार्थस्य शिलाभूतस्य तिष्ठतः कितवस्य यत् क्रियते यमदंष्ट्राग्रतीक्ष्णेन क्रकचेन अङ्गपीडनं, तदहं युष्माकं करिष्यामि, न हि कोऽपि अनुरोधोऽस्ति। इत्युक्त्वा यावत् स क्रकचमादाय धावति, तावत् ता देवताः यथोक्तपणार्थितं स्वर्णं तस्मै ददुः। ततश्च स प्रातस्तत् स्वर्णं द्यूते हारयित्वा पुनर्नक्तमेत्य तथैव हठद्यूतेन तस्मात् मातृगणात् अर्थमाजहार। इत्थं प्रत्यहं क्रियमाणे एकदा चामुण्डा देवी, ताः खिन्नमानसा मातृर्जगाद मातरः! द्यूते इयं शैली अस्ति, यथा यः समाहृत त्वम् इतो द्यूतात् निर्गतोऽहमिति ब्रवीति, सः अनाक्षेप्य इति, तस्मात् आह्वायमानं तं तद्देवोक्त्या निरस्यत इति चामुण्डयोक्तास्ता देव्यश्चेतसि तद् दधुः। अथ निशि प्राप्तं देवने कृताह्वानं तं कितवम्, इतो द्यूतात् निर्गताः स्म इति सर्वा देवताः प्रत्यवदन्। इत्थं ताभिर्निराकृतः स दिङ्गाकरालः तत्प्रभुं तं महाकालं विभुमाह्वयते स्म। सोऽपि भगवान् दुरोदरे लब्धावकाशं तं मत्वा निर्गतोऽहं द्यूतादिति प्रत्यब्रवीत्। सखे! अक्षीणभोगात् विषमात् दृष्टमायोर्जितात् दुर्जनात् बत देवा अपि अशक्ता बिभ्यति। इत्थं दुरोदरारम्भकैतवयुक्तिना तेन दिङ्गाकरालेन खिन्नेन एवमचिन्त्यत, अहो द्यूतस्थितिः देवैरपि शिक्षित्वा निराकृतोऽस्मि, तदेतमेव देवेशं शम्भुं शरणं व्रजामि, इति मनसि सङ्कल्प्य पादयोः देवस्य परिगृह्य स्तुवन् तं महा-

कालं व्यजिज्ञपत्, देव! देव्या द्यूतजितेषु इन्दुवृषभकुञ्जर-चर्मसु आनुन्यस्तकपोलं ते, नखाङ्कमासितं नौमि। यस्य इच्छामात्रेण सुरास्तास्ता विभूतीर्दधति, यः निरीहः केवलं जटाभस्मकपालपरिग्रहः, स त्वम् अद्य मन्दपुण्ये मयि कथं सलोभः जातः? यदल्पस्य हेतोर्मामेवं वञ्चयितुमीहसे? कल्पवृक्षोऽपि अधन्यानामाशां न पूरयति खलु, भैरव! भूतविश्वोऽपि मां न बिभर्षि? नाथ! प्रपन्नस्य कष्टव्यसनाविष्टचेतसो मे व्यतिक्रममपि चन्तुमर्हसि। भगवन्! त्वं तावत् नग्नः अहमपि तादृक्, तवाङ्गे भस्म, ममापि तत्, त्वं कपाले पथि भुङ्क्षे, अहमपि तथा तस्मात् दयस्व, आपन्नं मां समुद्धर इत्येवं यावत् स कितवस्तं देवं अभ्युमस्तौत् तावत् स देवः परितुष्य साक्षात्, तमुवाच वत्स! तुष्टोऽस्मि ते, मा तावद्धृतिं क्षथाः, अहं ते भोगान् दास्यामि, त्वमिहैव मदन्तिके आस्व। इति देवादेशात् स कितवस्तस्मिन्नेव देवागारे तस्थौ, बुभुजे च तत्प्रसादादुपनतान् भोगान्।

कदाचित् तत्र महाकालतीर्थे रजन्यां स्नातुमागता अप्सरसो दृष्ट्वा स देवस्तं व्यादिदेश आसां स्नातुं प्रवृत्तानां सर्वासां सुरयोषितां तीरन्यस्तानि वासांसि हृत्वा द्रुतमानय। यावदेताः तुभ्यं कलावतीं न दास्यन्ति, तावदासां वस्त्राणि मा मुचः। एवं भैरवेणादिष्टः स कितवः सत्वरं गत्वा तासाममराङ्गनानां स्नान्तीनां तानि वसनानि अपाहरत्। मुञ्च मुञ्च अम्बराणि, मा अस्मान् दिगम्बराः कार्षीः, इति वादिनीस्ताः हरदत्तप्रभावः प्रोवाच,

तरच्चः, ! यदि यूयं कलावतीं नाम कन्यकां प्रयच्छथ, तदाहं युष्माकं वसतानि विमोक्ष्यामि, नान्यथा। तदाकर्ण्य दुराधर्षं वचः, तच्च तादृशं दृष्ट्वा स्मृत्वा च कलावत्याः शक्रशापं, तास्तथैव प्रतिपेदिरे, ददुश्च तां कलावतीं तस्मै दत्तवासवे रिङ्गाकरालाय अलम्बुषासुतां यथाविधानम्।

अथ तासु अप्सरःसु यातासु असौ कितवस्तया कलावत्या सह देवस्य शम्भोरिच्छया निर्मितावासस्तस्थौ। कलावती च दिवा देवेन्द्रमुपस्थातुं त्रिदिवम् अगात्। रात्रौ तु तं पतिमुपाययौ। कदाचित् सा तं कितवं त्वं मे शक्रशापात् वल्लभोऽसि, इति प्रीत्याब्रवीत्। ततस्तेन कथं ते शक्रशाप इति सकौतुकं पृष्टा सा सुराङ्गना कलावती एवमवादीत्, कदाचिन्मया देवोद्याने सुरान् दृष्टिमात्रोपभोगान् निन्दन्त्या मर्त्त्यभोगाः प्रशंसिताः, तद्विदित्वा देवेन्द्रो मामशपत्, कलावति, ! गच्छ मर्त्त्यलोकं, मर्त्त्येन केनचित् परिणीता मानुषान् भोगान् तेन सह भुक्त्वा विमोक्ष्यसे। तदेवमावयोः समागमो जातः। स्वश्च चिरात् स्वर्गं गमिष्यामि, तव अधृतिर्माभूत्। तत्र हि रम्भा हरेरग्रतः नवप्रयोगं नर्त्तिष्यति, तस्मिंश्च समाप्ते मया तव श्रिये स्थातव्यम्। ततः स कितवः प्रेमदुर्ललितस्तामभ्यधात्, प्रिये ! अहं तत् नृत्यं द्रक्ष्यामि, मामपि गुप्तं तत्र नय। एतदाकर्ण्य सा कलावती तं पतिमवादीत्, नाथ ! कथमेतत् युज्यते ? विदित्वा देवराट् जातु कुप्येत्। एवमुक्तोऽपि यदासौ निर्बन्धमकरोत्, तदा कलावती

स्नेहात् तं नेतुं प्रत्यपद्यत। प्रातश्च प्रभावेण तं कर्णोत्पलान्तरे कृत्वा सा तं कितवं सुरगजशोभितद्वारं नन्दनोद्यानमनोहरं महेन्द्रालयमनैषीत्। रिङ्गाकरालस्तदवलोक्य देवमानी तुतोष, ददर्श च तत्र देवसदसि सुराङ्गनागीतमधुरं रम्भानृत्योत्सवम्। शुश्राव च नारदादिप्रणीतानि सर्वातोद्यानि। प्रसन्ने हि परमेश्वरे किमप्राप्यमस्ति? ततः प्रेक्षणकस्यान्ते तत्रोत्थाय दिव्यच्छागाकृतिर्भाण्डो नर्त्तितुमारब्धवान्। रिङ्गाकरालस्तद् दृष्ट्वा परिज्ञाय व्यचिन्तयत्, अहो एतं पशुमहमुज्जयिन्यामपश्यम्, इह चाद्य इन्द्रस्य पुरतः ईदृशो भाण्डनर्त्तकः दृश्यते, शैतव्यां हि दिव्यगतिर्विचित्रा। एवं चिन्तयतस्तस्य रिङ्गाकरालस्य सः छागभाण्डः नृत्यान्ते शक्रस्थानात् न्यवर्तत। ततः सा कलावती हृष्टा तं कर्णोत्पलसंश्रितं रिङ्गाकरालं स्वस्थानं तथैवानिनाय। ततः स कितवः तं छागाकृतिं नृत्यन्तं भाण्डं दृष्ट्वा हर्षात् देवभाण्डमभाषत, अरे! ममाग्रतो यथा देवराजस्याग्रतो नृत्यसि तथा नृत्य। अन्यथा ते न क्षमिष्ये, तस्मात् नृत्यं दर्शय। तदाकर्ण्य विस्मितश्छागः कुतोऽयं मानुषोऽपि एवं मां जानातीति चिन्तयन् तूष्णीमासीत्। यदा निर्बन्धेनोच्यमानोऽपि सः छागो न ननर्त, तदा स रिङ्गाकरालस्तं लगुडैर्मूर्ध्नि अताड़यत्। ततः सः छागलः शक्रान्तिकं तत्सर्वं मनुष्यकृतं शिरस्ताड़नान्तं न्यवेदयत्। ततो देवराजः तदाकर्ण्य प्रणिधानेन बुबुधे कलावती रम्भानृत्यदर्शनाय रिङ्गाकरालं दिवमनैषीत्, तेन चापराधिना छागनृत्यमपि दृष्टमिति। ततः स

इन्द्रः कलावतीं समाहूय पुनः शशाप, कृत्यार्थमस्य छागस्य येन देहगो भवत्या कृता, रागात् तं मानुषमिहानीतवत्यसि, तदिदानीं तत् गच्छ, नागपुराख्ये पुरे नरसिंहस्य राज्ञः देवागारस्तम्भे शालभञ्जिका भव। इति शपन् शक्रः कलावत्या मात्रा अलम्बुषया कथमपि अनुनीतः एवं शापा-न्तमादिशत् यदा बहुभिरन्यैस्तद् देवसदनं भूमेः समं भविष्यति तदास्याः शापक्षय इति सा अलम्बुषा देवराजसकाशात् शापान्तमवेत्य साश्रुस्तस्यै कलावत्यै शशंस। सापि कलावती विक्लाकरालाय तदावेद्य स्वाभरणं दत्त्वा च तिरोभूय नागपुरे देवागारं गत्वा स्तम्भाग्रपुत्रिकां विवेश।

अथ स विक्लाकरालस्तद्वियोगेन विषादितः न किञ्चित् ददर्श, न शुश्राव, केवलं भुवि लुलोभ मुमूर्च्छ च। अहो! 'रहस्यं मत्वापि मूढेन मया न विवेचितम्? अथवा निसर्गचपलानां मादृशां कुतः संयमः? तदिदानीं विषमो वियोगो मया प्राप्तः। इत्येवं लब्धसंज्ञः स कितवो बहु विललाप। पश्चाच्च चिन्तयामास नायं मे वैक्लव्यस्य कालः। शापान्तहेतोः किं न यते, इत्यालोच्य विचार्य च स परिव्राड्वेशं विधाय साक्षसूत्राजिनजटो अवधूतो नागपुरमभिप्रतस्थे। तस्माच्च पुराद् बहिः अटव्यां चतसृषु दिक्षु निशि स्वैरं चतुरः महारत्नपूर्णान् कलशान् कुत्रचित् देवागाराग्रतः निचखान। इत्थं कृत्वा स कितव स्तत्र नद्यास्तीरे कृतोटजस्तस्थौ। क्रमेण च कृतकेन तपसा ध्यानेन जपेन च तिष्ठन् त्रिसवनं स्नानञ्च कुर्वन् भैक्ष्यं भुञ्जानः महातापसप्रथामवाप।

अथ तत्र क्रमेण राज्ञः श्रुतिपथमायातो राज्ञा तेनाभ्यर्थितोऽपि तदन्तिकं नागमत् । राजा तु तं महातापसं मन्यमानः स्वयमेव तत्सकाशमाययौ । कियन्तञ्च कालं विविधाभिः कथाभिस्तत्र स्थित्वा स्वयं तस्मिन् रात्रि शियासति अकस्मात् विदूरगः शृगालः शब्दमकरोत् । तदाकर्ण्य तापसच्छद्मा स कितवः प्राहसत् किमेतत्, कथं हससीति राज्ञा पृष्टश्च किमनेन श्रुतेनेति तमभाषत । अथ तस्मिन् नृपे निर्बन्धेन पृच्छति स मायी एवमुवाच राजन्! नगरस्यास्य पूर्वतोऽटव्यां अतसीतले रत्नाभरणपूर्णः कलशोऽस्ति, तत् गृहाण इति कृतशस्य मे जम्बूकेनोक्तम् । एवमुक्त्वा कौतुकाविष्टं नृपं तत्र नीत्वा खात्वाच तां भूमिम्, उद्धृत्य च तं कलशं तस्मै ददौ । ततः स राजा तमवलोक्य विस्मितः सञ्जातप्रत्ययश्च तं ज्ञानिनं सत्यवाचं निस्पृहं तापसममन्यत । ततः स्वाश्रमं तमानीय मुहुस्तत् पादयोः नत्वाच सामात्यः सायं तद्गुणान् स्मरन् स्वमन्दिरमगात् । इत्थं क्रमेण स धूर्त्तः शृगालरुतमिषात् नृपं प्रलोभ्य अन्यान् त्रीन् कलसान् अन्याभ्यो दिग्भ्यः अलम्भयत् । ततः स राजा मन्त्रिणः पौराश्च सर्वे तस्मिन् तापसे नितान्तभक्ताः सुविश्वस्ताश्च जज्ञिरे । एकदा राज्ञा देवागारदर्शनाय नीयमानः स कुतापसः आपणे काककृतमश्रौषीत् । तदाकर्ण्य स राजानमब्रवीत् राजन्! काकस्य वचनतः श्रूयते, अत्रैवापणे देवागारायतः भुवि निखातः सद्रत्नपूर्णः कलसोऽस्ति, कस्मात् स न परिगृह्यते ? । तत् काकेनोक्तं तदेहि तं गृहाण । इत्युक्त्वा

तत्र तं नीत्वा तां भूमिं खात्वा च तं रत्नकलसमुद्धृत्य तथैव राज्ञे प्रादात्। ततो राजा अतीव सन्तोषात् स्वयं तं कपटतापसं हस्तेन परिलम्ब्य देवागारं प्रविवेश। तत्र प्रविश्य स तापसः स्तम्भे प्रियया कलावत्या अनुप्रविष्टां शालभञ्जिकां ददर्श। कलावती च सा शालभञ्जिकारूपधारिणी तं पतिं दृष्ट्वा दुःखिता तत्र रोदितुं प्रावर्त्तत। तदवलोक्य सानुगो राजा सविस्मयविषादः तं ज्ञानिनं कूटतापसं भगवन्! किमिति पर्य्यपृच्छत्। ततो विषण्णः विभ्रान्त इव स धूर्त्तः जगाद राजन्! आगच्छ, अवाच्यमपि मया त्वदनुरोधात् वाच्यम्। इति उक्त्वा स नृपं राजधानीं नीत्वा उवाच। राजन्! अस्थाने कुमुहूर्त्ते च त्वया इदं देवागारं कृतं, तृतीयेऽह्नि ते अहितं भविता तस्मात्त्वद्दर्शनात् एषा शालभञ्जिका रोदिति। तत् तव शरीरेण चेत् कृत्यं तदा इदं देवागारमुन्मूल्य द्रुतं स्थानान्तरे सुमुहूर्त्ते देवागारं कुरुष्व। स्वराष्ट्रस्य शरीरस्य शिवं भवतु, अनिमित्तं शमं व्रजतु च। इति तेनोक्तो नृपः भयात् प्रजाः समाज्ञाप्य एकाह्नैव तद्देवगृहं भङ्क्त्वा भूमिसमं व्यधात्। प्रारभत च स्थानान्तरे देवकुलं कर्त्तुम्। अहो! विश्वास्य धूर्त्तैश्छद्मभिः धीश्वरा अपि वञ्च्यन्ते।

अथ स प्रव्राट् धूर्त्तः कृतकृत्यः ततः पलाय्य लिङ्गाकरालः उज्जयिनीं प्रायात्। कलावती च शापमुक्ता मार्गे तं पतिं दृष्ट्वा समाश्वास्य च इन्द्रं द्रष्टुं दिवमगात्। इन्द्रोऽपि तां दृष्ट्वा विस्मितः तन्मुखात् तस्य धूर्तकरस्य

मायां विदित्वा जहास, तुतोष च। ततः सिंहासनस्थं शक्रं बृहस्पतिरब्रवीत् देवराज! कितवा ईदृशा एव सदा विचित्ररूपा भवन्ति।

पूर्वं कस्मिंश्चित् नगरे कुट्टनीकण्टको नाम कपटद्यूत-कोविदः कितवः कश्चित् निवसति स्म। तं परलोकगतं धर्मराजः किलाब्रवीत् कितव! तव स्वपातकैः कल्पं नरकवासो व्यवस्थितः, एकन्तु दिनं दानप्रभावात् ते इन्द्रत्वं सिद्धान्तितञ्च, यतः कदाचित् त्वया एकं सुवर्णं ब्रह्मविदे दत्तं, तत्कथय, पूर्वं त्वं नरकं भोक्तुमिच्छसि वा इन्द्रत्व-मिति। तदाकर्ण्य कितवोऽवादीत् धर्मराज! पूर्वमह-मिन्द्रत्वं भोक्तुमिच्छामि। ततः स धर्मराजेन दिवि प्रहितः कितवः इह एकमिन्द्रमुत्थाप्य देवराज्ये अभ्य-षिच्यत। स च कितवः प्राप्तसुरराज्यः सर्वान् देवान् आधिपत्यतः समादिशत् देवाः! यूयं सर्वान् मम सखीन् वेश्याश्च इहानाय्य सर्वतीर्थेषु सप्तद्वीपवर्त्तिषु दिव्येषु च स्नापयत, सर्वांश्च महीपतीननुप्रविश्य मदर्थं अद्यैव महा-दानानि प्रयच्छत, विविधानि पुण्यानि समाचरत इति। एवमादिष्टाः सुरास्तथैव सर्वं चक्रुः। इत्थं स तैस्तैः पुण्यैः व्रतैर्महादानैश्च विधूतपापराशिः स्थिरामिन्द्रतामवाप। तद्वयस्या वेश्याश्च तेनानायिताः तत्प्रसादात् अमरत्व-मवापुः।

अथ द्वितीयेऽह्नि स्वबुद्धिकौशलेन स्थिरप्राप्तदेवराज्यं तं चित्रगुप्तः धर्मराजाय शशंस। तच्च श्रुत्वा धर्मराजः अहो! वत द्यूतकृता वञ्चिताः स्म इति ब्रुवन् विसिस्मिये।

महेन्द्र। ईदृशाः कितवा इति समाख्याय गुरौ विरते इन्द्रः तं विङ्गाकरालं द्रष्टुं कलावत्या धामनैषीत्। तत्र तस्य बुद्धिधैर्याभ्यां तुष्टः सम्भाव्य च तस्मै कलावतीं दत्त्वा तमात्मनः पार्श्वस्थमकरोत्। स च विङ्गाकरालस्तया कलावत्या सह दिवमधिष्ठाय सुखमवसत्। तदीदृशी द्यूतकाराणां मायासाहसयोर्विचित्रा गतिः।

तस्मात् सखे अग्निशिख! कितवेन भागिनेयेन मायया भवान् यत् कूपे निक्षिप्तः नैतत् चित्रम्। इति ताभ्यां ब्रह्मरक्षोभ्या मभिहितस्तस्मात् कूपात् कथञ्चित् निर्गत्य वाराणसीमगाम्। तत्र च भ्रमन् क्षुधार्त्तः कमपि पथिकं द्विजं दृष्ट्वा धावित्वा च यावत् जिघत्सया गृह्णामि, तावत् स श्रीमन्तं देवं विक्रमादित्यमाक्रन्दति स्म। श्रुत्वैव च तं रुदितं स राजा कुतोऽपि निर्गत्य ज्वलनसन्निभः आः पाप! मा वधीर्विप्रमित्युच्चैराह स्म प्रावर्त्तत च धृत्वा मां शिरश्छेत्तुम्। ततो मां पादपतितं दृष्ट्वा करुणया मुमोच तञ्च द्विजं समाश्वास्य विससर्ज। ततः प्रभृति अहं तदाज्ञाधीन एव विचरामि। किं बहुनोक्तेन, एवं प्रभावोऽसौ देवोविक्रमादित्यः। तदाज्ञया हतश्चायं भण्डकापालिको मया, तदेतत् भक्ष्यं मे, किमत्र त्वयात्मा क्लिश्यते? एवमुक्तोऽपि स यमशिखः तमाक्षिपन् दर्पात् यदा तत् कापालिककलेवरं पाणिना आकर्षति स्म तदासौ विक्रमादित्य आत्मानं प्रकाश्य तमाकृष्य भूमौ पुरुषमालिख्य असिना तत्पाणिं चिच्छेद। तस्मिंश्च पाणौ छिन्ने स यमशिखः तत्कुणपं त्यक्त्वा भयात् पलाय्य प्राणानरक्षीत्। अग्नि-

शिखः तत्प्रसादेन तत्कलेवरं सुखमभक्षयत्। तयोऽहं निर्भया तस्य राज्ञः प्रभावेण तत् सर्वमपश्यम्। देव! त्वत्प्रभावं एवमाख्याय सा यक्षवधूर्मदनमञ्जरी पुनरवदत् अनङ्गदेव! ततोऽसौ राजा मधुरया वाचा। मामिदमभाषत भद्रे! साम्प्रतं कापालिकात् मुक्तासि, भर्त्तृगृहं गच्छ इति। अहञ्च तं भूपं प्रणम्य तस्य प्रत्युपकारं चिन्तयन्ती स्वं गृहमायाता। इत्थं तेन महात्मना मम प्राणाः कुलं भर्त्ता च रक्षिताः। अद्य तु मया ज्ञातं यत् तस्य राज्ञः कृते सिंहलेश्वरेण त्रैलोक्यसुन्दरी स्वयंवरा तनया प्रेषिता, तं विक्रमशक्तिं भवत्प्रभुसामन्तं हत्वा तां हर्त्तुं समत्सरैः सम्भूय रिपक्षैर्मतिः कृता इति। तस्मात् शीघ्रं गत्वा एतत् विक्रमशक्ते विदितं कुरु। येन सः अवहितः तेषां प्रतीकारे तिष्ठति, अहञ्च यत्नं करिष्यामि, यथा स विक्रमादित्यस्तानरीन् हत्वा विजयमाप्स्यति। एतदर्थं मया त्वं निजमायया इहानीतः येन ससामन्तस्य तस्य राज्ञः सर्वमेतत् वदिष्यसि यदि लेशतोऽपि त्वत्प्रभोरुपकारस्य निष्कृतिं कर्त्तुं शक्नुयामिति।

देव! एवं वदन्त्यां तस्यां ते कन्यके सहमागते, ये पूर्वमावाभ्यां मृगेण क्रीडन्त्यौ दृष्टे। तयोश्च निषस्णयोरहं तां यक्षीमपृच्छं देवि! कन्यके इमे के? सौवर्णोऽयं मृगश्च कः? ततः सा यक्षिणी विहस्य मामभाषत अनङ्गदेव! यदि ते कौतुकं तदाकर्णय। पुरा किल द्वावसुरौ वीरौ चण्डनिचण्डनामानौ दुर्जयौ प्रजापतेः प्रजासर्गविघाताय अतीव उपद्रवमारभेते। ततस्तद्दर्शनजातरोषो विधाता तयो-

विनाशकाम इमे कन्यके जगदुभयाद्भुतरूपशोभिते विनिर्मिते। इहैव तौ इमे कन्ये मद्भुते हर्तुमुद्यतौ परस्परमीर्ष्यया बाहुयुद्धेन निधनं गतौ ततो ब्रह्मा धनाध्यक्षाय त्वया योग्याय कस्मैचित् इमे दातव्ये इति उपदिश्य समर्पयत्। धनदोऽपि मद्भर्त्रे मम पतिरपि मह्यं तथैव समर्पयत्। मया च श्रीविक्रमादित्य एव अनयोर्वरश्चिन्तितः, यतोऽसौ देवावतारः उचितश्चानयोरिति। तदेवं कन्यके इमे श्रुते, साम्प्रतं मृगस्य आख्यानं शृणु।

अस्ति शचीपतेर्जयन्तो नाम प्रियस्तनयः। स कदाचित् शिशुः विमानेन सुराङ्गनाभिः विहरन् भुवि मृगपोतकैः क्रीडतो राजपुत्रानद्राक्षीत्। ततः स शैशवात् क्रीडा-मृगशिशोरर्थे एकाकी पितरं उपेत्य प्रारोदीत्। तत्पिता च शतक्रतुः तदर्थं विश्वकर्मणा हेमरत्नमयं सजीवं मृगमकारयत्। ततः स जयन्तस्तेन मृगेण चिक्रीड ननन्द च। स च हरिणशिशुर्नाके विहरन् तस्थौ।

अथ कालेन इन्द्रजिता रावणसूनुना दिवं पराजित्य स मृगः अपहृत्य लङ्कां नीतः। कियता च कालेन सीताहरणमन्युना प्रदीप्ताभ्यां वीराभ्यां रामलक्ष्मणाभ्यां तयोः रावणेन्द्रजितोर्हतयोः लङ्कायामभिषिक्तस्य राक्षसेन्द्रस्य विभीषणस्य मन्दिरे सोऽयमद्भुतो हेमरत्नमयो मृगोऽस्थित्। विभीषणश्च कदाचित् भर्तृबान्धव्यात् उत्सवे गृहान् नीतायै मह्यं सम्मानयन् मृगममुमुपहारमदात्। सोऽयं दिव्यो मृगशिशुरिदानीं मद्गृहे वर्त्तते। मया च त्वत्प्रभोरेवायमुपायनार्थमभिलषितः। इत्येवं यावत् सा

यक्षिणी मे कथां कथयति, तावत् कमलिनीकान्तो भानु-मानस्तमगात् । ततस्तया समादिष्टोऽहं सन्ध्याविधेरन-न्तरं तस्या एव धाम्नि अनेन सिंहलेश्वरदूतेन सह शयितो-ऽप्यतिष्ठम् । प्रातश्च प्रबुद्धौ आवां यावत् पश्याव तावत् तां विक्रमशक्तेस्तव सामन्तस्य अनीकिनीं प्राप्तमात्मानं दृष्ट-वन्तौ । ततः तस्यां यक्षिण्यास्तत् प्रभावाख्यानं विचिन्त्य विक्रमशक्तेः पार्श्वं सविस्मयौ आगच्छाव । स च मां दृष्ट्वैव कुशलं पृष्ट्वा च यावत् सिंहलेश्वरसन्देशं श्रोतु-मिच्छति, तावत् ते यक्षिणीप्रेषिते दिव्यकन्यके युगपोतश्च सपरिच्छदाः सयक्षबलाः सम्प्राप्ताः । तान् दृष्ट्वा दुष्ट-भूतादि मायाशङ्की स विक्रमशक्तिः संशयात् किमेतदिति मां पृष्टवान् । ततोऽहं आमूलतः सर्वं यक्षिणीवृत्तान्त-मवर्णयम् । तत्र यक्षीमुखात् श्रुतं विपक्षीयनृपाणां सम्भूय चेष्टितं सर्वमवोचम् । ततः स ते उभे दिव्यकन्यके सम्मान्य प्रहृष्टः संग्रामसज्जामकरोत् । देव ! क्षणेन च सैन्य-तूर्यमहारवोऽश्रावि । अदर्शि च सम्लेच्छं महत् प्रति-राजबलम् । ततश्चास्मत्सैन्यशत्रुसैन्ययोः अन्योन्यदर्शन-क्रोधादभिधावितयोस्तुमुलः संग्रामः प्रावर्त्तत । ततो यक्षीनिसृष्टैस्तैर्यक्षबलैरन्यैश्च अस्मदीयबलैस्तदरिसैन्यं व्यह-न्यत । सैन्यानां रेणुनिवहैराकीर्णं खड्गधारानिरन्तरं सशूरगर्जितं घोरं रणदुर्दिनमुदगात् । अस्माकं विजय-लक्ष्मीश्छेदेन उच्छलद्भिर्निपतद्भि द्विषतां शिरोभिः कन्दुकै-रिव क्रीड़न्ती व्यशोभत । क्षणेन च ते राजानः हत-शेषा भग्नसैनिकास्तत्सामन्तस्य विक्रमशक्तेरेव कटकं

शरणं गताः प्रणता अभूवन्। सर्वभूमीपते! इत्थं त्वया सद्वीपासु सर्वासु दिक्षु विजितासु म्लेच्छेषु च उत्सादितेषु सा यक्षिणी स्वेन भर्त्रा सहिता प्रकटीभूय तं विक्रमशक्तिं माञ्च वदति स्म। मया यदेतत् भवत्प्रभोः सेवामात्रं विहितं तदावेद्य स वीरो मद्वचसा विज्ञाप्यः। त्वया एते देवनिर्मिते कन्यके परिणेतव्ये अयञ्च मृगः प्रसादेन लालनीयः। मदीयञ्चैतत् प्राभृत मिति रत्नसञ्चयं दत्त्वा सा यक्षिणी स्वेन भर्त्रा सह सपरिवारा तिरोऽभूत्। अन्येद्युश्च सा सिंहलेश्वरसुता मदलेखा भूयसा परिवारेण विभवेन च सह आगात्। ततस्तेन विक्रमशक्तिना प्रहर्षात् प्रत्युद्गम्य प्रणतेन सा स्वटकं प्रावेश्यत ततो द्वितीयेऽह्नि तां ते च उभे कन्यके तञ्च हेमरत्नमयं मृगं त्रिजगन्नेत्रकौतुकं गृहीत्वा सिद्धकार्य्यः स विक्रमशक्तिः देवपाददिदृक्षया इहागन्तुं राजभिः सह प्रचलितः। स च सामन्तः इह निकटं प्राप्तो वर्त्तते। देवस्य आवेदनार्थं आवां प्राक् प्रेषितौ। तद् देव! सिंहलेन्द्रस्य तस्या यक्षिण्याश्चानुरोधात् तान् कन्याहरिणान् नृपांश्चान्यान् देवः प्रत्युद्यातु। इति तेनानङ्गदेवेनोक्तः नृपिति विक्रमादित्यः तत् यक्षिणीरचनं दुःसाहसमपि कृतं स्मरन् तत्प्रत्युपक्रियां श्रुत्वा वह्नितत् इति लज्जामवाप महाशया हि बहु कृत्वापि स्वल्पमेव मन्यन्ते। हृष्टश्च सिंहलाधीशदूतयुक्तं तमनङ्गदेवं हस्त्यश्वरत्नजातैः पुरस्कारैरपूरयत्।

अथ तं दिनं नीत्वा तस्याः सिंहलेश्वरदुहितुस्तयोश्च प्रजापति कन्यकयोः प्रत्युदगमनाय महीपतिः सैन्यैर्गजा-

स्ववाहनैः सह उज्जयिन्याः समुच्चचाल। प्राप च विक्रमशक्त्यधिष्ठितं तद्बलम्।

## अथ द्वाविंशत्यधिकशततमस्तरङ्गः।

ततः स विक्रमादित्यः स्वसेनान्या विक्रमशक्तिनाधिष्ठितं जयसैन्यमवाप्य अप्रागतेन तेन प्रणतेन सराजकेन सहितः सबलस्तत् प्रविवेश। ततः प्रतीहारिणा आख्याते अयं गौड़ः शक्तिकुमारः, अयं कर्णाटो जयध्वजः, अयं लाटो विजयवर्मा, अयं काश्मीरः सुन्दरः, अयं सिन्धुराजो गोपालः, अयं विन्ध्यबलो भिल्लराजः, अयं पारसीकाधिनाथो निर्मूकः, प्रणमति, इति निवेदितान् ससामन्तान् सैनिकान् स सम्राट् सम्मानयामास। ततः स नृपतिः विक्रमशक्तिं पुरस्कृतां सिंहलेन्द्रसुतां ते च दिव्यकन्यके तच्च हेमरत्नमयं मृगं यथार्हमभ्यनन्दयत्। ततश्चान्येद्युः तैः सह सानुगः राजा विक्रमादित्यः पुरीमुज्जयिनीं प्रत्याजगाम।

अथ राजसु ससम्मानं विसृष्टेषु स्वदेशान्, जगदानन्दिनि च वसन्तोद्दारसमये प्राप्ते, लतासु च पुष्पाभरणैर्मण्डलमिव कुर्वतीषु भृङ्गेषु च सुललितध्वनिषु सङ्गीतं तन्वतीष्विव मलयानिलाश्लिष्टासु नृत्यन्तीष्विव वनराजिषु, पिकेषु च कलरवेषु मङ्गलानि पठत्स्विव, स विक्रमादित्यः शुभेऽहनि तां सिंहलेश्वरकन्यां ते च दिव्यकन्यके परि-

चिन्वे। सिंहलेश्वरकन्याया ज्येष्ठो भ्राता सहागतः सिंहवर्मा तस्यां विवाहवेद्यां महान्तं रत्नसञ्चयमदात्। सा च यक्षिणी मदनमञ्जरी तत्क्षणमागत्य तयोर्दिव्यकन्ययोरसंख्यान् रत्नराशीन् ददौ। देव! अहं त्वत्सुहृत्तस्य भ्रातृत्वं गन्तुं किं शक्ता? एतच्च शक्तिं दर्शयितुं न मया किञ्चित् कृतं. तदनयोः कन्यकयोः अस्य च हरिणस्य त्वया प्रसादः कार्य्य इति उक्त्वा तेन राज्ञा पूजिता च तिरोऽभूत्। ततः स राजा ता भार्य्यास्ताश्च सप्तद्वीपां महीं प्राप्य अकण्टकं राज्यं शशास। सुखितश्च तदा वसन्ते उद्यानभूमिषु, ग्रीष्मे सरसां जलेषु धारायन्त्रगृहेषु च, वर्षासु उच्चमृदङ्गरवहारिषु अन्तः पुरेषु शरदि हृदयानन्ददायिषु शीतांशुधौतेषु कालागुरुसुगन्धिषु हर्म्येषु हेमन्ते शिशिरे च वासवेश्मसु हिमनिर्मुक्तेषु विहरन् कालमतिवाहयाञ्चकार। तस्येदृशस्य राज्ञः कालेन नगरस्वामि नामा एकश्चित्रकरो विश्वासभूमि रासीत्।

स तु त्र्यहेण द्व्यहेन च एकैकां पुत्रिकां अङ्कयित्वा राज्ञे प्राभृतं ददौ। एकदा उत्सववशात् लिखितामपि पुत्रिकां विस्मृत्य स चित्रकरः राजसकाशं अगत्वा यावत् समाकुल आस्ते, तावत् दूरादागतः कोऽपि पान्थोऽकस्मात्त माजगाम। तस्य च करस्थिता मेकां पुस्तिकां दृष्ट्वा स चित्रकरः यावत् कौतुकात् तां समुद्घाटयति, तावत् तत्र चित्रस्थितां पुत्रिकामद्भुतरूपां दृष्ट्वैव नीत्वा राज्ञे प्राभृतं ददौ। नृपतिस्तां दृष्ट्वैव साश्चर्य्य मगादीत् भद्र! नेयं तव निर्मिता, प्रत्युत विश्वकर्मणेयं चित्रिता।

मानुषो हि कुत एवं रूपं लिखितुं पारयति ? तदाकर्ण्य चित्रकृत् यथातत्त्वं राज्ञे न्यवेदयत् । ततः स राजा अनन्यदृष्ट्या तां पुत्त्रिकामपश्यत् । अपश्यच्च स्वप्ने तद्रूपां कामपि कन्यकां द्वीपान्तरे । यावत् स नृपः तया समुत्सुकया समुत्सुकः स्वप्ने सङ्गमं भजते, तावत् निशाचरयामिकेन स प्रबोधितः समभवत् । ततश्च राजा प्रबुद्धः तत्स्वप्नसमागमसुखभङ्गात् जातक्रोधो यामिकं तं नगर्या निरकाशयत् । क्व चासौ पान्थः, पुस्तिका च तस्य क्व ? चित्रपुत्तिकावेयं क्व ? सजीवायाश्चास्याः स्वप्ने दर्शनं क्व तदेषा देवमाया सा कन्यास्तीति मां ज्ञापयति न चाहं तत् द्वीपं जानामि, तत् कथं नु तां प्राप्नोमि ? इत्येवं चिन्तयन् स राजा सर्वत्रारतिमान् केवलं स्मरज्वरेण भृशमनवरतं जज्वाल । अथ स ससन्तापः भद्रायुधेन प्रतीहारेण कारणं परिपृष्टो रहसि तं जगाद सखे ! शृणु वच्मि ते रहस्यं त्वं हि मे रहस्यविद् विश्रम्भभूमिश्च । त्वया सम्यगुपलक्षितं, यासौ चित्रपुत्तलिका तेन चित्रकरेण मे दत्ता तामद्भुतरूपां चिन्तयन्नहं सुप्तः स्वप्ने दृष्टवानस्मि, यथा वारिधिमुत्तीर्य्य अतिसुन्दरं नगरमेकं प्राप्य प्रविष्टोऽस्मि । तत्र प्रविष्टश्च बह्वीः सायुधाः कन्यकाः मया दृष्टाः । ताश्च मां दृष्ट्वा जहि जहि इति उच्चैः कलरवमकुर्वन् । ततः ससम्भ्रमा कापि तापसी मामेत्य निजं गेहं प्रवेश्य च सदयं प्राब्रवीत् पुत्र ! पुरुषद्वेषिणीयं राजपुत्री मलयवती नाम यदृच्छया विहरन्ती इतः प्राप्ता । असौ दृष्टमात्रं हि पुरुषं कन्याभिर्घातयति । तत्तव रक्षार्थं त्वं मया स्वगृहं प्रवे-

ष्ठित:। इत्युक्त्वा सा तापसी मां सद्य: स्त्रीवेशं व्यधात्। अथापि तास्ता: कन्यका अवध्या इति तत् विसोढ़म्। यावच्च तत्रैव प्रविष्टां तां सकन्यां राजपुत्रीं पश्यामि, तावत् सैव चित्रस्था इयमिति व्यचिन्तयं धन्योऽहं यत् चित्र-लिखितामिमां दृष्ट्वा पुनश्च साक्षात् प्राणसमां पश्यामीति। सा च राजपुत्री तावत् तां तापसीं कन्यावेशेन मया सहितां दृष्ट्वा, दृष्टोऽस्माभि: प्रविष्ट: कश्चिदत्र पुमानित्य-पृच्छत्। सापि तापसी मां प्रदर्श्य कुत: पुमान्? प्राघु-णिका मे स्वसु: सुतेयं स्थिता इति प्रत्यवादीत्। तत: सा राजपुत्री स्त्रीरूपमपि मां वीक्ष्य पुरुषद्वेषं विस्मृत्य सद्य: स्मरशरजर्जरिताभवत्। तदानीं लब्धच्छिद्रेण कामेन शरै: सर्वेष्वङ्गेषु कीलितेव किमपि चिन्तयन्ती विह्वला कण्टकितसर्वशरीरासीत्। क्षणेन च सा राजकन्यका व्याजहार भद्रे! यदीयं ते स्वसृसुता, तदा ममापि एषा किं न प्राघुणिका? तदागच्छतु मद्गृहं अर्चितामिमां प्रेषयिष्यामि। इत्युक्त्वा सा मां पाणौ आदाय स्वं मन्दिर-मनैषीत्। अहञ्च लब्धावकाशस्तया सह वृद्धतापस्यानु-मतस्तत्रागाम्। ततोऽहं तत्र ताभि: कन्यकाभिरन्योन्य-विवाहादिविनोदनै: क्रीडन्त्या तया सह सुखमवात्सम्। सा तु मद्गतेक्षणा क्षणात् मां पार्श्वात् न [illegible] त्। यत्र नाहं, तत्र सा कांचन क्रिया नारोचत

अथ ता: कन्यकास्तां राजपुत्रीं वधूं मा [illegible] वरं विधाय विवाहमावयोर्व्यधु:। आवाञ्च कृतोद्वाहौ [illegible] वासकं प्रविष्टौ। सा तु राजसुता विश्रब्धा मां तत्र कण्ठे सम-

शङ्कीत्। मया तु तत्कालमात्मानं प्रकाश्य सा भृशमालिङ्गिता। तदा च सा सिद्धमनोरथा मां दृष्ट्वा लज्जावनता क्षणं तस्थौ। अथ यावदेनां गतत्रपां सुरतार्थं प्रवर्त्तयामि, तावदहं दुरात्मना यामिकेन प्रबोधितोऽस्मि। तदिदानीं भद्रायुध! चित्रे स्वप्ने च दृष्टया तया मलयवत्या विना नाहं जीवितुमुत्सहे। इत्युक्तवन्तं राजानं सत्यस्वप्नमवेत्य स भद्रायुधः प्रतीहारः तमाश्वास्य एवमभाषत देव! यदि कृत्स्नं स्मर्य्यते तदा सम्यक्वृत्तान्तो देवेन पटे लिख्यताम्। अत्र तावदुपायो मया निरूप्यते। इति भद्रायुधेनोक्तः स राजा सर्वं तद्वृत्तान्तं पटे लिखति स्म। स च प्रतीहारस्तं चित्रपटमादाय नवं मठं कारयित्वा तत्र भूमौ तं चित्रमलम्बयत्। अकारयच्च तत्र मठे दूरदेशागतानामागन्तूनां वन्दिनां षड्समाहारं वस्त्रालङ्कारदानञ्च। यश्चित्रस्थमिदं पुरं वेत्ति, स सपदि यदि तदावेदयति तदासौ विशेषेण पुरस्कार्य्य इति मठवर्त्तिनां सर्वेषां घोषणामदाच्च।

इत्थं निदाघवरे मल्लिकामोदवासिते छायानिषस्रपान्थजनमनोरमे समतिक्रान्ते अम्भोदश्यामो गुरुगम्भीरगर्जितः केतकोद्दामदर्शनः प्रावृट्कालमत्तद्विपः प्रादुरासीत्। तस्मिंश्च काले तस्य विक्रमादित्यस्य नृपतेर्विरहाग्निः पौरस्त्यपवनेद्ध इव वृद्धिमगात्। तत्कालेच्च वाराङ्गनानामेव वाचः शुश्रुविरे हारलते! इमं हारं देहि, आलि! चन्दनैः सिञ्च, पत्रलेखे!·पद्मिनीपत्रैः शिशिरं शयनं विरचय, कन्दर्पसेने! कदलीदलैः सञ्चालय मारु-

तमिति। क्रमेण च विद्युद्विषमो घनागमः प्रशाम, न पुनस्तस्य राज्ञो विरहज्वालो मदनज्वरः। ततश्च क्रमेण फुल्लाम्बुजमुखी सकाशकुसुमस्मिता शरत् कलहंसस्वनैः पथिस्थितानां दूरवर्त्तिनां पान्थानां प्रतिनिवृत्त्यर्थं प्रियाः प्रियसमागमाय युज्यन्तामिति समादिशन्तीव समागात्।

एतस्याञ्च शरदि एकदा दूरागतः कश्चित् वन्दी सम्बरसिद्धिर्नाम तत्र प्रतीहारकारिते मठे भोजनार्थी एकाकी समायात्। स च सम्बरसिद्धिस्तत्र मठे कृतभोजनः गृहीतवसनयुगलः भित्तौ तं चित्रपटं व्यलोकयत्। तत्र चित्रस्थं तत् नगरं विभाव्य सविस्मयः स जगाद अहो! केनेदमालिखितं पुरम्? येनेदं लिखितं, दृष्टं तेनैव, नापरेण केनचित् इदं लिखितमिति। तदाकर्ण्य मठाधिकारिणा तत् भद्रायुधस्य निवेदितम्। तेन च श्रुत्वा स्वयमभ्येत्य स वन्दी राजान्तिकं नीतः राज्ञा च किं त्वया नगरमिदं दृष्टमिति पृष्टः स सम्बरसिद्धिरवादीत् प्रभो! दृष्टं मया तत् मलयपुरं नाम महापुरं भुवं भ्रमता वारिधिमुत्तीर्य्य द्वीपमध्यगतम्। तत्र च नगरे मलयसिंहो नाम नरपतिरस्ति। तस्य च मलयवती नाम निरुपमा सुता वर्त्तते। सा तु पुरुषद्वेषिणी कदाचित् स्वप्ने विहारनिर्गतं कमपि महापुरुषमैक्षत। तेन चालोकितमात्रेण तस्या स पुरुषद्वेषदुर्ग्रहः सभय इव तत्क्षणात् मनसो निरगात्। ततः सा स्वप्ने स्वभवनं नीत्वा तेन च विवाहं विधाय वासवेश्म प्रविवेश। यावच्च तत्र तेन सुरतोत्सवं सेवते, तावत् सहसा निशाक्षयात्

प्राबुध्यत। ततः सा तं प्रियतमं स्मरन्ती विरहाग्निना ज्वलन्ती कामपि गतिमदृष्ट्वा, शयने एव स्वस्ताङ्गी परं न्यपतत्, मूर्च्छेव, भूताविष्टेव, ग्लाताभिभूतेव पृच्छतः कस्यापि परिजनस्य नोत्तरं किञ्चिदपि ददौ। ततः पित्रा मात्रा च निर्बन्धतः पृष्टा अतिकृच्छ्रतः सखीमुखेन स्ववृत्तान्तं शशंस। ततः सा कृताश्वासा प्रतिज्ञामकरोत् यदि षड्भिर्मासैस्तं नाप्नोमि, तदा अग्निं विशामीति। तदिदानीं पञ्च मासा गताः, साम्प्रतं किमस्या भावि केन ज्ञायते? इत्थं वृत्तान्तस्तत्र पुरे मया परिज्ञातः। इत्थं तेन सम्बरसिद्धिना संवादमुक्ते ज्ञातार्थनिश्चयं हृष्टं राजानं भद्रायुधोऽभ्यधात् प्रभो! सिद्धं कार्य्यं स देशो हि सनृपः प्रभोरधीनः। तत्तत्र गम्यतां यावत् षष्ठो मासो नात्येति। इति तेनाभिहिते स राजा तं सम्बरसिद्धिं भूरिणा धनेनार्च्चयित्वा अग्रे कृत्य च रविरश्मिषु सन्तापं घनेषु पाण्डुतां सरित्तोयेषु च कार्श्यं विन्यस्य निजं, निरातङ्कः तदैव महता सैन्येन वृतः दयितां प्रति समुत्सुकः प्रतस्थे। क्रमेण च गत्वा तीर्णसागरः यावत् तत्पुरं प्राप्नोति, तावत् तत्रागतः कोलाहलाकुलं जनमद्राक्षीत्। एषा मलयवती षण्मासावधिकायां प्रतिज्ञायां पूर्णायामप्राप्तदयिता अद्य राजसुता वह्निं प्रवेक्ष्यतीति तत्रत्यात् जनात् पृष्टात् अश्रौषीत्। उपागाच्च तं देशं यत्र तस्याः चिता रचिता। तद्दर्शनादपसृते जने सा राजपुत्री सहसा तं नृपमागतं दृष्ट्वा, सोऽयं मे प्राणेश्वरः स्वप्नपरिणेता प्राप्तः, तत् शीघ्रं तातस्याख्याहीति सखीराह स्म। ततश्च ताभि-

गत्वा तथोक्ते सोऽस्याः पिता भूपतिः सञ्जातहर्षः गतपरितापश्च सविनयं तं विक्रमादित्यमभ्यगात्। तत् कालञ्च तेन सम्बरसिद्धिना अवसरज्ञेन वन्दिना उत्क्षिप्य भुजौ अपव्यत जय निजतेजसा प्रदग्धम्लेच्छगण! जय देव सप्तसागरसीममहीमानिनीनाथ! जय विजितसकलपार्थिववितत शिरोविधृतातिगुर्वाज्ञ!, जय कृपानिधे! वीर विक्रमादित्य इति। इत्थं तेन स्तुते वन्दिना, स राजा मलयसिंहस्तमागतं विक्रमादित्यं बुद्धा पादयोरग्रहीत्। विवेश च कृतातिथ्यस्तेन सह स्वमन्दिरम्। अथ स राजा शुभेऽहनि तस्मै भूभुजे विक्रमादित्याय तां सुत्युमुक्तां ददौ मेने च आत्मानं कृतार्थम्। विक्रमादित्यश्च यथा स्वप्ने तथा चित्रे तथैव साक्षात् तां प्रियां मलयवतीं प्राप्तामालक्ष्य तदङ्गं शैलसुताकान्तप्रसादकल्पलतायाः फलममन्यत। अथ स विक्रमादित्यः तां वधूं मलयवतीं परां निर्वृतिमिवासाद्य वारिराशिं समुत्तीर्य्य च सोत्कलिकां सुचिरविरहमिव, तैस्तैः प्राभृतप्राणिभिर्भूभृद्भिः प्रणम्यमानः स्वां नगरीमुज्जयिनीं प्रत्याजगाम। तत्र तस्य प्रभावमालक्ष्य को न विसिस्मिये को न प्रजहर्ष, कश्च वा महोत्सवं न चकार।

# अथ त्रयोविंशत्यधिकशततमस्तरङ्गः ।

अथास्य विक्रमादित्यस्य कथान्तरे राज्ञी कलिङ्गसेना सपत्नीरेवमभ्यधात् । "राज्ञाऽनेन मलयवत्यर्थे यत्कृतं न तदद्भुतं, सदायं देवैः भुवि विषमशील इति प्रथितः । अहं किममुना बलादवष्टभ्य न परिणीता मद्रूपां पुत्रिकां दृष्ट्वा अनङ्गवश्यतां गतेन ? । एतन्निमित्तं कार्पटिकेन या या कथा दिवसे तस्मिन् ममाख्याता तां वः कथयामि निशम्यताम् ।

कथमहमविधिना राज्ञा परिणीतास्मीति दुःखितां मामेत्य स हि कार्पटिकः समाश्वास्य एवमब्रवीत् देवि ! मा स्म मन्युं कृथाः, परेण प्रेम्णा परिणीतासि संरम्भात् तदत्र कथां शृणु । अहं कार्पटिको भूत्वा प्रभोः सेवां कुर्वन् अटव्यां दूरात् एकदा महान्तमेकं दंष्ट्राविसङ्कटमुखं तमालश्यामकान्तिं शशिकलां खादन्तं रूपिणं कृष्णपक्षमिव क्रोडमपश्यम् । ततः मया सत्यवाचा तथैवेत्य अभिहितः राजासौ समाकृष्टशरासनः सपदि मृगयायां निरगात् । प्राप्य च मृगवनं व्याघ्रान् मृगांश्च घ्नन्तं तमहमावेद्य अमुं वराहं प्रादर्शयम् । स च राजा तमद्भुताकारं शूकरं मत्वा रत्नाकराख्यमुच्चैःश्रवसः सुतमश्वमारुरोह । मध्याह्ने हि भानुर्मुहूर्तं व्योम्नि तिष्ठति, तत्कालधारणेन

तदश्वाः स्नानपानयोर्मुच्यन्ते हि। एकदा रविरथाश्वस्नुः उच्चैःश्रवा राज्ञः अश्वां दृष्ट्वा तस्यां तं तुरङ्गमजीजनत्। तस्मिन् वाताश्वे समारूढोऽसौ भूपतिः तं महान्तं वराहं धावन् महतीं भूमिमत्यागात्। सोऽपि शूकरः तस्य दृष्टि-पथात् तस्मादपि उच्चैःश्रवःसुतात् अधिकजवः प्रनष्टोऽभूत्।

अथ राजा तमनासाद्य दूरोज्झितपरिच्छदः मामेव-मन्वागतं दृष्ट्वा पर्य्यपृच्छत् भद्र! अपि जानासि वयं कियतीं भूमिमागताः? तदाकर्ण्याहं देवि! तं राजानं प्रत्यवादिषं प्रभो! योजनानां शतानि त्रीणि आगताः स्म इति ततो राजाब्रवीत् कथं त्वं पद्भ्यामागत इति। इत्थं विस्मितेन राज्ञा पृष्टोऽहमब्रुवं देव! अस्ति मे पाद-लेपः, येन एतावन्तमध्वानमतिक्रान्तोऽस्मि। तदत्र वृत्ता-न्तमाकर्णय पूर्वमहं भार्य्यावियोगार्त्तः तीर्थयात्राप्रस-ङ्गात् सायं पथि किमपि देवायनं प्राप्य तत्र निशां नेतुं प्रविष्टः अन्तरे स्त्रियमेकामपश्यम्। सा च व्यात्तास्या मां दृष्ट्वा ग्रसन्तीव अभ्यधावत्। ततो मयापि असिधेनुमाकृष्य सभ्रूभङ्गमभिभर्त्सिता सा प्रत्यभिधाविता। ततः सा सौम्य-वपुर्भूत्वा गतवैकृता मामब्रवीत् भद्र! अहं वन्याभिधाना यक्षी, तव धैर्य्येण तुष्टास्मि। तदिदानीं ब्रूहि किन्ते प्रियं करवाणि इति। एवं वादिनीं तामहं यक्षिणीमवोचत् यदि परितुष्टासि, तत् कुरुष्व यथा अक्लेशेन मया स-र्व्वाणि तीर्थानि अटामि इति। एवं मयोक्ते सा यक्षिणी मह्यं पादलेपमदात् तीर्थानि भ्रमितुम्। तेन च पाद-लेपबलेनाद्य त्वमनुधावितः। एतेन च बलेन प्रत्यहमस्य-

मटव्यामेत्य फलानि भुक्ता उज्जयिनीं पुनर्गत्वा ते सेवां करोमीति। देवि! इति मया विज्ञप्तो राजा प्रसन्नया दृष्ट्या मां योग्यमनुयायिनमन्तरमन्यत। भूयश्च मयासौ नृपतिर्विज्ञप्तः देव! यदि प्रभुर्भुङ्क्ते तदाहं सुस्वादूनि फलानि आनयामि इति। राजा तु नाहं भोक्ष्ये, न मे किञ्चिदुपयुक्तमत्र अवाप्यते, त्वं तावत् किञ्चित् भुङ्क्ष्व, परिश्रान्तोऽसीति मामादिशत्। ततस्तत्र कस्मादपि कार्पटिकात् प्राप्तं किमपि फलं यावदहं भक्षयामि तावदेव सहसा अजगरः समभवम्। देवि! तदा च मां सहसा अजगरीभूतं दृष्ट्वा स विषमशीलो राजा सविषादविस्मयः एकाकी च वेतालं भूतकेतुमस्मरत्। स तु वेतालः स्मृतमात्रागतः प्रणम्य तं राजानमब्रवीत् देव! किमर्थं स्मृतोऽस्मि, आदिशतु तावत् महाराज इति। राजावदत् भद्र! ममेमं कार्पटिकं सहसा अजगरीभूतं निजां प्रकृतिं प्रापय इति। वेतालोऽवादीत् देव! नास्ति ममेदृशी शक्तिः। शक्तयो हि नियताः, वारि वैद्युताग्निं किं निहन्ति? ततो राजाब्रवीत् तर्हि पल्लीमिमां यामि, यदि भिल्लेभ्यः कोऽप्युपायः सम्भवेदिति समालोच्य सवेतालो राजा तां पल्लीमगच्छत् तत्र तं साभरणं दृष्ट्वा चौराः शरवर्षाणि किरन्तः समवारयन्। स च भूतकेतुः राजादेशात् तेषां पञ्चशतानि अभक्षयत्। शेषाः पलाय्य गत्वा च सेनापतये तत् प्रावोचन्। स च केशरी नाम सेनापतिः सबलः क्रुधा अज्वलत्। ततः कस्यचित् भृत्यस्य प्रत्यभिजानतो मुखात् राजायं विक्रमादित्य इति बुद्ध्वा

स सेनापतिरेत्य तं पादयोर्जग्राह। ततः स राजा निवेदितात्मानं प्रह्वं तं प्रत्यभिनन्द्य कुशलं पृष्ट्वा च एवमभाषत मम कार्पटिकः एकस्मात् कार्पटिकात् वने फलं प्राश्य भुक्त्वा अजगरतां गतः, वद्‌दाराय युक्तिं कुरु। एतत् राजवचनमाकर्ण्य स सेनापतिरवादीत् देव! अनुगामिने मत्पुत्राय अस्मै तं दर्शयत्विति। ततः सवेतालः तत्पुत्रः एत्य मां ओषधीरसनस्येन पूरयन् सद्य एव मानुषं व्यधात्। ततश्च वयं हृष्टा राजान्तिकमुपागच्छाम। राजा तु तेनोद्धृतं पादानतं मामबोधयत्। स च सेनापतिः केशरी अस्माभिरन्वितो तं राजानमभ्यर्थ्य निजं गृहमनैषीत्। अपश्याम च वयं तस्य सदनं शवरीवृतं, दन्तिदन्तचितोत्तुङ्गभित्ति, वासांसि शिखिपिच्छानि, हारान् मुक्ताफलमयान्। यत्र स्त्रीणां मण्डनं मातङ्गमदनिस्यन्दः। तत्र सेनापतेरस्य भार्य्या मृगमदामोदवासा मुक्ताद्यलङ्कृता स्वयं राज्ञः परिचर्य्यामकरोत्। अथ स्नातभुक्तो राजा तदा तदात्मजान् वृद्धान् सेनापतिञ्च तरुणं दृष्ट्वा पर्य्यपृच्छत्। सेनापते! मम इदं तावदाश्चर्य्यं त्वयोच्यतां त्वं तावत् तरुणः, त्वत्पुत्रास्तु कथममी वृद्धा इति। तथा पृष्टः स शवरेन्द्रोऽब्रवीत् देव! महती एषा कथा, यदि कौतुकं तत् श्रूयताम्।

पुराहं चन्द्रस्वामीति विप्रः मायापुर्य्यामवसम्। सोऽहं जातु पितुराज्ञया काष्ठाहरणाय वनमगाम्। तत्र मे कोऽपि कपिश्चीरं दत्त्वा मम्भं मार्गं प्रदर्शयन् अतिष्ठत्। अहन्तु तस्य कपेराशयं बुद्ध्वा तत्प्रदर्शितेन मार्गेण प्रस्थितः

ऽभूवम्। स च मर्कटः अग्रतो मम प्रयाति स्म। ततश्च स दूरं गत्वा जम्बूवृक्षमधिरोह। अहञ्च तत्पृष्ठे लताजालबद्धे दृत्तदृष्टिर्लताजालबद्धाङ्गीं कामपि वानरीमपश्यम्। एतदर्थमनेनाहमानीत इति बुद्ध्वा अहं तं वृक्षमारुह्य परशुना तं वलयपाशं छित्त्वा तां वानरीममोचयम्।

अथ तौ वानरदम्पती वृक्षादवतीर्य वृक्षादवतीर्णस्य मे पादौ जगृहतुः। ततः स कपिः तां मे पादलग्नां वानरीं स्थापयित्वा कुतश्चित् दिव्यं फलमानीय मह्यमदात्। तदादाय इन्धनादिकं गृहीत्वा चाहं गृहं गत्वा भार्य्यया सह तत् दिव्यं फलमभक्षयम्। तस्मिंश्च भुक्त एव सभार्य्योऽहमजरोऽरोगश्चाभवम्।

ततस्तत्रैवास्मदीये देशे दुर्भिक्षविप्लवः समभवत्। तदाक्रान्तश्च जनो इतस्ततश्चलितः। देव! अहं दैवादिमं देशं क्रमात् प्राप्तः। तदात्र काञ्चनदंष्ट्राख्यः शबराधिप आसीत्। तत्राहं शस्त्रमुपादाय तस्य भृत्यतामगमम्। ततः स काञ्चनदंष्ट्रः तेषु तेषु आयोधनेषु माम् अग्रयायिनं दृष्ट्वा परितुष्टः सैनापत्ये अभिषिक्तवान्। सोऽपि मया अनुपमभक्त्या प्रभुराराधितः। ततः सः प्राप्तकालः मह्यमेव निरपत्यः राज्यमदात्। इहस्थस्य च मे सप्तविंशतिरब्दानां शतानि अतीतानि, तत्फलभक्षणात् न मे जरास्ति। इत्थं स्वोदन्तमाख्याय स शैशरो भिल्लराजः सविस्मयं तं राजानं भूयो व्यजिज्ञपत्। देव! तदा मया वानरात् यत् फलमवाप्तं जरादोषनाशनम् अद्य ततोऽपि समधिकं लब्ध-

पादपद्मदर्शनं फलं प्राप्तम्। तस्माद् देव! मम गृहागमने योऽनुग्रहो मयि प्रदर्शितः, तेनैव साहसमाश्रित्य अभ्यर्थये मम क्षत्रियायां भार्य्यायां समुत्पन्ना कन्यकैकास्ति रूपेण निरुपमा मदनसुन्दरी नाम, देवादृते तत्कन्यारत्नं नान्यत्र शोभते, तदहं देवाय प्रच्छामि, यथाविधि उद्वहस्व, प्रभो! दासोऽस्मि, सदा ते अनुगतः स्थास्यामीति तेनाभ्यर्थितो राजा तथैवाभ्यमन्यत। परिणिनाय च शुभे लग्ने तां तस्य कन्यकाम्। स च भिल्लराजः शतानि मुक्ताकस्तूरि-प्रभृतीनां भारान् प्राभृतानि तस्मै राज्ञे प्रादात्। ततः स राजा सप्तरात्रं तत्रोषित्वा तया मदनसुन्दर्य्या सह उज्जयिनीं प्रति भिल्लसैन्यैरनुगम्यमानः प्रतस्थे।

अत्रान्तरे मृगयागते राज्ञि अश्वापहृते उद्विग्नमस्मद्बलं विषण्णं दृष्ट्वा प्रतीहारो भद्रायुधः समभ्यधात् अलं वो विषादेन, न चिरादेव वः प्रभुरायाति। नास्य दिव्यप्र-भावस्य किमपि अत्याहितं भवेत्। किं न स्मरथ? सो-ऽस्माकं प्रभुः पातालात् रूपाढ्यां नागकन्यां तथा गन्धर्वा-धिपकन्यां तारावतीं परिणीय एकाकी समागत इति एव-मुक्ता तेन प्रतीहारिणा भद्रायुधेन, समाश्वासिता ते सर्वे तस्मिन्नटवीद्वारे राजमार्गावलोकिनस्तिष्ठन्ति स्म। राजापि स्पष्टमार्गेण शबरसैन्यानुगम्यमानः तया मदनसुन्दर्य्या सह तुरंगारूढ़ः वेतालेन तया च सार्द्धं पूर्वदृष्टस्य तस्य वराहस्य दिदृक्षया तत् वनमविशत्। प्रविष्टस्य च तस्य राज्ञः पुरतः स वराहः प्रादुरभूत्। राजा च तं दृष्ट्वैव पञ्चभिः शरैरवधीत्, हतस्य च तस्य वेतालेन धावित्वा

विदारितादुदरात् सहसा एकः सुभगः पुमान् निरगात्। ततो राजा विस्मयात् यावत् तं को भवानिति पृच्छति, तावत् जङ्गमोऽद्रिरिव तत्र कश्चित् वनद्विपः समागात्। राजा तु आपतन्तं तमारुष्टं कुञ्जरेन्द्रं दृष्ट्वा एकेन शरेण मर्म्माहतमपातयत्। तस्यापि निहतस्य तस्मात् वेताल पाटितादुदरात् दिव्यः कश्चित् पुरुषः, कापि दिव्या सर्वाङ्गसुन्दरी नारी च निरगात्।

अथ प्रष्टुकामं राजानं स वराहोदरनिर्गतः पुमान् स्वोदन्तं प्राब्रवीत् देव! शृणु वच्मि वृत्तान्तम्। आवामुभौ देवकुमारौ अयं नाम्ना भद्रः अहं शुभः। आवां भ्रमन्तौ चैकदा ध्यानस्थितं कण्वं मुनिं दृष्ट्वा गजशूकरयोः रूपं कौतुकेन कुर्वन्तौ मोहात् त्रासितवन्तौ। स तु महर्षिः प्रणिधानेन आवयोश्छलमवेत्य शपतिस्म रे दुराचारौ! अटव्यामीदृशावेव भवतमिति, ततश्चावाभ्यामनुनीतोऽसौ विक्रमादित्यदेवेन कृतौ मुक्तिमवाप्स्यथ इति शापान्तमकरोत्। ततश्चावां गजशूकररूपिणौ त्वयाद्य मोचितौ, स्त्रीतु एषा स्वोदन्तं स्वयमेव वक्ष्यति। अस्मिंश्च शूकरदेहे गजदेहे च त्वया स्पृष्टे तव दिव्ये कृपाणचर्म्मणी भविष्यत इति उक्त्वा स दिव्यः पुमान् द्वितीयेन सह तिरोऽभूत्। ते च क्रोड़द्विप कलेवरे राजकरस्पृष्टे सद्य एव खड्गचर्म्मणी समुद्भूताम्।

ततः सा स्त्री स्ववृत्तान्तं पृष्टा एवमब्रवीत् देव! अहमुज्जयिन्यां धनदत्तनाम्नो वणिक्पतेर्भार्य्या एकदा हर्म्यतलसुप्ताहमनेन दन्तिनागत्य निगीर्य्य च इहानीता,

न चास्यास्तः तदा पुमानभूत् भिक्षोदरात्तु मया सह एष पुमान् निर्यात इति। एवमुक्तवतीं तां दीनां ... राजाब्रवीत् भद्रे ! धीरा भव, त्वां ते भर्तृगृहं प्रापयामि मद्वरीयेन समं निर्भया गच्छ। इत्युक्त्वा वेतालेन तां मदनसुन्दर्य्यै समर्पयत्।

अथ वेताले प्रत्यागते तत्र कानने अकस्मात् प्रभूत-परिच्छदे द्वे राजकन्ये दृष्टे। ततो राजा मां प्रेष्य तत्ता-महत्तमात् परिजनात् ते कन्ये आनाययामास। कुतः के एते कन्यके इति राज्ञा पृष्टास्ते परिजना अभाषन्त।

अस्ति सर्वसम्पदां निकेतनं कटाहाख्यं द्वीपम्। तत्रान्वर्थनामा गुणसागरो नाम नृपतिरध्युवास। तस्य महादेव्यां गुणवती नाम निर्म्मातुः धातुरेव आश्चर्य्य-बुद्धिदायिनी सुताजनिष्ट। सिद्धैश्च तस्याः सप्तद्वीपपतिः पतिर्भवितेति समादिष्टम्। ततस्तत्पिता राजा मन्त्रिभि-रमन्त्रयत राजा विक्रमादित्य एवास्या मे दुहितुर्योग्यो वरः तत्पाणिग्रहणायैव एनां तत्सकाशं अहं प्रेषयामि। इति सम्मन्त्र्य जलधौ प्रवहणे सपरिच्छदां सधनां तां समारोप्य सुतां व्यसृजत्। अथ सुवर्णद्वीप समीपागतं तत् प्रव-हणं सराजकन्यं सधनं मत्स्येन केनचित् महता न्यगीर्य्यत। स च महामत्स्यः समुद्रतरङ्गेण तस्य सुवर्णद्वीपस्य संलग्न-रोधसि क्षिप्तः समभवत्। तमालोक्य तत्रत्या जना नानाप्रहरणा धावित्वा व्यापाद्य च तं महामत्स्यं तस्यो-दरं मपाटयन्। ततश्च तस्मात् तत् जनपूर्णं महत् प्रव-हणं निरगात्। एतं वृत्तान्तमाकर्ण्य तद्द्वीपभूपतिः

सविस्मयस्तत्रागात्। स च राजा चन्द्रशेखरो नाम गुणसा-
गरस्य भूपतेः श्यालकः प्रवहणस्थितात् जनात् यथवतत्त्वं
विदित्वा तां गुणवतीं भागिनेयीं गृहीत्वा समाश्वास्य च
राजधानीं प्रवेश्य च आनन्दात् महोत्सवं व्यधत्त।

अथान्येद्युः स भूपतिः स्वसुतां चन्द्रावतीं प्राक् विक्र-
मादित्याय दातुं सङ्कल्पितां तया गुणवत्या सार्कं प्रभूत-
द्रव्यपरिच्छदां शुभे मुहूर्त्ते प्रवहणमधिरोप्य प्रास्थापयत्।
ते इमे कन्ये तीर्णजलधी क्रमात् प्रक्रामन्त्यौ इह प्रामे
अनयोश्चायं परिवारसमुदायः। इह प्रामांशात्मात्
क्रोड़वारणौ अभ्यधावतां सुमहान्तौ। ततोऽस्माभिरेवमा-
क्रन्दितं देवस्य विक्रमादित्यस्य स्वेन धर्मेण लोकान् पाल-
यतः स्वयंवरे इमे कन्यके आगते इति तदाकर्ण्य तौ क्रोड़-
वारणेन्द्रौ सुव्यक्तया गिरा अवोचतां धीरा भवत, भीर्नास्ति
वः, इहैव तं राजानमचिरात् द्रक्ष्यथ इत्युक्त्वा तौ गज--
क्रोड़ौ दिव्यौ क्वापि अविदितौ गतौ इत्युक्ते तैर्मन्त्रिवरैः
अयं स राजा इति तानहं मवादिषम्। ततस्ते पाद-
पतितास्तस्य कृतार्था आसन् समर्पयंश्च ते कन्यके प्रहृष्टे
गुणवती-चन्द्रावत्यौ। राजापि वेतालं मदनसुन्दर्य्या सार्द्ध-
मिमे अपि गच्छतामिति समादिदेश।

देवि! ततः स राजा तेन वेतालेन मया च सहितः
उत्पथेनैव प्रायात्। गच्छताञ्चास्माकं वने रविरस्तमगात्।
तस्मिंश्च काले अस्माभिर्मुरजध्वनिरश्रावि। कुतोऽयं मुर-
जध्वनिः श्रूयते इति राजनि पृच्छति स वेतालोऽब्रवीत्
देव! अत्र देवकुलं विद्यते। तत्र विश्वकर्म्मणा दिव्यकौतु-

ष्टलं निर्मितम्। प्रभो! सन्ध्यायामत्र एष मुरजरवः श्रूयते इत्युक्तवान् स वेतालः स च राजा मह्यं कौतुकात् तत्रागच्छाम। प्रविशाम च तुरगं द्वारि संयम्य। अपश्याम च तत्र अर्चितं तार्क्ष्यरत्नमयं महत् लिङ्गं, तदग्रे च उदग्रदीपकं प्रेक्षणार्थम्। तत्र दिव्यरूपा वराङ्गनाश्चतुर्विधेन गानगान्धर्वयोनिना नादेन सुचिरं नृत्यन्त्यः प्रेक्ष्यन्ते स्म, तत्र प्रविश्य इतोऽपि सुमहदाश्चर्य्यं दृष्टं स्तम्भस्थाश्च पुत्रिकाः स्वतः लयमनुसृत्य नृत्यन्ति स्म चित्रस्थाः पुरुषा गायना वादकाश्च दृष्टाः। तदवलोक्य राजनि विस्मिते स वेतालोऽभ्यधात् देव! मायेयं विश्वकर्मकृता अक्षया, सततं सन्ध्ययोरुभयोरेष व्यापारो भवति। इति तेनोक्ते तत्रान्तर्भ्रमन्तः वयं तत्र एकस्यां दिशि सविशेषां रूपाढ्यां पुत्तलिकामपश्याम। राजा तु तां विलोक्यैव तल्लावण्यविमोहितः शून्य इव अन्तरात्मना क्षणं स्तम्भोत्कीर्ण इवाभवत्। अब्रवीच्च चेदहम् अनेन रूपेण सजीवामङ्गनां न पश्यामि, तस्मै राज्येन जीवितेन च किम्? तदाकर्ण्य स वेतालस्तमवादीत् देव! नैतत् दुरासदं कलिङ्गसेना नाम कलिङ्गाधिपतेः सुतास्ति। तां दृष्ट्वा रूपकारेण तद्रूपघटनाप्रेप्सुना कृतेयं शालभञ्जिका। तत् प्रभो! उज्जयिनीं गत्वा कलिङ्गनृपतिं तां कन्यां प्रार्थयस्व वा विक्रमेण हर। इति वेतालवचनं तदा हृदि ध्यात्वा कथञ्चित् तां रात्रिं नीत्वा तस्मात् प्रदेशात् प्रातरुदचलत्। प्रस्थितञ्च तं राजानम् अशोकवृक्षतलस्थितौ द्वौ भव्यौ पुरुषौ सहसा समेत्य प्राणमताम्। कौ युवां कुत आगतौ चेति

राँज्ञा पृष्टयोस्तयोरेकः जगाद देव ! श्रूयतां कथयामि ।

अहं धनदत्तो नाम, उज्जयिन्यां वणिक्सुतः, सोऽहं कदाचित् भार्य्यया सह हर्म्यतले प्रसुप्तः । प्रातश्च प्रबुध्य यावत् पश्यामि तावत् सा मे भार्य्या तत्र नास्ति, नापि अन्येषु प्रासादोपवनादिषु, न च तस्याश्चित्तमन्यादृक्, ईदृशो मे प्रत्ययः यदि साध्वी स्यां तदा इयं माला कदाचित् न म्लायात् इत्यसौ तया मे माला दत्ता, अम्लानैवाद्यापि वर्त्तते । तन्न जाने, सा क्व याता, वा भूतादिना क्वापि नीता इति सञ्चिन्तयन् चिन्वन् आक्रन्दन् विलपन् रुदन् अहं तद्विरहाग्निज्वलितो निराहारः अतिष्ठम् । अथ बान्धवैराश्वासितः कथञ्चित् कृताहारः नितरां दुःखितः ब्राह्मणान् भोजयन् देवागारे एव स्थितिमकरवम् । तत्र कदाचिदयं विप्रः पथि श्रान्तः मामभ्यगात् । मया च यथायथं स्नानाहारादिना विश्रामितः कुतस्त्वमिति भुक्तोत्तरं पृष्टश्च वाराणसीसमीपस्थात् ग्रामादस्मीति प्रत्यवादीत् । ततश्च भृत्याख्यातमद्दुःख एषः मामब्रवीत् मित्र ! उद्वेगिना त्वया आत्मा अवसादितः । व्यवसायी हि दुष्प्रापमपि प्राप्नोति । तदुत्तिष्ठ सखे ! तव तां भार्य्यामन्विष्यावः, अहं ते सखास्मि, कथं सान्विष्यते ? यतो दिङ्मात्रमपि न ज्ञायते, इत्युक्तवन्तं मामेष प्रीत्या भूयोऽब्रवीत् सखे ! मा मैवं केसटः किं प्राक् असम्भाव्यसमागमां रूपवतीं भार्य्यां न प्राप ? तथा चात्र तां कथां शृणु ।

पुरासीत् पाटलिपुत्रनगरे महाधनसम्पन्नः केसटो नाम ब्राह्मणसुतः काम इव रूपवान् । स सदृशीं भार्य्यां

प्रेप्सुः पित्रोरविदितः गृहात् निर्गत्य तीर्थानि बभ्राम। क्रमेण च तानि तानि तीर्थानि भ्रान्त्वा नर्मदातीरं प्राप्तः कदाचित् महान्तं जन्ययात्रागतं जनं ददर्श। तन्मध्यादेको वृद्धो द्विजवरः तं केसटं सम्भाष्य सप्रणयं रहसि प्राह स्म वत्स! त्वत्तः किञ्चिदर्थमर्थये, तच्च लीलासाध्यं यदि मम मनोरथः पूर्य्यते, तदा तदहं ते वच्मि। तदाकर्ण्य केसटोऽब्रवीत् आर्य्य! शक्यं ब्रवीषि चेत्, तन्निश्चितं मया ते उपकृतिः कार्य्या। ततो वृद्धो द्विजः प्रोवाच वत्स! शृणु, अस्ति मे सुतः, स च सुरूपाणां भवानिव विरूपाणामग्रणी दन्तुरः चिपिटघ्राणः कृष्णः कोटरलोचनः पृथूदरः वक्रपादः, शूर्पकर्णपटः। तादृशस्यापि तस्य कृते स्नेहात् कृतरूपाभिवर्णनात् ब्राह्मणात् रत्नदत्ताख्यात् कन्यका मया याचिता, सा च रूपवती नाम कन्या पित्रा मत्पुत्राय दातुं प्रतिश्रुता। सोऽद्य तयोः पाणिग्रहः। तदर्थञ्च वयमत्रागता एते। परन्तु दृष्टे मत्सुते स सम्बन्धी सुतां नैव दद्यात् तदेषः आरम्भोऽस्माकं वृथा स्यात्, तदत्रोपायं चिन्तयता मया त्वं दैवात् प्राप्तोऽसि, तद्भवान् इदं मे वाञ्छितं साधय। त्वमस्माभिः समागत्य तां कन्यां परिणीय च मत्पुत्राय अद्य प्रयच्छ, त्वं हि वध्वा अनुरूपः। तदाकर्ण्य तं तथेत्युक्तवन्तं केसटमादाय स वृद्धो द्विजः नौभिर्नर्मदां तीर्त्वा पारं ययौ। विशश्राम च एकं पुरं प्राप्य बहिः। तावदर्कोऽपि आकाशपथिकः अस्तमुपागात्। ततश्च ध्वान्ते प्रसर्पति स केसटः अप उपस्पृष्टुं गतो घोरमेकं

सुप्तिं राक्षसमद्राक्षीत्। भक्षयामि अद्य त्वां क्व मे यास्यसि केसट! इति वादिनं तं राक्षसं स केसटोऽब्रवीत्। भद्र! मा तावत् मां भक्षयेः, अहं पुनस्त्वामुपेष्यामि ब्राह्मणस्य निश्चितं प्रतिज्ञातं कार्यं निर्वाह्य। तदाकर्ण्य स राक्षसः शपथं कारयित्वा तं केसटं मुमोच। सोऽपि तज्जन्यवनं प्रप्रायात्।

ततः स वृद्धविप्रस्तं वरमश्वनेनालङ्कृत्य आदाय. वर-यात्रिकैः समं तत् पुरं प्रापत्। प्रावेशयच्च सज्जितवेदिकं विविधातोद्यनादितं तत् रत्नदत्तगृहं तं केसटम्। केसटश्च स तां रूपवतीं पितृदत्तमहाधनां कन्यां विधिना उप-येमे। स्त्रीजनश्च तत्रत्यः अनुरूपौ बधूवरौ दृष्ट्वा भृशं ननन्द। सा च रूपवती तत्सख्यश्च तं वरं दृष्ट्वा सर्वा एव जातमन्मथा बभूवुः। स तु केसटस्तदा विषादेन विस्म-येन च समाक्रान्तहृदय आसीत्।

अथ रात्रौ शयनीये चिन्तासक्तं पराङ्मुखं तं प्रियं दृष्ट्वा सा रूपवती व्याजसुप्तिकामकरोत्। ततश्च निशीथे स केसटः तां सुप्तां मत्वा गृहात् निर्गत्य सत्यं पाल-यितुं राक्षसस्यान्तिकमाययौ। सापि रूपवती उत्थाय स्वैरम् अनुपलक्षिता सकौतुका पतिव्रता तं भर्त्तार-मन्वियाय। स च राक्षसः प्राप्तं तं केसटं दृष्ट्वा जगाद साधु भोः केसट! महासत्त्वोऽसि, पुरं पाटलिपुत्रं अपिता च त्वया पवित्रीकृतः, तदायाहि तावत् त्वां भक्षयामि। तदाकर्ण्य सहसा सा रूपवती सहसोपेत्य इदमभ्यधात् मा खाद, खादिते त्वय्यस्मिन् पत्यौ का मम गतिर्भवेदिति।

ततश्च रक्षसा भिक्षा ते गतिरित्यभिहिते सापि तं जगाद महासत्त्व ! को मे अनाथायाः स्त्रिया भिक्षां दास्यतीति । ततश्च राक्षसेन यो न ते भिक्षां याचितो दास्यति तस्य शतधा शिरो विदलिष्यतीति अभिहिते साब्रवीत् तर्हि त्वमेव मे भर्त्तृभिक्षां देहि इति । ततोऽसौ राक्षसो भिक्षामददत् तत्क्षणं विदलितशिराः पपात अथ सा पतिव्रता रूपवती तच्चरित्रातिविस्मृतं तं केसटमादाय स्वमन्दिरमागात् निशां च व्ययासीत् ।

ततः प्रभाते तत् कृताहारं जन्यवनं बध्वा सह प्रस्थाय नर्मदातीरमवाप । ततो रूपवतीं बधूं सानुगां नावमारोप्य स वृद्धद्विजः स्वयमन्यां नावं आरुरोह । आरोपयच्च तं केसटं पृथक् नावि आभरणानि स्वीकृत्य कृत्वा च नाविकैः सह संविदम् । ततः स द्विजः बध्वा जन्येन च समं पारं तीर्त्वा ययौ । स तु केसटः तैर्दासैर्नदीमध्येन दूरं निन्ये तत्र महति प्रवाहे नावं तञ्च केसटं क्षिप्त्वा ते वृद्धद्विजात् प्राप्तबहुधना बाहुभिर्नर्मदां तीर्त्वा ययुः । केसटस्तु सनौकोऽपि उत्तरङ्गया नद्या वातवशादम्बुधौ न्यस्तः ऊर्मिणा तटं नीतोऽभूत् । तत्र चायुषः शेषत्वात् स समाश्वास्य व्यचिन्तयत् अहो ! द्विजेनानेन मे प्रत्युपकारः कृतः, अथवा तेनैव दस्युनिर्धर्ममुक्तेना किं नाख्याता, यः परपरिणीतया भार्य्यया पुत्रं युनक्ति । इति संचिन्तयन् स [illegible]कूलस्तिष्ठति, तावत् विचलत्खेचरीचक्रा क्षपा [illegible] । स केसटः तस्यां विनिद्रः तूर्य्ये यामे दिशि [illegible] कलकलं श्रुत्वा पुरः

खात् पतन्तं सुभगमेकं पुरुषमद्राक्षीत् । ततः स केसटस्तस्तं चिरादविकृतं विभाव्य को भवानिति पप्रच्छ । स च पुमान् तमब्रवीत् भद्र ! त्वं तावत् अग्रतः, को भवानिति ब्रूहि ततोऽहं वक्ष्यामि । तदाकर्ण्य केसटस्तस्मै स्वं वृत्तान्तं सर्वमवर्णयत् । ततः स पुरुषोऽवादीत् तर्हि त्वं मे तुल्यावस्थोऽसि । तदिदानीं स्ववृत्तान्तं ब्रवीमि शृणु ।

अस्ति वेणानदीपारे रत्नपुरं नाम पुरं । तत्राहं कन्दर्पनामा धनिपुत्रो गृही द्विजातिः । सोऽहं प्रदोषे तोयार्थी वेणां नदीमवातरम् । तस्याञ्च स्खलित्वा वारिप्रवाहेण हृतो रात्र्या तयैव दूरं नीतोऽभवम् । प्रभाते च आयुर्बलाच्च कथञ्चित् कच्छगतः तटस्थ तरुशाखावलम्बेन रोधसि समुत्तीर्य्य कस्यचिदश्वत्थतरोरन्तिके स्थितं शून्यं महदेकं मातृदेव गृहमपश्यम् । तत्र च प्रविश्य अन्तः स्वतेजसा स्फुरन्तीः मातृर्दृष्ट्वा शान्तभयोऽहं प्रणम्य स्तुत्वा च व्यजिज्ञपन् भगवत्यः ! अद्य मे शरणागतस्य परित्राणं कुरुध्वम् । इति विज्ञाप्य नदीवेगपरिश्रान्तस्य तत्र विश्राम्यतः शनैः स वासरोऽपि अतिचक्राम ।

अथ ताराम्थिमाला ज्योत्स्नाभूतिसिता शशिशुभ्रकपाला रौद्री निशा तापसी समभ्यगात् । तत्कालञ्चात्र ज्ञातवानस्मि, तस्मात् मातृगणान्तरात् योगिनीग्रामः निर्गत्य परस्परमभाषत सख्यः ! अद्य चक्रपुरे चक्रमेलके अस्माभिर्गन्तव्ये, इह श्वापदाकीर्णे अस्य ब्राह्मणस्य रक्षा का ? तदेष तत्र स्वाप्यतां यथास्य शुभं भवेत्, पुनश्चानेष्यामः यतोऽयमस्मान् शरणं गतः । इत्युक्त्वा खेन मां

नीत्वा अलङ्कृत्य क्वापि पुरे कस्यापि आढ्यद्विजस्य गृहे निधाय ता योगिन्यः प्रस्थिताः। तत्र च उद्वाहाय सज्जितां कामपि कन्यकामपश्यम्, अशृणवञ्च दिवालग्नो निर्णीतःजन्यबलञ्च न प्राप्तं तदानीमपीति। ततस्तत्र स्थितं दिव्यं वरवेशं मां विलोक्य अयं तावत् वरः प्राप्त इति सर्वे जना अजल्पन्। ततो मां वेदिं नीत्वा अलङ्कृतां सुतामानीय सपुरोहितो गृहपतिर्यथाविधि तां कन्यां मह्यमदात्। स्त्रियश्च तत्रत्याः दिष्ट्या अनुरूपवरप्राप्तिरस्याः सुमनसः जातञ्च सफलं सौन्दर्य्यमित्यन्योऽन्यं ब्रुवन्ति स्म। ततः कृते विवाहे तया सुमनसा नाम बध्वा सह महद्भिरुपचारैः सुखितः प्रासादे सुप्तवानस्मि।

अथ ता योगिन्यः रात्रेः पश्चिमे यामे तस्मात् चक्रमिलकादागत्य स्वयुक्त्या मां हृत्वा नभ उदपतन्। नभसा च यान्तीनां तासां मन्त्रिद्वीपु भिरन्याभिः साकं प्रवृत्तयुद्धानां हस्तादिहाहं प्रभ्रष्टः। न च तत् नगरं वेद्मि यत्र सा सुमना मया परिणीता, न च जाने किमिदानीं भविष्यति। इत्येषा विधिना दत्ता या मम दुःखपरम्परा, सा अद्य त्वत् समागमात् सुखायैव सम्पन्ना इति वादिनं तं कन्दर्पं स केसटः प्रत्यवदत् मित्र! मा भैषिः, इदानीं योगिन्यस्ते न प्रभवन्ति, अस्ति तादृशी शक्तिः मे, या न केनापि प्रतिहन्तुं शक्यते। सहैवावां भ्रमिष्यामः, अवश्यं विधिः श्रेयो विधास्यति। एवमन्योऽन्यं वदन्तयोः सा सा निशा व्यतीयाय।

अथ प्रातः प्रयातौ तौ अम्बुधिमुत्तीर्य्य क्रमात् भीमपुरं नगरं प्रापतुः। तत्रासीत् रत्ननदी नाम कापि सरित्। तौ तत्र नदीतीरे कलरवं श्रुत्वा आपूरिततटं समुद्रवेलया चिरं कायमहत्तया मां सार्थिभिर्बद्धं नानाशस्त्रकरैर्जनैः पाट्यमानं मत्स्यं ददृशतुः। तस्य पाट्यमानस्य उदरात् कापि वराङ्गना निरगात्। सा तु साश्चर्य्यैर्जनैर्दृश्यमाना भीता तटं शिश्रिये। ततस्तां वीक्ष्य कन्दर्पोऽसौ हृष्टस्तं केसटमभाषत वयस्य! सेयं मे सुमना या मया परिणीता। न जाने अस्या मत्स्योदरे कथं वासः, तत्तूष्णीम् इह तिष्ठावः यावद् व्यक्तिर्भवेत्। तथेति केसटेनोक्ते तत्रावस्थितयोस्तयोः सा सुमनास्तत्रत्यैर्जनैः का त्वं किमेतदिति पृष्टा कष्टेणावादीत् अहं रत्नाकरपुरवासिनो जयदत्तनामकस्य द्विजवरस्य सुता सुमना नाम। साहं भव्येन केनचित् ब्राह्मणपुत्रेण निशि परिणीता। तस्यामेव रात्रौ सुप्तायां मे स पतिः क्वापि गतः। यत्नात् अन्विष्टोऽपि पित्रा नासौ कुतोऽपि समासादितः। ततोऽहं तद्वियोगाग्निशान्तये नद्यां पतिता निगीर्णा चानेन मत्स्येन संप्राप्ता च विधिवशादिह। इति वादिनीं तां जनमध्यतः निर्गत्य यज्ञस्वामी नाम कश्चिद्विप्रः समाश्लिष्याब्रवीत् एहि एहि पुत्रि! त्वं मे भगिनीदुहितासि, अहं यज्ञस्वामी नाम तव मातुः सोदरोऽस्मि। तदाकर्ण्य सा मुखमुद्घाट्य सुमनास्तं मातुलमवेक्ष्य प्रत्यभिज्ञाय च सविनयं पादयोः परिजग्राह। क्षणमात्रं स्थि त्वत्रावादीत् मातुल! काष्ठानि मे देहि, आर्य्यपुत्रविही-

नाया मे श्रग्निं विना नान्या गतिः। इति वादिनी सा प्रबोध्यमानापि तस्य पादयोः पतित्वा प्ररुरोद। ततश्च तत्रत्येन जनेन मातुलेन च पृच्छ्यमाना सहसा तत्र उपनीतं कन्दर्पं दृष्ट्वा अयं स मे पतिरिति सानन्दबाष्पा निजगाद। ततः सर्वेषु हृष्टेषु स यज्ञस्वामी तां तत्पतिञ्च कन्दर्पं केसटानुगं स्वावासं निनाय। तत्र तान् वर्णितस्वस्ववृत्तान्तान् महता उपचारेण स यज्ञस्वामी सपरिजनः सम्यक् पर्य्यचरत्।

अथ गतेषु कतिपयेषु अहःसु केसटस्तं कन्दर्पं जगाद मित्र! त्वं तावत् अभीष्टभार्य्यालाभेन कृतार्थतां गतः, तदिदानीं सभार्य्यः निजं पुरं रत्नपुरं गच्छ। अहं पुनरकृतार्थो निजं पुरं न गच्छामि। सखे! अहम् एवं तीर्थान् भ्राम्यन् अमुं देहं क्षपयिष्यामि। तदाकर्ण्य तत्रस्थितो यज्ञस्वामी केसटमब्रवीत् वत्स! किमुद्वेगादिदं वदसि? जीवद्भिः सर्वमवाप्यते। तदत्र कुसुमायुधवृत्तान्तं कथयामि श्रूयताम्।

पुरासीत् चण्डपुराख्ये नगरे देवस्वामी नाम द्विजः। तस्यातिरूपवती कमललोचना नाम कन्याभूत्। कुसुमायुधो नाम कश्चित् विप्रकुमारः अस्य शिष्य आसीत्। स शिष्यः सा च कन्या परस्परं प्रीत्या आस्ताम्। एकदा सा पित्रा अन्यस्मै वराय दातुं निश्चिताभूत्। ततः सा कन्या सखीमुखेन तं कमलाकरमाहस्म तातो मामन्यस्मै दातुं प्रतिपन्नः, भवांस्तु मे अनुरागेण पूर्वं सङ्कल्पितो वरः, तदिदानीं युक्त्या इतो मां हर। ततः स तथेति प्रतिपद्य

तस्या अपसाराय बहिर्निर्गमे कृतसंविदं भृत्यमेकं स्थापयामास। यथा सङ्केतमागता च सा कमललोचना रात्रौ तेन भृत्येन दूरं नीता। अथ प्रातर्नगरमेकं प्राप्य तं भृत्यं प्राब्रवीत् भद्र! क्व ते प्रभुः कुसुमायुधः? किं मां तं मद्भर्त्तारं न प्रापयसि? तदाकर्ण्य स शठस्तामेकाकिनीं विदेशस्थां मत्वाब्रवीत् सुन्दरि! अहं त्वां परिणेष्यामि, किं तेन, सोऽधुना क्व? तदाकर्ण्य सा साध्वी अन्तर्विषण्णाब्रवीत् भद्र! तर्हि यथार्हं औद्वाहिकमुपकरणमाहर। तच्छ्रुत्वा स दुर्मतिः प्रहृष्टः नगरोद्याने तां स्थापयित्वा सुविश्वस्तः विवाहोपकरणाहरणार्थमापणमगात्। तावच्च सा कन्या पलाय्य वेगसरीयुता कस्यचित् वृद्धस्य मालाकारस्य भवनं प्राविशत्। तत्र च तेन श्रुतवृत्तान्तेन सुसत्कृता सा निःशङ्कमतिष्ठत्। सोऽपि कुभृत्यस्तामप्राप्य विमुखस्तस्मादुद्यानात् न्यवर्त्तत। ततश्च क्रमेण तं प्रभुं कुसुमायुधं उपेत्य पृच्छन्तमवादीत् प्रभो! त्वं तावत् ऋजुः, न वेत्सि स्त्रीणां कुटिलानां चेष्टितम्। नैव सा त्वद्दाविरगात्। अहञ्च तवत्यैर्जनै दृष्टोऽवष्टब्धश्च, सा च मे वेगसरी हृता, दैवात् कथञ्चिदपसृत्य पलाय्य च अहमिहायातः। तदाकर्ण्य स कुसुमायुधः तूष्णीं विमृषन् अधोमुख एवासीत्।

एकदासौ पित्रा विवाहार्थं प्रेषितः व्रजन् यत्र सा कमललोचना स्थिता तं देशं प्राप। तत्र निकटस्थिते उद्याने आवासितजन्यगणं भ्रमन्तं तं सा कमललोचना ददर्श शशंस च तस्मै मालाकाराय। स च साधुर्मात्रा-

कारः समीपमेत्य कथितवृत्तान्तस्तं कुसुमायुधं स्वगृहमो-
नयत्। ततस्तत्र तयोश्चिरकाङ्क्षितः परिणयः सद्य एव
सम्भृतसाधनः समपद्यत। अथ स कुसुमायुधः तं कुभृत्यं
निगृह्य निष्कास्य च यद्विवाहार्थमागमत् तां कमललो-
चनाप्राप्ति हेतुभूतां सुलक्षणां मत्वा द्वितीयामपि कन्यां
परिणीय ताभ्यां वधूभ्यां समेतः सम्प्रहृष्टः स्वं देशमाग-
मत्। इत्येवम् असम्भवोऽपि भव्यानां समागमः सम्भवति।
तद् वत्स केसट! त्वमपि अचिरात् प्रियां प्राप्स्यसि।

इत्थं तेन यक्षस्वामिनाभिहिते ते सर्वे कन्दर्पादयः
तस्य गृहे कान्यपि अहानि तस्थुः। ततस्ते स्वदेशं प्रस्थिताः
महाटवीं प्राप्य वन्यस्य गजस्य संभ्रमात् अन्योन्य विभ्रष्टा
आसन्। तेषां स केसट एकाकी गच्छन् सुदुःखितः क्रमात्
काशीपुरं गत्वा तं मित्रं कन्दर्पं प्राप। ततस्तेन साकं
निजं पाटलिपुत्रं नगरं ययौ। उवास च तत्र पित्रादि-
भिर्नन्दितः कञ्चित् कालम्। वर्णयामास च पित्रोः पृच्छतो
रूपवतीविवाहादारभ्य कन्दर्पोदन्तं यावत् सर्वं वृत्तान्तम्।

अत्रान्तरे सा सुमना हस्तिभीता प्राणार्थिनी वनं
विवेश। तत्र चास्याः प्रविशन्त्या रविरस्तमगात्। ततः
सा एकाकिनी हा आर्य्यपुत्र! हा तात! हा अम्ब!
इत्येवं शोचन्ती तत्र दावानले ज्वलति तनुं संमुमुक्षुः।
तावच्च तत् योगिनीचक्रं कन्दर्पस्य क्षपणकं ता अन्या
योगिनीर्विजित्य तत् स्वायतनं प्रापत्। ताश्च तत्र स्थिताः
सहसा कन्दर्पं संस्मृत्य स्वविज्ञानात् तस्य भार्य्यां वने वि-
भ्रष्टाम् अवेत्य च मन्त्रयाञ्चक्रुः कन्दर्पः स धीरः पुरुषः,

स तत् वाञ्छितं लभताम्। परं वने भ्रष्टा तद्भार्य्या बाला भुवं तनुं त्यजेत्। तत् तां रत्नपुरं नीत्वा स्थापयामः यत्र सा कन्दर्पस्य पितुर्गृहे सपत्न्या सह स्थास्यति। इति सम्मन्त्र्य गत्वा तद्वनं तां समाश्वास्य ता योगिन्यः तां सुमनसं रत्नपुरं नीत्वा जहुः। ततश्च निशायां गतायां सा सुमनास्तस्मिन् पुरे भ्रमन्ती परिधावता जनेनोच्यमानम् इदं शुश्राव एषा कन्दर्पस्य द्विजस्य अनङ्गवती नाम भार्य्या पत्यौ क्वापि गते कञ्चित्कालं तत्प्राप्तीच्छया स्थिता साध्वी तमद्यापि अप्राप्य निराशा दुःखिताभ्यां श्वशुराभ्यामनुद्रुता अग्निं प्रवेष्टुं गता। एतदाकर्ण्यैव सा सुमना आशु तत् चितास्थानं गत्वा तामनङ्गवतीमेत्य न्यवारयत्। आर्य्ये! मा साहसं कार्षीः, स हि ते पतिर्जीवति। अथ आमूलतः कृत्स्नं तद्वृत्तान्तं सा शशंस। दर्शयामास च पतिदत्तमङ्गुरीयकम्। ततः सर्वे तद्वचः सत्यं विज्ञाय तामभ्यनन्दन्। ततः स कन्दर्पपिता तुष्टः तुष्टां तां वधूमनङ्गवतीं ताञ्च सुमनसं समाहृत्य गृहे न्यवेशयत्।

एतस्मिन्नन्तरे कन्दर्पः सुमनसः प्राप्तये भ्रमितुम् अनिच्छतोऽपि केसटस्य गृहात् तमनुज्ञाप्येव निर्ययौ। केसटोऽपि तस्मिन् प्रियसुहृदि गते रूपवतीं विना सुदुःखितः पित्रोरविदितः इतस्ततो भ्रमितुं गृहात् प्रायात्। कन्दर्पस्तु भ्रमन् दैवात् यत्र केसटः तां रूपवतीं परिणीतवान् तं देशं प्रापत्। तत्राकस्मात् जनकोलाहलं श्रुत्वा किमेतदिति तत्र पृच्छन्तं कन्दर्पं कश्चित् पुमानब्रवीत् एषा रूपवती भर्त्रा केसटेन विनाकृता मत्तंभुघाता, ते-

नासौ कलकलः, अत्र च तद्वृत्तान्तं शृणु। इत्युक्त्वा केसटो-द्वाहरात्रसोदन्तकौतुकं रूपवत्याश्रितं विवरणं प्रोच्य स पुमान् पुनरब्रवीत् ततः तं केसटं वञ्चयित्वा वृद्धविप्रः तां रूपवतीं पुत्रार्थमादाय गृहं प्रययौ। केसटस्तु तां परिणीय क्व यातो नाद्यापि विदितः सा च रूपवती तं प्रियं केसट-मपश्यन्ती पथि प्राब्रवीत् कथमहमार्य्यपुत्रं न पश्यामि? सर्वे च व्रजन्ति। तदाकर्ण्य स वृद्धो विप्रः पुत्रं दर्शयन् अयं ते आर्य्यपुत्र इत्यभ्यधात्। ततः सा रूपवती तत्रस्थान् वृद्धान् क्रुधाब्रवीत् कोऽयं कुपुरुषः? येन ह्यः परिणीतास्मि तं पतिं न चेत् प्राप्स्यासि, निश्चितं प्राणांस्त्यक्ष्यामि। एवं वदन्ती सा त्यक्ताहारपाना राजदण्डभयार्त्तेन तेन वृद्धविप्रेणास्याः पितुरेव गृहं प्रापिता। ततोऽत्र द्विजवृ-त्तान्तां तां शोचन् पिताब्रवीत् पुत्रि! कोऽसौ? कथं स परिणीता ज्ञातव्य इति। ततो रूपवती प्राहस्म तात! पाटलिपुत्रवासिनो द्वेसटाख्यस्य द्विजस्य सुतः केसटो नाम मत्पतिः। रक्षोमुखात् मया श्रुतमित्यभिधाय सा पि-त्रोरग्रतः सर्वं तद्वृत्तान्तमाचख्यौ। ततः स तत्पिता तत्र गत्वा मृतं पतितं रक्षो दृष्ट्वा सञ्जातप्रत्ययस्तुष्यन् तस्य जामातुः प्राप्त्याशया सुतां समाश्वास्य पाटलिपुत्रं चरान् प्राहि-णोत्। ते च गत्वा पाटलिपुत्रं चिरादागत्य प्राब्रुवन् ब्रह्मन्! दृष्टोऽस्माभिः पाटलिपुत्रवासी भट्ट द्वेसटः। क्वासौ ते पुत्रः केसट इति पृष्टश्च अस्मानाभाष्य एवमवादीत् क्रुधोऽत्र मे केसटः सुतः। स आगतोऽपि कन्दर्पनाम्ना मित्रेण सह, पुनः रूपवतीदुःखात् मामनुक्त्वैव क्वापि

गतः। एतत् तस्य वचः श्रुत्वा वयं क्रमेण इहायाताः। इत्युक्ता तेषु गतेषु रूपवती पितरमभ्यधात् तात! नास्ति मे आर्य्यपुत्रः, तदहमग्निं प्रविशामि, भर्त्रा विनाकृता किंयच्चिरं हि तिष्ठेयम्। एवं ब्रुवाणां यदा तेन पित्रा निषेद्धुं न पारिता, तदा सा रूपवती अथ स्वयं मर्त्तुमग्निना निर्गता। तस्याश्च सख्यौ उभे कन्ये तद्वत् मर्त्तुं विनिर्गते। एका शृङ्गवती नाम अपरा अनुरागवती। रूपवत्या विवाहे ताभ्यां दृष्टः स केसटः रूपवान् युवा तद्रूपहृतचित्ताभ्यां भर्त्तृत्वे पर्य्यकल्प्यत। तेनात्र जनानाम् अयं महान् कलकलः। इत्युक्तस्तेन पुरुषेण स कन्दर्पः तासां चितान्तिकं प्रायात्। दूराच्च कलकलं निवार्य्य द्रुतमुपेत्य च अग्निमर्च्चयन्तीं रूपवतीमेवमभ्यधात् आर्य्ये! अलं ते साहसेन, स ते पतिः केसटः जीवत्येव। स ते भर्त्ता मे मित्रं मां कन्दर्पमवेहि। इत्युक्त्वा तस्य वृद्धविप्रस्य छलेन नौकारोपणात् प्रभृति सर्वं केसटोदन्तं कथयामास। ततः सा रूपवती पतिसंवादप्राप्त्या सञ्जातप्रत्यया सम्प्रहृष्टा ताभ्यां सखीभ्यां सह पितुर्गृहं प्राविशत्। कन्दर्पोऽपि तन्मित्रमिति प्रीत्या तया समुपचरितः सुरचितश्च तदनुरोधतस्तत्रैव तस्थौ।

अत्रान्तरे सोऽपि केसटः दैवात् तत् रत्नपुरं नगरं भ्रमन् प्राप। तत्र च परिभ्रमन्तं तं दृष्ट्वा तत्र हर्म्यस्थया कन्दर्पभार्य्यया सुमनसा हर्षात् श्वशुरादयः ऊचिरे। सोऽयमार्य्यपुत्रसुहृत् केसटः साम्प्रतं सम्प्राप्तः, अस्मात् प्रवृत्तिर्बुध्येत, तत् शीघ्रमयं सम्भाव्यतामिति। ततस्ते-

गत्वा युक्त्या यथावत् सम्भाष्य समानीतः स केसटः तां सुमनसं क्षुधदुपागतां दृष्ट्वा विश्रान्तश्च पश्चात् पृष्टश्च तस्मै वन्ध्येभ संभ्रमादारभ्य कन्दर्पगतं सर्वं स्वञ्च वृत्तान्तमब्रवीत्। यावच्च तत्र सत्कृतः स कांश्चित् दिवसान् आस्ते, तावत् लेखहस्तः कश्चित् पुमान् कन्दर्पपार्श्वतः तत्रागात्। यत्र रूपवतीं नाम तत्सुहृत् केसटः परिणीतवान् तत्र कन्दर्पः स्थितः। सा च रूपवती तत्रैवास्ते। इति स पुमानब्रवीत् लेखार्थश्च स एव। स केसटः समुद्घाट्य कन्दर्पपत्रे तत् सर्वमवाचयत्। ततः कृतोत्सवः, सः अन्येद्युः कन्दर्पानयनाय दूतं प्रियाप्राप्तये च केसटं तत्र प्राहिणोत्। केसटोऽपि तेन लेखहारेण सह यत्र सा रूपवती पितृगृहे स्थिता तं देशं ययौ तत्र च गत्वा तोयदश्चातकीमिव तां रूपवतीं चिरात् सोत्सवां कृतसन्तापां सम्भावयामास। कन्दर्पेण च समागत्य परां प्रीतिमुद्वहन् ते अपि द्वे कन्यके रूपवत्या वयस्ये पूर्वोक्ते भङ्गवत्यनुरागवत्यौ तया रूपवत्या अनुमतः परिणिनाय। ततस्तास्तिस्रो महिलाः समादाय कन्दर्पमापृच्छ्य च केसटः स्वं देशं प्रतस्थे। कन्दर्पोऽपि तेन दूतेन सह तत् रत्नपुरं पुरं गत्वा सुमनोऽनङ्गवतीभ्यां वधूभ्यां संजग्मे। ततस्तौ केसटकन्दर्पौ रूपवती सुमनसौ भार्य्ये अवाप्य निजं निजं देशं गतौ विविधान् भुञ्जानौ तस्थतुः। इत्थं विधिवशात् विप्रयुक्ताः पुनरपि प्रियाभिः समागमं प्रयान्ति सत्ववन्तः महान्त्यपि दुःखानि विधूय। तत् शीघ्रमुत्तिष्ठ सखे! व्रजामः, त्व-

मपि चिन्वन् भार्य्यामाप्स्यसि, को वेद दैवगतिम्? ममैव मृतापि भार्य्या पुनरधिगतजीवा प्राप्ता। इत्येवं कथामाख्याय अनेन सख्या शीलाहितस्यानुगतश्च भुवं भ्रमन् इमां प्रापम्। अथात्र सशूकरं गजेन्द्रमहमपश्यम्। ततश्च उत्तीर्य्य तेन गजेन निगीर्णां तामेव श्रवशां स्ववधूमपश्यम्। चित्रमिदं यत् तं चिन्वता मया चिरदृष्टनष्टं गजेन्द्रमवलोक्य अद्य सुकृतैर्देवपादाः प्राप्ताः। एवं तस्यं वणिक्सुताय उक्तवति स राजा विक्रमादित्यः तां गजवधलब्धां तदीयां वधूं समर्पयामास। तौ च विचित्रसमागमेन मुदितौ अन्योन्यकथितवृत्तान्तौ श्रीविषमशीलं नृपतिं तुष्टुवतुः।

---

## अथ चतुर्विंशत्यधिकशततमस्तरङ्गः।

अथ राजा विक्रमादित्यः तस्य वणिक्सुतस्य सुहृदं सहागतम् एवं परिपृष्टवान् भद्र! यत्त्वया मृतापि भार्य्या जीवन्ती प्राप्ता इति कथितं तदिदानीं नः समाख्याहि विस्तरेण। इत्युक्तस्तेन राज्ञा स वणिक्सुहृत् राजानमभ्यधात् देव! यदि कौतुकं, तदाकर्ण्यताम्।

अहं ब्रह्मस्थलाख्ये अग्रहारे निवासी द्विजपुत्रश्चन्द्रस्वामी नाम। ममैका सुरूपा भार्य्यास्ति। एकदा मयि कार्य्यार्थं पितुराज्ञया ग्रामं गते भिक्षार्थमागतः कश्चित्

कापालिकस्तां मे भार्य्यामद्राचीत्। तेन दृष्टैव सा जातज्वरा सायं व्यपद्यत। ततो मद्‌बन्धुभिर्नीत्वा नक्तं सा चितामारोपिता। ततश्च प्रज्वलन्त्यां चितायाम् अहं तस्मात् ग्रामादागतः यथावृत्तं क्रन्दतः स्वजनात् अश्रौषम्। अथ मयि चितोपान्तं गते स कापालिकः करस्थनृत्यत्खट्वाङ्गः स्फुजंड्डमरुरवः तत्रागात्। ततस्तेन भस्मक्षेपेण शमिते चिताग्नौ तस्मात् चितामध्यात् देवतेव सा मदीया प्रिया अक्षताङ्गी उदतिष्ठत्। स च कपाली सिद्धाकृष्टामनुधावितां समादाय सपदि प्राद्रवत्। अहञ्च सधनुःशरः तद्‌युतां तां मदङ्गनामन्वगाम्। स च पापात्मा गङ्गातटे गुहां प्राप्य तत् खट्वाङ्गं भूमौ निधाय तत्र स्थिते द्वे कन्यके अब्रवीत् कन्यके! युवामुभे प्राप्ते अपि मायया अन्वेयमानीता। इमां विना मे सिद्धिर्नास्तीति प्रतिज्ञा अधुना सिद्धिमागता। एवमुक्त्वा यावत् स दुराशयो मद्‌भार्य्यां ताभ्यां दर्शयति, तावदहं तस्य खट्वाङ्गं गङ्गायामक्षिपम्। रे दुरात्मन् कापालिकाधम! मे भार्य्यां जिहीर्षसि? इति भ्रष्टखट्वाङ्गसिद्धिकं तम आक्षिप्य अधावम्। स च खट्वाङ्गमपश्यन् शठः पलायनपरः समभवत्। ततश्च मया धनुषा शरं संयोज्य तेन प्रक्षिप्तेन स पापाशयो निहतः। इत्थं पापसिद्धिसंकल्पेन विडम्बितशैवागमाः पाषण्डिनः प्रागेव पतिता एव एवं पतन्ति।

अथ तां भार्य्यां ते च द्वे कन्यके समादाय गृहमागतवानस्मि। बन्धवश्च मे आश्चर्य्यं मत्वा महोत्सवं विदधुः। ते च कन्यके सहर्षान्तं दृष्टे एवं वदतः स्म। आवयोरेका

वाराणस्यां राजकन्या, अपरा सार्थवाहसुता। अनेनैव कपालिना सिद्धि युक्त्या हृते आनीते, अधुना त्वत्प्रसादात् पापादस्मात् मुक्तिं गते। इति वादिन्यौ ते अन्वेषुर्मया वाराणसीं नीत्वा स्वबन्धूनां तं वृत्तान्तमाख्याय समर्पिते। ततश्चागच्छन् पथि भार्य्यावियोगिनम् एनं वणिक्सुतमपश्यम्। मिलित्वा चानेन इह उपागतोऽस्मि। कापालिकगुहालब्धेन अङ्गरागेण रञ्जितात् देहात्मे क्षालितादपि अतिसौरभं निःसरति, दृश्यताम्। इत्थं कृतोत्थिता भार्य्या मया प्राप्ता इति वादिनं तं विप्रं वणिक्सुतसहितं सत्कृत्य राजा प्राहिणोत्। ततो गुणवती चन्द्रवती मदनसुन्दरी: तिस्रो भार्य्याः समानीय समादाय च बन्धुभिः सर्वैर्मिलित्वा स्वां पुरीमुज्जयिनीं प्रायात्। पर्य्यणैषीच्च ताः कन्याः यथाविधि कृतमहोत्सवम्।

अथ स राजा तां विश्वकर्मगृहे दृष्टां स्तम्भपुत्तिकां स्मरन् प्रतीहारमादिशत् भद्र! तां कलिङ्गसेनां प्राप्तुं कलिङ्गसेनाय राज्ञे दूतो विसृज्यतां यस्याः प्रतिकृतिः सा स्तम्भपुत्तिका मया दृष्टा इति। ततस्तेन प्रतीहारेण अग्रतः समानीतं सुविग्रहं नाम दूतं सन्देशमुक्त्वा कलिङ्गविषयं प्रजिघाय। ततः स दूतो गत्वा कलिङ्गविषयं राजानञ्च यथोचितं दृष्ट्वा एवमब्रवीत् राजन्! देवो विक्रमादित्यो नृपस्त्वामादिशति, वेत्थ त्वं यत् भुवि रत्नमस्मानमुगच्छति, एका ते कन्यास्ति, तामहं रत्नं मन्ये तत्तां मह्यं समर्पय। अस्मत् प्रसादाच्च निजं राज्यमकण्टकं चिरं भुंक्ष्व। एतदाकर्ण्य स राजा कालिङ्गः

क्रुद्धः प्रत्यभाषत कोऽयं मे विक्रमादित्यः? स एवास्मान् आज्ञां ददाति। कन्याञ्चोपायनं मार्गति। एतावान् दर्पः। शीघ्रमधो गन्तुं यतते। एतदाकर्ण्य स दूतः समभ्यधात् राजन्! भृत्योऽपि एवमनात्मज्ञः कथं प्रभोः क्रोजायसे? मूढ़! किं तत् प्रतापाग्नौ शलभायितु-मिच्छसि? इत्युक्त्वा ततश्चलितः स दूतः उज्जयिनीमेत्य राज्ञे विक्रमादित्याय तत् सर्वं न्यवेदयत्। ततो विषम-शीलोऽसौ संक्रुद्धः बलैः सह प्रायात् कलिङ्गाभिमुखः। भूतकेतुर्वेतालश्च तमन्वगमत्। क्रमेण सेनारवप्रतिध्वाने राज्ञास्तु देहि आशु कन्याम् इति तं कालिङ्गं ब्रुवतीष्विव तं देशमियाय। ततो राजा अयुद्धसन्नद्धं तं दृष्ट्वापि बलैः निरुध्य मनसि एवमचिन्तयत् एतस्य सुतां विना मम नास्त्येव निर्वृतिः। तत् कथं श्वशुरं हन्मि, कात्र युक्तिः करणीयेति समालोच्य स राजा सवेतालः तस्य सिद्ध्या अलक्षितः रात्रौ कलिङ्गेशस्य वासकं प्राविशत्। अरे विषम-शीलेन विग्रह्य स्वपिषि इति तं प्रबोध्य वित्रस्तं स-वेतालः हसन्नवादीत्। स च कलिङ्गाधिपतिः उत्थाय दर्शितसाहसं रौद्रवेतालसमेतं तं राजानं वीक्ष्य परिज्ञाय च, इदानीं ते वशगोऽस्मि, देव! किं करोमि, समादिश, इति प्रणतो व्यजिज्ञपत्। राजापि विषमशीलः यदि मया प्रभुणा ते कार्यं तदा सुतां ते कलिङ्गसेनां मह्यमर्पय इति प्रत्यभाषत। कलिङ्गराजश्च तथेति तत्क्षणं प्रत्यपद्यत। राजा च विक्रमादित्यः कृतकार्यः वेतालयुतः स्वं शिविरमागात्।

अथान्येद्युः कलिङ्गाधिनाथः राज्ञे विषमशीलाय

यथाविधि विभवपूर्णां सुतां कलिङ्गसेनां शुभे लग्ने समभ्यर्च्य प्रादात्। इत्थं देवि! गाढ़ानुरागेण राज्ञा विषमशीलेन देहपणेन त्वं विधिवत् परिणीतासि। इति कार्पटिकस्य वदतो वक्त्रात् श्रुत्वाहं मन्युमत्यजम्। इत्थं स्तम्भपुत्रिकादर्शनादिहं विवाहिता। चित्रावलोकनात् एषा मलयवती च परिणीता। एवं सा कलिङ्गसेना विक्रमादित्यवल्लभा भर्तृप्रभावमास्थाय स्वाः सपत्नीरनन्दयत्। इत्थं स विक्रमादित्यः सर्वाभिस्ताभिर्महिषीभिस्तया मलयवत्या सहितः साम्राज्यसुखमनुभवन् तस्थौ।

अथैकदा कश्चित् राजपुत्त्रः कृष्णशक्तिर्नाम गोत्रजैः परिभूतः दक्षिणापथात् राजद्वारमायात्। स सिंहद्वारमागत्य राजपुत्त्राणां पञ्चभिः शतैरन्वितः कार्पटिकं व्रतं शिश्रिये। द्वादशाब्दान् मया विक्रमादित्यस्य सेवा कार्य्येति स भूभुजा वार्य्यमाणोऽपि प्रतिजज्ञे। निश्चयेनात्र स्थितस्य तस्य राजपुत्त्रस्य सानुयायिनः सिंहद्वारे एकादश समा अगमन्। ततश्च द्वादशे वर्षे प्राप्ते तस्य देशान्तरस्थिता भार्य्या चिरविरहार्त्ता लेखपत्रिकां प्राहिणोत्। प्रच्छन्ने च रात्रि वीरचर्य्यागते शृखति सं राजपुत्त्रः दीपावलोकेन तस्यां लेखपत्रिकायाम् अभिलिखितामार्य्यामिनामवाचयत।

सन्तप्ताय सतरलास्तव विरहे नाथ! कठिनहृदयायाः।
निर्यान्त्यविरतमिते निश्वासा मे न तु प्राणाः॥

इति वाचयतस्तस्मात् कार्पटिकात् तामार्य्यां श्रुत्वा राजा स्वं भवनं गत्वा व्यचिन्तयत् वतायं कार्पटिकः

सोऽत्र कालत्वत: चिरं क्लिष्ट: असिद्धार्थः पूर्णेऽस्मिन् द्वादशेऽब्दे असूंस्त्यजेत्। तन्मया विलम्बो न कार्य्यः इति आलोच्य स राजा दासीं कामपि प्रेष्य तदैव तं कार्पटिकमानाययामास। शासनपत्रमेकं लेखयित्वा च तमेवं समादिशत् भद्र! ओङ्कारपीठमार्गेण उत्तरां दिशं गच्छ, तत्रामुना शासनेन मदर्पितं ग्रामं भुङ्क्ष्व, नाम्ना खण्डकटकं तं पृच्छन् गच्छन्नवाप्स्यसि। इत्युक्त्वा स राजा तस्मै शासनमदात्। सोऽपि भृत्येभ्यः अनावेद्य तस्यामेव निशि कार्पटिक: प्रायात्। का जिगीषा ममैकेन ग्रामेण क्रीडादायिना तस्यापि प्रभोराज्ञा कार्य्या इति असन्तोषिणैव क्रमात् व्रजन् ओङ्कारपीठमार्गेण गत्वा दूरे अरण्ये क्रीडन्तीर्बह्वीः कन्याः ददर्श पप्रच्छ च ताः, अपि जानीथ यूयं खण्डकटकं क्व भवेदिति। एतदाकर्ण्य तास्तमूचुः न जानीमहे वयम्। सौम्य! गच्छाग्रतः इतो योजनानां दशके नः पिता तिष्ठति तं पृच्छ, स जातु तं ग्रामं विद्यात्। एवमुक्तस्ताभिः कन्यकाभिः गत्वा योजनानां दशकानि, तासां पितरं भीषणाकृतिं राक्षसमपृच्छत् भद्र! इह खण्डकटकं क्व वद इति सोऽपि तं धैर्य्यमाधाय अब्रवीत् किं तत्र ते तद्धि पुरं चिरशून्यं तथापि चेत् यासि, तच्छृणु, मार्गोऽयं ते पुरतो द्विधा गतः। तत्र वामेन पथा गच्छन् प्राप्स्यसि खण्डकटकस्य उच्चप्राकारहारिणीं प्रतोलीम्। इति रक्षसोक्तः स गत्वा तां प्रतोलीं शून्यं भयदं हर्म्यं धसकवावृतं पुरं विवेश। प्रविश्य च यावत् नृपासनमधितिष्ठति तावत् कश्चित् राक्षसः समुपेत्य वेत्रहस्तस्तमभ्यधात्

भो मानुष ! किमत्र त्वं नृपासने समुपविष्टः ? तदाकर्ण्य स धीरः कृष्णशक्तिः कार्पटिकः तत् राजशासनं दर्शयन्न-ब्रवीत् अहमत्र प्रभुः यूयं मे करदाः कुटुम्बिनः । विक्रमादित्येन नृपतिना शासनेन मे राज्यमिदं प्रदत्तम् । तदाकर्ण्य स राक्षसः शासनं दृष्ट्वा तं प्रणम्य च उवाच त्वमिदानीमस्माकं राजा, प्रतीहारस्तेऽहमस्मि, सर्वत्रैव तस्य देवस्य विक्रमादित्यस्य आज्ञा अखण्डिता। इति समाख्याय स राक्षसः सर्वाः प्रकृतीराजुहाव। मन्त्रिणः सर्वे समाजग्मुः । तथा राजपरिच्छदश्च समानीतः तत्क्षणाच्च चतुरङ्गेन बलेन तत् सभाङ्गनमपूरि । ततः सर्वैः प्रणम्यमानो हृष्टः स कार्पटिकः राजोपचारेण सर्वाः स्नानाहारादिकाः क्रिया निर्वर्त्तयामास । ततः स तत्र प्राप्तराज्यः सविस्मयमचिन्तयत् अहो ! कोऽयं महात्मनः विक्रमादित्यभूपतेः प्रभावः ? चित्रमपूर्वस्तस्य प्रभोर्गाम्भीर्य्यगरिमा, यत् ग्रामं ददता राज्यमपीदृशं मह्यमर्पितम् । इति चिन्तायमाणः स राज्यं कुर्वन् उवास। विक्रमादित्यश्च उज्जयिन्यां तत्सखीन् तान् पुपोष ।

अथ गच्छति काले स कार्पटिको नृपतिः सोत्सुकः सेनाकम्पितभूतलः तं राजानं विक्रमादित्यं प्रणन्तुमाजगाम । आगतञ्च पादानतं तं विक्रमादित्यः प्रोवाच राजपुत्र ! पत्न्याः निश्वासान् वारयितुं गच्छ । इत्युक्तस्तेन राज्ञा स कार्पटिकः साद्भुतः राजानमभ्यनुज्ञाप्य सखिभिः साकं निजं देशमगात् । तत्र च गत्वा गोत्रजानुज्ञाप्य तां भार्य्यां चिरोत्सुकां आनीय सिद्धमनोरथः परां

राजश्रियं भेजे। इत्थं स राजा विक्रमादित्योऽद्भुत चारित्र शक्तिः।

अथैकदा राजा एकमूर्द्धरोमकरं द्विजमेक्ष्य अपृच्छच ब्रह्मन्! कथमीदृक्, कुतो वा समागत इति। स द्विजः राज्ञे स्ववृत्तान्तमब्रवीत्।

देव! पुरासीत् पाटलिपुत्रे अग्निस्वामी नाम विप्रः। तस्य महाग्निहोत्रिणः सुतोऽहमग्निस्वामी नाम। मया च दूरदेशात् क्वापि विप्रकन्या परिणीता। सा तु मम भार्य्या बालत्वात् तत्पितुरेव गृहे स्थापिता। अथ कालेन यौवनप्राप्तां तामानेतुमहम् अश्वमारुह्य केनचित् भृत्येन सह श्वाशुरं गृहमगाम्। तत्र श्वशुरेण सत्कृतश्च स चेटिकां तां भार्य्यामश्वाधिरूढ़ामादाय गृहाभिमुखं प्रायाम्। अर्द्धमार्गे च सा मे भार्य्या अश्वाया अवरुह्य अम्बुपानापदेशेन नदीकच्छमगात्। यावच्च सा चिरयति तावत् तद्वेक्षणे सहस्थितं तं भृत्यं तत्रैवाहं विसृष्टवानस्मि। यावच्च सोऽपि नायाति तावदहमपि तदीयां चेटिकां तुरङ्गीरक्षणां नियुज्य स्वयं तत्र गतोऽस्मि। गत्वा च यावत् पश्यामि तावत् तया मद्भार्य्यया स मे भृत्यो भक्षयित्वा रक्ताक्तवक्त्रा अस्थिशेषः कृतः। ततोऽहं वित्रस्तः यावत् तुरगीं प्रति गच्छामि, तावत् तयापि तदीयया चेट्या सा तुरगी भक्षिता। ततः पलाय्य गतोऽहं प्राणैर्न वियोजितोऽस्मि। देव! तत्त्रासात् अधुनापि मे ऊर्द्धरोमकरत्वं न निवर्त्तते। तदत्र देवो मे गतिरिति वादिनं द्विजं विक्रमादित्यः अभयदानेन गतत्रास मकरोत्। अहो!

धिक् नास्ति विश्वासः साहसकारिणीषु स्त्रीषु, इति रात्रिं वर्त्तते तत्र स्थितः कश्चिदमात्योऽवादीत्, देव ! दुर्ज्ञाता एव स्त्रियस्तादृश्यः, मन्ये, देवेन अग्निशर्मणो ब्राह्मणस्य वृत्तान्तो न श्रुतः, तदाकर्णयतु महाराजः ।

इहैवास्ति अग्निशर्मा नाम द्विजः सोमशर्मसुतः । स तु पित्रोः प्राणसमः सर्वविद्यासु शिक्षितः, परं मूर्खः । तेन वर्द्धमाननगरे कापि द्विजकन्या परिणीता । सापि शैशवात् धनवता पित्रा न गृहात् परित्यक्ता । तस्याश्च यौवनस्थायां पितरौ अग्निशर्माणमूचतुः पुत्र ! भार्य्यां ते अधुनापि किं नानयसि ? श्रुत्वैतत् पितरावनापृच्छ्य स दुराशयः एकाकी तां गृहिणीं प्रति प्रायात् । गृहान्निर्गतस्य तस्य कपिञ्जलो दक्षिणोऽभूत् । दक्षिणाच्च प्रतिकूलशंसिनी शिवा विरौति स्म । सोऽपि मूर्खः जीव जीवेत्युदीर्य्य तद्-निमित्तमभ्यनन्दत् । तदाकर्ण्य शकुनदेवता अदृश्या जहास च । अथ श्वाशुरं गृहं सम्प्राप्य प्रविविक्षतस्तस्य कपिञ्जलो वामः शिवा च कथिता वामाभूत् । सोऽपि पुनर्जीव जीवेत्यदीर्य्य तथैव तदभ्यनन्दत् । शकुनाधिष्ठात्री देवता चाचिन्तयत् अहो ! मूर्खोऽयं, यदशुभं शुभमित्यभि-नन्दति । तत्तु कार्य्यं येन प्राणी जीव्यते, अतोमयायं प्राणैर्यथा न वियुज्यात् तथा कार्य्यम् । इति चिन्तयन्त्यां तस्यां शकुनदेव्यां सोऽग्निशर्मा दत्तप्रहर्षः श्वशुरगृहं प्राविशत् । श्वशुरादिभिश्च किमेकाकी आगतोऽसीति अभिहितः स गृहे अनुज्ञा आयातोऽस्मीति सर्वेषामभि-दधे । ततः कृतोचितस्नानभोजनस्य तस्य शय्यागृहे

निशायां तस्य भार्य्या प्रसाधिता समीपमायात्। पथि श्रमाच्च सुप्ते तस्मिन् सा तद्भार्य्या बहिर्निर्गत्य मूलविद्धस्य चौरस्य उपपतेरन्तिकमाजगाम। तद्दृष्टमालिङ्गन्ती च सा तदाविष्टेन भूतेन दशनैश्छिन्ननासिका ततो भयात् पलाय्य स्वं गृहमागत्य च सुप्तस्य पत्युरन्तिके विकाशा-मसिधेनुकां न्यस्य तारस्वरं रुरोद हा हा मृताहमस्मि, अनेन मे भर्त्रा किं कृतं नासाविकर्त्तनं पश्यत इति तदाकर्ण्य तद्बान्धवाः समेत्य तां छिन्ननासां दृष्ट्वा तम-ग्निशर्माणं लगुड़प्रहारैरताड़यन्।

अथ प्रातः तत्रत्यं नृपमावेद्य तदादेशात् ते बा-न्धवा निर्दोषभार्य्याद्रोहीति वधकेभ्यस्तं समर्पयन्। तत-स्तस्मिन् वध्यभूमिं नीते सा शकुनदेवता तद्भार्य्याया नैशवृत्तान्तदर्शिनी समचिन्तयत् एतेन तु अनिमित्त-फलं प्राप्तं, यत्तु अयं जीव जीवेति प्रोक्तवान् तेनाहममुं वधात् रक्षामि। इत्यालोच्य सा निगूढ़देहा अन्तरीक्षात् प्रोवाच वधकाः! निर्दोष एषः द्विजसुतः न वध्यः। शूल-स्थस्य चौरस्य दशनान्तः गत्वा नासिकां छिन्नां पश्यत। इत्युक्त्वा सा तस्मास्तद्भार्य्याया रात्रिवृत्तान्तं सर्वमबुध-यत्। ततस्तत् प्रत्ययात् प्रतीहारमुखेन तैर्विज्ञप्तो नृपतिः गत्वा तां नासिकां चौरदन्तान्तर्गतां वीक्ष्य तमग्निशर्माणं वधात् निर्मोच्य गृहं व्यसृजत्। ताञ्च कुलटां यथोक्त-दण्डेनादण्डयत्। देव! स्त्रियः एवं रूपाः प्रायश इति तेन मन्त्रिणोक्तो राजा विक्रमादित्यस्तत्तथेत्यन्वमोदत। ततो धूर्त्तो मूलदेवः राजान्तिकस्थितः प्राब्रवीत् देव! न

साध्वः किं कुत्रचित् असाध्वीषु न सन्ति? विषवल्लीषु मध्ये किं भूतलतिका न सन्ति? तदेतदाकर्ण्यतां देवेन, यन्मया अनुभूतम्। पूर्वमहं शशिना सह पाटलिपुत्रमगच्छम्। तत् पुरं नागरिकाश्चेव भत्वा वैदग्ध्यदिदृक्षया तत्र बाह्ये सरसि एकां वस्त्रधारिणीं स्त्रियं दृष्ट्वा इहं पान्थैः क्व वास्यते? इति पृष्टवान्। इह तीरेषु चक्रवाकैः, वारिणि मत्स्यैः, अब्जेषु षट्पदैरास्यते, नात्र पान्थावासो मया दृश्यते। तथा वृद्धयोषिता वक्रोक्त्या एतत् प्रत्युक्तोऽहं विलक्षः शशिना सार्द्धं नगरं प्राविशम्। तत्रैकस्मिन् गृहद्वारि उष्णपात्रस्थे परमान्ने पुरस्थिते रुदन्तमेकं बालं दृष्ट्वा शशी अवदत् अहो! अबुद्धिरयं बालः, योऽग्रदत्तं परमान्नं न खादति क्लिश्नाति च वृथात्मानं रुदितैः। तदाकर्ण्य स बालो हसन् नयने प्रमृज्याब्रवीत् मूर्खा यूयं न जानीथ रोदने मम गुणान्। एतत् परमान्नं शीतलीभवत् स्वादु भवति श्लेष्मा च क्षयं गच्छति, रुदतो मे एते गुणाः, नाहं मौर्ख्येण रोदिमि। यूयं ग्राम्याः पुनर्मूर्खाः, नाभिप्रायं मे जानीथ इति तेन बालकेनोक्तौ स्वावैदग्ध्यविलज्जितौ शशी अहञ्च उभौ साश्चर्यौ ततोऽपसृत्य अन्यतो गतौ। गत्वा च कियन्तं दूरम् आम्रतरुस्कन्धगतामाम्रावचायिनीं मूलस्थितपरिच्छदां कामपि वरकन्यामपश्याव। शुभे! कानिचित् आम्रफलानि अस्मभ्यं प्रयच्छ इत्यस्माभिरभ्यर्थिता सा एवमभाषत युवाम् आम्रफलानि उष्णानि वा शिशिराणि अश्नीथः? तदाकर्ण्य आश्चर्यजिज्ञासुं तां कन्यामवदाम सुन्दरि! अश्नीथस्तावत् उष्णानि, ततोऽन्यानि च।

एतदाकर्ण्य सा पांशुष्वाम्रफलानि अक्षिपत्। अस्माभिश्च मुखानिलैस्तानि नीरजीकृत्य भुक्तानि। ततः सा सपरिजना कन्या हसन्ती प्राब्रवीत् पूर्वमुष्णानि वो दत्तानि आम्रफलानि फुत्कारेण भुक्तानि, इदानीं शीतलानि एतानि अफुत्कार्याणि वाससि गृह्णीत। एवमुक्ता सा अन्यानि फलानि अञ्चलेषु नः प्राक्षिपत्। तान्यादाय वयं ततः स्थानात् विलक्षिता याताः। ततोऽहम् अन्यान् सहचरान् शशिनश्चाब्रूवम् अवश्यमेषा विदग्धा कन्यका मया परिणेया, अन्यथा का मे धूर्त्तता? एवमुक्तैस्तैस्तथेति तत्पितुः सदनमन्विष्टम्। वयञ्च वेशान्तरेणालक्ष्या अपरेऽहनि तत् पितृगृहमगच्छाम। तत्रागत्य वेदान् पठतोऽस्मानभ्येत्य यज्ञस्वामी नाम तत्पिता अपृच्छत् कुतो यूयं, के चेति। वयं मायापुरात् विद्यार्थमिहागता इति अस्माभिरभिहितः स आढ्यो द्विजोत्तमः प्राहस्म तर्हि इहैव मद्गृहे इमां चतुर्मासीं वसत कुरुत चानुग्रहं यूयं दूरात् समागता इति। तदाकर्ण्य वयमवोचाम ब्रह्मन्! कुर्म्मो भवद्वचः, यदि चतुर्मास्यवसाने अर्थितं नः प्रदास्यसि। एवमुक्तोऽस्माभिः स यज्ञस्वामी द्विजोऽभ्यधात् भद्राः! शक्यं मदर्थं मृगयध्वं चेत् निश्चितं दास्यामीति इति तेन प्रतिश्रुते वयं तद्गृहे आस्महे।

अथ पूर्णायां चतुर्मास्यां अस्माभिः स द्विजोत्तमः प्रोक्तः ब्रह्मन्! यामो वयं तत्पूर्वोक्तं देहि यत् वयं प्रार्थयामहे इति किं तदिति पृच्छन्तं तं शशी तां कन्यां प्रदर्श्य अवदत् ब्रह्मन्! कन्येयं भवतः अस्मन्मुख्याय अस्मै भवता

प्रदीयतामिति। ततः स विप्रो वाग्बद्धो यज्ञस्वामी इत्यमचिन्तयत् छलितोऽस्मि तावदेभिः, तद्भावत् को दोषः, गुणवानयम्। इत्यालोच्य स विप्रो यथावत् तां सुतां मह्यमदात्। अहञ्च नक्तं हसन् वासगृहे तां कन्या-मवदं सुन्दरि! कच्चित् तानि आम्राणि उष्णानि शिशि-राणि च स्मरसि? तदाकर्ण्य प्रत्यभिज्ञाय सा सस्मितं मा-मवादीत् एवमेव ग्राम्या नागरिकैर्जनैः विडम्ब्यन्ते। ततो-ऽहमपि तामवोचं नागरिके! तिष्ठ तावत् सुखम्। ग्राम्योऽ-हमधुना त्वां विहाय प्रतिज्ञया दूरं यास्यामि। एतदाकर्ण्य सापि प्रतिज्ञामकरोत् निश्चितं मया त्वं त्वत्तो जातेन सूनुना अवष्टभ्य आनेतव्य इति। अन्योऽन्यं प्रतिज्ञाते सा पराङ्मुखी शेते स्म। अहञ्च सुप्तायास्तस्या अङ्गुलौ स्वाङ्गुरीयकं न्यधाम्। ततोऽहं निर्गत्य तैः सहचरैर्मिलितः तस्या वैदग्ध्यं दिदृक्षुर्निजामिव उज्जयिनीमागाम्। सापि विप्रसुता प्रबुध्य प्रातर्मामपश्यन्ती अङ्गुरीयकञ्च ममा-माङ्कं पश्यन्ती व्यचिन्तयत् गतोऽयं तावत् मां त्यक्त्वा प्रतिज्ञापालनपरः, मयापि मुक्तानुतापया स्वप्रतिज्ञात-मनुपालनीयम्। मूलदेवेति नामाङ्कमङ्गुरीयकं दृश्यते। तत् ध्रुवं यो मूलदेवो धूर्त्तः ख्यातः, स एवासौ। स चोज्जयिन्यां वसतीति सर्वैः कथ्यते। ततस्तत्र युक्त्या गत्वा मया समीहितं साधनीयमिति सङ्कल्प्य पितरं स्वैरमेव-मब्रवीत् तात! गतो मे भर्त्ता सहसा मां परित्यज्य, तेन च वियुक्ता कथमिह सुखं तिष्ठामि? तत् तीर्थ-यात्रायै गच्छामि, एतां हतां तनुं क्लिश्नामि। इत्युक्ता

अनिच्छन्तमपि तं यत्नेनानुमान्य पितरं, सधनपरिच्छदा ततः प्रायात् क्रमेण च गत्वा सा महार्हं गणिकोचितं वेशं कृत्वा लोकैकसुन्दरी सती गत्वा उज्जयिनीमेव विवेश। परिजनेन कर्त्तव्यसंविदं कृत्वा च सा सुमङ्गलेति स्वं नाम ख्यापितवती। तथा ख्यापिते च नाम्नि देवदत्ताख्या तत्रत्या गणिकोत्तमा उपेत्य तस्यै राजार्हमेकं पृथक् मन्दिरं प्रादात्। तत्र स्थिता तां स मे मित्रं शशी भृत्यमुखेन ख्यातिहृतः भाटिमें गृह्यतामित्यब्रवीत्। यः अस्मद्वचोऽनुतिष्ठतु, स कामुकोऽत्र प्रविशेत्, न मम भाट्या कार्य्यं न चान्यैः पशुनिभैर्नरैः। इति तया सुमङ्गलया भृत्यमुखेनोक्तः शशी तथेति उक्त्वा प्रदोषे तन्मन्दिरमगात्। तत्र स प्रथमद्वारं प्राप्य आवेदितात्मा द्वारपालेन कुरु अस्मत्स्वामिन्या वच इति निजगदे। स्नातोऽपीह पुनः स्नाहि, नान्यथा ते प्रवेशोऽस्ति। तदाकर्ण्य स शशी तथेति स्नानमङ्गीचकार। ततस्तस्या दासीभिरभ्येत्य अभ्यङ्गोद्वर्त्तनानन्तरं यावत् विस्रब्धं स्नपितः, तावत् प्रथमः प्रहरो गतः। अथ स्नातः द्वितीयं द्वारं प्राप्तः स शशी तत्रत्येन द्वाररक्षिणा अभिदधे भद्र! स्नातोऽसि तावत् प्रसाधनविधिं कुरु। तथेत्युक्तवतस्तस्य दास्यः समेत्य यावत् प्रसाधनं कुर्वन्ति स्म तावत् द्वितीयः प्रहरः पर्य्यहीयत। अथ तृतीयं कक्षाद्वारं प्राप्तः स रक्षिभिरुक्तः सौम्य! भुङ्क्ष्व तावत्, ततः प्रविशाभ्यन्तरम्। ततो बाढमित्युक्तवन्तं तं सख्यः समेत्य यावत् विविधैराहारैः पानैश्च व्यडम्बयन् तावत् तृतीयोऽपि

प्रहरोऽप्यगात्। अथ चतुर्थे वासगृहद्वारं प्राप्तः स तद्वत्येन द्वाररक्षिणा एवं निरभर्त्स्यत ग्राम्यकामुक! निर्याहि मा खलीकारमाप्नुहि। पश्चिमे यामे गणिकया नवसङ्गमे कार्य्यः किम्? इत्थं तेन तिरस्कृतः स कृपिणा छलेन, शशी विगलितप्रभः यथागतमेवागात्। इत्थमन्येऽपि बहवः कामिनस्तया सुमङ्गलया विडम्बिताः। तदाकर्ण्य अहमेकदा देव! दूरगताश्रितं कृत्वा नक्तं सुप्रसाधितः तस्या गृहमगच्छम्। तान् तांश्च द्वाःस्थान् प्रतिद्वारं अर्थदानेनानुरञ्ज्य अविलम्बितस्तस्या गृहद्वारमगाम्। अथ कालप्राप्तः द्वारात् द्वारपालैर्विमुक्तश्च प्रविश्य वेश्याविशेषपरिज्ञाबां तां स्वप्रियामहमापम्। सा तु पुनः प्रत्यभिज्ञाय प्रत्युद्गम्य वेश्येव धूर्त्ता पर्य्यङ्कनिषण्णं मामुपाचरत्। ततोऽहं तया लोकैकसुन्दर्य्या साकं निशां नीत्वा बद्धानुरागो निर्गन्तुं तस्मात् गृहात् नाशकम्। सापि बद्धरतिः पार्श्वात् मे क्षणमपि नापयाति स्म। यावच्च दिनैः सा सगर्भा श्यामलाग्रपयोधरा भवत् तावत् सा विदग्धा कूटलेखं कृत्वा मह्यमर्पयत्। प्रभुणा राज्ञा मे लेखः प्रहितः वाच्यतामिति। ततोऽहं तं लेखमुद्घाट्य अवाचयं श्रीकामरूपात् श्रीमान् मानसिंहो भूपतिः सुमङ्गलामादिशति कथमत्र चिरं स्थितासि, देशान्तरकुतूहलं हित्वा शीघ्रमागम्यतामिति मयैवं लेखे वाचिते सा सव्रीडेव मामब्रवीत् सुभग! यामि अहं, मा मन्युं कृथाः, परवतीत्यहम्। एवं छलं कृत्वा सा स्वमेव पाटलिपुत्रं प्रायात्। अहन्तु तां परायत्तेति अनुरक्तोऽपि नान्वगाम्। सा च

पाटलिपुत्रस्था कालेन सुतं सुषुवे। स च शिशुर्वर्द्धमानः सर्वाः कला अशिक्षत। स कदाचित् बालो द्वादशाब्दोऽपि बालचापलात् सवयसं द्विजदारकं लतया अताड़यत्। स च ताड़ितो रुदन् रुषाब्रवीत् त्वं मां ताड़यसि, यस्य तव पिता न ज्ञायते? विदेशं भ्रान्तायाः मातुस्त्वं जातो हि यतस्ततः। इति तेनाभिहितः स वैलक्ष्यात् गत्वा मातरमप्राक्षीत् अम्ब! को मे पिता? स च कुत्रास्ते कथ्यतामिति। सा च माता तं द्विजसुतमीक्षमाणमुवाच तव पिता मूलदेवो नाम मां त्यक्त्वा उज्जयिनीं गतः। इत्युक्त्वा आमूलतः सा तस्मै स्ववृत्तान्तमाचख्यौ। ततः स बालस्तामवादीत् अम्ब! तर्हि तमहं पितरं गत्वा बद्ध्वा आनयन् ते प्रतिज्ञां पूरयामि। इत्येवमुक्त्वा जननीं स बालः तयोक्तमदभिज्ञानस्ततः सद्य एव प्रस्थितः इमामुज्जयिनीं प्राप। आगत्य च दीव्यन्तं मां दृष्ट्वा पृष्ट्वा च अभिज्ञानेन निश्चितं बुद्ध्वा च चिरघटमानेन द्यूतेन स सर्वानेव जयतिस्म। बालत्वेऽपि महाधूर्त्तः सर्वेषां कृतविस्मयः सः अर्थिभ्यः द्यूतजितं सर्वं धनं ददौ। स्वयुक्त्या च रात्रौ कार्य्यार्थमागत्य मद्गृहं सुप्तस्य मे मायया खट्वामहरत्। ततः प्रबुद्धोऽहम् आत्मानं तृणपृष्ठगम् अखट्वं दृष्ट्वा सलज्जाहासविस्मयोऽभूवम्। अथाहं देव! शनैरापणं गत्वा परिभ्रमयन् तं बालं खट्वां विक्रीणानं व्यलोकयम्। उपागम्य च तम् अब्रुवं कियता मूल्येन एषा खट्वा दीयते? बालो मामब्रवीत् धूर्तशिरोमणे! नेयं खट्वा अर्थेन लभ्यते, अपूर्वाद्भुतवर्णनेन तु लभ्यते। तदाकर्ण्याहमवोचं तर्हि शृणु

ते अद्भुतं वचिम, यदि तत्त्वतः सत्यमिति बुद्धा अनुमन्यसे ! यदि त्वसत्यमिति तत् वक्ष्यसि, तदा मे प्रत्ययेन त्वं जारजातः, खट्टाश्चाहमाप्नुयाम्। अनेन समयेन मे विचित्रमाख्यानं शृणु कथयामि।'

पूर्वं कस्यापि भूपतेः राष्ट्रे दुर्भिक्षमभवत्। 'सवाहनानां नागानां शीकराम्बुमहाभरैः सूकरप्रेयसीपृष्ठे नरः स्वयं कृषिं चक्रे। ततः समुत्पन्नैर्धान्यैः स महीपतिः समृद्धः प्रजानां दुर्भिक्षं शमयामास। एवं मयोक्ते स बालो हसन्नवादीत् नागानां वाहनाः मेघाः सूकरप्रेयसी क्षितिः। या हि सूकररूपस्य विष्णोः प्रियतमोच्यते। तस्यां मेघाम्बुभिर्धान्यमुत्पन्नं तदत्र किमद्भुतम् ? इत्युक्त्वा स बालो धूर्त्तं मां विस्मितमब्रवीत् इदानीमहमेकां विचित्रां कथामाख्यामि, सदप्यदः तत्सत्यमिति तत्त्वतो विज्ञाय प्रत्येषि यदि, तदा ते खट्टामिमां दास्यामि, अन्यथा त्वं मे दासः इति। मया तथेत्युक्ते स बालधूर्त्तः प्राब्रवीत्। धूर्त्तपते ! पुरा कोऽपि बालकः इह उदपादि। य उत्पन्न एव भरेण उर्वीमकम्पयत्। तदैव हद्दो भूत्वा लोकान्तरे पदं चक्रे च। इत्युक्तवन्तं तं बालं तदबुद्धाहमब्रुवं वत्स! अलीकमेतत्, नास्त्यत्र कापि सत्यता। ततः स बालोऽवादीत् धूर्त्ततम ! जातस्यैव वामनीकृतेर्हरेः चरणाक्रान्ता मही किं न चकम्पे ? तदैव च स वृद्धिं गत्वा किं भुवर्लोके पदं न कृतवान् ? तदेवं जितोऽसि, दासीकृतोऽसि च, अत्रापणवर्त्तिनः सर्वे मम पणे साक्षिणः स्थ, तदहं यत्र गच्छामि, तत्र मया सहागच्छ। इत्युक्त्वा स धीरो बालः पाणिना

मां भुजे अग्रहीत्। सर्वे च तत्रस्था अस्य तथैव साक्ष्यं ददुः। ततश्च स सानुगः पश्यन्तं मामवष्टभ्य मातुरन्तिकं पाटलिपुत्रं नयति स्म। तन्माता च तदानीं मां दृष्ट्वा अभाषत आर्य्यपुत्र! मयाऽपि अद्य स्वप्रतिज्ञा पूरिता। त्वः ज्ञानेनैव सूनुना अवष्टभ्य त्वमानायितः इत्युक्त्वा सा साध्वी सर्वं वृत्तान्तं सर्वेषां सन्निधौ अवर्णयत्। ततः सर्वे बान्धवास्तं स्वप्रज्ञासाधितेप्सितां पुत्रेण सृष्टकीर्त्तीनामभ्यनन्दन्। ततश्च ज्ञातार्थोऽहं तया पत्न्या तेन च पुत्रेण साकं चिरं तत्रोषित्वा इमामुज्जयिनीमागाम्। देव! एवं भर्त्तभक्ताः कुलाङ्गनाश्च सन्ति। सर्वा एव सर्वत्र न दुर्वृत्ता इति मूलदेवोक्तां कथां निशम्य राजा विक्रमादित्यः सह मन्त्रिभिस्तुतोष। इत्येवमाश्चर्य्याणि शृण्वन् कुर्वंश्च ससद्वीपां महीं विजित्य चिरं बुभुजे। इत्थं संयोगवियोगैः पूर्णां तां विषमशीलकथां निशि समाख्याय कण्वमुनिः पुनर्मदनमञ्चुका विरहिणं मामवदत् नरवाहनदत्त! इत्थम् अचिन्त्याः सङ्गमा वियोगाश्च जन्तूनां भवन्ति, तत्तवापि न चिरात् प्रियया तया समागमो भविता, धृतिमवलम्बस्व, त्वादृशा न हि विधुरा व्यसनेषु। अविलम्बमेव भार्य्यासचिवसमेतो विद्याधरचक्रवर्त्तिपदं प्राप्स्यसि। इत्थं कण्वमुनिवचसा लब्धधृतिः विरहकालं नीत्वा कथञ्चित् क्रमेण सर्वा भार्य्या विद्याः खेचरसाम्राज्यञ्च प्राप्तवान्। एतच्च केवलं वरदस्य देवस्य शम्भोः प्रसादात् मया सर्वमाप्तम्। महामुनय! आदावेव अहं तदखिलं वर्णितवान् इति नरवाहनदत्तः स्वां कथामाख्याय मुनिजनाभिनन्दितः

लब्धसिद्धिं गोपालकञ्च मातुलमदर्शयत्। तत्र चाश्रमे मुनीनां, अलङ्गागमवासरान् तान् नीत्वा तं मातुलं तांश्च तपोवनस्थान् मुनीनामन्त्र्य सदारसचिवः विमानमारुह्य खेचरसैन्यैः पिहिताम्बरोघः स्वनिवासमद्रिम् ऋषभक-माप्य साम्राज्यभोगसुखया सक[illegible] सुखमुपभुञ्जानः कल्प-जीवी विद्याधराधिपत्यमकरोत्।

इत्येषां कथा पुरा कैलासशिखरे तुषाराद्रिसुताभ्यर्थ-नातुष्टेन शशिशेखरेणाभिहिता शापतः समुत्पन्नैः क्षितितले पुष्पदन्तादिभिरतुलां कीर्त्तिं बिभ्रद्भिः प्रसिद्धिं गमिता। इत्थं मद्वदनोद्गताम् इमां कथां यः पठति शृणोति चादरात् स खलु न चिरात् विधूतपापः नियतं विद्या-धरतामवाप्य मम लोकमियात्। इति वरं दत्त्वा तां गिरिसुतां कान्तां गिरिशोऽन्वरञ्जयत्।

इति चतुर्विंशत्यधिकशततमस्तरङ्गः।

समाप्तोऽयं ग्रन्थः।

---

इति श्रीसोमदेवभट्टप्रणीतं पद्यात्मकं

ग्रन्थमवलम्ब्य

श्रीजीवानन्द विद्यासागर-भट्टाचार्य्येण

गद्येन विरचितः कथासरित्सागरः।

समाप्तः।

প্রকাশক শ্রীজীবানন্দ-বিদ্যাসাগর বি, এ,

২ নম্বর রমানাথ মজুমদারের লেন।

প্রিণ্টর—শ্রীক্ষেত্রমোহন মুখোপাধ্যায়।

২০ নম্বর ঝামাপুকুর লেন।

কলিকাতা।